## ... अंशावेशानुक्रमणिका ...

| अवतारः ........ मूलरूपम् ............. आवेशः | अवतारः ........ मूलरूपम् ............. आवेशः |
|---|---|
| १. रामः ......... वासुदेवः | २७ शतबलिः ..... वसुः (अष्टवसुषु मध्ये एकः) |
| २. परशुरामः .... श्रीहरिः | २८ पनसः ....... वसुः (अष्टवसुषु मध्ये एकः) |
| ३. सीता ........ लक्ष्मीः | २९ मैन्दः ........ नासत्यः |
| ४. हनुमान् ...... वायुः | ३० विविदः ...... दस्रः ....................... इन्द्रः |
| ५. लक्ष्मणः ..... शेषः ....... सङ्कर्षणरूपी भगवान् | ३१ श्वेतः ........ मरुत् |
| ६. दूर्वासाः ...... रुद्रः | ३२ सम्पाती ..... मरुत् |
| ७. वाली ........ इन्द्रः ...... भगवतः किञ्चिदावेशः | ३३ केसरी ........ मरुत्सु प्रवरः |
| ८. कुशः ......... इन्द्रः | ३४ कुमुदः ....... (जयन्तः) |
| ९. गाधी ........ इन्द्रः | ३५ नलः ......... विश्वकर्मा |
| १० भरतः ........ कामः ....... प्रद्युम्नरूपी भगवान् | ३६ अञ्जना ....... पुञ्जकस्थली (अप्सराः) |
| ११ शत्रुघ्नः ....... अनिरुद्ध... अनिरुद्धरूपी भगवान् | ३७ दशरथः ...... स्वायम्भुवमनुः |
| १२ तारः ......... बृहस्पतिः | ३८ विभीषणः .... कण्वऋषिः |
| १३ तारा ......... शची | ३९ शबरी ........ अप्सराः |
| १४ सुग्रीवः ....... सूर्यः ....................... ब्रह्मा | ४० रावणः ....... जयः ...................... असुरः |
| १५ जाम्ववान् ... यमः ................... (ब्रह्मा) | ४१ कुम्भकर्णः ... विजयः .................. असुरः |
| १६ अङ्गदः ....... चन्द्रः ..................... इन्द्रः | ४२ कबन्धः ...... दनुः (गन्धर्वः) |
| १७ सुषेणः ....... वरुणः | ४३ विराधः ...... तुम्बुरुः (गन्धर्वः) |
| १८ नीलः ........ अग्निः | ४४ शम्भूकः ...... जङ्गः |
| १९ लवः ......... अग्निः | ४५ मन्थरा ....... अलक्ष्मीः |
| २० दुर्मुखः ....... निर्ऋतिः | |
| २१ कत्थनः ...... कुवेरः | |
| २२ गजः ......... प्राणः | |
| २३ गवाक्षः ...... अपानः | |
| २४ गवयः ....... व्यानः | |
| २५ वृषः ......... उदानः | |
| २६ गन्धमादनः .. समानः | |

★★★★

।। श्रीदिग्विजयरामो विजयतेतराम् ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# श्रीमन्महाभारततात्पर्यनिर्णयः

## अथ चतुर्थोऽध्यायः

**अथाभ्यवर्धंश्चतुराः कुमारा नृपस्य गेहे पुरुषोत्तमाद्याः ।**
**नित्यप्रवृद्धस्य च तस्य वृद्धिरपेक्ष्य लोकस्य हि मन्ददृष्टिम् ।।१।।**

### १. श्रीव्यासतीर्थविरचिता भारतभावपञ्चिका

।। **श्रीगुरुभ्यो नमः** ।। पूर्वं पुरुषोत्तमाद्या रामादित्वेन जाता इत्युक्तम् । तत्सम्बन्धिनीं कथामाह– **अथेत्यादिना** ।। कुमाराः अभ्यवर्धन् चातुर्यादिभिः । कलेवरवृद्धेरवक्तव्यत्वात् । ननु 'न कर्मणा वर्धते', 'नासौ जजान न मरिष्यति नैधते' [भा.११.३.३९] इत्युक्तेः भगवतो वृद्ध्यभावात् कथं तदुक्तिरित्यत आह– **नित्येति** ।। उच्यत इति शेषः । अतद्गुणसंविज्ञानत्वात् । तद्गुणसंविज्ञानत्वेऽपि लोकदृष्टिवृद्धत्वाच्च न दोष इति भावः ।।१।।

### २. श्रीवेदाङ्गतीर्थविरचितः भारतभावनिर्णयः

लक्ष्मीकान्तमनन्तसद्गुणतनुं दोषातिदूरं सदा ब्रह्माहीन्द्रशिवेन्द्रपूर्वविबुधैराराधिताङ्घ्रिद्वयम् ।
भक्ताभीष्टकृतौ सतां सुरतरुं भक्त्या सदोपास्महे[दैत्यानामसतां]विदारणविधौ वज्रोपमानं सदा ।।
यः प्राणप्रवरः प्रणम्य विबुधैरभ्यर्थितो भूतले भूत्वा श्रीहरितत्त्वबोधनकृते श्रीमध्वनामा विभुः ।
कृत्वा भाष्यवरं च [सोपनिषदः सद्ब्रह्म] सूत्रावलेः चक्रे भारतभावनिर्णयममुं जिष्णुं भजामो मुदा ।।
भूयासुर्विष्णुतीर्थाख्यसन्मुनीन्द्रकृपाबलात् । अन्तरेणान्तरायं नो मङ्गलानि निरन्तरम् ।।

अथ अवतारानन्तरम् । चतुराः कुशलाः । वृद्धिः उच्यत इति शेषः ।।१।।

## ३.श्रीवादिराजतीर्थविरचिता भावप्रकाशिका

अथ दशरथात् स्वमातृषु जननानन्तरम् । चातुर्यादिगुणानामपि दिने दिनेऽभिवृद्धिरिति सूचनाय चतुरा इति विशेषणम् । अभिनवशिशूनां तदैव बहिर्गमनाभावात् गेह इत्युक्तम् । रामस्य तु प्रादुर्भावमात्रं न लक्ष्मणादिवत् साक्षात्कुमारत्वमिति सूचनाय पुरुषोत्तमपदम् । 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।' [१५.१७-१८] इति गीतोक्ताव्ययत्वेश्वरत्वादेरपि पुरुषोत्तमपदेन सूचितत्वादिति भावः । अत एव पुरुषोत्तमः आद्यः पूर्वमेव विद्यमानो येषां ते पुरुषोत्तमाद्याः समासः । एवं सति महतो महीयसो रामस्य कथं रामायणादौ दिने दिनेऽभिवृद्धिरुक्तेत्यत उक्तम्– **नित्यप्रवृद्धस्य चेति** ।। नित्यप्रवृद्धस्यापीत्यर्थः । दिने दिनेऽभिवृद्धिर्गर्हितेति सूचनं तत्फलम् । 'अपिः पदार्थसम्भवनान्ववसर्ग-गर्हासमुच्चयेषु' इत्यनुशासनात् । तस्य प्रागुक्तपुरुषोत्तमस्य । लक्ष्मणादीनां प्राकृतदेहवत्त्वेन वृद्धिः सम्भवतीति सूचनाय तस्येत्येकवचनम् । लोकस्यायोध्यापुरस्थजनस्य मन्ददृष्टिं व्याप्तमूर्तिदर्शनशक्तिरहितदृष्टिमपेक्ष्य वृद्धिरुच्यते । हीति योग्यपदाध्याहारेण योजना । सर्वदा विद्यमानामपि महतीं वृद्धिमाच्छाद्य दिने दिन ईषदीषत्प्रदर्शयतीति भावः । 'न कर्मणा वर्धते नो कनीयान्' इत्यादिश्रुतिप्रसिद्धिसूचनाय हिशब्दः । अत एव क्रमिकवृद्धिदर्शनाख्यफलस्य परगामित्वादभ्यवर्धन्निति परस्मैपदप्रयोगः ।।१।।

## ४. श्रीसत्यधर्मतीर्थविरचिता लघुगुर्वर्थदीपिका

अर्वाननं गुर्वधीशान्नमस्कृत्य पुमुत्तमः । महाभारततात्पर्यनिर्णयं व्याकरोम्यहम् ।।
क्वच श्रीर्गौरवी गीर्मे क्वच जाल्मस्य जल्पनम् । तथापि नापहास्योऽहं यद् गुर्वङ्घ्र्यवलम्बनः ।।
यथानूरू रथस्थः सन् रवेरङ्घ्र्याश्रयाद्दिवि । चरन्मान्योऽभवत्तद्वन्नापहास्योऽस्मि सच्छ्रितः ।।
अशक्यकृतिसंसक्तचित्तं मत्तं कृपाकराः । सर्वदा सर्वदाः पान्तु दिशन्तः सुदृशं बुधाः ।।

अथ श्रीमदानन्दतीर्थमुनिः 'गृहे दशस्यन्दननामिनोऽभूत्' इत्यादिना तृतीयाध्यायोपान्ते दशस्यन्दनोद–वसिते तत्कृतसुकृततपआदिफलत्वेन आदिपुरुषादिजन्मोक्त्वा यदर्थं सुरसार्थप्रार्थितोऽवततार अवनौ अवनितनुजनिजानिः तत्समासतो वक्तुं लोकमनुकुर्वतो लोकाधिकस्य तोकाचरितं विवक्षुः शश्वत्प्रवृद्धस्यापि विश्वकर्तुः वृद्धिप्रकारमादावाह– **अथेति** ।।

तत्र चाचार्यः पञ्चभिः प्रपञ्चयन्नध्यायैः परपराकरणं नवमेन अनवमधाम प्रति रामगमनमिव तृणादिसर्वनिर्वाणवितरणं च सञ्जग्राह समग्रं श्रीमद्रामायणम् । ननु श्रीमन्महाभारतनिर्णयकारिणि ग्रन्थे किमर्थं रामायणकथासङ्ग्रह इति चेत् । सत्यम् । सामान्यतः सकलशास्त्रतात्पर्यनिर्णयात्मकोऽप्यसौ विशेषतो भारततात्पर्यनिर्णायक इति तदुपपत्तेः । प्राचि तथैवोच आचार्यः 'तात्पर्यं शास्त्राणां

सर्वेषामुत्तमं मया प्रोक्तम्' [१-१३७] । 'विशेषतो भारतवर्त्मचारी' इति [३२-१६९] । यद्वा न रामायणमपि स्वतःशास्त्रं किन्तु वनपर्वणि मार्कण्डेययुधिष्ठिरसंवादकथाव्याजेन रामोपाख्याने सम्पूर्णरामकथायाः कथनात्ततो भारत एव भरताग्रजचरितं समासतो व्यासेन शंसितम् । तत्सङ्गृह्य कवयन् कविरिति भुवि ख्यातो वाल्मीकिरिति तत्तात्पर्यनिर्णयकृतावपि भारततात्पर्यनिर्णय एवाचार्यैरचारीति न काचिदनौचिती । तदपि बभाषे भाष्यकृत् 'उक्ता रामकथा ह्यस्मिन् मार्कण्डेयसमाख्यया' इत्यादि [२-५०] । तथा च वनपर्वश्लोकाः । 'कस्मिन् रामः कुले जातः' [२७५-४] इति धर्मपृष्टो मार्कण्डेयः– अजो नामाभवद्राजा महानिक्ष्वाकुवंशजः । तस्य पुत्रो दशरथः शश्वत् स्वाध्यायवाञ्छुचिः ।। अभवंस्तस्य चत्वारः पुत्रा' [२७५.६-७] इत्यारभ्य 'सम्भाराः सम्भृयन्तां मे रामश्चोपनिमन्त्र्यताम्' [२७८-१५] इत्यन्तेन बालकाण्डमूलं कथितम् । 'इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा' [२७८-१७] इत्यारभ्य 'वने वसतु तापस'[२७८] इत्यन्तेनायोध्याकाण्डम्[१] । 'प्रविवेश महारण्यम्' [२७८-४६] इत्यादिना 'भ्रातरौ रामलक्ष्मणौ' [२८१-८] इत्यन्तेनारण्यम् । 'बुद्धिमन्तं हनूमन्तम्' [२८१-१०] इति प्रभृति 'दिशस्तिस्र' [२८३-२१] इत्यन्तं च किष्किन्धाकाण्डम् । 'दक्षिणाशां ययौ वानरपुङ्गव' [२८३-२५] इदमादितः 'तं प्रियवादिनमार्चयत्' [२८३-७१] इत्यवसानेन सुन्दरकाण्डम् । 'ततस्तत्रैव रामस्य' [२८४-१] इत्यादिना 'सोऽभिषिक्त' [२९२-६८] इत्यन्तेन युद्धकाण्डम् । 'कपिश्रेष्ठम्' [२९२-६८] इत्यारभ्य उपाख्यानसमाप्त्युत्तरकाण्डं इति विवेकः । ननु भारते कृष्णकथाया एव बहुलमुपलम्भात् तामादावनुदाहृत्य मोदमुनिः किं रामचरितनिरूपणमचरदिति चेत् । शृणु । त्रिभिरत्राध्यायैराद्यादि– पर्वोक्तसर्गानुसर्गादि कथितम् । आदिमत्वाद्रामावतारस्य पश्चिमत्वाच्च कृष्णावतारस्येति राममाहात्म्य– मादावाह महामतिः । किञ्च रामावतारे न्यूनाधिकायाः सुराचरितपरिचर्यायाः वासुदेवावतारे पूर्तित्वाद्वा सङ्कीर्तनाच्च । इदमप्यूचे सुचेताः– रामकार्यं तु यैः सम्यक् स्वयोग्यं न कृतं पुरा । तैः पूरितं तत् कृष्णाय बीभत्स्वाद्यैः समंततः ।। नैतयोरकृतं किञ्चित् शुभं वा यदि वाऽशुभम् । अन्यत्र पूर्यते क्वापि तस्मादत्रैव निर्णयः ।। पश्चात्तनत्वात् कृष्णस्य वैशेष्यादत्र निर्णयः ।। इति। [२-४५]

कतिपयैरध्यायै रामावतारचरितं चाग्रन्थावसानं वासुदेवचरितं च वदन् अनुकरोति गुरुवरः सूचीकटाहनयमपि । ततश्चायं श्लोकार्थः । अथ दशरथमनोरथपूर्तिमिव सिद्धाश्रमाश्रयमुनिं सिद्धाश्रमं वा अमरापेक्षितरक्षोऽध्यक्षवक्षोविपाटनादिवत् दण्डकारण्यशरण्यर्षिहर्षादिकं कर्तुं सर्वकर्तुस्तदनु दनुजारीणां लक्ष्मणादित्वेनावतारानन्तरम् । मोदमुनिरादितोऽथेति ग्रथयन् दशरथतरुणीजठराभरणदुरितहरचरित– कथननिरन्तरायसमाप्तिहेतुभूतं मङ्गलमप्यतनवमित्यावेदयति– **अथेति** ।। राममहिमादिनिरूपणारम्भे वा ।

---

१. वस्तुतस्तु 'ततस्स राजा मतिमान्' इत्यारभ्य 'नन्दिग्रामेऽकरोद्राज्यं पुरस्कृत्यास्य पादुके' इत्यन्तेन अयोध्या-काण्डमिति स्यात् । उदाहृतस्थले एव कथारम्भसमाप्त्योर्दर्शनात् ।

रामोऽवातरदिति पुरोक्तमत उत किमतनोदित्यनुयोगे वा । कुमाराः रामलक्ष्मणभरतशत्रुघ्नाख्याः सुताः । उत्तरमाह– **अभ्यवर्धन्निति** ।। अभ्यवर्धन् प्रावर्धन्त । नरवृद्धिवन्न रसायनादिना वृद्धिरियमिति बोधयितुं पूर्णबोधोऽभिना तां विशिशेष । यद्यपि वृधधातुः शुद्धात्मनेपदं तथापि चान्द्रादिरीत्या सर्वेषां धातूनामुभयपदत्वात् परस्मैपदे लङि अवर्धत् अवर्धतां अवर्धन्निति रूपं ज्ञेयम् । 'चान्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्' इति वचनात् । 'धर्मो विवर्धति युधिष्ठिरकीर्तनेन' इति पाण्डवगीतोक्तेश्च । यद्वा आत्मगामि चेत् क्रियाफलं ततो धातोरात्मनेपदनियमादत्र तु हरिवृद्धिः सुरादिसद्वृद्धिरेवेति क्रियाफलस्य परगामित्वात् निमित्ते सति नैमित्तिकविलोपासम्भवात् सम्भवति परस्मैपदम् । शश्वदेकप्रकारशरीरस्य ईश्वरस्य वृद्धिः द्रष्टृदृष्टिविषयतयेति तत्सम्बन्धेनेतरगामित्वाद्वा परस्मैपदम् । यद्वक्ष्यति 'अपेक्ष्य लोकस्य हि मन्ददृष्टिम्' इति । सकललोकवैलक्षण्यं कुमाराणां वक्तुं तत् स्वाभाविकं गुणं भणति– **चतुरा इति** ।। कुशलाः । शिक्षातः प्राग्विचक्षणा इति भावः । एतेन कथं चतुष्टववाची चतुरशब्द इत्याक्षेपः छान्दस इति तत्परिहारश्च निरस्तौ भवतः । 'मन्दिवाशिमथिचति...'[उणादि.४०] इति 'चते याचने' इत्यस्मादुरचि चतुर इति भवति । 'कमु कान्तौ' अस्मात् 'कमेः किदुच्चोपधाया' [उणादि.४२५] इति च आरनि उपधाया उत्वे च कुमार इति ज्ञेयम् । चतुरः कुशले । 'कुमारः स्याच्छुके स्कन्दे युवराजेऽश्वचारके । बालके च..... ।।' [रान्तवर्गः.रत्रिकम्.१३८] इति मेदिनी । 'बालके कार्तिकेये च कुमार' [३.नानार्थवर्गः.३३८] इति त्रिकाण्डशेषः । किं कृष्णवदेकत्र जनिरपरत्र वृद्धिरिति नेत्याह– **नृपस्य गेह इति** ।। नॄन् पातीति स तथा । 'पा रक्षण' इति धातोः 'आतोऽनुपसर्गे कः' [पा.सू.३-२-३] इति कः । तस्य दशस्यन्दनस्य गेहे गृहे । ते च चत्वारः किमादिमा इत्यत आह– **पुरुषोत्तमाद्या इति** ।। 'पुरःकुषन्' [उणादि.५२३] इति पुरुष इति भवति । पुरुषौ चाक्षरक्षरौ कमलाकमलासनादी ताभ्यामुत्तमः श्रेष्ठः । एवमेव गीतायां गीतं भगवता 'द्वाविमौ' इत्यारभ्य 'प्रथितः पुरुषोत्तमः' इत्यन्तैः श्लोकैः । स राम एवाद्य आदौ भवो येषां पुरुषोत्तमादीनां ते तथा । रामप्रथमाः चत्वारः कुमारा अभ्यवर्धन्नित्यर्थः । नायमतद्गुणसंविज्ञानो बहुव्रीहिः । तथात्वे 'ब्रह्मादिकान् कलिपरान्' 'महर्लोकादिगन्तारः' 'चित्रगुमानय' इत्यादाविव ब्रह्मादित्यागवत् पुरुषोत्तमपरित्यागः स्यात् । न चेष्टापत्तिः । 'चत्वार एते ह्यमरोत्तमाः सुताः' 'निरीक्ष्य नित्यं चतुरः कुमारान्' इति पूर्वोत्तरविरोधात् । किञ्चात्रैव नित्यवृद्धस्य कथं वृद्धिकथनमित्यर्थादाक्षिप्य लोकस्येत्याद्युत्तरतया चाचार्येण पुरुषोत्तमाद्यपदेन चत्वारोऽपि ग्राह्या इत्यसूचि । अन्यथोत्तरमसङ्गतं स्यात् । अतद्गुणसंविज्ञानशब्दार्थस्तु तस्य गुणस्यान्यपदार्थं प्रति उपसर्जनीभूतस्य अन्यपदार्थे संविज्ञानं विशेषणतयोपादानं यस्मिन् नास्ति सोऽतद्गुणसंविज्ञानः । 'आनन्दादयः प्रधानस्य' [ब्र.सू.१.१.१२] 'जन्माद्यस्य यतः' [ब्र.सू.१.१.२] इत्यादिवत्तद्गुणसंविज्ञान एवोचितोऽङ्गीकर्तुम् । तस्यान्यपदार्थस्य मुख्यगुणस्याप्रधानस्य स्वार्थस्य संविज्ञानं यस्मिन् स तथा ।

एवं चेदेव देवतदवरादिसङ्ग्रहो भवतीति नानुपपत्तिः । पुत्रत्रिकसहयोगेन रामस्यापि प्राप्ता वृद्धिः । सा च 'नास्य जरया एतज्जीर्यते न वधेन हन्यते' इत्यादिना जननवृद्धिवृत्तिव्यपक्षयपरिणामविनाशादि-षडूर्मिरहितस्येशस्य भगवतः सदा वृद्धस्य न कदाचन सम्भवतीत्यत आह– **नित्यप्रवृद्धस्येति** ।। नित्यं सर्वकालम् । क्रियाविशेषणम् । तच्च वृद्धक्रिययान्वेति । ततश्च सदातनतनुवृद्धिमानित्यर्थः पर्यवस्यति । 'त्यब्नेर्ध्रुव इति वक्तव्यम्' इति वार्तिकात् [पा.सू.४-२-१०४] न्युपसर्गात् त्यपि नित्यमिति ध्रुवार्थे भवति । वृद्ध इति भूतमात्रार्थकोऽपि क्तो नित्यपदसम्बन्धात् वृद्धेः स्वाभाविकत्वं सूचयति । तस्य नित्यप्रवृद्धस्य । तस्य रामस्य वृद्धिः वर्तमानकालिकाभिवृद्धिः लोकस्य जनस्य मन्ददृष्टिं मन्दा अल्पा दृष्टिः ज्ञानं तामपेक्ष्य । 'मन्दाल्पक्षुद्रदृष्टिरक्षिणि दर्शन' इति हैमः । निमित्तीकृत्य ज्ञेयेति शेषः । हिना 'परो मात्रया तन्वा वृधानः' [ऋ.७.९९.१] 'शाश्वतोऽयं पुराणः' [गी.२.२०] भगवान् नागन्तुक-वृद्ध्यादिमान् अप्राकृतविग्रहवत्वात् मुक्तवत् यशोदाप्रत्यक्षं च इत्यादिबहुप्रमाणसिद्धत्वमस्यार्थस्य द्योतयति । यद्यपि इतरेषामपि कामपालकामावतारत्वेन त्रिदशविशेषतया वृद्धिराधुनिकी न वक्तुं युक्ता तथाऽपि तदीयाया वृद्धेर्भगवदधीनत्वेन अस्य पुनरनन्यनिघ्नवृद्धिमत्वात् ततस्ततो विशिष्योक्तिः सम्भवतीति ज्ञेयम् । अयमप्यर्थः प्रेण वृद्धिं विशेषयताऽशेषविदाऽसूचि । लोकस्येति भगवतो विशेषणं वा । तदर्थस्तु ज्ञानात्मकस्येति । लोक्यते सर्वं सर्वदाऽनेनेति लोकः । 'लोकृ दर्शनाङ्कनयोः' इत्यतो लोक इति भवति । 'लुच् प्रकाश' इत्यतो वा पुगन्तगुणे चकारस्य ककारे च लोक इति वा भवति । मन्देति धर्मिग्रहः । मन्दानामल्पज्ञानानां दृष्टिर्मन्ददृष्टिरिति विग्रहः । नित्यप्रवृद्धस्येति विशेषणं यस्माद्रामो नित्यप्रवृद्धस्ततस्तद्वृद्धिः पामरनरनिरीक्षणं ज्ञानं वापेक्ष्यैव न पुनरमरादिबोधमपेक्ष्येति हेतुगर्भं ज्ञेयम् । चोऽवधारणे । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' । 'गृहं गेहोदवसितम् । लोकस्तु भुवने जने' इति चामरः । वृत्तं तु इन्द्रवज्रोपेन्द्रवज्रयोः संसृष्टेरुपजातिः । 'उपेन्द्रवज्रा जतजास्ततो गौः' 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति तल्लक्षणात् [वृ.र.३-२८-२९] । यद्यपि 'पादौ यदीयौ' इति द्विवचनेन द्वयोः पादयोरेकैकलक्षणवतोः सतोरेवोपजातिरिति ज्ञायते । तथापि रामायणभारतभागवतादौ प्रयोगाणां बहुलमुपलम्भात् द्विवचनमतन्त्रमिति भवत्युपजातिः[१] । यद्वा तस्य काव्यलक्षणत्वेन न तेन क्रमेण भाव्यं महाशास्त्र इति भवत्युपजातिरिति ज्ञेयम् । भास्करयशस्करान्वयसम्भवराघवश्लाघा-समयोऽयमिति सवितृदेवताकजगणमादावुदाहरन् मोदमुनिरमितमतिरिति सन्तोष्टव्यम् । किञ्च पूर्वेषामुत्तरेषां च वंशजानां मध्येऽधिको राम इति जगणप्रयोगतो ध्वनयन्मध्वमुनिः 'जगणः पीतवर्णश्च ह्यर्कस्तत्राधिदेवता । मध्ये गुरुर्ज.... ।।' इति मानलक्षणे मानयामासेत्यलम् ।।१।।

१. 'तथापि अस्य महाशास्त्रत्वात् न तथाभावो दोषाय' इति कोशान्तरे दृश्यमानो पाठः ।

## ५. श्रीमधुसूदनभिक्षुविरचितः प्रमाणसङ्ग्रहः

श्रीशोऽनन्तगुणोऽशेषसत्यविश्वेश्वरस्सदा । दूरीकृताशेषदोषः प्रीयतां मे नृकेसरी ।।१।।
श्रीमध्वतीर्थचरणार्कमुरुप्रकाशमाकाशसक्तमनिशं प्रणमाम्यहं तम् ।
प्राकाशि संसृतिरनायि तमःप्रणाशं येनार्यदेशिकतमं सुजनाब्जबन्धुम् ।।२।।
यद्भाषाचन्द्रिकाऽशेषसन्तापं विनिकृन्तति । तं वन्दे जयतीर्थेन्दुं सदिन्दीवरबान्धवम् ।।३।।
विद्याधीशमुनीन् वन्दे विद्याधीशमुनीन् सदा । ज्ञानवैराग्यभक्त्यादिकल्याणगुणशालिनः ।।४।।
महाभारततात्पर्यनिर्णयाम्बुधिगाहने । प्रौढाष्टीकाकृतस्सर्वे सहायास्सन्तु मेऽनिशम् ।।५।।
विद्याधीशकराब्जोत्थमधुसूदनभिक्षुकः । तनुते भारतार्थस्य निर्णये मानसङ्ग्रहम् ।।६।।
शास्त्रार्थे ननु सन्ति साक्षिण इह ग्रन्था महाभारतश्रीरामायणपञ्चरात्रसहिता वेदाः पुराणानि च ।
निस्सन्देहतया तथापि बहुलग्रन्थावलोकालसाः ये मन्दाः कुरुते तदर्थमधुना यत्नं हरेः प्रीतये ।।७।।
ये लोके त्वबुधा जनाः खलधियो द्वेषादिदोषाकुलाः
ते चाशेषविशेषतत्त्वविदुषः सद्ग्रन्थकर्तॄनपि ।
नाशंसन्ति हि सर्वतन्त्रनिपुणास्ते मां प्रशंसन्तु वा
नासन्तः खलु सन्ति वीतकलुषाः शान्ताश्च दान्ता भुवि ।।८।।
अरण्यपर्वसंस्थापि श्रीरामस्य कथाऽऽदितः । सूचीकटाहन्यायेन संक्षिप्योक्ता प्रपञ्च्यते ।।९।।

।। **अथाभ्यवर्धन्निति** ।। 'धर्मो विवर्धति युधिष्ठिरकीर्तनेन । पापं प्रणश्यति वृकोदरकीर्तनेन... ।।' [पाण्डवगीता] इत्यादौ वृधुधातोः परस्मैपदप्रयोगात् 'चन्द्रादयस्तु मन्यन्ते सर्वेषामुभयं पदम्' इत्यभियुक्तोक्तेश्च अभ्यवर्धन्निति परस्मैपदप्रयोगस्साधुः इति बोध्यम् । ननु भगवतो 'नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते' [छा.उ.८.१.५] इत्यादिना 'जायते वर्धते वर्तते अपक्षीयते परिणमते विनश्यति' इति षडूर्मिराहित्यस्योक्तत्वेन पुरुषोत्तमाद्या अभ्यवर्धन्निति षडूर्म्यन्तःपातिवृद्धिः कथमुच्यत इत्यत आह– **नित्यप्रवृद्धस्येति** ।।१।।

## ६. श्रीआद्यवरदराजाचार्यविरचिता मन्दसुबोधिनी

तृतीयाध्याये 'भैमीतनुर्मरुत आह कथाः परस्य' इत्यनेन भगवदवतारकथाः प्रतिज्ञाय वराहावतार–कथाः सङ्क्षेपेणोक्त्वा अशेषतत्वनिर्णयार्थं श्रीरामकृष्णावतारद्वयपुरस्कारेण प्रवृत्तमित्युक्तम् । अत एव तत्र मार्कण्डेयव्याख्याने रामकृष्णौ विस्तरेणोक्ताः । *यतस्ते उत्तमगुणत्वात् कृष्णस्य 'वैशेष्यात्तत्र निर्णयः' इत्युदाहरणरीत्या कृष्णावतारकथायाः विशेषतो निर्णयहेतुत्वादिविस्तारेण कृष्णकथोक्ता भारते ।

*. अस्पष्टमिदं वाक्यम्

तत्तात्पर्यनिर्णयकर्ता भगवानाचार्योऽपि तदनुसारेणैव प्रवर्तमानः 'शशाङ्कपुत्रात्' इत्यादिना कृष्णावतार–कथनमतिविस्तरेण वक्ष्यन् रामावतारकथां विस्तारेण आदौ वक्तुमारभते– **अथेति** ।। अथ अवतारानन्तरं नृपस्य दशरथस्य गेहे पुरुषोत्तमाद्याः पुरुषोत्तम. श्रीरामः आद्यो येषां लक्ष्मणादीनां नाम्ना कुमाराः चतुराः चतुर्यादिगुणविशेषविशिष्टा अभ्यवर्धन् अभ्यवर्धन्त । अत्र अभ्यवर्धन् इत्यात्मनेपदे प्रयोक्तव्ये परस्मैपदं प्रयुङ्क्ते । तेन प्रत्ययव्यत्ययेन प्रकृत्यर्थे व्यत्ययोऽस्तीति सूचितम् । तद्दर्शयति– **नित्यप्रवृद्धस्येति** ।। नित्यप्रवृद्धस्य देशतः कालतः गुणतः परिपूर्णस्य तस्य पुरुषोत्तमपदोक्तस्य श्रीरामस्य या वृद्धिः सा लोकस्याज्ञजनस्य मन्ददृष्टिं भ्रान्तिमपेक्ष्यैवोक्ता । न तु तत्र वास्तवी शरीराद्यभिवृद्धिरस्ति । 'न कर्मणा वर्धते नो कनीयान्' इत्यादिश्रुतेः तस्य कादाचित्कवृद्ध्यभावस्यैव सिद्धिरिति भावः ।।१।।

## ७. श्रीजनार्दनभट्टविरचिता पदार्थदीपिका

नारायणं पूर्णगुणैकदेहं जन्मादिसज्ज्ञानविमुक्तिहेतुम् ।
विश्वस्य भक्तेतरसौख्यदुःखसद्धेतुमीशं विततं नमामि ।।१।।

नमामि नीलाम्बुदकान्तिकान्तं व्यासं निरस्ताखिलदोषपुञ्जम् ।
ज्ञानादिदं ब्रह्मशिवादिकेभ्यः सत्तर्कमुद्राभययुक्तहस्तम् ।।२।।

जयति श्रीमदानन्दतीर्थमार्ताण्डचण्डगौः । यत्सम्पर्कस्सताम्मोहशर्वरीं समदीदलत् ।।३।।
गुरून्नत्वा भारतार्थनिर्णयस्य प्रदीपिका । व्यासतीर्थादिसद्व्याख्यामाश्रित्य क्रियते मया ।।४।।
महाभारततात्पर्यनिर्णयस्य प्रदीपिकाम् । कर्तुमुद्योगिनः सन्तः क्षाम्यन्तु मम दुर्नयम् ।।५।।
क्व श्रीमध्वगुरोरुक्तिः क्व तदर्थे मदाग्रहः । खद्योतरोचिषा कोऽपि विभातं कर्तुमीहते ।।६।।

श्रीमद्भगवानाचार्यः अवतीर्णस्य हरेर्भक्ताभक्तज्ञानमोहदां अद्भुतलीलां समासतो वक्तुं बालकाण्ड–कथामाह– **अथेत्यादिना** ।। अथ अवतारानन्तरं चतुराः कुशलाः कुमाराः अभ्यवर्धन् अभ्यवर्धन्त । 'वृधु वृद्धौ' इत्यस्य चक्षिङ्धातोः ङित्करणात् अनुदात्तप्रयुक्तात्मनेपदस्य अनित्यत्वात् 'स्फायन् निर्मोकसन्धी' इति प्रयोगाच्च, उभयपदत्वेऽपि यो योऽत्र परस्मैपदप्रयोगः स न रामगामिफलम् । किन्त्वन्यगामीति सूचयति । ननु शश्वदेकप्रकारस्य रामस्य वृद्धिः कथमुक्तेत्यत आह– **नित्येति** ।। तस्य रामस्य वृद्धिः लोकस्य मन्ददृष्टिं अल्पज्ञानमपेक्ष्य, उक्तेति शेषः । मन्देत्यस्य भाषितपुंस्त्वात् ह्रस्वता ।।१।।

## ८. अनन्तभट्टविरचिता तन्त्रमाला [सत्तत्त्वमाला]

*...सापि रामे न घटत इत्यत आह– **नित्येति** ।। *...इति शेषः । नित्यप्रवृद्धस्य च नित्यप्रवृद्धस्यापीत्यर्थः । दिने दिनेऽप्यभिवृद्धिर्गर्हिता इति सूचनं तत्फलम् । अपिशब्दः सम्भावनान्ववसर्गगर्हासमुच्चयेषु इत्यनुशासनात् । सर्वदा विद्यमानामपि महतीं वृद्धिं *...प्रदर्शयतीति भावः । 'न कर्मणा वर्धते नो कनीयान्' इत्यादिप्रसिद्धिसूचनाय हिशब्दः । अतः क्रमिकवृद्धिदर्शनस्य फलस्य परगामित्वेन अभ्यवर्धन्निति परस्मैपदप्रयोगः ।।१।।

## ९. श्रीभारतश्रीनिवासाचार्यविरचिता टिप्पणी

श्रीकृष्णबलरामादिवत् पित्रोः परोक्षं अवर्धयन् किं नेत्याह– **नृपस्य गेह इति** ।। वर्धने पश्वादिसाम्यं निराकरोति– **चतुरा इति** ।। अनेन विद्याविनीतत्वं सूचितम् । अथवा प्रसिद्धबालवृद्धिसाम्यव्युदासायोक्तम्– **चतुरा इति** ।। शश्वदेकप्रकारस्य पुरुषोत्तमस्य वृद्धिमाशंक्य परिहरति– **नित्येति** ।।१-२।।

## १०. श्रीतिरुमालाचार्यविरचिता अतिविशदवाक्यार्थविवृतिः

अथाभ्यवर्धन्निति परस्मैपदप्रयोगः । 'चन्द्रादयस्तु मन्यन्ते सर्वेषामुभयं पदम्' इति प्रयोगात् ।
धर्मो विवर्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्तनेन ।
शत्रुर्विनश्यति धनञ्जयकीर्तनेन माद्रीसुतौ कथयतां न भवन्ति रोगाः ।।

इति वृधधातोः परस्मैपदप्रयोगदर्शनाच्च साधुर्ज्ञेयः । यद्यपि रामकथा अरण्यपर्वण्युक्ता भारते इति तथैवाचार्यैरपि वक्तव्या तथापि आचार्यैरादित उक्तिः रामस्य कृष्णापेक्षया आदित्वेन ज्ञेया । रामायणस्य शतकोटिविस्तृतत्वेन ग्रन्थगौरवभीत्या अल्पत उक्तिर्भारते साऽपि 'तस्मात् यत् भारते नोक्तं तद्धि नैवास्ति कुत्रचित्' इति प्रमाणानुसारेण ज्ञेया । 'नृपस्य गेहे पुरुषोत्तमाद्या' इत्यत्र रामाद्या इत्यनुक्त्वा पुरुषोत्तमाद्या इति वचनम्; रुद्र उवाच– रामो दाशरथिर्भूत्वा जटावल्कलधारणः । प्रीत्यर्थं सूर्यपुत्रस्य वालिनं तु महावने ।। हनिष्यामि शरेणाशु विदूराद् दृगगोचर ।।' इति शेषधर्म एकत्र, तथा, ईश्वर उवाच– ब्रह्मा वासरपर्यन्तं युष्माकं स्वर्गवासिनाम् । अस्तु वासः सुराः सर्वे ह्यत्र वत्स्याम्यहं चिरम् ।। रामोऽहं तु भविष्यामि विष्ण्वंशेन समन्वितः । दशाननपुरोगाणि हनिष्ये तानि संयुगे ।। इति, अपरत्र रामस्य शेषधर्मे एव शिवावतारत्वमुच्यते । तन्निरासार्थमेवेति ज्ञातव्यम् । अनेन 'पुरुषोत्तमः शार्ङ्गधन्वा तथैव गरुडध्वज' इति पुराणवचनेन, 'पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः । देवकीनन्दनः

* अत्र इतआरभ्य उत्तरत्र सर्वत्र दृश्यमानः [*]नक्षत्रचिह्नान्तर्गतो भागः तृटितो वेदितव्यः ।

शौरिः श्रीपतिः पुरुषेत्तमः ।।' इत्यमरेण, हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एष नापरः । तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी न हि शब्द एषः ।। इति रघुवंशेऽपि [३.४९] परीत्या, महायोगविद्वद्रूढिभ्यां 'प्रथितः पुरुषोत्तमः' [गी.१५.१९] इति गीतावाक्येन, 'केशवः पुरुषोत्तमः' [वि.स.३] इति सहस्रनाम्ना च भगवत्येव प्रसिद्धेः पुरुषोत्तमशब्दस्य । रामस्य भगवदवतारत्वं अजस्तस्मान्महाराज तस्माद्दशरथोऽभवत् । तस्यापि भगवानेषः साक्षाद्धर्ममयो हरिः ।। अंशांशेन चतुर्धागात् पुत्रत्वं प्रार्थितः सुरैः । रामलक्ष्मणभरतशत्रुघ्नाश्चेति संज्ञिताः ।। इति नवमभागवतवचनेन [८.८३-८४] ज्ञातव्यम् । 'ध्येयं सदा परिभवघ्नमभीष्टदोऽहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्' इति एकादशस्कन्धवचनेन [५.३३] रामस्य शिवविरिञ्चिनुतत्वं प्रतीयते । तेनापि विष्णुत्वं सिद्धम् । मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः । कुतोऽस्य हि स्यू रमतः स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्य ।। इत्यादिना च [भा.५.१९.५]

एवमुक्तोऽब्रवीद्विष्णुः तथेति सुरमण्डलम् । तस्य ते तद्वचः श्रुत्वा व्यक्तमूचुरिदं वचः ।।
एष राजा दशरथो हयमेधे च दीक्षितः । धर्मशीलो गुणश्लाघी सत्यवादी दृढव्रतः ।।
अस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च । विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् ।।
व्रज त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् । अशक्यं दैवतैर्विष्णो समरे जहि रावणम् ।।
इति वाल्मीकिरामायणवचनेनापि रामस्य विष्णुत्वं सिद्धम् । [१५.२०-२२ ]

ब्रह्मोवाच–

नाशितं तु जगत्सर्वं रावणेन दुरात्मना । सेन्द्राः पराजितास्तेन बहुशो राक्षसा विभो ।।
राक्षसैर्भक्षिता मर्त्या यक्षाश्चैव [यज्ञाश्चापि] विदूषिताः । देवकन्या हृतास्तेन बलाच्छतसहस्रशः ।।
त्वामृते पुण्डरीकाक्ष रावणस्य वधं प्रति । न समर्था यतो देवास्त्वमतस्तद्वधं कुरु ।।
इत्युक्तो ब्रह्मणा विष्णुर्ब्रह्माणमिदमब्रवीत् । शृणुष्वावहितो ब्रह्मन् यद्वदामि हितं वचः ।।
सूर्यवंशोद्भवः श्रीमान् राजास्ति भुवि वीर्यवान् । नाम्ना दशरथख्यातो तस्य पुत्रो भवाम्यहम् ।।
रावणस्य विनाशाय चतुर्धांशेन सत्तम । स्वांशैर्वानररूपेण अवतेरुश्च भूतले ।।
अथ राजा दशरथो मुनिभिर्वेदपारगैः । इष्टिं तत्कारयामास पुत्रप्राप्तिकरीं नृप ।।
ततः सौवर्णपात्रस्थं हविरादाय सत्त्वरम् । वह्निः कुण्डात्समुत्तस्थौ देवदेवप्रचोदितः ।।
आदाय मुनयो मन्त्रांश्चक्रुः पिण्डद्वयं शुभम् । ददुः कौसल्यकैकेयौ द्वे पिण्डे मन्त्रमन्त्रिते ।।
ते पिण्डप्राशने काले सुमित्रायै महामते । पिण्डाभ्यामल्पमल्पं स्वं स्वभगिन्यै प्रयच्छतुः ।।
ततस्ताः प्राशयामासुः राजपत्न्यो यथाविधि । पिण्डान्देवकृतान्प्राश्य प्राप्तगर्भा अनिन्दिताः ।।
एवं विष्णुर्दशरथाज्जातस्तत्पत्निषु त्रिषु । स्वांशैर्लोकहितार्थाय चतुर्धा जगतीपते ।।
रामश्च लक्ष्मणश्चैव भरतः शत्रुघ्न एव च । जातकर्मादिकं प्राप्य संस्कारं मुनिसंस्कृतम् ।।

इत्यादि नरसिंहपुराणेऽपि [४७.२७-४२] रामस्य विष्णुत्वोक्तेः । तथैव भागवतवचनञ्च रामस्य साक्षान्नारायणत्वसाधकं हनूमदक्तम्–

न वै स आत्मात्मवतामधीश्वरो भुङ्क्ते हि दुःखं भगवान् वासुदेवः ।।
न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि जहाति कर्हिचित् ।।
यत्पादपङ्कजपरागनिषेवकाणां दुःखानि सर्वाणि लयं प्रयान्ति ।।
स ब्रह्मवन्द्यचरणो जनमोहनाय स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार ।। इति ।।[भा.५.१९.६]

तथा आरण्यकपर्वणि रामस्य विष्णुत्वोक्तेः शेषधर्मवचनं बहुप्रमाणविरोधात् बाधितं ज्ञातव्यम् । तथाहि– रावण उवाच– 'गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा । सर्पकिन्नरभूतेभ्यो न मे भूयात् पराभवः ।। ब्रह्मोवाच– य एते कीर्तिताः सर्वे न तेभ्योऽस्ति भयं तव । ततो ब्रह्मर्षयस्सर्वे सिद्धा देवर्षयस्तथा ।। हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं ययुः ।। अग्निरुवाच– योऽसौ विश्रवसः पुत्रो दशग्रीवो महाबलः । अवध्यो वरदानेन कृतो भगवता पुरा ।। स बाधते प्रजाः सर्वा विप्रकारैर्महाबलः ।। ब्रह्मोवाच– न देवासुरयोः शक्यो युधि जेतुं विभावसो । विहितं यत्र तत्कार्यं अभितस्तस्य निग्रहः ।। तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः । विष्णुः प्रहरतां श्रेष्ठः स तत्कर्म करिष्यति ।। इति [वन.२७६.२५-२६.२७७.१-५] *....अन्यार्थकल्पने युक्तत्वात् शिवे स्थितोऽहं रामो भविष्यामि विष्ण्वंशेन । 'विषॢ व्याप्तौ' इत्युक्तत्वात् यावता रावणहननादिस्तावता....* न पुरोगाणि हनिष्ये' इति शेषधर्मवचनस्य योजना सूचिता भवति । 'यावद्बलेन न्यहनत् खरादिकान्' इति बलस्य परिच्छिन्नत्वं वक्ष्यति । विष्णुर्वासुदेवः तदंशेन समन्वित इति वा । वासुदेवो रामत्वेनावतीर्ण इत्युक्तत्वात् । एतदुक्तं भवति । रामस्साक्षान्नारायण इति यदुक्तं तदयुक्तम् । रामस्य शिवावतारत्वेन शेषधर्मपर्वे निष्टङ्कितत्वादिति शेषधर्मवचनेन पूर्वपक्षिते रामः साक्षान्नारायणावतारः न शिव इति पुनः निरवकाशप्रमाणे प्रयोक्तव्ये *...प्रसिद्धपुरुषोत्तमपदप्रयोगेन सर्वं भविष्यतीति मन्वानः पुरुषोत्तमाद्या इत्याहेति । नित्यप्रवृद्धस्येत्यत्र शरीरतोऽपीति शेषः । वृद्धिः शरीरवृद्धिरिति...* शरीरतो नित्यप्रवृद्धस्य शरीरतो वृद्धिः मन्ददृष्टिमपेक्ष्येत्युक्तं भवति । 'ममात्मा भूतभावन' इति गीताया भगवतः शरीरस्य भगवताऽभेदात् भूतभावनत्वं तल्लक्षणमुक्तम् । एवं रामशरीरस्यापि रामेणाभेदात् नित्यप्रवृद्ध्यादिकमुक्तमिति ज्ञातव्यम् । नित्यप्रवृद्धस्येत्येतत् लोकस्य मन्ददृष्टौ हेतुगर्भविशेषणं वा । ततश्च नित्यप्रवृद्धत्वात् लोको मन्ददृष्टिरित्युक्तं भवति । राजपुत्राणां कुशादीनां अरण्ये वृद्धिदर्शनात् तद्व्यावृत्त्यर्थं गेह इत्युक्तं भवति ।।१।।

## ११. श्रीचट्टीकोनेर्याचार्यविरचिता विवृतिः

श्रीमध्वहृत्पद्मजवासमीशं श्रीपद्मजाद्यैरनुसेविताङ्घ्रिम् ।
श्रीवत्सलक्ष्म्याश्रितपारिजातं श्रीकृष्णमीशेशमहं भजामि ॥१॥

श्रीहयास्यपदाम्भोजमकरन्दं ऋषन्ति ये । तेषां विद्यादिसद्वृत्तिसिद्धिर्भवति निर्मला ॥२॥
आपुर्मत्पूर्वजा विद्यां यत्पादाब्जनिषेवणात् । अहं च विद्यासिद्ध्यर्थं तं हयाननमाश्रये ॥३॥
मध्ववाक्कामधेनुर्नो भूयात्सर्वार्थसिद्धये । यदाश्रयात् सुरा आपुः स्वां स्वां सिद्धिमभीप्सिताम् ॥
जयतीर्थगुरून्वन्दे सर्वाभीष्टप्रदायकान् । व्यासतीर्थादिकान्सर्वान् गुरून् नौमि सुभक्तितः ॥५॥
भूमण्डलगतास्सर्वे मायिनो यैर्विनिर्जिताः । वेङ्कटाचार्यसञ्ज्ञान् मे गुरून्वन्देसुभक्तितः ॥६॥
हयग्रीवप्रसादेन लब्धसच्छास्त्रसम्पदः । वेङ्कटार्यानहं वन्दे जनकान् मम सर्वदा ॥७॥
पितृव्यानप्यहं वन्दे सर्वागमविशारदान् । नरसिंहाचार्यसञ्ज्ञान् मम बुद्धिविशुद्धये ॥८॥
अग्रजान् वेङ्कटाचार्यसञ्ज्ञान् सच्छास्त्रकोविदान् । नमामि शिरसा नित्यं हयग्रीवस्य पूजकान् ॥
जनार्दनाचार्यसञ्ज्ञानग्रजान् प्रणमाम्यहम् । मध्वशास्त्रप्रवक्तॄन् च मम चित्तविशुद्धये ॥१०॥
चट्टीकोनेरिनामाहं मन्दोऽद्य तदनुग्रहात् । व्यासतीर्थादिगुरुभिस्सुसन्दर्शितवर्त्मभिः ॥११॥
श्रीमद्भारततात्पर्यनिर्णयस्य करोम्यहम् । विवृतिं श्रीशतुष्ट्यर्थं सर्वटीकानुसारिणीम् ॥१२॥

पुरुषोत्तमाद्याः रामादिरूपेण जाता इति तृतीयाध्याये उक्तम् । तत्सम्बन्धिनीं बालकाण्डकथामाह– **अथेत्यादिना** ॥ अथावतारानन्तरं पुरुषोत्तमाद्याः चतुराः कुशलाः कुमाराः नृपस्य गेहे अभ्यवर्धन् । धर्मो विवर्धति युधिष्ठिरकीर्तनेन....* ॥१॥

## १२. ताम्रपर्णीश्रीनिवासाचार्यविरचिता प्रमेयमणिमाला

श्रीमदानन्दतीर्थार्यहृदयाम्बुजवासिनम् । नमामि भवसन्तापहारिणं रुग्मिणीपतिम्[1] ॥

चातुर्यादिगुणानामप्यभिवृद्धिसूचनाय लौकिकशिशुवैलक्षण्यसूचनाय वा चतुरा इत्युक्तम् । गेह इत्यनेन अन्तःपुर एव लालिताः इति न प्रायेण बर्हिगच्छन्तीति सूचयति । ननु 'नासौ जजान न मरिष्यति न एधतेऽसौ' इत्यादिविरोधो रामस्य वृद्ध्यङ्गीकारे इत्यत आह– **नित्येति** ॥ नित्यं प्रवृद्धस्य देशतः कालतः पूर्णस्येत्यर्थः । तदुक्तं गीताभाष्ये 'वृद्धः पूर्णः' इति । 'प्रवृद्धिः धात्वर्थः सा च देशतः कालतश्च' [११.३२] इति प्रमेयदीपे च । वृद्धिः दिने दिने क्रमेण वृद्धिवचनं मन्ददृष्टिं सर्वदा सर्वपरिमाणग्रहाशक्तां दृष्टिम् । ननु भगवानवतारेषु सर्वदा विरिञ्चादीन् प्रति सर्वदा सर्वपरिमाणानि प्रदर्शयति । उत परिमाणे शक्तिव्यक्त्या वा अचिन्त्यशक्त्या वा दिने दिने वृद्धिं प्रदर्शयति । आद्ये

१. नमामि भवसन्तापहानिदं रुग्मिणीपतिम् । श्रीमदानन्दतीर्थार्यहृदयाम्बुजवासिनम् ॥ इति कोशान्तरे पठ्यते ।

विरिञ्चादेरवतारेषु बाल्यकौमारादौ तद्योग्यपरिमाणविलासादर्शनाद्यावतारिकविशेषदर्शनाभावप्रसङ्गात् । मूलरूपे इव सर्वदा सर्वपरिमाणदर्शनाङ्गीकारात् । द्वितीये मन्ददृष्टिमपेक्ष्येति कथं सर्वदा सर्वपरिमाणग्रहण-समर्थानामपि वृद्धिदर्शनाङ्गीकारादिति चेत् । सर्वदा सर्वपरिमाणग्रहणपटवो ब्रह्मादयः भगवान् रामः स्वाचिन्त्या शक्त्या दिने दिने अधिकाधिकपरिमाणं व्यञ्जयन्तीति बुद्ध्या प्रतिदिनवृद्धिं पश्यन्ति । लौकिकास्तु प्राकृतशिशुवत् वृद्धिं पश्यन्तीति तेषां बुद्धिमपेक्ष्य वृद्धिवचनमिति भावः[१] ।।१।।

## १३. गूढकर्तृका टिप्पणी

अथ दशरथात् स्वमातृषु जननानन्तरं चातुर्यादिगुणानामपि दिने दिने अभिवृद्धिसूचनाय चतुरा इति विशेषणम् । अन्तःपुर एव लालिताः न प्रायो बहिर्निर्गच्छन्तीति सूचयितुं...* [गेहे] इत्युक्तम् । ननु 'नासौ जजान न मरिष्यति नैधते असौ' इत्युक्तेः भगवतो रामस्य कथं वृद्ध्यङ्गीकार इत्यत आह– **नित्येति** ।। नित्यप्रवृद्धस्य सर्वदा अणोरणुतरादि महतो महीयस्त्वपर्यन्तं विद्यमानसकलपरिमाणैः अभिवृद्धस्य परिपूर्णस्य वृद्धिः प्रतिदिनं...* कवचनम् । मन्ददृष्टिं सर्वदा सर्वपरिमाणग्रहाशक्तां दृष्टिं बुद्धिमपेक्ष्य प्रवृत्तम् । ननु विरिञ्चादीन् प्रति सर्वपरिमाणानि सर्वदा भगवानवतारेषु दर्शयति उत परिमाणशक्ति...* स्वाचिन्त्यशक्त्या वा दिने दिने वृद्धिं दर्शयति । नाद्यः । रामाद्यवतारेषु बाल्यकौमारप्रदर्शनकाले तद्योग्यपरिमाणविलासादर्शनाद्यावतारिकविशेषदर्शनाभावप्रसङ्गात् । मूलरूप इव सर्वदा सर्वपरिमाणदर्शनाङ्गीकारात् । द्वितीये मन्ददृष्टिमपेक्ष्येति कथम् । उच्यते । सर्वदा सर्वपरिमाणग्रहपटवो विरिञ्चादयः भगवान् रामः स्वाचिन्त्यशक्त्या दिने दिने अधिकाधिकपरिमाणं व्यञ्जयतीति बुद्ध्या प्रतिदिनं वृद्धिं पश्यन्ति । अज्ञास्तु प्राकृतशिशुवत् वृद्धिं पश्यन्तीति भावः ।।१।।

**निरीक्ष्य नित्यं चतुरः कुमारान् पिता मुदं सन्ततमाप चोच्चम् ।**
**विशेषतो राममुखेन्दुबिम्बमवेक्ष्य राजा कृतकृत्य आसीत् ।।२।।**

**व्यासतीर्थीया–** उच्चमिति क्रियाविशेषणम् ।।२।।

---

१. ।। नित्यप्रवृद्धस्येति ।। शश्वदेकविधस्य पूर्णस्येत्यर्थः । ननु विरिञ्चस्य रामरूपादौ बाल्यकौमारादौ तत्तद्योग्य-परिमाणविलासादिविविधविशेषदर्शनमावश्यकम् । अन्यथाऽवतारिकविशेषदर्शनाभावप्रसङ्गात् । न च तद्युज्यते । रामादिसर्वरूपेषु सर्वदा सर्वपरिमाणविविधविशेषद्रष्टृत्वेन अवतारविशेषदर्शनस्य वक्तुमशक्यत्वादिति । मैवम् । सर्वरूपस्य सर्वरूपात्मकत्वेन दर्शने इदं रामरूपं इदं कृष्णरूपमिति व्यवस्थायाः दर्शनवत् रामादिरूपे सर्वदा सर्वपरिमाणादिदर्शनेऽपि विशेषशक्त्या दर्शनपरिमाणाधिक्यादिदर्शनमप्युपपद्यत इति ।।१-१३।। इति हो.पुस्तके अधिकः पाठः ।

**वेदाङ्गतीर्थीया–** कुमारान् निरीक्ष्य सन्ततं मुदमाप । उच्चमिति क्रियाविशेषणम् ।।२।।

**वादिराजीया–** उच्चं उच्चं यथा भवति तथोच्चमिति क्रियाविशेषणम् । तदभिवृद्धेः पितृसन्तोषस्य च समुच्चयार्थश्चशब्दः । जगन्मोहनपुत्रदर्शने सति सन्तोषस्य सम्भावनार्थो वा । कृतानि कृत्यानि कर्तुं योग्यानि पुण्यानि येन सः कृतकृत्यः । अतिमनोहररामश्रीमुखेन्दुदर्शनेनैव परमानन्दो जायत इति भावेन राममुखेन्दुविम्बमित्युक्तम् । रमयतीति व्युत्पत्तेः सर्वाङ्गैरपि हर्षदायको रामः । तत्रापि मुखस्य मन्दस्मितेन कृपाकटाक्षेण चात्यन्तं जनरञ्जकत्वसूचनाय मुखग्रहणम् । तस्यैवेन्दुविम्बत्वनिरूपणं च ।

## श्रीसत्याभिनवतीर्थविरचिता दुर्घटार्थप्रकाशिका

तत्रैव 'निरीक्ष्य नित्यं...' इति श्लोकः । तस्यार्थः । पिता दशरथः चतुरः कुमारान् नित्यं निरीक्ष्य उच्चां उत्कृष्टां मुदं सुखं सन्ततं आप । विशेषतः राममुखेन्दुविम्बं अवेक्ष्य उच्चां मुदं सन्ततं आप । नित्यं सुखं नित्यं स्वरूपसुखं च आप । अत एव कृतकृत्यः मुक्तश्चासीत् इति ।।२।।

**सत्यधर्मीया–** अतीतातनुतनुकृतसुकृतपरिपाकतः स्वपाकाननविलोकनतो लोकनततोकतदितरसुराः सुता इति जातमतिः इतरदुःखापनयनं नयनोत्सवसुखमिति तदुभयानुरूपं फलमाप भूप इति निरूपयति– **निरीक्ष्येति** ।। तत्रादौ सुतत्रिकावलोकनसुखस्याल्पीयस्त्वात्ततो राममुखविलोकनसुखस्य निरवधिकत्वतोऽधिकत्वकथनसौकर्याय सामान्येन चतुःसुतदर्शनफलमाह– **चतुर इति** ।। पिता लोकरीत्या जनको दशरथः । चतुरः द्वितीयाबहुवचनं सत् कुमारविशेषणम् । चतुःसङ्ख्याकान् कुमारान् सुतान् । नित्यं निरन्तरं निरीक्ष्यावलोक्य । सन्ततो अविच्छिन्नपरम्परं यथा तथा । सं आप्रणखादाच शिखं यथा ततं व्याप्तं भवति तथेति वा । उच्चं षष्टिसहस्रसंवत्सरपर्यन्तं स्वेनाननुभूतं भूतले केनाप्यननुभूतत्वादुच्चमुत्तमं यथा भवति तथा मुदं हर्षमाप प्राप । राममुखेन्दुविम्बं रामस्य मुखं आस्यम् । तदेवेन्दोः चन्द्रस्य विम्बो विम्बं वा मण्डलं तं तद्वा । 'खनु अवदारणे' अस्मात्खनतेः 'डित् खनेर्मुट् स चोदात्तः' [उणादि.७०८] इति मुट्यचि मुखमिति भवति । 'आननं मुखम्' इत्यमरः । 'मुखं निस्सरणे वक्त्रे प्रारम्भोपाययोरपि । सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम् ।।' इति मेदिनी [खान्तवर्गः. खद्विकम्.३] । 'वी गतिप्रजने' [वी गतिप्रजनकान्त्यसनखादनेषु] इति वीधातोः 'उल्वादयश्च'[उणादि. ५४४] इति निपातनात् नुम् ह्रस्वश्च । ववयोरभेदाद्वस्य बश्च भवति ।

'विम्बस्तु प्रतिबिम्बे स्यान्मण्डले पुन्नपुंसकम् । विम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान् ।।' इति मेदिनी [बान्तवर्गः.वद्विकम्.७] । 'उन्दी क्लेदने' अतो [उन्देरिचादेः] इचेति ईत्वे उत्वे च इन्दुरिति ज्ञेयम् । 'इन्दुः कुमुदबान्धवः' इत्यमरः । विशेषतः इतरकुमारविलोकनत आधिक्येन । अवेक्ष्य निरीक्ष्य । राजा दशरथः कृतकृत्यः कृतं प्राच्येवाचरितं कृत्यमवश्यानुष्ठेयं ['विधितः प्राप्तं' इति क्वचित्] कर्म येन स

तथा । कृञः क्यपि तुकि कृत्यमिति भवति । 'कृत्याभिचारिकं कर्म कर्म कृत्यं निगद्यते' इति । 'तथा हि कृत्या महति प्रयुक्ता' इत्येतद् व्याख्यावसरे रुग्मिणीशविजयटीकाभिहिताभिधानात् । 'कृत्यं कर्म क्रिया कृतिः' इति विश्वः । मुक्त इति यावत् । चोऽवधारणे । कृतकृत्य एवासीन्मुक्त एवाभवदिति भावः । यद्वा 'कुमारान्' इति सुतत्रितयमेव विवक्ष्यते । 'चतुर' इति च राजविशेषणम् । मुखदर्शनमात्रेण तदुत्तमतेतरावमताज्ञाननिदानचातुरीमानिति चतुरो राजा । कुमारान् लक्ष्मणभरतशत्रुघ्नाख्यान् । नित्यं त्रिकालं निरीक्ष्य मुदं सन्तोषमात्रमाप प्राप । नित्यं यथा भवति तथा मुदमापेति वा । अनेन लौकिकसकललाभतोषतो विशेषोऽस्या मुदो द्योत्यते । सुतप्रमुखमुखावलोकनफलमाह– **विशेषत इति** ।। राजा राममुखेन्दुबिम्बमवेक्ष्य कृतकृत्यो मुक्तः । चेन अन्यदर्शनजनितमोदसममुदं च कैमुत्येन समुच्चिनोति । तेनेह लौकिकं पारलौकिकं च शं जनेशः प्रापेति तात्पर्यं सूचितं भवति । कुतो वैशेष्यममुष्येत्यतो हेतुमाह– **पितेति** ।। हीत्यावर्त्यते । यस्मात् पिता । योग्यतया सर्वस्येति लाभः । पिता विधाता ब्रह्मेति यावत् । पितृपितामहत्वादिकं वैवक्षिकं इति शतधृतेरपि सम्भवति पितृत्वम् । विश्वस्रष्टृत्वाद्वा पिता । यद्वा पितामहादीनामपि पितृशब्दवाच्यत्वं 'पितॄणां दत्तमक्षयम्' 'पितॄणां तृप्तिहेतवे' इति मानसिद्धमिति पितापि पितामह इति सम्भवति ।

विशेषतः विशिष्यते गुणैः सर्ववस्तुभ्य इति विशेषो रामः तस्मात्तन्मुखावलोकनतस्तोषविशेष उचित इति वा । शेषादप्रधानाद् विरुद्धः प्रधान इति वा विशेषस्तस्माद्विशेषतः । पञ्चम्यां तसिः । सन्ततमविच्छिन्नपरम्परम् । नित्यं स्वरूपभूतम् । उच्चं इतराधिकारितोऽधिकं यथा स्यात्तथा मुदमाप । ततस्तादृशेशदर्शनतो दशरथकृतकृत्यता न चित्रमिति भावः । अथवा पिता दशरथः इन्दुबिम्बं चन्द्रमण्डलं निरीक्ष्य कृतकृत्यः कृतं कृत्यं चन्द्ररामचन्द्रमण्डलमुखवैलक्षण्यकारणविचाररूपं येन स तथा सन् । हे राममुख भवद्विशेषतः विशिष्टमधिकमिति यावत् । द्वितीयायां तसिः । इन्दुबिम्बमिति प्रकृतस्य इन्दुविम्वादिति विपरिणतस्य अवधित्वेन विशेषतःपदेनान्वयः । मुखेन्दुमण्डलोत्कृष्टत्वापकृष्टत्वयोर्हेतू आह– **सन्ततमित्यादिना** ।। भवत् । सन्ततं निष्कलङ्कितया समीचीनं सततं व्याप्तं नित्यं अक्षयिष्णु । इन्दुबिम्वं तूच्चं ऊर्ध्वदेशमात्रगतं तदपि रात्रावेव न ततः ऊर्ध्वमिति तदपेक्षया विशेषत आसीदिति वा । इतीति शेषः । इति कृतकृत्यो विरचितविचारः नित्यं मुदं मुक्तौ स्वानन्दभुक्तिशक्तिव्यक्तिमाप इत्यावृत्त्यान्वयो वा । पूर्वं कुमारदर्शनात् साधारणमुन्मात्रोक्तिरत्र तु नित्यमुदुक्तिरिति फलवैलक्षण्यं ज्ञेयम् । राजाकृतकृत्य इत्येकं वा पदम् । राजस्वितरधराधरेषु [वरेषु] मध्य आ सम्यक् कृतकृत्यः पूर्णकाम आसीदित्यर्थः । यद्वाऽकृतं न कृतमित्यकृतमनौपाधिकं कृत्यं यस्य स तथा । मुक्त आसीत् । प्राक् 'पिता' इति 'राजा' इति चोत्तरत्र वदता कथञ्चित् त्रिषु पुत्रेषु तत्पितृत्वं सम्भवेत् भगवति तु जातुचिदपि नाङ्गीकर्तुमुचितमिति जानन्तोऽपि जना राजेति भीत्या भगवत्पितृत्वप्रवादं सेहिरे इत्यसूचि ।

रामतदवरजदर्शनस्य मोक्षमोदकारणत्वं तन्मूलरूपपर्यालोचनया युक्तमिति वा वक्ति– **विशेषत इति** ।। विश्च शेषश्च परमात्मा चानन्तश्च विशेषौ । उपलक्षणया भरतशत्रुघ्नमूलरूपकन्दर्पानिरुद्धग्रहः । भावप्रधानो निर्देशः । ततः पश्चम्यन्तात्तसिः । वित्वाच्छेषत्वात्कामत्वाच्च तरतमभावेन फलं युक्तं भगवद्भागवतावलोकनभवं भूपस्येति भावः । यद्वा चो यदर्थे । यः विशेषतः वीनां पक्षिणां इतरेषां शं यया सा इषा इच्छा यस्य सः विशेषो गरुडः तस्य विशेषतः । षष्ठ्यां तसिः । अंसे आप । तद्राममुखेन्दुबिम्बं अवेक्ष्य कृतकृत्य आसीत् । पिता आमुत् अतितोषश्च आसीदित्यन्वयः । ननु रामपदस्य मुखेन्दुपदेन समस्तत्वात् कथमसमर्थस्य यो अंसं आप तद्राममुखेत्यनेनान्वय इति चेत् । सत्यम् । बुद्धिसन्निधापितेन असमर्थेनापि अन्वयस्सम्भवति । तथा हि महाभाष्ये शब्दानुशासनम् । 'के ते शब्दा इति' टिटीके च कैय्यटः 'बुद्धिसन्निधेः शब्दशब्दान्वयः' इति । विशेषस्तु 'हृदीव धरिणीपतिप्रणयिनि' इति 'सश्चोदिते यथा स्फुरति सन्निधेः' इति च कस्य भूमापतेः' इत्यादिमतत्कृतभाष्यकारिकातोऽवगन्तव्यः । 'यत्तु 'कृतकृत्यः कृतकर्तव्यसकलसाधन' इति व्याख्याय तदुक्तं 'कृत्यान्तरं नृपे नास्ति निधिं लब्ध्वेव निर्धन' इति मधुसूदनतीर्थीयव्याख्यानम् । तच्चिन्त्यम् । रामायणवाक्ये सन्तोषातिशयवशेन कृत्यान्तरज्ञानाभावकथनेन स्वव्याख्यानानानुगुण्यात् ।।२।।

**मधुसूदनीया–** कृतकृत्यः कृतः कर्तव्यसकलसाधनः । तदुक्तम्– 'कृत्यान्तरं नृपे नास्ति निधिं लब्ध्वेव निर्धनः' इत्यादि ।।२।।

**वरदराजीया–** ।। **निरीक्ष्येति** ।। पिता राजा दशरथः चतुरः चतुःसङ्ख्याकान् कुमारान् नित्यं निरीक्ष्य सन्ततं सदा मुदं हर्षं उच्चं यथा भवति तथा आप प्राप्तवान् । तत्रापि राममुखेन्दुदुबिम्बं श्रीरामस्य मुखाख्यं चन्द्रबिम्बं विशेषतोऽवेक्ष्य कृतकृत्य मुक्त इव आसीदित्यर्थः ।।२।।

**जनार्दनीया–** पिता दशरथः । चतुरः चतुस्सङ्ख्याकान् । नित्यं निरीक्ष्य, सन्ततं अविच्छिन्नमित्यर्थः । मुदं उच्चं यथा स्यात्तथा आप । कृतं कृत्यं भगवत्प्रीतिकृद्धर्मो येन स तथा ।।२।।

**चट्टी–** *...विशेषाकारेण वीक्ष्य दृष्ट्वा रामं दशरथः कृतकृत्यः कृतं कृत्यं येन स मुक्त इवासीत् ।।

**अनन्तभट्टीया–** उच्चमिति क्रियाविशेषणम् । तदभिवृद्धिः । पितृसन्तोषस्य समुच्चयार्थं चशब्दः । कृतं कृत्यं येन सः कृतकृत्यः । अर्जितसमस्तपुण्य इत्यर्थः । उच्चं यथाभवति तथेति । क्रियाविशेषणम् ।।

**भावचन्द्रिका–** ।।१।। वार्धकावस्थायां पुत्रार्थं प्रयत्नकरणेऽपि बाल्यावस्थामारभ्य ज्ञानित्वात् प्रथमवयःकार्यमपि *...ज्ञापनाय मुखेन्दुबिम्बमित्युक्तम् । तैत्तिरीयभाष्ये–[भृगुवल्लि] यस्य तद्ब्रह्म संसिद्धं पूर्वं तेनाप्यतेऽग्रतः । मध्ये वयसि चेत्सिद्धं मुक्तो मध्यं प्रपश्यति ।। वार्धके चेद्विजानाति मुक्तः पादौ प्रपश्यति । तेजोमण्डलमेवान्यदङ्गं विष्णोः प्रपश्यति ।। पूर्वे वयसि बोद्धव्यं आमुखात् सर्वदृष्टये ।। इति ।।२।।

**अतिविशद–** पिता मुदं सन्ततमाप चोच्चमित्यत्र उच्चमिति उच्चं यथा भवति तथा मुदमवापेति क्रियाविशेषणम् । उच्चं राममुखेन्दुबिम्बमिति वा । ततश्चोच्चं उन्नतं सर्वलक्षणसम्पन्नं राममुखेन्दुबिम्बं अवेक्ष्येत्युक्तं भवति । अत्र मुखग्रहणेन तस्यैव सर्वसौन्दर्यस्थानत्वं दशरथस्य पूर्वे वयस्यपरे च सूचयति । 'एतद्वै मुखतोऽन्नगं राद्धं' [तै.उ.भृगुवल्ली] इत्युपनिषद्भाष्ये 'पूर्वे वयसि बोद्धव्यं आमुखात् सर्वदृष्टये' इत्युक्तत्वात् मुखग्रहणेनैव 'पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतीमुखम् । यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि ।। यावन्तोऽप्सु प्राणिनां भूयात्पुत्रो पितुस्ततः ।।' इति ब्राह्मणं च सूचयति । यद्वा निरीक्ष्य नित्यं चतुरः कुमारानित्यस्यायमर्थः । पिता चतुरः कुमारान्निरीक्ष्य मुदमापेति । तद्विवरणम्– **विशेषत इति** ।। विशेषस्तु शत्रुघ्नं निरीक्ष्य नित्यं मुदमापेति भरतं निरीक्ष्य सततमिति लक्ष्मणं निरीक्ष्य उच्चमिति राममुखेन्दुबिम्बं निरीक्ष्य राजा कृतकृत्य आसीदिति । कृतकृत्य इति लुप्तोपमा । राममुखेन्दुमिति वक्तव्ये यदा बिम्बग्रहणं तदा अवतारदर्शिनामपि मुक्तिः कदाचिद्बिम्बम्बदर्शनं विना न सम्भवतीति सूचनार्थः । पूर्वयोजनायां सर्वमुखदर्शनया न तादृश्येव प्रतीतिरिति प्रतीतिं निवारयितुं विशेषत इत्युक्तम् । अथवा पिता चतुरः कुमारान्निरीक्ष्य मुदमवाप विशेषतः राममुखेन्दुबिम्बमवेक्ष्य कृतकृत्य आसीत् । चन्द्रदृष्टान्तेन प्राप्तमनित्यत्वादिकमस्य नास्तीत्याह । नित्यं उदितं स्वरूपतः नित्यं च । चन्द्रमण्डलं परिच्छिन्नं एतत् सन्ततं सम्यक् ततं व्याप्तम् । तत् कलङ्कितत्वेन नीचम् । इदं सर्वदोषरहितत्वेन उच्चम् ।।२-३।।

**गूढवाक्यार्थ–** ।। **निरीक्ष्येति** ।। चतुरश्चेति चशब्दसम्बन्धः । उच्चं यथा भवति तथेति क्रियाविशेषणम् । कृतकृत्यः कृतार्थः मुक्त इवेति भूतोपमा वा ।।२।।

**तन्मातरः पौरजना अमात्या[१] अन्तःपुरा वैषयिकाश्च सर्वे ।**
**अवेक्षमाणाः परमं पुमांसं स्वानन्दतृप्ता इव सम्बभूवुः ।।३।।**

**व्यासतीर्थीया–** स्वानन्दतृप्ता मुक्ताः ।।३-४।।

**वेदाङ्गतीर्थीया–** अन्तःपुरा अन्तःपुरस्थाः । स्वानन्दः स्वरूपानन्दः ।।३।।

**वादिराजीया–** अन्तःपुराः राजगृहान्तरेव पूरयन्त इति पुराणि स्वस्वस्थानानि यासां ताः । अन्तःपुरा दास्य इत्यर्थः । वैषयिकाः विषयो राष्ट्रं तत्रत्या जना वैषयिकाः । स्वानन्दतृप्ताः स्वरूपानन्देन तृप्ताः मुक्ता इत्यर्थः । प्रत्येकं पुत्रवत्योरपि सुमित्राकैकेय्योर्लावण्यादिशुभगुणैः सर्वोत्तम-परमपुरुषरामसर्वाङ्गदर्शनादेवातिशयितानन्दो जायते इति सूचनाय परमं पुमांसमित्युक्तमिति भावः ।।

१. 'मन्त्री बुद्धिसहायः स्यात् अमात्यः कार्यसाहाय्यकृत् । दुर्गाध्यक्षो धनाध्यक्षः सेनाध्यक्षश्च भूपतेः।। सूतः पुरोधा दैवज्ञः सप्तैते मन्त्रिणो मताः।।

**सत्यधर्मीया–** न केवलं कुमारनिरीक्षणेन तन्मात्रप्रमोदोऽपि तु पितुरिव तन्मात्रादीनामिति वदति– **तन्मातर इति** ।। तेषां रामादीनां चतुर्णां मातरः कौसल्याद्यास्तिस्रः स्वानन्दतृप्ता इव स्वः स्वरूपभूतश्चासावानन्दश्च तेन तृप्ताः मुक्ता इव तत्सदृश्यः सम्बभूवुः समभवन् । 'तन्मातरः पौरजना' इत्यादिना स्वानन्दतृप्ता इव सम्बभूवुरित्यस्य पृथक्पृथगन्वयेन वाक्यभेदतो मात्रादीनां स्वानन्दतृप्ततायां तारतम्यं ज्ञेयम् । ज्ञापयति चाचार्योऽमुमर्थं 'तन्मातर' इति तच्छब्दग्रहणेन । पौरजनादिभिः सह जगज्जनकजनन्यादीनां फलैक्यकथनेन नेमाः रामा रामादिमातरो अपि तु ते देववरप्रार्थनादेव देववरा इरायामवातरन्नित्यर्थं वानन्दतीर्थः सूचयामास । पुरे भवाः पौराः ते च ते जनाश्च पत्तने विद्यमाना जनाश्च स्वानन्दतृप्ता इव सम्बभूवुः । अमात्याः मन्त्रिणः । 'अव्ययात्त्यप्' [कौ.१३२४] इति 'अमेहक्वतसित्रेभ्य एव'[वा] इत्युक्तेः अमेत्यव्ययात्त्यपि अमात्य इति भवति । 'आत्मामात्य–मन्त्रिसचिवयुवराज' इति विश्वः । अन्तःपुरं राजतरुणीनिवासस्थानं येषामस्ति निवासार्थं ते योषिज्जनाः सौविदल्लाश्च नपुंसका इति यावत् । अन्तःपुरशब्दान्मत्वर्थे 'अर्श आदिभ्यः' इत्यच् । वैषयिकाः विषये देशे भवाः विषयशब्दात् 'तत्र भव' इत्यर्थे ठञि 'तस्य इक्' इतीकि ञित्वादादिवृद्धौ वैषयिक इति भवति । नेदं सम्बन्धविशेषेण तोषवचनमाश्चर्यमित्यतः सामान्येनाह– **सर्व इति** ।। स्वीया असौ वाश्चेति सर्वे । यद्यपि सन्मात्राणां भागवतत्वेन भगवत्सम्बन्धोऽस्त्येव । तथाप्यापाततः प्रतीयमानाधुनातनतनुसम्बन्धविधुराः साधवो ग्राह्याः । यद्वा 'सर्व' इति स्वीयाः सन्तो गृह्यन्ते । स्वानन्दतृप्ततायां हेतुमाह– **अवेक्ष्यमाणा इति** ।। परमं पुमांसम् । पुंशब्दात् डुमसुनि पुमानिति भवति । 'स्युः पुमांसः पञ्चजना' इत्यमरः । पुरुषोत्तमं राममवलोकयन्तः सन्तः स्वानन्दतृप्ता इव सम्बभूवुः । इवेन किञ्चित्कालव्यवधानेन भावित्वं मुक्तत्वस्य द्योत्यते । पूर्वं 'कृतकृत्य आसीत्' इत्युक्त्याऽत्र च इववचनेन नरपतितदितरफलवैलक्षण्यं सूचितं भवति । प्राक् 'तन्मातर' इति बहुवचनेन तिसृणां ग्रहणेन, ग्रहणेन च पुरतः 'परमं पुमांसम्' इति एकस्य, ज्ञायते कौसल्येतरयोरपि स्वस्वतोकावलोकनतोऽप्यस्तोकश्लोककौसल्याबालविलोकनत एव तोषविशेष इति सुन्दरतरशरीरो रमारमण इति । यद्वा 'तन्मातर' इति तस्य रामस्य मातर इत्येव विग्रहः । एतेनोपचरितमातृभ्यां सुमित्राकैकयीभ्यां सह निर्देशेन नेशस्य कौसल्यापि माता किन्तु तस्यै यशो दातुं यशोदासुतवदवनावतारि भगवतेति भावः सूच्यते । एवं चेदेव 'स राममुख' इत्यव्यवधानप्रकृतपरामर्शः 'परमं पुमांसम्' इति निर्देशश्च समञ्जसौ भवतः ।

'स्वानन्दतृप्ता' इति प्रतीकालम्बनाप्रतीकालम्बनभेदेन द्विविधा अधिकारिणो दृष्टान्ततयाऽभिप्रेताः । ते च कीदृशा इत्यतस्तत्स्वरूपमपि निरूपयति– **पौरजना इति** ।। पुरस्य शरीरस्य प्रतीकस्येमे पौराः ते च ते जनाश्च, प्रतीकालम्बना इति यावत् । जायतेऽस्मात्सर्वं जगदिति जो हि जनकः । स नास्ति

यस्येति जनोऽजो नारायणः । पौरः पुरे शरीर एव दृष्टत्वात् पौरः । स जनो येषामिति । 'अन्येष्वपि दृश्यन्ते' इति दृशिग्रहणात्केवलादपि जनेर्डो ज्ञेयः । इयञ्च रीतिः 'जनकस्यात्ययो जातिः' इति व्याख्यावसरे श्रीमट्टीकाकारैर्निपुणतरं प्रदर्शितेति विस्तरस्ततो ज्ञेयः । नकारस्य वर्णविपर्ययन्यायतो जकारोत्तरं श्रुतिर्ज्ञेया । यद्वा जनयतीति स तथा । पौरो जनोऽशेषजगज्जनको येषामिति णिजन्ताज्जनेर्डे जन इति भवति । एवमपि निर्वचनं 'णिजन्ताद्वा' इति टिटीके टीकाकार इति ततो मन्तव्यम् ।

अप्रतीकालम्बनानाह– **अन्तःपुरा वैषयिकाश्चेति** ।। अन्तः पुरे शरीरमध्ये अः भगवान् येषामुपास्यत्वेन ते तथा । तथा वैषयिकाश्च । वैषयिकः सकलेषु विषयेषु व्यापित्वेन भवो वैषयिकः स अः नारायणो येषां ते तथा । शरीरान्तस्तद्बहिरपि परमात्मोपासकाः अप्रतीकालम्बनाः । उभयेषां समानधर्ममाह– **परमिति** ।। परं उत्तमं पुमांसम्, पुरुषोत्तममिति यावत् । तदभिधानमभिधत्ते– **अमिति** ।। अकारवाच्यम् । अवेक्ष्यमाणाः । परममुत्तमज्ञानमुत्तमसम्पदं वा । एवञ्च सति 'तन्मातर' इति दार्ष्टान्तिकश्च अप्रतीकालम्बनरूपोत्तमाधिकारिदृष्टान्तः । इतरदार्ष्टान्तिकश्च प्रतीकालम्बनाख्य-मध्यमदृष्टान्त इति दृष्टान्तदार्ष्टान्तिकभावः फलानुगुणो भवति । स्वानन्दः स्वेन परमात्मना भुक्त आनन्दस्तेन तृप्ताः भगवद्भुक्तानन्दोच्छिष्टानन्दसन्तुष्टाः अप्रतीकालम्बनादयः । 'परस्स्वो हरिरुद्दामः' [भा.ता.१०.२.१८] इति वचनात् । तथा चायं दृष्टान्तदार्ष्टान्तिकक्रमः । तन्मातरः अन्तःपुरा वैषयिका अप्रतीकालम्बनाः स्वानन्दतृप्ता इव स्वानन्दतृप्ताः सम्बभूवुः । अमात्यादयः सर्वे मध्यमाः पौरजनाः प्रतीकालम्बनाः स्वानन्दतृप्ता इव सम्बभूवुरिति । अनेनाप्रतीकादिसूत्रार्थ अर्थादुक्तो भवति । तृप्ताइवेति पदमेकम् । साक्षात्स्वानन्दतृप्तपदेनान्वयात् । 'इवेन समासो विभक्त्यलोपश्च' [२-४-७१.सू.वा] इति विभक्त्यलोपश्च । उदाहरणं तु 'वागर्थाविव' 'जीमूतस्येव' इत्यादि । यत्र तु न साक्षादन्वयो अपि तु व्युत्क्रमेण तत्र भेदः पदयोरिति बोध्यम् । यथोक्तं तत्वसुबोधिन्याम् 'तैत्तिरीयाश्च पदं विच्छिद्य पेठुः । 'उद्वाहुरिव वामनः' इत्यादिप्रयोगात्'इति[१] तत्रेवस्य वामनपदेनान्वयात् पदभेद इति ध्येयम् ।।३।।

**वरदराजीया–** न केवलं पितुरेवं भाव आसीदपि तु तन्मात्रादीनामप्येवमेवासीदित्याह– **तन्मातर इति** ।। तस्य रामस्य मातरः कौसल्याद्याः पौरजना अयोध्यानिवासिनो लोका अमात्याः मन्त्रिणः सुमन्त्राद्या अन्तःपुराः अन्तःपुरस्थाः अन्तःपुरं निवासस्थानं यासां ताः तथेति वा । वैषयिकाः विषये देशे भवाः सर्वे प्राणिनश्च परमं पुमांसं परमपुरुषं श्रीरामं नित्यमेव अवेक्ष्यमाणाः स्वानन्दतृप्ता इव स्वरूपानन्देन सन्तुष्टा मुक्ता इव सम्बभूवुरित्यर्थः ।।३।।

---

१. 'तेन 'जीमूतस्येव' इत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः । 'उद्वाहुरिव वामनः' इत्यादौ व्यस्तप्रयोगश्च सङ्गच्छते । इति मनोरमायां स्थितम्' इति इदानीन्तनवाक्यविन्यासक्रमः ।

**जनार्दनीया–** तेषां रामादीनां मातरः पौरजनाः पुरसम्वन्धिनः अन्तःपुराः अन्तःपुरे वर्तमानाः स्त्र्यादयः विषये भवाः वैषयिकाः राष्ट्रस्थाः स्वानन्देन स्वरूपानन्देन तृप्ता इव मुक्ता इवेत्यर्थः ॥३॥

**चट्टी–** न केवलं पितुरेव हर्ष आसीत् अपि तु तन्मात्रादीनामपीत्याह– **तन्मातर इति** ॥ तेषां रामादीनां मातरः पौरजनाः पुरसम्बन्धिनः अमात्याः मन्त्रिणः अन्तःपुराः अन्तःपुरे वर्तमानाः स्त्र्यादयः विषये देशे भवाः वैषयिकाः सर्वे प्राणिनश्च परमं पुमांसं परमपुरुषमवेक्ष्यमाणाः स्वानन्दतृप्ताः स्वानन्देन स्वरूपानन्देन तृप्ता इव मुक्ता इव सम्बभूवुरित्यर्थः ॥३॥

**अनन्तभट्टीया–** अन्तःपुरा राजगृहे स्थाः । वैषयिकाः...* । स्वानन्दतृप्ता मुक्ताः ॥३॥

**भारतश्री–** तन्मातृपौरादीनां मुदं विशदयति– **तन्मातर इति** ॥ स्वानन्दतृप्ता इव मुक्ता इव ॥३॥

**भावचन्द्रिका–** तदिति पित्रनन्तरं मातुरुक्तिः । पौरा अपि किम्वन्तःपुराः पौरजनाः वैषयिकाश्च दशरथस्य पुत्रोत्पत्तावितरेषां किमित्यत आह– **तदिति** ॥ स दशरथ एव । मातापितृवत् येषामित्यर्थः । तदुक्तं सङ्ग्रहरामायणे– [३.३८] 'पाल्यमानाः प्रजाः सर्वाः प्रजानाथेन पुत्रवत् । अवेक्ष्य तन्तुमन्तं तं तुष्यन्ति स्म गृहे गृहे ॥' इति ॥३॥

**गूढवाक्यार्थ–** अन्तःपुरा राजगृहस्थाः । वैषयिकाः देशस्थाः । स्वानन्दतृप्ताः मुक्ताः ॥३॥

**ततः [१]सुवंशे शशिनः प्रसूतो गाधीति शक्रस्तनुजोऽस्य चासीत् ।**
**वरेण[२] विप्रत्वमवाप योऽसौ [३]विश्वस्य मित्रं स इहाजगाम ॥४॥**

**वेदाङ्गतीर्थीया–** ततः यः शक्रः शशिनः सुवंशे गाधीति प्रसूतः अस्य यस्तनुजः आसीत् असौ वरेण विप्रत्वमवाप । विश्वस्य मित्रं विश्वामित्रनामा स बभूव । स तस्मिन् श्रीरामविलासप्रादुर्भावसमये इह आजगामेत्यन्वयः ॥४-५॥

**वादिराजीया–** शशिनः सुवंशे शक्रो गाधीति नाम्ना प्रसूतः । अस्य गाधिनश्च यो वरेण विप्रत्वमवाप । भविष्यतोऽपि कार्यस्य निश्चितत्वादतीतत्वेनोक्तिः । असौ विश्वामित्रस्तनुज आसीत् । सः विश्वस्य

---

१. 'अस्मांश्च सर्वे जानन्ति चन्द्रवंश्यांश्च वैष्णवान् । देवमन्यं न सेवन्ते चन्द्रवंश्या हरिं विना ॥' इति ब्रह्मवैवर्तवचनात् तुहिनभानुवंशसम्भूतानां भूभृतां भगवति एकान्तभक्तत्वादपि तस्य वंशस्य शोभनत्वं ज्ञायते । 'विश्वामित्र ऋषेः श्रुत्वा विशुद्धान्वयवर्णनम् । नराः कुलीनजन्मानो भवन्त्येव न संशयः ॥'इत्युमासंहितायाम् ६अ ।

२. स्कन्दप्रसादेनापि विश्वामित्रस्य ब्राह्मणत्वं प्राप्तम् इत्युक्तं शिवपुराणे.२सं.४खं.३.१२ 'विश्वामित्र वरान्मे त्वं ब्रह्मर्षिर्नात्र संशयः । वसिष्ठाद्याश्च नित्यं त्वां प्रशंसिष्यन्ति चादरात् ॥'

३. विश्वामित्रस्य क्षत्रियत्वावस्थायां विश्वरथ इति नामान्तरमुक्तं हरिवंशादिषु । तथाहि- 'विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः । जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्धनः॥' इति । हरि.हरि.प.२७.४४]

मित्रं विश्वामित्रः । अमित्र इति भ्रमनिवारणाय विभज्य कथनम् । ततः कुमाराणां बाल्यावस्थानन्तरम् । इह अयोध्यायामाजगामेति योजना । असमस्तपदे मित्रपदस्य नित्यनपुंसकत्वात् स इत्यनेन सम्वन्धः । समस्तपदे तु विश्वस्य आ सामन्तात् मित्रं यो मुनिः स विश्वामित्र इति विग्रहः । दुर्जनदैत्यहननेन विश्वोपकारार्यं चागत इति सूचनाय विश्वस्य मित्रमित्यसमस्तपदोक्तिः । समस्तपदे हि कात्स्न्यार्थका-शव्दवलात् सर्वेषां मित्रमिति लभ्यते । तच्च मखविघ्नकारिसुबाहुदैत्यवधाय रामं निनीषोर्मुनेर्नाभिमतम् । असमस्तपदे तु तदभावात् । विश्वैकदेशस्य सद्वर्गस्यैव मित्रभूत इति भावः ।।४।।

**सत्यधर्मीया–** यदर्थमत्र भवता शुभवता भगवतावातारि तद्वक्तुमुत्कमना अमानमानसस्तावत् मुनिमखविखण्डकमारीचादिदुराचारनिशाचरनिरासादीशपराक्रमं अङ्कुरयितुं गाध्यात्मजद्विजताप्राप्तिप्रकारमिव अयोध्यां प्रति तदध्यागमनं निरूपयति– **तत इति** ।। स्ववाञ्छितार्थसार्थवितरणहेतुभागवतावतारानन्तरम् । 'पञ्चम्यास्तसिल्' [कौ.१९५३] इति तच्छब्दात्तसिः । अपुत्रत्वज्वरपरिहारपुरस्कारेण दशस्यन्दनस्य अनन्यसामान्यगुणनन्दनवदनदर्शनजनितापारपरितोषप्राप्त्यनन्तरं वा । शशिनः चन्द्रस्य । 'सुखादिभ्यश्च' [कौ.१९३७] इति शशशब्दात् मत्वर्थे इनिः । सुवंशे सु शुद्धश्चासौ वंशोऽन्वयश्च तस्मिन् । सुना शशिशब्दादापाततः प्रतीतकलङ्किताशङ्कां कुलस्य निराकरोति । कृष्णनहुषाद्यभिव्यक्त्युत्पत्तिस्थानत्वाद्वंशस्य शुद्धता ज्ञेया । 'अन्ववायोऽन्वयो वंश' इति हैमः । तथा चोक्तम्– पाराशरः– 'श्रूयतां मुनिशार्दूल वंशः प्रथिततेजसः । सोमस्यानुक्रमात्ख्यातो यत्र विश्पतयोऽभवन् ।। अयं हि वंशो नहुषययातिकार्तवीर्यादि-भूपालैरलंकृतः ।।' इति श्रीविष्णुपुराणे । श्रीभागवते च– 'अहो अलं श्लाघ्यतमं यदोः कुलं अहो अलं पुण्यतमं मधोर्वनम् । यदेष पुंसामृषभः पुरुश्रवाः स्वजन्मना चङ्क्रमणेन चाश्चति ।।' इति । [भा.१.१०.२७] प्रसूतः उत्पन्नः । 'षूञ् प्राणिप्रसवे' इत्यतो क्ते धातोः षस्य से सूत इति भवति । तद्वंशसम्भवः क इत्यतस्तदाह्वयमाह– **गाधीतीति** ।। सः प्राक् क इत्यतः कथयति– **शक्र इति** ।। 'स्फायितञ्चि वञ्चिशकि...'[उणादि.१७८] इत्यादिना रकि शक्र इति भवति । 'शक्रः पुमान् देवराजः' इति मेदिनी [रान्तवर्गः.रद्विकम्.८७] । पूर्वं पौलोमीरमणो गाधीतिनामा सन् चन्द्रवंशे कुशाम्बतपसा सन्तुष्टः कुशाम्वादुदभूत् । यथोक्तम् 'एष कुशाम्बः शक्रतुल्यः पुत्रो भवेदिति तपश्चकार । तं चोग्रतपसमवलोक्य मा भवत्वन्योऽस्मत्तुल्यवीर्य इत्यात्मनैवेन्द्रः पुत्रत्वमगमत् । स गाधिर्नाम कौशिकोऽभवत्' इत्यादि श्रीविष्णुपुराणे [४अं.७.४] । तस्यैव कुशनाभ इति नामान्तरम् । यथोक्तं रामायणे 'वलवान् कुशनाभ इति श्रुतः' । 'कुशनाभसुतस्त्वासीत्' इति च [बाल.५१.१८] । गाधीतीत्यत्र गाधिरिति गाधीत्येव विग्रहः । इकारान्तोऽयम् । यथोक्तं रामायणे 'गाधिरित्येष विश्रुतः । गाधेः पुत्रो महातेजा' इति च [वाल.५१.१९] । गाधीति नकारान्तो वा 'गाधिनस्तनयः श्रीमान्' इति तत्रैव प्रयोगात् । यदर्थमुक्ता गाध्युत्पत्तिस्तदिदानीं वक्ति– **अस्येत्यादिना** ।। अस्य गाधेः तनुजः तनयः

आसीदभवत् । स क इत्यतो यः क्षत्रियः सन् विप्रत्वं प्रापेति तत्तपोऽनन्यदुरापमिति श्रीपतिविकम्पानुकम्पापात्रं विश्वामित्र इति वदति– **य इति** ।। यः क्षत्रियोऽसौ विश्वामित्रः । विप्रत्वं ब्राह्मणत्वम् । अवाप प्राप । तत्र हेतुमाह– **वरेणेति** ।। ब्रह्मण इति शेषः । 'त्वं विप्रो भव' इति स्वयम्भुवा दत्तेन वरेणाशीर्वचनरूपेण । तथा च गदापर्वणि– [४१.२८] 'स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति । तथेति चावदद् ब्रह्मा सर्वलोकपितामहः ।।' इति । यद्वा विश्वस्य ब्रह्मब्रह्माणीच्यवन-शमनरुचिकवशिष्ठादिसमस्तस्य वरेण विप्रत्वं प्रापेति । 'इति स्तुता वेदमाता प्राह गम्भीरया गिरा । विश्वामित्र ब्राह्मणोऽसि द्विजत्वं दत्तवत्यहम् ।। वशिष्ठसाम्यं भविता ममोपासनया मुने । ऋषिर्मम भव त्वं हि तस्माच्छ्रेष्ठो न संशयः ।।' इति कावेरीमाहात्म्ये । 'ब्रह्मर्षे स्वागतं तेऽस्तु तपसाऽस्मि सुतोषितः । ब्राह्मण्यं तपसोऽग्रेण प्राप्तवानसि कौशिक ।।' इत्यादि श्रीरामायणे [बा.का.६५.१८] । 'प्रतिगृह्य ततो धर्मः तथैवोष्णं तथा नवम् । भुक्त्वा प्रीतोऽस्मि विप्रेति तमुक्त्वा स मुनिं गतः ।। क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः । धर्मस्य वचनात्तत्र विश्वामित्रस्तथाऽभवत् ।।' इत्याद्युद्योगपर्वणि [१०६.१७-१८] । 'च्यवनाद्वरदानेन रुचिकस्य स्वसम्भवात् । स्वस्यैव तपसा चापि ब्राह्मण्यं समवाप्तवान् ।।' इति शान्तिपर्वाणि । 'ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः । सख्यं चकार ब्रह्मर्ष इदमस्त्विति चाब्रवीत् ।।' इति रामायणे [बा.का.६५.२५] ।

अनुगतनित्यसामान्याभावात् क्षत्रियत्वधर्मत्यागेन ब्राह्मणत्वप्राप्तिर्युक्तेति ज्ञेयम् । 'मासेन शूद्रो भवति ब्राह्मणो रसविक्रयात्' इति । प्रपञ्चितश्चैतत्प्रकारः टीकाकारैः सुधायामिति ततोऽनुसन्धेयः । तन्नाम अर्थतो निर्वक्ति– **विश्वस्य मित्रमिति** ।। विश्वस्य साधुसङ्घस्य मित्रमापदः परिपाता सुहृत् । 'अमिचिमिदिशसिभ्यः क्त्रः' [उणादि–६१३] इति मित्रेति भवति । 'मित्रं सुहृदि न द्वयोः' इति मेदिनी [रान्तवर्गः.रद्विकम्.७७] । इह एतत्समये विश्वामित्र आजगाम । 'इदमो हः' [कौ.१९५८] इति सप्तम्यर्थे इदंशब्दात् त्यदाद्यत्वे दस्य हे च इह इति भवति । अजराजजनिमिति शेषः । विश्वेत्यस्य वरेणान्वयपक्षे मित्रं विश्वामित्रः प्रत्याजगामेत्यन्वयेन अध्याहारक्लेशो नास्तीति ज्ञेयम् । मित्रमिति विश्वस्यासौ मद्वाञ्छितं प्रयच्छति तेन मन्मित्रं दशरथ इति विश्वासं कृत्वाजगामेति वा । असौ प्रकृतो दशरथः इति अनुवर्तते । असौ मित्रमिति विश्वस्य विश्वामित्र इति वा । यद्वा मित्रं ज्ञात्वा उपकारकृत् । यथोक्तं गीताभाष्ये [६.९] 'निरूप्यापि क्लेशं यः परिरक्षति सः मित्रम्' इति । तत्तात्पर्ये च 'ज्ञात्वा उपकारकृत् । मित्रम्' इत्यादि नारदीये । इह रक्षःक्षयविषये वा । केचित् विश्वस्य मित्रमिति षष्ठ्या अलुक्त्वमाश्रित्य विश्वामित्रशब्दपर्यायोऽयमिति विश्वस्य मित्रमित्यैकपद्यमुदाहरन् । तन्न । 'मित्रे चर्षौ' [कौ.१०४९] इति सञ्ज्ञायामृषौ वाच्ये विशेषेण पूर्वपददीर्घविधानविरोधात् ।

असौ प्रकृत आगतो तुहिनभानुवंशभूतोऽतो गम्येनापि चाधिगततत्साम्येन भाव्यं प्राय इत्यभिप्रायवान् दशरथवंशं वा शंसति– **अशशिन इति** ।। शशिविरुद्धस्य तत्सदृशस्य अंशुमतः सुवंशेऽसौ प्रसूतो दशरथो मित्रमिति विश्वस्याजगामेत्यन्वयः । अर्थवत्सूत्रे अधातुशब्दो यथा धातुभिन्नस्यार्थवत्त्वेन तत्सदृशस्यार्थस्य वाचकः तथा शशिभिन्नस्य प्रकाशगुणेन तत्सदृशस्य सूर्यस्य अशशिशब्दो बोधक इति बोध्यम् । ततश्च खरकरकुलसम्भवं भूपं प्रति तु तुहिनभानुवंशजनिसमागममैत्र्यं च 'ययोरेव' इत्यादिन्यायानुयातमिति युक्तमिति भावः । एतत्पक्षे रामावतारहेतुभूतत्वात् अन्ववायसुघुता ज्ञेया । विश्वस्येति ल्यबन्तमव्ययम् । पदावृत्तिः अर्थविशेषहेतुरिति न दोषावह इति ज्ञेयम् ।।४।।

**मधुसूदनीया–** ।। **ततः सुवंश इति** ।। शशिनः सुवंशे नहुषययातिकार्तवीर्यार्जुनादिचक्रवर्त्य-भिव्यक्तिस्थानत्वात् चन्द्रवंशस्य सुवंशत्वम्[१] । तथा चोक्तम्– पाराशरः– 'श्रूयतां मुनिशार्दूल वंशः प्रथिततेजसः । सोमस्यानुक्रमात्ख्यातो यत्र विश्पतयोऽभवन् ।। अयं हि वंशो नहुषययातिकार्तवीर्यादि-भूपालैरलंकृतः ।।' इति श्रीविष्णुपुराणे । श्रीभागवते च– 'अहो अलं श्लाघ्यतमं यदोः कुलं अहो अलं पुण्यतमं मधोर्वनम् । यदेष पुंसामृषभः पुरुश्रवाः स्वजन्मना चङ्क्रमणेन चाश्चति ।।' इति । [भा.१.१०.२७] कृष्णधन्वन्तरिपाण्डवादिमहापुरुषाभिव्यक्तिस्थानाद्वा चन्द्रवंशस्य शोभनत्वम् ।

।। **गाधीति** ।। कुशाम्ब्वाख्यराजतपसा तुष्टस्सन् कुशाम्बोः शक्रो गाधीति प्रसूतः । तथा चोक्तम्– 'तेषां कुशाम्बश्शक्रतुल्यो पुत्रो मे भवेदिति तपश्चकार । तं चोग्रतपसं अवलोक्य मा भवत्वन्योऽस्मत्तुल्यवीर्य इत्यात्मनैवेन्द्रः पुत्रत्वमगमत् । स गाधिर्नाम पुत्रः कौशिकोऽभवत्' इत्यादि विष्णुपुराणे [४अं.७.९-११] ।। **वरेण** ।। ब्रह्मसरस्वतीयमच्यवनऋचीकवसिष्ठवरसमुदायेन । तदुक्तम्– 'तपसा तु तथा युक्तं विश्वामित्रं पितामहः । अमन्यत महातेजा वरदो वरमस्य तत् ।। 'स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति । तथेति चावदद् ब्रह्मा सर्वलोकपितामहः ।।' इति । यद्वा विश्वस्य ब्रह्मब्रह्माणीच्यवनशमनरुचिकवशिष्ठादिसमस्तस्य वरेण विप्रत्वं प्रापेति । 'इति स्तुता वेदमाता प्राह गम्भीरया गिरा । विश्वामित्र ब्राह्मणोऽसि द्विजत्वं दत्तवत्यहम् ।। वशिष्ठसाम्यं भविता ममोपासनया मुने । ऋषिर्मम भव त्वं हि तस्माच्छ्रेष्ठो न संशयः ।।' इति कावेरीमाहात्म्ये । 'ब्रह्मर्षे स्वागतं तेऽस्तु तपसाऽस्मि सुतोषितः । ब्राह्मण्यं तपसोऽग्रेण प्राप्तवानसि कौशिक ।।' इत्यादि श्रीरामायणे [वा.का.६५.१८] । 'प्रतिगृह्य ततो धर्मः तथैवोष्णं तथा नवम् । भुक्त्वा प्रीतोऽस्मि विप्रेति तमुक्त्वा स मुनिं गतः ।। क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः । धर्मस्य वचनात्तत्र विश्वामित्रस्तथाऽभवत् ।।' इत्याद्युद्योगपर्वणि [१०६.१७-१८] । 'च्यवनाद्वरदानेन रुचिकस्य स्वसम्भवात् । स्वस्यैव तपसा चापि

---

१. 'शोभनत्वम्' इति गपुस्तके ।

ब्राह्मण्यं समवाप्तवान् ।।' इति शान्तिपर्वाणि । 'ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः । सख्यं चकार ब्रह्मर्ष इदमस्त्विति चाब्रवीत् ।।' इति रामायणे [बा.का.६५.२५] । समुदायविवक्षया वरेणेत्येकवचनम् ।

**वरदराजीया–** एवं कुमारेषु वर्धत्सु किं वृत्तमित्यत आह– **तत इति** ।। ततः तदनन्तरं स विश्वस्य मित्रं विश्वामित्रनामा ऋषिरिह अयोध्यायां आजगाम आगतोऽभूदिति सम्बन्धः । स क इत्याकाङ्क्षायां उक्तम्– **सुवंशे इत्यादि** ।। शशिनः चन्द्रस्य सुवंशे शक्रः पुरन्दरो गाधीति नाम्ना प्रसूतः जातः । अस्य च शक्रावतारस्य गाधिनः तनुजः पुत्र आसीद्बभूव । स क इत्यत उक्तम्– **वरेणेति** ।। यो वरेण विप्रत्वं ब्राह्मणत्वं क्षत्रियोऽपि अवाप प्राप्तवान् । असौ तनुज आसीदिति पूर्वेणान्वयः । स एतादृशो विश्वामित्रः आजगामेत्यर्थः ।।४।।

**जनार्दनीया–** शशिनः सुवंशे यः शक्रः गाधीति गाधिनामा राजा सन् प्रसूतः जज्ञे । अस्य गाधिराजस्य यः तनुजः पुत्रः आसीत् । योऽसौ गाधिनः तनुजः क्षत्रत्वेऽपि वरेण ब्रह्मवरेण । 'स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति । तथेति चाब्रवीद् ब्रह्मा सर्वलोकपितामहः ।।' [शल्य.४१.२८] इति गदापर्ववचनात् । विप्रत्वं अवाप । विश्वस्य मित्रं विश्वमित्रभूतः विश्वामित्रः । ततः श्रीरामप्रादुर्भावानन्तरम् । इह दशरथगृहं प्रत्याजगामेत्यन्वयः ।।४।।

**चट्टी–** एवं कुमारेषु वर्धत्सु किं वृत्तमित्यत आह– **तत इति** ।। शशिनः सुवंशे शक्रो गाधीति नामा राजा सन् प्रसूतः जज्ञे । योऽस्य गाधिनः तनुजः पुत्रः आसीत् । यः क्षत्रियोऽपि वरेण ब्रह्मसरस्वतीयमच्यवनरुचिकवसिष्ठवरसमुदायेन विप्रत्वमवाप । स विश्वस्य जगतः मित्रं मित्रभूतो विश्वामित्रनामा ऋषिः । ततः रामप्रादुर्भावानन्तरं इह दशरथगृहं प्रत्याजगामेत्यन्वयः । यद्वा राममिति शेषः कर्तव्यः । तथाच सः विश्वामित्रनामा गाधिपुत्रः रामं मित्रं आप्तमिति विश्वस्य विश्वासं कृत्वा आजगामेत्यन्वयः । शेषं पूर्ववत् ।।४।।

**ताम्रपर्णीया–** शशाङ्कात्तारायां बुधस्योत्पन्नत्वात् तद्वंशस्य न दोषो मन्तव्य इति भावेन सुवंश इत्युक्तम् । यो वरेण विप्रत्वमवाप सः अस्य गाधिनस्तनुजः आसीत् । असौ विश्वस्य मित्रं जगामेति योजना । नायं विश्वामित्रशब्दः साङ्केतिकः, नापि विश्वस्य मित्रं नेति यौगिकः किन्तु विश्वस्यातिमित्रं विश्वामित्र इति द्योतयितुं विश्वस्य मित्रमिति विभज्य कथनम् ।।४-८।।

**भारतश्री–** असौ शक्र इत्यन्वयः । असौ इदानीन्तनः वैवस्वतमन्वन्तरस्थः ।।४।।

**भावचन्द्रिका–** विश्वामित्रे तपसि स्थिते ब्रह्मादयो वरं ददुः । वसिष्ठश्च । तदभिप्रायेणाह– **वरेणेति** ।। तदुक्तं वाल्मीकिरामायणे– [बा.का.६५.१८] 'ततः सुरगणास्सर्वे पितामहपुरोगमाः । विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् ।। ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ।।' इति । 'ततः प्रसादितो

देवैः वसिष्ठस्तपतां वरः । सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥' इति च ॥ [बा.का.६५.२५] एवं सङ्ग्रहरामायणे– 'राजर्षित्वं ऋषित्वं च महर्षित्वं महाव्रतैः । ब्रह्मर्षिता च ब्रह्माद्यैः क्रमेणास्यान्वमोद्यत ॥' [बा.का.६.५४] वायुपुराणमाघमाहात्म्ये चोक्तम् । पुरः उपद्रवत्वं ज्ञात्वा रक्षकत्वं मित्रत्वम् । विप्रस्य रक्षाकर्तृत्वधर्मो नोपपद्यते । मित्रं विप्रत्वमित्युक्तिः उपचार इति चेत् स एव दोषः । तस्मान्मित्रं विप्रत्वमित्युक्तम् । 'आनेतुमैच्छद्धर्मात्मा लोकानां हितकाम्यया' इति [उ.का.२४२.१०८] पद्मपुराणोक्तहेत्वन्तरसूचनायापि नाम विभागेनोक्तम् [पूर्वं मित्रं–क्षत्रियः । अनन्तरं विप्रत्वमाप इति भावः]। 'मित्रे चर्षौ' विश्वशब्दस्य दीर्घस्स्यात् *...ऋषौ वाच्ये इत्युक्तेः विश्वामित्र इति साधु ॥४॥

**अतिविशद–** वरेण विप्रादिवरेणेत्यर्थः । तथा प्रमाणात् । तथा हि– तपसा हि तथा युक्तं विश्वामित्रं पितामहः । अमन्यत महातेजा वरदो वरमस्य तु ॥ स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति । तथेति चाब्रवीद्ब्रह्मा लोकपितामहः ॥' इत्यानुशासनीयके । 'इति स्तुता वेदमाता प्राह गम्भीरया गिरा । विश्वामित्र ब्राह्मणोऽसि द्विजत्वं दत्तवत्यहम् ॥ वशिष्ठसाम्यं भविता ममोपासनया मुने । ऋषिर्मम भव त्वं हि तस्माच्छ्रेष्ठो न संशयः ॥' इति कावेरीमाहात्म्ये । 'ब्रह्मर्षे स्वागतं तेऽस्तु तपसाऽस्मि सुतोषितः । ब्राह्मण्यं तपसोऽग्रेण प्राप्तवानसि कौशिक ॥' इत्यादि श्रीरामायणे [बा.का.६५.१८] । 'प्रतिगृह्य ततो धर्मः तथैवोष्णं तथा नवम् । भुक्त्वा प्रीतोऽस्मि विप्रेति तमुक्त्वा स मुनिं गतः ॥ क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः । धर्मस्य वचनात्तत्र विश्वामित्रस्तथाऽभवत् ॥' इत्याद्युद्योगपर्वणि [१०६.१७-१८] । 'च्यवनाद्वरदानेन रुचिकस्य स्वसम्भवात् । स्वस्यैव तपसा चापि ब्राह्मण्यं समवाप्तवान् ॥' इति शान्तिपर्वणि विश्वस्य मित्रं स इहाजगामेत्यत्र विश्वामित्र आजगामेत्यनुक्त्वा विश्वस्य मित्रमिति किमर्थमुक्तमिति चेत् केचित् विश्वामित्र आजगामेत्युक्ते पद्यभङ्गो भवतीत्येवमुक्तमिति । अपरे तु विश्वामित्र आजगामेत्युक्ते विश्वस्यामित्रमिति मन्दानां प्रतीतिः स्यात् । तन्निरासार्थं तथा मित्रशब्दस्य नित्यनपुंसकत्वप्रदर्शनार्थमेवमुक्तमिति । प्रथमे अन्यथापद्यसम्भवे एवं कुतः प्रोक्तमिति वाच्यम् । द्वितीये दैर्घ्यप्रापकसूत्रादर्शनात् विदुषामपि कथमत्र दैर्घ्यमिति शङ्का स्यादेव । शत्त्यादिशतब्रह्महत्त्यायुक्तस्य विश्वामित्रत्वायोगाच्च । अत्रोच्यते । 'विश्वस्य वसुराटोः' [कौ.३७९] 'मित्रे चार्षौ' [कौ.१०४९] विश्वशब्दात् परतः वस्वादिशब्दे दीर्घो भवति । उदाहरणं तु विश्वावसुः विश्वाराट् । प्रकृते विश्वशब्दात् मित्र शब्दे परे ऋषौ वाच्ये दीर्घो भवति । चशब्देन 'विश्वस्य ह वै मित्रं विश्वामित्र आस' इत्युपनिषदं [ऐ.२प्र.१अ.१] सूचयति । विश्वामित्रत्वं तु वसिष्ठसाम्यप्राप्त्यनन्तरमुच्यत इति न कश्चित्क्षुद्रोपद्रव इति । अन्ये त्वाहुः । नात्र विश्वस्य मित्रमितिशब्दः विश्वामित्रपरः किन्तु रामपरः । तथाच न चाशङ्का न चोत्तरमिति । ततश्चैवं वाक्ययोजना । ततः शशिनः सुवंशे गाधीति शक्रः प्रसूतः अस्य गाधिराजस्य

तनुजः आसीत् । योऽसौ वरेण विप्रत्वमवाप स हि विश्वामित्रः इह अयोध्यानगरे विश्वस्य जगतः मित्रं रामं प्रत्याजगामेति । एवं योजनायां रामस्तेन विश्वामित्रेण अर्थित इत्यस्य स्वारस्यं विश्वामित्रशब्देन रामस्य प्रकृतत्वात् अन्ययोजनायां क्लिष्टतयाऽप्रकृतत्वकल्पनात् । ननु सुवंश इति कथमुक्तम् । चन्द्रस्य गुरुस्त्रीगामित्वेन तत्पुत्रस्य बुधस्य कुण्डजत्वेन वंशस्य दुष्टत्वादिति चेत् । 'चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् । क्लृप्तहानिरभूत्रैव प्राप्तहानिः कथञ्चन ।।' [अनु.३.४.कामचाराधिकरणम्] इत्यनेन परिहारस्योक्तत्वात् । क्लृप्तस्य संसारे सुवंशत्वादेः मोक्षे च आनन्दादेः हानिर्नाशो न अभूत् । प्राप्तव्यस्य हानिः कथञ्चन भवेदित्यर्थः । अथवा स्वसमानादेः तत्सुखोन्नाहस्य प्राप्तत्वेन स्वस्याशुभाचारित्वेन तदभावात् प्राप्तस्यैव हानिरित्यर्थः । तदप्युक्तम्– 'अशुभाभावजोन्नाहो महाधीकारिणामपि । अशुभे कृते न भवति... ।।' [भा.ता.५.६.५] इत्येतद्वाक्यं मोक्षपरमेवेत्याग्रहात् । 'कुण्डानां गोलकानाञ्च महापापकृतामपि । कथायाः श्रवणेनैव माघस्नानं तु निष्कृतिः ।। तथा– 'माघ्यां स्नात्वा तु यो दद्यात् अश्वं लवणसंयुतम् । गुरुतल्पाद्विमुक्तिस्स्यात् एवमाह जनार्दनः ।।' इति वायुपुराणवाक्यद्वयेन सन्तोष्टव्यम् । एके त्वाहुः । मित्रं रामं विश्वस्य अयं मत्कार्यं करिष्यतीति विश्वासं कृत्वा आजगामेति । नचात्र निर्विशेषितं मित्रपदं कथं रामपरमिति वाच्यम् । निर्विशेषितं सूत्रपदं यथा ब्रह्मसूत्रपरम् । यथा निर्विशेषितं व्यासपदं कृष्णद्वैपायनपरं तथैवेति ग्रहणात् ।।४।।

**गूढवाक्यार्थ–** शशाङ्कात् तारायां बुधस्य उत्पन्नत्वात् शशिनः सुवंश इत्युक्तम् । शक्रः पुरन्दरेन्द्रः गाधीति गाधिनामकस्सन् प्रसूतः । अस्य गाधिनः तनुजः पुत्र आसीत् । यो गाधिसुतः वरेण वरसमूहेन विप्रत्वमवाप । विश्वस्य मित्रं विश्वामित्रनामा असौ...* दशरथसमीपम् ।।४।।

### तेनार्थितो यज्ञरिरक्षयैव कृच्छ्रेण पित्रास्य भयाद्विसृष्टः ।
### जगाम[1] रामः सह लक्ष्मणेन [2]सिद्धाश्रमं सिद्धजनाभिवन्द्यः ।।५।।

**व्यासतीर्थीया–** एवकारेण शिक्षार्थं वारयति । यज्ञरक्षणमेकं प्रयोजनं सिद्धजनाभिवन्द्यत्वादिकं प्रयोजनान्तरमुक्तम् ।।५।।

---

१. विश्वामित्रेण सह रामगनसमये गरुडः आगत्य ताभ्यां अस्त्राणि ददौ इति पाद्मे [उ.खं.२४२.११७-११८]। अथाजगाम हृष्टात्मा वैनतेयो महाबलः । अदृश्यभूतो भूतानां सम्प्राप्य रघुसत्तमम् ।। ताभ्यां दिव्ये च धनुषी तूणौ चाक्षयसायकौ । दिव्यान्यस्त्राणि शस्त्राणि दत्वा च प्रययौ द्विजः ।।

२. 'श्रुत्वा सिद्धाश्रमाख्यानं चराचरविधायिनः । श्रीमन्नलिननाभस्य श्रोता सिद्धिमवाप्नुयात् ।। तपःसिद्धिं ज्ञानसिद्धिं विद्यासिद्धिं तथैव च । कर्मणां फलसिद्धिश्च लभते मानवो ध्रुवम् ।।' इत्युमासंहितायां फलकथनम् ।

**वादिराजीया–** रक्षितुमिच्छा रिरक्षा । रिरक्षयैव विश्वामित्रेणार्थितो न तु धनाद्यपेक्षयेत्येवकारः । अस्य विश्वामित्रस्य भयात् शापभयात् कृच्छ्रेण पित्रा दशरथेन विसृष्टश्च राम इति पदयोजना । रामस्य स्वतन्त्रपुरुषतां जानन् विश्वामित्रस्तमेवार्थयामासेति भावः । सिद्धजनाभिवन्द्य इत्यनेन तेषां पुण्यदानायैव गतो न तु स्वयं पुण्यसम्पादनायेति सूचितम् ।।५।।

**सत्यधर्मीया–** विरतिरतिरतीव मुनिरिति न नरपतिप्रतिगतिः उचितेत्यतो नाशातोऽस्य मुनेरागमनमपि तु पिशिताशननाशार्थेशानयनार्थमेवेति समर्थरामप्रेषणप्रार्थनां प्रथमतो वक्ति– **तेनेति** ।। तेन मुनिना । अर्थितः याचनकर्मीभूत इति प्रार्थितो रामः । यद्यपि मुनिना तनयं प्रेषयेति नृपं प्रति प्रार्थना कृतेति दशरथ एवर्थित इति प्रतीयत आपाततः । तथापि रामकर्मकत्वात् प्रेषणस्येति अर्थित इति रामविशेषणम् । एवं सति विश्वामित्रः रामं प्रेषयेति दशरथं प्रति प्रार्थयामासेति याचनाविषयो रामः पित्रा दशरथेनास्य भयाद्विसृष्ट इति सुकरोऽन्वय इति ज्ञेयम् । अन्यथा तेनार्थितो दशरथः अस्य पुना रामस्य पित्रा विसृष्टो रामो जगामेत्यन्वयेन भाव्यम् । ततश्च पित्रास्यार्थितादिपदानां न सरसोऽन्वयो भवति । किमर्थमनेनार्थितोऽभूत् भूपं प्रति विश्वामित्रेणामित्रकर्शन इत्यत आह– **यज्ञेति** ।। यज्ञं मखम् । रिरक्षा रक्षितुमिछा तया । 'रक्ष पालन' इत्यस्मादिच्छायां सन्वद्भावे 'सन्यङोः'[कौ.२३९५] इति द्वित्वे रक्षरक्षेति जाते हलादिशेषे ररक्ष 'सन्यत'[कौ.२३१७] इति पूर्वरेफाकारस्येत्वे रिरक्षेति भवति । एवकारेण लौकिकाशातो रमेशानयनं व्यावर्तयति । नृपं प्रति रामं प्रेषयेति अभाषतर्षिरिति परस्परं श्रुत्वापि अविदित एव जगाम रामः किम् ? नेत्याह– **पित्रेति** ।। पित्रा दशरथेन । नप्त्रादिसूत्रे पित्रिति निपातनात् पातेराकारस्य ईत्वे तृचि च पितेति ज्ञेयम् । अस्य विश्वामित्रस्य भयात्, आज्ञाभङ्गकोपतः, शापं प्रदास्यतीति भयात् । 'एरच्'[कौ.३२३१] इति सूत्रे 'भयादीनामुपसङ्ख्यानम्' इत्युपसङ्ख्यानात् अचि गुणे च अयादेशे भयमिति भवति । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । ननु कथमस्य भयात् इति षष्ठी । 'भीत्रार्थानाम्' [कौ.५८८] इति अपादानसञ्ज्ञायां अपादाने च भाव्यं पञ्चम्या इति चेत् । सत्यम् । जगदधिपतिपितुः अयं भयहेतुर्नेति हेतोः हेतुतामविवक्षयित्वा सम्भवात् । विसृष्टः आज्ञप्तो रामः । सिद्धाश्रमं सिद्धानामाश्रमं निवासस्थानं प्रति जगाम । लिट् । अगच्छत् । रामप्रेषणसमये क्षमानाथस्यावस्थामाह– **कृच्छ्रेणेति** ।। भगवद्वियोगो वयोगतस्य भवतीति सन्तापेन कष्टेन वा । 'कृती छेदने' इत्यस्मात् 'कृतेश्छः क्रू च' [उणादि.१८८] इति छे चन्तादेशे रकि च कृच्छ्रमिति भवति । 'कृच्छ्रमाख्यातमाभीले पापसन्तापनादिनोः' इति मेदिनी [रान्तवर्गः.रद्विकम्.१९] । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः । काकुत्स्थप्रवेक एकाकी जगाम किं नेत्याह– **सहेति** ।। लक्ष्मणेन तन्नाम्ना भ्रात्रा सह । सिद्धजनसभाजनभाजनस्य जनार्दनस्य तदाश्रमगमनं युक्तमिति वक्ति– **सिद्धेति** ।। सिद्धाः सम्प्रज्ञातासम्प्रज्ञातसमाधिस्थाः । ते च ते जनाश्च । तैरभितः सर्वत्र सन्निहितत्वेन वन्द्यो नम्यः

स्तुत्यश्च । सिद्धस्य सुरकार्यसाधनसिद्धस्य वामनस्य आश्रममिति वा । यथोक्तं श्रीरामायणे च– [बा.का.२९.३] 'एष पूर्वाश्रमो राम वामनस्य महात्मनः । सिद्धाश्रम इति ख्यात...।।' इति । सङ्ग्रहे च– [बा.का.५.७-८] 'अधिष्ठितः पुरा साक्षाद्विष्णुना प्रभविष्णुना । वहवोऽत्र तपस्यन्तः सन्तः सिद्धित्वमाप्नुयुः ।। तस्मात् सिद्धाश्रमो नाम सिद्धिदाता ह्यधोक्षजः ।।' इति ।

न केवलं विश्वामित्रत्रासमात्रतः पुत्रप्रेषणमपि तु अलघुरघुकुलगुरुवराज्ञाभङ्गभीत्यापीत्याह– **पित्रेति** ।। पित्रा चतुर्मुखेन विसृष्ट उत्पादितः वशिष्ठ इति यावत् । पितामहस्य पितृत्वमपि सम्भवति रीत्यन्तरेणेति ज्ञेयम् । तथा च श्रुतिः 'अहं सुवे पितरमस्य मूर्धन्' इति । आज्ञानुल्लङ्घने हेतुः– **पित्रा विसृष्ट इति** ।। ब्रह्मपुत्रत्वादवमानार्हो नेति माननीयो मानवैः तदाज्ञेति राज्ञा तदुक्तमकारीति भावः । अस्य भयादपि पित्रा विसृष्ट इत्यावर्तते । ततश्च समुदायान्वयः । यः पित्रा विसृष्टो वशिष्ठेन अस्य भयात् सुतं प्रेषयेति बोधितेन पित्रा विसृष्टः आज्ञप्तः रामः सिद्धाश्रमं जगामेति । तथाच श्रीरामायणे– [बा.का.२२.१-३] 'नृपतिं सुव्रती धीरो वसिष्ठो वाक्यमब्रवीत् ।' इत्यारभ्य 'तथा वसिष्ठे ब्रुवति राजा दशरथस्स्वयम् । प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ।। कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च । पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ।। स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथस्तदा । ददौ कुशिकपुत्राय... ।।' इत्यन्तेन वसिष्ठाज्ञाविशिष्टकाकुत्स्थं कौशिककुशलायाददात् राजेत्यवगमात् । सङ्ग्रहे च– [वा.का.४.२६.२७] 'तस्माद्रामेण राजेन्द्र गन्तव्यं मुनिना सह । हन्तव्यं राक्षसकुलं त्रातव्यं यज्ञकर्म तत् ।। वसिष्ठवाक्यमाकर्ण्य राघवो रामलक्ष्मणौ । प्रेषयामास सुप्रीतः कौशिकाय समर्पयन् ।।' इति ।

विश्वामित्रयाञ्चामात्रतः तत्सत्रपरित्राणायैव देवयात्रा नैव अपि तु पितुर्ब्रह्मणः प्रार्थनया इति वाह– **अस्येति** ।। अस्य साक्षिसिद्धस्य प्रपञ्चस्य पित्रा तेन विधिना । यज्ञेति सत्कर्ममात्रोपलक्षणम् । यद्वाऽयज्ञेति पदम् । अस्य भगवतो यज्ञः पूजादिर्येषां तद्रिरक्षया । अयज्ञाः तत्तज्जनदैवं अयः । तं शुभावहं जानन्तीति तथा, तेषामतीतानागतज्ञानामिति यावत् । 'अयः शुभावहो विधिः' इत्यमरः । 'इगुपधा' इति कः । तद्रिरक्षयार्थितः भूमन् भूमाववतर अवतारय हे हरे अरिपरिकरपराकरणात् धरिणीभारं इति प्रार्थितः । अस्यापि भयमस्ति चेन्नानेन मनोभिलषितार्थसिद्धिः स्यादित्यतो वाह– **भयाद्विसृष्ट इति** ।। भयाद्भीतेः विसृष्टस्त्यक्तः । भयातीत इति यावत् । नभयस्य भगवदगमनसमर्थतेति तत्प्रार्थनार्थवतीति भावः । भयादिति हेतौ पञ्चमी । ततश्च भयाज्जातं यत्कृच्छ्रं तेन विसृष्ट इति वा । भयादिति प्रथमैकवचनं वा । भयं भागवतभयं अतयति सन्ततं गमयति ततो भयात् इति स तथा । अन्तर्णीतण्यर्थात् सन्ततगमनार्थस्य त धातोः क्विपि रूपम् । कुतो भीतिभङ्गकृद्भगवानित्यतो वक्ति– **विसृष्ट इति** ।। भावे क्तः । सृष्टं सृष्टिः । विगता प्राकृतदेहसम्बन्धरूपिणी यस्य स तथा । अनेन अयमात्मा न एनःफलभययुतः प्राकृतकायसम्बन्धविधुरत्वान्मुक्तवत् । व्यतिरेकेण असुरादीतरवद्वा इति

माननमनुमानमुक्तं भवति । विनैव नारायणेनैव सृष्टो अंशेन प्रादुर्भूत इति वा । विरेव सृष्टो ब्रह्मादिप्रार्थनया अवतारित इति वा । यद्वा पित्रास्येत्यस्य दशस्यन्दनस्य पित्रा पितृभूतेन वसिष्ठेनेति । विद्यादानेन उपनयनसमये मन्त्रोपदेशेन वा पिता वसिष्ठः । 'जनिता चोपनीता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पश्चैते पितरः स्मृता ।।' इति स्मृतेः ।

केवलं देवस्य सिद्धजनमनविषयत्वमेव न किं नाम रामो राजन्याग्रगण्यमान्यश्चेत्यप्याह– **सिद्धजेति** ।। सिद्धेभ्यो योगिभ्यो जायन्त इति सिद्धजा । 'पञ्चम्यामजातौ' [कौ.३००८] इति जनेर्डः । न विश्वामित्रवदागन्तुकसिद्धताका अपि तु कुलपरम्परात इति सिद्धजा भरद्वाजादयः । ते च नाभयश्च मुख्यक्षत्रियाश्च तैः वन्द्य इत्यर्थः । 'णह बन्धने' अस्मात् 'नहो भश्च'[उणादि. ५७५] इति भे च इञि नाभिरिति भवति । 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्' इति मेदिनी [भान्तवर्गः.भद्विकम्.५] । यद्यपि नाभिशब्दो घ्यन्तो अल्पाच्कश्चेति प्राक्प्रयोज्यः । तथापि सिद्धजनानामभ्यर्हितत्वात् 'अभ्यर्हितम्' [वार्ति.सू.२-२-३४] इति पूर्वनिपातो ज्ञेयः । यद्वा सिद्धजैः सहिताश्च ते नाभयश्चेति शाकपार्थिवादित्वात् उत्तरपदलोपः समासः । अथवा सिद्धाश्च ज्ञानिनः जाश्च तदितरे जनाश्च नाभयश्चेति समासः । एवञ्च च सति बहुषु अनियमात् न घ्यन्तादिप्रयुक्तप्राङ्निपातापातक्लेशः । 'ग्रामजनबन्धुभ्य-स्तल्' [कौ.१२५१] इति निर्देशोऽनियमं ज्ञापयति । अन्यथा बन्धुजनग्रामेति स्यात् । जायन्त इति जाः 'अन्येष्वपि दृश्यते' [कौ.३०११] इति दृशिग्रहणात् केवलादपि जनेर्डो ज्ञेयः । सिद्धा असम्प्रज्ञात-समाधिस्थाः जनयन्ति उपदेशादिना ईशं प्रादुर्भावयन्ति ते असम्प्रज्ञातसमाधिस्थिताः विधिमुखाः देवाः । 'जनी प्रादुर्भावे' अस्मात् अन्तर्भावितण्यर्थात् कर्तरि अभिधेये डप्रत्यये टिलोपे ज इति भवति । प्रकाशितं चैतत् 'जनकस्यात्ययो जातिः' इति व्याख्यावसरे श्रीमद्भिरिति विस्तरस्ततो ज्ञेयः । युद्धसन्नद्धेन पुंसा वाणादिचिह्नधारिणा भवितव्यं भगवतेति तदप्याह– **सहेति** ।। लक्ष्मणेन चिह्नेन । क्षत्रियाणामिति योग्यतया लाभः । काकपक्षधनुर्बाणादिक्षत्रचिह्नेन सह जगाम राम इत्यर्थः । अभिहितं चैतच्छ्रीरामायणे [१.२२.६-९] 'काकपक्षधरो धन्वी' इत्यारभ्य 'बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती' इति । सङ्ग्रहे च– 'दोर्दण्डार्पितकोदण्डौ शुभालापौ कलापिनौ । किशोरावपि शूरौ तौ सुस्मितौ मुनिमीयतुः' ।। इति ।[बाल.४-२८]

'लक्ष दर्शनाङ्कनयोः' अस्माचुरादेः ण्यन्तात् 'लक्षेरट् च' इति[उणादि.२९४] नः स्यात्तस्य अडागमश्च ततो लक्षनेति जाते कषात्मकत्वात् क्षस्य तत्परत्वात् 'रषाभ्याम्' इति नस्य णे च लक्षणेति भवति । चान्मुटि लक्ष्मणेत्यपि । चिह्नवाची च नाना । 'लक्षणं नाम्नि चिह्ने च सौमित्रे चापि लक्षणः । लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः ।।' इति विश्वः [णान्तवर्गः.णत्रिकम्.४२] । सौमित्र्यादिपदप्रयोगं विना लक्ष्मणशब्दप्रयोक्त्रा श्रीमदानन्दतीर्थेन इदमर्थतास्य पदस्यापि सूचितेति ज्ञेयम् । भगवद्गमनम्

अनादिसंसारश्रमापगमहेतुस्तस्य कियन्कतिपयपिशिताशिजनजनितमुनिश्रमोपशम इत्यतो वा विशिनष्टि– **सिद्धाश्रममिति** ।। सिद्धो जात एव अश्रमः क्रव्यादक्रमश्रमाभावो अस्मिन्कर्मणि यथा भवति तथा जगाम । रामगमनमात्रेण तामसमारीचादिममारणं निश्चितमेवेति समस्त स श्रम एष्यन्निश्चयनयेन गत एवेति तात्पर्यम् ।।५।।

**मधुसूदनीया–** अस्य सकाशाद्भयात् । स्ववंशोत्पन्नहरिश्चन्द्रस्य पीडाकरणात्तन्यायेन स्वस्याऽपि पीडाकरणभयादिति भावः । सिद्धाश्रमं सिद्धस्य वामनस्याश्रमम् । तच्चोक्तम् [१.२९.३-४]'एष पूर्वाश्रमो राम वामनस्य महात्मनः । सिद्धाश्रम इति ख्यात... ।।' इति । सङ्ग्रहे च– [बा.का.५.७-८] 'अधिष्ठितः पुरा साक्षाद्विष्णुना प्रभविष्णुना । वहवोऽत्र तपस्यन्तः सन्तः सिद्धित्वमाप्नुयुः ।। तस्मात् सिद्धाश्रमो नाम सिद्धेर्दाता ह्यधोक्षजः ।।' इत्यादि ।।५।।

**वरदराजीया–** तदागमनप्रयोजनमाह– **तेनेति** ।। तेन विश्वामित्रेण यज्ञरिरक्षया स्वचिकीर्षित-यज्ञरक्षणेच्छया अर्थितः प्रार्थितः अस्य विश्वामित्रस्य भयात् अप्रेषणे शापप्रदानभयात् पित्रा दशरथेन विसृष्टः प्रेषितः रामो लक्ष्मणेन सह सिद्धाश्रमं जगामेति सम्बन्धः । सिद्धाश्रमं प्रति गमनस्य केवलं यज्ञरक्षणमेव प्रयोजनं अत्र तु प्रयोजनान्तरमप्यस्तीत्याह– **सिद्धजनेति** ।। तदाश्रमस्थितयोगसिद्ध-मुनिकर्तृकवन्दनादिपूजां गृहीतुं च जगामेति भावः ।।५।।

**जनार्दनीया–** तेन विश्वामित्रेण । यज्ञस्य स्वयज्ञस्य रिरक्षा रक्षितुमिच्छा तया । दशरथः अर्थितः याचितः । अस्य विश्वामित्रस्य भयात् क्षोभभयात् अस्य रामस्य पित्रा कृच्छ्रेण रामवियोगो भवतीति कष्टेन विसृष्टः प्रेषितो रामः । सिद्धानां योगिनाम् ।।५।।

**चट्टी–** तदागमप्रयोजनमाह– **तेनेति** ।। तेन विश्वामित्रेण यज्ञरिरक्षया स्वचिकीर्षितयज्ञरक्षणेच्छया अर्थितः प्रार्थितः अस्य विश्वामित्रस्य भयाद् अप्रेषणे शापदानभयात् पित्रा कृच्छ्रेण रामवियोगो भवतीति कष्टेन विसृष्टः प्रेषितः रामः लक्ष्मणेन सह सिद्धाश्रमं सिद्धानां योगिनामश्रमं सिद्धजनैः योगिजनैः अभिवन्द्यः नमस्कृतस्सन् जगाम । यज्ञरक्षणमेकं प्रयोजनं सिद्धजनाभिवन्द्यत्वादिकं प्रयोजनान्तरमुक्तम् ।

**भारतश्री–** अस्य भयात् विश्वामित्रस्य भयात् । पित्रा कृच्छ्रेण विसृष्टः । एवेत्यस्य लक्ष्मणेनेत्यनेन सम्बन्धः । न त्वन्येन केनापीत्यर्थः ।।५।।

**भावचन्द्रिका–** आश्रमस्थाः जनाः प्रत्युद्गम्य पूजयामासुरित्युदाहरति– **सिद्धेति** ।।५-७।।

**भावविवृतिः–** ।।१-४।। जगाम रामस्सह लक्ष्मणेन इत्यत्र सिद्धाश्रमं सिद्धाश्रमैकदेशविश्वामित्राश्रमं प्रति गन्तुं जगाम निर्गतः । न तु प्राप्त इति । 'अटव्यां ताटकां हत्वा स सिद्धाश्रममेयिवान्' इति

मणिमञ्जर्यां ताटकाहनननयज्ञरक्षणानन्तरं विदेहदेशं प्रति गमनकाले सिद्धाश्रमप्राप्त्युक्तेः । उक्तञ्च सङ्ग्रहरामायणे– 'बहवोऽत्र तपस्यन्तः सन्तः सिद्धत्वमाप्नुयुः । तस्मात्सिद्धाश्रमो नाम सिद्धेर्दाता ह्यधोक्षजः ।। वयं चान्ये च मुनयो वसामोऽत्र महामते । इत्यालपन्तः स्वालापा ते तदाश्रममाविशन् ।।' इति ।।५-९।।

**अतिविशद–** सिद्धाश्रमं सिद्धजनाभिवन्द्य इत्यत्र सिद्धस्य कपिलस्य आश्रममित्यपि वदन्ति । 'सिद्धानां कपिलो मुनिः' इति गीतावाक्यात् ।।५-७।।

**प्रमाणसङ्ग्रह–** [१]प्रमाणसङ्ग्रहेणैव व्याख्यानं क्रियते पुनः । आसमाप्ति यथान्यायं विदाङ्कुर्वन्तु सूरयः ।।१-४।। सिद्धाश्रमं इत्यत्र सिद्धो वामनो विवक्षितः । तदुक्तम्– 'एष पूर्वाश्रमो राम वामनस्य महात्मनः । सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महायशाः ।। मया तु भक्त्या तस्यैव वामनस्योपभुज्यते ।।' सङ्ग्रहरामायणे । 'अधिष्ठितः पुरा साक्षाद्विष्णुना प्रभविष्णुना । बहवोऽत्र तपस्यन्तः सन्तः सिद्धित्वमाप्नुयुः ।। तस्मात् सिद्धाश्रमो नाम सिद्धेर्दाता ह्यधोक्षजः ।।' इत्यादि ।।५-७।।

**गूढवाक्यार्थ–** यज्ञरिरक्षया यज्ञरक्षणेच्छया अस्य ऋषेः भयात् शापदानभयात् । विसृष्टः प्रेषितः । सिद्धजना योगिनः ।।५।।

**अनुग्रहार्थं[१] स ऋषेरवाप सलक्ष्मणोऽस्त्रं मुनितो हि केवलम् ।**
**ववन्दिरे ब्रह्ममुखाः सुरेशास्तमस्त्ररूपाः प्रकटाः [२]समेत्य ।।६।।**

---

१. अतिविशदव्याख्यानकर्तृभिः तिरुमलाचार्यैरेव 'प्रमाणसङ्ग्रह'नामकं व्याख्यानं व्यरचि ।

२. अत्र 'समेत्य' इति कथयता आचार्येण कालान्तरभाविनं चतुर्मुखकर्तृकं प्रातिस्विकास्त्रदानमपि समसूचि । तथाहि कथ्यते रामायणे- 'ददौ चास्त्राणि दिव्यानि यस्मै ब्रह्मा महौजसे । दानवेन्द्रं हतं दृष्ट्वा तिमिध्वजसुतं रणे ।।' [२.४४.११] इति । स्कान्दे उमासंहितायामपि- 'कृतोद्वाहो दाशरथिः साकेतनगरेऽमले । पितृशुश्रूणरतो मातृशुश्रूषणे रतः ।। गुरुशुश्रूषणासक्तः प्रजापालनकर्मणि । नियुक्तो गुरुणा रामो शिक्षयन् सकलाः प्रजाः ।। दिनान्ते जनकं सर्वं विज्ञाप्यानुष्ठितं महत् । गृहं प्रविश्य रामस्तु सीतया सुखितोऽभवत् ।। एवं द्वादशवर्षाणि कृतवान् परिपालनम् । तिमिध्वजस्य तनयः शतमायो महाबलः ।। दण्डकारण्यमभ्येत्य कोसलानभ्यपीडयत् । श्रुत्वा दशरथिस्तूर्णं सन्नाहेन समन्वितः ।। चतुरङ्गबलोपेतः पुरात्तूर्णं विनिर्ययौ । अक्षोहिणीद्वयोपेतो दण्डकान्समपद्यत ।। तिमिध्वजस्य तनयः शतमायो महाबलः । बलेन महता युद्धायाशु विनिर्ययौ ।।... ददाम्यस्त्राणि देवानां यथावत्प्रतिभान्तु ते । इति दत्वा वरं वेधास्तत्रैवान्तरधीयत ।।' इति सप्तमाध्याये ।

अत्र कतककृतः सायणमाधवाचार्यास्तु 'ब्रह्मा ब्राह्मणो विश्वामित्रः, ब्रह्मेव सृष्टिकर्ता वा, तिमिध्वजः शम्बरः तत्सुतः सुबाहुः' इति व्याख्याय विश्वामित्रकृतास्त्रप्रदानमेवात्रोच्यते इति व्याचक्षते । तदयुक्तम् । 'सुतौ सुन्दोपसुन्दयोः'

**व्यासतीर्थीया–** अस्त्ररूपाः मन्त्रदेवताः ।।६।।

**वेदाङ्गतीर्थीया–** केवलं ऋषेरनुग्रहार्थं हि ।।६-८।।

**वादिराजीया–** ऋषेः केवलमनुग्रहार्थं स्वगुणप्रतिपादकास्त्रमहामन्त्राणां 'अनन्तं विष्णुसन्निधौ' इति वचनात् स्वकर्णसमीपे जपेन जनितानुग्रहार्थम् । अन्यथा नीचेनोच्चाय मन्त्रदाने सति निग्रह एव स्यात् नानुग्रह इति भावः । केवलपदेन स्वार्थतां व्यवच्छिनत्ति । हिशब्देन सर्वज्ञत्वयुक्तेः प्रसिद्धिमाह । महतापि शिष्येण गुरुमुखान्मन्त्राः श्रोतव्या इति सद्धर्मशिक्षणरूपेण लोकानुग्रहार्थं वा । स्वापेक्षिता-सुरजनमोहनसाचिव्यकरणात् जनितानुग्रहार्थं वा । कस्तूरिसम्बन्धेन वायोः परिमळाख्यगुणलाभवत् कर्णसम्बन्धेन सन्मन्त्राणां सामर्थ्यविशेषदानाख्यानुग्रहार्थं वा । अस्त्राणि रूपयन्ति प्रापयन्तीत्यस्त्ररूपाः । अस्त्रं रूपं प्रतिमा येषामिति वा ।।६।।

**सत्यधर्मीया–** सुरगुरुणापि गुरुत एव विद्यानवद्या सम्पाद्या पुरत इतरैरिति शिक्षयितुं नरलोकमनुकुर्वंश्च विश्वामित्रान्मन्त्रग्रामं रामः सञ्जग्राहेत्याह– **अनुग्रहार्थमिति** ।। स रामः मुनितः । मन्यते जानाति परं तत्त्वमिति मुनिः । 'मन ज्ञाने' अस्मात् इनि 'मनेरुच्च' [उणादि.५७२] इत्यकारस्योकारे स च किदिति गुणनिषेधेन मुनिरिति भवति । 'मुनिः पुंसि वसिष्ठादौ वङ्कसेनतरौ जिने' इति मेदिनी [नान्तवर्गः.नद्विकम्.१५] । तस्मात् । अस्त्रं बलातिबलाद्यस्त्रम् । 'असु क्षेपणे' अस्मात् 'सर्वधातुभ्यः ष्ट्रन्' [उणादि.६०८] इत्यत ष्ट्रे भवत्यस्त्रमिति । अवाप आप । अपामुपस्पर्शनादिविधिपूर्वकं सम्पादितवान् । तथाहि श्रीरामायणे– [बा.का.२२.१२-१३] 'रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत । गृहाण वत्स सलिलं मा भूत्कालविपर्ययः ।। मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ।।' इत्यादि । 'मन्त्रग्रामम्' इति 'बलाश्चातिबलां तथा' 'द्वे विद्ये' 'अनेकास्त्राण्युपादिशत्' इति च अनेकावान्तर–मन्त्रोपेतत्वात् बलातिबलेतिमुख्यविद्यात्वाच्च उक्तिर्द्विबहुवचनादेः सम्भवतीति रामायणतात्पर्यं ज्ञेयमिति भावः । सङ्ग्रहे च– 'विप्रेन्द्रान्मन्त्रौ शुश्राव राघवः' इत्यादि ।

चतुर्मुखमुखमखभुगनुग्रहायैव देवो विदितसर्वस्वोऽपि सर्वसहादेवानुमतमनुततिं अभ्यसन् किञ्चनचरितं प्रकटीचकार कारुणिक इत्याह– **अनुग्रहार्थमिति** ।। स रामः । ऋषेर्ब्रह्मादिज्ञानिवर्गस्य । उपरीति शेषः । केवलं यथा तथा अनुग्रहार्थम् । अनुग्रहायैव नतु स्वार्थम् । पुरतस्तस्मादित्येतावता पूर्तावपि यत् 'मुनित' इति पुनर्मुनिपदमाचार्यो न्यभांत्सीत् तेन ज्ञायते नर्षिपदेनात्र विश्वामित्रमात्रग्रहः स्वरस इति ।

---

–इति [वा.रा.१.२०.२५] मारीचभ्रातुः सुबाहोः सुन्दोपसुन्दपुत्रत्वस्य स्पष्टमुक्तत्वात् तिमिध्वजसुतशब्देन तद्ग्रहणासम्भवात् । अपि च विवाहोत्तरकालभाव्यस्त्रप्रदानकथनपरेण 'कृतोद्वाहो दाशरथिः' इत्याद्युमासंहिता-वचनेन विरोधोऽपि सम्भवति । अतः न कतकृदुक्तार्थः श्लिष्टतरः ।

ऋषीति ऋषिशब्दस्य वसिष्ठादावेव रूढत्वात् कथं ब्रह्मादिग्रहो नतु वसिष्ठादेः इति चेत् । सत्यम् । गत्यर्थस्य ऋषी धातोः ज्ञानार्थत्वात् ज्ञानित्वेन ब्रह्माद्युपस्थित्युपपत्तेः । यथोक्तं प्रथमे तृतीये देवताधिकरणस्थ 'ऋषीणां नामधेयानि याश्च' [सू.भा.१.३.३०] इति प्रमाणवाक्यव्याख्यावसरे श्रीमट्टीकाकारैः । 'ऋषीणां ब्रह्मादिविबुधानाम्' इति ।

'ऋषी गतौ' इत्यतः इनि इगुपधकित्वे ऋषिरिति भवति । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' इति मेदिनी [षान्तवर्गः.षद्विकम्.६] । एतौ च मन्त्रौ ब्रह्मोक्ताविति तदृषिकाविति तन्मात्रसङ्ग्रहो वा । प्रधानत्वाद्वा विधातृमात्रग्रहः । उपलक्षणयेतरग्रहः । एवञ्च सति 'ब्रह्ममुखाः सुरेशाः' इति सङ्गतं भवति । अन्यथा ऋषेरुपर्येवानुग्रहार्थं विद्याग्रहणे ब्रह्माद्यागमनरामनमनाद्युक्तिरसङ्गता स्यात् । तथा हि श्रीरामायणे [बा.का.२२-१९] 'पितामहसुते त्वेते विद्ये तेजःसमन्विते' इत्यादि । सङ्ग्रहे च 'ब्रह्मोक्तौ सर्वकामदौ' इति ब्रह्मोक्तविद्याभ्यासेन तदनुग्रहो न्याय्यश्च । ततश्च ऋषेर्ब्रह्मणोऽनुग्रहार्थमेव मुनितो अस्त्रमवापेति योजना । अस्त्रमित्येकवचनं च बलेत्यतिबलेति चास्त्रमित्यन्वयात् सम्भवति । तथा हि रामायणे [बा.का.२२-१७] 'बला चातिबला चैव सर्वज्ञानस्य मातरौ' इति । यद्वा अस्त्रमिति चैकैकास्त्रप्रदानविवक्षया एकवचनम् । अनेकमस्त्रमवापेत्यर्थः । यथोक्तं रामायणे 'ददाम्यस्त्राणि सर्वशः' इति प्रथमतः 'शितेषुं अपि मानवम्' इत्यन्तेन [बा.का.२७.२-२०] । सलक्ष्मण इति स्वरूपसङ्कीर्तनम् । न तु विद्याध्ययने तत्सहभावभावेन सार्थकं तदिति वाच्यम् । राममात्राधिकारिकत्वाद्विद्ययोः । तथैव च वचः श्रीरामायणे– 'रामेति मधुरां वाणीम्' इति राममात्रं सम्बोध्य 'मन्त्रग्रामं गृहाण त्वम्' इत्यारभ्य, 'प्रदास्ये तव काकुत्स्थ सदृशस्त्वं हि पार्थिव । कामं बहुगुणाः सर्वे त्वय्येते नात्र संशयः ।। तपसा सम्भृते चैते बहुरूपे भविष्यतः । ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः ।। प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ।।' इति । [बा.का.२२.२०-२१] सङ्ग्रहे च–'तात' इति राममात्रसम्बोधनपूर्वकं 'इति ब्रुवणाद्विप्रेन्द्रात् मन्त्रं शुश्राव राघवः । सर्वज्ञः पूर्णकामश्च शिष्टाचारानुशिक्षकः ।।' इति राममात्रनिष्ठानितरावकाशपूर्णकामत्वाद्यभिधानाच्च[1] । यद्वा सलक्ष्मणः स सर्वज्ञत्वादिलक्षणको रामः । यद्वक्ष्यत्यनुपदं 'ववन्दिरे' इत्यादिना तल्लक्षणम् । एवं चेदेव चतुराननाद्यागमनं तन्नमनं तमित्येकपरामर्शश्च समञ्जसा भवन्ति । रामायणे लक्ष्मणसहभावाकथनात् । यद्वा अस्त्रान्तरमवाप लक्ष्मण इति तदुक्तिर्वा । तदप्युक्तं सङ्ग्रहे– 'सौमित्रिरप्यमित्रच्छिद्विश्वामित्रादवाप्तवान् । समस्तानि महास्त्राणि... ।।' इति । अपिः सौमित्रिपदेन महास्त्रपदेनाप्यन्वेति । तेन अपिना पण्डिताचार्याः सौमित्रिमहास्त्रग्रहणं सूचयामासुरिति ज्ञेयम् । ब्रह्मा मुखमादिर्येषां दिविषदां ते सुराः । 'बृह बृहि वृद्धौ'

---

१. नरसिंहपुराणे तु रामलक्ष्मणयोः विद्ये ददौ इति श्रूयते । तथाहि [४७.६९] सरय्वास्तीरमासाद्य गच्छन्नेकः स कौशिकः । तयोः प्रीत्या स राजेन्द्र द्वे विद्ये प्रथमं ददौ ।। इति ।

इत्यतो 'बृंहेर्नोऽच्च' [उणादि.] इति बृहधातोर्मनिनि नकारस्य अकारादेशे पूर्वमकारे यणादेशे च ब्रह्मेति भवति । 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः' इति मेदिनी[१] ।

ते च ते सुरेशाः सुराणामीशा ईश्वराः । कीदृशाः सुरेशा इत्यतो वा आह– **ब्रह्ममुखा इति** ।। ब्रह्ममुखाः ब्रह्म ब्राह्मणो विश्वामित्रो मुखं श्रीरामदर्शनद्वारं येषां ते तथा । रामसन्दर्शनहेतुर्देवानां भूदेव इति विश्वामित्रमुखमखभुज इति ज्ञेयम् । ब्रह्म श्रीरामाख्यं मुखं प्रधानं येषां ते तथा वा । तथाच माण्डूकभाष्ये 'तथापि मुखशब्दोऽयं पूर्णत्वं सूचयेद्विभोः' इति । तद्व्याख्यायां च 'मणिर्मुखं प्रधानं चेत्युत्तमस्य वचो भवेत्' इति वचनात्' इति वचनात् [१अ.१खं.श्रीनिवासतीर्थीयटिप्पण्याम्] । एतेन श्रीरामस्वामिकत्वेन सुरेशानामागमननमने उचिते इति सूचितं भवति । यद्वा ब्रह्माणि चत्वारो वेदाः मुखे येषां ते देवा देववरं वेदैः स्तुवन्तो ववन्दिर इति भावः । भगवदवलोकनहेतुभूतं तपो ब्रह्म तदेव मुखं मुख्यसाधनं येषामिति वा । 'ब्रह्मात्मभूः सुरज्येष्ठः ।' 'विबुधाः सुराः' 'ईशौ स्वामिगिरीश्वरौ' इत्यमररत्नकोशौ । तं रामं समेत्य सङ्गम्य ववन्दिरे । साष्टाङ्गं नेमुस्तुष्टुवुश्च । 'वदि अभिवादनस्तुत्योः' इत्यतो लिटि 'लिटस्तझयोरेशिरेच्' [कौ.२२४१] इति एचि ववन्दिर इति भवति । सुमनसां सङ्गमो नानुमानिकः किन्तु प्रात्यक्षिक इत्याह– **प्रकटा इति** ।। प्रत्यक्षविषयीभूताः सन्तः । यत्र विश्वामित्रेण [सत्रा] सर्वत्राता स्थितः तत्र प्रकटाः सन्तः समेत्य तं ववन्दिर इति भावः । बहुदवीयःपदवीकलोकौकसां नाकौकसां तत्क्षण आगमनं न नो मनसे रोचत इत्यत आह– **अस्त्ररूपा इति** ।। अस्त्राणि स्वाभिमन्यमानानि ब्राह्मादीनि रूपयन्ति प्रतिष्ठापयन्ति ते तथा । तत्तदभिमानिनां तत्तन्मन्त्रजपे प्रत्यक्षीभवनं सम्भवतीति भावः । यद्वा अस्त्राण्येव रूपाणि येषां ते । यथेमानि शरीराणि इतरेषां तेषां अस्त्राण्येव रूपाणीत्यर्थः । यथोक्तं रामायणे– [बा.का.२७.२५-२६] प्रणम्य शिरसा रामं सर्वा प्राञ्जलयस्तदा । ऊचुश्च मुदिता रामं सर्वसंमतविक्रमाः ।। इमे च परमोदार किङ्करास्तव राघव । यद्यदिच्छसि काकुत्स्थ तत्सर्वं करवाम वै ।।' इति । 'खष्पशिल्पशष्पबाष्परूपपर्पतल्पा' [उणादि.३१९] इति निपातनात् रुधातोः [रु शब्दे] आदिदैर्ध्ये पेच रूपमिति रूपम् । 'रूपं स्वभावे सौन्दर्ये चाकारे' इति विश्वः [पान्तवर्गः.पद्विकम्.१] । ततश्चायं समुदायार्थः । विश्वामित्रदत्तमन्त्रमात्रे लोकमनुकुर्वता सर्वतातेनोच्चारिते सति तदभिमानिनः सर्वे सुमनसः सङ्घीभूय भगवन्नतावकातावकाः किङ्कराः किं करवाम राम तदाज्ञापयतु भवानिति समेत्य भगवन्तं ववन्दिरे इति । ये सुरेशाः । अनुग्रहार्थं यातुधानप्रधाननिधनेनानुग्रहं कर्तुम् । अनुग्रह एवार्थो यस्य तं भक्तजनमवेति ववन्दिरे तुष्टुवुरिति वा । एतत्पक्षे आप अवेति छेदः । पुरा मुरारिप्रादुर्भूतेः दुर्भूतनक्तञ्चरभवभववरपराभवतो निलीना

---

१. 'ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे चाध्यात्मज्ञानयोस्तथा ।।' इति तत्वबोधिन्यां रामाश्रमीये च मेदिनीकोशपाठः ।

निलिम्पपाला इदानीमादिदेवे भूमावुदिते मुदिताः परासून् असुरान्मत्वा हित्वा च भयं यथेच्छं अचरन्निति वक्ति– **प्रकटा इति** ।। 'सहस्य सः सञ्ज्ञायाम्' [कौ.१००९] इति सूत्रेण सौमित्रिवाचिनो लक्षणवाचिनो वा लक्ष्मणशब्दस्य सञ्ज्ञात्वेन तस्मिनुत्तरतः सति सहस्य सभावे सलक्ष्मण इति भवति । 'स ऋषेः' इति विसर्गसत्वरुत्वापूर्वयत्वेषु यलोपे गुणे च पुनः प्राप्ते तदसिद्धेश्च भवति । एवमेव 'स इहाजगाम' 'कृतकृत्य आसीत्' जना अमात्या अन्तः तृप्ता इव इत्यादि ज्ञेयम् ।।६।।

**मधुसूदनीया–** अनुग्रहार्थं केवलं अनुग्रहार्थमेव न तु स्वार्थमित्यर्थः ।।६।।

**वरदराजीया–** सलक्ष्मणो रामः केवलं ऋषेः विश्वामित्रस्यानुग्रहार्थं मुनितो विश्वामित्रादस्त्राण्यवाप । विश्वामित्रानुग्रहार्थमेव तस्माद् ब्राह्मपाशुपतादिमन्त्रान् स्वीकृतवानिति भावः । अत एवास्त्रस्वरूपाः मन्त्राभिमानिनो ब्रह्ममुखाः चतुर्मुखाद्याः प्रकटाः प्रत्यक्षाः सन्तः तं रामं समेत्य ववन्दिरे नमस्कृतवन्त इत्यर्थः ।।६।।

**जनार्दनीया–** सलक्ष्मणः स रामः । ऋषेः विश्वामित्रस्य । केवलमनुग्रहार्थम् । मुनितः विश्वामित्रात् अस्त्रं अस्त्राणि अवाप । अस्त्रमिति जातावेकवचनम् । अस्त्ररूपाः मन्त्रदेवताः ब्रह्ममुखाः प्रकटाः प्रत्यक्षीभूताः सन्तः तं रामं समेत्य ववन्दिरे ।।६।।

**चट्टी–** सलक्ष्मणः स रामः ऋषेर्विश्वामित्रस्यानुग्रहार्थं केवलमनुग्रहार्थमेव । न तु स्वार्थमित्यर्थः । मुनितो विश्वामित्रादस्त्रं ब्राह्मपाशुपतादिमन्त्रानवाप । अस्त्रमिति जात्येकवचनम् । अस्त्ररूपाः मन्त्राभिमानिनो ब्रह्ममुखाश्चतुर्मुखाद्याः सुरेशाः देवश्रेष्ठाः प्रकटाः प्रत्यक्षीभूतास्सन्तः तं रामं समेत्य ववन्दिरे ।।६।।

**अनन्तभट्टीया–** केवलमनुग्रहार्थम् । अस्त्ररूपा इति बहुव्रीहिः ।।६।।

**भारतश्री–** हि यस्मात् ववन्दिरे तस्मात् अनुग्रहार्थमवापेति वक्तव्यमित्यर्थः ।।६।।

**गूढवाक्यार्थ–** केवलमनुग्रहर्थम् । अस्त्ररूपा इति बहुव्रीहिः । अस्त्रदेवता इत्यर्थः ।।६।।

**अथो जघानाशु शरेण [१]ताटकां वराद्विधातुस्तदनन्यवध्याम् ।**
**ररक्ष यज्ञं च मुनेर्निहत्य सुबाहुमीशानगिरा विमृत्युम् ।।७।।**

---

१. विश्वमित्रः प्रथमं अस्त्राणि रामलक्ष्मणयोः ददौ । ततः रामः ताटकां अहन् । इत्याचार्यनिरूपितक्रमः । तत्र नरसिंहपुराणं ४७ अध्यायं तथा अग्निपुराणं ५.७ प्रमाणम् । तथाहि- रामं सम्प्रेषयामास लक्ष्मणं मुनिना सह । रामो गतोऽस्त्रशस्त्राणि शिक्षितस्ताडकान्तकृत् ।। इति । रामायणे तु प्रथमं ताटकासंहारं निरूपितम् । तदागतानां –

**व्यासतीर्थीया–** तदन्यस्तस्मादन्यः तस्यैव वध्याम् ।।७-८।।

**वादिराजीया–** ब्रह्मवरस्य अन्यैरनुलङ्घ्यतया तस्माद्रामादन्यैर्वध्या न भवतीति तदनन्यवध्या ताम् ।

**सत्यधर्मीया–** अथ रघुनाथपराक्रमानल्पकल्पतरोः अङ्कूरणकरणरणाचरणप्रकारं ताटकोदरकोटरविपाटन-पाटवरूपं निरूपयति– **अथो इति** ।। राम इत्यनुवर्तते । अथो कामाश्रमप्रश्नप्रतिवचनगीर्वाणतरङ्गिणी-तरणशचीपतिशरीरभववनभवनताटकातिक्रमतदक्रमश्रवणतदाप्रकटसुरेशानुज्ञादानानन्तरम् । यथोक्तं रामायणे– [बा.का.२७-२७] मानसा मे भविष्यध्वं इति तानभ्यचोदयत् । गम्यतामिति तानाह यथेष्टं रघुनन्दनः ।। मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ।।' इत्यादि [१-२८-१४] । सङ्ग्रहे च– 'ताननुज्ञाप्य काकुत्स्थः' इति । विश्वामित्राज्ञानन्तरं वा । इदमप्युक्तं रामायणे । [बा.का.२३-५] 'तौ प्रयातौ महावीरौ' इत्यारभ्य 'तस्मादेतां घृणां त्यक्त्वा जहि मच्छासनान्नृप' [बा.का.२५-२२] इति । शरेण बाणेन । आशु शीघ्रम् । ताटकां तन्नाम्नीं यक्षिणीं सुन्दभार्यां जघान निहतवान् । इदमप्युक्तं श्रीरामायणे– 'कस्यचित् त्वथ कालस्य भार्या सुन्दस्य धीमतः । यक्षिणी कामरूपिणी... ।।' [बा.का.२५-९] इति ।

ननु वीरो रामो रामां कथं जघान धर्मप्रवर्ती इति चेत् । न । महद्द्रोहिहतेर्विहितत्वेन अदोषत्वात् । तथाचोक्तं नृसिंहपुराणे–[४७.७७-८०] 'इत्येवमुक्ते मुनिना रामस्तं मुनिमब्रवीत् । कथं हि स्त्रीवधं कुर्यां अहमद्य महामुने ।। स्त्रीवधे तु महापापं प्रवदन्ति मनीषिणः ।।' इति रामोक्तोऽवदद्विश्वामित्रः– अस्यास्तु निधनाद्राम जनाः सर्वे निराकुलाः । भवन्ति सततं तस्मात्तस्याः पुण्यप्रदो वधः ।।'इति । रामायणे च– [बा.का.२६.२१] 'दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् । अलं ते घृणया वीर पापैषा दुष्टचारिणी ।। यज्ञविघ्नकरी यक्षी... ।।' इत्यादि । सङ्ग्रहे च– 'मुनिरूचे तदा रामं वनितावधलज्जितम् । वत्स सज्जनकृत्येयं हन्यतां हन्यतामिति ।।' इति ।

पूर्वं 'जघान' इति वचनेन पश्चात् 'शरेण' इति करणसमीरणेन विना विपाटादिसाधनेन ईश्वरो हन्तुं ईश्वर इति सूचयति सुखयतिः । तलताडनेन यक्षिणीक्षपणनिपुणस्यापि तस्य तस्या अस्पृश्यत्वद्योतनाय 'शरेण' इति करणोदाहरणमिति मन्तव्यम् । तत्रापि रात्रिचरीविनाशिना विना असिना इतरेण वा शरेणैव शरीरदारणोदीरणेन मुख्यप्राण एव मुख्याधिकृतः सदाधिकृत् प्राणापहरण इत्यप्यर्थो असूच्याचार्यैः । यतस्ते

---

– देवतानां प्रार्थनया परदिने प्रातः विश्वामित्रः अस्त्रदानं रामलक्ष्मणयोः अकरोत् इति व्यत्यस्य कथा कथिता । 'राम राम महाबाहो ताटका नाम राक्षसी । रावणस्य नियोगेन वसत्यस्मिन् महावने ।।'इति नृसिंहपुराणे ४७.७५ । जघान... 'ताटकाख्यानमाकर्ण्य पापं ताडयते नरः । ताटकावधमाकर्ण्य ह्यविद्यानाशमाप्नुयात् ।। ५अ. इत्युमासंहितायां फलश्रुतिः ।

एव पुरोचुः 'पश्चात्मको मारुत एव बाण' इति । तदिति अनन्यवध्यामिति पदद्वयम् । यतो निजजनहननशीला तत् ततस्तां दुःशीलां लीलाबालो बलवानप्यबलां जघानेति हेतुहेतुमद्भावो ज्ञेयः । इयती शक्तिः कुतो नक्तश्चर्या इत्यत आचार्यो वक्ति– **वरादिति** ।। हस्तिसहस्रबला भव भव च नवध्येत्येवंरूपात् । वरोऽपि चतुराननदत्त इति भगवदितरैरनुल्लङ्घ्य इति वदति– **विधातुरिति** ।। ब्रह्मणः । तथाचोवाच वाल्मीकिः [बा.का.२५-७] 'ददौ नागसहस्रस्य बलं तस्यै पितामहः' इति । वरात्सुरश्रेष्ठाद् विधातुर्हेतोरनन्यवध्यामिति हेतौ पञ्चमी वा । यातुधान्या अनन्यवध्यत्वे धातैव हेतुरिति भावः । रामेतरो नरोऽमरो वा न पटुस्ताटकापाटन इत्याह– **अनन्यवध्यामिति** ।। अन्येनेतरेण । योग्यतया प्रसक्तेश्च रामलाभः । वध्या घात्या भवतीत्यन्यवध्या सा न भवतीत्यनन्यवध्या ताम् , सुरादिप्रेरकेश्वरेण वध्या न पुनः प्रेर्येण केनापि इति वा आह– **अनन्येति** ।। 'अन चेष्टायाम्' अस्मादर्हार्थे यति भवत्यन्य इति चेष्टयः प्रेर्यो अस्वतन्त्रवर्गस्तेन न वध्येति सा तथा । अथवा अनन्योऽभिन्नः । योग्यतया स्वेति लाभः । स्वानन्यस्तु राम एवेति तेन वध्यामिति । अनन्येति 'तस्मान्नुडचि' इति नुटि भवति । तदनन्येत्याद्येकं वा पदम् । सा प्रसिद्धा च सा अनन्यवध्या च तामित्यर्थः । अन्यो स्वतन्त्रो नेत्यनन्यो रामस्तेन वध्यामिति वा । 'हन हिंसागत्योः' अस्मात् 'हनो वा यद्वधश्च वक्तव्य'[वार्तिक.६-४-६५] इति यति वधादेशे च वध्येति भवति । चः समुच्चिनोति ताटकामारणेन सह सुबाहुहननमिति ज्ञेयम् । सवनावनसमुच्चये वा चः । चोप्यर्थे वा । विधातुर्वरादवध्यामपि ताटकां जघानेति तदन्वयः । अनेन रामस्य विधातुरपि बलिष्ठता सूचिता भवति । अथो इत्यावर्तते । तेन ताटकामारणानन्तरम् । सुबाहुं तन्नामानं राक्षसम् । अनेन बाहुशालित्वमपि तस्य क्षपाचरस्याभिप्रैति । निहत्य संहृत्य । सोऽपि हरवरात् वरादितरसंहारागोचर इति वदति– **ईशानेति** ।। ईशानः शिवस्तस्य गिरा वाचा । ईष्टे तच्छील [ताच्छील्यवयोवचनशक्तिषु चानश् । कौ.३१०९] इति ईशधातोर्युच् । 'शङ्करः शर्व ईशान' इत्यमरः । गृणातेः क्विप् सम्पदादिः ततः 'र्वोरुपधाया' [पा.सू. ८-२-७३] इति दीर्घे गीरिति भवति । 'गीर्वाग्वाणी' इत्यमरः । विगतो मृत्युः यस्य यस्माद्वा स तथा । ईशानगिराविमृत्युमित्येकं वा पदम् । ईशानस्य गिरेत्याकारान्तो वाग्वाची । गिरया वाचा विमृत्युरिति विग्रहः । 'टापं चैव हलन्तानां यथा वाचा निशा दिशा' इति भागुरिवचनात् । 'ब्रह्माणी वचनं वाचा जल्पितं गदितं गिरा' इति शब्दार्णवः । 'मृङ् प्राणत्यागे' अस्मात् 'भुजिमृङ्भ्यां युक्त्युकौ' [उणादि.३०८] इति त्युकि मृत्युरिति भवति । 'मृत्युर्ना मरणे यमे' इति मेदिनी । बाधेते विरोधिन इति वाहू सुशोभनौ चन्दनगन्धदिग्धतया अङ्गदादिकलापकलापयुक्ततया वा शोभनौ बाहू भुजौ यस्य स तथा । बाधतेः 'अर्जिदृशि' [उणादि. २७] इत्यादिना उ दीर्घहकारेषु बाहुरिति भवति । 'बाहुः स्त्रीपुंसयोर्भुज' इत्यमरः । 'बाहुश्च भुजयोः पुमान्' इति मेदिनी[१] । विरेव परमात्मैव मृत्युर्यमरूपो

१. बाहौ श्चभुजयोः पुमान् इति दामोदरः ।

यस्येति वा । विना मृत्युर्यस्येति वा । कुतो भगवान्निरागसो वधमकृत कृतघ्नवदित्यतो अर्थादपराधं बोधयति– **ररक्षेति** ।। मुनेर्विश्वामित्रस्य यज्ञं भगवद्भजनकर्मक्रतुं वा ररक्ष अरक्षयत् । निहत्येत्यनेन ल्यपा ररक्षेत्यनेन च हननहेतू रक्षणहेतुश्च एक इति तद्धननं पूर्वभावीति भवति च सवनावनहेतुरिति सूचितं भवति । 'वातेर्डिः' इति डित्वात् टिलोपे विः इति भवति । 'विः पक्षिपरमात्मनोः' इत्यभिधानात् । 'यज देवपूजासङ्गतिकरणदानेषु' इति यजतेः 'यजयाच'[कौ.३२६८] इत्यादिना नङि यज् नङ् इति स्थिते ङकारलोपे नस्य श्चुत्वेन ञे तद्योगे च ज्ञे यज्ञेति भवति । 'यज्ञः सव' इत्यमरः । 'शृ हिंसायाम्' इत्यतो 'ऋदोरप्' [कौ.३२३२] इत्यतो अपि शर इति भवति । वृञो 'ग्रहवृदृनिश्चिगमश्च' [कौ.३२६४] इत्यचि च वर इति भवति । 'अशू व्याप्तौ' अस्मात् 'कृवापाजि..' [उणादि.१] इति सूत्रेण उणि आदिवृद्धौ आश्विति च । शैघ्र्यप्रवाचिनोऽव्ययत्वं व्रीहिवाचिनः सर्वलिङ्गत्वमिति विवेकः[१] । अश्नुत इति आशु शीघ्रम् । 'आशु शीघ्रम् । आशु व्रीहिः पाटलं स्यात्' इत्यमरः । सर्वोत्तमस्य रामस्य मुख्यप्राणावरशर्ववरगर्वितवधो न दुस्साध इति वा बोधयति– **ईशानेति** ।। ईशोऽनो मुख्यप्राणो यस्य स शिव ईशानः तस्य गिरेति ।

मुनेरित्यावृत्तिर्वा । मुनित इत्यनुवृत्तिर्वा । आश्वित्यव्ययत्वादिवार्थकम् । ततश्च मुनेर्वेदव्यासस्य गिरा । ईशानो नियामकोऽस्तीति गिरा । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' [गी.१८.६१] इत्यादिवचनेन । मुनेर्जिनस्य । ईशित्रा । न सहितमिति शेषः । यज्ञो न स्वामिना सहित इत्यादि गिरा वाचा यथा तन्निरसनपूर्वकं सर्वयज्ञादिसेश्वरमिति साधयन्ती गीः ररक्ष तथेति वा । ईशानगिरा ईशानावताररूपत्वात् शुकस्तस्य गिरा भागवतादिवाचा यथेति वा । यज्ञमित्युपलक्षणम् । सकलसत्कर्ममार्गं ररक्षेशो व्यासो यथा तथागतमतमपाकृत्य तथा रघुनाथोऽपि पोथयित्वा यातुधानान् विश्वामित्रसत्रं ररक्ष रक्षःक्षयकरणेनेति दृष्टान्तदार्ष्टान्तिकभावेन पदानुवृत्त्यादिनान्वयो ज्ञेयः । इममप्यर्थमाचार्यो असूचयन्मुनिपदेनेत्यलम् ।।७।।

**मधुसूदनीया–** ताटकां मारीचमातरम् । ननु धर्मसेतुं रक्षता रामेण प्रथमतः स्त्रीवधः कथं कृतः तस्य महापापसाधनत्वादिति चेत् सत्यम् । सकलसज्जनहितार्थं कृतत्वेन दोषाभावात् । विश्वामित्रेण ताटकां जहीत्युदितो 'इत्येवमुक्ते मुनिना रामस्तं मुनिमब्रवीत् । कथं हि स्त्रीवधं कुर्यां अहमद्य महामुने ।। स्त्रीवधे तु महापापं प्रवदन्ति मनीषिणः ।।' इति रामोक्तोऽवदद्विश्वामित्रः– अस्यास्तु निधनाद्राम जनाः सर्वे निराकुलाः । भवन्ति सततं तस्मात्तस्याः पुण्यप्रदो वधः ।।'इति । विश्वामित्रेण तद्वधस्य पुण्यसाधनतया कर्तव्यतया उक्तेरिति नृसिंहपुराणे ।।७।।

---

१. तत्वबोधिन्यां तु 'आशु शीघ्रमिति विलम्बाभावमात्रे क्लीबम् , तद्विशिष्टद्रव्यपरत्वे द्रव्ये त्रिलिङ्गम् । 'अथ शीघ्रं त्वरितं' इत्युपक्रम्य 'क्लीबे शीघ्राद्यसत्वे स्यात् त्रिष्वेषां भेद्यगामि यत्' इत्यमरः । व्रीहौ पुंस्येव' इत्युक्तम् ।

**वरदराजीया–** यज्ञनाशकरक्षोविनाशनद्वारा विश्वामित्रयज्ञसंरक्षणप्रकारमाह– **अथो इति** ।। अथोऽस्त्रप्राप्त्यनन्तरं आशु ताटकां शरेण जघानेति सम्बन्धः । आश्वित्यनेन अनायासं सूचयति । कथम्भूतां विधातुः ब्रह्मणो वरात् तदनन्यवध्यां तस्मात् रामादृतेऽन्येनावध्यां तस्मादनन्यः स एव रामस्तेनैव वध्यामिति वा । तथा ईशानगिरा रुद्रवरेण विमृत्युं विगतमृत्युं सुबाहुं तन्नामकं राक्षसञ्च निहत्य मुनेर्विश्वामित्रस्य यज्ञं ररक्षेत्यर्थः ।।७।।

**जनार्दनीया–** ननु रामः जुगुप्सितं स्त्रीवधरूपं कर्म कुतश्चकारेत्यत आह– **वरादिति** ।। न अन्यः अनन्यः तस्माद्रामादनन्यः अभिन्नः रामादनन्यो राम एवेत्यर्थः । तस्यैव वध्यां वधार्हाम् । यद्वा अन्यैर्वध्या अन्यवध्या । न अन्यवध्या अनन्यवध्या तस्मात् रामादनन्यवध्या ताम् तथा । तदन्येनावध्यामिति भावः । तदिति भिन्नं वा पदम् । लोकोपद्रवत्वेन प्रसिद्धां ताटकामिति । ईशानस्य शिवस्य गिरा वाक्येन वरेणेत्यर्थः । विमृत्युं अवध्यं सुबाहुं सुबाहुनामकं राक्षसं निहत्य मुनेर्यज्ञं ररक्ष ।।७।।

**चट्टी–** यज्ञनाशकरक्षोविनाशद्वारा विश्वामित्रयज्ञसंरक्षप्रकारमाह– **अथो इति** ।। अथो अस्त्रप्राप्त्यनन्तरम् । विधातुः ब्रह्मणो वरादन्यैः वध्या अन्यवध्या । न अन्यवध्या अनन्यवध्या । तस्मात् रामादनन्यवध्या ताम् । तस्मादनन्यः स एव रामः तेन वध्यामिति वा । ताटकां मारीचमातरम् । शरेण जघानेति सम्बन्धः । आश्वित्यनेन अनायासं सूचयति । ईशानस्य गिरा वाक्येन वरेणेत्यर्थः । विमृत्युं विगतमृत्युं सुबाहुं सुबाहुनामकं च राक्षसं निहत्य मुनेः विश्वामित्रस्य यज्ञं षड्दिनसमाप्तिं ररक्ष ।।७।।

**भारतश्री–** आशु प्रथमम् ।।७।।

**गूढवाक्यार्थ–** तदनन्यवध्यां रामादन्यैरवध्यामित्यर्थः । ईशानगिरा शिववरेण ।।७।।

**शरेण [१]मारीचमथार्णवेऽक्षिपत् वचो विरिञ्चस्य तु मानयानः ।**
**अवध्यता तेन हि तस्य दत्ता जघान चान्यान् रजनीचरानथ ।।८।।**

---

१. रामायणे मारीचः जम्भपुत्र इत्याभणितम् । तथा हि [२५.८] जम्भपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् । इति । क्वचित् सुन्दः खज्रुपुत्रः इत्यप्यस्ति । अत्रापि जम्भस्यैव खज्रुरिति नामान्तरमिति रामायणशिरोमणौ । अत्रापि 'सुन्दपुत्रः मारीचः उपसुन्दपुत्रः सुबाहुः' इति गोविन्दराजः । मारीचस्य नागायुतबलं वरबलं चासीत् इति श्रूयते । तथाहि- [अर.का.३८.१] 'कदाचिदप्यहं वीर्यात् पर्यटन् पृथिवीमिमाम् । बलं नागसहस्रस्य धारयन् पर्वतोपमः ।।'. इति । तथा तत्रैव १६श्लोके. 'बली दत्तवरो दर्पादाजगामाश्रममण्डलम्' इति रावणं प्रति मारीचवचांसि । तथा रामस्य तदा मारीचमारणं नापेक्षितमासीदित्यपि तस्य वचनेनैव गम्यते । तत्रैव श्लोक.१९ 'तेनाहं ताडितः क्षिप्तः समुद्रे शतयोजने । नेच्छता तात मां हन्तुं तदा वीरेण रक्षितः ।।' तथा रामवचनं [बाल. का.३१.१५] 'मानवास्त्रसमाधूताननिलेन यथा घनान् । करिष्यामि न सन्देहो नोत्सहे हन्तुमीदृशान् ।।' इति ।–

**वादिराजीया–** अथ सुबाहुवधानन्तरं शरेण वायव्यास्त्रमन्त्रितशरेण मारीचमर्णवेऽक्षिपत् । तु सीतावञ्चनादिभविष्यत्कार्यविशेषात् विरिञ्चस्य वचो मानयानो न तु सर्वथा अवध्यत्वात् । तथा सति उत्तरत्रापि हननासम्भवादिति भावः ॥८॥

**सत्यधर्मीया–** महाबाहुः सुबाहुमाहवे निहत्य मारीचादिनक्तञ्चरान् किं कृतवान् देव इत्यतो वक्ति– **शरेणेति** ॥ अथ सुबाहुमारणानन्तरम् । रामो मारीचं तन्नामानं राक्षसम् । मरीचेः? कृपणस्य रक्षसः पुत्रो हि मारीचः । मरीचिसुतकश्यपजातत्वाद्वा मारीचः[१] । मृङो 'मृकणिभ्यां ईचिः' [उणादि.५१९] इति ईचि रपरे गुणे ततोऽणि वृद्धौ मारीच इति भवति । 'मरीचिः कृपणे दीप्तावृषिभेदे च दृश्यते' [चत्रिकम्.१५] । 'मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्' [चत्रिकम्.१६] इति विश्वमेदिन्यौ । अर्णवे समुद्रेऽक्षिपत् । लङ् । चिक्षेप । 'अन्येभ्योऽपि दृश्यन्ते' इति मत्वर्थे 'अर्णसो लोपश्च' [वा] इति स लोपो अर्णांसि उदकानि सन्त्यस्मिन्नित्यर्णव इति भवति । 'सागरोऽर्णव' इत्यमरः । साक्षादेवाक्षिणोत् [अक्षिपत्] किं नेत्याह– **शरेणेति** ॥ अमोघशक्ती राघवः सद्य एव किमिति न जघानेत्यतो हेतुमाह– **विरिञ्चस्येत्यादिना** ॥ विरिञ्चस्य विरिञ्चेः । 'रिचर विरेचने' इत्यस्मात् 'इदिति' नुमि पचाद्यचि रिचो रिञ्चनं हिंसा विगता यस्मात् स विरिञ्चो धाता । 'रच प्रतियत्न' इत्यतः पृषोदरादित्वेन अकारस्य इत्वे नुमि अचि च पचादित्वेन विरिञ्च इति वा । विरिञ्चेत्यनेन स्वयंभूश्च स्वयमहिंस्य इति दानवाद्यहिंस्यतादानशक्त इति न युक्तः स्वयमनवतीर्णनय इत्यसूचि । तस्या वचो वाक्यं मानयानः बहुमानयन् । मन्यतेः स्वार्थिकण्यन्ताच्छानचि मानयान इति मेयम् । तुना तु नाद एवेदंक्षणे क्षणदाचरमारीचमारणकरणमपि तु रावणादिसकलपलालाशिकुलविलयनिदानं दानव इति मतिमान् अर्हत्तमो गर्हितमप्यवधीन्न देव इति विशेषमशेषविदबोधयत् । बाणे मारीचप्राणापहरणशक्तिर्नास्तीति किन्न स्यादित्यतो वाह– **मारीचमथेति** ॥ मारीचं मथ्नातीति मारीचमथ् तेन । धान्ततृतीयैकवचनम् । तद्विलोडनसामर्थ्यवतापि । एवमन्वये मारीचमित्याध्याहारो वा योग्यतया लाभो वा ज्ञेयः । 'मथे विलोडन' इत्यतः खञ्चश्चर्त्वेन ते जश्त्वेन देच मारीचमद् मारीचमत् अग्निमदित्यादिवद्भवतीति मन्तव्यम् । हि यस्मात्तेन चतुर्मुखेन तस्य मारीचस्यावध्यता केनाप्यहिंस्यता दत्ता प्रदत्ता । दाधातोः 'दो दद्घोः' [कौ.३०७७] इति घुसञ्ज्ञस्य दा

– 'हिरण्यकशिपोः पुत्राश्चत्वारस्तु महाबलाः । प्रह्लादः पूर्वजस्तेषामनुह्लादस्तथैव च ॥ संह्लादश्च ह्रदश्चैव ह्रदपुत्रान्निबोधत । ह्रादो निसुन्दश्च तथा ह्रदपुत्रौ बभूवतुः । सुन्दोपसुन्दौ विक्रान्तौ निसुन्दतनयावुभौ । ...मारीचः सुन्दपुत्रस्तु ताटकामुपपद्यते । ताटका निहता साध राघवेण बलीयसा॥' वायु.७०-७३] 'अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः । यज्ञविघ्नकरौ तौ ते नैव दास्यामि पुत्रकम् ॥' इति वा.रा.१.२०.२५. । अत्राह तिलकः- 'मारीचसुबाहू दैत्यकुलजसुन्दोपसुन्दाभ्यां यक्षकन्यायां जातत्वेन अगस्त्यशापेन च अतिक्रूरतमौ राक्षसत्वं प्राप्तौ ।' इति ।

१. मरीचिसुतकश्यपवंशजत्वात् इत्यभिप्राय इति भाति ।

इत्यस्य दथ् स्यात्तादौ किति इति दथि चर्त्वे दत्तेति भवति । ततस्तद्वचो मानयन्न विजघान । नवध्यतां निर्वध्यतामिति वा अनुक्त्वा अवध्यतामिति च वदन्नमितमतिः एन भगवता वध्योऽवध्यस्तस्य भावोऽवध्यता भगवन्मात्रवध्यता दत्तेति चतुराननवचनभाव इत्यसूचयत् । अथ मारीचदूरीकरण–सुबाहुमारणानन्तरम् । अन्यांस्तदनुयायिनो रजनीचरान् अन्यान् तच्चेष्टया तन्नियम्यान् इति यावत् । रजन्यां रात्र्यां चरन्तीति ते तथा तान् । जघान भगवानिति भावः । सूच्यते च तस्य दत्तेत्यनेन विधिनानभिमत एव वरो मारीचतपसा देववरसेवार्थमेव दत्तेति । अन्यथा 'कर्मणा यमभिप्रैति स सम्प्रदानम्' [कौ.५६९] इति सम्प्रदानसञ्ज्ञायां 'चतुर्थी सम्प्रदाने' [कौ.५७०] इति चतुर्थी श्रूयेत ।

यद्वा श्लोकद्वयस्याप्यखण्डोऽन्वयः स्वरसः । तथाच यथामानं पदानां योजना ज्ञेया । तथाहि । रामस्ताटकां जघान अथ तदनन्तरं मारीचं अर्णवे अक्षिपत् । अथ सुबाहुं निहत्य अन्यान् जघानेति भगवता वेगवता एकदा कार्यद्वयमकारीति कृतकरता श्रीकरस्योक्तेति ज्ञेयम् । यथा राक्षसाः परोक्षतो अपरोक्षतो वा विण्मूत्रासृगादिप्रक्षेपणेन वेदीं न दूषयेयुस्तथा ररक्ष । तथा च सङ्ग्रहे– [बा.का.५.१७] 'नाप्रादूषयतां यावत्तौ वपाद्रवशोणितैः । यज्ञं यज्ञेश्वरस्तावद्घोरं शरममुञ्चत ।।' इति ।

'रञ्ज रागे' अस्माद् बाहुलकादनि नलोपेऽपि 'बाहुलिके कृदिकारात्' इति ङीषि रजनीति भवति । 'रजनी नीलिनीरात्रिहरिद्राजतुकासु च' इति मेदिनी [नत्रिकम्.१४] । प्राणमुख्यास्त्राभिमन्त्रितबाणेन । 'मानवास्त्रं ततो रामः प्रगृह्यास्त्रविशारदः । मारीचमब्धौ चिक्षेप नातिकोपसमन्वितः ।।' इति नृसिंहपुराणे । 'पवनास्त्रेण महता मारीचं नाम राक्षसम् । सागरे पातयामास शुष्कपर्णमिवानिलः ।।' इति पाद्मे [उ.ख.२४२.१२८] । 'मानवं परमोदारमस्त्रं परमभास्वरम्' [बा.का.३०.१७] इत्यारभ्य 'शीतेषुं मनुसंहितम् । मोहयित्वा नयत्येनम्' [बा.का.३०.२०] इत्यन्तेन श्रीरामायणेऽभिधानाच्च शरः समीरास्त्राभिमन्त्रित इति ध्येयम् । ननु नृसिंहपुराणरामायणयोः मानवता अस्त्रस्य उच्यते । पाद्मे च 'पवनास्त्रेण' इत्यतो विरोध इति चेत् । न । मनोरिदं हि मानवं तस्येदमित्यण् । मनुश्च वायुः । 'ते वायवे मनव बाधितायावासयन्नुषसं' इति श्रुतौ श्रुतेर्मनुशब्दस्य वायाविति न विरोधः । 'चत्वारो मनवस्तथा' [गी.१०.६] इति गीताव्याख्यावसरे श्रीमदुदाहृतमहाविष्णुपुराणवचनात् मनुशब्दोऽत्र वायुवाची इति ज्ञेयम् । तथाहि गीतातात्पर्ये दशमेऽध्याये [१०.६] 'मनवो बोधवैशेष्यात् देवा ब्रह्मादयः स्मृताः' इति 'बोधवैशेष्यात् मनवो देवता स्मृताः' इति भागवततात्पर्याच्च । यद्वा मननात् मनुर्भगवान् तदपत्यं मानवो वायुः । पुनः मानवशब्दात् अणि मानवस्येदं मानवं अस्त्रमिति वायव्यास्त्रता ज्ञेया । मानवशब्दो वायुवाची । तथाचोक्तं चतुर्थे तृतीये वैद्युतसूत्रभाष्यव्याख्यावसरे 'तत्पुरुषो मानवः । स एनान् ब्रह्म गमयति ।' इति तत्त्वप्रकाशिकायाम् । नच स्वायत्ते शब्दप्रयोगे किमिति भगवान् प्रायुङ्क्त अस्त्रपदमिति वाच्यम् । शरेणेति वदन्विष्णुपादो विष्णुपुराणमपि सञ्जग्राह । तथा हि । 'यज्ञे च

मारीचमिषुप्रपाताद्धतं चकार' इति । अनेन सङ्ग्रहरामायणमप्युचितार्थमिति ध्येयम् । तथाहि 'राममुक्तेषु-वीर्येण विवृत्य शतयोजनम्' इति [बा.का.५.१८] । रामवन्मुक्तो राममुक्तस्ते तदभिमानकस्येशवीर्येणेति वा वायव्यास्त्राभिमन्त्रितशरेणेति सङ्ग्रहार्थो ज्ञेयः । तथाच रामवदमृतत्वं च समीरस्य समीरितं याज्ञीयोपनिषद्भाष्ये– [१८.मन्त्र] 'अतिरोहतविज्ञानाद्वायुरप्यमृतस्मृतः । मुख्यामृतः स्वयं रामः परमात्मा सनातन ।।' इति । एवं चेदेव रामायणादिसर्वविरोधसमाधिर्भवतीति ज्ञेयम् । श्लोकद्वयस्यापि एकान्वये पूर्वं मारीचमर्णवे अक्षिपत्ततो अहन् सुबाहुं तदनन्तरमितररजनीचरान्निहत्य यज्ञं ररक्षेति यथामानं पदानामन्वयः सम्भवतीति ततश्च श्रीरामायणसङ्ग्रहरामायणे च अनुगुणे भवतः । तथाहि श्रीरामायणे– [१-३०-१८] 'स तेन मानवास्त्रेण परमेण समाहतः । सम्पूर्णं योजनशतं क्षिप्तः सागरसम्प्लवे ।।' इत्यादिना 'न च प्राणैर्वियुज्यत' इत्यन्तेन प्राचि मारीचपातोऽवगम्यते । तदनन्तरं 'इमानपि वधिष्यामि निर्घृणान् दुष्टचारिणः । राक्षसान् पापकर्मस्थान् यज्ञघ्नान् रघुनन्दन ।। इत्युक्त्वा लक्ष्मणं चाशु लाघवं दर्शयन्निव । विगृह्य सुमहच्चास्त्रं आग्नेयं रघुनन्दनः ।। सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ।।' [बा.का.३०.२१-२२] इति प्रतिज्ञापूर्वं पूर्वमितरहननात् पश्चात् मारीचपातनात् सुबाहुहननावगतेः । तदनन्तरमितरनक्तश्चरनाशः 'शेषान् वायव्यमादाय निजघान महायशाः' इत्यारभ्य । 'अथ यज्ञसमाप्ते तु' इत्यन्तेनावसीयत इति कविकथितः क्रमः [बा.का.३०.२३-२५] । सांग्रहिकश्च– [बा.का.५.१८-२०] राममुक्तेषुवीर्येण विवृत्य शतयोजनम् । मारितोऽस्मीति मारीचः ममज्ज लवणार्णवे ।। ज्वलनज्वालमादाय स पुनः सायकान्तरम् । सुबाहुं च महाबाहुं निन्ये यमनिकेतनम् ।। पुनश्चापातयद्बाणैः शिरांसि पिशिताशिनाम् ।।' इति ।

इमाश्च योजनाममानमानसोऽसूचयदथग्रहणेन । अत्र पूर्वं सुबाहुसंहारोक्तिस्तु विस्तरतः पुरतो मारीचमारणं विवक्षोः नृशंसहिंसाशंसनशीलस्य भगवतो भगवत्पादस्यौत्सुक्यातिशयवशेनेत्यवधेयम् । कृष्णो यथा सौभमम्भोनिधौ चक्रेण कृत्तकन्धरं न्यपतत्तथेति दृष्टान्तं वा आचष्टे– **शरेणेति** ।। शरेण हिंसासाधनत्वाच्चक्रेण । यो मानयानो विमानयानः नामैकदेशे नामग्रहणन्यायेन वैकदेशविकृतन्यायेन वा मानोऽभिमानः सयानं यस्य स तथा । तमर्णवेऽक्षिपत् तथा रघुनाथो मारीचमर्णवेऽक्षिपदित्यर्थः । [[1]अथवा विरिञ्चस्येति षष्ठी शेषषष्ठी । ततश्च तेन विरिञ्चेन हि तस्य मारीचहिंसया अवध्यता दत्ता । तु अतः । अक्षिपद्वचो अक्षीणि नेत्रे पत् पादौ च वचो जिह्वाश्च प्राण्यङ्गत्वात् एकवद्भावः । वाय्वात्मकत्वात् अन शर त्वं मा नय मा गमय । नो नाशयेति यावत् । न चैतददृष्टचरं इति वाच्यम् । 'अथ शब्दानुशासनम्' इति महाभाष्ये अनुशासनसमस्तशब्दशब्दस्य उत्तरत्र 'के ते शब्दाः' इति पृथक्कृत्य प्रयोगदर्शनात् । इति शरं प्रति उच्यते । अर्णवे मारीचं नयेति । तं ररक्षेत्यनुवृत्त्यान्वयः] ।।८।।

१. लिपिकृद्भिः मूलमातृकासु परितः लिखितं इदं वाक्यकदम्बकं अस्फुटत्वात् कुत्र योजनीयं इति न अवगम्यते । अतः कंसान्तर्गतया पृथक्कृत्य इह निवेश्यते ।

**मधुसूदनीया–** शरेण वायुदेवताकेनेत्यर्थः । तथाचोक्तम्– 'मानवास्त्रं ततो रामः प्रगृह्यास्त्रविशारदः । मारीचमब्धौ चिक्षेप नातिकोपसमन्वितः ॥' इति नृसिंहपुराणे । 'पवनास्त्रेण महता मारीचं नाम राक्षसम् । सागरे पातयामास शुष्कपर्णमिवानिलः ॥' इति पाद्मे । 'मानवं परमोदारमस्त्रं परमभास्वरम् । चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ स तेन परमास्त्रेण मानवेन समाहतः । सम्पूर्णं योजनशतं क्षिप्तः सागरसम्प्लवे ॥' इति रामायणे । [बा.का.३०.१७-१८] मानवं वायुदेवताकं शरमित्यर्थः । 'पवनास्त्रेण' इति पाद्मोक्तेः । 'ते वायवे मनव' इति श्रुतौ मनुशब्दस्य वायौ प्रयोगाच्च । 'शरेण' इत्युक्तेस्तु पुराणान्तरसङ्ग्रहाय । 'यज्ञे च मारीचं इषुपाताहतं[१] चकार' [४.४.८९] इति विष्णुपुराणाद्युक्तेः । तदेतत्सङ्ग्रहायैव 'पश्चात्मको मारुत एव बाण' इत्युक्तं पूर्वत्रेति ध्येयम् । एतेन रामायणादिविरोधोऽपि परिहृत इति ज्ञेयम् ॥८॥

**वरदराजीया–** अथ सुबाहुवधानन्तरं शरेण मारीचमर्णवे अक्षिपत् । न तु जघान । तत्र निमित्तमाह– **वच इति** ॥ विरिञ्चेन हि त्वं अवध्य इति वरो दत्तः तस्मात् तद्वचो मानयन्नित्यर्थः । तदेव दर्शयति– **अवध्यतेति** ॥ तस्य मारीचस्य तेन विरिञ्चेन वरो दत्तेति । अन्यानपि यज्ञविघातकान् रजनीचरान् राक्षसांश्च जघानेत्यर्थः ॥८॥

**जनार्दनीया–** विरिञ्चस्य वचो मानयानो रामः शरेण मारीचं अर्णवे अक्षिपत् प्रास्यत् । 'मानयानः' इत्युक्तं स्पष्टयति– **अवध्यतेति** ॥ तेन विरिञ्चेन तस्य मारीचस्य । रजन्यां रात्र्यां चरन्ति ते तथा तान् राक्षसान् ॥८॥

**चट्टी–** *....तत्र निमित्तमाह– **अवध्यतेति** ॥ तेन विरिञ्चेन । तस्य मारीचस्य अवध्यता दत्ता । अथ मारीचसमुद्रक्षेपणानन्तरं अन्यानपि यज्ञविघातकान् रजनीचरान् राक्षसान् जघान ॥८॥

**भारतश्री–** वचः मारीचावध्यत्ववचः । मानयानः सकृदिति शेषः, उत्तरत्र हननात् ॥८॥

**भावचन्द्रिका–** ॥ **शरेणेति** ॥ 'पवनास्त्रेण महता मारीचश्च निशाचरम् । सागरे पातयामास... ॥' इति पद्मपुराणे ॥८-९॥

**अतिविशद–** शरेण मारीचमथार्णवेऽक्षिपदित्यत्र शरेण बाणनालेनेत्यर्थः । 'बाणस्त्वधोमुखः प्रोक्तः शरो नालः प्रकीर्तितः' इत्यभिधानं बृहद्भाष्यस्थम् । 'मानवास्त्रं ततो रामः प्रगृह्यास्त्रविशारदः । मारीचमब्धौ चिक्षेप....॥' इति नृसिंहपुराणे । 'मारीचमिषुपातहतं चकार' इति विष्णुपुराणे च । आचार्योक्ताभिधानानुसारेण मानवास्त्रयुक्तेषुपातहतमिति व्याख्येयम् । इषुशब्दस्य नालपरताङ्गीकार्या ॥

---

१. 'इषुवाताहतं समुद्रे चिक्षेप' इति मुद्रितकोशेषु पठ्यते ।

**प्रमाणसङ्ग्रह–** शरेण मारीचमित्यत्र शरेण वायव्यास्त्रेण 'मानवं परमोदारमस्त्रं परमभास्वरम् । चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ।। स तेन परमास्त्रेण मानवेन समाहतः । सम्पूर्णं योजनशतं क्षिप्तः सागरसम्प्लवे ।।' इति रामायणे । [बा.का.३०.१७-१८] मनुर्वायुः 'ते वायवे मनवे बाधिताया-वासयन्नुषसं सूर्येण' इति श्रुतिः । 'पञ्चात्मको मारुत एव बाणः' इति च ।।८-९।।

**तदा विदेहेन सुतास्वयंवरो विघोषितो दिक्षु विदिक्षु सर्वशः ।**
**निधार्य तद् गाधिसुतानुयायी ययौ विदेहाननुजानुयातः ।।९।।**

**व्यासतीर्थीया–** निधार्य निशम्य ।।९।।

**वेदाङ्गतीर्थीया–** निधार्य अवधार्य । तत् स्वयंवरविघोषणं श्रुत्वेत्यर्थः ।।९।।

**वादिराजीया–** अथ मारीचक्षेपणानन्तरम् । वरस्य प्रतापातिशयं दृष्ट्वा स्वयमेव कन्या यत्र वरयति सः स्वयंवरः । सुताया सीतायाः स्वयंवरः सुतास्वयंवरः । तत् स्वयंवरघोषणं निधार्य श्रुत्वा ।।९।।

**सत्यधर्मीया–** रमया नित्यमवियोगिनोऽपि रामस्य योगिनो योगेन महिलालाभप्रकारं प्रवक्तुं तावदीशस्य विदेहदेशगमनमाह– **तदेति** ।। तदा मुनिसवनसमापनानन्तरम् । 'सर्वैकान्यकिंयत्तदः काले दा' [कौ.१९६४] इति तस्मिन्नित्यर्थे तदेत्यव्ययम् । अनुजानुयातः अनु स्वमनु जायत इत्यनुजो अवरजो लक्ष्मणस्तेनानुयातो अनुगतो रामः । यद्वा अनुजोऽनुयातो यं सो अनुजानुयातः । आहिताग्न्यादिवत् परनिपातो ज्ञेयः । 'उपसर्गे च सञ्ज्ञायाम्' [कौ.३००९] इति जनेर्डः । सहोदरपर्यायपाठात् सञ्ज्ञात्वम् । यद्वा 'अन्येष्वपि' इति डः । अनु स्वमनु मनुजाकृतिमत्त्वेन जायत इत्यनुजा सीता तया अनुयातः पूर्वमेवेति स तथा । अनेन जनमोहनार्थमेवायं स्वयंवरव्यापार इति वा असूचि । विदेहान् जनकजनपदम् । विदेहावान्तरविशेषविवक्षया बहुवचनम् । 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' [कौ.११९३] इति तद्राजस्य लुकि वैदेहः वैदेहौ विदेहा इति भवति । 'जनपदे लुप्' [कौ.१२९३] इति जनपदे वाच्ये चातुरर्थिकस्य च लुपि 'लुपि युक्तवद्व्यक्तिवचने' [कौ.१२९४] इति प्रकृतिवल्लिङ्गवचनयोः सतोः विदेहस्य राज्ञो देशा विदेहा इति । यद्वा 'कम्बोजाल्लुक्' [कौ.११९४] इति सूत्रे 'कम्बोजादिभ्य इति वक्तव्यम्' इति वार्तिकात् केरला इतिवत् विदेहा इति तद्राजलुकि भवतीति ज्ञेयम् । यद्वा विदेहानिति परमोद्देशः । बहुवचनं चाद्यर्थे । विदेहान् जनककुशध्वजादीन् प्रति ययौ जगाम । विश्वामित्रमैत्र्यं तद्यज्ञसाङ्गताकृति-पर्यन्तमेवेति तं त्यक्त्वा विदेहान् गतवान् किं भगवानित्यत आह– **गाधिसुतानुयायीति** ।। गाधेः सुतो गाधिसुतो विश्वामित्रस्तमनुयात्यनुगच्छतीति स तथा । अनुयातुं शीलमस्यास्तीत्यनुयायी गाधिसुतस्य अनुयायी । उभयपक्षेऽपि 'सुप्यजातौ णिनिस्ताच्छील्ये' [कौ.२९८८] इति णिनिः । यद्यपि

वृत्तिकृन्माधवहरदत्तादिभिः उपसर्गभिन्नसुप्युपपद इति चाङ्गीकृतं तद्भाष्यविरोधात् 'स बभूवोपजीविनाम्' 'अनुयायिवर्गः' 'विसारि' 'अनुजीविभिः' इत्यादि बहुप्रयोगप्रसिद्धेश्च उपेक्ष्यमिति कौमुद्युक्तेः अनुयायीति साधुः ।

गमनमनःकरणे कारणमाह– **निधार्येति** ।। तत् कर्म घोषणं निधार्य आकर्ण्य । घोषितपदैकदेश-बोध्यघोषणस्य धात्वर्थमात्रस्य तदिति परामर्शो ज्ञेयः । तत्प्रकारं कथयति– **विदेहेति** ।। विदेहेन जनकेन । सुतास्वयंवरः सुताया अपत्यस्य सीतायाः आपाततः सुतात्वेन प्रतीयमानायाः । स्वयंवरः स्वयमेव रमणी रमणं वृणोति यत्र स स्वयंवरः । विवाहविशेषसञ्ज्ञेयम् । ततश्च 'वृञ् वरणे' इत्यस्मात् 'सञ्ज्ञायां भृतृवृजि' [पा.सू. ३-२-४६] इत्यादिना खचि मुमि वा अव्ययत्वेनामि वा स्वयंवर इति भवति । विघोषितः भेर्येव दूतैस्तैरिव पत्रिकयापि प्रकाशितः । 'घुष कान्तिकरणे' अस्मात् उपधापुगन्तगुणे इटि क्ते च घोषित इति भवति । चुरादेर्भ्वादेश्च शब्दाविशब्दनार्थस्य ण्यन्तस्य रूपं । यद्वा विशब्दनार्थस्यासशब्दार्थस्य वा घोष इति सञ्जाते 'तदस्य सञ्जातं तारकादिभ्य' [कौ.१८३७] इति इतचि घोषित इति भवति । भेर्या दूतैर्वा सञ्जातशब्दः स्वयंवर इत्यर्थः । तत्र तत्र स्थितानां कथं आकरणकारणमत्रत्यमित्यत आह– **दिक्षु विदिक्षु सर्वश इति** ।। दिक्षु प्राच्यादिषु । विदिक्षु नैऋत्यादिषु । सर्वशः पातालोर्ध्वदेशादिदेशेषु । यद्वा विदेहेनसुतास्वयंवर इत्येकं पदम् । विदेहानां तन्नामजनपदानां इनः ईश्वरस्तस्य सुता तत्स्वयंवर इति तदर्थः । अथवा विदेहेष्विनवत् सूर्यवत् प्रकाशमान इति विदेहेनो जनकः । 'इण् सिञ्जिदीङ्' [उणादि. २८९] इत्यादिना नकि भवति इन इति । 'इनः सूर्ये नृपे पत्यौ' इति चामरः । 'इनः पत्यौ नृपार्कयोः' इति मेदिनी । नेयमपि जनकेन जननवती किन्नाम तामरसालया श्रीरेव देववरप्रार्थनादेव अवततार देवदेववदिति वा वदति– **विदेहेति** ।। अस्य भगवतः स्त्री रमा ई 'पुंयोगाद्' [कौ.५०४] इति ङीष् । सुता रेतोविकृतशरीरापत्यं न भवतीति नसुता । वि विशिष्टो अनन्तलक्षणलक्षितो वा द्वात्रिंशल्लक्षणविशेषलक्षितो वा देहः शरीरं यस्याः सा च सा ई च नसुता च इति विग्रहः । अप्राकृतकायवती रमात्मिका च इति न जनकतनया इति भावः । मारसूरोपलक्षितप्रपञ्चमाता सीता यतो अतो न भूपतेः जाता अपि तु स्वेच्छया अवततारेति सूरिप्रवरो वा आवेदयति– **विदेहेनेति** ।। विदेहो अनङ्गः, इनः सूर्य, उपलक्षणया सर्वसुपर्वादिग्रहः । ते सुता यस्याः सा । इनापेक्षया अभ्यर्हितत्वाद्विदेहार्थस्येति विदेहशब्दः प्राङ्निपातितः । यद्वा विदेहो देहाभिमानरहितत्वात् हंसवाहनः इनश्च सुतौ यस्याः सा । 'ब्रह्मा निरभिमानित्वात् शरीर्यप्यशरीरवान्' इति वचनात् [भा.ता.११.७.] । अनेन जगत्सवित्र्याः पुनः स्वयंवर आरब्ध इति चोपाहसदशेषसंविदिति सूचितं भवति । अथवा विदेहेन जनकरेतोविकृतविरुद्धदेहेन सुता जनकतो देहसम्पादनेन विनैव सुतेति वा । उभयत्रापि पुत्रीत्वं प्रवादमात्रमिति मन्तव्यम् । अथवा राघवः कामिनीकामुकः सन्नमुकमुनिमनुससारेति प्रागतत्सुख इति

---

१. पचेत् गुणो न भवेत् तथाहि उदाहृतं कौमुद्यां घुष्टारज्जुः घुषितं वाक्यमिति । तदर्थस्तुशब्देन प्रकटिताभिप्रायमिति ।

प्राग्रमत आह– **सर्वश इति** ।। सर्वं पूर्णं शं सुखं यस्यासौ सर्वशः । 'सर्वं पूर्णमिति प्रोक्तम्' इति वचनात् । ननु महद्दोर्दण्डाखण्डस्य शशिखण्डशेखरकोदण्डस्य सत्वात् किमिति रामोऽपरामर्शेन रामोपगमनाशया जगामेत्यकुशल इत्यतो वा आलपति– **सर्वश इति** ।। सर्वस्य शर्वस्य सुखं यस्मादिति स तथा । स्वमनुं अनुदिनमनुजपतः सदाशिवस्य सदाशिवद इति न दुःसाधमिदं धनुःसज्जीकरणकार्यमिति न अचातुर्यमार्यस्येति भावः । 'सर्वो ह्येष रुद्र' इति श्रुतेः [नमक] । 'शृ हिंसायाम्' अस्मात् 'कृगृशृदृभ्यो वः' [उणादि. १६१] इति शर्व इति भवति । तालव्यदन्त्यतान्यायेन संबसूकरशंबशूकरादिवद्भवतीति सर्व इति शर्वसञ्ज्ञा[१] । यद्वा 'षर्व गतौ हिंसायां च' इत्यस्मात् धात्वादेः षस्य सत्वे वबयोरभेदात्सर्व इति पचाद्यचि च भवति । 'सर्वस्तु शर्वो भगवान् शम्भुः कालञ्जरः शिवः' इति नामनिधानात् । न जनको वा तस्य सुखजनकः किन्तु सर्वेषां सर्वदा सुखदो राम एवेति वा वक्ति– **सर्वश इति** ।। सर्वेषां शं यस्मात् स तथा । अथवा आवित् सर्वं सम्यक् वेत्ति जानातीति स च आश्च रामश्चेत्याविदः तस्य ईहा चेष्टा प्रेरणात्मिका तया इनस्य नरपस्य सुता[२] । अनेनाहं यथा भवामि भूमावाविर्भूतो दुर्भूतहिंसायै त्वमपि देवि भवेति देवनिदेशतो विदेहेशतो जाता सीतेति भगवच्चेष्टानुसारिचेष्टावती श्रीरिति द्योत्यते । यद्वक्ष्यति । 'यां यां परेश उरुधैव करोति लीलां तां तां करोत्यनु तथैव रमापि देवी' इति । 'गुरोश्च हल' [कौ.३२८०] इति गुरुमतो हलन्तात्स्त्रियां अकारे अजादिटापि ईहेति भवति । 'ईहेच्छा चेष्टयोर्मता' इति नामनिधानाभिधानात् । अत एव विदेहं जनकपुमपत्यमनुरुध्य जाता नेति विदेहाननुजातयानुयात इति वा । 'अनौ कर्मणि' [कौ.३०१०] इति जनेर्डः । विदा विशिष्टार्थदा ईहा यस्य स विदेहो रामस्तदात्मक इनः पतिस्तदर्थं सुता तस्याः स्वयंवर इति वा । अथवा वये भगवते ददाति चात्मानमिति विदो जनकः । दाधातोः'आतश्चोपसर्गे' इति क भवति । तस्य ईहा स्थाणुतो धनुःसम्पादनादिचेष्टा तया निमित्तेन इनस्य सुता । परोक्षतः श्रुतायाः अपरोक्षतः परीक्षयापि परमात्मन एव आत्मानं ददाति विदेह इति मतिमती वसुमतीसुता सती सीतेति ख्याताभूद्भूपसुतेति प्रवादत इति भावः । यद्वा तद्गाधिसुतानुयायीति समस्तम् । स चासौ गाधिसुतश्च यः स्वेनेदं कार्यं सम्पादितवान् स इति तदर्थः । तमिति शेषः । अथवा तदिति लिङ्गव्यत्ययो वा । या विदेहाननुजातया या रमया अतः सदा सहगतो नु निश्चयः सोऽपि ययाविति च अपहासोऽनेन व्यज्यते ।।९।।

**मधुसूदनीया–** विघोषितः दूतैः पत्रिकाप्रेषणादिना प्रख्यापितः ।।९।।

**वरदराजीया–** तदा यज्ञसंरक्षणसमये विदेहेन जनकेन सुतास्वयंवरः सुतायाः सीतायाः स्वयंवरो दिक्षु विदिक्षु च विघोषितः भेरीताडनादिना श्रावितः । तत्स्वयंवरविघोषणं विधाय निश्चित्य गाधिसुतं विश्वामित्रं अनुयायीति तथानुजोऽनुयातो यस्य स तथा । एवंभूतो रामो विदेहान् ययावित्यर्थः ।।९।।

१. 'तालव्या अपि दन्त्याः स्युः शम्बशूकरपांशवः' इति पुरुषोत्तमः इति वन्ध्यघटीटीकायाम् ।

२. अत्र आविदेहेनसुता इति छेदः ।

**जनार्दनीया–** तदा विश्वामित्रयज्ञसमाप्तिसमये विदेहेन जनकेन सर्वशः सर्वासु दिक्षु विदिक्षु च सुतायाः सीतायाः स्वयंवरो विघोषितः । श्रावित इत्यर्थः । दूतैरिति शेषः । भेरीताडनेन वा । स्वनगरे भेरीताडने कृते सति तत्रत्याः अन्यदेशभूपानां गूढपुरुषाः स्वस्वभूपेभ्यो वार्तां प्रेषयन्तीति भावः । तद्विघोषणं निधार्य अवधार्य गाधिसुतं विश्वामित्रं अनुयाति अनुगच्छतीति गाधिसुतानुयायी । अनुजेन लक्ष्मणेन अनुयातः अनुगतो रामः विदेहान् विदेहविषयान् ययौ ।।९।।

**ताम्रपर्णीया–** निधार्य श्रुत्वा ।।९।।

**चट्टी–** *...तदा विश्वामित्रयज्ञसमाप्तिसमये विदेहेन जनकेन सुतायाः सीतायाः स्वयंवरः सर्वशः सर्वासु दिक्षु च विघोषितः । दूतैः पत्रिकाप्रेषणादिना प्रख्यापितः । भेरीताडनेन वा । स्वपुरि भेरीताडने कृते सति तत्रत्या अन्यदेशभूपानां गूढचारिणः स्वस्वभूपेभ्यो वार्तां प्रेषयन्तीति भावः । तद्विघोषणं निधार्य निशम्य गाधिसुतं विश्वामित्रं अनुयात्यनुगच्छतीति गाधिसुतानुयायी । अनुजेन लक्ष्मणेनानुयात अनुगतो रामः विदेहान् विदेहदेशान् ययौ ।।९।।

**भारतश्री–** सर्वशः साकल्येन । निधार्य तमिति शेषः । स चासौ गाधिसुतश्च तद्गाधिसुतः येन गाधिसुतेनानीतः तद्गाधिसुतानुयायीति । तत् स्वयंवरघोषणमिति वा ।।९।।

**अतिविशद–** तदा विदेहेन सुतास्वयंवर इत्यत्र जनकेन स्वयंवरः कृत इति प्रतीयते सतु सीता निश्चयेन रामं व्रजेदिति अभिप्रायेण कृत इति व्याख्येयम् । 'अपां पतिश्च मैथिल' इत्युत्तरवाक्यात् । निधार्य तद् गाधिसुतानुयायी इत्यत्र स्वयंवरस्य पुल्लिङ्गत्वात् तदित्यस्य नपुंसकत्वात् विशेषणविशेष्यभावानुपपत्तेः । तत् तत्र । तमिति शेषः । तद्गाधिसुतानुयायीत्येकं पदं वा । सामान्ये नपुंसकत्वात् तदिति नपुंसकं वा ।।९।।

**गूढवाक्यार्थ–** विघोषितः पत्रिकाप्रेषणादिना प्रकटितः । निधार्य श्रुत्वा ।।९।।

**अथो अहल्यां पतिनाभिशप्तां प्रधर्षणादिन्द्रकृताच्छिलीकृताम् ।**
**स्वदर्शनात्[१] मानुषतामुपेतां सुयोजयामास स गौतमेन ।।१०।।**

१. 'दर्शनमात्रेण अहल्यामपापां चकार' विष्णुपुराण ४अं.९१ । तथा नरसिंहपुराणेऽपि ४७.९७ 'पाषाणभूता राजेन्द्र तस्य रामस्य दर्शनात् । अहल्या मुक्तशापा च जगाम गौतमं प्रति ।।' पादस्पर्शेन अहल्योद्धारकथनपरं 'अहल्या रघुनाथस्य पादस्पर्शात् शुभाऽभवत्' इत्यादिपाद्मवचनं तु कल्पविशेषमाश्रित्य प्रवृत्तम् । 'स्वदर्शनात्' इत्याद्याचार्यवचनं तु बहुकल्पीयकथामाश्रित्य प्रवृत्तम् । अतः न पाद्मवचनविरोधः । तथाहि भागवत्पादाः 'बहुकल्पानुसारेण मयेयं सत्कथोदिता' इति । रामायणादिकथासु आपाततः कल्पभेदव्यवस्थानिषेधपरस्य 'ऋते तु पाण्डवकथाम्' इत्यादिवचनस्य गतिस्तु 'बहुकल्पानुसारेण' इत्यादिश्लोकपदटिप्पण्यां वक्ष्यते ।

**व्यासतीर्थीया–** अस्याः पतिना प्रधर्षणनिमित्तात् शप्ताम् । 'षष्ठीयुक्तश्छन्दसि वा' इत्यनुशासनात् ।।

**वेदाङ्गतीर्थीया–** पतिनाभिशप्तामित्यत्र पतिशब्दस्य सम्बद्धशब्दत्वात् तेन अहल्याया इति पदेन योजनायां पतिशब्दस्य षष्ठीयुक्तत्वात् 'षष्ठीयुक्तश्छन्दसि वा' [सू.१.४.९] इति घिसञ्ज्ञा । छन्दस्त्वं च अस्य ग्रन्थस्य 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति छन्दस्त्वेन परिगृहीतेतिहासपुराणाद्यशेष-सदागमार्थनिर्णायकत्वेन छन्दस्तुल्यत्वात् सिद्धम् । एवमुत्तरत्रापि वैदिकप्रयोगे गतिः ।।१०।।

**वादिराजीया–** 'छन्दोवच्छास्त्राणि भवन्ति' इति वचनात् स्वग्रन्थस्य छन्दःसमानत्वद्योतनाय पतिनेत्युक्तम् । स्वस्याः पतिनेति योग्यपदाध्याहारेण योजना । अन्यथा पतिशब्दस्य साकाङ्क्षत्वा-परिहारात् । एवं च 'षष्ठीयुक्तश्छन्दसि वा' इति सूत्रात् पतिनेति साधुः । प्रधर्षणात् बलात्कारेण रमणात् । अनेनाहल्याया नापराधोऽस्तीति सूचितम् । अत एव स्वदर्शनात् स्वकृपावलोकनात् 'मानुषतामुपेतां' इत्युक्तम् । हरेः कृपापात्रत्वेन मुनेः स्नेहातिशयोऽभूदिति सूचयितुं सुयोजयामासेत्युक्तम् ।।१०।।

**सत्यधर्मीया–** बलावलेपाद्बलभिदो धर्षणादमर्षितेन ऋषिणोपलीकृतां तदवलां कृपावलोकनतो ललनां कुर्वन्ननुकुर्वंश्च लोकं अत्युत्कटैः पुण्यन्यायेन भाविभार्यायोजनप्रयोजनसाधनं विदधदिव पुरैव रमावरोऽपि मुनिना तत्कामिजनकनिकेतव्रजनव्याजेन संयोजनं सुमनोमनोलषितं चेति चकारेत्याह– **अथो इत्यादिना** ।। अथो विश्वामित्रमुखतः स्वकुलीनपरंपरासुरतरङ्गिण्यानयनप्रकारस्वकटाक्षविक्षेपा-वधिकमुनिकोपभवशापश्रवणानन्तरम् । 'ओत्' [सू.१०४] इति अथो अहल्यामिति प्रगृह्यसञ्ज्ञायां 'प्लुतप्रगृह्या' [कौ.९०] इति प्रकृतिभावः । एतेनाहल्यायाः पत्या चासन्धिं सूचयामास सूरिप्रवर इति मन्तव्यम् । यद्वा अहल्यायाः प्रकृतितो भगवद्भक्तिमत्वात् प्रकृतिभावो कामिनीत्वं सत्वरं भवतीति द्योतयितुं सप्रकृतिभावनिर्देशः । स रामः गौतमेन ऋषिणा पतिना पत्या अहल्यां तन्नाम्नीं स्त्रियं सुयोजयामास । संयुयोज संयुक्तामकरोत् । सुरेन्द्रकृतदुष्कृतिसंभवापराधस्मरणेनारुंतुदवादसराहित्य–साहित्यं संयोगस्य समसूचयत् । किमिति । मतिमान् गौतमः स्वकामिन्यै कोपेन शापमादादित्यत–स्तत्पूर्वरङ्गं सङ्गमयति– **अहल्यामित्यादिना** ।। छन्दःसमत्वादसमासेऽपि घिः । ततश्च 'आङ् न' इति नाभावः । अभिशप्तामुपलीभव पुंश्चलीति शप्ताम् । अभिना तापसशापस्य श्रीपतेरदुरापपरिहारतामभिप्रैति । कोपकारणं भणति– **इन्द्रेति** ।। इन्द्रेण देवेन्द्रेण कृताद्रचिताद्धर्षणात् बलात्कारेण सङ्गमात् । शिलीकृतां शिला न प्राक् या सा शिलात्वेन सम्पद्यमाना इति शिलीकृता ताम् । अभूततद्भावार्थकेन च्विना ललनायाः शिलीकरणकारणं तापसकोपभवः शाप इति तत्तप्ततपो विपुलमिति सूचितं भवति । तथैव योजनेनानेन मुनेः प्रयोजनं जननतस्य न तस्य कीर्तिरार्तिच्छिद इत्यतो वदति– **मानुषतामुपेतामिति** ।। मानुषाणां मनुष्याणां भावो मानुषता ताम् । 'तस्य भावस्त्वतलौ' [कौ.१७८१] इति तल् । 'मनोर्जातावञ्यतो षुक्' [कौ.११८५] इति मनुशब्दादञि षुकि ञित्वादादिवृद्धौ मानुष इति भवति । 'मनुष्या मानुषा

मर्त्या' इत्यमरः । उपेतां प्राप्ताम् । तत्र हेतुमाह– **स्वदर्शनादिति** ।। स्वस्य दर्शनं स्वदर्शनं तस्मात् । कर्तृत्वं षष्ठ्यर्थः न कर्मता । तस्या योषितो दृषदीभूताया देवावलोकनासुशकत्वात् । यथोक्तं सङ्ग्रहे [बा.का.५.२३] 'प्रैक्षत प्रेक्षणीयेन तामपाङ्गेन राघवः' इति । शिलाप्रतिमाया ललनाकारेणैव सत्त्वात् मानुषतामित्युक्त्यैव भामिनी भावो भवति लब्ध इति तथोक्तिः । केचित् 'शिलीकृतामित्यस्य निश्चेष्टत्वेन तत्प्रायतामतनुत नतु तनुः पाषाणतां प्राप' इति बभणुः । तन्न । बहुमानविरोधात् । तथा हि– 'गच्छतस्तस्य रामस्य पादाब्जेन महात्मनः । अभूत् सुरूपा वनिता समाक्रान्ता महाशिला । शापदग्धा पुरा भर्त्रा गौतमेन द्विजन्मना । अहल्या रघुनाथस्य पादस्पर्शात् शुभाऽभवत् ।।' इति पाद्मे । [उ.खं.२४२-१३४-१३६] श्रीरामायणेऽपि– [बा.का.४८-३०] 'अदृश्या सर्वभूतानां आश्रमेऽस्मिंछिला भव'[१] इति । सङ्ग्रहे च– 'उपला भव पुंश्चली' इति [बा.का.६-१९] ।

केचित्तु 'रामायणेऽहल्याशिलात्वानुक्तावपि पद्मपुराणोक्तेः न विरोधः' इति ध्येयमिति समादधुः । तत् तद्दृष्टपुस्तके श्लोकपातेन वाऽपरामर्शेन वा इति ज्ञेयम् । शचीनाथस्य कथं नरकामिनीसङ्गमरुचिः कथन्तरां स्वाधमशापतो विफलता कथंतमां स्वेच्छाचारिणो दर्शनमिति शङ्कां इन्द्रशब्दप्रयोगतो रामायणवचः संगृह्णन् पराचकार ग्रन्थकार इति ध्येयम् । तथाच रामायणे– [बा.का. ४९-२-३] 'कुर्वता तपसो विघ्नं गौतमस्य महात्मनः । क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ।। शापमोक्षेण महता तपोऽस्यापहृतं मया ।।' इति ।

अनेन मुनिः स्वयोग्यतातिरेकतपःसम्पादनेन कस्य पदमपहरतीति सन्दिहानदिविषत्सन्दोह– सन्देहोन्मूलनरूपसुरकार्यकरणच्छलेन बलभिदो लीलेयमिति सामर्थ्यं कथितं भवति । ननु निरागस्यै अङ्गनायै कथमतीतानागतवेत्रा भर्त्रा कोपाच्छापो दत्त इति अतस्तदपराधमप्यधुना अनेन वा बोधयति–

---

१. मुद्रितपुस्तकेषु 'आश्रमेऽस्मिन् शिला भव' इति पाठः नोपलभ्यते । वाल्मीकिरामायणव्याख्याने सत्यधर्मश्रीचरणाः एवमाहुः– 'अज्ञानाद्धर्षिता नाथ त्वद्रूपेण दिवौकसा । न कामकाराद्विप्रर्षे प्रसादं कर्तुमर्हसि।। [वा.रा.उ.का. ७.३०.४१] न कामकारात् त्वद्रमणेच्छया । 'यद्यपि देवराजकुतूहलात्' प्रहृष्टेनान्तरात्मना' इति वचनात् मनसा अनुमेने कामिनी महेन्द्रसङ्गमिति ज्ञायते । तथापि बहिस्तथादर्शनात् 'न कामकारात्' इत्युक्तिरिति वा, कदापि प्रमदा न भवेत्येतादृशशापोपयोगिकामकाराभावात् 'न कामकारात्' इत्युक्तिरिति ज्ञेयोऽविरोधः । ननु ''अहल्याजारत्वाद्यपि दोषकृतोऽपि ते न बहुतरो लेपः आसीदित्युत्कर्षमेव वक्ति । बहुनरकफलो ह्यसौ । 'तस्य च लोम न क्षीयते' इति श्रुत्यन्तराच्च ।'' इति गीताभाष्योक्तेः[२.२४] कथं विधिना इन्द्रस्य पदभ्रंश इव अरिपरिग्रहादिः गौतमशापनिमित्त इति कथितमिति चेन्न । पारत्रिकानन्दह्रासादिः यथा सोदरदारपरिग्रहे सुग्रीवादेः तथा नास्ति भाव्यानन्दह्रासादिः इति 'बहुनरकफलो ह्यसौ' इति वदतो भाष्यकृतो अनुमत ऐहिकोऽनर्थ इत्यविरोध इति कात्र कथन्ता ।।' इति ।

**प्रधर्षणादिन्द्रकृतादिति** ।। इन्द्रार्थं कृतात् प्रधर्षणादहल्याकर्तृकात् मानसिकात् तदनुमोदनादिरूपात् [कृतात्] । तथाच सागस्त्वात्तदपराधविदा शापो दत्त इति नानौचिती मुनेरिति भावः । एतदप्युक्तं श्रीरामायणे– [बा.का.४८-१९] 'मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन । मतिं चकार दुर्मेधा देवराजकुतूहलात् ।। अथाब्रवीत् सुरश्रेष्ठं कृतार्थेनान्तरात्मना ।।' इति ।

'मुनिरूपधरं ज्ञात्वा सहस्राक्षं तथापि सा' इति पाठान्तरम् । स्वसाक्षिसिद्धं सहस्राक्षेण जलजाक्षीधर्षणमित्यप्याह– **स्वदर्शनादिति** ।। स्वकर्तृकात् इन्द्रकर्मकाद्दर्शनादित्यर्थः । इदमप्युवाच वाल्मीकिः– [बा.का.२६-२६ ] 'अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः' इति । कथं मुनौ स्वोदवसिते वसति सति सतीं तस्य शचीशः पस्पर्शेत्यतो वाह– **स्वदर्शनादिति** ।। सु अत्यन्तं अदर्शनं स्वकर्तृकगौतमकर्मकदर्शनाभावः । तस्मात् । सुना यावत्स्वकार्यप्रयोजनं तावन्मुन्यनागमनं इति मतिः [इति] सुरपतिः तद्रतिं रतिपतिवशतः चकारेति द्योतयति । अदोऽप्यवादीत् आदिकविः 'कदाचिद्दिवसे राम ततो दूरं गते मुनौ । तस्यान्तरं विदित्वा च सहस्राक्षः शचीपतिः ।।' इति

प्रारब्धकर्मवशत एव विफलता न तु मुनिशापतः । तस्य ततोऽत्युत्तमत्वतः इति चासूचयदिन्द्रपद-प्रक्षेपेण । तथा च श्रुतिः 'तस्य लोम च न क्षीयत [मीयत]' इति । श्रीमद्गीताभाष्ये 'अहल्याजारत्वाद्यपि दोषकृतोऽपि ते न बहुतरो लेप आसीदित्याद्युत्कर्षमेव वक्ति' इति [२.२४] । मानुषतामुपेतामप्यहल्यां इन्द्रकृतात्प्रधर्षणाच्छिलीकृतामिति च अन्वयः । तेन च देवताकार्यार्थमेव मानुषयोषाश्लेषो वासवस्येति ज्ञायते ।

ननु पाद्मे 'पादाब्जेन महात्मनः । पादस्पर्शाच्छुभा' इति पादस्पर्शात् भामिनीभावावगतेः कथं स्वदर्शनादित्युदितं इति चेत् सत्यम् । तदनिषेधेन स्वदर्शनादित्युक्तः अविरोधः । रामायणे च '... यावद्रामस्य दर्शनम् । शापस्यान्तमुपागम्य तयोर्दर्शनमागता ।।' इति, सङ्ग्रहे च– 'रामावलोक–नाद्रामाऽभवत्' इति पूर्वं 'सा तद्दर्शनमात्रेण कान्ता' इत्यन्ते च दर्शनस्यैव कान्तीकरणकारणत्वोक्तेः ।

यद्वा आलिङ्गनं समग्रस्पर्शः । हस्तग्रहणमालापनं दर्शनश्चेति पादोनस्पर्शः । हस्तग्रहो दर्शनं च अर्धस्पर्शः । दर्शनं पादस्पर्श इति पादस्पर्शात् दर्शनादिति पाद्मपद्यार्थः । ननु तत्रैव 'पादाब्जेन' इति वचनात् तस्य का गतिरिति चेत् । सत्यम् । पादः चतुर्थांशस्पर्शः तत्साधनीभूतं अब्जं रूपं विषयतया तद्वत् । अर्शआद्यचि मत्वर्थीये अब्जं चक्षुः । तेन समाक्रान्ता विषयीकृता इत्यर्थोपपत्तेः । अब्जजशब्दस्य रूपवाचित्वं तु अत्र वक्ष्यते ।

अथवा 'स्वदर्शनात् मानुषतां' इत्येकं पदम् । उपेतां समीपं प्राप्तां गौतमेन संयोजयामासेत्यन्वयः । सन्ततगमनसाधनत्वात् आत् पादः स्वस्य दर्शनश्च आत् पादश्च ताभ्यां मानुषता यस्याः सा ताम् ।

अन्तर्णीतण्यन्तात् अततेः क्विप् । एवं चेत् रामायणपद्मपुराणाविरोधस्सम्भवति । यद्वा भगवदवयवानां अभेदात् दर्शनपादस्पर्शादीनां अभेदादेवमुक्तिः । 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिश्रुतेः चक्षुःकार्यस्य पादादिसम्भवसम्भवात् । यथोक्तं गीतातात्पर्ये त्रयोदशे [१४श्लो] 'सर्वतः पाणिपादम्' इति व्याख्यावसरे 'सर्वतः पाणिपादादिः यतः पाण्यादिशक्तिमान् । केशादिष्वपि सर्वत्र' इत्यादि ।

[१] अथ पतिनाभिशप्तामित्यस्य सम्भवप्रकारः । पतिनेति श्रीरामविशेषणम् । पतिश्चासौ ना चेति विग्रहः । पुरुषोत्तम इति यावत् । गौतमेन अभिशप्तां गौतमेन सुयोजयामासेत्यावृत्यास्मिन्पक्षेऽन्वयः । प्राकरणिकत्वाद्गौतमेनेत्यस्य लाभो वा । तेनेति शेषो वा । परमधार्मिक इतिवत् सामानाधिकरण्ये नृत्वावच्छिन्नत्वेन तद्वरत्त्वं पतिनेत्यस्यार्थ इति पुरुषोत्तम इति लभ्यते ।

[२] अथवा पत्या अभि सर्वथा शिलैव भव न कदापि प्रमदेति शप्ता न भवतीति पतिनाभिशप्ता ताम् । नसमासोऽसौ इति न नुट् । कुपितेन पत्या पत्न्यै विशापोऽपि दत्त इति यत्तेन नाभिशप्तेति तात्पर्यं ज्ञेयम् । तथोक्तं श्रीरामायणे [बा.का.४८.३१-३२] 'यदा त्वेतद्वनं घोरं रामो दशरथात्मजः । अगमिष्यति दुर्धर्षे तदा पूता भविष्यसि ।। मत्सकाशं मुदा युक्ता स्वं वपुर्धारयिष्यसि ।।' इति ।

[३] यद्वा पाति लोकमिति पः श्रीपती रामः तेन त् आनन्दस्तस्य इः अतिशयो यस्य स पतिस्तेनेति वा । तिः वा यस्य स इति वा । 'आनन्दं तीति वै वदेत् तीति वै वदेत् तृतीयो अतिशये इति च श्रीभगवततात्पर्ये । अत एव प्रथमे चतुर्थे तत्वप्रकाशिकायां 'अतिसहनवति सिंहशब्दः' इति वाक्यव्याख्यावसरे गुर्वर्थदीपिकायां 'अतीति तृतीयार्थः' इत्युक्तिः । एवं ऋग्भाष्यादौ बहुलमुपलम्भात् युक्ता तृतीयस्यातिशयार्थत्वोक्तिः । यद्यपि 'आतश्चोपसर्गे' इति धातोराकारान्तात्किञ्चिदुपपदसहितादेव को विहितः । नृप इत्याद्युदाहरणं च । तथापि 'पितृपनरा' [त.सं.४] इत्यादि प्रयोगात् 'पान्तीति पाश्चक्रवर्तिन' इति व्याख्यातश्च अकिञ्चिदुपपदादपि को ज्ञेयः । 'आतश्च' इति योगविभागाद्वा कः ।

[४] यद्वा नाभिरिव नृप इव स्वयुवतिविषये कर्तुमकर्तुमन्यथाकर्तुं शक्त इति नाभिः । पतिश्चासौ नाभिश्च तेन शप्तामिति । रूपाभिधाने सिद्धजनाभिवन्द्य इति व्याख्यावसरे निरूपित इति ततो ज्ञेये ।

[५] पत्या नाभि जनपुरतो न तिष्ठेति भवादृश्येति च शप्तामिति वा । इदमप्युदितं श्रीरामायणे– [बा.का. ४८-३०]'अदृश्या सर्वभूतानाम्' इति ।

[६] नभस्येमे नाभाः । गम्यत्वेन नभसम्बन्धिनः सुधान्धसः । ते सन्ति सेवकत्वेन इति नाभिः इन्द्रः । पत्या गौतमेन नाभिना इन्द्रेण सह शप्तामिति वा । न केवलं कामिन्येकैव शप्ता किन्तु कामुकेन नाकौकोधिकेन सह शप्ता इति योजना ।

[७] यद्वा नाभिना सहेत्युत्तरपदलोपी वा समासः । उक्तश्च रामायणे– [बा.का. ४८-२७] 'अकर्तव्यमिदं यस्माद्विफलस्त्वं भविष्यसि । तथा शप्त्वा च वै शक्रं भार्यामपि च शप्तवान् ।।' इति ।

सङ्ग्रहे च– [बा.का.६.१९] 'विफलः स्यादुपपतिः उपला भव पुंश्चली' इति । 'नहेर्दिवि भश्च' [उणादि.६६०] इति दिवि वाच्यायां हिंसार्थान्नहेर्धातोर्हस्य भकारे पचाद्यचि च नभमिति भवति[१] । 'नभं तु नभसा सार्धं तपं तु तपसा सह । सहं च सहसा सार्धं महं च महसा सह ।। तमेन च तमः प्रोक्तं रजेनापि रजस्समम् ।।' इति द्विरूपकोशः ।

[८] पत्या नाभिना सुरचक्रचक्रवर्तिना चेन्द्रेण सह इति वा ।

[९] पतिः उपपतिः पतिवत् वेषवानिति वा पतिः स चासौ नाभिश्च तेन सहेति वा । यथोक्तं श्रीरामायणे– 'सहस्राक्षः शचीपतिः । मुनिवेषधरो भूत्वा' 'मम वेषं समास्थाय कृतवानसि दुर्मत' इति ।

[१०] पतनं पतां गतिः तपो गतिरिति वा । अब्भावे तस्यास्तीति पती नान्तोऽयं शब्दः । अधिकतपो नाशादधःपातवानिति वा । इदश्चोवाच वाल्मीकिः 'कुर्वता तपसो विघ्नं गौतमस्य महात्मनः' इति । सङ्ग्रहे च– [बा.का.६-१८] 'अतिरिक्तं तपो हर्तुं गौतमस्याश्रमे त्विह । सुरकार्यं सुरपतिः कुर्वन् भार्यां समस्पृशत् ।।' इति ।

[११] पतो गतिः पर्वतादिकं प्रत्यस्तीति पाती 'पत गतौ' इति चौरादिकस्य रूपम् । तथाहि रामायणे । 'इममाश्रममुत्सृज्य' इत्यादि । आसम्यग्भा कान्तिरस्या अस्तीत्याभिनी । ननु न भवेदाभिनीति । 'अत इनिठनौ' [कौ.१९२२] इति तपरकरणात् ह्रस्वाकारान्तात् इनो विधानात् इति वाच्यम् । माली मायी इत्यादिवत् व्रीह्यादि इनः सम्भवात् । पतिव्रततागतकान्तिमती कामिनी सा न भवतीति नाभिनी सा च सा शप्ता च तामिति वा ।

[१२] प्राचीव न निर्भीरिति नाभिनीत्वं भामिन्याः सम्भवति । इदमपि प्रोक्तं रामायणे– [बा.का. ४९.१४-१५] 'धूमेनाभिपरीताङ्गीं दीप्तामग्निशिखामिव । सतुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव ।। मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ।।' इति ।

[१३] नाभिना मुनिदर्शनजनितभिया प्रभया रहितेनेन्द्रेण सहिततया इति वा । तत्रैवोक्तमदोऽपि । 'दृष्ट्वा सुरपतिस्त्रस्तो विषण्णवदनोऽभवत्' इति । यद्वा पतिरित्याख्यातः । पतिस्तत्करोति तथा च णिचि टिलोपे 'अच इः' [उ.सू.५८८] इति औणादिकइप्रत्यये 'णेरनिटि' इति णिलोपे च निष्पन्नोऽयं

१. अत्र हिंसार्थात् णभधातोरिति स्यात् इति भाति । रामाश्रमीयादिषु प्रथमकाण्डे तृतीयकाण्डे च 'णभ हिंसायाम्' इति धातोरेव नभशब्दव्युत्पत्तिः प्रदर्शिता ।

पतिशब्दः । पतिस्समास एव इत्यत्र अयं न गृह्यते । लाक्षणिकत्वात् । एवमेव 'सीतायाः पतये नमः' 'पतिते पतौ' 'कृष्णस्य सखिरर्जुनः' 'सखिना वानरेन्द्रेण' इति समं सम्भवतीति मन्तव्यम् । सु भदर्शनम् । लोककर्तृकस्वकामिनीकर्मकविलोकनाभावः तस्मात् ल्यब्लोपनिमित्ता इयं पञ्चमी । अदर्शनं प्रापय्य शिलीकृतामित्यर्थः । 'अदृश्या सर्वभूतानामाश्रमेऽस्मिन् शिलीभव' इति रामायणोक्तेरिति वा ।।

**मधुसूदनीया–** ।। **अथो अहल्यामिति** ।। तथोक्तम्– 'गच्छतस्तस्य रामस्य पादाब्जेन महात्मनः । अभूत् सुरूपा वनिता समाक्रान्ता महाशिला । शापदग्धा पुरा भर्त्रा गौतमेन द्विजन्मना । अहल्या रघुनाथस्य पादस्पर्शात् शुभाऽभवत् ।।' इति पाद्मे । [उ.खं.२४२-१३४-१३६] एतेन अहल्याशिलात्वस्य रामायणादौ अनुक्तत्वेऽपि न विरोध इति ध्येयम् । ननु स्वदर्शनेन मानुषतां प्रापय्य पतिसङ्घटनं इत्याद्यन्यत्रासम्भावितं सामर्थ्यं कथमस्येत्यत आह– **पतिनेति** ।। पतिः ब्रह्मरुद्रेन्द्रादिपतिः स चासौ ना च पुरुषः इत्यर्थः । उत्तमपुरुष इति यावत् । गौतमेन इत्येतदभिशप्तां सुयोजयामास इति उभयत्रापि योज्यम् । ननु बलात्कारेण इन्द्रेण गृहीतत्वात् निरपराधाया अहल्यायाः कथं मुनिः शापमदात् इति चेन्न । तथापि तदा किञ्चिदाकाङ्क्षायाः कृतत्वात् । 'मुनिरूपधरं ज्ञात्वा सहस्राक्षं तथापि सा । पतिं चकार दुर्मेधा देवराजकुतूहलात् ।।' [१.४८.१९] इत्युक्तेः ।।

प्रधर्षणादित्यनेन इन्द्रस्य कामुकत्वं प्रतीयते । तत्कथम् । अहल्यापेक्षया शच्याः अतिसुन्दरीत्वात् अहल्यायाः विप्रपत्नीत्वेन मनुष्यत्वेन च तत्सङ्गस्य अयोग्यत्वादिति चेदुच्यते । गौतमतपोह्रासाय तथा कृतत्वात् । तथाचोक्तम्– [बा.का. ४९-२-३] 'कुर्वता तपसो विघ्नं गौतमस्य महात्मनः । क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ।। शापमोक्षेण महता तपोऽस्यापहृतं मया ।।' इति । अतो न कामुकत्व-मिन्द्रस्येति भावः ।।१०।।

**वरदराजीया–** अथो सिद्धाश्रमान्निर्गमनानन्तरं पतिना गौतमेन इन्द्रकृतात् प्रधर्षणादिकृतसंस्पर्श–विशेषादभिशप्तां शापेन च शिलीकृतां स्वस्य दर्शनादेव मानुषतां मनुष्यस्वरूपतां उपेतां प्राप्तामहल्यां गौतमेन स रामः सुयोजयामास । सप्रीतिकं योगं कृतवानित्यर्थः । पतिनेत्यत्र पतिशब्दस्य सम्बन्धिशब्दत्वात्तेन सन्निधापितेनाहल्याया इत्यनेन योजनायां पतिशब्दस्य पतिना इति रूपं युक्तम् । षष्ठीयुक्तत्वात् 'षष्ठीयुक्तः छन्दसि वा' इति वा घिसञ्ज्ञा । छन्दस्त्वमस्य 'इतिहासपुराणः पञ्चमो वेदानां वेद' इति वेदत्वेन परिगृहीतेतिहासपुराणाद्यशेषसदागमार्थनिर्णायकत्वेन छन्दस्तुल्यत्वात् । छन्दोवत् पुराणानि इत्यतिदेशाच्चावगन्तव्यम् । एवमुत्तरत्रापि वैदिकप्रयोगे गतिर्ज्ञातव्या ।।१०।।

**जनार्दनीया–** अथ आश्रमान्निर्गमनानन्तरं स रामः इन्द्रेण कृतात् प्रधर्षणात् सम्पर्कात् कारणात् पतिना अभिशप्तां गौतमेन शप्तां शिलीकृतां पाषाणत्वं प्रापितां स्वदर्शनात् मानुषतां मनुष्यस्वरूपतां

उपेतां प्राप्तां अहल्यां अहल्यानाम्नीं गौतमपत्नीं गौतमेन सुयोजयामास । पतिनाभिशप्तामित्यत्र 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इत्यनेन समासाभावेऽपि घिसञ्ज्ञा । इदमेवोक्तं 'पतिः समास एव' [कौ.२५७] इत्यत्र पदमञ्जरीकारेण– ''अथ कथम् । 'नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते' ।। इति । [पराशरस्मृति] छन्दोवदृषयः कुर्वन्ति'' इति ।

केचित् 'पतिशब्दस्य सम्बन्धिशब्दत्वात् तेन सन्धिं प्रापितेन अहल्यापदेन योजनीयम् । पतिशब्दस्य षष्ठीयुक्तत्वात् । 'षष्ठीयुक्तश्छन्दसि वा' [सि.कौ.३३८९] इति वा घिसञ्ज्ञा' इत्याहुः । अत्रेदं चिन्त्यम् । 'षष्ठीयुक्तश्छन्दसि वा' इति सूत्रे श्रूयमाणे षष्ठीयोगे एव घिसञ्ज्ञा । तदिदं काशिकाकारेण 'षष्ठीयुक्तछन्दसि वा ' इति सूत्रे 'मया पत्या जरदष्टिर्यथास' इति प्रत्युदाहरणम् । अन्यथा तत्रापि अर्थद्वारा षष्ठीयोगस्य विद्यमानत्वात् 'मया पत्या' इति प्रत्युदाहरणमसङ्गतं स्यात् । छन्दस्त्वं चास्य ग्रन्थस्य 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति वेदत्वेन परिगृहीतेतिहासपुराणाद्यशेषसदागमार्थ-निर्णायकत्वेन छन्दस्तुल्यात्वात् सिद्धम् ।।१०।।

**चट्टी–** अथो निर्गमनन्तरं सः रामः इन्द्रेण कृतात् प्रधर्षणात् सम्पर्कात् निमित्तात् पतिना गौतमेनाभिशप्तामत एव शिलीकृतां पाषाणत्वं प्रापितां स्वदर्शनात् मानुषतां मनुष्यस्वरूपतामुपेतां प्राप्तामहल्यानाम्नीं गौतमपत्नीं गौतमेन सुयोजयामास । सप्रीतिकं योगं कृतवानित्यर्थः । अत्र पत्येति भवितव्यम् । पतिनेति कथमिति शङ्का प्रयोगानुसारेण छान्दस इति परिहर्तव्या । उक्तं च विज्ञानेश्वरेण– 'तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः । क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश ।।' इति 'छन्दोवच्छास्त्राणि भवन्ति' इति वचनात् स्वग्रन्थस्य छन्दस्समानत्वद्योतनाय पतिनेत्युक्तम् ।

यद्वा अथो अहल्यामित्यत्र सन्धिरार्षः । इन्द्रप्रधर्षणादित्यनेन इन्द्रस्य कामुकत्वं प्रतीयते । तत्कथम् । अहल्यापेक्षया शच्या अतिसुन्दरित्वादहल्यायाः विप्रपत्नीत्वेन मनुष्यत्वेन च तत्सङ्गस्यायोग्यत्वादिति चेदुच्यते । गौतमतपोह्रासाय तथा कृतत्वादिति । तथा– [बा.का. ४९-२-३] 'कुर्वता तपसो विघ्नं गौतमस्य महात्मनः । क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ।। शापमोक्षेण महता तपोऽस्यापहृतं मया ।।' इति । अतो न कामुकत्वं इन्द्रस्येति भावः । तत्रैव– 'अष्टकासु च वृद्धौ च गयायां च मृतेऽहनि । मातृश्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ।।' इति सन्धिरार्षः । ननु स्वदर्शनेन मानुषत्वं प्रापय्य पतिसङ्घटनं इत्याद्यन्यत्रासम्भावितं सामर्थ्यं कथमस्येत्यत आह– **पतिनेति** ।। श्रीरामविशेषणं वा । पतिः ब्रह्मरुद्रेन्द्रादिपतिः स चासौ ना च पुरुष इत्यर्थः । उत्तमपुरुष इति यावत् । ननु बल...* पतिनाभिशप्तामित्यत्र सर्वे विधयः छन्दसि विकल्प्यन्ते इत्यनेन समासाभावेऽपि घिसञ्ज्ञा । इदमेवोक्तं 'पतिः समास एव' [कौ.२५७] इत्यत्र पदमञ्जरीकारेण– 'अथ कथम् । 'नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ।।' इति । 'छन्दोवदृषयः कुर्वन्ति' इति ।

केचित् 'पतिशब्दस्य सम्बन्धिशब्दत्वात् तेन सन्धिं प्रापितेन अहल्यापदेन योजनीयम् । पतिशब्दस्य षष्ठीयुक्तत्वात् । 'षष्ठीयुक्तश्छन्दसि वा' [कौ.३३८९] इति वा घिसञ्ज्ञा' इत्याहुः । अत्रेदं चिन्त्यम् । 'षष्ठीयुक्तश्छन्दसि वा' इति सूत्रे श्रूयमाणे षष्ठीयोगे एव घिसञ्ज्ञा । तदिदं काशिकाकारेण 'षष्ठीयुक्तछन्दसि वा' इति सूत्रे 'मया पत्या जरदष्टिर्यथास' इति प्रत्युदाहरणम् । अन्यथा तत्रापि अर्थद्वारा षष्ठीयोगस्य विद्यमानत्वात् 'मया पत्या' इति प्रत्युदाहरणमसङ्गतं स्यात् । छन्दस्त्वं चास्य ग्रन्थस्य 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति वेदत्वेन परिगृहीतेतिहासपुराणाद्यशेषसदागमार्थनिर्णायकत्वेन छन्दस्तुल्यात्वात् सिद्धम् ।।१०।।

**अनन्तभट्टीया–** इन्द्रकृतात्प्रधर्षणान्निमित्तात् पतिनाभिशप्तां शिलारूपा भवेति शप्ताम् । छन्दोवत्कार्याणि भवन्तीति वचनात् स्वग्रन्थस्य छन्दःसमानताद्योतनाय पतिनेत्युक्तम् । पतिशब्दस्य साकाङ्क्षत्वात् स्वस्याः पतिनेति वक्तव्यम् । एवञ्च षष्ठीयुक्तश्छन्दसि इति सूत्रात् पतिनेति साधुः । अत एव शिलीकृतां सुरेशकाङ्क्षया...* ।।१०।।

**ताम्रपर्णीया–** प्रधर्षणाच्छप्तां अत एव शिलीकृताम् । स्वदर्शनादिति हरिकृपावलोकविषयत्वात् । अहल्यायाः मुनेरन्तरङ्गप्रीतिस्तस्यामभूदिति भावेन सुयोजयामासेत्युक्तम् ।।१०।।

**भारतश्री–** ।। पतिनाभिशप्ताम् ।। अत्र केचन 'पतिनाभिः पतिश्रेष्ठ' इति व्याचक्षते । 'पतिना पतिश्चासौ ना पुरुषश्चेति पतिना राम इति' इति केचित् । वस्तुतस्तु पतिना इति तृतीयान्तं पदम् । उपपत्तिस्तु– 'षष्ठीयुक्तश्छन्दसि वा' [कौ.३३८९] इति वैकल्पिकघिसञ्ज्ञेति समाधानमुक्तम् । तच्चिन्त्यम् । श्रूयमाणषष्ठ्या युक्तत्वं वा यथाकथञ्चित् षष्ठ्या युक्तत्वं वा । नाद्यः प्रकृते तदभावात् । न द्वितीयः । वृत्तौ 'मया पत्या जरदष्टिः यथा सः' [ऋ.१०.८५.३६] इति प्रत्युदाहरणमसङ्गतं स्यात् । यत्तु समाधानान्तरं 'बहुलं छन्दसि' इति घिसञ्ज्ञामाश्रित्य कृतम् । तदपि शोधनीयम् । बाहुलाकाश्रयणस्य च छान्दसत्वस्य अगतिकागतिकत्वात् । वयं तु– पतिना इति तृतीयान्तमेकं पदम् । उपपत्तिस्तु पतिरित्यास्याते णिच्[पतिरित्यस्मात् णिच् इति स्यात्] । णिजन्तात् अर्शाद्यच् ततः [इचिति] औणादिकसूत्रेण इप्रत्ययः । तेन पतिशब्दस्य लाक्षणिकत्वात् 'पतिः समास एव' [कौ.२५७] इति सूत्रे न ग्रहणम् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् । न तु लाक्षणिकस्येति न्यायात् । आर्षप्रयोगादिना भविष्यति ।।१०।।

**भावचन्द्रिका–** ।। **स्वेति** ।। 'अहल्या रघुनाथस्य पादस्पर्शात् शुभाऽभवत् ।' इति पाद्मे ।।१०-१३।।

**भावविवृतिः–** अथो अहल्यां पतिनाभिशप्तां इत्यत्र पतिश्चासौ नाच पतिना परमपुरुषोत्तमः । गौतमेनेत्यस्यावृत्तिः । गौतमेनाभिशप्तां गौतमेन सुयोजयामासेति । शिलीकृतामित्यस्य

शिलावत्कृतामित्यर्थः । नतु शिलात्वं प्राप्तामिति । 'जडीकृतस्तेन स रावणोऽपि' इत्यत्र जडवत्कृत इत्युक्तत्वात् । 'मानुषतामवाप' इत्यत्रापि मानुषत्वं प्राप्तां इति नार्थः । किन्तु 'मनु अवबोधने' इति धातोः सञ्ज्ञावत्वं प्राप्तामित्यर्थः । एवं सति ऋषित्वजातिविशिष्टेन गौतमेन संयोजनासम्भवात् । तस्या मानुषदेहप्राप्तौ कारणानुक्तेश्च । 'इति जातिकृतो भेद' इति 'देवऋषिपितृपनरा इति मुक्तास्तु पञ्चधा' [त.सं] इत्यादेः ।।१०-१७।।

**अतिविशद–** अथोऽहल्यां पतिनाभिशप्तामित्यत्र पतिश्चासौ नाभिश्चेति समासः नतु पतीनां नाभिरिति तस्य सर्वपत्त्युत्तमत्वाभावादेव द्रौपद्या इव अहल्याया अनेकपतित्वाभावाच्च बाधितम् । ननु पतित्वेनैवोत्तमत्वप्राप्त्या पुनर्नाभिशब्दो व्यर्थ इति चेत् यः पतिः स उत्तम इति व्याप्त्यभावात् । मुद्गलादेरुत्तमपतित्वश्रवणात् । तद्वदत्र माभूदिति नाभिशब्दः सार्थक इति भावः । अथवा नाभिराधार इत्यर्थः । नाभिशब्दस्याधारार्थत्वं तु 'तद्विश्वनाभिं त्वभिपद्य' इत्यत्र 'विश्वनाभिः विश्वाधार' इति भाष्यकृतैव व्याख्याततत्वाद्द्रष्टव्यम् । त्यक्तभार्य अनाधारो भवति नायं तथा इति नाभिरित्युक्तम् । अथवा पतिश्चासौ नाचेति समासः । तदर्थस्तु पतिर्भर्ता ना पुरुषः । शिखण्ड्यादिव्यावृत्त्यर्थं तस्य सार्थक्यं बोध्यम् । तेन इति शेषः । अथवा अभितः शप्ता न भवति इति नाभिशप्ता । पत्या नाभिशप्ता पतिनाभिशप्ता ताम् । नगनाकादिशब्दवत् । अथवा पतिश्चासौ ना चेति । तदर्थस्तु पतिः स्वामी ना परमपुरुष इति । अक्षरयोजना पतिना स रामः इन्द्रकृतात् प्रधर्षणात् गौतमेन अभिशप्तां शप्तत्वादेव शिलीकृतां स्वदर्शनान्मानुषतामुपेतां सुयोजयामासेति । सु इत्यनेनैव सर्वस्योपपत्तेः नावृत्त्यादीति भावः । अथवा पतिः स्वामी ना परमपुरुषो यस्याः सा पतिना । ऋकारान्तस्त्रीलिङ्गोऽयं शब्दः । समनेतिवत् । ततश्चैवं अक्षरयोजना सः गौतमेनाभिशप्तां नारीं विधाय सुयोजयामास । तया अर्चितः प्रययौ चेति श्लोकद्वयस्य एकान्वयः । किं कुर्वन् स्वभक्तेरधिकं बलं प्रकाशयन् त्रिदशेष्वतुल्यं अनुग्रहश्च । कथम्भूतां अनन्यभक्ताम् । अनन्यभक्तत्वे हेतुः– **पतिनेति** ।। यस्मात्पतिना तस्मादनन्यभक्तेत्युक्तं भवति । यद्यप्यत्र द्वितीयान्तं प्रकृतमपि अर्थात् प्रथमान्तं सम्बध्यते । स इति प्रथमान्तं प्रकृतमपि अर्थात् सप्तम्यन्तं सम्बध्यत इतिवत् । सप्तसु प्रथमा षट्सु द्विताया वा । पुनः किम्भूतां शिलीकृताम् । पुनः कीदृशां स्वदर्शनान्मानुषतामुपेतामिति । सुरेशकाङ्क्षयेत्यत्र त्रिदशेष्वतुल्यानुग्रहप्रदर्शनं हेतुः । अनन्यभक्तत्वेन नारीविधाने स्वभक्तेः बलप्रदर्शनं हेतुरित्युक्तं भवति । 'अहल्या रघुनाथस्य पादस्पर्शाच्छुभाऽभवत्' इति पद्मपुराणे पादस्पर्शेन शिलात्वमोचनं प्रतीयते । अत्र स्वदर्शनादिति दर्शनेन अतो विरोध इति चेन्न । 'उत्तमानां स्वरूपं तु पादशब्देन भण्यते' इति वचनात् पादशब्दः स्वरूपपरः । अथवा 'उत्तमानां हि पादेन सर्वरूपं हि कथ्यते' [छा.भा.५.वैश्वानरविद्या] इति बृहद्भाष्यवचनाच्च स्वस्य स्वतन्त्रस्य भगवतः दर्शनादित्युक्तं भवति ।

'मुनिरूपधरं ज्ञात्वा सहस्राक्षं तथाऽपि सा । मतिं चकार दुर्मेधा देवराजकुतूहलात् ।।' इति वाक्येन बुद्धिपूर्वकं अहल्याया इन्द्ररमणं प्रतीयते अतः एतस्याः कथमनन्यभक्तत्वमित्यतः प्रधर्षणादित्युक्तम् । ज्ञाताया अपि बलात्कारेण धर्षणात् अनन्यभक्तत्वमुपपन्नमिति भावः ।।१०-११।।

**प्रमाणसङ्ग्रह–** अथो अहल्यामित्यत्र ननु निरपराधाया अहल्याया कथं मुनिः शापमदात् इति शङ्का 'मुनिरूपधरं ज्ञात्वा सहस्राक्षं तथापि सा । पतिं चकार दुर्मेधा देवराजकुतूहलात् ।।' इति वाक्येन परिहर्तव्या । प्रधर्षणादिन्द्रकृतामित्यत्र नेन्द्रस्य कामुकत्वं मन्तव्यम् । तदुक्तम्– 'कुर्वता तपसो विघ्नं गौतमस्य महात्मनः । क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ।। शापमोक्षेण महता तपोऽस्यापहृतं मया ।।' इति । इन्द्रस्य इन्द्रजिद्धस्तप्राप्तौ किं कारणमिति शङ्कायां गौतमस्य शाप एव इत्युत्तरम् । 'यस्मान्मे धर्षिता पत्नी त्वया वासव निर्भय । तस्मात्त्वं समरे राजन् शत्रुहस्तं गमिष्यसि ।।' इति रामायणे ।।१०।।

**गूढवाक्यार्थ–** प्रधर्षणा...* सामत एव शिलीकृताम् ।।१०।।

**बलं स्वभक्तेरधिकं प्रकाशयन्ननुग्रहं च त्रिदशेष्वतुल्यम् ।**
**अनन्यभक्तां च सुरेशकाङ्क्षया विधाय नारीं प्रययौ तयार्चितः ।।११।।**

**व्यासतीर्थीया–** किमर्थं योजितवान् इत्यत आह– **बलमिति** ।। नारीं विधाय पत्या योजयित्वा च ।

**वेदाङ्गतीर्थीया–** तां शिलीकृतां अहल्यां [नारीं विधाय] ।।११-१२।।

**वादिराजीया–** त्रिदशेषु स्वभक्तेरधिकं बलमतुल्यमनुग्रहं स्वानुग्रहं च प्रकाशयन् सुरेशकाङ्क्षया नारीं विधायेति योजना । ईषदहल्याभक्तिरपि नारीकरणे हेतुरिति सूचनायानन्यभक्तां चेत्युक्तम् । यद्यपीन्द्रस्यापरोक्षज्ञानित्वेन 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेषात्' इति सूत्रादहल्यागमनेऽपि न दोषलेपः । अहल्यायाः स्वोच्चदारत्वाभावात् । पापलेपे विशेषकारणं च नास्ति । नापि शिलावधूकरण-मात्रेण प्रागिन्द्रकृताहल्यागमनदोषपरिहारः । न हि नार्या प्रायश्चित्ते गृहीते जारस्यापीह दोषपरिहारो दृष्टः । तथाऽपि निर्निमित्तं वैष्णवशिलीकरणमूलत्वेन प्राप्तवैष्णवद्रोहाख्यपापस्य 'तद्भक्तद्वेष एव च' इति वचनात् हरिद्वेष एव पर्यवसानात् ज्ञानिन्यपि सुरेशे तल्लेपः स्यादेव । यथा महतो दुर्वाससः स्वावरनिरपराध्यम्बरीषद्रोहजपापलेपः । स्वनिमित्तशिलीभावमोचनासामर्थ्येनापयशश्च सुरेशस्याभूत् । तदुभयमार्जनाय नारीकरणमिति भावेनोक्तम्– **सुरेशकाङ्क्षयेति** ।। सुरेशपापयशःपरिहारकाङ्क्षयेत्यर्थः । मध्यमपदलोपी समासः । अत एव 'इन्द्रकृतात् प्रधर्षणाच्छिलीकृताम्' इति प्रागुक्तमाचार्यैः ।।११।।

**सत्यधर्मीया–** अगणितगुणगणस्यानितरापेक्षस्य लक्ष्म्यध्यक्षस्य प्रसादासादननिदानं ज्ञानद्वाराभक्तिरिति वक्तुं सुरपरिवारतुराषाट्भक्तिनिघ्नतयेव अहल्याभक्त्या चाङ्कुरितकरुणस्य तत्तरुणीकरणमहिमानमाह– **बलमिति** ।। राम इति शेषः । नारी । नरस्य मनुष्यस्येयं इति नारी तां रामाम् । 'नृनरयोः वृद्धिश्च' इति गणसूत्राद्वृद्धिः । 'नारी सीमन्तिनी' इत्यमरः । शार्ङ्गरवादित्वेन ङीन् । विधाय कृत्वा । स्वदर्शनादिति शेषः । उपलक्षणया पादस्पर्शादिरपि ग्रहः । 'पादस्पर्शाच्छुभाभवत्' इत्युक्तेः । तया अहल्यया । गौतमेन सह च इति शेषः । अर्चितः । पाद्यार्घ्यातिथ्यादिना पूजितः सन् प्रययौ जगाम । विदेहान् इति शेषः । यथोक्तं रामायणे [वा.का.४९-१८] 'पाद्यमर्घ्यं तथाऽऽतिथ्यं चकार सुसमाहिता' इति । 'गौतमो हि महातेजाः भार्यया सहितः सुखी । सम्पूज्य विधिवद् रामम्... ।।' इति । [बा.का. ४९-२१] सङ्ग्रहे च– [बा.का.६-२५] 'उदारचरितं रामं सदारः पर्यपूजयत् । गौतमो भक्तिभरित... ।।' इति ।

नारीकरणकारणं भणति– **बलमिति** ।। स्वभक्तेः स्वस्मिन्भक्तिस्तस्याः वलं सामर्थ्यम् । स्वस्मिन् स्वविषये । भक्तिस्तु 'निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकः स्वात्मात्मीयसमस्तवस्तुभ्यो अनेकगुणाधिकः अन्तरायसहस्रेणाप्यप्रतिवद्धनिरन्तरप्रेमप्रवाहः' इति सुधोदिता [पुट.२४४] । 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तः... ।।' इति स्मृतेश्च । अधिकं अतिशयवत् । अध्यारूढशब्दात्कन्युत्तरपदलोपे चाधिकमिति भवति । शिलामप्यवलां कलयितुमलं वलं प्रकाशयन् लोके ख्यापयन् । भक्तिबलाधिक्यप्रकाशनं मुनिकामिनीभामिनीकरणकारणमिति हेतुहेतुमद्भावः । न केवलमेकमेव निमित्तं किन्नाम व्योमधामोद्दामानुग्रहादित्याह– **अनुग्रहश्चेति** ।। चः समुच्चये । त्रिदशेषु त्रिरावृत्ता दशा त्रिदशाः । 'सङ्ख्याव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येयैः' [कौ.८४३] इति समासः । 'बहुव्रीहौ सङ्ख्ये' [कौ.८५१] इति डच् । अकारान्तस्त्रिदशशब्द इति बोध्यम् । यद्वा त्रिः तृतीया दशा यौवनाख्या येषामिति विग्रहः । त्रिशब्दस्य तृतीयार्थकत्वं त्रिभाग इतिवद् ज्ञेयम् । सदा त्रिंशद्वर्षवयस्विषु । अनेन बाल्यवार्धकादौ शारीरसारनिःसरणेन साधनन्यौन्येन हरिकरुणाविधुरताशङ्का विधुतेति ध्येयम् । इदानीं रामो अनुग्रहकर्ता अन्यदान्य इति मन्दसन्देहमपि पराचष्टे– **त्रिदशेष्विति** ।। त्रीन् श्वेतद्वीपानन्तासनवैकुण्ठान् ददाति सद्म इति स तथा तेन ईशेन शं सुखं मौक्तं भौमं दिव्यं येषां तेऽनिमिषास्तेषु । हरिर्हर्ता कर्ताऽपरः धर्ता इतर इति चेन्न तत्र नतत्रे निरतिशयितभक्तिर्युक्तेत्यतो वा वक्ति– **त्रिदशेष्विति** ।। त्रीन् उदयनियमाप्ययान् । तिस्रः सृष्टिस्थितिसंहृतीर्वा ददाति सर्वेभ्यो यथा सम्भवमिति त्रिदः तेन शं उत्पादनस्थापनलिङ्गभङ्गानन्तरभावि सुखं येषामिति तेषु । यद्वा सत्वादिगुणत्रयभङ्गपूर्वकं तोषदाता सर्वेषामेष एवेति भाषते– **त्रिदशेष्विति** ।। त्रीन् सत्वादीन् गुणान् घ्नति खण्डयति इति त्रिदः । अथवा त्रीनाध्यात्मिकादितापान् वा द्यतीति स तथा । शमिति पूर्ववत् ।

'दो अवखण्डन' इति धातुव्याख्यानात् । तुलया सम्मितं परिछिन्नमित्यर्थे 'नौवयोधर्म' [कौ.१६४३] इत्यादिना यत् असञ्ज्ञायां ततश्च तुल्यमिति सदृशमात्रे प्रयोगः सम्भवतीति ज्ञेयम् । 'वृतुलैरप्यतुलैः' इत्यादिप्रयोगात् । न विद्यते तुल्यो यस्य सोऽतुल्यस्तादृशमसदृशमनुग्रहं कृपाम् । त्रिदशेषु । अहल्या वागाद्यभिमानयुक्ततत्वदेवेषु वा । तापसशापतो निर्व्यापारीकृतेषु । अतुल्यमनुग्रहं स्वस्तवनादि-योग्यतारूपत्वेन निरुपममनुग्रहं प्रकाशयन् । अयमपि युवतीकरणे हेतुः । अपरमपि हेतुमाह– **सुरेशकाङ्क्षयेति** ।। सुराणां देवानामीशः इन्द्रः तस्य काङ्क्षया । चित्तजायत्तचित्तात् मत्तो निमित्तात् मत्तकाशिन्यै दत्तो मुनिसत्तमेन शापस्ततो अस्याः प्रस्तरभावापगमोपगमनसाधनं रामागमः कदा भविष्यतीति परीक्षाकृतः सहस्राक्षस्य इच्छया हेतुना च । सुरवरावरजो दशरथतनय इति तच्चिन्तितविरचनमुचितमच्युतस्येति भावः । यद्वक्ष्यति 'सहस्रनेत्रावरजं गविष्ठम्' इति । यद्वा सुरेशे देवेन्द्रे काङ्क्षा तद्विषयेच्छा । ललनोपगतोपलतोपयातापयशोविशोधनं अधुना तनोमीति सौवेच्छया । यथोक्तं सङ्ग्रहे [बा.का.६-२२] 'महेन्द्रस्य मनश्शल्यं त्वद्भक्तस्य समुद्धर' इति । न सुरसुत्रामादि-मात्रानुग्रहहेतुतः उपलाबलीकरणं किन्नाम इयं कामिन्यपि स्वमात्रभक्तेति वक्ति– **अनन्यभक्तामिति** ।। अन्यस्य स्वेतरस्य सुरस्य नरस्य वा भक्ता अन्यभक्ता सा न भवतीत्यनन्यभक्ता । सर्वस्वामी मम स्वामी च रामो नान्यो मान्योऽस्तीत्युपासनापराम् ।

'यादृशी मयि भक्तिः स्यात्तादृश्यन्यत्र नैव चेत् । अनन्यभक्तिरुद्रेकात् सा ययैव तरेत्सृतिम् ।।' [भा.ता.३.२६.२२] इति भगवद्वचनादनन्यभक्तिशब्दार्थो बोध्यः । अन्यः अननं अनं भावेऽपि । अनं अर्हति परकृतचेष्टाकर्मीभूतो नियम्य इति यावत्? । अन्येन अन्यो न भवतीत्यनन्यः सर्वस्वतन्त्रः तस्य स्वस्य भक्तामिति वा । अनं प्राणम् । प्रेर्येषु कार्येषु नयति प्रेरयतीत्यननीः स चासावश्च भगवाननन्यः हरिस्तस्य भक्तामिति वा । अनेन तनुचलनादेः पवनतनुहेतुकत्वेन स वायुर्भगवदायत्त इति माहात्म्यज्ञानवती युवतीति सूचितं भवति । 'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः' इति स्मृतेः । बलमित्यादिना च भक्तेर्बलाधिक्यप्रकाशनं तथा त्रिदशासदृशकृपाप्रकटनं सुरेशकाङ्क्षा अस्या अनन्यभक्तता चेति पाषाणयोषाकरणे कारणचतुष्टयमुक्तं वेदितव्यम् । अथवा पाषाणतापगमेन योषित्करणपूर्वकं अन्नादिभोजनयोजकोऽजको अन्यो[१] [जितात्वात्तस्त्वमे तत्वतस्तथाविधः] इत्यभिधत्ते– **अनन्यभक्तामिति** ।। अन्येनेतरेण भक्तं अन्नं यस्याः सा अन्यभक्ता सा न इत्यनन्यभक्ता ताम् । तथा च श्रीरामायणे– [बा.का.४८-३१-३२] 'वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी । यदा त्वेतद्वनं घोरं रामो दशरथात्मजः ।। आगमिष्यति दुर्धर्षे तदा पूता भविष्यसि ।।' इति ।

---

१. मूलकोशेषु अस्पष्टमिदं वाक्यम् ।

गौतमेन स्वरामाया रामसमीक्षणावधिकनिराहारोक्तेः । 'अन्धो भक्तं तथैवान्नम्' इति रत्नकोशः । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरश्च । 'काक्षि वाक्षि काङ्क्षायाम्' इत्यतो 'गुरोश्चहल' इत्यकार इदितनुम आकाङ्क्षेति भवति । 'इच्छाकाङ्क्षास्पृहेहा स्यात्' इत्यमरः । यद्वा द्वयोरप्यखण्डोऽन्वयः । ततश्चैवं योजना । अहल्यां तन्नाम्नीं नारीं स्त्रियं पतिनेन्द्रकृतात् प्रधर्षणाच्छिलीकृतां स्वभक्तेर्बलमधिकं प्रकाशयन् । त्रिदशेषु अतुल्यमनुग्रहं च प्रकाशयन् सुरेशकाङ्क्षया अनन्यभक्तां च यां मानुषतामुपेतां स्वदर्शनाद्विधाय गौतमेन पत्या सुयोजयामास तया सह गौतमेन चार्चितः सन् प्रययाविति । अन्यथा प्राचि मानुषतामुपेतां गौतमेन सुयोजयामासेति भाषणेनैव भामनीभावभावनानन्तरं भर्तृसंगमनरूप-कार्यस्यावगतेः पुनर्नारीविधायेति पुनरुक्तिः स्यात् । सुरेशकाङ्क्षयेति शिलीकृतामित्यनेनाप्यन्वेति । सुरेश इन्द्रः काङ्क्षा इच्छा । अहल्यायाः स्वसम्भोगकर्तृत्वेन जम्भोत्तम्भनापेक्षा तया हेतुना शिलीकृतामिति तदर्थः । अनेनानेनस्यै अहल्यायै नादाच्छापमपि तुराषाडपेक्षारूपापराधं बुध्वैव कोपेनादात्तापस इति शापहेतुः सुनिरूप इति सूचितमिति मन्तव्यम् । उत्तरपद्ये चास्मिन्नारीकरणकारणस्य निरीक्षणादेरभणनाच्च । अथवा पृथक्पृथगेवान्वयः । नारीं विधायेति न योषां [नदोषां] विधायेत्यर्थः । किंनाम अराः स्वोत्तम-सुरसत्तमापराधोत्पन्नदोषाः ते न सन्ति रघूरुकरुणातो यस्मिन् स नारो गौतमः तस्येयं नारी । यद्वा परपुरुषसंसर्गाङ्गनाङ्गसङ्गजन्यः अरो दोषस्तद्वान्न भवतीति नारस्येयमिति वा । नारं पुण्यं तस्येयं स्मरणमात्रेण पापापहरणकारणपुण्यवतीमिति यावत् । नारशब्दात्सम्बन्धसामान्ये पुनरपि नारीति भवति ।

'अहल्या द्रौपदी सीता तारा मण्डोदरी तथा । पञ्चकन्या स्मरेन्नित्यं महापातकनाशनम् ॥' इति स्मृतेः । नारो मुनिर्वा तस्येयं ताम् । पुरुषोत्तमप्रसादादिव पत्युः प्रसादाच्च अन्धन्तमसपातनेन नानायातनानु- भावककर्मकृतावपि तत्पापलेपो नास्ति प्रत्युत पुण्यवत्याः कन्याया यस्याः स्मरणं पातकघातकं तादृशी वा ॥११॥

**मधुसूदनीया–** ॥ **अनन्यभक्तामिति** ॥ यादृशी मयि भक्तिः स्यात् तादृश्यन्यत्र नैव चेत् । अनन्यभक्तिरुद्रेकात् सा यथैव तरेत् सृतिम् ॥' इति वचनात् अनन्यभक्तिशब्दार्थो ज्ञातव्यः ॥ **सुरेशकाङ्क्ष्येति** ॥ सुरेशस्य देवेन्द्रस्य काङ्क्षया 'इयं अहल्या मदर्थं शिलात्वं प्राप्ता ततोऽस्याः शिलात्वापगमः कदा स्यात् शीघ्रमेव नारी भवतु' इत्यादिकाङ्क्षयेत्यर्थः । 'महेन्द्रस्य मनःशल्यं त्वद्भक्तस्य समुद्धर' इति विश्वामित्रवाक्यात् तथा । त्रिदशेषु त्रिरावृत्ताः दशाः एषां ते त्रिदशाः । सदा त्रिंशद्वर्षा इत्यर्थः । तेषु ॥११॥

**वरदराजीया–** ननु स्वापराधेन शिलीभूतां किमिति मानुषतां प्रापयामासेत्यत आह– **बलमिति** ॥ शिलाभूतायाः नारीत्वविधाने हेतुद्वयम्– **अनन्यभक्तां सुरेशकाङ्क्षया चेति** ॥ अहल्याया अनन्यभक्तत्वादित्यर्थः । तथा एतस्याः शिलीभावापगमेन अहल्यात्वप्रापणस्य सुरेशकाङ्क्षाविषयत्वात्

'दो अवखण्डन' इति धातुव्याख्यानात् । तुलया सम्मितं परिछिन्नमित्यर्थे 'नौवयोधर्म' [कौ.१६४३] इत्यादिना यत् असञ्ज्ञायां ततश्च तुल्यमिति सदृशमात्रे प्रयोगः सम्भवतीति ज्ञेयम् । 'वृतुलैरप्यतुलैः' इत्यादिप्रयोगात् । न विद्यते तुल्यो यस्य सोऽतुल्यस्तादृशमसदृशमनुग्रहं कृपाम् । त्रिदशेषु । अहल्या वागाद्यभिमानयुक्ततत्वदेवेषु वा । तापसशापतो निर्व्यापारीकृतेषु । अतुल्यमनुग्रहं स्वस्तवनादि-योग्यतारूपत्वेन निरुपममनुग्रहं प्रकाशयन् । अयमपि युवतीकरणे हेतुः । अपरमपि हेतुमाह– **सुरेशकाङ्क्षयेति** ।। सुराणां देवानामीशः इन्द्रः तस्य काङ्क्षया । चित्तजायत्तचित्तात् मत्तो निमित्तात् मत्तकाशिन्यै दत्तो मुनिसत्तमेन शापस्ततो अस्याः प्रस्तरभावापगमोपगमनसाधनं रामागमः कदा भविष्यतीति परीक्षाकृतः सहस्राक्षस्य इच्छया हेतुना च । सुरवरावरजो दशरथतनय इति तच्चिन्तितविरचनमुचितमच्युतस्येति भावः । यद्वक्ष्यति 'सहस्रनेत्रावरजं गविष्ठम्' इति । यद्वा सुरेशे देवेन्द्रे काङ्क्षा तद्विषयेच्छा । ललनोपगतोपलतोपयातापयशोविशोधनं अधुना तनोमीति सौवेच्छया । यथोक्तं सङ्ग्रहे [बा.का.६-२२] 'महेन्द्रस्य मनश्शल्यं त्वद्भक्तस्य समुद्धर' इति । न सुरसुत्रामादि-मात्रानुग्रहहेतुतः उपलाबलीकरणं किन्नाम इयं कामिन्यपि स्वमात्रभक्तेति वक्ति– **अनन्यभक्तामिति** ।। अन्यस्य स्वेतरस्य सुरस्य नरस्य वा भक्ता अन्यभक्ता सा न भवतीत्यनन्यभक्ता । सर्वस्वामी मम स्वामी च रामो नान्यो मान्योऽस्तीत्युपासनापराम् ।

'यादृशी मयि भक्तिः स्यात्तादृश्यन्यत्र नैव चेत् । अनन्यभक्तिरुद्रेकात् सा ययैव तरेत्सृतिम् ।।' [भा.ता.३.२६.२२] इति भगवद्वचनादनन्यभक्तिशब्दार्थो बोध्यः । अन्यः अननं अनं भावेऽपि । अनं अर्हति परकृतचेष्टाकर्मीभूतो नियम्य इति यावत्? । अन्येन अन्यो न भवतीत्यनन्यः सर्वस्वतन्त्रः तस्य स्वस्य भक्तामिति वा । अनं प्राणम् । प्रेर्येषु कार्येषु नयति प्रेरयतीत्यननीः स चासावश्च भगवाननन्यः हरिस्तस्य भक्तामिति वा । अनेन तनुचलनादेः पवनतनुहेतुकत्वेन स वायुर्भगवदायत्त इति माहात्म्यज्ञानवती युवतीति सूचितं भवति । 'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः' इति स्मृतेः । वलमित्यादिना च भक्तेर्बलाधिक्यप्रकाशनं तथा त्रिदशासदृशकृपाप्रकटनं सुरेशकाङ्क्षा अस्या अनन्यभक्तता चेति पाषाणयोषाकरणे कारणचतुष्टयमुक्तं वेदितव्यम् । अथवा पाषाणतापगमेन योषित्करणपूर्वकं अन्नादिभोजनयोजकोऽजको अन्यो[१] [जितात्वात्तस्त्वमे तत्वतस्तथाविधः] इत्यभिधत्ते– **अनन्यभक्तामिति** ।। अन्येनेतरेण भक्तं अन्नं यस्याः सा अन्यभक्ता सा न इत्यनन्यभक्ता ताम् । तथा च श्रीरामायणे– [बा.का.४८-३१-३२] 'वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी । यदा त्वेतद्वनं घोरं रामो दशरथात्मजः ।। आगमिष्यति दुर्धर्षे तदा पूता भविष्यसि ।।' इति ।

---

१. मूलकोशेषु अस्पष्टमिदं वाक्यम् ।

गौतमेन स्वरामाया रामसमीक्षणावधिकनिराहारोक्तेः । 'अन्धो भक्तं तथैवान्नम्' इति रत्नकोशः । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरश्च । 'काक्षि वाक्षि काङ्क्षायाम्' इत्यतो 'गुरोश्चहल' इत्यकार इदितनुम आकाङ्क्षेति भवति । 'इच्छाकाङ्क्षास्पृहेहा स्यात्' इत्यमरः । यद्वा द्वयोरप्यखण्डोऽन्वयः । ततश्चैवं योजना । अहल्यां तन्नाम्नीं नारीं स्त्रियं पतिनेन्द्रकृतात् प्रधर्षणाच्छिलीकृतां स्वभक्तेर्बलमधिकं प्रकाशयन् । त्रिदशेषु अतुल्यमनुग्रहं च प्रकाशयन् सुरेशकाङ्क्षया अनन्यभक्तां च यां मानुषतामुपेतां स्वदर्शनाद्विधाय गौतमेन पत्या सुयोजयामास तया सह गौतमेन चार्चितः सन् प्रययाविति । अन्यथा प्राचि मानुषतामुपेतां गौतमेन सुयोजयामासेति भाषणेनैव भामनीभावभावनानन्तरं भर्तृसंगमनरूप-कार्यस्यावगतेः पुनर्नारीविधायेति पुनरुक्तिः स्यात् । सुरेशकाङ्क्षयेति शिलीकृतामित्यनेनाप्यन्वेति । सुरेश इन्द्रः काङ्क्षा इच्छा । अहल्यायाः स्वसम्भोगकर्तृत्वेन जम्भोत्तम्भनापेक्षा तया हेतुना शिलीकृतामिति तदर्थः । अनेनानेनस्यै अहल्यायै नादाच्छापमपि तुराषाडपेक्षारूपापराधं बुध्वैव कोपेनादात्तापस इति शापहेतुः सुनिरूप इति सूचितमिति मन्तव्यम् । उत्तरपद्ये चास्मिन्नारीकरणकारणस्य निरीक्षणादेरभणनाच्च । अथवा पृथक्पृथगेवान्वयः । नारीं विधायेति न योषां [नदोषां] विधायेत्यर्थः । किंन्नाम अराः स्वोत्तम-सुरसत्तमापराधोत्पन्नदोषाः ते न सन्ति रघूरुकरुणातो यस्मिन् स नारो गौतमः तस्येयं नारी । यद्वा परपुरुषसंसर्गाङ्गनाङ्गसङ्गजन्यः अरो दोषस्तद्वान्न भवतीति नारस्येयमिति वा । नारं पुण्यं तस्येयं स्मरणमात्रेण पापापहरणकारणपुण्यवतीमिति यावत् । नारशब्दात्सम्वन्धसामान्ये पुनरणि नारीति भवति ।

'अहल्या द्रौपदी सीता तारा मण्डोदरी तथा । पञ्चकन्या स्मरेन्नित्यं महापातकनाशनम् ।।' इति स्मृतेः । नारो मुंनिर्वा तस्येयं ताम् । पुरुषोत्तमप्रसादादिव पत्युः प्रसादाच्च अन्धन्तमसपातनेन नानायातनानु- भावककर्मकृतावपि तत्पापलेपो नास्ति प्रत्युत पुण्यवत्याः कन्याया यस्याः स्मरणं पातकघातकं तादृशी वा ।।११।।

**मधुसूदनीया–** ।। **अनन्यभक्तामिति** ।। यादृशी मयि भक्तिः स्यात् तादृश्यन्यत्र नैव चेत् । अनन्यभक्तिरुद्रेकात् सा यथैव तरेत् सृतिम् ।।' इति वचनात् अनन्यभक्तिशब्दार्थो ज्ञातव्यः ।। **सुरेशकाङ्क्षयेति** ।। सुरेशस्य देवेन्द्रस्य काङ्क्षया 'इयं अहल्या मदर्थं शिलात्वं प्राप्ता ततोऽस्याः शिलात्वापगमः कदा स्यात् शीघ्रमेव नारी भवतु' इत्यादिकाङ्क्षयेत्यर्थः । 'महेन्द्रस्य मनःशल्यं त्वद्भक्तस्य समुद्धर' इति विश्वामित्रवाक्यात् तथा । त्रिदशेषु त्रिरावृत्ताः दशाः एषां ते त्रिदशाः । सदा त्रिंशद्वर्षा इत्यर्थः । तेषु ।।११।।

**वरदराजीया–** ननु स्वापराधेन शिलीभूतां किमिति मानुषतां प्रापयामासेत्यत आह– **बलमिति** ।। शिलाभूतायाः नारीत्वविधाने हेतुद्वयम्– **अनन्यभक्तां सुरेशकाङ्क्षया** **चेति** ।। अहल्याया अनन्यभक्तत्वादित्यर्थः । तथा एतस्याः शिलीभावापगमेन अहल्यात्वप्रापणस्य सुरेशकाङ्क्षाविषयत्वात्

इत्यर्थः । नन्वेवमपि किमिति नारीं विहितवान् इत्यत उक्तम्– **बलमिति** ।। स्वभक्तेरधिकं बलं प्रकाशयन् प्रबलया स्वभक्त्या प्रामादिकापराधो गच्छतीति दर्शयन्नित्यर्थः । सुरेशकांक्षितमपि किमर्थं कर्तव्यमित्यत उक्तम्– **अनुग्रहमिति** ।। त्रिदशेषु देवेषु अतुल्यं असाधारणमनुग्रहं प्रदर्शयन्नित्यर्थः । सुरेशापराधमगणय्य तदाकाङ्क्षितकार्यकरणेन तत्रासाधरणोऽनुग्रहोऽस्तीति प्रदर्शितमिति भावः ।।११।।

**जनार्दनीया–** ननु शिलीकृतां किमर्थं योजितवानित्यत आह– **बलमिति** ।। राम इत्यध्याहारः । स इत्यनुवर्तते वा । स्वभक्तेरधिकं प्रायश्चित्तादधिकं बलं सामर्थ्यम् । मद्भक्तिः पुंसां प्रमादेन कृतमपराधं विनाशयतीति प्रकाशयन् । अन्यस्मिन् भक्तिर्यस्याः सा अन्यभक्ता । न अन्यभक्ता अनन्यभक्ता तां तथेति । नारीकरणत्वे हेतुगर्भविशेषणमेतत् । त्रिदशेषु देवेषु अतुल्यमनुग्रहं प्रकाशयन्नित्यनेन अन्योऽपि हेतुः सूचितः– **सुरेशेति** ।। सुरेशस्य इन्द्रस्याकाङ्क्षया मत्सम्बन्धात् शिलीभूतायाः मानुषत्वं स्यादिति सुरेशेच्छाहेतुना च देवानां मनोभीष्टकर्तृत्वात् देवेष्वतुल्यानुग्रहः प्रकाशितः । नारीं विधाय अहल्यामिति शेषः । तया अहल्यया ।।११।।

**चट्टी–** ननु स्वापराधेन शिलीभूतां किमर्थं योजितवानित्यत आह– **बलमिति** ।। राम इति शेषः । स्वभक्तेरधिकं बलं सामर्थ्यं मद्भक्तिः पुंसां प्रमादेन कृतमपराधं विनाशयतीति प्रकाशयन् अन्यस्मिन् भक्तिः यस्याः सा अन्यभक्ता । नान्यभक्ता तां तथेति नारीकरणत्वे हेतुगर्भविशेषणमेतत् । त्रिदशेषु त्रिरावृत्ता दशा येषां ते त्रिदशाः । सदा त्रिंशद्वर्षा इत्यर्थः । तेषु देवेषु अतुल्यमनुग्रहं प्रकाशयन्नित्यनेन अन्योऽपि हेतुः सूचितः ।। **सुरेशेति** ।। सुरेशस्येन्द्रस्य काङ्क्षया मत्सम्बन्धाच्छिलीभूतायाः मानुषत्वं स्यादिति सुरेशेच्छाहेतुना च देवानां मनोभीष्टकर्तृत्वाद् देवेष्टतुल्यानुग्रहः प्रकाशितः । नारीं विधाय अहल्यामिति शेषः । तयार्चितः सन् प्रययौ ।।११।।

**अनन्तभट्टीया–** ननु किमर्थं सुरेशस्य काङ्क्षा...* इत्यत आह– **बलं स्वभक्तेरधिकं प्रकाशयन्निति** ।। परपुरुषदोषनाशने स्वभक्तिः समर्था इति सूचयितुमित्यर्थः । तस्याः भक्तिरस्तीति सूचयितुं अनन्यभक्तामित्युक्तम् । परदारधर्षणेन सदोषस्येन्द्रस्य काङ्क्षा किमर्थमनुसृता इत्यत उक्तम्– **अनुग्रहश्च त्रिदशेष्वतुल्यं प्रकाशयन्निति** ।। देवेषु कृतदोषेष्वपि तद्दोषनाशको मदीयोऽनुग्रहो तेष्वस्तीति ज्ञापयितुं इत्यर्थः । गौतमेन सुयोजयामासेति सम्बन्धः ।।११।।

**ताम्रपर्णीया–** स्वभक्तेरधिकं बलमित्येतत्प्रदर्शनायानन्याभक्तामित्युक्तम् । त्रिदशेष्वतुल्यमित्येतदुपपादनाय त्रिदशेशाकाङ्क्षयेत्युक्तम् ।।११।।

**भारतश्री–** स्वभक्तेरहल्यास्थितायाः । सुरेशकाङ्क्षया इच्छया । सुरेशेच्छा हि तथा स्थिता । यावन्नृलोके इयं शिलीकृता वर्तते तावत् इन्द्रस्य अयशः कथयन्ति । अतस्तन्मोक्षेच्छा इन्द्रस्येति । चशब्दात् तद्भर्त्रा गौतमेनाप्यर्चित इति ।।११-१२।।

**प्रमाणसङ्ग्रह–** सुरेशकाङ्क्षया इत्यत्र इयं नारी भवतु इति सुरेशकाङ्क्षया इत्यर्थः । तज्ज्ञापितं 'महेन्द्रस्य मनःशल्यं त्वद्भक्तस्य समुद्धर' इति विश्वामित्रवाक्यात् ।।११-३२।।

**गूढवाक्यार्थ–** सुरेशकाङ्क्षानुसारेण नारीं विधाय । ननु किमर्थं सुरेशस्य काङ्क्षायां [वनिता] सुधाविषये सफलीकर्तव्यतेत्याह– **बलं स्वभक्तेरिति** ।। **प्रकाशयन्निति** ।। परपुरुषसङ्गदोषनाशने स्वभक्तिस्समर्थेति ज्ञापयितुमित्यर्थः । तस्यां भक्तिरस्तीति ज्ञापयितुमनन्यभक्तामित्युक्तम् । सदोषस्येन्द्रस्य काङ्क्षा किमि...* ।।११।।

**श्यामावदाते जगदेकसारे स्वनन्तचन्द्राधिककान्तिकान्ते ।**
**सहानुजे कार्मुकबाणपाणौ पुरीं प्रविष्टे तुतुषुर्विदेहजाः ।।१२।।**

**व्यासतीर्थीया–** श्यामावदाते इत्यादि निमित्तसप्तमी । [तुष्टौ रशः स्नेहः] ।।१२।।

**वादिराजीया–** लक्ष्मीरूपसीतायाः स्वबहुतरसौन्दर्यस्य दर्शनेऽपि शक्तिमत्वाज्जनकपुरप्रवेशे लावण्यतिशयो रामेण दर्शित इति भावेनाह– **श्यामावदात इत्यादिना** ।। श्यामश्चासाववदातश्चेति समासः । श्यामत्वेऽपि सूर्यमण्डलवदिन्द्रनीलवच्च शुक्लभास्करतेजोविशेषयुक्तत्वादवदातश्चेत्यर्थः । 'अवदातः सितो गौरः' इत्यनुशासनात् । न तु केशवत् केवलश्याम इति भावः । जगदेकसारे जगतां मुख्यश्रेष्ठे 'रसः सारो वरश्च' इत्यभिधानम् । प्रागुक्तमवदातत्वमेव दृष्टान्तमुखेन स्पष्टयितुमुक्तम्– **स्वनन्तेति** ।। ' सु शोभनेभ्यो निष्कलङ्केभ्योऽनन्तचन्द्रेभ्योऽधिकया कान्त्या मनोहरः । एतादृशकान्तिविशेषदर्शनयोग्यता लक्ष्म्या एव नान्यस्येति भावेनोक्तम्– **विदेहजा तुतुषुरिति** ।। न तु ददृशुरित्यर्थः ।।१२।।

**सत्यधर्मीया–** इदानीं प्रकृतमनुसरन्निरन्तरहरिचरणसास्मरणपरायणो अपारधिषणस्तत्पारवश्येन ध्येयाकारं श्रीकरस्य निरूपयन् नृपपुरप्रवेशनेन जनकनगरनिवासिनां समेषां सन्तोषं भाषते– **श्यामावदात इति** ।। विदेहजास्तुतुषुरित्यन्वयः । कस्मिन्कथं भवति सतीत्यत आह– **प्रविष्ट इति** ।। राम इति शेषः । रामे पुरीं नवनगरीं प्रविष्टे सति । श्यामः श्यामवर्णश्चासौ अवदातः शुद्धो निर्मलः । अवपूर्वात् 'दैप् शोधने' अस्मात् 'आदे च'[कौ.२३७०] इत्यात्वे कर्मणि क्ते च अवदात इति भवति । 'अवदातः सितो गौर' इत्यमरः । 'अवदातः सिते गौरे' इति यादवः । 'विशेषणं विशेष्येण बहुलम्' [कौ.७३६] इति समासः । श्यामो दशदोषरहित इन्द्रनीलः तद्वदवदात इति वा । 'दशदोषविनिर्मुक्तः श्याम इन्द्रमणिः स्मृत' इति वचनात् । अधुना अधुनातनतनुतनुमतः कियन्तो हायना रामस्य समासन्नित्यतो वाह– **श्यामावदात इति** ।। श्यामः समुपात्तयौवनः षोडशवर्ष इति यावत् । स चासौ अवदातश्च ।

'श्यामः षोडशवार्षिक' इति वचनात् । रामायणे च 'समुपस्थितयौवनौ' इति । अथवा अवदातो अरुणस्तरणिरिव प्रकाशमानश्च । 'अवदातोऽरुणे गौर' इति विश्वः । प्राचुर्येण आरुण्यं तरणावेव इति वा प्रमाणान्तरसमाख्यया वा तद्ग्रहः । श्यामायां रात्र्यामप्यवदात इति वा । 'श्यामा स्याच्छारिका निशा' इत्यमरः । यमुनावदवदात इति वा । यमुनासमानकायकान्तिरिति यावत् । 'यमुनायां त्रियामायाम्' इति मेदिनी । श्यामो हरिद्वर्ण इति वा । नीरदनीलो वा । 'त्रिषु श्यामौ हरित्कृष्णे' । 'श्यामा त्रिषु स्यात्कृष्णहरितोः' इति च अमरमेदिन्यौ । श्यामवत् पिकवत् आवदतीति श्यामावदा पिकवाक् जानकी तां प्रत्यततीति श्यामावदातस्तस्मिन् । 'पिके च कृष्णहरितोः' इति मेदिनी । श्यामावदां नाधुनोद्दिश्यायाति किन्तु नित्यमततीति तदविनाभूत इति वा । 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्' [कौ.२८९६] इति वार्तिकाद्वद इति च द्वित्वागमाभावे च ज्ञेयम् । 'वदो वदावदो वाग्मी' इत्यमरः । अत धातोर्ज्वलादावुपसङ्ख्यानात् अचि अत इति मन्तव्यम् । अनेन सदा पद्मासद्मवक्षस ईशस्य सीताशातो गमनं नेति भावः सूचितो भवति । 'श्यामं रवीन्द्वमितदीधितिकान्तियुक्तं ज्ञानं शरं च दधतं प्रियया समेतम् । स्वात्मस्वरूपममितं हनुमन्मुखेषु सन्दर्शयन्तमजितं स्मरतोरुगीर्भिः ॥' [तन्त्र.सा.४.३६] इति विष्णूदिततन्त्रसारवचनार्थं अत्र पादत्रयेण सञ्जग्राहेति ज्ञेयम् । श्यामावदात इत्यनेन श्याममित्युक्तार्थम् । श्यामावत् अयाततीति श्यामावदात इत्यनेन प्रियया समेतमिति । 'श्यैङ् गतौ' अस्मात् 'इषि युधीन्धिदसिश्याधूसूभ्यो मक् '[उणादि.१५०] इति मकि श्याम इति भवति । न नरो रामो अपि तु जगन्मुख्य इत्याह– **जगदेकसार इति** ॥ जगति एको मुख्यः सारः श्रेष्ठः जगदत्युत्तमस्तस्मिन् । यद्वा जगति एके मुख्याः पद्मापद्मभवादयः तेभ्यः सारस्तस्मिन्वा । जगति एक एकलश्चासौ सरति सर्वं वेष्टयतीति सारः बली वा । सङ्ख्यार्थकत्वपक्षे 'पूर्वकालैक' इति पूर्वनिपातः मुख्यार्थकत्वे तु 'ह्लादैकमयी' 'दोषैकदृक्' इत्यादि केवलार्थक इव न पूर्वनिपात इति मन्तव्यम् । अनेन मानगताजितपदार्थ उक्तो भवति । 'वर्तमाने पृषन्महज्जगच्छतृवच्च' [उणादि.२५०] इति गमेर्जगादेशे जगदिति भवति । 'सृ गतौ' अस्मात् 'सृ स्थिरे' [३१८३.कौ] इति घञ् सार इति भवति । 'सारो बले स्थिरांशे स्यात्'[वरे इति क्वचित्] [रद्विकम्. ९५] इति मेदिनी । बलपक्षे भावे घञ् ।

'उरुगीर्भिः स्वात्मस्वरूपं अमितं हनुमन्मुखेषु सन्दर्शयन्तं' इत्यस्य तत्पद्यानुक्ताधिकारि-परमरमासमायुक्तस्य ब्रह्मवाय्वादेः वा वाय्ववतारत्वात् हनुमदादेर्वा ज्ञानदाननिदानं दानवारिरिति वाह– **अजगदेकसार इति** ॥ न जायन्त इत्यजाः गदन्ति व्यक्तं वदन्तीति गदो वेदा इति यावत् । तैः करणैः ई रमा को ब्रह्मा तयोरुपलक्षणया सर्वसुपर्वभ्यो सारो ज्ञानं येनेति वा । वायुस्तदवतारत्वाद्वा वानरवरः क वाक्यानि अजाः गदा अपौरुषेयाः ई रमा । 'वायौ ब्रह्मणि को मत' इत्यभिधानात् । अनेन 'ज्ञानम्'

इति प्रमाणोक्तिरुक्तार्था । अजैर्नित्यैर्गदैः स्वगीर्भिरिति वा । गदधातोः पचाद्यचि रूपम् । यद्वा जगत्सु प्राणेषु एको मुख्यः मुख्यप्राणः हनुमान् तस्य सारो ज्ञानं येनेति वा । जगच्छब्दः पुमान् सन् वायुवाची । ननु प्राणवाची चेज्जगच्छब्दस्तस्य शतृवद्भावे 'उगिदचाम्' [३६१.कौ] इति नुमि जगन्निति भाव्यमिति चेत् । न 'द्युतिगमिजुहोतीनां द्वे च' [वा.३१५८.कौ] इति द्वित्वे 'गमः क्वौ' [२९८६.कौ] इति मलोपे तुकि तु जगदिति ज्ञेयमिति प्रसङ्गादुक्तमित्यवधेयम् । 'जगत्प्राणः समीरण' इत्यमरः । 'मारुतः श्वसनः प्राणः समीरो मारुतो जगत्' इति संसारावर्तः । 'जगत् स्यात् विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' इति मेदिनी [तत्रिकम्.१०९] । 'जगदाख्या स्मृता वाते विष्टपे जङ्गमेऽपि च' इति विश्वः [तत्रिकम्.१३९] । एकपदत्वान्न काचिच्छङ्का इति बोध्यम् । सृ धातोर्गत्यर्थस्य ज्ञानार्थकत्वं 'ये गत्यर्था' इति न्यायप्राप्तमिति सम्भवति ज्ञानार्थकता ।

'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य... ॥' [गी.११-१२] इतिवदभूतोपमया तत्कायप्रकाशं प्रकाशयति– **स्वनन्तचन्द्रेत्यादिना** ॥ सु शोभना अकलङ्का अनन्ताः क्षयरहिताः अमिता वा चन्द्रा जनाह्लादकत्वेन चन्द्रशब्दवाच्या इन्दवः तेषामधिका तारकादि-प्रकाशतोऽधिका या कान्तिः शोभा तस्या अपि सकाशात्कान्ता उरुरोची रुचिरः मनोहर इति यावत् । 'कमु कान्तौ' अस्मात् क्तिनि 'अनुनासिकस्य'[२६६६.कौ] इति दीर्घे कान्तिः इति मुकुटः । तन्न । 'काम्यते' इति विगृहीतत्वात् तत्रान्तरङ्गत्वात् णिङ्निमित्तवृद्धेः सम्भवात् । 'आयादय' [२३०५.कौ] णिङभावे वा बोध्यम्' इति अमरव्याख्या [रामाश्रमी.१.वर्ग ३.१७] । क्ते कान्तेति च भवति । 'शोभा कान्तिर्द्युतिच्छविः' इत्यमरः । यदि वियत्येकदाऽनेके अकलङ्काः शशाङ्काः समुदिताः समुदिता भवेयुस्तत्कान्तितोऽप्यधिककान्ती राम इति तुहिनदीधितिततितोऽत्युत्तमता उक्ता भवति । अनेन 'अमितकान्तियुक्तम्' इत्युक्तार्थं ज्ञेयम् । यद्वा जगति मुख्यानन्दरूपे यथोक्तं 'प्रत्ययसारम्' इति माण्डूकोपनिषद्भाष्ये 'सारः आनन्दरूपतः' [२ खं.१] इति । यद्वा अनन्ताः अबद्धाः मुक्ता इति यावत् । ते च ते चन्द्राश्च तेभ्योऽधिककान्तिकान्ते मुक्तानां दोषापतीनां अदोषत्वेऽपि तत्कान्तितोऽप्यधिककान्ती रामः इति मुक्तत्वमप्रयोजकमिति भावः । 'अति वन्धने' इति धातुव्याख्या । 'अन्तोऽस्त्री अवसिते कान्ते नाश' इति शब्दरत्नाकरः [का४.अनेकार्थाधिकारः.] ['अन्तोऽस्त्र्यवसिते प्रान्ते निश्चये परमे मृतौ' इत्यर्वाचीनपाठः] । 'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे' इति विश्वः [तद्विकम्.३१] । 'कान्तौ पतिमनोहरौ' इति दर्पणः । यश्चन्द्रकान्तिघातुककेतुशिरोहरणकरणेन तत्तेजःपुनर्जनकस्तस्य तदधिककान्तिता इति किं वक्तव्यमिति कैमुत्येन सुव्यक्तं वा वक्ति– **स्वनन्तेत्यादिना** ॥ सु शोभनं अनन्तं नीरदानाच्छादितं व्योम । 'अनन्तं सुरवर्त्म खं' इत्यमरः । तत्र विद्यमानश्चासौ चन्द्रश्च तस्य आधिर्मनोव्यथा । स एवाधिकः । 'आधिस्तु मानसीपीडा पुंस्याधिर्मानसी व्यथा' इत्यमरः ।

'आधिर्मनोवरूथश्च आत्मारवमिति चोच्यत' इत्यभिधानात् । येन स तथा । 'यावादिभ्यः कन्' इति स्वार्थे कन् । यद्वा बहुव्रीहौ कः । अथवाल्प इति के तद्योगे नारिरचितचित्तव्यथाया हरिकरुणातोऽल्पता द्योत्यते । चन्द्राधिको राहुस्तस्य कान्तिरमृतप्राशनेच्छा 'कमु कान्तौ । कान्तिः इच्छा' इति व्याख्यानात् । तया हेतुना कस्य तच्छिरसः अन्तो नाशो यस्मात्स तथा तस्मिन् । यद्वा स्वनन्तचन्द्राधिककान्तिः सीता तस्याः कान्ते पत्यौ वा । एतेन 'प्रियया समेतम्' इत्युदितार्थं । अनन्तानामपि तुहिनकिरणानां सु अत्यन्तकलङ्कितया आधिः यया सा च सा कान्तिः निष्कलङ्कितया कान्तिः तया कान्ते वा । सु शोभना अनन्तगताश्चन्द्रास्तेभ्योऽधिका कान्तिः प्रभा येषां ते सूर्या वा तेभ्यः कान्तो मनोहरः तस्मिन् वा । अथवा सु अनन्तगताश्चन्द्राः प्रकाशेन जगदाह्लादकत्वेन सूर्यास्तेषामधिका या कान्तिस्ततोऽपि कान्त इति वा । अनेन 'रवीन्द्वमितदीधिकान्तियुक्तं च' इत्युक्तार्थम् । 'स्फायि..' इत्यादिना रकि चदेः इदितनुमि चन्द्र इति भवति । 'सुधांशुश्चन्द्रमाश्चन्द्रः इन्दुः कुमुदबान्धवः' इत्यमरः । न केवलमेकलः कौसल्याकुमारो गतवानपि तु हनुमन्मुखेष्विति सूचितानुजन्मना सहापीत्याह– **सहानुज इति** ।। अनुजेन लक्ष्मणेन सह सन् सहानुजः 'वोपसर्जनस्य' इति सहस्य सभावो वैकल्पिक इति सभावाभावपक्षे सहानुज इति भवति । मुख्यं चिह्नमाह– **कार्मुकबाणपाणाविति** ।। कार्मुकं धनुश्च । बाणः शरश्च कार्मुकबाणं तदेव पाण्योः करयोर्यस्य स इति व्यधिकरणो बहुव्रीहिः । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गनानाम्' [९०६.कौ] इत्यनेन कार्मुकबाणमित्येकवद्भावः । अथवा 'अङ्गगात्रकण्ठेभ्य..' इति वार्तिकाच्च नित्य एकवद्भाव इति कार्मुकं च बाणश्च तौ पाण्योः यस्येति । 'कर्मण उकञ्' [१७६७.कौ] इत्युकञि कर्मणे अरिनिकरसंहरणरूपाय प्रभवतीति कार्मुकमिति भवति । प्रमाणे शरशब्दो हिंसासाधनमात्रसङ्ग्राहक इति दर्शयितुमत्र कार्मुकग्रहणमिति ज्ञेयम् । तथाच शरशब्देन बादरायणकृततन्त्रसारपद्येऽपि धनुर्ग्रहणं सम्भवतीति भावः । रामायणेऽभिधानात् कार्मुकादिकमपि खड्गाद्युपलक्षकमिति मन्तव्यम् । 'खड्गतूणधनुर्धरौ' इत्युक्तेः [१.५०.१८] । 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः । पुरीं जनकनगरीं प्रविष्टे सति विदेहे तन्नाम्नि मिथिलादेशे जायन्त इति विदेहजाः । जनकजनपदवासिनो जनास्तुतुषुः । लिट् । जहृषिरे । विदेहश्च विदेहश्च विदेहौ जनककुशध्वजौ सरूपैकशेषः । ताभ्यां जायन्त इति विदेहजाः । सीतोर्मिलामालवीश्रुतकीर्तयो वा तुतुषुः । रामरामानुजपाणिग्रहणं भविष्यतीति तोषश्चतसृणां योषाणामिति भावः ।।१२।।

**मधुसूदनीया–** श्यामः यौवनमध्यस्थो अवदातो मनोहरः । श्याम इव दशदोषविनिर्मुक्तेन्द्रमणिरिव अवदातः शुद्ध इति वा । 'दशदोषविनिर्मुक्तः श्याम इन्द्रमणिः स्मृतः' इत्यभिधानम् । श्यामायां रात्र्यामप्यवदातः अरुणः सूर्यवत् प्रकाशमान इति वा । स्वनन्तचन्द्रादिककान्तिकान्ते । चन्द्राणां शोभनत्व कलङ्करहितत्वं क्षयवृद्धिरहितत्वं च तादृशाश्चन्द्रा येऽनन्ताः तेभ्योऽप्यधिककान्त्या कान्ते

मनोहरे । अधिकारिभेदात् तथोक्तं इति मन्तव्यम् । रूपनवावतारम् । अनेन मिथिलागमनसमये पञ्चदशवार्षिकत्वं च सूचयति ।।१२।।

**वरदराजीया–** श्यामवर्णेन रोचमाने जगति मुख्यतमे समीचीनानन्तचन्द्रकान्त्यधिककान्त्या मनोरमे सहानुजे सलक्ष्मणे कार्मुकबाणाः पाणौ यस्य तस्मिन् रामे पुरीं विदेहनगरीं प्रविष्टे सति विदेहदेशे जाताः सर्वे तुतुषुरित्यर्थः ।।१२।।

**जनार्दनीया–** श्यामः श्यामवर्णश्चासाववदातः निर्मलश्च तस्मिन् । 'अवदातः सिते गौरे' इति यादवः । यद्वा श्यामेष्ववदातः शुद्ध इन्द्रनीलमणिस्तद्वर्ण इत्यर्थः । 'दशदोषविनिर्मुक्तः श्याम इन्द्रमणिः स्मृतः' इत्यभिधानात् । जगति एकसारे बलादिना मुख्यश्रेष्ठे, शोभमानेभ्यः अनन्तचन्द्रेभ्यः अधिककान्त्या कान्ते मनोहरे । कार्मुकबाणौ पाण्योर्यस्येति व्यधिकरणबहुव्रीहिः ।।१२।।

**चट्टी–** श्यामावदाते श्यामवर्णश्चासाववदातो निर्मलश्च तस्मिन् । जगत्येकसारे बलादिना मुख्यश्रेष्ठे । शोभमानेभ्यो अनन्तचन्द्रेभ्य अधिककान्त्या कान्ते मनोहरे सहानुजे सहलक्ष्मणे कार्मुकबाणा पाण्योर्यस्य तस्मिन् रामे पुरीं विदेहनगरीं प्रविष्टे सति विदेहदेशे जाताः सर्वे जना तुतुषुः जहृषुः ।।१२।।

**अनन्तभट्टीया–** जगदेकसारे जगति मुख्यश्रेष्ठे । कान्त्या कान्तः कमनीयः कान्तिकान्तः तस्मिन्निति विग्रहः । ततुषुः जहृषुः विदेहजाः विदेहनामकदेशजाः ।।१२।।

**ताम्रपर्णीया–** ।। **श्यामावदात इति** ।। श्यामाश्चासौ अवदातः निर्मलश्चेति विग्रहः । 'श्यामावदाताः शतपत्रलोचना' [भा२.९.१०] इत्यादौ तथा व्याख्यातत्वात् [सुधा ५६००] ।।१२।।

**अतिविशद–** श्यामश्चासौ अवदातश्चेति समासः । अवदातः शुद्धश्यामः इत्युक्तो भवति । न तु 'अवदातस्सितो गौर' इत्यादिना गौरादिवर्णः । तथात्वे श्याम इत्यनेन व्याहतं स्यात् ।।१२।।

**गूढवाक्यार्थ–** श्यामश्चासौ निर्मलश्चेति विग्रहः ।।१२।।

**पपुर्नितान्तं सरसाक्षिभृङ्गैर्वराननाब्जं पुरुषोत्तमस्य ।**
**विदेहनारीनरवर्यसङ्घा यथा [१]महापौरुषिकास्तदङ्घ्रिम् ।।१३।।**

**व्यासतीर्थीया–** महापुरुषस्य भगवतः इमे महापौरुषिकाः ।।१३।।

**वेदाङ्गतीर्थीया–** महापूरुषिकाः महापुरुषस्य भगवतो भक्ताः । यथा महापूरुषिकास्तदङ्घ्रिं इत्येतत् पपुः समर्चयामासेत्युभयत्र दृष्टान्तः ।।१३-१४।।

---

१. 'महापूरूषिकाः' इति वेदाङ्गपाठः ।

**वादिराजीया–** पश्यन्ति चेदपि एकैकावयवमेव पश्यन्ति न तु सामस्त्येनेति भावेनाह– **पुपुर्नितान्तमिति** ।। सरसाक्षिभृङ्गैर्वराननाब्जपानं नाम सानन्दं सस्नेहं पौनःपुन्येन निरीक्षणम् । महापौरुषिकाः महापुरुषो नारायणः तत्सम्बन्धिनो महापौरुषिकाः शुकनारदाद्याः । प्रजास्त्ववरभक्तत्वेन सौन्दर्यमात्रदर्शनलोभात् मुखारविन्दमेव ददृशुः । शुकाद्यास्तु परमभागवतत्वेन सततं हरिपूजारतत्वात् पादमेव बहुशः पश्यन्ति इति विवेकः ।।१३।।

**सत्याभिनवीया–** तत्रैव पपुर्नितान्तं... इति श्लोके सरसाक्षिभृङ्गैः इत्यस्य सरसाक्षिभृङ्गास्यैरित्यर्थः । एतेन विदेहनारीनरवर्यसङ्घानां भृङ्गसाम्यं, तदक्ष्णां भृङ्गास्यसाम्यं वक्तव्यम् । विदेहनारीनरवर्यसङ्घाक्ष्णां भृङ्गसाम्यकथनमनुपपन्नं इति दूषणं परास्तम् । विदेहनारीनरवर्यसङ्घाक्ष्णां भृङ्गास्यसाम्योक्तौ अर्थात् विदेहनारीनरवर्यसङ्घानां भृङ्गत्वलाभात् ।।१३।।

**सत्यधर्मीया–** अपूर्वसुपर्वपूर्वपूरुषविलोकनत एव लोकाः सकललोकनतसुरनायकप्राया अनायासेनासुरिति वक्ति– **पपुरिति** ।। **विदेहनारीनरवर्यसङ्घा इति** ।। विदेहे भवा विदेहाः नरेषु पुरुषेषु वर्याः श्रेष्ठाः नरवर्या । नार्यः स्त्रियश्च नरवर्याश्चेति विग्रहः । ततश्च विदेहाश्च ते नारीनरवर्याश्चेति विग्रहः । तेषां सङ्घाः समूहाः । नार्यश्च नराश्च तेषु वर्या इति तु न विग्रहः सुग्रहः । 'पुमान् स्त्रिया' [कौ.९३३] इति 'तल्लक्षण एव विशेषश्चेत्' इति स्त्रिया सहोक्तौ पुंशेषाभिधानात् । हंसी च हंस्यश्च हंसाश्च हंसा इतिवत् नार्यश्च नराश्च नरा इति नरपदेनैवोभयोपस्थानान्नारीशब्दो व्यर्थः सूत्रविरुद्धश्च पृथक् निर्देश इति समासोऽयमेव समासेति मन्तव्यम् । नन्वेवं समासे नरवर्यसङ्घवन्नारीसङ्घबोधो न भवति किन्नाम भामिनीमात्रप्रतीतिरथ यथा कथञ्चिद्बहुवचनेन प्रतीते बहुत्वे तस्य कपिञ्जलाधिकरणन्यायेन त्रित्व एव पर्यवसानेन समग्रांगना आननाब्जपानकर्त्र्य इत्यर्थप्रतीतिरिति[१] चेत् । सत्यम् । उत्तरपदलोपे चाङ्गीकृते समासे सर्वलाभात् । नारीसहिताश्च ते नराश्च तेषां वर्याः नारीवर्यानरवर्यास्तेषां सङ्घा इति । ते च किं चक्रुश्चक्रिण इत्यतः कथयति– **पुरुषोत्तमस्य वराननाब्जमिति** ।। सह वन्येषु धन्येषु किं मान्यता तस्यैवेत्यतो हेतुमाह– **पुरुषोत्तमस्येति** ।। इतरे पुरुषा अयं तु पुरुषोत्तम इति युक्ता इतरनैरपेक्ष्येण निरीक्षणमिति भावः । पुरुषेषु पुरुषाणां पुरुषेभ्यो वा उत्तमः श्रेष्ठ इति स तथा । पुरुषशब्दादुत्पूर्वके तमपि पुरुषोत्तम इति भवति । 'श्रीपतिः पुरुषोत्तम' इत्यमरः । वरमुत्तमं च तदाननं मुखं च तदेवाब्जं नीरजं तदब्जमिवेति वा । अप्सु जायत इत्यब्जमिति भवति । 'ग्रहवृदृनिश्चिगमश्च' [कौ.३२६४] इति घञ् चोरपवादेन अपि वर इति ज्ञेयम् । पपुरपिवन् । सादरं दामोदरं लुलोकिरे लोका इति भावः । 'पा पाने' अस्माल्लिटि एकवचने 'आत औ णलः' [कौ.२३७१] इत्याकारस्यौकारे बहुवचने चोसि पपौ पपतुः पपुरिति रूपम् । कृत्यान्तरसाहित्येन रामसमालोकं न किन्नाम तदेकमानसतयेत्याह–

१. 'अप्रतीतिः' इति स्यात् ।

**नितान्तमिति** ।। क्रियाविशेषणम् । अत्यपेक्षा साहित्येन । 'तमु काङ्क्षायाम्' अस्मात् क्ते अनुनासिकदीर्घे नितान्तमिति । 'तीव्रैकान्तनितान्तानि' इन्यमरः । आननस्य पद्मतयोत्प्रेक्षणात् प्रेक्षावद्विचक्षणः तद्योग्यमकरन्दास्वादनतुन्दिलेन्दिन्दिरतया जननयनान्युत्प्रेक्षयति– **सरसाक्षिभृङ्गैरिति** ।। सरसाः सरागा सस्नेहा इति यावत् अक्षीणि लोचनान्येव भृङ्गाः भ्रमराः तैः । 'अशोर्नित्' इति [उणादि.४४४] क्सौ षत्वे तद्योगेन क्षत्वे च अक्षीति भवति । 'स्यादक्षिलोचनम्' इति मेदिनी । 'डुभृञ् धारणपोषणयोः' इत्यस्मात् 'भृञः किन्नुट् च' [उणादि. १३०] इति गनि नुटि किति भृङ्ग इति बोध्यम् । '....भृङ्गो धूम्याटषिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडे त्वचि ।।' इति मेदिनी [गद्विकम्.१३-१४] । तत्र दृष्टान्तमाह– **यथा महापौरुषिका इति** ।। पुरुषे भगवति भवाः भक्त्या तदासक्ताः पौरुषिकाः । तत्र भव इत्यर्थे ठञि तस्येक इति इके ञित्वादादिवृद्धौ पौरुषिका इति ज्ञेयम् । महान्तश्च ते पौरुषिकाश्च । 'आन्महत' इत्यात्वम् । तदङ्घ्रिं तस्य रामस्य अघ्रिं चरणम् । अब्जमिति सरसा भृङ्गैः इति च दार्ष्टान्तिक इव दृष्टान्ते सङ्गमयितव्यम् । ततश्चाघ्रिंम् । आघिर्गत्यर्थ इत्यवगत्यर्थः ज्ञानसाधनव्यवहाराश्रयतया मुखं अब्जं तल्लक्षणं कमलम् । यथा सरसाक्षिभृङ्गैः करणैर्महापौरुषिकाः पिबन्ति तथैतेऽपि पुरवासिनः पपुरिति । अन्यथा दार्ष्टान्तिके लपननलिनालपनं दृष्टान्ते अङ्घ्रिमात्राभिधानश्चेति वैषम्यं स्यात् । आख्यातान्तरानाख्यानात् अघ्रिं पपुरित्यन्वयायोगाच्च । वरं जनसमाजमोहकत्वेन महत् तच्च तदननं चेष्टा गमनमिति यावत् तद्येन तच्च चरणं तदेवाब्जं वारिजं पादाम्बुजमिति यावत् । तदङ्घ्रिमित्यत्र तस्याङ्घ्रिम् । अब्जमात्रशेषः । पादलक्षणनीरजं यथा सरसाक्षिभृङ्गैः पिबन्ति तथा एत इति दृष्टान्तदार्ष्टान्तिकयोजना वा । न केवलं लोका मिलिता एव पपुरपि तु नृपपत्नीत्यप्याह– **विदेहेति** ।। विदेहस्य जनकस्य नारी सुन्दरी महामहिषी । नारीत्येकवचनं मुख्यजनकतरुणीविवक्षयेति ज्ञेयम् । सा च सरसभक्तियुक्ता अक्षिभृङ्गैर्नेत्रभ्रमरैः यद्यप्यक्षिभृङ्गाभ्यामिति भाव्यं एकस्याः कामिन्य नेत्रद्वयस्यैव न्याय्यत्वात् । तथापि पुनःपुना रामालोकनकौतुकेनेतस्ततः कटाक्षविक्षेपसम्भ्रमविभ्रमभ्रमन्नयनयोरेव पुरुभ्रमरीभूयभासनात् बहुवचनोपपत्तिः । पपाविति शेषः । यद्वा विदेहनारीनरेषु वर्यास्तेषां सङ्घाः समूहाः सरसाक्षिभृङ्गैः वराननाब्जं पपुरित्यखण्डान्वयो वा । 'यथाऽसादृश्ये' [कौ.६६१] इति सादृश्ये समासनिषेधाद्यथा हरिस्तथा हर इत्यादिवत् यथामहापौरुषिका इति ज्ञेयम् । अथवा महामहापौरुषिकास्तदङ्घ्रिं सेवन्त इति शेषः । यथा सेवन्ते तथा विदेहनारीनरवर्यसंघा वराननाब्जं पुरुषोत्तमस्य पपुरिति यथा न्यासमेवास्तु । पानमपि सप्रेमरामनिरीक्षणलक्षणसेवैवेति दृष्टान्तदार्ष्टान्तिकयोजना । 'पदाङ्घ्रिश्चरणोऽस्त्रियाम्' 'तुण्डमाननं लपनं मुखं' 'समुदायस्तथा सङ्घः' इति च अमरमेदिन्यौ । 'वृन्दः सङ्घसार्थौ' इत्यमरः । 'सङ्घोद्धौ गणप्रशंसयोः'[कौ.३२६४] इति संपूर्वस्य हन्तेः गणेर्थे घे संघ इति भवति ।।१३।।

**वरदराजीया–** विदेहजा नार्यो नरवर्याश्च तेषां सङ्घाः पुरुषोत्तमस्य रामस्य उत्तममुखारविन्दं सरसाक्षिभृङ्गैः स्नेहसहितनेत्राख्यभ्रमरैर्नितान्तं पपुः सादरमवलोकितवन्त इत्यर्थः । तत्र दृष्टान्तः यथा महापौरुषिको महापुरुषस्य हरेः भक्ताः तस्याङ्घ्रिः तथेत्यर्थः । समर्चयामासेत्यत्रापि अयं दृष्टान्तः द्रष्टव्यः ।

**जनार्दनीया–** विदेहाः विदेहनगरस्थाः ते च ते नारीनराश्च । तेषु वर्या उत्तमाः मनुष्योत्तमा इत्यर्थः । तेषां सङ्घाः । सरसैः स्नेहसहितैः । यद्वा बाह्यार्थविषयकमनोविकारोत्कर्षो रसः । 'बाह्यार्थलम्बनो यस्तु विकारो मानसो भवेत् । स भावः कथ्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः ॥' इत्यभिधानात् । अक्षिभृङ्गैः । पुरुषस्य इमे पौरुषिकाः । महान्तश्च च ते पौरुषिकाश्चेति विग्रहः । हरिभक्ताः तदङ्घ्रिं हरिचरणाब्जं सरसैः स्नेहसहितैः भृङ्गैः अब्जं यथा तथा पपुः सादरमवलोकितवन्त इति सम्बन्धः ॥१३॥

**चट्टी–** ॥ **पपुरिति** ॥ विदेहः विदेहनगरस्थास्ते च ते नारीनराश्च तेषु वर्याः उत्तमास्तेषां सङ्घाः पुरुषोत्तमस्य रामस्य उत्तममुखारविन्दं सरसैः स्नेहसहितैरक्षिभृङ्गैः नेत्राख्यभ्रमरैः नितान्तं पपुः । सादरमवलोकितवन्त इति भावः । तत्र दृष्टान्तः यथा महापौरुषिकाः पुरुषस्येमे पौरुषिकाः । महान्तश्च ते पौरुषिकाश्चेति विग्रहः । महापुरुषस्य भगवत इमे महापौरुषिका इति वा । हरिभक्ता....* हरिचरणाब्जमित्यर्थः ॥१३॥

**अनन्तभट्टीया–** सरसेति सस्नेहः । महापौरुषिकाः महापुरुषभक्ताः । पपुः पश्यन्तिस्म ॥१३॥

**ताम्रपर्णीया–** सरसाक्षिभृङ्गैः रसो रागः भक्तिरिति यावत् । प्रजाः अवरभक्तत्वेन सौन्दर्यमात्र-दर्शनलोभात् मुखारविन्दं ददृशुः । महापौरुषिकाः भगवदेकान्तिनस्तु सन्ततं हरिचरणनलिनमकरन्दरसा-स्वादनसमुत्सुकत्वात् पदं पश्यन्तीति द्योतनाय अङ्घ्र्योर्ग्रहणम् ॥१३॥

**भारतश्री–** तदङ्घ्रिं तदङ्घ्रिपद्मम् ॥१३॥

**अतिविशद–** पपुर्नितान्तमित्यत्र अक्षिभृङ्गैः रामस्य आननाब्जपानं विदेहस्थानामुच्यते । भृङ्गैरपि पुष्पस्य रसपानमेव क्रियते नतु अब्जं खाद्यते तस्मादनुभवविरुद्धमेतत् । महापौरुषिकास्तदङ्घ्रिमिति दृष्टान्तोऽपि तथेति चेन्न । तत्स्थरसेत्यध्याहारे सर्वं समञ्जसम् । ततश्चैवं वाक्ययोजना । विदेहनारीनरवर्यसङ्घाः सरसाक्षिभृङ्गैः पुरुषोत्तमस्य वराननाब्जस्थं रसं यथा पपुः । 'रसः सारो वरश्च' इत्युक्तत्वात् । महापौरुषिका अङ्घ्रिस्थं रसं पिबन्ति तथेति । अन्नपानं तत्तदिन्द्रिययोग्यं विवक्षितं इति न कुत्रापि विरोध इति ॥१३॥

**गूढवाक्यार्थ–** सरसाक्षिभृङ्गैः रसो रागो भक्तिरिति यावत् । महापौरुषिकाः महापुरुषो विष्णुः तदेकान्तभक्ता इत्यर्थः । महापुरुषं हरिं प्राप्ता मुक्त इति वा ॥१३॥

**तथा[1] विदेहः प्रतिलभ्य रामं सहस्रनेत्रावरजं गविष्ठम् ।**
**समर्चयामास सहानुजं तमृषिं च साक्षात् ज्वलनप्रकाशम् ॥१४॥**

**व्यासतीर्थीया–** गविष्ठं...* मौ सहस्रनेत्रावरजं बलिरिव ॥१४॥

**वादिराजीया–** गविष्ठं भूमिष्ठं सहस्रनेत्रावरजं इन्द्रानुजवामनरूपं तं रामं समर्चयामास सम्यक् भक्तिश्रद्धापूर्वकमर्चयामास । यथाऽग्रजोऽपीन्द्रो गुणाधिकत्वाद्वामनं पूजयति तथा वृद्धोऽपि जनकः बालं रामं पूजयामास इति ध्वनिसूचनाय सहस्रनेत्रावरजमिति विशेषणम् ॥१४-१५॥

**सत्यधर्मीया–** निजप्राचीनजनिजनकृतसुकृतनिमित्तेनेव मुनिसमागमेन समागतं समा च भ्रात्रा रामं विधानतो विधातृजनकं जनकोऽपूजयदित्याह– **तदेति** ॥ तदेतिवचनेन 'इत्युक्ता मुनिशार्दूलं प्रहृष्टवदनस्तदा ॥ [बा.का.५०-१६] विश्वामित्रमनुप्राप्तं श्रुत्वा नरपतिस्तदा ॥' [बा.का. ५०-६] इति श्रीमद्रामायणश्लोकगततदायमध्यवर्तिपद्यकथा शतानन्दादिभिः सह सभाजनैः सह विदेहस्य बहिर्गमनं मुनिसभाजनमित्यादिकानुसन्धेया इति सूचयामासेति नावचनानौचितीति ध्येयम् । तदा विश्वामित्रेण सत्रा सत्रात्रा दनुजारिणा च तदनु तदनुजेनेव द्विजराजसमाजसमागमसमये । विदेहस्तन्नामा जनकः । देहाभिमानरहितत्वाद्वा विदेहः 'न मे दह्यति किञ्चन' इति वचनात् । रामं प्रतिलभ्य स्वप्रश्नप्रतिवचन–तस्तत्पूर्ववृत्तश्रवणेन ज्ञात्वा । तथाच रामायणे 'पुनस्तं परिपप्रच्छ' [बा.का.५०-१७] इत्यारभ्य 'निवेद्य विरराभाथ विश्वामित्रो महामुनिः'[बा.का.५०-२५] इत्यन्तम् । नृपयोषित्पयोव्रतादि–व्रततोषितः कृपया भूमा भूमाविह वामन एव रामनामा सन् अवततारेति वदति– **सहस्रनेत्रावरजमिति** ॥ सहस्रं नेत्राणि यस्य स इन्द्रः तस्मादवरे तदुत्पत्त्यनन्तरकाले जायत इति स तथा । इन्द्रानुज इत्यर्थः । तम् । 'विभाषा वर्षक्षरशरवरात्' [कौ.९७४] इति सप्तम्या अलुक्पक्षेऽवरजमिति भवति । ननु सुरवरावरजश्चेत् किमर्थं वसुधाधामता तस्येत्यतो नाकिकार्यगौरवादेव देवो गामागादित्याह– **गविष्ठमिति** ॥ गवि भूमौ तिष्ठतीति गविष्ठः । यद्यपि 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः' [कौ.२९१८] स्थस्य कप्रत्ययान्तस्य अनुकरणेन सकारषकारविधानात् गोष्ठ इति भवितव्यम् । किञ्च 'स्थे च भाषायाम्' [कौ.९७८] इति विशेषेणालुको लोके निषेधात् गविष्ठमितिरूपं दुर्निरूपमिति । तथापि छन्दःसमत्वात् अस्य 'कृष्णोस्याखरेष्ठ' इतिवदलुक् ज्ञेयः । यद्वा अत्रैव सूत्रे दिविष्ठ इति दर्शनादलुकोऽत्राप्यलुक् । अथवा 'तत्पुरुषे कृति बहुलम्' [कौ.९७२] इति सामान्येनालुक् । अथवा 'अतिशायने तरबिष्टनौ' इति इष्टन् । इन्द्रावरजोऽपीदानीं गविष्ठ इति वा । अवादेशः । 'गमेर्डोः' [उणादि.२३५] इति गौरिति भवति । 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ॥' इति मेदिनी[2] ।

१. 'तदेति' पाठान्तरम्- सत्यधर्मीये ।
२. 'इति केशवः' इति सि.कौमुद्यादिषु ।

गविष्ठः अतिशयेन भूमिराश्रयो अतिशयेन निजापेक्षितपूरणे सुरसुरभिरिति वा । यद्वा गौः सुखम् । तेन तद्वन्तो लक्ष्यन्ते । तेषु श्रेयान् गविष्ठः । 'बाणे वाचि पशौ भूमौ दिशि रश्मौ जलेऽक्षिणि । सर्गे मातरि वज्रेऽग्नौ सुखे सत्त्वे च गौर्ध्वनौ ॥' इत्यभिधानात् ।

॥ **समर्चयामास** ॥ सम्यक् पूजयामास । सम् आतिथ्यादिसत्कारयुक्ततामाह महनस्य । यद्वा अनितरसुरनरवरायोग्यं चचार स चार्चनमिति समा समबोधयत् । 'अर्च पूजायां' चौरादिकः णिच्यर्चीति जाते सनाद्यन्तधातुसञ्ज्ञायां तिपि शपि च पुगन्तगुणे च अयादेशेऽर्चयेति जाते इजादेः इत्यामि 'कृञ्चानुप्रयुज्यते लिटि' इति चास्तेः प्रयोगेऽर्चयामासेति भवति । न केवलमेकलं देवमपि तु तदनु तदनुजश्चेत्याह– **सहानुजमिति** ॥ अनेनोपसर्जनतया लक्ष्मणग्रहणेन रामरामावरजपूजातरतम-भावः सूचितो ज्ञेयः । सौमित्रिमिव विश्वामित्रमप्यत्रार्चयामास इति वक्ति– **ऋषिश्चेति** ॥ ज्ञानिनं मुनिश्च साक्षाज्ज्वलनप्रकाशम् । ज्वलनोऽग्निः तस्य यः प्रकाशस्तस्य साक्षात्तुल्यः प्रकाशो यस्य स तथा तम् । यद्वा साक्षात्प्रत्यक्षीभूतो ज्वलनोऽनलस्तस्य प्रकाशः शोभा यस्येति तम् । 'साक्षात्प्रत्यक्ष-तुल्ययोः' इत्यमरः । 'ज्वल दीप्तौ' अस्मात् 'जुचङ्क्रम्य...' [कौ.३१३०] इत्यादिना युचि 'युवोरन' [कौ.१२४७] इत्यने ज्वलनमिति भवति । 'कृपीटयोनिर्ज्वलन' इत्यमरः । तं च समर्चयामास । रामायणे ब्राह्मणत्वविवक्षया पूर्वं विश्वामित्रपूजोक्तिः अत्र तु सर्वोत्तमतया रामस्य विश्वामित्राद्युत्तमतया सौमित्रेस्तदनन्तरं मुनेरिति तरतमभावेन सभाजनोक्तिरिति न पूर्वापरीकारदोष इत्यविरोधः । तथाहि– [बा.का.६६.१-२] 'ततः प्रभाते विमले कृतकर्मा नराधिपः । विश्वामित्रं महात्मानं आजुहाव सराघवम् ॥ तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा । राघवौ च महात्मानौ...॥' इति ।

सह सहजेन निजनाथनिर्देशं दशधिषणोऽसहमानः सन् तरतमभावतो भगवतो भगवदनुजस्य भागवतस्य मुनेश्च समश्चनमुवाचेति तात्पर्यम् । अस्य श्लोकस्य गौतमतनय उपात्तनयो रामं तदनुजं द्विजराजं च समर्चयदित्यर्थपरतयापि योजनायां शतानन्दगाधिनन्दनसंवादः रामायणोदितो सङ्गृहितो भवतीति सप्रयोजनेयमित्यावश्यकीति ज्ञेयम् । तथाहि । अविः शैलः । शिलेति यावत् । 'अवयः शैलमेषार्का' इत्यमरः । शिलात्वेन विकृतो देहः कायो यस्याः सा अविदेहा अहल्या । सा स्वमातृतया प्रसिद्धा च सा आ सम्यक् अविदेहा यस्य स तथा [आविदेहः] । षष्ठ्यर्थश्चापत्यतारूपः । स शतानन्दः । सहस्रं नेत्राणीति विग्रहः । 'विंशत्याद्याः सदैकत्वे' इत्यमरात् ॥ **सहस्रनेत्रावरजम्** ॥ अयमपि नारीकरणहेतुरिति ज्ञेयम् । रामः क्व क्व च शतानन्द इत्यतस्तदुभयसङ्गमस्थानमाह– **गविष्ठमिति** ॥ इदानीं जनकसवनावनौ तिष्ठतीति स तथा । तं सहानुजं समर्चयामास तं ऋषिश्च साक्षाज्ज्वलन-प्रकाशमर्चयामासेति । सहस्रनेतुः सकलनियामकात् आ अत्यन्तमवरो नीचो दशस्यन्दनस्तस्माज्जायत इति स तथा तम् । अत एव गविष्ठम् । अनेन पुमनुपमोप्यपत्यं मर्त्यस्येति तत्तपस्या निरुपमेति

निरूपितं सम्भवति । 'तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः । [बा.का. ५१-१] हृष्टरोमा शतानन्दो महातेजा महातपाः ।।' इत्यारभ्य 'प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम्' [बा.का.५१.१०] इत्यन्तेन श्रीरामायणेऽयमर्थः सविस्तरं प्रतिपादितस्तत्सङ्ग्रहोऽयमिति ज्ञेयम् । सङ्ग्रहे च [बा.का.६.४३-४५] शतानन्दो महानन्दो रघुनन्दनमब्रवीत् । रामदेव जगन्नाथ स्वागतं सानुजस्य ते ।। मन्ये धन्यमिमं लोके विश्वामित्रं महामुनिम् । अन्तेवासिवदन्वेति यं भवान् पुरुषोत्तमः ।। इति ।।

**वरदराजीया–** तथा तेनैव प्रकारेण विदेहजो जनकः सहस्रनेत्रस्य इन्द्रस्यावरजमनुजं वामनं बलिरिव सहानुजं राममवलोक्य तं ऋषिं विश्वामित्रं साक्षादनुपचारेण ज्वलनवदग्निवत् प्रकाशमानं च अवलोक्य समर्चयामासेत्यर्थः ।।१४।।

**जनार्दनीया–** तदा पुरप्रवेशसमये । विदेहो जनकः । गविष्ठमित्यलुक् । गवि तिष्ठतीति विग्रहः । भुव्यवतीर्णमित्यर्थः । सहानुजं, सहस्रनेत्रस्येन्द्रस्यावरजं वामनस्वरूपं तं रामम् । प्रतिलभ्य समर्चयामास । पुत्रार्थं पयोव्रतादिना तोषितो वामनः स्वयं रामोऽभूदिति भावः । बलिः सहस्रनेत्रावरजं वामनमिव इत्यध्याहारेण दृष्टान्तं वा योज्यम् । अत्रोपमालुक् । साक्षात् केवलम् । ज्वलनवदग्निवत् प्रकाशो यस्य स तथा । तं ऋषिं च सहागतं विश्वामित्रं समर्चयामास ।।१४।।

**चट्टी–** यथा पपुः । सादरः...* भावः । तदा पुरप्रवेशसमये तं भुव्यवतीर्णं...* । सहानुजं सहस्रनेत्रस्य इन्द्रस्य अनुजं वामनं वामनरूपं तं रामं प्रतिलभ्य समर्चयामास । पुत्रार्थं पयोव्रतादिना तोषितो वामनः स्वयं रामोऽभूदिति भावः । यद्वा बलिरिति शेषः । गविष्ठं सहस्रनेत्रावरजं वामनं बलिरिव साक्षादनुपचारेण ज्वलनवदग्निवत् प्रकाशो यस्य स तथा तं ऋषिं विश्वामित्रं समर्चयामास ।

**अनन्तभट्टीया–** विदेहः जनकः । गविष्ठं पृथिवीस्थम् । सहस्रनेत्रावरजं रामम् । अनेन श्रीरामस्य वामनांशत्वमुक्तं भवति । अथवा सहस्रनेत्रावरजं इन्द्रावरजं वामनं बलिरिवेति शेषः ।।१४।।

**ताम्रपर्णीया–** गविष्ठं भूमाववतीर्णम् । इन्द्रानुजं वामनरूपं तं रामं समर्चयामासेत्यर्थः । न च 'चतुर्मूर्तेर्मुकुन्दस्य मूर्तिराद्याग्रतोऽभवत् । अन्येषु त्रिषु तिस्रोऽन्याः अविशन्निति संमतम् ।।' [बा.का.३स.३५] इति सङ्ग्रहरामायणविरोधः । 'भरद्वाजो बहुधा चक्रे अत्रेः' इतिवदुपपत्तेः ।।१४।।[२]

**भारतश्री–** विदेहः रामं गविष्ठं भूमौ स्थितं साक्षात् सहस्रनेत्रावरजं वामनं साक्षान्नारायणावतारं प्रतिलभ्य ज्ञात्वेति । पृथ्वादिनिरासार्थं साक्षादिति ।।१४।।

---

२. ।। सहस्रनेत्रावरजमिति ।। एतद्वाक्यबलेनैव रामस्य वामनांशत्वमप्यविरुद्धमित्याहुः । टीकासु वामनं बलिरिव विदेहो राममभ्यर्चयामासेत्यर्थ उक्तः ।। १४-३९ ।। इति हो पुस्तके अधिकः पाठः ।

**भावचन्द्रिका–** सहस्रनेत्राणि अवराणि जातानि यस्मात्तम् । अधिकसौन्दर्यम् । अवरजं वयोन्यूनम् । गविष्ठं भूमिस्थमपि गविष्ठम् । गौर्जलम् । नारायणमिति यावत् । अवरजं अनन्तरावतीर्णं वा । प्रतिलभ्य ज्ञात्वा । सहस्रनेत्रा सेनासहस्रनायकेन सहसा प्रतिलभ्य प्रत्युत्थाय पञ्चसहस्रसङ्ख्याकाः जनकदासाः किङ्कराः । तथोक्तं वाल्मीकिमहर्षिणा । सङ्ग्रहरामायणेऽपि 'वीरोत्तमैः पञ्चसहस्रसङ्ख्यैः वराच्छिवस्यैव वरं शिवास्त्रम् ।।' १४-१९।।

**अतिविशद–** सहस्रनेत्रावरजं गविष्ठमित्यत्र गवि स्वर्गे विद्यमानमिवेति लुप्तोपमा । गवि भूम्यां वा ।।

**गूढवाक्यार्थ–** गविष्ठं भूमाववतीर्णम् । सहस्रनेत्रावरजं वामनावतारं तं रामम् । चतुर्मूर्तेः मुकुन्दस्य मूर्तिराद्याग्रतोऽभवत् । अन्येषु त्रिषु तिस्रोऽन्या अविशन्निति सन्मतम् ।। इति सङ्ग्रहोक्तेर्विरोध इति न वाच्यम् । 'तस्मादेव चतुर्मूर्तिश्रुतिसन्तोषिताद्धरेः । आजहार भरद्वाजो रूपं नारायणाभिधम् ।।' इत्युक्तप्रकारेण सङ्कर्षणप्रद्युम्नवासुदेवानिरुद्धैः नारायणाभिव्यक्तिवत् प्रकृतेऽप्युपपत्तेः ।।१४।।

**मेने[1] च जामातरमात्मकन्यागुणोचितं रूपनवावतारम् ।**
**उवाच चास्मा ऋषिरुग्रतेजाः कुरुष्व जामातरमेनमाश्विति ।।१५।।**

**व्यासतीर्थीया–** नवश्चासौ अवतारश्च नवावतारः । रूपेण नवावतारः रूपनवावतारः ।।१५।।

**वेदाङ्गतीर्थीया–** रूपनवावतारम् । नूतनरूपेणावतीर्णम् । असदृशरूपमित्यर्थः ।।१५।।

**सत्याभिनवीया–** तत्रैव मेने च जामातरं... इति श्लोके रूपनवावतारमित्यस्य रूपेण नवपुरुषः इति दृश्यमानमित्यर्थः । परमसुन्दरमिति तात्पर्यार्थः ।।१५।।

**सत्यधर्मीया–** विदेहेशः श्रीशसन्दर्शनेनैव सीतापतिर्भवितुमविता देवान्युक्त* इति सोऽतिमतिमत्वात् अमनुत मनुजाधिप इति शतमतिर्वदति– **मेन इति** ।। न केवलं देवमेवमार्चिचत् अपि तु पतिः सीताया इति मेन इति समुच्चये चः । मन ज्ञाने लिट् । अजानात् । तन्मननं मनआरूढं करोति– **जामातरमिति** ।। सुतापतिर्जामाता तम् । 'जामाता दुहितुः पतिः' इत्यमरः । 'नप्त्रादि' [उणादि.२६०] सूत्रे निपातनात् जायां मातीत्यन्तर्भावितणौ तृचि च भवति । जनकमननजनको रामगुण एव नतु परोपदेश इत्याह– **आत्मकन्यागुणोचितमिति** ।। आत्मनः स्वस्य कन्या दीप्तिमती

---

१. विदेहः शिवधनुर्भङ्गात् पूर्वमेव सर्वमनोभिरामः रामएव सीतायाःपतिः इति मेने इति पद्मपुराणोक्तां कथां सङ्गृह्णाति- **मेन इति** ।। तथा हि पाद्मे- प्रदातुं दुहितां तस्मै मनसा चिन्तयत् प्रभुः । [उ.खं.२४५.१४३]

*. अस्पष्टमिदं पदम् ।

सुता । 'कनी दीप्तौ' अस्मात् 'अघ्न्यादयश्च' [उणादि.५६१] इति यक् । 'वयसि प्रथम' [कौ.४७८] इति ङीप् न भवति । "कन्यायाः कनीन च' [कौ.१११९] इति निर्देशात्" इत्युक्तेः[१] टापि कन्येति भवति । 'कन्या कुमारिका नार्योः' इति विश्वमेदिन्यौ [यद्विकम्.७] । तस्या ये गुणाश्चातुर्यसौन्दर्यमाधुर्य-गाम्भीर्यादयः तेषामुचितोऽयोग्यः अयमपि चातुर्यादिमानित्यनयोर्नयोपेतं दाम्पत्यमिति भावः । कमला कोमलनूतनतनुमती रामोऽपि रामापरमरमामनोरमनवयौवनतनुमानिति तन्मननं युक्तियुक्तमिति वक्ति– **रूपनवावतारमिति** ।। रूपेण नवो नूत्नो अवतारो दशरथप्रादुर्भूतदेहो यस्य । रूपं नवं यस्मिन् सोऽवतारो यस्येति वा । अवतारग्रहणेन शरीरस्य रेतोहेतुकतां निराचकार ग्रन्थकार इति ज्ञेयम् । रूपं दृश्यमानं रामरूपं नवनवसङ्ख्याका अवतारा मत्स्याद्या यस्य स तथा तं वा । मत्स्यादिनवतनू राम इत्यपि स्वापत्यपतित्व उपपत्तिः सूचिता । आत्मत एव स्वेच्छयैव कन्या कन्यात्वेनाविर्भूता ननु शुक्लशोणितसम्वन्धवतीत्यर्थः । यथोक्तं श्रीरामायणे– 'सुतामयोनिजां सीतां दद्यां दाशरथेरहम्' इति अतीतानागतवेत्तेति विश्वामित्रो जनकमानसिकभावं विदित्वा अवददिति वदति– **उवाचेति** ।। ऋषिः । उग्रं सत्वरं फलोपलम्भकत्वेन तीक्ष्णं तेजस्तपसासादितं वर्चो यस्य स तथा । 'उच समवाये' 'ऋज्र' [उणादि. १९६] इत्यादिना रन् गश्चान्तादेशः । 'उग्रः शम्भुकठोरयोः' । तिजतेः पुगन्तगुणे 'सर्वधातुभ्य' [उणादि. ६३८] इति असुनि तेज इति भवति । 'तेजो वर्चःप्रभावयोः' इति विश्वमेदिन्यौ । अस्मै जनकाय उवाच अवदत् । वाग्दानमकरोदिति यावत् । तेन च चतुर्थीयुक्ता इति ध्येयम् । 'ब्रूञ् व्यक्तायां वाचि' इत्यतो लिटि 'ब्रुवो वचिः' [कौ.२४५३] इति वच्यादेशे द्वित्वे अभ्यासस्य हलः शेषे ववचेति जाते सम्प्रसारणे वचीति दीर्घे च उवाचेति ज्ञेयम् । किमवादीदित्यत आह– **कुरुष्वेति** ।। एनं इमं एतं वा रामं जामातरं कुरुष्व कुरु । इमं रामं आत्मकन्यागुणोचितं जामातरं भवान् व्यजानादेनं जामातरमाशु कुरुष्व इत्यन्वयः । जनकेन जामातृतामननरूपं किंचित्कार्यं विधातुमुपात्तस्य पुना रामस्य जामात्रीकरणरूपकार्यान्तरं प्रत्युपादानविवक्षया अन्वादेशे 'द्वितीयाटौस्स्वेनः' [कौ.३५१] इति इदमो वा एतदो वा एनादेशे एनमिति भवति । एवमुत्तरत्रापि बोध्यम् । डुकृञ् करणे लोट् । 'तनादिकृञ्भ्य उः' [कौ.२४६६] इत्युः । स्वरितेत्वादात्मनेपदम् । 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' [वा.पा.सू. २-३-१३] इत्यभिधानात् पत्ये शेत इत्यादिवत् वचनक्रियया विदेहमभिप्रैतीति उवाचास्मै इति चतुर्थी वा । पादत्रयेण विश्वामित्रो अहल्यापुत्रं प्रति मात्रा सत्रा गौतमस्य सङ्गमनादिश्रीरामसमारचितं चरितं वक्तीत्यपि वक्ति– **ऋषिरिति** ।। 'श्वः प्रभाते चोग्रतेजा' इति रामायणस्थोग्रतेजः पदानुवादेन शतानन्देन अनन्तानन्दं प्रति सानन्दं विश्वामित्रवंशाद्याशंसनादिका कथा तत्प्रथमभाविन्यनुसन्धेया इति सूचितवान् सूचितचेता इति ध्येयम् । ऋषिर्महातेजा अस्मै शतानन्दाय चः अनुक्तसमुच्चायकः सन्

---

१. 'वयसि प्रथमे' इति सूत्रव्याख्यावसरे सि.कौमुद्यां उक्तम् ।

शतानन्दप्रश्नानन्तरमिति सूचयति । तथाच श्रीरामायणे– 'अपि ते मुनिशर्दूल' [बा.का.५१-४] इत्यारभ्य 'तच्छ्रुत्वा वचनं तस्य' [बा.का.५१-१२] इत्यन्तेन नरस्य सर्वस्या अर्थस्य प्रतिपादनात् । आत्मनः स्वस्याः कन्यागुणो परपुरुषप्रधर्षणे सत्यपि कन्येति व्यवहारहेतुर्गुणो यस्याः सा । आत्मनः परमात्मनः प्रसादात् कन्यागुणो यस्या इति वा । न केवलमबला जाता अपि तु अवन्यां धन्या कन्येति ख्यातिं च प्राप्ता इति तात्पर्यम् । प्राचीननार्याकारतोऽपि रुचिररूपमाप तापसपत्नीति निरूपयति– **रूपनवेति** ।। रूपेण नवा नूतना । रूपं नवं यस्याः सा वा । अनियमाद्रूपनवेति नवशब्दस्य परनिपातः । सतामवनं देवदेवस्वभाव इत्यावेदयति– **अवतेति** ।। अरमत्यन्तम् । अवता रक्षयता सत इति कृतेति च शेषः । जामातरं जनयतीति जो जनको गौतमः तेन । आ सम्यगायोजिता च सा माता च तां जामातरम् । मानधातोर्नलोपादिके च सति मातेति भवति । उवाच । जगदवता तव माता भर्त्रा संयोजितेति वृत्तं सद्वृत्तो मुनिर्मुनये शतानन्दाय अवोचदिति भावः । यस्माद्रामो रमया रमण्या निरन्तरमवियुक्तः ततो हेतोरहल्यायाः पतिविरहमसहमानः सन्मानिर्नी अतनुतेतीदमुचितमच्युतस्येति वक्ति– **मेन इति** ।। मायाः रमायाः । 'इन्दिरा लोकमाता मा' इत्यमरः । इनः पतिः । तस्मिन् रामे उचितं योग्यम् । योग्यतया नारीकरणमिति लभ्यते । इतिना वा नारीकरणपरामर्शः । ऋषिरेव स्वमातृद्धारादिज्ञानवान् शतानन्दः । अस्मै रामाय । उग्रतेजा इति विश्वामित्रपर्यन्तं तत्पूर्वजचरितमिव तत्कृतं च तदनुष्ठितवशिष्ठस्नेहसम्पादनादितपस्तेजश्चोवाच । तथा च श्रीरामायणे– [बा.का.५१-१०-११] 'प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् । नातिक्रान्तं मुनिश्रेष्ठ यत्कर्तव्यं कृतं मया । सङ्गता मुनिना पत्नी भार्गवेणेव रेणुका ।।' इति विश्वामित्रवाक्यम् । 'तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य भाषितम् । शतानन्दो महातेजा रामं वचनमब्रवीत् ।।'[बा.का.५१-१२] इत्यारभ्य 'एवमुक्त्वा महातेजा विरराम द्विजोत्तमः' [बा.का.६५-३०] इति शतानन्दवचः । सङ्ग्रहेऽपि । 'शतानन्द' [बा.का.६-४३] इत्यारभ्य 'गौतमात्मजगिरं स राघव' [बा.का.६.५६] इत्यन्तेनायमर्थः संगृहीतः । अराणां दोषाणामयं आरो दोषी तमप्यवतेति वा सम्बन्धसामान्यम् । 'रुचिवचि' [उणादि.६३५] इति कितचि 'वचिस्वपि' [कौ.२४०९] इति सम्प्रसारणे उचितमति भवति । 'सातिभ्यां मनिन्मनिणौ' [उणादि.६०२] इति अत धातोः मनिणि आत्मेति भवति । 'आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि ।।' इति मेदिनी [नत्रिकम्.३८-३९] । 'आत्मा यत्ने धृतौ देहे स्वभावे परमात्मनि' इत्यभिधानात् । 'नूतनं नवम्' इत्यमरः । 'तॄ प्लवनतरणयोः' अस्मात् अव पूर्वात् घञि तार इति ज्ञेयम् ।।१५।।

**वरदराजीया–** आत्मनः स्वस्य कन्यायाः सीतायाः गुणानां सौन्दर्यादीनां उचितं योग्यं रूपं नवावतारं अपूर्वावतारं असदृशरूपं रामं जामातरं मेने निश्चितवानित्यर्थः । उग्रतेजाः ऋषिर्विश्वामित्रः एनं रामं जामातरमाशु कुरुष्वेत्यस्मै जनकायोवाचेति सम्बन्धः ।।१५।।

**जनार्दनीया–** रूपेण नवावतारो यस्य स तथा तम् । असदृशरूपं इति यावत् । जामातरं मेने अवेत् । अस्मै जनकाय ।।१५।।

**चट्टी–** आत्मनः स्वस्य कन्याया गुणानां सौन्दर्यादीनामुचितं योग्यं रूपनवावतारं रूपस्य सौन्दर्यस्य यो नवः नूतनः प्रादुर्भावस्तमिव स्थितमित्यर्थः । अपूर्वं सौन्दर्यमूर्तिमदिदानीमेव लोके अवततारेव स्थितमिति भावः । एतादृशं रामं जामातरं मेने अवैत् । उग्रतेजाः ऋषिर्विश्वामित्रः एनं रामं जामातरमाशु कुरुष्वेत्यस्मै जनकाय उवाचेति सम्बन्धः ।।१५।।

**अनन्तभट्टीया–** रूपेण नवावतारो रूपनवावतारः ।।१५।।

**ताम्रपर्णीया–** रूपनवावतारं रूपेण प्रतिक्षणमभिनवतया अवतीर्णवद्विद्यमानम् ।।१५-१८।।

**भारतश्री–** नवेत्यस्य वीक्ष्य[1] ।।१५-२९।।

**गूढवाक्यार्थ–** रूपमिवावतारम् । रूपेण प्रतिक्षणं अभिनवतया अवतीर्णवद् विद्यमानम् ।।१५।।

**स आह चैनं परमं वचस्ते करोमि नात्रास्ति विचारणा मे ।**
**शृणुष्व मेऽथापि यथा प्रतिज्ञा सुताप्रदानाय कृता पुरस्तात् ।।१६।।**

**व्यासतीर्थीया–** यथा यादृशी ।।१६।।

**वेदाङ्गतीर्थीया–** अथापि सुताप्रदाने सन्देहाभावेऽपि ।।१६-१७।।

**वादिराजीया–** मे सुताप्रदानाय इति सम्बन्धः ।।१६-१७।।

**सत्यधर्मीया–** मुनिवचनश्रवणसमनन्तरमेव एवमेवेति राजतनयाय निजतनयां ददौ किमित्यतो निःसन्देहोऽपि विदेहो राघवामोघपराक्रमं प्रकटयितुं स्वेन कृतां प्रतिज्ञां सर्वज्ञं प्रत्यपि विज्ञापयतीत्याह– **स इति** ।। स एवम् । गाधिसुतबोधितो जनकः एनं मुनिं प्रति आह उवाच । 'ब्रुवः पञ्चानामादित आहो ब्रुव' [कौ.२४५०] इत्याहादेशे आहेति भवति । हे मुने इति शेषः । ते तव वचो वचनम् । वचधातोः असुनि वच इति भवति । 'वचनं वच' इत्यमरः । करोमि करिष्यामि । वचनकरणं नाम भाषणविषयार्थानुष्ठानमित्यर्थः । करणे कारणमाह– **परममिति** ।। अवश्यकार्यश्रेयः । परा उत्तमा मा ज्ञानं सम्पद्वा येन तद्वा । एतेन ज्ञाननिदानतया सम्पत्प्रदतया च तव वचः कर्तुमुचितमिति सूचयति । अत्र त्वदुक्तार्थकरणविषये मे मम विचारणा विचारः, करोमि वा न वा इति सन्देह इति यावत् । नास्ति न वर्तते । तर्हि त्वं सत्वरं कुर्वित्यत उभयतःपाशारज्जुन्यायेन अकरणेऽपि कारणमस्तीति

---

१. मूलकोशेषु अस्पष्टमिदं वाक्यम् ।

श्रावयतीत्याह– **शृणुष्वेति** ।। अथापि त्वदाज्ञाया अनुल्लङ्घ्यत्वेऽपि । मे मया प्रतिज्ञा प्रतिश्रवः सुताप्रदानाय असुतायाः सीतायाः प्रदानं तदर्थं सुताप्रदानाय । 'प्रतिश्रवः प्रतिज्ञानं प्रतिज्ञा' इति मेदिनी । 'चर्चा विचारणा' इत्यमरः । पुरस्तात् रामसमागमनात् पूर्वकाल एव । 'दिक्शब्देभ्य...' इति [कौ.१९७४] दिक्षु रूढेभ्यः शब्देभ्यः स्वार्थेऽस्तातिः प्रत्ययः । तथाच 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इति [कौ.१९७५] च असिः तद्योगे च एषां पुर, अध् , अव् इत्यादेशाः स्युः । 'अस्ताति च' इति [कौ.१९७६] पूर्वशब्दस्य पुरादेशे पुरस्तादिति भवति । यथा येन प्रकारेण । 'प्रकारवचने थाल्' इति [कौ.१९७१] थालि यथेति भवति । तं प्रकारं शृणुष्व शृणु । 'श्रु श्रवणे' अस्मात् 'श्रुवः शृ च' [कौ.२३८६] इति शृइत्यादेशे चशब्दसूचित श्नौ च प्रत्यये लोटि थासः स आदेशे 'सवाभ्यां वामौ' इति [कौ.२२५२] शृणुस्वेति जाते इणः परत्वात् षत्वे च शृणुष्वेति भवति । श्नोः ङित्वात् न गुणः । नायं भ्वादिः तस्य शुद्धपरस्मैपदत्वात् । किन्तु स्वादिरिति सम्भवति आत्मनेपदमिति ज्ञेयम् । यद्वा सर्वज्ञत्वेन मुनेः अज्ञातप्रमेयाभावात् शृणुष्वेति क्रियाविनिमयात् कर्तरि कर्मव्यतिहारत्वात् आत्मनेपदोपपत्तिः । वेः पक्षिणो गरुडस्य चारणमितस्ततो भ्रामणं येन स विचारणो गरुडारूढतो मा सम्पद् ज्ञानं वा आ सम्यग्यस्य स विचारणामः प्रपञ्चः, तस्मिन्भगवत्प्रसादासादितसम्पत्के परमं यथा भवति तथा ना पुरुषः, पुरुषोत्तम इति यावत् । हे अत्र । अः त्रायको यस्य तत्सम्बुद्धिः । रक्षःक्षयकरणेन रामो रक्षको अस्येति विश्वामित्रः अस्ति वर्तते । तदन्यो न कोऽप्यवन्यां मान्यो नास्तीत्यर्थः । अथाप्येवं ज्ञाने सत्यपि प्रतिज्ञा मा बाधत इति गाधिजं बोधयामासेति भावः । अं रामं त्रायते लोकदृष्ट्या इति वा अत्रः तत्सम्बोधनम् । यथोक्तं रामायणे 'गोप्ता कुशिकपुत्रस्ते' इति । यथा अतिप्रसिद्धा प्रपञ्चे मत्प्रतिज्ञेति तं प्रकारं शृणु । अनेन जनकः स्वतनूजाकृते कृतवान् प्रतिज्ञामिति सा सर्वजनीनेति न सा सहसा त्यक्तुं युक्तेति सूचयति । तथाच सङ्ग्रहे [बा.का.७-६] 'प्रतिश्रवो मे विससार लोके सहस्ररश्मेरिव रश्मिराशिः' इति । 'परमम्' इत्येतत् 'एनम्' इत्यनेन वा अन्वेति । परमं एनं मुनिं प्रत्याहेति । यदि मे मया पुरस्तात् कृता यथा प्रतिज्ञा तथा चेत् आमे सम्यक्सम्पत्समेते जने सत्यपि तं विहाय विचारणा सदा भगवत्समीपे चरन्ती सुताप्रदानाय दानार्थं अस्ति देयत्वेन मम उपादेयत्वेन तस्य च वर्तत इति वा । सुता पुत्री प्रदानाय प्रदानार्थम् । अयेन मच्छुभावहदैवते एव कृतेति वा । 'अयः शुभावहो विधिः' इत्यमरः । प्रदानेन हेतुना आयार्थं कीर्त्यानन्दपूर्त्यर्थं कृतेति वा । प्रकटीकृतेति यावत् । 'तदस्मिन् वृद्ध्यलाभ' इति [कौ.१७१३] सूत्रव्याख्याने आयशब्दो ग्रामादौ स्वामिग्राह्यभागलाभविशेषे रूढ इत्युक्तं तथापि सामान्यलाभमात्रपरो ज्ञेयः । आय इवाय इति वा ग्रहः । सर्वस्वामिनो रामस्य योग्यभागत्वेन वायः ।।१६।।

**वरदराजीया–** जनकः एवं विश्वामित्रमाह । किमिति । ते परमं वचः करोमि । अत्र भवदुक्तेऽर्थे मे विचारणा संशयो नास्ति । अथापि यद्यपि एवं निश्चयस्तथापीत्यर्थः । पुरस्तात्पूर्वं मे मया सुतायाः सीतायाः प्रदानाय यथा येन प्रकारेण प्रतिज्ञा कृता तं प्रकारं शृणुष्वेत्यर्थः ।।१६।।

**जनार्दनीया–** स जनकः एनं विश्वामित्रं अत्र रामार्थं कन्याप्रदानविषये । अथापि एवमपि । पुरस्तात् पूर्वमेव । मे मया सुताप्रदानाय यथा यादृशी प्रतिज्ञा कृता तथा तादृशी प्रतिज्ञां शृणुष्व इत्याह इति सम्बन्धः ।।१६।।

**चट्टी–** स जनकः एनं विश्वामित्रमाह । किमिति । ते परमं वचः करोमि । अत्र भवदुक्ते धर्मे विचारणं संशयो नास्ति । अथापि एवमपि पुरस्तात् पूर्वं मे मया सुताप्रदानाय यथा यादृशी प्रतिज्ञा कृता तथा तादृशीं शृणुष्व ।।१६।।

**अनन्तभट्टीया–** पुरस्तात् पूर्वम् ।।१६-१७।।

**गूढवाक्यार्थ–** पुरस्तात् पूर्वम् ।।१६।।

**तपो मया चीर्णमुमापतेः[१] पुरा वरायुधावाप्तिधृतेन चेतसा ।**
**स मे ददौ दिव्यमिदं [२]धनुस्तदा कथश्चनाचाल्यमृते पिनाकिनम् ।।१७।।**

---

१. जनकः न केवलं उमापतिं तपसा तुतोष । अपि तु उमामपि तोषयामास । तुष्टा सा स्वोत्तमोत्तमां रमामेव पुत्रीत्वेन ददौ । उमापतिस्तु स्वधनुर्भङ्गद्वारा सर्वदेवोत्तमो राम इति दृढीकर्तुं स्वधनुःश्रेष्ठं पिनाकं जनकाय ददौ । तामेतां कूर्मपुराणोक्तां कथां पशुपत्यादिशब्दप्रयोगं विहाय उमापतिशब्दप्रयोगेण समसूचयन् आचार्यचरणाः । तथा हि कौर्मे- तपसा तोषिता देवी जनकेन गिरीन्द्रजा । प्रायच्छत् जानकीं सीतां राममेवाश्रितां पतिम् ।। प्रीतश्च भगवान् ईशः त्रिशूली नीललोहितः । प्रददौ शत्रुनाशाय जनकायाद्भुतं धनुः ।। [कू.पु.पू.भा.२१.२०-२१] कूर्मवचने धनुषः अद्भुतत्वकथनेन पुराणान्तरगतवचनैश्च पिनाकत्वमवगम्यते ।

२. अत्रेदमवगन्तव्यम् । देवायुधनिधायकः वरुणः जनकाय त्रीणि धनूंषि ददौ । एकं विष्णुस्तम्भितेन रुद्रेण स्वस्मिन् निधापितम्, धनुर्द्वयं स्वस्मिन्नेव स्थितम् । तत्राजगवं धनुः रामः सीतास्वयंवरे बभञ्ज । अपरे द्वे धनूंषि जनकः श्रीरामलक्ष्मणाभ्यां विवाहकाले दत्तवान् । तदेव धनुर्द्वयं वनगमनकाले श्रीरामलक्ष्मणौ गृहीत्वा निर्गतौ तस्यैव धनुषः ज्याच्छेदनं खरश्चकार । नतु शार्ङ्गधनुषः । तथाहि आर्षवचनम्- 'ये च राज्ञो ददौ दिव्ये महात्मा वरणः स्वयम् । जनकस्य महायज्ञे धनुषी रौद्रदर्शने।। अभेद्ये कवचे दिव्ये तूणी चाक्षय्यसायकौ । आदित्यविमलाभौ द्वौ खड्गौ हेमपरिष्कृतौ ।। सत्कृत्यं निहितं सर्वमेतदाचार्यसद्मनि । सर्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण।।' इत्यादि । २.३१.२९-३१]

श्रावयतीत्याह– **शृणुष्वेति** ।। अथापि त्वदाज्ञाया अनुल्लङ्घ्यत्वेऽपि । मे मया प्रतिज्ञा प्रतिश्रवः सुताप्रदानाय असुतायाः सीतायाः प्रदानं तदर्थं सुताप्रदानाय । 'प्रतिश्रवः प्रतिज्ञानं प्रतिज्ञा' इति मेदिनी । 'चर्चा विचारणा' इत्यमरः । पुरस्तात् रामसमागमनात् पूर्वकाल एव । 'दिक्शब्देभ्य...' इति [कौ.१९७४] दिक्षु रूढेभ्यः शब्देभ्यः स्वार्थेऽस्तातिः प्रत्ययः । तथाच 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इति [कौ.१९७५] च असिः तद्योगे च एषां पुर, अध् , अव् इत्यादेशाः स्युः । 'अस्ताति च' इति [कौ.१९७६] पूर्वशब्दस्य पुरादेशे पुरस्तादिति भवति । यथा येन प्रकारेण । 'प्रकारवचने थाल्' इति [कौ.१९७१] थालि यथेति भवति । तं प्रकारं शृणुष्व शृणु । 'श्रु श्रवणे' अस्मात् 'श्रुवः शृ च' [कौ.२३८६] इति शृइत्यादेशे चशब्दसूचित श्नौ च प्रत्यये लोटि थासः स आदेशे 'सवाभ्यां वामौ' इति [कौ.२२५२] शृणुस्वेति जाते इणः परत्वात् षत्वे च शृणुष्वेति भवति । श्नोः ङित्वात् न गुणः । नायं भ्वादिः तस्य शुद्धपरस्मैपदत्वात् । किन्तु स्वादिरिति सम्भवति आत्मनेपदमिति ज्ञेयम् । यद्वा सर्वज्ञत्वेन मुनेः अज्ञातप्रमेयाभावात् शृणुष्वेति क्रियाविनिमयात् कर्तरि कर्मव्यतिहारत्वात् आत्मनेपदोपपत्तिः । वेः पक्षिणो गरुडस्य चारणमितस्ततो भ्रामणं येन स विचारणो गरुडारुढतो मा सम्पद् ज्ञानं वा आ सम्यग्यस्य स विचारणामः प्रपञ्चः, तस्मिन्भगवत्प्रसादासादितसम्पत्के परमं यथा भवति तथा ना पुरुषः, पुरुषोत्तम इति यावत् । हे अत्र । अः त्रायको यस्य तत्सम्बुद्धिः । रक्षःक्षयकरणेन रामो रक्षको अस्येति विश्वामित्रः अस्ति वर्तते । तदन्यो न कोऽप्यवन्यां मान्यो नास्तीत्यर्थः । अथाप्येवं ज्ञाने सत्यपि प्रतिज्ञा मा बाधत इति गाधिजं बोधयामासेति भावः । अं रामं त्रायते लोकदृष्ट्या इति वा अत्रः तत्सम्बोधनम् । यथोक्तं रामायणे 'गोप्ता कुशिकपुत्रस्ते' इति । यथा अतिप्रसिद्धा प्रपञ्चे मत्प्रतिज्ञेति तं प्रकारं शृणु । अनेन जनकः स्वतनूजाकृते कृतवान् प्रतिज्ञामिति सा सर्वजनीनेति न सा सहसा त्यक्तुं युक्तेति सूचयति । तथाच सङ्ग्रहे [बा.का.७-६] 'प्रतिश्रवो मे विससार लोके सहस्ररश्मेरिव रश्मिराशिः' इति । 'परमम्' इत्येतत् 'एनम्' इत्यनेन वा अन्वेति । परमं एनं मुनिं प्रत्याहेति । यदि मे मया पुरस्तात् कृता यथा प्रतिज्ञा तथा चेत् आमे सम्यक्सम्पत्समेते जने सत्यपि तं विहाय विचारणा सदा भगवत्समीपे चरन्ती सुताप्रदानाय दानार्थं अस्ति देयत्वेन मम उपादेयत्वेन तस्य च वर्तत इति वा । सुता पुत्री प्रदानाय प्रदानार्थम् । अयेन मच्छुभावहदैवते एव कृतेति वा । 'अयः शुभावहो विधिः' इत्यमरः । प्रदानेन हेतुना आयार्थं कीर्त्यानन्दपूर्त्यर्थं कृतेति वा । प्रकटीकृतेति यावत् । 'तदस्मिन् वृद्ध्यलाभ' इति [कौ.१७१३] सूत्रव्याख्याने आयशब्दो ग्रामादौ स्वामिग्राह्यभागलाभविशेषे रूढ इत्युक्तं तथापि सामान्यलाभमात्रपरो ज्ञेयः । आय इवाय इति वा ग्रहः । सर्वस्वामिनो रामस्य योग्यभागत्वेन वायः ।।१६।।

**वरदराजीया–** जनकः एवं विश्वामित्रमाह । किमिति । ते परमं वचः करोमि । अत्र भवदुक्तेऽर्थे मे विचारणा संशयो नास्ति । अथापि यद्यपि एवं निश्चयस्तथापीत्यर्थः । पुरस्तात्पूर्वं मे मया सुतायाः सीतायाः प्रदानाय यथा येन प्रकारेण प्रतिज्ञा कृता तं प्रकारं शृणुष्वेत्यर्थः ।।१६।।

**जनार्दनीया–** स जनकः एनं विश्वामित्रं अत्र रामार्थं कन्याप्रदानविषये । अथापि एवमपि । पुरस्तात् पूर्वमेव । मे मया सुताप्रदानाय यथा यादृशी प्रतिज्ञा कृता तथा तादृशी प्रतिज्ञां शृणुष्व इत्याह इति सम्बन्धः ।।१६।।

**चट्टी–** स जनकः एनं विश्वामित्रमाह । किमिति । ते परमं वचः करोमि । अत्र भवदुक्ते धर्मे विचारणं संशयो नास्ति । अथापि एवमपि पुरस्तात् पूर्वं मे मया सुताप्रदानाय यथा यादृशी प्रतिज्ञा कृता तथा तादृशीं शृणुष्व ।।१६।।

**अनन्तभट्टीया–** पुरस्तात् पूर्वम् ।।१६-१७।।

**गूढवाक्यार्थ–** पुरस्तात् पूर्वम् ।।१६।।

**तपो मया चीर्णमुमापतेः[१] पुरा वरायुधावाप्तिधृतेन चेतसा ।**
**स मे ददौ दिव्यमिदं [२]धनुस्तदा कथञ्चनाचाल्यमृते पिनाकिनम् ।।१७।।**

---

१. जनकः न केवलं उमापतिं तपसा तुतोष । अपि तु उमामपि तोषयामास । तुष्टा सा स्वोत्तमोत्तमां रमामेव पुत्रीत्वेन ददौ । उमापतिस्तु स्वधनुर्भङ्गद्वारा सर्वदेवोत्तमो राम इति दृढीकर्तुं स्वधनुःश्रेष्ठं पिनाकं जनकाय ददौ । तामेतां कूर्मपुराणोक्तां कथां पशुपत्यादिशब्दप्रयोगं विहाय उमापतिशब्दप्रयोगेण समसूचयन् आचार्यचरणाः । तथा हि कौर्मे- तपसा तोषिता देवी जनकेन गिरीन्द्रजा । प्रायच्छत् जानकीं सीतां राममेवाश्रितां पतिम् ।। प्रीतश्च भगवान् ईशः त्रिशूली नीललोहितः । प्रददौ शत्रुनाशाय जनकायाद्भुतं धनुः ।। [कू.पु.पू.भा.२१.२०-२१] कूर्मवचने धनुषः अद्भुतत्वकथनेन पुराणान्तरगतवचनैश्च पिनाकत्वमवगम्यते ।

२. अत्रेदमवगन्तव्यम् । देवायुधनिधायकः वरुणः जनकाय त्रीणि धनूंषि ददौ । एकं विष्णुस्तम्भितेन रुद्रेण स्वस्मिन् निधापितम्, धनुर्द्वयं स्वस्मिन्नेव स्थितम् । तत्राजगवं धनुः रामः सीतास्वयंवरे बभञ्ज । अपरे द्वे धनूंषि जनकः श्रीरामलक्ष्मणाभ्यां विवाहकाले दत्तवान् । तदेव धनुर्द्वयं वनगमनकाले श्रीरामलक्ष्मणौ गृहीत्वा निर्गतौ तस्यैव धनुषः ज्याच्छेदनं खरश्चकार । ननु शार्ङ्गधनुषः । तथाहि आर्षवचनम्- 'ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् । जनकस्य महायज्ञे धनुषी रौद्रदर्शने।। अभेद्ये कवचे दिव्ये तूणी चाक्षय्यसायकौ । आदित्यविमलाभौ द्वौ खड्गौ हेमपरिष्कृतौ ।। सत्कृत्यं निहितं सर्वमेतदाचार्यसद्मनि । सर्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण।।' इत्यादि । २.३१.२९-३१]

**सत्यधर्मीया–** यन्निमित्ता प्रतिज्ञा कृता तदवाप्तिप्रकारं कथयति मिथिल इति कथयति– **तप इति** ।। मया कर्त्रा । तपः कृच्छ्रचान्द्रायणाद्यात्मकं कर्म । 'तपः कृच्छ्रादि कर्म च' इत्यमरः । आलोचनार्थस्य तपतेः असुनि तप इति भवति । चीर्णं अचारि । किमत्यर्थमर्थं तपोनुष्ठितं अकष्टसहेन भवतेत्यत आह– **वरायुधावाप्तिधृतेन चेतसेति** ।। वरस्योत्तमस्य आयुधस्य धनुषः । मदोकसि न्यासभूतस्य शरासनस्य । 'आयुधं तु प्रहरणम्' इत्यमरः । आयुं आयुर्धत्त इत्यायुधम् । एते [उसिः] प्रत्यये णित्वादादिवृद्धौ अयादेशे चायुरिति भवति । 'आयुर्जीवितकालो ना' इत्यमरः । 'तनुषा च तनुं धनुषा च धनुं विदुरायुषा च आयुम्' इति द्विरूपकोशः । विरोधिसम्बाधनिरोधनेन जीवनसाधनता आयुधस्येति ध्येयम् । त्रिपुरद्विषो धनुषोऽवाप्तिर्मत्कार्योपयोगिता तस्यै धृतं स्थापितं तेन । चेतसा मनसा । तपसा प्रसादितो हरः इदं मत्पूर्वजोपार्जितं ऊर्जितं धनुः शरासनं मे मह्यं ददौ । यथोपयोगि भवेत्कृपया तथा चकार हर इति दानमौपचारिकं ज्ञेयम् । यद्वा वरस्य हरायुधस्य । अवति सर्वमित्यवो राघवः । पचाद्यच् । तस्य आप्तिः प्राप्तिः तदर्थं धृतेन चेतसेति । क्वत्यं प्राक् तदित्यतो वक्ति– **दिव्यमिति** ।। दिवि भवं दिव्यम् । शिवोदवसिते विद्यमानं प्रकाशमानमिति वा । कथञ्चन केनापि प्रकारेण । उमापतेः उमायाः पतिः भर्ता इत्युमापती रुद्रस्तस्मात् स्वस्माद् ऋते विना । अचाल्यं चालयितुमशक्यम् । चलतेर्ण्यति रूपम् । ओ रुद्रस्य मा लक्ष्मीरित्युमा कात्यायनी तस्याः पतिस्तस्य । ओ रुद्रस्य तद्विषयकमिति यावत् । तपो मा मा कुर्विति मात्रा निषिद्धेति वा उमा । अजादित्वात् टाप् । आकारान्ताद्वा टाप् । 'टापाम्' इति भाष्यप्रयोगात् । यद्धनुः मत्पूर्वजदेवराताय ददौ इदं तन्न्यासभूतं मे मत्तनयोचितवरपरीक्षणकार्यकरत्वेन ददौ सदाशिव इति भावः । नतु नूतनं धनुस्स्थाणुः प्रायच्छन्नृपायेति ज्ञेयम् । यथोक्तं रामायणे– 'धनू रुद्रस्तु सङ्क्रुद्धो विदेहेषु महायशाः । देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ।।' इति ।

एतेन देवेन रुद्रेण देवैर्द्वारभूतैरात्तं दत्तं धनुर्यस्मै स देवरात इति देवरातपदनिर्वचनं सूचितं भवति । यद्वा प्रतिज्ञां ज्ञापयितुं तदुपयुक्तं वक्ति– **तप इति** ।। सुतार्थमागताः पार्थिवा मया प्रत्याख्याताः ख्याताः क्षत्रमुख्या अपि सङ्ख्यार्थमसङ्ख्याता मम पुरं न्यरुन्धन् । ततः संवत्सरानन्तरं यदा मदायोधनप्रधान–वसुधाधिपनिधनसाधनानि हीनानि तदनन्तरवान् चैतत्प्राक्तनश्च कालः पुरेत्यनेन विवक्ष्यते । पूर्वं मया । तपः, स्वर्गिवर्गं प्रति इति शेषः । यद्वा वृत्त्या अपि नाकिनमितिच्छेदेन नाकिनं स्वर्गिणं देवसमूहं प्रतीति वाऽन्वयः । चीर्णम् । किमर्थं तपो निलिम्पोत्तमान्प्रत्यचारि त्वयेत्यतो हेतुमाह– **वरायुधावाप्तिधृतेन चेतसेति** ।। वराणि मद्वैरिपराभवकारणतयोत्तराणि आयुधानि प्रहरणानि धनुरादीनि तेषामवाप्तिः प्राप्तिः तदर्थं धृतेन चेतसा । वराण्यायुधानि यस्य तच्चतुरङ्गं बलं वा तस्य अवाप्तौ धृतं चेतस्तेन वा । ते च सुमनसः कियन्त इत्यतो दर्शयति– **सम इति** ।। सर्वसमोऽयं समः । तेन च सर्वपर्यायात्

समशब्दाज्जसः शीभावे गुणे च सम इति भवति । समे सर्वे सुपर्वाणः पिनाकिनं रुद्रम् । पिनाकस्तन्नामकं कार्मुकं अस्यास्तीति पिनाकी । 'पिनाकादयश्च' [उणादि.४६३] इति निपातनात् पातेराकि नुमीत्वे च पिनाकशब्दो बोध्यः । 'पिनाकी प्रमथाधिप' इत्यमरः । तदा दक्षाध्वरविध्वंसनव्याजेन निजसमाज-भञ्जनसमये कथञ्चन बहुस्तवननमनादिसेवनेन प्रसादयामासुः इति शेषः । पिनाकीत्युक्त्या पिनाकीशाद्य-शक्यारोपश्चापो भूपाय पशुपेन न्यासभूतः प्रत्त इति चासूचि । स सुमनसामुपरि सुमानसः सन् शिवो धनुर्ददौ । तेभ्य इति शेषः । 'भृमृशी' [उणादि.७] इत्यादिना धनेरौ धनुर्भवति । भवति चोसि सान्तोऽपि धनुःशब्दः । 'धनुर्धन्वशरासनकार्मुकम्' इत्यमरः । 'धनुः पियाले ना न स्त्री राशिभेदे शरासन' इति मेदिनी [सत्रिकम्.२६] । धन्वन्तरिश्च 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' इति । 'अथास्त्रियां धनुश्चापौ' इत्यमरश्च । 'धनुषा च धनुर्विदुः' इति विश्वप्रकाशोऽपि । 'धनुरिवाजनि वक्रः' इति श्रीहर्षश्च इत्युत्तरत्रास्योपयोग इति अत्र प्रसङ्गादुक्तमिति ज्ञेयम् । चापस्वरूपं निरूपयति– **उमापतेरिति** ।। उमायाः पतिस्तस्मादृते । रुद्रं विना । कथञ्चनेत्यत्राप्यन्वेति । केनापि प्रकारेण नरेण वानरेण सुरेण असुरेण वेतरेण वा अचाल्यं बलाच्चालयितुमशक्यम् । एनैव नारायणावतारेण रामेणैव चाल्यमित्यप्य-स्यार्थ इति सूचयितुं अचाल्यमिति न्यभांत्सीद्भगवानिति ध्येयम् । 'घुप्रागुपागुदक्प्रतीचो यत्' इति दिवो यति दिव्यं इति भवति । मनोहरमिति वा । 'अन्यारादिरर्ते दिक्शब्दाश्चूत्तरपदा-जाहियुक्ते' इति [कौ.२९५] ऋतेशब्दयोगे पञ्चमीविधानादुमापतेः ऋते इत्येवान्वयः साधीयानिति ज्ञेयम् । स देवसमूहो महादेवेन स्वस्मै दत्तमिदं धनुर्मे मम पूर्वजाय ददौ । स देवसङ्घो मे मह्यम् । नाकिनं स्वर्गस्थितं देवगणं चतुरङ्गसहितं सहायाय ददौ इत्यावृत्त्या अन्वयः । तथाच श्रीमद्रामायणम्– [बा.का. ६६-८-२५]

'देवरात इति ख्यातो निमेः षष्ठो महीपतिः । न्यासोऽयं तस्य भगवन् हस्ते दत्तो महात्मनः ।।
दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् । विध्वंस्य त्रिदशान् रोषात् सलीलमिदमब्रवीत् ।।
यस्माद्भागार्थिनो भागं नाकल्पयत मे सुराः । वराङ्गाणि महार्हाणि धनुषा शातयामि वः ।।
ततो विमनसः सर्वे देवा वै मुनिपुङ्गव । प्रसादयन्त देवेशं तेषां प्रीतोऽभवद्भवः ।।
प्रीतियुक्तः स सर्वेषां ददौ तेषां महात्मनाम् । तदेतद्देवदेवस्य धनूरत्नं महात्मनः ।।
न्यासभूतं तदा न्यस्तमस्माकं पूर्वजे विभौ । अथ मे कृषति क्षेत्रं लाङ्गलादुत्थिता मम ।।
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता । भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा ।।
वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा । भूतलादुथितां तां तु वर्द्धमानां ममात्मजाम् ।।
वरयामासुरागम्य राजानो मुनिपुङ्गव । तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ।।
वीर्यशुल्केति भगवन् न ददामि सुतामहम् । ततः सर्वे नृपतयः समेत्य मुनिपुङ्गव ।।
मिथिलामप्युपागम्य वीर्यं जिज्ञासवस्तदा । तेषां जिज्ञासमानानां वीर्यशुल्कमुदाहृतम् ।।
[शैवं धनुरुपाहृतम्]

न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा । तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने ॥
प्रत्याख्याता नृपतयस्तन्निबोध तपोधन । ततः परमकोपेन राजानो मुनिपुङ्गव ॥
न्यरुन्धन्मिथिलां सर्वे वीर्यसन्देहमागताः । आत्मानमवधूतं मे विज्ञाय मुनिपुङ्गव ॥
रोषेण महताविष्टाः पीडयन्मिथिलां पुरीम् । ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ॥
साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः । ततो दैवगणान् सर्वान् तपसाहं प्रसादयम् ॥
ददुश्च परमं प्रीताश्चतुरङ्गबलं सुराः । ततो भग्ना नृपतयो हन्यमाना दिशो ययुः ॥
अवार्यवीर्यसन्दिग्धाः सामात्याः पापकर्मणः । तदेतन्मुनिशार्दूल..... ॥' इति ॥१७॥

**मधुसूदनीया–** ॥ **वरायुधावाप्तिधृतेन** ॥ वरस्य सर्वोत्कृष्टस्य आयुधस्य मद्गृहे विद्यमानस्य पूर्वं देवराताय मद्वंशजाय रुद्रेण दत्तस्य धनुषः अवाप्तिधृतेन मत्कृतिसाध्यत्वविषयकेन । यथेदं धनुः मया आदातुं शक्यं स्यादितीच्छयेत्यर्थः । यद्वा वरायुधस्य अवाप्तिं प्राप्तिं प्रति धृतेन चेतसा । तथा च मया वरायुधं मे स्यादितीच्छया तपसि कृते सति मद्गृहे विद्यमानं धनुरेव मह्यं रुद्रोऽदादिति भावः । इदं मद्गृहे विद्यमानं धनुर्ददौ साध्यं स्यादित्याज्ञां ददावित्यर्थः । तदुक्तम्– 'धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः । देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ॥' [१.७५.२०-२१] इति रामायणे ॥१७॥

**वरदराजीया–** पुरा पूर्वं वरायुधावाप्तिधृतेन उत्तमायुधप्राप्त्यानुसन्धानयुक्तेन चेतसा मनसा मया उमापतेः रुद्रस्य सम्बन्धि तपश्चीर्णं कृतमित्यर्थः । तत्तपश्चरणकाले स रुद्रः पिनाकिनं रुद्रमृते अन्यैः कथं न केनापि प्रकारेण अचाल्यं चालयितुमशक्यमिदं प्रकृतं धनुः मे ददावित्यर्थः ॥१७॥

**जनार्दनीया–** वरायुधस्यावाप्तौ धृतं तेन तथा । चेतसा अन्तःकरणेन । तपश्चीर्णम् । स रुद्रः पिनाकिनं ऋते रुद्रं विना अचाल्यं इदं पुरःस्थितं धनुः ॥१७॥

**चट्टी–** पुरा पूर्वं मया वरायुधस्यावाप्तौ धृतं यत्तेन चेतसा अन्तःकरणेन उमापतेः रुद्रस्य सम्बन्धि तपश्चीर्णं कृतमित्यर्थः । तदा तपश्चरणकाले स रुद्रः पिनाकिनं रुद्रमृते अन्यैः कथञ्चन केनापि प्रकारेणाचाल्यं चालयितुमशक्तमिदं पुरः स्थितं धनुः मे ददावित्यर्थः ॥१७॥

**न देवदैत्योरगदेवगायका अलं [1]धनुश्चलयितुं सवासवाः ।**
**कुतो नरास्तद्भरतो हि किङ्कराः सहानसैवात्र कृषन्ति कृच्छ्रतः ॥१८॥**

**व्यासतीर्थीया–** अचाल्यत्वमेव विवृण्वन् कथं तर्हि इहागतमित्यत आह– **नेति** ॥ सह सम्भूय ॥

**वेदाङ्गतीर्थीया–** नालं न समर्थाः ॥१८॥

१. तालप्रमाणं परिकृष्यमाणं मध्ये महाचापमभज्यताशु । विश्वाधिनाथेन विनैव यत्नं यथेन्द्रनागेन यथेक्षुदण्डम् ॥ इति सङ्ग्रहे शिवधनुः तालप्रमाणमित्याहुः ।

**वादिराजीया–** देवगायकाः गन्धर्वाः । तद्वरतः किङ्करा अनसा सहैव कृषन्तु अनश्च धनुर्भारेण न शीर्णं भवतु इति तस्य शिवस्य वरतः । अनेन त्वया कथमानीतमिति शङ्का परिहृता । वरस्यासाध्यं किमपि नास्तीति प्रसिद्धिं हिशब्देन आह ।।१८।।

**सत्यधर्मीया–** यच्चापं दुरापारोपं दितिजादितिजदनुजानां मनुजानां तत्र कथा का इति कथयति– **न देवेति** ।। देवा अमराः । 'अमरा निर्जरा देवा' इत्यमरः । दिवु धातोः पचाद्यचि पुगन्तगुणे देव इति भवति । [१]'देवः स्मरे घने राज्ञि देवमाख्यातमिन्द्रियम् । देवी कृताभिषेकायां तेजनी स्पृक्कयोरपि ।।' इति मेदिनी [वद्विकम्.१२] । ते च दैत्या असुराश्च । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति [कौ.१०७७] दितेरपत्यमित्यर्थे ण्ये आदिवृद्धौ दैत्येति भवति । 'असुरा दैत्यदैतयाः' इत्यमरः । ते च उरगाः सर्पाः उरसा गच्छन्तीत्युरगाः । 'अर्तेरुच्च' [उणादि. ६४५] इति ऋधातोः औ रपरत्वे च उर इति जातेऽसुनि च 'उरसो लोपश्च' इति [वा.२९६५.कौ] डः सलोपश्च ज्ञेयौ । 'उरगः पन्नगो भोगी' इत्यमरः । ते च देवानां गायकाश्च गन्धर्वाश्च । ननु 'कै गै शब्दे' अस्मात् 'आदेच'[कौ.२३७०] इत्यात्वे 'आतो युक् चिण्कृतोः' इति [कौ.२७६१] युकि 'गः स्थकन्' [कौ.२९०८] इति थकनि 'ण्युट् च' इति [कौ.२९०९] ण्युटि गाथको गायन इति भवितव्यं तत्कथं गायका इति चेत् । सत्यम् । गात इति गायका इति 'गाङ् गतौ' अस्मात् आतो युकि 'ण्वुल्तृचौ' [कौ.२८९५] इति ण्वुलि 'युवोरनाकौ' [कौ.१२४७] इत्यकि दायक इतिवद्गायक इति भवति । गत्यर्थोऽप्ययं धातुः 'कुर्द खुर्द' इति धातूनामनेकार्थता ज्ञापनात् शब्दार्थो ज्ञेयः । अत एव तत्त्वसुबोधिनी 'गै शब्दे' इत्यस्यैव थकन् न तु 'गाङ् गतौ' इत्यस्येति । अयेन शुभावहादृष्टेन कं सुखं येषां तेऽयकाः । देवेषु देववर्गे गच्छन्तीति देवगाः ते च ते । देवगं अयकं येषां इति वा । दैवप्राप्यमपि देवनिमित्तकमेव देवगाथकानां सुखमिति भावः । तेऽपि पिनाकतोलने नालम् । न शेकुरित्यर्थः । शचीश्वरश्चेच्छरासननिरासनं तनुयादित्यत आह– **सवासवा इति** ।। वासवेनेन्द्रेण सहिताः सवासवाः । वसूनामयं वासव इति वा वसवोऽस्य सन्तीति वा वासवः । 'वासवो वृत्रहा वृषा' इत्यमरः । कैमुत्येन मर्त्यान्व्यावर्तयति– **कुतो नरा इति** ।। किंशब्दात् क्ते 'कु तिहो' इति [कौ.१९५४] किमः कुस्तदाविति कौ पञ्चम्यर्थे कुत इति मन्तव्यं अव्ययम् । यदा सवासवा देवपूर्वा देवदेवगाथकपूर्वका नाशकन् का शङ्का सातङ्कानां नराणामिति भावः । ननु शरासनानयनापनयनं मनुजराजकिङ्करक्रियमाणं अनुभवसिद्धमिति कथं चालयितुं नालं नरा इति गिरेत्यत ईरयति– **किङ्करा इत्यादिना** ।। मद्भूताः । कृच्छ्रतः कष्टतः । कृच्छ्रत इति रूपाभिधाने प्राङ्निरूपिते अनुसन्धेये । केचित्तु शाङ्करान्किङ्करानाहुः । तन्न । रामायणविरोधात् । तथाचोक्तम्– 'ततः स राजा जनकः सचिवान् व्यादिदेश ह । ...सचिवाः प्राविशन् पुरम् । नृणां शतानि पञ्चाशत्...।।' इत्यादि । [वा.का. ६७- २-४]

---

१. 'देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये' इति इदानीन्तनपाठः ।

सङ्ग्रहे च– [बा.का. ७-१३] 'वीरोत्तमैः पञ्चसहस्रमुख्यैर्वराच्छिवस्यैव वरं शिवास्त्रम्' इति । तदपि न स्वसामर्थ्यादित्याह– **तद्वरत इति** ।। तस्य रुद्रस्य वरस्तद्वरः तस्मात् । कृषन्ति विलिखन्ति । कर्षयन्तीति यावत् । 'कृष विलेखने' तुदादिः । 'इतः षट्स्वरितेत' इत्युक्तेरुभयपदमिति ज्ञेयम् । लट् । 'विलेखनं कर्षणम्' इति कौमुदी । हरवरोऽपि शरासननयनानयनादिमात्रहेतुर्न तु तदारोपणनिपुणताप्राप्तिरूपः । त्र्यक्षस्य साक्षात्करधारणे किङ्कराणां किं वर इत्यतो नेत्याह– **सहानसैवेति** ।। अनः शकटम् । तेन सह । 'क्लीबेऽनः शकटोऽस्त्रियाम्' इत्यमरः । अष्टचक्रशकटोपरिगमञ्जूषया सहेति भावः । यथोक्तं रामायणे– 'मञ्जूषामष्टचक्रां तां समूहुस्ते कथञ्चन । तामादाय तु मञ्जूषां आयसीं यत्र तद्धनुः ।।' इति । [६७-४-५] सङ्ग्रहे च– [बा.का.७-१३] 'अष्टचक्रमञ्जूषयायःकृतयाभिगुप्ताम्' इति । 'दिवाविभा..' इति सूत्रे [पा.सू.३-२-२१] 'किंयत्तद्बहुषु कृञोऽज्विधानम्' इति वार्तिकात् किंशब्दस्योपसङ्ख्यानात् किंप्राक्कात्करोतेरणोपवादे कत्वेनाचि किङ्कर इति भवति । ते च त्रिशतम् । तदुक्तं भागवते– 'यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरकृते त्रिशतोपनेयम्' इति नवमे । पञ्चैव सङ्ख्येपेता इति वा? । तदुक्तं रामायणे– 'नृणां शतानि पञ्चाशत् व्यायतानां महात्मनाम्' इति [बा.का. ६७-४] । सङ्ग्रहे च 'वीरोत्तमैः पञ्चसहस्रसङ्ख्यैः' इति [बा.का.७-१३] । ननु भगवान्भागवते जगौ किङ्कराः त्रिशतम् । रामायणे चोदञ्चयत् पञ्चशतसङ्ख्याकान् कविः इति विरोध इति चेत् । सत्यम् । शकटधुरन्धरकिङ्करविवक्षया प्रवृत्तं वचनं भागवतम् । सामान्यतो समर्थासमर्थधनुरानयनकारणनरविवक्षया रामायणं भणनमिति विरोधसमाधिरित्यवधेयम् । अत्र मदायतने । मदाज्ञोत्तरक्षणे वा । हिना लोकप्रसिद्धिं द्योतयति । यदा । देवाः दैत्या देवभृत्यदैत्याः उरगा देवगायकाः सवासवाः जनकनगरक्षणमस्मिन् क्षण एव कुरुतेति प्रेरकेन्द्रेण सहिताः तद्वरत इन्द्रवरत एतेऽजेया निर्जरस उपागुरिति शेषः । तदा नराः । मत्पुरनिरोधनकराः मानवाः । अनरा राक्षसा दैत्याश्च । 'सभाराजाऽमनुष्यपूर्वा' इति सूत्रे [कौ.८२६] 'अमनुष्यशब्दो रक्षःपिशाचादीनाह' इत्युक्तेः [कौमुद्युक्तेः] अनरशब्दो दैत्यवाची ज्ञेयः । धनुः स्वस्वधनुः चालयितुमपि नालम् । शक्ता नाभूवन् । अशक्ताः सन्तः कुतोऽस्मद्ग्रामक्षमायाः सकाशात् सहानसा लोहमयमहागुलिकाक्षेपणकरणयन्त्राद्याधारविशङ्कटशकटसमूहेन सह, ययुरिति शेषः । यद्वा पदा गन्तुमशक्ताः सहानसा शकटाद्यारूढा ययुरिति वा । समरचतुरा अमरा अमरावतीतो मम पुरपरिरक्षणाय आययुः । तच्चतुरङ्गसेनाविलोकनत एव हीनबला महीनाः प्रबला अपि रिपवः पुरं परीत्य ययुरिति भावः । सुराणां नरवरस्य तवावने किं कारणमित्यतो निजजनावनमेव प्रयोजनमित्याह– **कृषन्तीति** ।। हि यस्मादत्र भुवि ये किङ्करास्तान् इति शेषः । कृच्छ्रतः परपराभवभवक्लेशादित इति यावत् । कृषन्ति यथा दुष्टकृतकष्टानुभवाभावः स्यात् तथा उद्धरन्तीति । नमत्त्राणनिपुणानां सुराणां न मत्त्राणं चित्रं किन्तु स्वभावः । सैवावनं देवानामिति भावः । यद्वा मत्कृतक्रतुदत्ताहुतितृप्ताः मद्रक्षणार्थमाययुरित्याह–

**सवासवा इति** ।। सवे मदनुष्ठितायामिष्टौ । सवेन वा आसवा आमोदो सोमाषिवो वा येषां ते अनिमषाः । राज्ञा यज्ञादिरस्मदुद्देश्येन क्रियत इति मतिमन्तो मदवका देवा इति भावः । 'यज्ञः सवः आसव आमोदाभिषौ' इत्यमरो मेदिनी च । यद्वा सः वा सवाः इति छेदः । सः प्रसिद्धः । सवाः वार्भिर्जलैः सहितः सवाः पूर्णजलो जलनिधिरिति यावत् । स सवा वा यथा पाथोनाथो रङ्गत्तरङ्गस्तथा चतुरङ्गसहिताः मम हिताय मदहितहतये देवाः सोपदेवा उपागुरिति वा । 'वार्वारि' इत्यमरः । यद्वा गैधातोरेवानुपसर्गसंसर्गादपि कर्मण्यणि 'आतो युक् चिण्कृतोः' इति युकि सामसंगाय इत्यादिवत् देवान् गात इति ते देवगायास्त एव देवगायकाः । स्वार्थिकः कः । देवाः शैवधनुर्विधूनने नालमिति यद्यागच्छेयुः तदा तेऽपि धनुस्तोलने नालमिति वस्तुस्थितिकथनम् । न तु तेषामागमनं तत्परीक्षा चेति ज्ञेयम् । अन्यथा 'पुरार्थितुं नाययुरत्र देवता' इति विरोधापत्तेः । यद्वक्ष्यति 'दितेः सुता दानव' इत्यादिना दैत्याद्यज्ञानामेवागमनं असामर्थ्यं च तेषामेवेति तदानुगुण्यं एवमन्वय एव भवतीति बोध्यम् । अन्यथा 'न देवदैत्य' इत्युभयोरपि प्रसक्तेस्तत्रापि देवोपदेवाद्यागमनमप्यवक्ष्यद्भगवानिति भावः ।।१८।।

**मधुसूदनीया–** किङ्कराः जनकभृत्याः । सह सर्वे मिलित्वा अनसैव कृषन्ति शकटोपरि धनुर्निक्षिप्य शकटमेव कृषन्ति न तु धनुरित्यर्थः । ते च किङ्कराः त्रिशतसङ्ख्याका इति ज्ञेयम् । तदुक्तं नवमस्कन्धे [९.८.८८] । 'यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरकृते त्रिशतोपनेयम् । आदाय बालगजलील इवेक्षुदण्डं सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये ।।' इति ।।१८।।

**वरदराजीया–**पिनाकिनमृते अचाल्यमित्युक्तं विवृणोति– **न देवेति** ।। देवाश्च दैत्याश्च उरगाश्च देवगायकाश्चेति ते तथा सवासवाः वासवेण इन्द्रेण सहिता इन्द्रेण युक्ताः धनुश्चालयितुं नालं न समर्थाः नराः कुतः समर्थाः स्युरित्यर्थः । तर्हि तव किङ्करैः कथमानीयते कथं वा नीयते इत्यपेक्षायां आह– **तद्वरत इति** ।। तस्योमापतेर्वरतः त्रिशतं किङ्करा अनसा शकटेन कृच्छ्रतः प्रयासेन कृषन्ति चालयन्तीत्यर्थः ।।१८।।

**जनार्दनीया–** वासवेनेन्द्रेण सहिता देवादयः । धनुश्चालयितुं नाऽलं न समर्थाः । नराः कुतो । न समर्थाः इत्यर्थः । तर्हि तव किङ्कराः कथं चालयन्ति इत्यत आह– **तद्वरत इति** ।। किङ्कराः मद्भृत्याः । तस्य रुद्रस्य वरतः धनुश्चालनसामर्थ्यदानरूपवरतः । सह एकत्र सम्भूय, अनसैव शकटेनैव । अत्र मद्गृहे । कृच्छ्रतः प्रयासेन कृषन्ति कर्षन्ति ।।१८।।

**चट्टी–** अचाल्यत्वमेव विवृण्वन् कथं तर्हि इहागतमित्यत आह– **नेति** ।। वासवेनेन्द्रेण सहिताः देवादयो धनुश्चालयितुं नालं न समर्थाः । नराः कुतो न समर्था इत्यर्थः । तर्हि तव किङ्कराः कथं चालयन्तीत्यत आह– **तद्वरत इति** ।। किङ्कराः मद्भृत्याः सह एकत्र सम्भूय तस्य रुद्रस्य वरतः अनसैव शकटेनैव अत्र मद्गृहे कृच्छ्रतः प्रयासेन कृषन्ति कर्षयन्ति ।।१८।।

**अनन्तभट्टीया–** नालं समर्थाः[न] । अनसा रथेन कृषन्ति, धनुरिति सम्बन्धः । कृच्छ्रतः प्रयासेन । किङ्करा सह सम्भूय ।।१८।।

**भावविवृतिः–** न देवदैत्योरगदेवगायका इत्यत्र अहं नृणां वीर्यपरीक्षणे धृत इत्यत्र धारितवानस्मि । कर्तरि क्तः । कुतो नरा इत्यनेन मनुष्याणामत्यन्तासम्भावितत्वमुक्त्वा पुनस्तद्वीर्यपरीक्षायै धृत इत्युक्तिरयुक्ता स्यादिति चेत् । उच्यते । नरा इत्यनेन मनुष्यत्वजातिविशिष्टानां ग्रहणम् । अहं नृणामित्यत्र तु नृशब्देन बलिष्ठपुरुषमात्रग्रहणमित्यङ्गीकारान्न विरोध इति ।।१८-२२।।

**गूढवाक्यार्थ–** नालं न समर्थाः । अनसा रथेन । कृषन्ति धनुरिति सम्बन्धः । कृच्छ्रतः प्रयासेन । किङ्करास्सह सम्भूय ।।१८।।

**अधार्यमेतद्धनुराप्यशङ्करादहं नृणां वीर्यपरीक्षणे [1]धृतः ।**
**सुतार्थमेतां चकर प्रतिज्ञां ददामि कन्यां य इदं हि पूरयेत् ।।१९।।**

**व्यासतीर्थीया–** धृतः अवस्थितः । किमर्थं नृणां वीर्यपरीक्षणेऽवस्थित इत्यत आह– **सुतार्थमिति** ।।१९-२०।।

**वेदाङ्गतीर्थीया–** नृणां वीर्यपरीक्षणे वीर्यपरीक्षणार्थं धृतः दैवेन स्थापित इत्यर्थः । चकारेत्युत्तमपुरुषैकवचनम् । 'णलुत्तमो वा'[पा.सू.७.१.९१] इति णित्वाभावपक्षे वृद्ध्यभावः ।।१९।।

**वादिराजीया–** नृणां वीर्यपरीक्षणे धृतो न तु रामस्य वीर्यपरीक्षणे । 'धृ धारणे' इति धातोरवधारणवानहमिति सम्बन्धः । आप्त इतिवत् कर्तरि क्तप्रत्यः । हिशब्देन स्वकृतप्रतिज्ञाया आघोषणमुखेन प्रसिद्धिं सूचयति ।।१९।।

**सत्याभिनवीया–** तत्रैव अधार्यमेतद्धनुराप्य... इति श्लोकः । तस्यार्थः । राम एव सीतायाः पतिः इति धृतोऽपि अवधृतोऽपि निश्चयवानपि अहं नृणां वीर्यपरीक्षणे वीर्यपरीक्षणार्थं अधार्यमेतत् धनुः शङ्करात् आप्य सुतार्थं य इदं धनुः पूरयेत् तस्मै कन्यां ददामि इत्येतां प्रतिज्ञां चकारेति । एतेन धृत इत्येतत् व्यर्थमिति दूषणं परास्तम् । रामविषये स्वस्य सन्देहोऽस्तीति विश्वामित्रहार्दां शङ्कां परिहर्तुं राम एव सीतायाः पतिः इति अवधारणवानपि अहमिति जनकेन उक्तमिति वक्तुं राम इत्यादेः शेषेण धृत इत्यनेन राम एव सीतायाः पतिः इत्यवधारणवानपि इत्यर्थः उच्यते इत्यङ्गीकारात् । जनकस्य राम एव सीतायाः पतिः इति निश्चयोऽस्तीत्येतत् 'अपां पतिश्च मैथिलः स्वयवरं कृतावपि । हरिं विनिश्चयादियं व्रजेदिति स्म चक्रतुः' इति सप्तदशाध्यायस्थिताचार्यवाक्येनैव सिद्धम् ।।१९।।

१. 'धृतिः' इति पाठान्तरम्- गूढ ।

**सत्यधर्मीया–** नागता इत्येव महीयांसः सुमनसः अगमने पुनर्गमनं विबुधानामपि मुधेत्यभिधत्ते– **अधार्यमिति** ।। ये देवाद्याः । एतत्साक्षिसिद्धं धनुः कर्म अप्य प्राप्य । अधार्यं कैरपि धर्तुमशक्यम् । धृ धातोर्ण्यत् चालयितुं नालमित्यनुवृत्त्यान्वयः । अनेन समानकर्तृकतालाभात् ल्यबुपपद्यते । अधार्यं भगवन्मात्रधारणयोग्यं यतोऽतो तच्चालयितुं नालं निलिम्पा इति वा । शङ्करात् । शं सुखवाचकं अव्ययम् । 'शं सुखानि च' इत्यमरः । शमिधातोः 'सञ्ज्ञायाम्' इत्यच् । शम्युपपदे धातोः अच्धातुग्रहणेन परोऽपि कृञो हेत्वादिट् बाध्यते । यस्मात् भस्मधराद्यो धनुः धृतः स्थापितः देवद्वारा देवरातगृह इत्यर्थः । यो धनुर्धृतो मत्पूर्वजसद्मनि स्थापितः सः । शङ्करात् शङ्करं उमारमणमततीति तथा । अततेः क्विपि रूपम् । प्रथमैकवचनम् । सदा सदाशिवकरालङ्काररूपश्चाप इति भावः । अनेन नेदं पिनाकिनः पिनाकादन्यत् किं नाम सर्वदा शर्वधार्यं तदेव देवा देवराताय दत्तवन्त इति सूचयति । यद्वक्ष्यति 'उमापति–स्त्वेकमधारयत्तत' इति । 'शङ्करश्चन्द्रशेखर' इत्यमरः । अथ स्वाभिप्रेतं विप्रप्रवरं प्रति प्रतिपादयति– **अहमिति** ।। सुता भूतलाज्जाता सीता सुता तदर्थं तत्प्रदानाय । यः पुमान् शक्तिमानिदं धनुः पूरयेत्सज्जीकुर्यात् । चुरादिर्लिङ् । तस्मै कन्यां ददामि दास्यामि इति प्रतिज्ञां प्रतिश्रवं अहं चकर अतनवम् । लिडुत्तमपुरुषैकवचनम् । 'णलुत्तमो वा' इति णित्वविकल्पान्न दीर्घः । किमवयवनिर्वर्त्या त्वत्प्रतिज्ञेत्यतो वा वदति– **करप्रतिज्ञामिति** ।। कराभ्यां निर्वर्त्या प्रतिज्ञा करप्रतिज्ञा इत्युत्तरपदलोपः समासः । शरासनधारणशरानुसन्धानरूपकार्यस्य प्रतिज्ञाविषयत्वात् वा करनिर्वर्त्यतेति मन्तव्यम् । य एतां सुतार्थं करप्रतिज्ञां पूरयेत्तस्मै अहं कन्यां ददामीत्यन्वयो वा । पूर्वं 'एतत्' इति नपुन्निर्देशो निर्देशश्च मध्ये पुल्लिङ्गेन अन्ते पुनः 'इदम्' इति च निर्देशो द्विलिङ्गतां धनुःशब्दस्य सूचयितुमिति ज्ञेयम् । अभिधानाभिधानं तु प्राचि रचितमिति ततो अनुसन्धेयम् । एवमन्वये अन्वयो धृतपदस्य स्वरसः सम्पद्यते । प्रतिज्ञाभाविप्रयोजनं विज्ञापयति– **नृणामिति** ।। नृणां मानवानाम् । वीर्यं वलं प्रभावो वा । 'वीर्यं बले प्रभावे च' इत्यममरः । तस्य परीक्षणे परीक्षार्थम् । 'निमित्तात्कर्मयोगे' इति [सूत्रात्] [वा.पा.सू.२-३-३६] 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुश्कलको हतः ।।' इत्यादिवच्चतुर्थ्यर्थ इयं सप्तमीति ज्ञेयम् । इमे समे मानवा दुर्बलाः तथापि केषां केषां कियती सीमा सामर्थ्यस्येति परीक्षार्थमित्यर्थः । यद्वा धृत इत्यावर्तते । यो धनुः मत्पूर्वजे सुपर्वभिः पूर्वधृतः स्थापितः सोऽधुना मया नृणां वीर्यपरीक्षणे धृतः स्थापित इति वा । यः इदं मन्मानससङ्गतं पूरयेत्तस्मै कन्यां ददामीति प्रतिज्ञामहं चकरेत्यन्वयः । नन्वतीतश्लोके 'कुतो नरा' इति कैमुत्येनैव मर्त्यासामर्थ्यस्य कथितत्वात्कथं 'नृणां वीर्यपरीक्षणे' इत्युक्तिर्युक्तेति चेत् । न । धनुर्धारणाशक्ता इति निर्धारणेऽपि तेष्वपि कः कस्मात्प्रवलो दुर्वलश्चेति चापसमीपसमापतनं कार्मुकग्रहणं तोलनं चालनश्चेत्यादि तत्तत्कृतितस्तत्तद्वीर्यपरीक्षार्थमिति । इदमपि कश्चिन्निश्चयेन विपश्चिदपश्चिमः पश्चादेत्य चापमारोपयिष्यति

नेष्यति मत्तनयां आनेष्यति च मम कीर्तिमिव रावणादीनामार्तिं मानुषतनुषैवेति तत्परीक्षणं सार्थकमिति भावः । यद्वा अहङ्कारवाचि अहमित्यव्ययम् । तेन तद्वन्तो लक्ष्यन्ते । ते च ते नरश्चाहंनरः तेषां अहं नृणां वीर्यपरीक्षणे । 'नृ च' इति [कौ.२८३] दीर्घविकल्पान्नृणामिति भवति । यद्वक्ष्यति 'नष्टमदा' इति । अथवा य इदं मदपेक्षितं चापारोपरूपम् । चापारोपणे कुमारीप्रदानमिति मन्मानसिकं सङ्कल्पनं कल्पः रूपयेत् कार्मुककर्षणत इव कामुककर्षणतः सफलं कलयेत्तस्मा अहं कन्यां ददामि नान्यस्मात्कार्यादन्यस्मा इति सुतार्थं प्रतिज्ञां चकरेति । यद्वक्ष्यति 'ततो ममायं परिपूर्य मानसम्' इति । शिष्टं पूर्ववत् । यद्वा नृणामिति निर्धारणे षष्ठी । नराणां मध्ये यः धृतो अनन्याश्रयतया अवस्थितः तस्य वीर्यपरीक्षणे । धृदिति क्विपि रूपम् । धृत इति षष्ठी । विः पक्षी गरुडो ईर्यः प्रेर्यो येनासौ वीर्यः । विरुद्ध ईर्यादस्वतन्त्रात् प्रेर्यात् प्रपश्चादिति वा वीर्यो रामः । तस्य परीक्षणे । साक्षाल्लक्ष्मीर्मदपत्यं यत्र कुत्रापि दानवहननाय मानववरापत्यं सन् परमात्मा पूर्वमेवावर्तत इति तदनयोः अनयोज्झितं दाम्पत्यमिति मया रमया समेतस्य तस्य परीक्षार्थं प्रतिज्ञा कृतेति भावः । अनन्यजन्युजन्यकार्यकरणप्रतिश्रवकरणे मारमणः स्वयमागत्य धनुर्विधूननेन मम जामाता रामनामा भविष्यतीति भावेन हरिपरीक्षणे वा । हि यतः स एवेदं धनुः पूरयेत्तस्मा एव कन्यां ददामीति प्रतिज्ञां चकरेति वा । सर्वमपरोक्षज्ञानी जनक इति सम्भवतीदमिति ज्ञेयम् । कुत इत्यतस्तत्र हेतुमाह– **य इति** । ई अ इति पदच्छेदः । इयं सुता ई रमा रामः अः नारायणः । एवं चेत् 'मेने च जामातरं' इत्युक्तं युक्तं इति ध्येयम् । यथोक्तम् सङ्ग्रहे– [बा.का.७-११] 'आरोपयद्राघव एव चापमन्वेतु सीतापतिमेनमेव । सम्पूर्णचन्द्रं प्रति चन्द्रिकेव प्रभा प्रभानाथमिवानुरूपा । यथेन्दिरैवास्ति मुकुन्दयोग्या मुकुन्द एवोचित इन्दिरायाः ।।' इति ।

अत्र पद्ये सांग्रहिके यद्यादिपदाभावाद्राघवश्चापं आरोपयेदेव सीता सम्पूर्णचन्द्रं चन्द्रिकेव प्रभा प्रभानाथमिवैनमेवान्वेत्विति ज्योत्स्नाप्रभावियुक्तरविविधुदृष्टान्तेन स्पष्टीकृतोऽनयोरप्यविनाभाव इति ज्ञेयम् । सुता अर्थोऽस्मिन्कर्मणि यथा भवति तथेति क्रियाविशेषणं सत् अहं सुतार्थं प्रतिज्ञां चकरेत्यन्वेतीति बोध्यम् । हे सुतार्थम् । सुता अर्थः प्रयोजनं यस्या, सुतायाः अर्थो येनेति वा तत्सम्बुद्धिः । यः भवानिदं पूरयेत्तस्मै कन्यां ददामि । यद्वा य इदं धनुः कन्यामुद्दिश्य पूरयेत्तस्य या पूर्नगरी तां च मे सुता अयेत् । किमुद्दिश्येत्यतो वदति– **अहं नृणामर्थमिति** ।। अहङ्कारिणां नृणाम् । उपलक्षणया राक्षसादीनाम् । अर्थं निवृत्तिम् , अभावमिति यावत् । देवकार्यदिव पतिपुरमयेत् गच्छेत् । अय गतौ लिङ् । आर्थं भगवदर्थमेव प्रतिज्ञां चकराहं ततो सुता सीता या तस्य पूः अयोध्या तां चायेदिति । आर्थमेव सुतेति हेतोस्तस्मै कन्यां ददामीति प्रतिज्ञां चकरेति वा । यो धनुः येनाधृतः अनवस्थितीकृतः भग्न इति यावत् । प्राग्वदवशिष्टं ज्ञेयम् ।।१९।।

**वरदराजीया–** एवं वरायुधावाप्तिप्रकारमुक्त्वा प्रतिज्ञाकरणप्रकारमाह– **अधार्यमिति** ।। अन्यैः धर्तुमशक्यं एतद्धनुः शङ्करादाप्य, अहं नृणां वीर्यपरीक्षणे बलपरीक्षार्थं धृतः ईश्वरेण स्थापितं सुतार्थं सीतार्थं एतां वक्ष्यमाणां प्रतिज्ञां चकार कृतवानस्मि । चकरेत्युत्तमपुरुषैकवचनं 'णलुत्तमो वा' इति णित्वाभावपक्षे वृद्ध्यभावः । प्रतिज्ञास्वरूपं दर्शयति– **ददामीति** ।। यः इदं धनुः पूरयेत् सज्यं करिष्यति तस्मै कन्यां ददामीति प्रतिज्ञां चकरेति पूर्वेणान्वयः ।।१९।।

**जनार्दनीया–** शङ्कराद्धनुराप्य, नृणां वीर्यपरीक्षणे पराक्रमपरीक्षणार्थं धृतः स्थितः । 'धृङ् अवस्थाने' इति धातुः । न तु देवेन स्थापित इत्यर्थः । ल्यप्प्रत्ययानुपपत्तेः । अहं यः पुमानिदं धनुः पूरयेत् सज्जीकुर्यात् । तस्मै कन्यां ददामीति एतां उक्तां प्रतिज्ञां सुतार्थं सुताप्रदानार्थम् । चकर कृतवानस्मि । देवेन धृतः स्थापितः अहं धनुः प्राप्य प्रतिज्ञां चकारेति वा । चकरेति लिट्युत्तमपुरुषैकवचनम् । 'णलुत्तमो वा' [सि.कौ.२२८३] इति णित्वभावपक्षे वृद्ध्यभावः ।।१९।।

**चट्टी–** एवं वरायुधप्राप्तिप्रकारमुक्त्वा प्रतिज्ञाकरणप्रकारमाह– **अधार्यमिति** ।। अधार्यमन्यैः धर्तुमशक्यमेतद्धनुः शङ्करादाप्य प्राप्य अहं धृतः स्थितः । 'धृति अवस्थाने' इति धातुः । किं प्रयोजनायेत्यत आह– **नृणामिति** ।। नृणां मनुष्याणां वीर्यपरीक्षणे वीर्यं पान्तीति वीर्यपास्तेषां रिः क्षयः । 'रि क्षये' इति धातुः । क्षणः उत्सवः । 'निर्व्यापारस्थिता कालविशेषोत्सवयोः क्षणः' इत्यमरः । तथाच रिक्षणे उत्सवनाश इत्यर्थः । गर्वापहार इति यावत् । यवागूं पचतीत्यत्रेवात्राप्यर्थक्रमः स्वीकर्तव्यः । एवमर्थानङ्गीकारे 'संस्विन्नगात्राः परिवृत्तनेत्राः' इत्याद्यनुपपत्तेः । न देवदैत्योरगदेवगायका इत्यनेनैव तेषां सामर्थ्याभावकथनात् । एवं चेद्रामस्यापि [वीर्यपातृत्वं] वर्तते तस्य वीर्यापहारशङ्का नृणामित्यनेन परास्ता । तस्येश्वरत्वात् । ननु सुतायाः वरान्वेषणार्थं मयैतद्धनुर्धृतमिति वक्तव्यम् । तद्विहाय नृणां गर्वापहारणे धृतमित्युक्तं तदसङ्गतमिति चेन्न ।

'अपां पतिश्च मैथिलः स्वयंवरकृतावपि । हरिं विनिश्चयादियं व्रजेदिति स्म चक्रतुः ।।' इत्युक्तत्वात् क्षत्रियाणां स्वयंवरः परमधर्म इत्युक्तत्वाच्च । तर्हि वरान्वेषणार्थं स्वयंवरार्थधनुषो ग्रहणमेव न स्यादिति चेन्न स्वयंवरव्याजेन सर्वेषां गर्वपरिहारार्थं धनुषो ग्रहणं कृतम् । न तु सुताया वरान्वेषणार्थम् । सा हरिं व्रजेदिति निश्चयस्य कृतत्वात् । अतः रावणादीनां बलप्रयुक्तगर्वपरिहारार्थमेव धनुषो ग्रहणस्य कृतत्वात् न कश्चित् क्षुद्रोपद्रव इति भावः । यः पुमानिदं धनुः पूरयेत् सज्यं करिष्यति तस्मै कन्यां ददामीत्येतामुक्तां प्रतिज्ञां सुतार्थं सुताप्रदानार्थं चकर कृतवानस्मि । चकरेत्युत्तमपुरुषैकवचनम् । 'णलुत्तमो वा' इति णित्वाभावपक्षे वृद्ध्यभावः ।।१९।।

**अनन्तभट्टीया–** धृतः स्थितः । य इदं धनुः पूरयेत् सज्यं कुर्यात् तस्मै कन्यां प्रददामीति प्रतिज्ञां चकर कृतवानस्मि ।।१९।।

**ताम्रपर्णीया–** धृतः 'धृ धारणे' इति धातोः निश्चयवानित्यर्थः ।।१९-२९।।

**अतिविशद–** नृणां वीर्यपरीक्षणे धृत इत्यत्र धारित इति नार्थः । तथा सति येन केनचिदिति तृतीयया भाव्यम् । प्रकृते तदभावात् । किन्तु धृतो धृतिमान् । कर्तरि क्तः । स्थित इति वा । 'धृङ् अवस्थाने' इति धातुः । निश्चयवानित्यपि वदन्ति 'धृञ् अवधारणे' इति धातोः । अन्येषां वीर्यपरीक्षणेऽयं यत्नः । नतु रामस्य वीर्यपरीक्षणार्थम् । रामस्तु सीतापतिरेवेत्यवधारणवानित्यर्थः । वाक्ययोजना तु । धृतो धृतिमानहं नृणां वीर्यपरीक्षणे, ब्रह्मणा धृत इति शेषो वा ।।१९-२२।।

**गूढवाक्यार्थ–** धृतः स्थितः । धृतिरिति पाठे निश्चयात् । धृ धारण इति धातोः । इदं धनुः पूरयेत् सज्जं कुर्यात् तस्मै कन्यां ददामि इति प्रतिज्ञां चकार कृतवानस्मि ।।१९।।

**इतीरितां मे गिरमभ्यवेत्य दितेः सुता दानवयक्षराक्षसाः ।**
**समेत्य भूपाश्च समीपमाशु प्रगृह्य तच्चालयितुं न शेकुः ।।२०।।**

**वादिराजीया–** अभ्यवेत्य अभितोऽवेत्याघोषणाज्ज्ञात्वेत्यर्थः ।।२०-२१।।

**वेदाङ्गतीर्थीया–** अभ्यवेत्य ज्ञात्वा [समेत्य प्राप्य] समीपं इत्यर्थः ।।२०-२२।।

**सत्यधर्मीया–** शुभस्वभावत्वादेव नत्वा देवा माता सीता नातो भूतलं प्रति निरीक्षणार्थमपि चापस्य दिव्यस्य गन्तव्यमिति मतिमन्तो नागताः दुराग्रहगृहीताः गृहीतुकामाः कार्मुकं कामुका अभिमानवन्तो दानवा मानवाद्या आगतास्ते इतरदुरारोपं चापं तोलयितुं बलवन्तोऽपि नालं किलेत्यालपन्ति– **इतीरितामिति** ।। मे मम । इति प्राच्युक्तप्रकारेण ईरितामुदीरितां गिरं वाक्यं यश्च चापमारोपयेत् तद्वास्ये दास्ये सुतामेतामिति प्रतिज्ञारूपम् । मे ईरितामिति 'क्तस्य च वर्तमान' इति [कौ.६२५] षष्ठी सम्भवति । यद्वा 'मतिबुद्धिपूजार्थेभ्यश्च' [कौ.३०८९] इति चो अनुक्तसमुच्चयार्थः । तेन शीलितो रक्षित इति प्रमुखं भवतीत्युक्तेर्वा म ईरितामिति षष्ठी । अथवा मे समीपमित्यन्वयः । मयेति शेषः । अभ्यवेत्य । अभ्यवपूर्वक इण्धातोर्ल्यप् । दूतादिमुखतो ज्ञात्वा । ते क इत्यतो नामाचष्टे– **दितेः सुता इति** ।। दैत्याः । 'षष्ठ्या आक्रोशे' [कौ.९७९] इति दितेः सुता इत्यलुक् । दनोः कश्यपापत्या दानवाः 'तस्येदम्' [कौ.१५००] इत्यण् । नतु 'तस्यापत्यम्'[कौ.१०८८] इति । तस्य 'स्त्रीभ्यो ढक्' [कौ.११२३] इति विशेषविधिना बाधितत्वात् । ततश्च पार्थ इत्यादिवत् सम्बन्धसामान्ये अणि स च सम्वन्धो विवक्ष्यते पश्चादपत्यत्वरूप इति न ढगभावदोष इत्यवधेयम् । यक्षाः कुबेरदूताः । 'यक्ष पूजायाम्' अस्मात् 'अकर्तरि च कारके सञ्ज्ञायाम्' [कौ.३१८८] इति कर्मणि घञ् । 'यक्षो गुह्यकमात्रे च गुह्यकाधीश्वरेऽपि च' इति [विश्वः] [मेदिनी. षान्तवर्गे, षद्विकम्.२२] । यद्वा इः

कामस्तस्येवाक्षिणी यस्येति वा इ । रक्षिषु यस्य इति वा 'बहुव्रीहौ सक्थ्यक्ष्णोः..' इति [कौ.८५२] षचि यक्ष इति भवति । यद्वा ई लक्ष्मीमक्ष्णोति व्याप्नोतीति वा यक्षः । 'अक्ष व्याप्तौ' ततः कर्मण्यण् । 'यक्षरक्षोगन्धर्वा' इत्यमरः । रक्षन्त्यापदः स्वकानिति राक्षसाः । 'रक्ष पालने' अस्मात् 'सार्वधातुभ्यः' इत्यसुनि ततः प्रज्ञायणि ['प्रज्ञादिभ्यश्च' कौ.२१०६] राक्षस इति भवति । 'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि' [प.पा.सू.५-३-६८] इति राक्षसा इति पुल्लिङ्गता सङ्गतेति ज्ञेयम् । 'राक्षसः कोणपः क्रव्यात्' इत्यमरः । भूपाश्चैतदितरे राजानश्च समीपं चापस्येति शेषः । मे समीपमिति वा । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यपस्य समीपमिति भवति । 'समीपसनीडे' इत्यमरः । समेत्य स्वस्वविभवप्रदर्शनपूर्वकमागत्य । आशु शीघ्रम् । आशुना शुना पुरोडाशो यथा तथा स्वायोग्यामपि कदा मे दारा भवेज्जनकतनया इति चिन्तयानास्त्वरितयाना स्मरशरपरिहतास्तनुस्मरणविकला इति पुरोऽनिरीक्षणपूर्वकतां गतेः सूचयति । तदनु दनुजादीनां कावस्थेत्यतो इदानीमाह– **प्रगृह्येत्यादिना** ।। तत् धनुः प्रगृह्य प्रतिगृह्य । चालयितुं तुमुल् । न शेकुः । 'शक्लृ शक्तौ' लिट् । समर्था नासुः । केचित्प्रगृह्य चालयितुं न शेकुः । केचित्प्रगृह्यापि चालयितुं न शेकुः । केषाञ्चित् शक्तिर्ग्रहणे चालने नान्येषां ग्रहण इव चालनेऽपि न सामर्थ्यमिति सामानाधिकरण्येन एकाभावोभयाभावाधिकारिभेदतो ज्ञेयौ । एवमेव समीपं समेत्य प्रगृह्य चालयितुं च नालमिति दूरत एव शरासननिरीक्षणेनैव क्षणेनैव पलायनपरायणा अधमाधिकारिणोऽपि ज्ञेयाः । यथोक्तं रामायणे [बा.का.६६-१९] सङ्ग्रहे च– [बा.का.७८] 'आरोपणे समायोगे तोलने वेपनेऽपि वा ।' 'आलोक्य केचिद्धनुराप्य केचिदन्ये परिस्पृश्य परे प्रचाल्य । वीरा अवीरत्वमवाप्य याताः केचिद्गतास्तानवलोक्य भीताः ।।' इति ।

ई रमा तदर्थमीरितामिति वा । रमात्मिका जानकीयं तत्प्रदानां ईरितां गिरमित्यर्थः । अनेन न धनुःसामर्थ्यमात्रेण निस्त्राणता दानवादीनामपि तु यतो माता सीता जगतां तत्कामने जनन्यै दुद्रुहुस्त इति नानाहीनयोनिपरिभ्रमणेन अन्धन्तमसपातनेन नानायातनानुभावकपालकवन्त इति च निस्त्राणता तेषामित्यसूचयत् । चालयितुमित्यस्य न कम्पयितुमित्यर्थः । क्षेप्तुमित्यर्थः । 'चल कम्पने' इति ज्वलादेः कम्पने चलिरिति मित्वे णौ 'मितां ह्रस्वः' [कौ.२५६८] इति ह्रस्वे चलयितुमिति भवेन्नतु चालयितुमिति । अथवा चापं चालयितुमन्यथाकर्तुम् । अन्यथाकरणं च शरासनस्य धारणं गुणारोपणं त्रोटनं चेत्यादि । तथा ह्युदाहृतं कौमुद्यां[१] 'चलयति शाखां शाखामृगः शीलं चालयति' [*अथवा चित्तविराग इत्यतो वा ग्रहणानुवृत्तेर्मित्सञ्ज्ञायामपि ह्रस्वविकल्पः 'चालयन् पृथिवीं सर्वाम्' इत्यादिप्रयोगः साधुरि शरदेवोक्तेर्दीर्घोऽपि ।] ।।२०।।

---

१. 'चलयति शाखाम् । कम्पनादन्यत्र तु शीलं चालयति । अन्यथा करोतीत्यर्थः । इति कौमुदीस्थवाक्यविन्यासः । कौमुदीस्थधातुसङ्ख्या ८१२ इति ।

**वरदराजीया–** इति अनेन प्रकारेण ईरितामुक्तां प्रतिज्ञारूपां गिरं अभ्यवेत्य दितेः सुताः दैत्याः दानवाश्च यक्षाश्च राक्षसाश्चेति तथा भूपाश्च सर्वे समीपं धनुः समीपं आशु समेत्य वेगेन प्राप्य तद्धनुः प्रगृह्य चालयितुं न शेकुः कुतः पूरयितुमित्यर्थः ।।२०।।

**जनार्दनीया–** गिरं प्रतिज्ञारूपां वाचम् । अभ्यवेत्य ज्ञात्वा । समीपं धनुःसमीपं एत्य । तद्धनुः प्रगृह्य । चालयितुं न शेकुः शक्ताः न बभूवुः ।।२०।।

**चट्टी–** इत्यनेन प्रकारेणेरितां गिरं प्रतिज्ञारूप...*अभ्यवेत्य ज्ञात्वा दितेः सुता दैत्याः दानवयक्षराक्षसाः भूपाश्चेति...* धनुस्समीपमाशु समेत्य तद्धनुः प्रगृह्य चालयितुं न शेकुः शक्ता न बभूवुः ।।

**अनन्तभट्टीया–** समीपं धनुःसमीपं समेत्य बलात्...* । तदिच्छुभिः तदर्थिभिरित्यर्थः ।।२०-२२।।

**भावचन्द्रिका–** ।। **समेत्येति** ।। 'आलोक्य केचिद्धनुराप्य केचिदन्ये परिस्पृश्य परे प्रचाल्य । वीरा अवीरत्वमवाप्य याताः केचिद्गतास्तानवलोक्य भीताः ।।' इति सङ्ग्रहरामायणवचनात् [बा.का.७.८] क्रमेणार्थविशेषोऽवगन्तव्यः ।।२०।।

**गूढवाक्यार्थ–** समीपं धनुःसमीपं समेत्य ।।२०।।

**संस्विन्नगात्राः परिवृत्तनेत्राः दशाननाद्याः पतिता विमूर्च्छिताः ।**
**तथापि मां धर्षयितुं न शेकुः सुताकृते ते वचनात्स्वयम्भुवः ।।२१।।**

**व्यासतीर्थीया–** त्वां प्रसह्य समर्थत्वात् दशाननाद्याः किमिति कन्यां न जहुरित्यत आह– **यद्यपि समर्थाः तथाऽपीति** ।।२१-२२।।

**वादिराजीया–** ।। **संस्विन्नगात्रा इति** ।। सुताकृते इत्यनेन सुतार्थमेव ब्रह्मवरः अन्यदा तु रावणादिभिर्जनकस्य पराजयोऽस्त्येव । सुतार्थमात्रत्वात् तद्वरस्येति सूचयति ।।२१-२९।।

**सत्यधर्मीया–** तमःपातनाधिकार्युत्तमतमोचरदशमुखप्रमुखानां दशा ईदृशीति दर्शयति– **संस्विन्नेत्यादिना** ।। सीतैव हेतुर्यातुजातिकेतोः रावणस्य घाते इति दर्शयितुं कण्ठतो दशकण्ठमुपादत्ते– **दशाननाद्या इति** ।। दश दशसङ्ख्याकान्याननानि मुखानि यस्य स रावणः आद्यः आदौ भवो एषां ते । राक्षसा इति शेषः । समा स्वेदोत्पादहेतुश्रमनिस्सीमतां सूचयति । स्विन्नानि स्वेदयुक्तानि गात्राणि शरीराणि येषां ते तथा । अनेन असुसाधधनुर्धारणमात्रप्रयत्नकरण इयानायास आसासुराणामिति सूचयति । 'ञिष्विदा स्नेहनमोहनयोः' इति भ्वादेः 'आदिकर्मणि निष्ठा वक्तव्या' इति [वा.पा.सू. १-२-१९] निष्ठा क्तः । स च 'आदिकर्मणः क्तः कर्तरि च' [कौ.७१०] इति कर्तरि भवति । ततः

कित्वाद्गुणाभावे 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति [कौ.३०१६] दयोर्नकारे[१] स्विन्नेति भवति । समा च आदिकर्मत्वं द्योत्यत इति ज्ञेयम् । 'गमेरा च' [उणादि. ६१८] इति गमधातोराकारे त्रे च गात्रमिति भवति । 'गात्रं वपुः' इत्यमरः । '...गात्रमङ्गे कलेवरे । स्तम्बे रमाग्रजङ्घादिविभागेऽपि समीरितम् ।।' इति विश्वः । परिवृत्तनेत्राः परिवृत्तानि भ्रमन्ति नेत्राणि येषां ते तथा । 'दाम्नी...' इति [कौ.३१६२] निधातो ष्ट्रे नेत्रमिति भवति । पतिताः निपतिता, धरातल इति शेषः । पतते: 'तनिपतिदरिद्रातिभ्यः सनो वेड्वाच्य' इति वैकल्पिकस्य इटो प्राप्तेः 'द्वितीयाश्रित...' इति [कौ.६८६] निपातनात् पतित इति भवति । यद्वा चुरादौ अदन्तेषु पठितस्य 'पत गतौ' इत्यस्य पतित इति रूपं ज्ञेयम् । विमूर्च्छिताः मोहिताः । ननु मूर्च्छिता इति कथम् । 'आदितश्च' इति [कौ.३०३६] इण्निषेधादिति चेत् सत्यं 'विषं जलधरः पीतं मूर्च्छिताः पथिकाङ्गना' इत्यादि प्रयोगाणां बहुलमुपलम्भान्मूर्च्छा सञ्जाता एषामिति 'तारकादि' इति इचि मूर्च्छित इति भवति । लोकमातृकामनया तेषां असम्भाष्यतां वा भाष्यकृद्भाषते– **पतिता इति** ।। महापातकिन इति भावः । इयानायासः कुतस्त्वा ? गृहीत्वा किं न कन्यां निन्यिर इत्यतः चतुराननवरो मत्क्षेमङ्कर इत्याह– **तथापीत्यादिना** ।। स्वासामर्थ्ये विख्यातेऽपि । मम तेभ्यो समर्थत्वेऽपीति वा । ते दशाननाद्याः मां धर्षयितुम् । बलात् धर्तुं न शेकुः शक्ताः न आसुः । स्वयम्भुवो ब्रह्मणः । स्वयमित्यव्ययम् । स्वयं भगवतो भवतीति स्वयमेव भवतीति वा स्वयम्भूः । भुवः क्विप् । 'स्वयम्भूश्चतुरानन' इत्यमरः । सुताकृते सीतार्थम् । वचनाद्वाक्यात् । वचधातोर्युच्यने च वचनमिति भवति । 'वचनं वच' इत्यमरः । त्वां धर्षयित्वा बलावलेपात् त्वत्सुतां नेतुं न तु न कोऽपि सुशकः स्यादिति चतुरास्यस्य वररूपगिरा दुराधर्षाणामपि सेर्ष्याणां सामर्षाणामिव द्विषां न धर्षणशक्ति- र्नक्तञ्चराणामिति भावः । मां रमात्मिकाम् । ते धर्षयितुं सुताकृते स्वयम्भुवो वचनादित्यप्यन्वयो ज्ञेयः । यतः अयोनिजाता सीता माता ततो हेतोर्जातचेतो जातबाधोत्कर्षा अपि धर्षयितुं न समर्था विमता भवन्त्विति स्वयम्भुवो वाक्यादिति योजना वा । एवमन्वये एव 'बलान्न ते कश्चिदुपैति कन्यकां तदिच्छुभिस्ते न च धर्षणेति' इत्यनुवादः सम्भवतीति बोध्यम् । अन्यथैकदेशेऽनुक्तवादप्रसङ्गात् । परिवृत्तनेत्रेति तृतीयान्तं वा । धनुषेति शेषः । परिवृत्तमिति भावे क्तः । ततः परिवृत्तं स्वदर्शनत एव भ्रान्तिं नयति प्रापयतीति स तथा । तेन हेतुना संस्विन्नगात्राः दशानननाद्या विमूर्च्छिताः पतिता इति स्वेदमूर्च्छापतनकारणभ्रमनिमित्तं शरासनमित्युक्तं भवति । तथा अपीति छेदः । यथा मम धर्षणाभावे धातुर्वचनं तथा सुताकृतेऽपीति दृष्टान्तदार्ष्टान्तिकपरतया तदन्वयो ज्ञेयः । तेऽपि इत्यप्यन्वयः । अपिना

---

१. 'ष्विदा गात्रप्रक्षरणे' इति धातोरेव स्विन्नेति रूपनिष्पत्तिः वक्तव्यमिति भाति । तथाहि 'ष्विदा गात्रप्रक्षरणे' । घर्मस्रुतावित्यर्थः । अयं ञीदिति न्यासकारादयः । नेति हरदत्तादयः ।' 'तथाच तन्मते 'ञीत क्तः' इति वर्तमाने क्तो भवति । आदित्वान्निष्ठायां नेट् । स्विन्नः । 'विभाषा भावादिकर्मणोः' स्विन्नं स्वेदमित्यादि सिद्धम्' इति कौमुदीतत्त्वबोधिन्योः ।

न समरसमर्थ इति न त्वां धर्षयेयुरित्यतस्ते तेन [अ]गर्हिता इत्येतर्हि नार्या आशातः अनार्याः कुर्युरकार्यमपीति सूचयति । 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' [कौ.५५७] इति वचनात् । [१]यद्वा सुता अकृता ई इवचनात् स्वयं भुव इत्यपि छेदः । स्वयं ई साक्षाल्लक्ष्मीः । भुवो भूमेः सकाशात् । न विद्यते कृतं कर्मफलोपलम्भकं यस्याः सा । अथवा अकृता अप्रकृतिविकृता अकृत्रिमा अनाविष्टरूपिणी श्रीरेवेति यावत् । सुता पुत्रीति च इता प्राप्ता । त्वामिति शेषः । इति वचनात् । अस्या अपत्यं इः अजो ब्रह्मा तस्य वचनात् मां रमां धर्षयितुं न शेकुरिति वा । यथोक्तं रामायणे [बा.का. ६६-१४] 'भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा' इत्यादि । सङ्ग्रहेऽपि [बा.का.७-१८] 'सीता च सीरध्वजकन्यकेयं सामान्यनारी नहि लोकमान्या । यागप्रयोगे भुव आविरासीद्या देवमाया जलधेरिव श्रीः ।।' इति ।।२१।।

**वरदराजीय–** दुराशाबलाच्चालयतां तेषां अवस्थामाह– **संस्विन्नेति** ।। सम्यक् स्वेदयुक्तं गात्रं शरीरं येषां ते तथा । परिवृत्तानि परिभ्रमन्ति नेत्राणि येषां ते तथा । एतादृशां अवस्थां प्राप्ता दशाननाद्याः रावणाद्याः विमूर्च्छिताः सन्तः पतिता इत्यर्थः । नन्वेवमवमानितास्ते तव कथं नापकारं कुर्युरित्यत आह– **तथापीति** ।। एवमवमानिताः अपि रावणाद्याः मां धर्षयितुं न शेकुः । कुत इत्यत उक्तम्– **सुताकृत इति** ।। सीतार्थं स्वयंभुवः ब्रह्मणो वररूपाद्वचनादित्यर्थः ।।२१।।

**जनार्दनीया–** तर्हि किमभूदित्यत आह– **संस्विन्नेति** ।। संस्विन्नानि स्वेदयुक्तानि गात्राणि येषां ते तथा । परिवृत्तनेत्राः परिभ्रमणलोचनाः । दश आननानि मुखानि यस्य स तथा रावणः । तथापि पतिताः अपि ते दशाननाद्याः । सुताकृते, स्वयम्भुवः ब्रह्मणो । वचनात् वररूपवाक्यात् । मां धर्षयितुं निग्रहणार्थम् । न शेकुः समर्थाः न बभूवुः ।।२१।।

**चट्टी–** दुराशयापि चालयतां तेषामवस्थामाह– **संस्विन्नेति** ।। संस्विन्नानि स्वेदयुक्तानि गात्राणि येषां ते तथा । परिवृत्तानि नेत्राणि येषां ते दश आननानि मुखानि यस्य तथा । रावणाद्याः मूर्च्छितास्सन्तः पतिताः तथाप्येवमवमानिता अपि ते रावणाद्या सुताकृते सुतार्थं स्वयम्भुवो ब्रह्मणो वचनाद् वररूपाद्वाक्यात् मां धर्षयितुं निग्रहणार्थं न शेकुः समर्था न बभूवुः ।।२१।।

**भावचन्द्रिका–** कैमुत्यमाह– **संस्विन्नेति** ।। 'दशाननाद्याश्च दशामगच्छन् शोच्यामशोच्याः किमुतान्यलोकाः ।' इति सङ्ग्रहरामायणे [बा.का.७.९] । दशाननाद्या अप्येवं किमुतान्ये इति ।।२१-२९।।

---

१. 'सुताकृतेतेवचनात्' इति पदसमुदायस्य 'सुता अकृता इता ई इवचनात्' इति छेदः । अत्र पूर्वं ई+इवचनात् इत्यनयोः सर्वणदीर्घः । ततः इता+ईवचनात् इति गुणः इति व्याख्यातृभिप्रायः इति भाति ।

**पुरा हि मेऽदात् प्रभुरब्जजो वरं प्रसादितो मे तपसा कथञ्चन ।**
**बलान्न ते कश्चिदुपैति कन्यकां तदिच्छुभिस्ते न च धर्षणेति ।।२२।।**

**वादिराजीया–** बलात् कन्याहरणेऽपि कार्यहानिः पितुर्निर्बन्धकरणेऽपि पितृस्नेहात् कन्या स्वयमेव गवानयने वत्स इव गमिष्यतीति उभयथाऽपि कार्यहानिः । अतो वरद्वयमप्यावश्यकमिति भावेनाह– **बलादिति** ।।२२।।

**सत्यधर्मीया–** कथं कुतो धाता अदात्ते वरमित्यतस्तत्कारणं विवृणोति– **पुरेति** ।। पुरा पूर्वमेव । मम तपसा कायक्लेशनादिकेन करणेन '...तपो लोकान्तरेऽपि च । चान्द्रायणादौ घर्मे च पुमान् शिशिरमाघयोः ।।' इति मेदिनी [सत्रिकम्.२४] । कथञ्चन बहुकृच्छ्रतः । प्रसादितः प्रसन्नीकृतः, वरं दातुमभिमुखीकृत इति यावत् । अब्जजो अप्सु उदके जायत इत्यब्जं तत्र भवो अब्जजः । यद्वा अप्यो [अप्सु] जायत इत्यब्जं तस्माज्जायत इति स तथा वा । पूर्वं 'सप्तम्यां जनेर्डः' इति [कौ.३००७] ड उभयत्र । 'पञ्चम्यामजातौ' इति [कौ.३००८] वा डः । 'अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे । क्लीबं पद्मे... ।।' इति विश्वः[१] । कुतः कस्य तस्य तादृशीशक्तिरित्यतो वक्ति– **प्रभुरिति** ।। सर्वस्वामी । 'विप्रसंभ्यो ड्वसंज्ञायाम्' [३१६०.कौ] इत्यसञ्ज्ञायां प्रपूर्वात् भुवो डः ततो ह्रस्वे प्रभुरिति भवति । 'प्रभुः परिवृढ' इत्यमरः । हि यतो वरं वक्ष्यमाणम् । अदात् दत्तवान् । लङ् । तमेव विशदयति– **बलादिति** ।। यः कश्चित्कोऽपि । आदित्यो दैत्यो दानवो मानवो वा । बलात् बलात्कारेण । ते तव । कन्यकां मोपैति न प्राप्नोति । उपेन भो भूपते ते सुतायाः सीतायाः समीपमपि दुरापं दुराचाराणामसुराणामिति द्योतयति । 'क्षिपकादीनाञ्च' इति [वा.७.३.४५] निषेधात् नप्रत्ययस्यादिति ईत्वं ततश्च कन्यकेति भवतीति मन्तव्यम् । त इति कर्माणि षष्ठी । त्वत्कर्मिका धर्षणा बलाद् ग्रहणम् । न भवेदिति शेषः । इति वरं चतुराननोऽदाद् । कर्तृनाह– **तदिच्छुभिरिति** ।। तामिच्छन्तीति तदिच्छवस्तैः दशाननाद्यैरित्यर्थः । 'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः' इति [वा.३-३-२८] धृषेर्युचि । अनेन णत्वं गुणे च रपरे धर्षणेति भवति । 'विन्दुरिच्छुः' [कौ.३१४९]इति निपातनात् इच्छार्थस्येषिधातोः छत्वे इच्छुरिति भवति । 'इषुगमियमां छः' [कौ.२४००] इति छः । परन्तपस्य तव तपो न तापसीतपस्येव तापशीतादिसहनत इत्यतो वा आह– **अहिम इति** ।। अहिमे आतपे । अकारप्रश्लेषाभावेनावृत्त्या च हिमे शीते च । उपलक्षणया वातधारासम्पातादिग्रहः तस्मिन्नपि कथञ्चन तत्सहनादिना, कृतेनेति शेषः । 'हन्तेर्हि च' इति [उणादि.१५२] हनित्यस्य हिरादेशः चान्मक्च भवतो भवति ततो हिममिति । यद्वा हिनोतिर्वर्धत इति हिमम् । 'सञ्ज्ञापूर्वको विधिरनित्य' इति नगणः । 'हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः स्यात्... ।।' इति मेदिनी [मद्विकम्.३८] ।

१. कोशोऽयं मुद्रितविश्वप्रकाशे नोपलभ्यते । किन्तु मेदिन्यामेव दृश्यते ।

'तुहिनं हिमम्' इत्यमरः । चापारोपणे कश्चिदपि न समर्थश्चेन्मम सद्मन्येव पद्मा कन्या सती दिनानि दीना नयन्ती जीविष्यति कान्तार्थिनीत्यायातमित्यतः प्रभुः कश्चिद्भूपेषु पश्चात्तापेन गतवत्सु पश्चादागत्य त्वन्मनोरथमिव चापञ्च पूरयिष्यतीत्याह– **बलादित्यादिना** ।। कश्चित्कोऽपि प्रभुस्तपसातीतजातौ सीताकृतेन प्रसादितः सन् बलात् स्वसामर्थ्यात् नते नम्रे सति, धनुषीति शेषः । कन्यकां सीतां उपैति प्राप्नोति इत्यप्यतीतानागतवेत्तृचतुरश्चतुराननो वरमदादित्यर्थः ।

यद्वा अकथं चनेति छेदः । अहिमे हिमे च । अकथं न विद्यते कथा अस्मिन्कर्मणि यथा भवति तथा । समौनं, असम्भाष्यभाषणमिति यावत् । अपिः चार्थः । केवलं हिमाहिमसहनेन न अपि तु मौनेनापि सहेति समुच्चायकः । 'अथैतयोः पथोर्नैकतरेण च न' इति श्रुतौ श्रुतश्चनशब्दोऽप्यर्थ इति व्याख्यानात् । बलात् स्वसामर्थ्यात् हेतोः नते सर्वसुपर्वनमस्कृते सति ते कन्यकामन्यो जन्युर्न चोपैति । तत्र हेतुमाह– **अकः** ।। चित् अदुःख्येव देवस्सुखपूर्ण इति स एव देवीविवाहयोग्य इति भावः । चित् परोक्षापरोक्षज्ञानमुपैति विषयीकरोति सकः सुखरूपः कन्यकामुपैतीति वा ।।२२।।

**वरदराजीया–** किं तद्वररूपं वचनं इत्यत आह– **पुरा हीति** ।। पुरा पूर्वं प्रभुः समर्थो अब्जजो ब्रह्मा तपसा प्रसादितः प्रसन्नीकृतो मे वरमदात् हीत्यर्थः । किमित्यत आह– **बलादिति** ।। कश्चित् कोऽपि कथञ्चन केनापि प्रकारेण बलात्ते कन्यकां नोपैति न प्राप्नुयात् । तथा तदिच्छुभिः तां कन्यामिच्छन्तीति तदिच्छवः तैस्ते तव धर्षणा अपकारोऽपि नेति वरमदादिति पूर्वेणान्वयः ।।२२।।

**जनार्दनीया–** 'वचनात्' इत्युक्तं विवृणोति– **पुरेति** ।। प्रसादितः प्रसन्नीकृतः । अब्जजो ब्रह्मा । कश्चित्पुमान् ते तव कन्यकां बलान्नोपैति न प्राप्नोति । तदिच्छुभिः कन्यार्थिभिः ते तव धर्षणे निग्रहे न च न स्यादिति वरमादात् ।।२२।।

**चट्टी–** किं तद्वररूपं वचनमित्यत आह– **पुरेति** ।। पुरा पूर्वं प्रभुः समर्थो ब्रह्मा मे तपसा प्रसादितः प्रसन्नीकृतस्सन् कश्चित् पुमान् कथञ्चन केनापि प्रकारेण तव कन्यकां बलान्नोपैति न प्राप्नोति । तदिच्छुभिस्तां कन्यां इच्छन्तीति तदिच्छवः तैस्ते तव धर्षणा निग्रहो न च स्यादिति वरमदात् ।।२२।।

**भावविवृतिः–** ततो ममायं प्रतिपूर्य मानसं इत्यत्र मे मया अर्थितो मम मानसं परिपूर्य कन्यां वृणोतु इत्यर्थकतया यद्यपि अन्वेतुं शक्यते । तर्हि द्वितीयायामित्यस्यानन्वयः । अतोऽभिन्नवाक्यतया अन्वेतव्यः । तथाहि । अयं रामो मम मानसं परिपूर्य कन्यां वृणोतु । ननु 'स आह चैनं परमं वचस्ते करोमि नात्रास्ति विचारणा मे' इत्युक्तत्वात् पुनः धनुःपूरणं कृत्वा कन्यां वृणोत्विति कथमुक्तवानित्यत आह– **अयमेव मेऽर्थित इति** ।। राम एव कन्यां वृणोत्वित्यर्थितोऽभूत् । धनुःपूरणं तु क्षत्रियधर्मरक्षणार्थं रामादन्येषां मानभङ्गार्थं अस्य सर्वोत्तमत्वज्ञापनार्थं कुर्वित्युक्तवानित्यर्थः । उक्तञ्च

सप्तदशाध्याये– 'अपां पतिश्च मैथिलः स्वयंवरं कृतावपि । हरिं विनिश्चयादियं व्रजेदिति स्म चक्रतुः ।। स्वयंवरः क्षितेर्भुजां स्वधर्म इत्यतो द्वयोः । न दोष आस... ।।' इति ।।२३-६५।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ चतुर्थोऽध्यायः ।।

**गूढवाक्यार्थ–**कन्यां बलान्नोपैति तदिच्छुभिस्तदर्थिभिरित्यर्थः ।।२२।।

**ततस्तु ते नष्टमदा इतो गताः समस्तशो ह्यस्तन एव पार्थिवाः ।**
**ततो ममायं परिपूर्य मानसं वृणोतु कन्यामयमेव मेऽर्थितः ।।२३।।**

**व्यासतीर्थीया–** ततः पतनानन्तरम् ।।२३-३३।।

**वेदाङ्गतीर्थीया–** ह्यो भवः ह्यस्तनः, तस्मिन् ह्यस्तने काल इत्यर्थः ।।२३-२४।।

**वादिराजीया–** ह्यस्तने अतीतदिने । ततः तस्मात् कारणात् मानसं मनस्सम्बन्धिप्रयोजनम् ।।२३।।

**सत्यधर्मीया–** शरासनेनेदृशी दशाननादीनां दशा आननादीनां चेत् तेऽचेष्टास्तस्थुः तत्रैव किं ? किञ्च उत्तरत्र चक्रुरित्यतस्तदपक्रमक्रमं कथयति– **तत इति** ।। ततः पातानन्तरम् । ते तु । तुर्भेदं वदन् देवादिसन्मात्रात् व्यावर्तयति । देवभिन्नाः पूर्वदेवा रावणाद्याः । नष्टो मदो अहमहमिकया कार्मुकाकर्षण-महाप्रयत्नहेतुरहङ्कारो येषां ते तथा । हि यस्मात् येऽनष्टमदाः न विद्यन्तेऽष्टौ मदा विद्यामदो धनमद इत्यादयो अष्टमदा येषां ते तथा सन्तः । ई रमा स्तुता पुरा अवताराय नुता, अस्माभिरिति शेषः । तत इति हेतोः । पार्थिवाः पृथिवी भवाः पृथ्वीं प्रत्यागता इति यावत् । नेति शेषः । मेति वा आवृत्त्यान्वयः । भुवं प्रत्यपि नोपागुरित्यर्थः । तु तद्व्यावृत्ताः इति वान्वयः । 'मदोऽनुपसर्गे' [कौ.३२४४] इति चापि मद इति भवति । 'गर्वोऽभिमानोऽहङ्कारो मद' इति विश्वः । इतोऽस्मत्सद्मतः पुराद्वा गताः लङ्कादिस्वस्वाश्रयं प्रतीति शेषः । वृथा तद्गमनानन्तरं कति जातास्तिथय इत्यतः कथयति– **ह्यस्तन एवेति** ।। ह्यस्तनेत्यव्यवहितातीततिथिवाच्यव्ययम् । तस्मात् 'ऐषमोह्यःश्वसोरन्यतरस्याम्' [कौ.१३२६] इति त्यबभावपक्षे 'सायञ्चिरं प्राह्णेप्रगेऽव्ययेभ्यष्टुट्युटुलौ' [कौ.१३९१] इति च अव्ययत्वात् ट्युप्रत्यये तुटि च ततः प्रागने ह्यस्तनमिति भवति । अनद्यतन इति निर्देशात् । 'ह्योऽतीते' 'तुः स्याद्भेदेऽवधारणे' इत्युभयतश्चामरः । गत एवेति वा । केचन गता दुरात्मानः केचन दुराशया नेति किं नेत्याह– **समस्तश इति** ।। सर्वेऽपीत्यर्थः । यद्यपि 'बह्वल्पार्थात्....' [कौ.२१०९] इति वहूनि ददाति बहुश इति शस् स्वार्थादन्यस्मिन्नर्थे विहितः तथापि 'अपेतापोढमुक्तपतितापत्रस्तैरल्पश' [७००.कौ] इति निपातनात् 'एकां कपिलामेकैकशो [सहस्रकृत्वो]दत्वा' इति भाष्यप्रयोगाच्च स्वार्थे शस् ज्ञेयः । ततश्च समस्तश इत्यस्य समस्ता इत्येवार्थः । एतेन सर्वश इत्युक्तार्थः । न केवलं रावणादय एव गता अपि तु

भूपाश्चेत्याह– **पार्थिवा इति** ।। पृथिव्या ईश्वराः पार्थिवाः । 'तस्येश्वरः' [कौ.१७०८] 'तत्र विदित इति च' [कौ.१७०९] अणि पार्थिवा इति भवति । 'सर्वभूमिपृथिवीभ्यामणञौ' [१७०७.कौ] इति पृथिव्युत्पातरूपा असन्तो भूपा इति वा । तत एवं प्रतिज्ञाया हेतोः **मम मे मानसं मनसि भवं मानसम्** । मनःशब्दादणि मानसशब्दाद्वा अणि मानसं धनुरारोपणे तनुजां ददानीति सङ्कल्पं मनोरथं वा । परिपूर्य पिनाकाकर्षणेन पूरयित्वा । अयं पुरोवस्थितो रामः । कन्यां वृणोतु स्वीकरोतु । 'वृञ् वरणे' श्नुप्रत्यये लिट् । अयमेव राम एव मे मया अर्थितः जामातृत्वेन समीप्सितः । यद्वा ततो व्याप्तः, समस्तशः पूर्णसुखोऽयं रामः आनसं अनस इदं आनसम् । 'तस्येदम्' [कौ.१५००] इत्यण् । एन उपरि विद्यमानत्वेन अनः सम्बन्धिनं धनुं पूरयित्वा । यतो मामस्तुतेति शेषः । ततः तां कन्यां वृणोतु । अयं चापारोपः प्रतिज्ञां पालयतो ममार्थितोऽपेक्षितः । अथवा 'कुरुष्व जामातरमेनमाशु' इति स्वोक्ताकृत्या विश्वामित्रस्य निरभिमानित्वेन कोपो नोत्पत्तुमर्हतीति बोधयितुं तं तथा सम्बोधयति– **अममेति** ।। ममेत्यव्ययम् । न विद्यते मम ममता यस्य सोऽममः तत्सम्बुद्धिः । 'निर्मम' इत्यादिप्रयोगात् । अथवा स्वयंवरे कन्ययैव वरो वरणीय इति कथमयं कन्यां वृणोत्वित्युक्तिरित्यतो वक्ति– **इत इति** ।। य आनसं परिपूर्य इतः प्राप्तः । पुनरिनसभं वा मुनिमिति वा शेषः । तत इति द्वितीयान्तात्तसिः । तं अममायम् । न विद्यते मा सम्पज्ज्ञानं वा येषां ते अमा अज्ञाः तेषां माया सीता कन्यात्वेन सर्वानपि स्वान्कामुकत्वेन कल्पनकल्पाऽविद्या येन सोऽममायः तम् । अमा गता माया अविद्या कापट्यं गतं वा यस्मादिति वा अमायं अकापट्यम् । अं श्रीनारायणं वा मा रमात्मिका कन्या वृणोतु वरयतु । उपयातदैतेयसमुदायस्य दत्तकिञ्चिदुपायनेन मया भाव्यमिति तद्योग्यं फलमप्याह– **समस्तश इति** ।। तत इति प्रथमान्तात्तसिः । ततः सः तद्योगाद्य इति लभ्यते । य इतः स्वालयं यातेऽपि समस्तशः सम्यगस्तं यस्य शं स समस्तशः रावणादिः कन्यामयं कन्यामूलकं हृद्रोगं वृणोतु । यद्वा मा कन्या अवृणोतु । स रावणादिः आमयं सीतानवाप्तिखेदमयमामयं वृणोत्विति वा । 'रोगगदामयाः' इत्यमरः । मे मया । इतो मन्नगर्याः अर्थितो निवर्तितः । समस्तशो रावणादिरिति वा । 'अर्थोऽभिधेयरैवस्तु-प्रयोजननिवृत्तिषु' इत्यमरः ।।२३।।

**वरदराजीया–** ततस्तस्मात् कारणात् नष्टमदाः नाशितगर्वा अपि समस्तशः पार्थिवाः । ह्योभवः ह्यस्तनः कालः तस्मिन् पूर्वेद्युरित्यर्थः । इतः गताः तूष्णीमेव गताः न त्वपाकर्तुं समर्था इत्यर्थः । ततः कारणादयं श्रीरामो मम मानसं सङ्कल्पं प्रतिपूर्य पूरयित्वा कन्यां वृणोतु । अयं श्रीराम एव मे अर्थितो जामातृत्वेनेत्यर्थः ।।२३।।

**जनार्दनीया–** ततः पतनानन्तरम् । नष्टः परिहृतः मदः गर्वो येषां ते तथा ते । सर्वशः सर्वे पार्थिवाः भूपाः । इतः स्वयंवरात् ह्यस्तने पूर्वदिवसे । यतो मे एतादृशी प्रतिज्ञा ततः कारणात् । अयं रामः । मम

मानसं 'ददामि कन्यां य इदं हि पूरयेत्' इति मनोऽभीष्टं परिपूर्य पूर्णं कृत्वा, कन्यां वृणोतु स्वीकरोतु । प्राप्तकाले लोट् । कन्यावरणं प्राप्तकालं इत्यर्थः । मे मया । अयमेव राम एव । अर्थितः सीताप्रदानार्थमिष्टः ।।२३।।

**चट्टी–** ततः पतनानन्तरं नष्टः परिहृतो मदो गर्वो येषां ते तथा । तेन सर्वशः सर्वे पार्थिवाः इतः स्वयंवरात् ह्यस्तने पूर्वेद्युः गताः यतो मे एतादृशप्रतिज्ञा ततः कारणादयमेव राम एव मे कन्यां वृणोतु । किं कृत्वा । मम मानसं मनसि भवं अयं सुखं परिपूर्य सकलगुणनिधिश्रीरामदर्शनेन मनस्यङ्कुरितं सुखं मत्प्रतिज्ञापालनेन वर्धयित्वा इत्यर्थः । यद्वा अयं मे मया प्रार्थितो वर इति भिन्नं वाक्यम् ।।२३।।

**अनन्तभट्टीया–** ह्यस्तने पूर्वेद्युः । मानसं प्रतिज्ञामित्यर्थः ।।२३।।

**अतिविशद–** ततो ममायं प्रतिपूर्य मानसं वृणोतु कन्यामयमेव मेऽर्थित इत्यत्र अयमयमिति पदद्वयमस्ति । तत्रैकमेवापेक्षितं न त्वन्यदित्यतः अयं रामः मम मानसं परिपूर्य कन्यां वृणोतु । राम एव मे मया अर्थित इति केचित् । मे अर्थितो राम एव मानसं परिपूर्य कन्यां वृणोतु इत्यन्वये एकवैय्यर्थ्यापरिहारात् । किञ्च 'सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इत्युक्तत्वेन वाक्यभेदोऽयुक्तश्च तस्मात् कथमित्यत्रैवं समाधानम् । ममायमित्यत्र अयमिति न पदच्छेदः । किन्तु आयमिति । तदर्थस्तु विस्तार इति । 'निषेदुश्च क्षमायान्त' इत्यभियुक्तैस्तथा व्याख्याततत्वात् । ततश्चायमक्षरार्थः । यतः सर्वैरशक्यता तत अर्थितोऽयं मम मानसं आयं धनुः प्रपूर्य अनन्तरं कन्यावरणादिरूपं 'विस्तारं परिपूर्य मे कन्यां वृणोत्विति । अनेन मानसमित्यस्य मनोवाचित्वे गौणार्थोऽपि प्रयुक्तः किं मनःपूरणमित्युत्तरस्यैव वक्तव्यत्वात् ।।२३।।

**गूढवाक्यार्थ–** ह्यस्तने पूर्वेद्युः । मानसं प्रतिज्ञामित्यर्थः ।।२३।।

**तथेति चोक्तो मुनिना स किङ्करैरनन्तभोगोपममाश्वथानयत् ।**
**समीक्ष्य तद्वामकरेण राघवः सलीलमुद्धृत्य हसन्नपूरयत् ।।२४।।**

**वादिराजीया–** मुनिना चेति चशब्दसम्वन्धः ।।२४।।

**सत्याभिनवीया–** तत्रैव तथेति चोक्तो मुनिना स किङ्करैः... इति श्लोके सलीलमुद्धृत्येत्यस्य केवलं लीलया सहितं यथा भवति तथा उद्धृत्येत्यर्थः । एतेन लीलयोधृत्येत्येवोक्ते अनायासेनोद्धृत्येत्यर्थलाभात् लीलया सहितं यथा भवति तथेति कथनमधिकमिति दूषणं पराकृतम् । केवललीलयैवोद्धारः कृतः आयासलेशोऽपि नास्तीति वक्तुं लीलया सहितं यथा भवति तथेत्युक्तमिति स्वीकरणात् ।।२४।।

**सत्यधर्मीया–** जनकवचनश्रवणसमनन्तरं अनन्तराधसो राघवस्य बलप्रकाशहेतोर्विश्वामित्रस्य शरासनानयने किङ्करान्प्रेरयितुं राजाज्ञासीदिति शंसति– **तथेत्यादिना** ।। मुनिना तथेति धनुर्मनुजैरानाय्य दर्शयैशमीशायेति उक्तो भाषितः । वचधातोः 'वचि' इति सम्प्रसारणे क्तेच उक्त इति भवति । यथोक्तं रामायणे– 'जनकस्य वचः श्रुत्वा विश्वामित्रो महामतिः । धनुर्दर्शय रामाय इति होवाच पार्थिवम् ।।' इति [वा.रा.१-६७-१] । सङ्ग्रहे च– 'इति ब्रुवाणं नरनाथमेनमुदाहरद्विप्र उदारचेताः । शरासनं वैरिनिरासनं तदानीयतां द्रागवनीश्वर... ।।' इति । स जनकः कर्ता । किङ्करैः करणेन । दूतैः पूर्वोक्तसङ्ख्याकैः । अनन्तभोगोपमं न विद्यते अन्तो नाशो यस्य सोऽनन्तः शेषः । 'शेषोऽनन्तो वासुकिश्च' इत्यमरः । 'अनन्तः केशवे शेषे पुमान् निरवधौ त्रिषु' इति हेमचन्द्रः । तस्य भोगः शरीरम् । भुजतेर्वक्रगत्यर्थस्य पुगन्तगुणे कुत्वे भोग इति भवति । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । तेनोपमा यस्य तद्धनुरिति शेषः । महत्त्वेन भीकरत्वेन रक्तमाल्यत्वेन मासृण्येन वक्रतया वा वासुकिशरीरसाम्यं शरासनस्येति ज्ञेयम् । यद्वा अनन्तस्य शेषस्य भोगः आनन्दाद्यनुभवः यस्य स भवो अनन्तभोगः तस्य उपमा यस्य तत् करधारणयोग्यं वा । आशु शीघ्रम् । आनयत् आनीतवान् । यद्वा नङन्तर्णीतण्यर्थः । मुख्यः कर्ता जनकः । किङ्करैः अवान्तरकर्तृभिर्वा आनाय्यादर्शयदित्यर्थः किङ्करैः भृत्यैः । 'नियोज्यकिङ्करप्रेष्ये' इत्यमरः । अथ आनयनान्तरम् । समीपसन्निहितो विवाह इति मङ्गले वा अथशब्दः । स राघवो रघोर्गोत्रापत्यं रामः । चशब्देन जनकजगज्जनकपक्षेऽप्यन्वयस्तथोक्त इत्यस्येति सूचयति । तथा च मुनिना वत्स राम तच्छरासनमारोपय इत्युक्तः स राघव इत्यन्वयः । यथोक्तं रामायणे 'वत्स राम धनुः पश्य इति राघवमब्रवीत्' इति [वा.रा.१-६७-१२] । सङ्ग्रहे च 'मुनिर्मुकुन्दं निजगाद वत्स रामेदमापूरय चापरत्नम्' इति [१-७-१४] । तत् तद्दूतानीतम् । धनुः समीक्ष्य निरीक्ष्य । वामकरेण अदक्षिणकरेण । उद्धृत्य ऊर्ध्वतो धृत्वा । हसत् स्मयत् । 'हसे हसने' अस्मात् 'स्वनहसो वा' [३२३९.कौ] इति अपि हसशब्दो हासवाची । ततो लटि शतृप्रत्यये हसन्निति भवति । 'अथो हसः हासो हास्यं च' इत्यमरः । सलीलं लीलया सहितं यथा भवति तथा । 'लीङ श्लेषणे' 'सम्पदादिभ्यः क्विप्' लियं संश्लेषं लाति आदत्त इति 'आतश्चोपसर्गे' इति के टापि च लीलेति भवति । 'हेलालीला' इत्यमरः । 'लीला विलास इति नाटके' रत्नकोशः [नाटकरत्नकोशः इति रामाश्रमीये] । अपूरयत् पूरयामास सज्जं कृतवान् । 'सलीलं हसन्नपूरयत्' इत्यनेन लेशायासराहित्यं ईशस्य द्योतयति । यद्वा अनन्तस्य नारायणस्य भोगः शयनादिना यत्र सोऽनन्तभोगस्तेन उपमा यस्येति वा । अनन्ताः निरवधिकाः भोगाः येषां ते भूभुजस्तैरुपमा राजकल्पितपूजया यस्य तद्वा । यथोक्तं रामायणे 'इदं धनुर्वरं दिव्यं जनकैरभिपूजितम्' इति [वा.का.६७.८] । 'धनुरानीयतां दिव्यं गन्धमालाविभूषितम्' इति च [वा.का.६७-२] । अनन्तैः भोगैः उप समीपे मा सम्पद्यस्येति वा । मुनिर्ज्ञानी चासौ ना च पुरुषो विधिः । अथ अस्माकं

भगवदवलोकनहेतुभूतभागधेयाविर्भावानन्तरम् । आशु अनन्तभोगोपमं अनन्तभोगो नारायणः तेनोपमा सर्वसादृश्यम् , तादात्म्यमिति यावत् । उपमा रमा यस्य सदा सोपमः, अनन्तभोगश्चासौ उपमश्चेति वा तं रामम् । अनन्तोऽक्षरः रमा तस्या भोगे सम्भोगे उं औचित्यं यस्य स तथा । तं वा । अनन्तभो अपरिमितकान्तिः राघवः अगोपमं अगेन वृक्षेण उपमा यस्येति धनुर्विशेषणम् । 'रुचिस्त्विट् भा' 'शैलवृक्षौ नगावगौ' इति च अमरः । किङ्करैः किङ्कर्यश्च विदेहनार्यश्च किङ्कराश्च विदेहनराश्चेति किङ्करास्तैरित्युक्तः सन् । तानिति शेषः । समीक्ष्य कृपाकटाक्षत संमान्य हसन्नपूरयदिति वा । यथोक्तं सङ्ग्रहे– 'लोकेशमालोक्य विलासिनीनां अन्योन्यमासीत् इति तत्र वार्ता' । [१-७-१५] इत्यारभ्य 'नृपात्मजोऽयं जनकात्मजाया गृह्णातु पाणिं रमणो रमण्याः । नारायणः साध्वनुमोदतां तदिच्छामहे नः सुकृतेन सख्यः ।। प्रजल्पितानीति पुराङ्गनानां आकर्णयन् कर्णसुखानि पुंसाम् । अविस्मितः सुस्मित एव रामो..... ।।' इत्यन्तम् । [वा.का.७.२१-२३] 'नृणां सहस्रे समवेक्ष्यमाणे सस्वस्तिवाद' इति च । रामायणे च– 'स्तुवतां नृसहस्राणां बहूनां रघुनन्दन' इति [बाल.६६-१६] । यद्यपि वामेन करेण धनुर्ग्रहणं दक्षिणेन वाणसन्धानमिति धानुष्कसम्प्रदायायातं अत्र तु भार्याप्राप्तिसाधनत्वेन 'भार्याभागो वाम इति प्रसिद्ध' इति वक्ष्यमाणत्वेन सार्थकं चाभवदिति मन्तव्यम् ।।२४।।

**वरदराजीया–** ।। **तथेति** ।। तथास्त्विति मुनिना विश्वामित्रेणोक्तः स जनकः अथानन्तरं अनन्तभोगोपमं अनन्तस्य शेषस्य भोगोपमं शरीरसन्निभं धनुः किंकरै आशु आनयत् आनयामास । राघवः श्रीरामः तद्धनुः समीक्ष्य वामकरेण सलीलं लीलया सहितं यथा भवति तथा उद्धृत्य हसन्नेव अपूरयत् सज्यं चकार ।।२४।।

**जनार्दनीया–** तथेति त्वदुक्तं करिष्यतीति । मुनिनोक्तः स जनकः । अनन्तः शेषः तस्य भोगो देहः तेनोपमं सदृशम् । धनुः तद्धनुः अपूरयत् आरोपयामास ।।२४।।

**चट्टी–** ।। **तथेति** ।। त्वदुक्तं करिष्यतीति मुनिना विश्वामित्रेणोक्तः स जनकः अथानन्तरं अनन्तस्य शेषस्य भोगो देहः स उपमा यस्य तद्धनुः किङ्करैराश्वानयद् आनयामास । राघवः श्रीरामः तद्धनुः समीक्ष्य हसन् वामकरेण सलीलं लीलया सहितं यथा भवति तथा उद्धृत्य अपूरयदारोपयामास ।।

**अनन्तभट्टीया–** अनन्तभोगोपमं शेषदेहसदृशम् ।।२४।।

**अतिविशद–** स किङ्करैरनन्तभोगोपममाश्वथाऽनयदित्यत्र किङ्करैः त्रिशतसङ्ख्याकैरित्यर्थः । 'यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरकृते त्रिशतोपनीतम्' इति वचनात् । 'किङ्कराः सहानसैव' इत्यत्रापि तथैव ।।२४-२५।।

**गूढवाक्यार्थ–** अनन्तभोगोपमं शेषदेहसदृशम् ।।२४।।

**सत्यधर्मीया–** जनकवचनश्रवणसमनन्तरं अनन्तराधसो राघवस्य बलप्रकाशहेतोर्विश्वामित्रस्य शरासनानयने किङ्करान्प्रेरयितुं राजाज्ञासीदिति शंसति– **तथेत्यादिना** ।। मुनिना तथेति धनुर्मनुजैरानाय्य दर्शयैशमीशायेति उक्तो भाषितः । वचधातोः 'वचि' इति सम्प्रसारणे क्तेच उक्त इति भवति । यथोक्तं रामायणे– 'जनकस्य वचः श्रुत्वा विश्वामित्रो महामतिः । धनुर्दर्शय रामाय इति होवाच पार्थिवम् ।।' इति [वा.रा.१-६७-१] । सङ्ग्रहे च– 'इति ब्रुवाणं नरनाथमेनमुदाहरद्विप्र उदारचेताः । शरासनं वैरिनिरासनं तदानीयतां द्रागवनीश्वर... ।।' इति । स जनकः कर्ता । किङ्करैः करणेन । दूतैः पूर्वोक्तसङ्ख्याकैः । अनन्तभोगोपमं न विद्यते अन्तो नाशो यस्य सोऽनन्तः शेषः । 'शेषोऽनन्तो वासुकिश्च' इत्यमरः । 'अनन्तः केशवे शेषे पुमान् निरवधौ त्रिषु' इति हेमचन्द्रः । तस्य भोगः शरीरम् । भुजतेर्वक्रगत्यर्थस्य पुगन्तगुणे कुत्वे भोग इति भवति । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । तेनोपमा यस्य तद्धनुरिति शेषः । महत्वेन भीकरत्वेन रक्तमाल्यत्वेन मासृण्येन वक्रतया वा वासुकिशरीरसाम्यं शरासनस्येति ज्ञेयम् । यद्वा अनन्तस्य शेषस्य भोगः आनन्दाद्यनुभवः यस्य स भवो अनन्तभोगः तस्य उपमा यस्य तत् करधारणयोग्यं वा । आशु शीघ्रम् । आनयत् आनीतवान् । यद्वा नङन्तर्णीतण्यर्थः । मुख्यः कर्ता जनकः । किङ्करैः अवान्तरकर्तृभिर्वा आनाय्यादर्शयदित्यर्थः किङ्करैः भृत्यैः । 'नियोज्यकिङ्करप्रेष्ये' इत्यमरः । अथ आनयनान्तरम् । समीपसन्निहितो विवाह इति मङ्गले वा अथशब्दः । स राघवो रघोर्गोत्रापत्यं रामः । चशब्देन जनकजगज्जनकपक्षेऽप्यन्वयस्तथोक्त इत्यस्येति सूचयति । तथा च मुनिना वत्स राम तच्छरासनमारोपय इत्युक्तः स राघव इत्यन्वयः । यथोक्तं रामायणे 'वत्स राम धनुः पश्य इति राघवमब्रवीत्' इति [वा.रा.१-६७-१२] । सङ्ग्रहे च 'मुनिर्मुकुन्दं निजगाद वत्स रामेदमापूरय चापरत्नम्' इति [१-७-१४] । तत् तद्दूतानीतम् । धनुः समीक्ष्य निरीक्ष्य । वामकरेण अदक्षिणकरेण । उद्धृत्य ऊर्ध्वतो धृत्वा । हसत् स्मयत् । 'हसे हसने' अस्मात् 'स्वनहसो र्वा' [३२३९.कौ] इति अपि हसशब्दो हासवाची । ततो लटि शतृप्रत्यये हसन्निति भवति । 'अथो हसः हासो हास्यं च' इत्यमरः । सलीलं लीलया सहितं यथा भवति तथा । 'लीङ श्लेषणे' 'सम्पदादिभ्यः किप्' लियं संश्लेषं लाति आदत्त इति 'आतश्चोपसर्गे' इति के टापि च लीलेति भवति । 'हेलालीला' इत्यमरः । 'लीला विलास इति नाटके' रत्नकोशः [नाटकरत्नकोशः इति रामाश्रमीये] । अपूरयत् पूरयामास सज्जं कृतवान् । 'सलीलं हसन्नपूरयत्' इत्यनेन लेशायासराहित्यं ईशस्य द्योतयति । यद्वा अनन्तस्य नारायणस्य भोगः शयनादिना यत्र सोऽनन्तभोगस्तेन उपमा यस्येति वा । अनन्ताः निरवधिकाः भोगाः येषां ते भूभुजस्तैरुपमा राजकल्पितपूजया यस्य तद्वा । यथोक्तं रामायणे 'इदं धनुर्वरं दिव्यं जनकैरभिपूजितम्' इति [वा.का.६७.८] । 'धनुरानीयतां दिव्यं गन्धमालाविभूषितम्' इति च [वा.का.६७-२] । अनन्तैः भोगैः उप समीपे मा सम्पद्यस्येति वा । मुनिर्ज्ञानी चासौ ना च पुरुषो विधिः । अथ अस्माकं

भगवदवलोकनहेतुभूतभागधेयाविर्भावानन्तरम् । आशु अनन्तभोगोपमं अनन्तभोगो नारायणः तेनोपमा सर्वसादृश्यम् , तादात्म्यमिति यावत् । उपमा रमा यस्य सदा सोपमः, अनन्तभोगश्चासौ उपमश्चेति वा तं रामम् । अनन्तोऽक्षरः रमा तस्या भोगे सम्भोगे उं औचित्यं यस्य स तथा । तं वा । अनन्तभो अपरिमितकान्तिः राघवः अगोपमं अगेन वृक्षेण उपमा यस्येति धनुर्विशेषणम् । 'रुचिस्त्विट् भा' 'शैलवृक्षौ नगावगौ' इति च अमरः । किङ्करैः किङ्कर्यश्च विदेहनार्यश्च किङ्कराश्च विदेहनराश्चेति किङ्करास्तैरित्युक्तः सन् । तानिति शेषः । समीक्ष्य कृपाकटाक्षत संमान्य हसन्नपूरयदिति वा । यथोक्तं सङ्ग्रहे– 'लोकेशमालोक्य विलासिनीनां अन्योन्यमासीत् इति तत्र वार्ता' । [१-७-१५] इत्यारभ्य 'नृपात्मजोऽयं जनकात्मजाया गृह्णातु पाणिं रमणो रमण्याः । नारायणः साध्वनुमोदतां तदिच्छामहे नः सुकृतेन सख्यः ।। प्रजल्पितानीति पुराङ्गनानां आकर्णयन् कर्णसुखानि पुंसाम् । अविस्मितः सुस्मित एव रामो..... ।।' इत्यन्तम् । [वा.का.७.२१-२३] 'नृणां सहस्रे समवेक्ष्यमाणे सस्वस्तिवाद' इति च । रामायणे च– 'स्तुवतां नृसहस्राणां बहूनां रघुनन्दन' इति [बाल.६६-१६] । यद्यपि वामेन करेण धनुर्ग्रहणं दक्षिणेन बाणसन्धानमिति धानुष्कसम्प्रदायायातं अत्र तु भार्याप्राप्तिसाधनत्वेन 'भार्याभागो वाम इति प्रसिद्ध' इति वक्ष्यमाणत्वेन सार्थकं चाभवदिति मन्तव्यम् ।।२४।।

**वरदराजीया–** ।। **तथेति** ।। तथास्त्विति मुनिना विश्वामित्रेणोक्तः स जनकः अथानन्तरं अनन्तभोगोपमं अनन्तस्य शेषस्य भोगोपमं शरीरसन्निभं धनुः किंकरै आशु आनयत् आनयामास । राघवः श्रीरामः तद्धनुः समीक्ष्य वामकरेण सलीलं लीलया सहितं यथा भवति तथा उद्धृत्य हसन्नेव अपूरयत् सज्यं चकार ।।२४।।

**जनार्दनीया–** तथेति त्वदुक्तं करिष्यतीति । मुनिनोक्तः स जनकः । अनन्तः शेषः तस्य भोगो देहः तेनोपमं सदृशम् । धनुः तद्धनुः अपूरयत् आरोपयामास ।।२४।।

**चट्टी–** ।। **तथेति** ।। त्वदुक्तं करिष्यतीति मुनिना विश्वामित्रेणोक्तः स जनकः अथानन्तरं अनन्तस्य शेषस्य भोगो देहः स उपमा यस्य तद्धनुः किङ्करैराश्वानयद् आनयामास । राघवः श्रीरामः तद्धनुः समीक्ष्य हसन् वामकरेण सलीलं लीलया सहितं यथा भवति तथा उद्धृत्य अपूरयदारोपयामास ।।

**अनन्तभट्टीया–** अनन्तभोगोपमं शेषदेहसदृशम् ।।२४।।

**अतिविशद–** स किङ्करैरनन्तभोगोपममाश्वथाऽनयदित्यत्र किङ्करैः त्रिशतसङ्ख्याकैरित्यर्थः । 'यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरकृते त्रिशतोपनीतम्' इति वचनात् । 'किङ्कराः सहानसैव' इत्यत्रापि तथैव ।।२४-२५।।

**गूढवाक्यार्थ–** अनन्तभोगोपमं शेषदेहसदृशम् ।।२४।।

**विकृष्यमाणं तदनन्तराधसा परेण निस्सीमबलेन लीलया ।**
**अभज्यतासह्यममुष्य तद्बलं प्रसोढुमीशं कुत एव तद्भवेत् ॥२५॥**

**वेदाङ्गतीर्थीया–** अनन्तराधसा अनन्तानि [राधांसि यस्मात् सः अनन्तराधाः । तेन] इष्टसिद्धिप्रदात्रा । तद् धनुः । अमुष्य रामस्य । तद् बलं निस्सीममसह्यं तत् बलम् ॥२५-२६॥

**वादिराजीया–** 'राध साध संसिद्धौ' इति वचनात् अनन्तराधसा सङ्कल्पमात्रेणानन्तकार्यसिद्धिमता ॥२५-२६॥

**सत्यधर्मीया–** अखिलजगद्वलयप्रबलबलभिदनुजबलं सोढुं नालं सत्तालप्रमाणमपि वाणासनं दानवमानवादि सर्वावमानफलमिवाप मध्वरिणा मध्यविध्वंसं इति शंसति– **विकृष्यमाणमिति** ॥ कृषतेः टि 'स्यतासि' [कौ.२१८६] इति स्ये च आनेः मुकि षत्वणत्वयोर्विकृष्यमाणमिति भवति । तदनन्तराधसेत्येकं पदम् । यद्धनुरनन्तानि निरवधिकानि राधांसि सिद्धयो यस्य सोऽनन्तराधाः स पूर्वमुद्युक्तश्चासावनन्तराधाश्च तेन । तत्र हेतुः– **निःसीमबलेन इति** ॥ निर्गता सीमा मर्यादा अवधिर्यस्मात्तमिति निस्सीमम् । निःसीमं वा बलं सामर्थ्यं यस्य तेन । एवमपि नैकांशशक्ति-प्रकाशनमित्याह– **लीलयेति** ॥ तद्धनुरभज्यत । 'मध्य' इत्यध्याहारः । भग्नीकृतम् । लुङ् कर्मणि । अमुष्य निस्सीमसामर्थ्यस्य रामस्य । असह्यं कैरपि सोढुं अशक्यम् । सोढुं मर्षयितुम् । ईशं शक्तम् । कुतः कारणादेव भवेत् । काकुना न भवेदेवेति सूचयति । 'षह सहन' इत्यतो 'धात्वादेः' [कौ. २२६४] इति षस्य सत्वे 'सहिवहोरोदवर्णस्य' [कौ. २३५७] इत्यकारोकारे हस्य ढत्वे तुमनि चेप्रत्यये प्रत्येतव्यं सोढुमिति । ससिध्यर्थकस्य राधधातोः 'सार्वधातुभ्य' [उणादि. ६३८] इत्यसुनि राध इति भवति । 'राधः सिद्धौ विशाखायां राधा राधा च विद्युति' इति हैमः । 'नामन्सीमन्' [उणादि.६००] इति निपातनात्षिञो दीर्घे च सीमेति भवति । सर्वदा शर्वेण एतत्पर्यङ्कशेषसमेन विकृष्यमाणस्य कथं ततो अत्युत्तमराम-सामर्थ्यसहनसुशकता तस्येति वाह– **तदिति** ॥ यत् अनन्तराधसा । अनन्तस्य शेषस्य राध इव राधो यस्य स तथा । तेन शेषविशेषेण विषमलोचनेन अत एवापरेणानुत्तमेन नीचेन । अः परो यस्मादिति वा परो भगवत्स्वामिकः तेन विकृष्यमाणं तद्धरधनुः निस्सीमबलेन विकृष्यमाणम् । शिष्टं पूर्ववत् । अनन्तेन नारायणेन राधो बलं यस्येत्यनन्तराधास्तेन । यद्वा अनन्तराधसाऽपरेण भगवन्मात्रोत्तमकेन । तदपि लीलया । यत् परं ब्रह्म श्रीतत्त्वं भार्यारूपं तेन । अमुष्य धनुष ईशं स्वामिनं रुद्रं प्रति धनुरिति शेषः । विकृष्यमाणम् । असह्यं भीकरत्वात् शम्भोरपि सहनायोग्यम् । तस्य हरस्य धनुरमुष्य मुरारेर्बलं धर्तुं कुत एवेशं समर्थं भवेत् । यद्भार्यया जगन्मात्रा धनुमात्र आकृष्टे दुद्राव रुद्र इति तद्धनुस्तद्धर्तृनिःसीमशक्तिरामविक्रमं कथं सोढुमीशं कुत एव भवेदिति कैमुत्येन वाऽसामर्थ्यं धनुष

उक्तमिति मन्तव्यम् । अनेन 'अहं रुद्राय धनुरातनोमि' [ऋ.१०.१२५.६] इति अम्भृणीसूक्तवाक्य-मुक्तार्थं भवति । 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' [गी.१४.३] 'कूटस्थोऽक्षर उच्यते' [गी.१५.१६] इत्यादिवत्पुल्लिङ्गशब्दवोध्यता रमायाः स भवतीति नानुपपत्तिः ।।२५।।

**वरदराजीया–** अनन्तराधसा अपरिमिताभीष्टसिद्धिमता परेण सर्वोत्तमेन निस्सीमबलेन अपरिच्छिन्नबलेन लीलया विकृष्यमाणं सज्यं क्रियमाणं तद्धनुः मध्यत एव अभज्यत् भग्नमभूत् । नैतच्चित्रमित्याह– **असह्यमिति** ।। अमुष्य रामस्य तन्निस्सीमं असह्यं वलं प्रसोढुं तद्धनुः कुत एव भवेत् न कुतोऽपीत्यर्थः ।।२५।।

**जनार्दनीया–** अनन्तराधसा अनन्ताभीष्टसिद्धिमता रामेण विकृष्यमाणं तद्धनुः अभज्यत भग्नमभूत् । तद्धनुरमुष्य रामस्य तत्प्रसिद्धं वलम् प्रसोढुं ईशं समर्थं कुतः कारणात् भवेत् न भवेदित्यर्थः ।।२५।।

**चट्टी–** ।। **विकृष्येति** ।। अनन्तराधसा अपरिमिताभीष्टसिद्धिमता निःसीमबलेन अपरिच्छिन्नबलेन परेण सर्वोत्तमेन रामेण लीलया विकृष्यमाणं तद्धनुरभज्यत भग्नमभूत् । नैतच्चित्रमित्याह– **असह्यमिति** ।। तद्धनुरमुष्य रामस्य तत्प्रसिद्धमसह्यं वलं प्रसोढुमीशं समर्थं कुत एव कारणात् भवेन्न कुतोऽपीत्यर्थः ।।

**अनन्तभट्टीया–** तदनन्तराधसा अपरिमितवलेन ।।२५।।

**गूढवाक्यार्थ–** अनन्तराधसा सङ्कल्पात् देवकार्यसिद्धिमता ।।२५।।

**स मध्यतस्तत्प्रविभज्य लीलया यथेक्षुदण्डं शतमन्युकुञ्जरः ।**
**विलोकयन् वक्त्रमृषेरवस्थितः सलक्ष्मणः पूर्णतनुर्यथा शशी ।।२६।।**

**सत्यधर्मीया–** ईशशरासननिरासने श्रीशस्यानायासता सतां विदिताऽमराणां पामराणां नराणामपि बोधयितुं विधूतमधुनाऽधुना धनुरभज्यतेति प्राचि जगदुः । इदानीं माधवस्तताम किमित्यतो भग्नप्रदेशनिर्देशपूर्वकं दृष्टान्तेन अक्लिष्टतास्पष्टनमिव कृतकौशिकोदितकार्येण आर्येण इदं कृतमिति वदति– **स इत्यादिना** ।। सः यद्बलेन धनुरभज्यत स भगवान् रामः । तत् धनुः मध्यतः मध्ये । सप्तम्यां तसिः 'मध्यमश्चावलग्ने च मध्योऽस्त्री' इत्यमरः । प्रविभज्य भङ्क्त्वा । प्रेण किञ्चिदुदञ्चितसमसमञ्चित-वलसञ्चालनसहने नालं कपालिचाप इत्यकार्योपयुक्तता सूचिता भवति । यद्वा सीतोपगता भगवतेति जगति गदितुमिव सरवः शरासननिरास इति प्रः प्राह । यथोक्तं रामायणे [१-६७-१८] 'तस्य शब्दो महानासीत् निर्घातसमनिस्वनः । भूमिकम्पश्च...।।' इत्यादि । सङ्ग्रहे च– [बा.का.७-२५] 'जगत्त्रये दूत इवातिवेगी ध्वनिर्धनुर्भङ्गभवः ससार । रामेण सीतोपगतेति वार्तामुद्घोषयन् व्यक्तमिवातिरम्याम् ।।' इति । त्रिवारं [२४,२५,२६श्लो] लीलालापेन तदुद्भूताविव कर्षणे पूरणे च मध्यतो विध्वंसे चेति

कार्यत्रयेऽपि अनायासो वासुदेवस्येति सूच्यते । यद्वा यद्वासुदेवस्य अनेन धनुरानमनेन लब्धसकलस्य फलं भावि न वर्तते तत् । किन्तु लीलैव प्रवृत्तिहेतुरित्यर्थे 'लोकवत्तु लीलाकैवल्यम्' [२-१-३४] 'लीलैषा परमात्मनः' 'क्रीडतेऽस्माभिरच्युतः' [सू.भा.१.१.१] इति सूत्रश्रुतिस्मृतिरूपागमः, सकलकलावत्प्रत्यक्षम्, भगवान् लीलामूलकसकलव्यापारः, पूर्णकामत्वात् । व्यतिरेकेण स्वेतरवत् इति मानत्रयमत्रार्थे मानमिति त्रिवारं लीलाग्रहणेन असूचयदाचार्यवर्य इत्यवसेयम् । शुष्कहृदयानां स्वदयानास्पदतया फलालाभेन मध्य एव विध्वंसो न्याय्य इति मतिमानतिमानवकृतिः बभञ्जाजगवं भगवानिति मध्वमुनिः 'मध्यत' इति वाचाऽसूचयदिति मन्तव्यम् । दृष्टान्तेनाप्यनायासतामाचष्टे– **यथेति** ।। शतमन्युकुञ्जरः शतं मन्यवः क्रतवो यस्य स शतमन्युः इन्द्रः । 'यजिमनिशुन्धि' इति मनेर्नुचि मन्युरिति भवति । 'मन्युर्दैत्ये क्रतौ क्रुधि' इति मेदिनी । 'मन्युः स्यात् क्रोधयज्ञयोः' इति हैमः । 'क्रतौ क्रोधे तथा दैत्ये मन्युशब्दं प्रचक्षते' इति च अनेकार्थध्वनिपदमञ्जर्याम् । तस्य कुञ्जरो गज ऐरावतः । 'ऊषत्सुषिमुष्कमधोर' इत्यत्र 'खमुखकुञ्जेभ्य उपसङ्ख्यानम्' इति कुञ्जस्योपसङ्ख्यानान्मत्वर्थे रः । हस्तिहनुः कुञ्जः सोऽस्यास्तीति कुञ्जरः । 'कुञ्जरो वारणः करी' इत्यमरः । 'शतमन्युर्दिवस्पतिः' इति च । इक्षुदण्डं इक्षोः रसालस्य दण्डो यष्टिः तम् । यथा छिनत्ति तथा लीलया प्रविभज्य । 'इषेः वत्य इक्षुः' इति भवति । 'रसाल इक्षुः' इत्यमरः । 'दमेर्यमन्ताड्डः' इति डे दण्ड इति भवति । शतं बहुलो मन्युः कोपो यस्य स चासौ कुञ्जरश्चेति वा । कोऽपि द्विपो यथेक्षुदण्डं खण्डयतीति तथाचायमपारसत्वः सत्वरया चिच्छेदेति वा । 'तच्छतं तत्सहस्रमनन्तश्च' इति वचनात् शतपदं बहुवाचीति ज्ञेयम् । अनन्तरमनन्तः किं कृतवानित्यत आह– **विलोकयन्निति** ।। विलोकयन् पश्यन् सन् । लोकृधातोर्णिजन्तस्य रूपमिति परस्मैपदता सम्भवति । कर्माह– **ऋषेर्वक्त्रमिति** ।। ऋषेर्विश्वामित्रस्य । वक्त्रम् मुखम् । 'गुधृषीपचिवचि' इत्यादिना त्रे कुत्त्वे च वक्त्रमिति भवति । 'वक्त्रास्ये वदनं तुण्डम्' इत्यमरः । सलक्ष्मणः सानुजः । धरणिजापाणिग्रहणोपयुक्तलक्षणयुक्तो वा । पूर्णतनुः पूर्णाः समेधमानास्तनवः कलाः षोडशसङ्ख्याका यस्य स तथा । शशी चन्द्रो यथा प्रकाशत आकाशे तथा अवस्थितोऽवन्यामित्यर्थः । अनेन अम्लानाननता सूच्यते । मुनेराननिरीक्षणेन त्वद्वदनादुदितं वचनं विरचितार्थमितीतःपरं करणीयमार्यः कुर्यादेवेति देवो भावमाविश्चकारेति ध्वनितमिति भावः । ऋषेरिति भाषणेन तथ्यातथ्यकथनसुकृतदुष्कृतावाप्तिवित्त्वात् तदालापो नालीक इति नालीकनिलयामेलनकृदेवेति द्योत्यते । यद्वा पूर्णतनुरिति रामविशेषणम् । पूर्णा जगद्व्याप्ता तनवः शरीराणि यस्य सः । पूर्णात् मूलरूपात् निस्सृततनुर्यस्येति वा । 'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते' इति श्रुतेः । शशी यथा तथा प्रकाशमानमिति शेषः । 'ऋषेर्वक्त्रम्' इत्यनेन वान्वयः । पुरैव तपःप्रभावेनोज्वलल्लपनं मुनेरधुना स्वानुयायिना मत्कार्यमकारि महदिति बहुमदोऽस्य वदनं विधुवदवभासते इति भावः । यथोक्तं सङ्ग्रहे 'स लक्ष्मणः शोभनलक्षणोऽसौ तस्यै विलोक्यास्य मुनेर्मुखेन्दुम्' इति । शरासनपूरणस्य त्वत्कन्या-

प्रदानकारणतयेरणात् ततोऽधिकं तद्भङ्गमाचरं स्वावरजत्रयकन्यात्रितयप्रदानकारणमपि सम्पादयामास स इति ज्ञेयम् । अत एव मूले 'सलक्ष्मणोऽवस्थित' इति स्थितौ तत्साहित्यं भ्रातृमुख्यत्वादनुयायित्वाच्च उच्यत इति मन्तव्यम् । सलक्ष्मणः सकलङ्कः शशी । पूर्णतनुः कलङ्कराहित्येन पूर्णशरीरो यथा तथा अवस्थित इति वा । यदि निशेशो निष्कलङ्को भूयात् भूयात्तदा माधवसमकान्तिरिति कदापि न समसमप्रकाशः शशीति प्रकाशितमनेनेति ज्ञेयम् ।।२६।।

**वरदराजीया—** स रामः तद्धनुर्लीलया शतमन्योरिन्द्रस्य कुञ्जरः ऐरावतः इक्षुदण्डं यथा मध्यतो मध्यभागे विभज्य ऋषेः विश्वामित्रस्य वक्रं मुखं विलोकयन् सलक्ष्मणः पूर्णतनुः कलापूर्णमण्डलः षोडशकलापूर्णः शशी यथा तथा अवस्थितः स्थितोऽभूदित्यर्थः ।।२६।।

**जनार्दनीया—** शतमन्युः शतक्रतुः तस्य कुञ्जरः ऐरावताख्यो गजः इक्षुदण्डं यथा तथेत्यर्थः । 'क्रतौ क्रोधे तथा दैत्ये मन्युशब्दः प्रचक्षते' इत्यनेकार्थध्वनिपदमञ्जर्याम् । ऋषेर्वक्त्रं मुखं विलोकयन् पूर्णतनुः षोडशकलापूर्णः शशी यथा तथा अवस्थितः ।।२६।।

**चट्टी—** सः रामः तद्धनुर्लीलया शतमन्योः शतक्रतोः कुञ्जरः ऐरावताख्यो गजः इक्षुदण्डं यथा तथा मध्यतः मध्ये प्रविभज्य ऋषेः विश्वामित्रस्य वक्त्रं मुखं विलोकयन् सलक्ष्मणः पूर्णतनुः षोडशकलापरिपूर्णः शशी यथा तथावस्थितः स्थितोऽभूत् ।।२६।।

**अनन्तभट्टीया—** शतमन्युकुञ्जरः इन्द्रगजः ।।२६।।

**अतिविशद—** शतमन्युकुञ्जर इत्यत्र शतमन्युः शतक्रतुः । 'क्रतौ क्रोधे तथा दैन्ये मन्युशब्दं प्रचक्षते' इत्यनेकार्थध्वनिमञ्जर्याम् ।।२६-२९।।

**तमञ्जनेत्रं पृथुतुङ्गवक्षसं श्यामावदातं चलकुण्डलोज्ज्वलम् ।**
**शशक्षतोत्थोपमचन्दनोक्षितं ददर्श विद्युद्वसनं नृपात्मजा ।।२७।।**

**वेदाङ्गतीर्थीया—** [शशक्षतोत्थं] हि रुधिरम् ।।२७।।

**वादिराजीया—** इदानीं यस्या दर्शयितुं स्वलावण्यं रामः प्रकटीचकार तस्याः सीतायाः सौन्दर्यदर्शनप्रकारं वर्णयन् शृङ्गाररसस्य मुख्यालम्बनभूतं रामं च वर्णयति— **तमञ्जनेत्रमिति** ।। धनुर्विभज्य वीररसे स्थितं प्रागुक्तानन्तचन्द्राधिककान्तिभरितसर्वाङ्गं मनोहरमुखकमलेन शोभमानं चेत्यर्थः । शशक्षतोत्थोपमचन्दनोक्षितं शशक्षतादुत्थं यद्रक्तं सैवोपमा यस्य चन्दनस्य तेनोक्षितमलंकृतमित्यर्थः । घनश्याम इतिवत् कुङ्कुमगोरोचनादिरक्तद्रव्यसम्बन्धादतिरक्तचन्दनस्य वर्णविशेषं दृष्टान्तमुखेन स्पष्टयितुमेव शशक्षतोत्थोपमेत्युक्तम् । तस्याप्यतिरक्तत्वान्न तु गन्धादिनापि साम्येन । दृष्टान्ते

सर्वसाम्यस्यानपेक्षितत्वात् । अथो न जुगुप्सारसप्रवेशः । दार्ष्टान्तिकीभूते सभासुरभिकरणशीले सकलजनमनोरञ्जने भगवच्चर्चितचन्दने अद्भुतरसस्यैवाविर्भावेन जुगुप्सितरसवार्ताया एव दूरापास्तत्वात् । अन्यथा घनश्याम इत्युक्तेऽपि जाड्यादिप्रवेशेन जुगुप्सा स्यात् । अत एव आलङ्कारिकाः 'गन्धवद्रुधिर-चन्दनोक्षिता' इति रुधिरस्यैव चन्दनत्वं वर्णयत्कालिदासवाक्यमेव जुगुप्सारसस्योदाहरणमुदाहरन्ति । मृगयाप्रियस्य क्षत्रियस्य शशमृगादिक्षतजमपि न जुगुप्सितम् । विदारणनृसिंहस्यान्त्रमालावद्भूषणमेव । अतः शशक्षतदृष्टान्तकथनेऽपि नात्र दोषः शङ्कनीयः । नहि व्रतस्थस्य जुगुप्सिता नारी गृहस्थस्यापि जुगुप्सिता । अतो न कश्चित्क्षुद्रोपद्रवः । अनेन मुखादिशिखान्तसकलावयवमनोहरं वसनचन्दनकुण्डलोपलक्षित-कटकमकुटहारनूपुरादिसर्वाभरणाख्योद्दीपनविभावैश्च भूषितं रामं नृपात्मजा ददर्शेति सीतायाः सामस्त्येन दर्शनशक्तिः चक्षुःप्रीत्याख्यप्राथमिकशृङ्गारावस्था चैकेनैव श्लोकेन वर्णिता वेदितव्या ।।२७।।

**सत्यधर्मीया–** इदानीं कौशिकमुखपीयूषमयूखमवलोकयन्तं लोकमुखतः श्रुतं प्राचि प्राचीननिजनाथं विलोकयन्त्या लोकमातुः सीतायाः श्रोत्रे इव नेत्रे अपि लेभाते फलं च अलमिति लपति– **तमित्यादिना** ।। नृपात्मजा नृपस्य जनकस्य आत्मा देहः तस्माज्जायत इति सा तथा जानकी । तं मुनिसनीडे स्थितम् । ददर्श लुलोके । यः पूर्वं स्वरमणोऽपि स्वरमणस्तं वा । कीदृशं स्वेशं ददर्श दर्शनीयतमा रमेत्यतः तं विशिनष्टि– **अब्जनेत्रमित्यादिना** ।। अब्जे इन्दीवरे इव नेत्रे यस्य स तम् । शतपत्रपत्रायतनेत्रं इत्यर्थः । अद्भ्यो जायते इति 'पञ्चम्यां जातौ' इति डः । अब्जश्चन्द्रः । उपलक्षणया रविरपि ग्राह्यः । अविरवी नयनयोर्यस्येति वा । 'शशिसूर्यनेत्रम्' इत्यादिवचनात् । साक्षाच्चन्द्रमात्रग्रहणं च अमृतशिशिरापाङ्गो राम इति युक्तम् । 'अब्जो जैवातृकः सोम' इत्यमरः । 'अब्जोऽस्त्री शङ्खे ना निचुले धन्वतरौ च हिमकिरणे । क्लीवं पद्मे' इति विश्वः ।। **पृथुतुङ्गवक्षसम्** ।। पृथु विपुलं तुङ्गमुन्नतं वक्ष उरो यस्य स तथा तम् । 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' [उणादि.२८] इति कौ संप्रसारणे पृथुरिति भवति । 'पृथू राजा महानपि' इति पदमञ्जरी । वचधातोः 'पचिवचिभ्यां सुट् च' [उणादि.६६९] इति सुटि असुनि कुत्वे षत्वे च वक्ष इति च । 'उरो वक्षश्च वत्सं च' इत्यमरः ।। **श्यामावदातम्** ।। इदंरूपेण श्यामो रूपान्तरेण अवदात इति । यथोक्तं सङ्ग्रहे– 'ताम्राणि शुभ्राणि च पिङ्गलानि श्यामानि नीलानि चतुर्भुजानि । व्यष्टप्रवेष्टानि...।।' इत्यादि ।

श्यामेति सीताविशेषणं वा । श्यामा तरुणीति तदर्थः । अवदातं शुद्धम् ।। **चलकुण्डलोज्ज्वलम्** ।। चलतः इतस्ततः स्यन्दमाने इति चले 'ज्वलतिकसन्तेभ्यो णः' [कौ.२९०२] इति णाभावपक्षे अच् । ततश्च चल इति भवति । सोपसर्गत्वादुज्ज्वल इत्यजन्त एव इत्यवधयेम् । ते च ते कुण्डले कर्णभूषणे ताभ्यामुज्ज्वलः प्रकाशमानः । कुण्डेर्वृषादित्वात्कलप्रत्ययः । कुण्डलमण्डितगण्डमण्डल इत्यर्थः । चलं चञ्चलं कुण्डलं यस्य स चलकुण्डलः एककुण्डलः शेषः तत्र उज्ज्वल इति शेषशायी राम इति वा । चलं

चञ्चलं कुण्डलमण्डलाकारो यस्य स कुण्डलीति वा । 'कुण्डली गूढपात्' इति सर्पपर्यायामरः । 'चलकुण्डल' इति सीताविशेषणं वा । चले कुण्डले यस्याः सा । चलानि कुण्डलानि वलयानि वा यस्याः सा तथा । उज्ज्वलं रामविशेषणम् । प्रकाशमानम् । 'कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च । काञ्चनद्रुगुडूच्यो स्त्री केवलः कुहने पुमान् ।।' इति रत्नकोशः । [मेदिनी.लत्रिकम्.८३] ।। **शशक्षतोत्थोपम-चन्दनोक्षितम्** ।। शशस्य सृमरस्य । 'शश प्लुतगतौ' अस्मादच् । क्षतात् क्षतेर्हेतोः उत्थितम् । 'उदः स्थास्तम्भोः पूर्वस्य' [११८] इति स्थसकारतकारे 'सुपि स्थः' [कौ.२९१६] इति केच स्थमिति भवति । क्षतोत्थं क्षतजं रक्तं तेनोपमा सादृश्यं यस्य चन्दनो भद्रश्रीः तेनोक्षितं संसिक्तम् । रक्तचन्दनदिग्धाङ्गमित्यर्थः । 'गवयः सृमरः शशः' । 'मलयजो भद्रश्रीः चन्दनोऽस्त्रियाम्' इत्युभयतश्चामरः । 'चदि आह्लादने' अस्मात् 'बहुलमन्यत्रापि...' इति युचि [ल्युट् ]* । '.... चन्दनं मलयोद्भवे । चन्दनः कपिभेदे स्यात् नदीभेदे तु चन्दिनी ।।' इति विश्वः [नत्रिकम्.७६] । 'चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम्' इति मेदिनी [नत्रिकम्.६१] । 'प्रतीकाशोपमोदय' इत्यमरः । विद्युत् तडित् विशेषेण द्योतत इति विद्युत् । 'द्युत दीप्तौ' अस्माद् 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' [३१५७] इति क्विप् । 'तडित्सौदामनी विद्युत्' इत्यमरः । तद्वद्वसनं वस्त्रं यस्य स तथा तम् । वसतेर्युच् । 'चैलं वसनमंशुकम्' इत्यमरः । श्यामावदातमिति मेघासमता रामस्येति ध्वन्यते । विद्युदिति सीताविशेषणम् । विद्युद्वत् सौदामिनीव इति विद्युत्सीता ददर्श इत्यनेन आनुरूप्यं रमण्या रमणस्य च द्योत्यते । इवार्थे वः । सनं स्वार्धभागरूपम् । अपेक्षितदातारं वा । 'वन षण सम्भक्तौ' तस्मादच् । षणु दाने वा । 'सनो लाभ इति प्रोक्तः' इति श्रीमदुक्ते । वसेः 'बहुलमन्यत्रापि' इति युचि वसनं सर्वत्र व्याप्तं वा । अथवा अब्जनेत्रमित्यस्य पीतवाससं इत्यर्थः । आप्नोतेः रूपे वाच्ये जुट्चेति जुटि धातोरादेश्च ह्रस्वे 'झलां जश् झशि' [कौ.५२] इति पस्य बे च (असुनि) सांतमब्ज इति रूपवाची सान्तः । तथा च पचाद्यचि रूपवाच्यब्जमिति भवति । प्रामाणिकत्वात् औचित्याद्वा पीतपरिग्रहः । तेन पीतरूपवतो ग्रहणम् । ततश्च अब्जं पीतं नेत्रं वस्त्रं यस्य स तम् । यद्वा अब्जवत् चन्द्रवत् शङ्खवद्वा धवलं नेत्रं वस्त्रं यस्य स तथा वा । 'शुक्लाम्बरधरं विष्णुं' इति स्मरणात् । 'अब्जोऽब्जं रूपशङ्खयोः' इति दर्पणः । अब्जमिव पीतकमलमिव नेत्रं वस्त्रं यस्येति वा । पद्मस्य पीतत्वं 'नाभिपद्माभिसम्बन्धात् पीता सेत्यभिधीयते' इति श्रीमदुक्तेर्ज्ञेयम् [सू.भा.२.३.१२] । यद्वा अब्जं ब्रह्माणं उपलक्षणया सर्वग्रहः । नयति व्यापारेषु प्रेरयतीति अब्जनेतृ स चासौ अश्च तम् । अद्भ्यो जायत इति अब्जो ब्रह्मा 'अद्भ्यस्सम्भूतो हिरण्यगर्भः' इति श्रुतेः । अशब्दवाच्यम्....* । 'लोचनं नयनं नेत्रम्' 'स्याज्जटांशुकयोर्नेत्रम्' इति च अमरः । 'यासः परं नेत्रमहं न नेत्रम्' इति श्रीहर्षः ।।२७।।

---

*. मूलकोशेषु अस्पष्टमिदं वाक्यम् ।

**वरदराजीया–** नृपात्मजा नृपस्य जनकस्यात्मजा सीता, अब्जनेत्रे अब्जवन्नेत्रे यस्य स तथा । पृथु विस्तृतं तुङ्गमुन्नतं वक्षो यस्य । श्यामवर्णेन स्वच्छम् । चलाभ्यां कुण्डलाभ्यां उज्वलं प्रकाशमानं शशस्य क्षतोत्थं रुधिरं तत्सदृशचन्दनेन लिप्ताङ्गम्, विद्युद्वद्दीप्यमानवासोयुक्तं तं रामं ददर्शेत्यर्थः ।।२७।।

**जनार्दनीया–** पृथु विशालं उत्तुङ्गं उच्चं वक्षो यस्येति विग्रहः । शशस्य मृगविशेषस्य क्षतात् शस्त्रादिच्छेदात् उत्थस्य उत्पन्नस्य रक्तस्येति यावत् । 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यभिधानात् [अमर.मनुष्यवर्ग] । उपमेन सदृशेन चन्दनेन उक्षितं चर्चितम् ।।२७।।

**चट्टी–** ।। **तमिति** ।। नृपात्मजा सीता अब्ज इव नेत्रं यस्य तम् । पृथु विशालं तुङ्गमुन्नतं वक्षो यस्य तम् । श्यामवर्णेन स्वच्छं चञ्चलाभ्यां कुण्डलाभ्यां उज्वलं प्रकाशमानं शशस्य मृगविशेषस्य क्षतात् शस्त्रादिक्षतादुत्थमुत्पन्नं रक्तमिति यावत् । तदुपमा यस्य तेन चन्दनेन उक्षितं चर्चितं विद्युद्वत् दीप्यमानं वसनं यस्य तं रामदेवं ददर्शेति सम्बन्धः ।।२७।।

**अनन्तभट्टीया–** क्षतोत्थं....* ।।२७।।

**अथो कराभ्यां प्रतिगृह्य मालामम्लानपद्मां जलजायताक्षी ।**
**उपेत्य मन्दं ललितैः पदैस्तां तदंस आसज्य च [१]पार्श्वतोऽभवत् ।।२८।।**

**वेदाङ्गतीर्थीया–** उपेत्य राममिति शेषः ।।२८-२९।।

**वादिराजीया–** अधुना मालासमर्पणव्याजेन शृङ्गाररसस्य द्वितीयालम्बनभूतां देवीं च वर्णयति– **अथो कराभ्यामिति** ।। पार्श्वतो वामपार्श्वेऽभवच्चेति चशब्दसम्बन्धः ।।२८-२९।।

**सत्यधर्मीया–** रामसमालोकनसुकृतवतीति तदाप्य पुनः किं कृतवती सीता इत्यतो वक्ति– **अथो** इति ।। ईशसन्दर्शनानन्तरम् । कराभ्यां हस्ताभ्यां करणेन । मालां स्रजं प्रतिगृह्य गृहीत्वा ऋज्रेन्द्रादिसूत्रे [उणादि.१९६] मालेति निपातनात् 'मा माने' अस्मात् रनि रेफस्य लकारे मालेति भवति । 'मालं क्षेत्रे स्त्रियां पृक्तास्रजोर्जात्यन्तरे पुमान्' इति मेदिनी [लद्विकम्.४५] । 'माल्यं मालास्रजौ' इत्यमरः । 'मालं क्षेत्रे गृहे मालो माला पुष्पादिदामनि' इति विश्वः [लद्विकम्.१५] । अम्लानानि अक्षीणहर्षाणि अताम्यन्मुखानि नूतनानि इति यावत् । पद्मानि कमलानि यस्यां सा । 'म्लिह हर्षक्षये' अस्मात् 'संयोगादेरातो धातोर्यण्वतः' [कौ.३०१७] इति निष्ठा तस्य नकारे अम्लानमिति भवति । 'अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्'[कौ.१४५] इति मनि पदेः पद्ममिति भवति । 'पद्मं नलिनम्' इत्यमरः ।

१. 'पार्श्वतोऽभूत्' इति सत्यधर्मीये ।

'पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे । ना नागे...।।' इति मेदिनी [मद्विकम्.१८] ।। **जलजायताक्षी** ।। जले जायेते ते जलजे ते इवायते विस्तृते नेत्रे अक्षिणी यस्याः सा जलजायताक्षी । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' [कौ.८५२] । ततः षित्वान्ङीषि जलजायताक्षीति भवति । मन्दं शनकैः यथा भवति तथा । ललितैः कोमलपदकमलविन्यासैः । *मन्दपदेन अमन्दसंवित् कलशचरकलशपुष्कलतया वलात् वल्गुकटीतटीतोऽलसेति चलनासुशका कुशिककुलकुशलालपनविलोकन वरसिकनिजाभिकसङ्गममङ्गललालसा किल सा अपि च स्थिरा नीरसेति तत्पटनापटुः किञ्च मातेति सदया च सीता सघोषैः घोषैः पदकटकैः कानकैः शनकैः रामं प्रति रामा समाजगामेति द्योतयति । उपेत्य समेत्य । राममिति शेषः । तां अम्लानकमलमालाम् । तदंसे तस्य रामस्य अंसो हि तदंसः तत्स्कन्धः तस्मिन् । अमगत्यादिषु अतो मेः सन्निति सनि अंस इति भवति । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । सव्येऽपसव्ये चेति विशेषणाध्याहारेण पृथगन्वयेन न एकवचनानुपपत्तिरिति ध्येयम् । आसज्य संयोज्य । 'ग्लुञ्चु षस्जगतौ' अस्मात्सस्य चुत्वेन शे जश्त्वेन जे चाङ्पूर्वको ल्यबन्तः शब्दो बोध्यः । पार्श्वतः पार्श्वे । सप्तम्यन्तात्तसिः । कक्षाधोभागे । स्वविहितरामवामभाग इति यावत् । 'स्पृशेः श्वण् शुनौ पृ च' इति [उणादि.७१५] 'स्पृश संस्पर्शे' अस्मात् णित्वादादिवृद्धौ रपरत्वे च पार्श्वमिति भवति । 'पार्श्वोऽस्त्री कक्षयोरधः ।' 'पार्श्वं कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च' 'पार्श्वं कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च' इति [वद्विकम्.२०] [वद्विकम्.१८] विश्वमेदिन्यौ । 'पार्श्वमस्त्री तयोरधः' इत्यमरश्च । यद्वा कराभ्यामिति चतुर्थी । सा च तादर्थ्ये । रामो वामेनोज्जहार हरशरासनं तदुत्तरतो बलतोलस्तकं [लस्तकं धनुर्मध्यम्] जग्राह अजगवस्येति करद्वयकार्यगुणारोपणकर्षणादिकमित्युभावपि विभोर्भुजौ सभाजनार्हाविति प्राथम्यपाश्चात्यकोपभिया तन्मूलेंऽसे स्रजःसमासज्जनं सज्जनमानसरञ्जनमिति मतिमती तथा चकार सरसा सा सारसाक्षीति ज्ञेयम् । अम्लानानि कदापि न तान्तानीति सौवर्णानि पद्मानि नीरजानि यस्यां सेति वा । यथोक्तं सङ्ग्रहे । 'हेमारविन्दस्रजमामुमोच' इति । अभूत् । स्थिता इति शेषः । अभूदित्येव पाठो नतु अभवदिति । पादानां च एकादशाक्षरत्वात् । छन्दस्त्वमाश्रित्य 'नैकाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' इति चाभवदिति भवतीति च अतिपुरातनपुस्तकेषु तथैव वर्तेत चेदङ्गीकरणीयम् । न केवलं देवोपागमनं देव्याः किन्नाम स्रजो विश्वसृजोंऽसे आसज्जनं चेति समुच्चायकश्चः । आङा च आप्रपदव्यापिनीति वनमालेयमिति द्योत्यते । 'आपादपद्मं या माला वनमालेति सा मता' इति कलिङ्गः । यद्वा पद्मेत्युपलक्षणया तुलस्यादिग्रहः । स्वर्णात्मकनीरजतुलस्यादिमती मालेति भगवत एव योग्या नत्वितरेषां दिविषदामिति ज्ञेयम् । सीता कमलालयेति सूचयितुं कण्ठतः कञ्जोक्तिः । तथाचोक्तं रुक्मिणीशविजये– [१६.४२]

---

*. मूलकोशेषु अस्पष्टमिदं वाक्यम् ।

या वै चम्पकशोभयाब्जवसतेः दूर्वा श्रिया स्वात्मनः
केतक्या विभवेन कृत्तिवसनस्याम्भोजकान्त्या विधोः ।
सन्नीलोत्पलशोभया दिनमणेः श्रीमत्तुलस्यामता
हेरम्बस्य हरेः परं समुचिता सा मालिका शोभते ।। इति ।।२८।।

**वरदराजीया–** अथानन्तरं जलजायताक्षी जलजवदायते विस्तृते अक्षिणी यस्याः सा सीता । अम्लानपद्मां अम्लानानि नूतनानि पद्मानि यस्यां तां मालां कराभ्यां प्रतिगृह्य गृहीत्वा, ललितैः मनोहरैः पदैः पादविक्षेपैः मन्दं शनैः उपेत्य राममिति शेषः । तां मालां तस्य रामस्यांसे स्कन्धे आसज्य न्यस्य रामस्य पार्श्वतो वामपार्श्वे अभवत् स्थिताऽभूदित्यर्थः ।।२८।।

**जनार्दनीय–** अम्लानानि अशुष्यन्ति, नूतनानीत्यर्थः, पद्मानि यस्याः सा तथा । मालां प्रतिगृह्य, ललितैः मनोहरैः पदैः पादविक्षेपैः मन्दं शनैः उपेत्य । राममिति शेषः । तां मालां तदंसे रामस्कन्धे आसज्य संस्थाप्य पार्श्वतः रामस्य वामपार्श्वे अभवत् तस्थावित्यर्थः ।।२८।।

**चट्टी–** ।। **अथो इति** ।। अथो अनन्तरं जलजे इव आयते विस्तृते अक्षिणी यस्या सा सीता । अम्लानानि अशुष्यन्ति नूतनानीत्यर्थः पद्मानि यस्यां सा तथा तां मालां कराभ्यां प्रतिगृह्य गृहीत्वा ललितैः मनोहरैः पदैः पादविक्षेपैः मन्दं शनैरुपेत्य राममिति शेषः । तां मालां तदंसे रामस्कन्दे आसज्य संस्थाप्य रामस्य पार्श्वतः पार्श्वे अभवत् तस्थावित्यर्थः ।।२८।।

**अनन्तभट्टीया–** अभवत् स्थितेत्यर्थः ।।२८-३२।।

**ततः प्रमोदो नितरां जनानां विदेहपुर्यामभवत् समन्तात् ।**
**रामं समालोक्य नरेन्द्रपुत्र्या समेतमानन्दनिधिं परेशम् ।।२९।।**

**सत्यधर्मीया–** न विश्वामित्रसौमित्रिमात्रस्यैव आनन्दो दशस्यन्दननन्दनविलोकनतः किन्तु अस्तोकलोकानां जनकगरीयोनगरीगतानामिव समेषामपि देशविशेषवासिनां सन्तोषोऽभूदिति भापते– **तत इति** ।। ततो रामाभिरामायाः सीतायाः नाथस्य रामस्य वामभागाभिगमनानन्तरम् । विदेहपुर्यां विदेहस्य जनकस्य पुरी नगरी तस्याम् । 'पूः स्त्री पुरी' इत्यमरः । जनानां प्रजानां प्रमोदो महाहर्षः समन्तात् सर्वत्र । समन्तात् समन्तशब्दात् 'उत्तराधरदक्षिणादातिः'[कौ.१९८३] इति योगविभागेन अन्यस्मादप्यातौ समन्तादिति भवति । यद्वा समन्तादिति पञ्चमी सर्वतोऽपीत्यर्थः । समन्तभद्र इत्यादौ संमतः समन्तशब्दो वोध्यः । नितरां अत्यर्थम् । नीत्यव्ययात्तरपि घसञ्ज्ञायां 'किमेत्तिङव्याय-घादाम्वद्रव्यप्रकर्षे' [कौ.२००४] इति चामि नितरामिति भवति । अभवदभूत् । 'मुद हर्षे' अस्मात्

पुगन्तगुणे अचि मोद इति भवति । 'प्रमोदामोदसम्मदा' इत्यमरः । प्रेण इतरेण तोषेण विशाषोऽस्य मुदो द्योत्यते । नितरामिति च अनितररुचितां नगरचरणां नराणां सूचयति । समन्तादित्यनेन तनुषि सम्भृतः सन्तोष इति रोमोद्गममोदोदकायुद्भवं आवेदयति । कुतो विशेषात्तोषो अमीषामित्यतो भाषते– **राममिति** ।। नरेन्द्रपुत्र्या नरेन्द्रस्य जनाधिपस्य जनकस्य पुत्री तया सीतया । 'पुवो ह्रस्वश्च' [कौ.६१४] इति ह्रस्वे ष्ट्रेच प्रत्यये षित्वात् ङीषि पुत्रीति भवति । समेतं संयुक्तम् । आनन्दनिधिं आनन्द आनन्दः स निधीयतेऽस्मिन्नित्यानन्दनिधिस्तम् । आनन्दगोविन्दयोरभेदेऽपि विशेषतो अधिकरणत्वविवक्षायां 'कर्मण्यधिकरणे च' इति किरिति मन्तव्यम् । आनन्दः सर्वगुणगुणो भवतीति तस्यैव मुख्यत्वात् ग्रहणमिति ज्ञेयम् । सुखमुखनिखिलगुणगणतनुमिति यावत् । तत्र हेतुमाह– **परेशमिति** ।। सर्वोत्तमं समालोक्य निरीक्ष्य । स्थितानामिति शेषः । एतेन अवस्थानकर्तार एव अवलोकनकर्तार इति न ल्यवनुपपत्तिरिति सूचितं भवति । प्रमोदः विदेहपुर्यां जनानामभवन्नितराम-भवदेव इति मा न किन्तु सः प्रमोदः समन्तात् आदिविषत्सदः ततो व्याप्त आस अभवत् । आसेति तिङन्तप्रतिरूपकमव्ययम् । यद्वा 'आस गतिदीप्त्यादिदानेषु' इति धातोः लिटि रूपम् । दिदीप इति तदर्थः । 'अमानोनाः प्रतिषेधे' इति वचनात् । नरेन्द्रपुत्र्या सीतया मेतं मया रमया इतः युतस्तम् । अनेन सीता श्रीरेवेति सूचितं भवति । 'धान्येन धनवान्' इत्यादिवत् नरेन्द्रपुत्र्येति तृतीयाभेद इति ज्ञेयम् । निधिं निधिरिवाकर इव निधिस्तम् । नितराम् धीयतेऽस्मिन्निति निधिः । धाञः किः । नितरां दधाति पोषयत्यनेनेति वा निधीयते वा सम्पदादिः । धि धारणे । आगमशास्त्रस्यानित्यत्वान्न तुक् । 'निर्धिर्ना शेवधिः' इत्यमरः । परा सर्वदुःखास्पृष्टा उत्कृष्टा ई तस्याः शं येन स तथा तम् । येषां जनानां रामं आलोक्य स्थितानां प्रमोदोऽभवत्ततस्तान् स रामो अल्पानन्दं न ववन्ध । तेभ्यः पुनरसारसंसारबन्धं न ददाति मुकुन्द इति भावः । 'अति अदि बन्धने' इत्यदिधातोर्लिटि णलि अभ्यासशेषे णित्वाद्वृद्धौ आ अन्देति स्थिते 'तस्मान्नुट् द्विहलः' [२२८८.कौ] इति मुटि आनन्द आनन्दतुः आनन्दुरिति रूपम् । परेषां ईट् स्वामी परेट् तं वा । असमेतं समेन समानेनान्येनेतः समेतः न समेतो असमेतः तं स्वसदृशशून्यम् । नरेन्द्रपुत्र्या समा साकं आलोक्येति वा । 'समा सह' 'स्यादानन्दथुरानन्द' इत्युभयतश्चामरः ।।२९।।

**वरदराजीया–** ततो मालासमर्पणानन्तरं विदेहस्य जनकस्य पुर्यां मिथिलायां समन्तात्सर्वतो जनानां परेषां ब्रह्मादीनां ईशं आनन्दस्य निधिमाकरं नरेन्द्रस्य जनकस्य पुत्र्या समेतं रामं समालोक्य स्थितानां नितरामत्यन्तं प्रमोदोऽभूदित्यर्थः ।।२९।।

**जनार्दनीया–** आनन्दनिधिं आनन्दसमुद्रं सुखस्वरूपमित्यर्थः । रामं समालोक्य स्थितानामिति शेषः । तेन समानकर्तृकत्वोपपत्तिः । प्रमोदः सन्तोषः ।।२९।।

**चट्टी–** ।। **तत इति** ।। ततो मालासमर्पणानन्तरं विदेहस्य जनकस्य पुर्यां समन्तात् सर्वतः स्थितानां जनानां सर्वेषां ब्रह्मादीनां ईशं आनन्दनिधिं आनन्दसमुद्रं सुखस्वरूपमित्यर्थः । नरेन्द्रस्य जनकस्य पुत्र्या समेतं रामं समालोक्य नितरामत्यन्तं प्रमोदो हर्षः अभवदित्यर्थः ।।२९।।

**लक्ष्म्या समेते प्रकटं रमेशे सम्प्रेषयामास तदाऽऽशु पित्रे ।**
**विदेहराजो दशदिग्रथाय स तन्निशम्याशु तुतोष भूमिपः ।।३०।।**

**वेदाङ्गतीर्थीया–** प्रकटमज्ञदृष्ट्यपेक्षयापि ।।३०-३२।।

**वादिराजीया–** प्रकटं सर्वलोकानां प्रकटं यथा भवति तथा । लक्ष्मीरमेशयोः समागमस्य सदातनत्वात् कथमिदानीमेव समागम इत्यत उक्तम्– **प्रकटमिति** ।। तं लक्ष्मीरूपसीतायाः रामस्य च समागमं निशम्य श्रुत्वा आशु अतिप्रियकार्यत्वात् निशमनसमय एव भूमिपस्तुतोषेति योजना ।।३०-३३।।

**सत्यधर्मीया–** विदेहः सहितः पुरोहितादिभिरभिहितो महता महामह एतर्हि स्वहितकार्यस्तदार्याह्वानादिरूपो व्यापार इति मतिमता अगाधतपसा गाधिसुतेन बोधितो रघुजाततातस्य वृत्तवित्तये दूतानतित्वरितगतीन् साकेतपत्तनं प्रति प्राहिणोदिति प्राह– **लक्ष्म्येति** ।। रमाया ईशः पती रमेशो रामः तस्मिन् । स्वत एव सदा पद्मापतौ लक्ष्म्या लक्ष्मीरूपिण्या स्वपुत्र्या प्रकटं यथा भवति । तथा समेते सति । स्वतो रमासमायुक्तं सर्वदा पूर्वमेव सुपर्वादिसर्वोत्तमाधिकारिणो जानते ये च जना न जानते तानप्यवगमयितुं मङ्गलरूपस्य मङ्गलदेव्या सङ्गम इति प्रकटयति प्रकटेनेति मन्तव्यम् । 'सम्प्रोदश्च' [कौ.१८३०] इति कटप्रत्यये प्रकटमिति भवति । 'लक्ष दर्शनाङ्कनयोः' अस्माच्चुरादि णिचि 'लक्षेर्मुट् च' इति मुटि ईप्रत्यये णिलोपे सुपो लोपे भवति लक्ष्मीरिति । 'कृदिकारादक्तिनः' इति ङीषि सुलोपे लक्ष्मीत्यपि । 'लक्ष्मीः पद्मालया पद्मा' इत्यमरः । '...लक्ष्मीः सम्पत्तिशोभयोः । ऋध्यौषधौ च पद्मायाम्... ।।' इति मेदिनी [मद्विकम्.२८] । 'आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मीहरिप्रिये' इति द्विरूपकोशः । शोभया वा सम्पदा वा । समेत इति भावः । आशु शीघ्रम् । पित्रे ताताय । रामस्येति शेषः । स्वपितृसपितृकप्रवादमसहमान आनन्दतीर्थः साक्षान्नोदाजहार वदनतो रामस्येति इति बोध्यम् । सम्प्रेषयामास प्राहिणोत् । सम्प्राभ्यां शतानन्दगाधिनन्दनसंमत्येव कलधौतामलजलधौतविचित्रपत्रैः सत्रासह च बहुजववाहनैः दूतत्वरितगतिं सूचयति । यथोक्तं रामायणे– 'एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् । विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ।। कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः । अयोध्यां प्रेषयामास धर्मात्मा कृतकासनान् ।। जनकेन समादिष्टा दूतास्ते क्लान्तवाहना ।।' इति । सङ्ग्रहे च– 'जनकं प्रति रामस्य जनकोऽथ नरेश्वरः । दूतान्प्रस्थापयामास विश्वामित्रानुमोदितः ।।' इति । विदेहानां राजा विदेहराजः । 'राजाहःसखिभ्यष्टच्'[कौ.७८८] इति टच् । दूतानिति शेषः ।

अर्थकथनेनैव दशरथ इत्यत्र दशसु दिक्षु रथ एको यस्य स दशरथ इत्युत्तरपदलोपी च समास इति बोधयितुं तथा निर्वक्ति– **दशदिग्रथायेति** ।। दिशन्त्यवकाशं सञ्चरतामिति दिशः । 'दिश अतिसर्जने' अस्मात् 'ऋत्विग्दधृक्स्रग्दिगुष्णिगंचुयुजिक्रुश्चां च' [३७३.कौ] इति निपातनात् क्विन् । ततः क्विन्प्रत्ययस्येति कवर्गे दिगिति भवति । 'दिशस्तु ककुभः काष्ठा' इत्यमरः । 'दिक् स्त्रिया दिशा दान्ती ककुब् देववधूः पविः' इति शब्दार्णवः । रथः स्यन्दनः । 'रथ गतौ' अस्मादचि रथ इति भवति । 'स्यन्दनो रथ' इत्यमरः । दिक्षु विदिक्षु चाप्रतिहतगतये वा । स भूमिपो दशरथः । आशु तं दूतोदितं रमारमारमणसङ्गमं निशम्य श्रुत्वा तुतोष मुमुदे । 'तुष तुष्टौ' लिटि । आशुना कां किंवदन्तीं किं वदन्त्यमी दूता इति महीमहतः सन्देहो यथा न भवेत्तथा रघुनाथेन सीता उपगतेत्यादौ दौवारिकद्वारा द्वारान्तर्गता उक्त्वा अनन्तरं अनन्तकृतं सविस्तरमूचुरतो दूताश्चतुरा इति द्योतयति । स जनकः विदेहराज इति द्वितीयाबहुवचनं वा । विदेहा राजो राजानो येषां त तथा तान् दूतान् प्रेषयामास । एतेनैते कुलपरम्पराप्राप्ता इत्याप्ता दूता इति सूचयति । राजतेः क्विप् । 'हनिकुषिरमिकाशिभ्यः क्थन्' इति रथ इति भवति । 'रथः पुमानवयवे स्यन्दने वेतसेऽपि' इति मेदिनी [थद्विकम्.१२] । 'रथः स्यात् स्यन्दने काये चरणे वेतसेऽपि च' इति विश्वः [थद्विकम्.१] । दशशब्देन दशदिशां ग्रहणम् । दिक्शब्दो वज्रवाची दशदिक्षु दिग्वद्वज्रवद्रथः कायो यस्येति वा । वज्रवदतिदृढशरीरो दशरथ इति वा । दशदिशो दशपवयो यथा तथा दृढाङ्ग इति वा । तस्मै । 'भुवः कित्' [उणादि.४९४] इति मौ किति भूमिरिति भवति । 'भूर्भूमिरचलानन्ता' इत्यमरः । 'भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम्' इति मेदिनी [मद्विकम्.२२] । तां पातीति भूमिपः ।।३०।।

**मधुसूदनीया–** ।। **दशदिग्रथाय** ।। दशदिक्षु एक एव रथो यस्य स तथोक्तः तस्मै । एकेनैव रथेन दश दिक्षु सञ्चरणायेत्यर्थः । अनेन दशरथशब्दार्थ उक्त इति ज्ञेयम् ।।३०-३१।।

**वरदराजीया–** एवं प्रकटं अज्ञदृष्ट्या प्रत्यक्षं यथा भवति तथा रमेशे रामे लक्ष्म्या सीतया समेते सति विदेहराजो जनको दशदिग्रथाय पित्रे तत्कार्यमुक्त्वा आशु सम्प्रेषयामास । तदाह्वानार्थं किङ्करानादिदेशेति शेषः । स भूमिपो दशरथो तत्कार्यं निशम्य श्रुत्वा तुतोष सन्तुष्टोऽभूत् ।।३०।।

**जनार्दनीया–** रमेशे प्रकटं मनुष्यप्रत्यक्षं यथा स्यात्तथा लक्ष्म्या सीतया समेते सति पित्रे रामस्य पित्रे । दशदिक्षु रथो यस्येति विग्रहः । दशरथायेत्यर्थः । सम्प्रेषयामास । दूतमिति शेषः । भूमिपः दशरथः तं वृत्तान्तम् । 'श्रुत्वा दूतमुखात् सर्वं विदितार्थः स पार्थिवः' इति नारसिंहे [४७.१२७] ।।३०।।

**चट्टी–** ।। लक्ष्म्येति ।। रमेशे रामे प्रकटमज्ञजनप्रत्यक्षं यथा स्यात् तथा । लक्ष्म्या सीतया समेते विदेहराजा जनकः पित्रे रामस्य पित्रे दशदिग्रथाय दशसु दिक्षु एक एव रथो यस्य स तथोक्तः । तस्मै

एकेनैव रथेन दशदिक्षु सञ्चरत इत्यर्थः । अनेन दशरथशब्दार्थो व्यक्त इति विज्ञेयम् । आशु प्रेषयामास । किङ्करानिति शेषः । स भूमिपो दशरथस्तमुत्सवं निशम्य तुतोष सन्तुष्टोऽभवत् ।।३०।।

**ताम्रपर्णीया–** तदिति तद्वृत्तम् । पित्रेप्याशु सम्प्रेषयामासेत्यर्थः । आशु निशम्येत्यन्वयः ।।३०-३९।।

**भारतश्री–** लक्ष्म्या समेते प्रकटमित्यनेन नित्यावियोगित्वं तस्या सूचितम् ।।३०।।

**भावचन्द्रिका–** दशरथ इत्यत्र दश रथाः अस्येति भ्रमनिवारणाय दशदिक्षु रथो यस्येत्याह– **दशेति** ।। आशु त्रिरात्रेण । 'प्राप्य दूतास्त्रिरात्रेण राघवेन्द्रनिवेशनम् ।' इति सङ्ग्रहे [बा.का.८.२] 'रामाय लक्ष्मणायापि प्रदास्यामि सुते मम । कुशध्वजस्य ते भ्रातुर्भ्राजमाने सुते उभे ।। दास्ये भरतायाङ्ग शत्रुघ्नाय च शोभने । श्रुत्वा ददौ... ।।' इति । स्वकन्यकां लक्ष्मणाय स्वानुजकन्यकाद्वयं भरतशत्रुघ्नाभ्याम् ।।३०-५४।।

**अतिविशद–** विदेहराजो दशदिग्रथायेत्यत्र दशरथायेति प्रतीयते तां निवारयितुं दशदिक्षु रथो यस्येत्युक्तम् ।।३०।।

**गूढवाक्यार्थ–** आशु सम्प्रेषयामासेत्यर्थः । तद्वृत्तमाशु निशम्येत्यन्वयः ।।३०-३२।।

**अथात्मजाभ्यां सहितस्सभार्यो[१] ययौ गजस्यन्दनपत्तियुक्तया ।**
**स्वसेनयाऽग्रे प्रणिधाय धातृजं वसिष्ठमाश्वेव स यत्र मैथिलः ।।३१।।**

**सत्यधर्मीया–** तदा दूतोदितं चोदन्तं सकलमाकलय्य तत्कालोचितालोचनचतुरः किं चकार कार्यमार्य इत्यत आह– **अथेति** ।। अथ वशिष्ठादिममहिष्ठमुनिजनसुमन्त्रादिममन्त्रिप्रवरवचनप्रतिवचन-समनन्तरम् । यथोक्तं रामायणे– 'वसिष्ठं वामदेवं च मन्त्रिणोऽन्यांश्च सोऽब्रवीत्' [बा.का.६८.१४] इत्यारभ्य 'मन्त्रिणो बाढमित्याहुः सह सर्वैर्मनीषिभिः' [बा.का.६८.१८] इत्यन्तम् । सङ्ग्रहे च– 'गमनाय मतिं चक्रे मन्त्रिभिः सह मन्त्रयन्' इति । आत्मजाभ्याम्, आत्मनो जायेते इत्यात्मजौ ताभ्यां भरतशत्रुघ्नाभ्याम् । सहितो युक्तः । सभार्यो भार्याभिः सहितः सभार्यः । ननु भार्येति कथम् । भृञो सञ्ज्ञायामित्यस्य पुंसि चारितार्थ्येऽपि अस्य सञ्ज्ञात्वात् 'सञ्ज्ञायां समज' [कौ.३२७६] इति क्यपा भाव्यमिति चेत् । सत्यम् । भृ इति दीर्घान्तस्य क्र्यादेव णिति भार्येति ज्ञेयम् । यद्वा भार्यैः क्षत्रियैरितरैः सहितः सभार्यः । 'भार्याः स्युः क्षत्रियाः भार्या वधूः' इति धनञ्जयामरौ । सभायामार्य इति

१. अत्र 'सीतायाः प्रददौ रत्नं कौसल्या वारिसम्भवम् । तेन भूषितगात्रा सा शुशुभे मदिरेक्षणा ।।' (स्कान्दे, उमासंहिता.६अ) इति विवाहकाले कौसल्यादीनामुल्लेखात् दशरथः सभार्य एव अभ्यागमदित्यवगम्यते । रामायणे तु वैवाहिकविधौ कौसल्यागमनादिकं नोपलभ्यते ।

वा । सभेषु कान्तिमत्सु अर्यः श्रेष्ठ इति वा । 'अर्यः स्वामिवैश्ययोः'[२८५१.कौ] इति ऋधातोः रपरगुणे यति च अर्य इति भवति । 'जनक त्वां महातेजा' इति रामायणोक्तेः । गजस्यन्दनपत्तियुक्तया गजाः कुञ्जराः, स्यन्दना रथाः पत्तयः पदातयः गजस्यन्दनपत्ति तेन युक्तया युतया । 'बहुलमन्यत्रापि' इति स्यन्देर्युचि स्यन्दन इति भवति । 'पदिप्रथिभ्यां नित्' [६३२.उणादि] इति तिः स च नित् । ततः पत्तिरिति भवति । 'मतङ्गजो गजो नागः' 'शताङ्गः स्यन्दनो रथः' 'पदातिः पत्ति पदग' इति सर्वत्र चामरः । 'स्यन्दनं तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम् ।।' इति मेदिनी [नत्रिकम्.४८] । स्वसेनया स्वस्य सेना वाहिनी तया सहितश्च । 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्' [२९७.उणादि] इति सिनोते ने गुणे च सेनेति भवति । 'ध्वजिनी वाहिनी सेना' इत्यमरः । धातृजं विधातृपुत्रं वसिष्ठं तन्नामानं मुनिश्रेष्ठम् । उपलक्षणया वामदेवादिसङ्ग्रहः । अग्रे पुरोभागे । 'ऋज्रेन्द्राग्र...' [१९६.उणादि] इति निपातनात् अगेः नलोपे अग्रमिति भवति । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत् ।।' इति । [मेदिनी.रद्विकम्.४]

प्रणिधाय स्थापायित्वा । सर्वपुरोहितं पुरोहितं निधायेत्यर्थः । आश्वेव अतित्वरितम् । यत्र यस्मिन्प्रदेशे स मैथिलः मिथिला तन्नामा ग्रामः तस्या ईशो हि मैथिलः । 'मथे विलोडने ' अस्मात् 'मिथिलादयश्च' [उणादि.६०] इति निपातनात् आद्याकारस्य इकारे ईलचि च मिथिलेति भवति । मथ्यन्ते रिपवो अत्र इति विग्रहः । वर्तत इति शेषः । तं देशं ययौ गतवान् । विधातृजमित्यनेन चतुराननतनयत्वाच्चतुरो अतीतानागतज्ञान इति पुरस्करणकरणगुणविशिष्टो वसिष्ठ इति दशरथाचरित-मुचितमिति सूचयति । आत्मजाभ्यां रामलक्ष्मणाभ्यां हेतुना सहितो हितेन सह वर्तत इति सहितः । मनुजौ सन्तौ मुनिं अनुवसन्तौ तावेवैतादृशं कर्म कृतवताविति हितहेतू ज्ञेयौ । रमारमानुगमन-पुण्यलक्षणो लक्ष्मण इति रामेणेश्वरेणोपचारेण सहोक्तिर्युक्ता तस्येति ध्येयम् । स दशरथः गजस्यन्दनपत्तियुक् । वारणरथचरणचरयुक्तः । युजेः 'सत्सूद्विष्' [२९७५.कौ] इति सत्यसति च उपसर्गे क्विपो विधेः क्विप् । तयेति स्वसेनाविशेषणम् । सेन स्वात्मकेन इना [इनेन] स्वामिना सहिता सेना । तया सेनया सहित इत्यनुक्तावपि लक्ष्यते । तत्प्रकारस्तु प्रागेव व्युत्पादितः । 'स यत्र मैथिल' इत्येकं वा पदम् । ई मा तया युतश्चासौ अश्च यो लक्ष्मीपती राघवस्तं त्रायत इति यत्रो विश्वामित्रः । 'झरो झरि' इत्येकतकारलोपे यत्रेति भवति । तेन सहितः सयत्रः स चासौ मैथिलश्च तमिति शेषः । तं प्रति ययौ । लोकानुकरणार्थं विश्वामित्रत्रातेन स्वपुत्रेण सहितं वा । जानकीजनकं प्रति जगज्जनको जगामेति भावः । यथोक्तं रामायणे– 'गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः । लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ।।' इति ।

आत्मजाभ्यां सीतोर्मिलाभ्यां सहितः समस्तोत्तमरामादिसम्बन्धादिहितसहितः ताभ्यां सहितो वा । सभार्यो भार्याभिः सहितः । गजस्यन्दनपत्तियुक्तया स्वसेनया सहितो मैथिलो यत्र वर्तते तं देशं ययावित्यावृत्त्या अन्वयो विदेहेशपक्षेऽपि ज्ञेयः । आत्मजाभ्यां स्वपुत्राभ्यां रामलक्ष्मणाभ्यां सहित इति वा । हितेन रामपराक्रमसमीक्षणादिहितेन सहित इति वा । यथोक्तं रामायणे 'दृष्टवीर्यौ तु काकुत्स्थौ मैथिलेन महात्मना' इति ।।३१।।

**वरदराजीया–** अथानन्तरं सः दशरथः आत्मजाभ्यां भरतशत्रुघ्नाभ्यां सहितः भार्याभिः कौसल्यादिभिः सहितः गजैः स्यन्दनैः रथैः पत्तिभिः पदातिभिश्च युक्तया स्वसेनया स्वस्य विद्यमानया सेनया सह धातृजं ब्रह्मात्मजं वसिष्ठं स्वपुरोहितमग्रे प्रणिधाय पुरस्कृत्य यत्र मैथिलो जनकस्तिष्ठति मिथिलायां तत्राश्वेव ययावित्यर्थः ।।३१।।

**जनार्दनीया–** आत्मजाभ्यां भरतशत्रुघ्नाभ्याम् । गजाश्च स्यन्दनानि च पत्तयः पदातयश्च गजस्यन्दनपत्ति । 'द्वन्द्वश्च...' [कौ.९०६] इति एकवद्भावः । गजादियुक्तया स्वसेनया सहितः सः राजा । धातृजं ब्रह्मपुत्रं वसिष्ठं अग्रे प्रणिधाय पुरस्कृत्य यत्र मैथिलो जनकः तत्र ययौ ।।३१।।

**चट्टी–** ।। **अथेति** ।। अथानन्तरं स दशरथः आत्मजाभ्यां भरतशत्रुघ्नाभ्यां सहितः भार्याभिः कौसल्यादिभिः सहितः । गजाश्च स्यन्दनानि च पत्तयः पदातयश्च गजस्यन्दनपत्तिः । 'द्वन्द्वश्च' इत्येकवद्भावः । गजादियुक्तया स्वसेनया सहितः धातृजं वसिष्ठं पुरोहितमग्रे निधाय पुरस्कृत्य यत्र मैथिलो जनकः तिष्ठति तत्राशु ययौ ।।३१।।

**भारतश्री–** एवशब्दात् अतिशैघ्र्यं प्रतीयते ।।३१-३३।।

**गूढवाक्यार्थ–** अथ धातृजं वसिष्ठमित्यत्र मित्रावरुणजन्यवसिष्ठव्यावृत्त्यर्थं धातृजमिति विशेषणम् ।।३१।।

**अतिविशद–** गजस्यन्दनपत्तीत्यत्र गजाश्च स्यन्दनानि च पत्तयश्च गजस्यन्दनपत्तिरिति 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गनानाम्' इति सूत्रेणैकवद्भावः । धातृजं वसिष्ठमित्यत्र मित्रावरुणजातवसिष्ठव्यावृत्त्यर्थं धातृजमिति विशेषणम् ।।३१-३२।।

**स मैथिलेनातितरां समर्चितो विवाहयामास सुतं मुदम्बरः ।**
**पुरोहितो गाधिसुतानुमोदितो जुहाव वह्निं विधिना वसिष्ठः ।।३२।।**

**मधुसूदनीया–** ।। **पुरोहितो गाधिसुतेति** ।। 'आनृशंस्यं सत्यवाक्यं अहिंसा सत्यमार्जवम् । अद्रोहो नातिमानश्च तितिक्षा च दमश्शमः । यस्मिन्नेतानि दृश्यन्ते स पुरोहित उच्यते ।।' इति शान्तिपर्वणि [७९.४] उक्तरीत्या पुरोहितलक्षणं ज्ञेयम् ।।

**सत्यधर्मीया–** वसिष्ठादिमुनिश्रेष्ठैः समा समागतस्य सभागतस्य तस्य भगवत्तातस्य सहर्षः सह सभाजनैः जनकः सभाजनं ततानेत्याह– **स इति** ।। पुराद्बहिर्गमनमनःप्रसन्नीकरणकुशलप्रश्नादिना मिथिलानाथप्रार्थितः स दशरथः मैथिलेनातितरां अत्यन्तं समर्चितः । निकटनिवसनसुवसनसरस-रसायनाशनदुग्धदधिमधुघृतकर्दमयभक्षकर्दमाद्युपचारेण आदरेण समर्चितः । 'मतिबुद्धि...' [कौ.३०८९] इति क्ते समर्चित इति भवति । सुतं रामं विवाहयामास । नामधातुरयम् । रूपं तु समर्चयामास इतिवदनुसन्धेयम् । वरवधूवरवंशाशंसनपूर्वकं विवाहयुक्तं कृतवान् । कीदृशं सुतमित्यतः तं विशिनष्टि– **मुदमिति** ।। मुन्मोदः तदात्मकश्चासावश्च मुदस्तम् । अनेन सुखमुखनिखिलगुणघनतनुरप्य-धमसमीहितविवाहमहः सहसहज उररीकृतवान् इति पुरुकरुणो रघुवर इति द्योतयति । वासुदेवानुग्रहादेव दशरथोऽपि निजजनावक इति भगवत्पितृत्वप्रवादयोग्य इति वदति– **भर इति** ।। बिभर्ति पोषयति जनानिति भरः । पचाद्यच् । मुदंभर इति समस्तं वा । न च 'सञ्ज्ञायां भृतॄवृजिधारिसहितपीदः' [२९६३.कौ] इति सञ्ज्ञायामेव भृञः खचो विधानात् प्रकृतस्य च असञ्ज्ञात्वेन विशेषनिषेधात् रूपं दुर्निरूपमिति वाच्यम् । भागवतादौ शत्रुंतपारिंदमादिषष्ठानां असञ्ज्ञायामपि राजादौ प्रायः प्रयोगदर्शनेन वैवक्षिकसञ्ज्ञात्वेन दशस्यन्दनोऽपि मुदंभरशब्दवाच्य इति नानुपपत्तिरिति ध्येयम् । ततश्च मुदं सन्तोषं बिभर्ति स मुदम्भरः । कर्मण्यणपवादेन खचि मुमि रूपं ज्ञेयम् । पुरोहितः पुरोधा वसिष्ठः विधिना वेदबोधितपद्धत्या । 'उपसर्गे घोः किः' [कौ.३२७०] इति बाहुलिकः किः कर्तरि । यद्वा 'विध विदाने' अस्मादिन् । इगुपधकित्वात् न पुगन्तगुणः । विधत्ते करणीयमिति विधिर्मन्त्रः तेन वा । विधिना दैवेन जनकजया जगज्जनको निरन्तरमवियुक्तः तथापि लोकमनुकुर्वन् तं अनुसरतीति वसिष्ठदैवं अदृष्टं विशिष्टमिति भावः । पुरैव ऊहितम् । भावे क्तः । ऊहनं रामेणैवमादिकार्यं क्रियत इति तर्को यस्य सः । एतेन वसिष्ठस्य रघुकुलगुरुत्वप्रसिद्धेः पुरोहित इत्यधिकमिति परास्तम् । पुरतो भाविहितसूचको हि पुरोहितः । 'पुरोहितः पुरोधाश्च' इत्यमरः । 'दैवे विधायकेऽपि स्याद्धातर्यपि विधिः पुमान्' इति संसारवर्तः । गाधिसुतेन विश्वामित्रेण अनुमोदित एवमवश्यं कुर्विति ससम्मति बोधितः । उदुपधात् 'भावादिकर्मणोरन्यतरस्याम्' इति कित्वाभावे गुणे च ईटि उदित इति भवति । वह्निं अग्निं जुहाव घृताद्याहुतिसमेधमानं तेने । 'हु दानादानयोः' श्लौ लिट् । यद्वा 'षट्सु द्वितीया' इति स्मरणात् 'वाचं ब्रह्मेति व्यजानात्' इत्यादिवत् सप्तम्यर्थे द्वितीया । तथाच वह्निं जुहाव वह्नौ होमं कृतवानिति । यथा विधिना आ इति छेदः । तस्य चाङो जुहावेत्यनेनान्वयः । तथाच वह्निमाजुहाव आकारयामास । 'एह्यग्ने मम सन्मुखो भव' इत्यादि वचनेन इति । 'वहिश्रिश्रु...' [उणादि.५००] इत्यादिना निः स च नित् । 'वह्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी [नद्विकम्.१९] ।

'आनृशस्यं सत्यवाक्यं अहिंसा सत्यमार्जवम् । अद्रोहो नातिमानित्वं तितिक्षा च दमः शमः ।। यस्मिन्नेतानि दृश्यन्ते स पुरोहित उच्यत ।।' इति शान्तिपर्वशंसितदशगुणविशिष्टो वसिष्ठ इति पुरोहिततोचिता इति मन्तव्यम् । अत्रार्थे सर्वत्र 'राजा च जनकः श्रीमान् श्रुत्वा पूजामकल्पयत् । ततो राजानमासाद्य वृद्धं दशरथं नृपम् ।।' [१.६९.७] इत्यारभ्य 'रामलक्ष्मणयोरर्थे दानं कार्यं सुखोदयम्' [१.७१.२४] इत्यन्तं श्रीमद्रामायणमनुसन्धेयम् । सङ्ग्रहे च– [१.८.१०-१२] 'प्रवेक्ष्यन्तं पुरीमाराद्भूपं दृष्ट्वा स मैथिलः । शतानन्दादिभिः सार्धं सानन्दोऽभिययौ द्रुतम् ।। पुरीं प्रवेश्य संपूज्य यथाशास्त्रं स शास्त्रवित् । राघवं प्रावदद्राजा मुनीन्द्राणां च संसदि ।। दिष्ट्या दृष्टोऽसि राजेन्द्र दुर्लभं प्रियदर्शनम् ।।' इत्यारभ्य 'अशेषं च समापयत्' [१.८.३३] इत्यन्तेन विवाहविधिः कथित इति विशेषस्ततो मन्तव्यः ।।

**वरदराजीया–** स दशरथो मैथिलेन जनकेन अतितरामत्यन्तं समर्चितः सम्पूजितः मुदंभरः सन्तोषेण पूर्णः सुतं रामं विवाहयामास विवाहयुक्तमकरोत् । पुरोहितो वसिष्ठः गाधिसुतेन विश्वामित्रेण अनुमोदितः संमतीकृतः वह्निं जुहाव विवाहहोममकरोत् इत्यर्थः ।।३२।।

**जनार्दनीया–** मुदं बिभर्तीति मुदम्भरः । मोदनं मुदः । घञर्थे कः । 'सञ्ज्ञायां भृतॄवृजि...' [सि.कौ.२९६३] इत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वादसञ्ज्ञायामपि बिभ्रतेः खच् । तदन्ते 'अरुर्द्विषदजन्तस्य...' [कौ.२९४२] इति मुम् । सन्तोषधरः सन्तोषपोषको वा । स दशरथः सुतं विवाहयामास विवाहवन्तं चकार । गाधिसुतेन अनुमोदितः सम्मतः पुरोहितो वसिष्ठः विधिना विवाहहोमविधिना । वह्निमित्यत्र देशस्य 'कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणाम् । देशश्च ।' [वार्तिकं.सू.१.४.५१] इत्यनेन कर्मसञ्ज्ञा । जुहाव लाजादिहोमं कारयामास । अथवा वह्निशब्देन देवता विवक्ष्यते । वह्निं अग्न्याख्यं देवं जुहाव प्रीणयामासेत्यर्थः ।।३२।।

**चट्टी–** ।। **स इति** ।। स दशरथो मैथिलेन जनकेन अतितरामत्यन्तं समर्चितः पूजितो मुदं विभर्तीति मुदंभरः सन्तोषधरः सुतं रामं विवाहयामास । विवाहवन्तं चकार । पुरोहितो वसिष्ठो गाधिसुतेन विश्वामित्रेणानुमोदितः सम्मतीकृतः विधिना विवाहहोमविधिना वह्निं जुहाव ।।३२।।

**तदा विमानावलिभिर्नभस्तलं दिदृक्षतां सङ्कुलमास नाकिनाम् ।**
**[१]सुरानका दुन्दुभयो विनेदिरे [२]जगुश्च गन्धर्ववराः सहस्रशः ।।३३।।**

**वेदाङ्गतीर्थीया–** सुरानकाः दुन्दुभयोऽपि विनेदिरे नभसीति शेषः ।।३३-३४।।

---

१. 'सुराणकाः' इति सत्यधर्मीयातिविशदयोः ।

२. 'पुष्पवृष्टिर्महत्यासीत् अन्तरिक्षात् सुभास्वरा । दिव्यदुन्दुभिनिर्घोषैः गीतवादित्रनिःस्वनैः ।। ननृतुश्चाप्सरः सङ्घा गन्धर्वाश्च जगुः कलम् । विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ।।' इत्यार्षे १.७३.३७-३८ ।

**मधुसूदनीया—** सुरानकाः सुराणां आनकाः ढक्काः 'आनकाः पटहो ढक्का' इत्यमरः । दुन्दुभयो भेर्यः । विनेदिरे देवैरताडिता एव नेदिरे इत्यर्थः । एतदर्थसूचनाय वीत्युपसर्गोऽपि प्रयुक्तः । 'स्वयमेव प्रवाद्यन्ते देवतूर्याण्यनेकशः' [भेर्यो ह्यनेकशः] इत्यादि हरिवंशे ।।३३।।

**सत्यधर्मीया—** पूर्वमेव विदितसर्वस्वानां सुपर्वणामस्माकमाकस्मिकागमनेऽपि कामिनीमानसेना-गतिरवगता ततस्मतोऽपि महद्द्रोहात् अंहःसंहतिः सम्पादिता स्यादिति ते अदितिजाता नोपाजग्मुः । यदा तु गोविन्दो अरविन्दाक्ष्या सङ्गतस्तदा तदालोकनकौतुकाः नाकौकसः समा विमानैः समासदन्नभितो नभमिति भाषते तदेतत् द्वाभ्यां श्लोकाभ्याम् । तदा तस्मिन्काले । नाकिनां न कं अकं दुःखं तन्नास्त्यत्रेति नाकः स्वर्गः सोऽस्ति निवासत्वेन येषां ते नाकिनः; ससुखलोकौकस इति यावत् । को ब्रह्मा तदभावः अकः स नास्ति यस्मिन् स वा नाकः, सदा ब्रह्मसम्बन्धवानिति यावत् । उभयपक्षेऽपि 'न भ्राण्...' [७५९.कौ] इति नलोपाभावः तेन न नुट्चेति ज्ञेयम् । 'स्वरव्ययं स्वर्गनाकत्रिदिव-त्रिदशालयाः' इत्यमरः । 'नाकस्तु त्रिदिवे' इति रत्नकोशः । मत्वर्थ इनिः । दिदृक्षतां द्रष्टुमिच्छताम् । दृश सेनि द्वित्वहलादिशेषे त्वषत्वक्षत्वेषु दिदृक्षतामिति रूपं बोध्यम् । विमानावलिभिः विमानानां व्योमयानानां आवलयः पङ्क्तयः ताभिः । वि विशिष्टं मानयन्त्यनेन । 'पुंसि संज्ञायां..' [३२९६] इति करणे घः । घञ् तु न भवति । ततोऽपि परल्युटापवादात् । विधानादधिकरणेऽपि घस्य । मान्ति विशेषेणास्मिन्नित्यधिकरणे ल्युटि वा विगतं मानमुपमानं येषामिति वा विमानाः । 'विमानो व्योमयाने च सप्तभूमिगृहेऽपि च । घोटके यानमात्रे च पुंन्नपुंसकयोरपि ।।' इति शब्दमञ्जरी । 'व्योमयानं विमानोऽस्त्री' 'वीथ्यालिरावलिः पङ्क्तिः' इत्युभयतश्चामरः । नभस्स्थलमाकाशस्थानम् । रूपमुपपादितं पुरस्तात् । सङ्कुलं व्याप्तं आस अभूत् । सुरानकाः सुराणां देवानां आनकाः पटहाः । तथा दुन्दुभयो भेर्यश्च विनेदिरे ननदुः । आनिति जनो अनेन वादितेन इत्यनतेः कुन् । यद्वा नयति प्राणयति सह महोत्साहान् करोति महीमहितनिवहानिति वा आनकः । ण्वुलि । 'आनकः पटहे भेर्यां मृदङ्गे स्वनदम्बुदे ।' [कत्रिकम् .६९] इति विश्वः । 'आनकः पटह' इत्यमरश्च । यो दुं दुमिति शब्देन भाति स दुन्दुभिः अनुकरणशब्दोऽयम् । भातेर्बाहुलिकः किः । यद्वा द्यां उभति पूरयतीति स्वरेणेति दुन्दुभिः । पृषोदरादित्वाद्वस्य दः । औणादिक इस्तु न भवति । आतो लोपस्याप्रसंगात् इति भानुदीक्षितः । 'आनकदुन्दुभी' 'दुन्दुभिः पुमान्' इति चामरस्वामिनौ । विनेदिरे इत्यत्र विना अन्यैरनाहन्यमानैरेव देववाद्यैर्ध्वन्यत इति ध्वन्यते । यथोक्तं हरिवंशे— 'स्वयमेव प्रवाद्यन्ते देवतूर्याण्यनेकशः' इति [वि.प.३०.३९] । दुन्दुभयः गन्धर्ववरा इत्युभयत्र नाकिनामित्यस्य सम्बन्धो बोध्यः । तैः सह गानस्य मानवगन्धर्वासाध्यत्वात् । न च वाच्यं गन्धर्वाः सर्वे सुपर्वाणां सवन्धिन एवेत्यनुक्तावपि निलिम्पसम्बन्धबोधो भवतीति न नाकिपदान्वयप्रयोजनमिति । मानवगन्धर्वाणामपि सत्वेन तद्व्यावृत्त्यर्थत्वेन सार्थक्यात् । तथाच तैत्तिरीयोपनिषदि । 'स एको

देवगन्धर्वाणाम्' 'स एको मनुष्यगन्धर्वाणाम्' [तै.ब्रह्मवल्ली] इति । ततश्च देवानां गन्धर्ववरा जगुः । देवानां दुन्दुभयो विनेदिर इत्यन्वयो ज्ञेयः गन्धर्ववराः गन्धं सौरभं अर्वति सदा गच्छन्ति ते गन्धर्वाः । कर्मण्यण् । ततो गन्धर्वाश्च । उभयत्रापि शकन्ध्वादिपररूपता बोध्या । 'गन्धर्वाः किन्नरा' इत्यमरः । 'अपि गन्धर्वगान्धर्वदिव्यगायनगातवः' इति शब्दार्णवः । ते च आनकदुन्दुभिगन्धर्ववराश्च अनेक इत्याह– **सहस्रश इति** ।। यद्वा नाकिनामित्यस्य गन्धर्ववरा इत्यनेनैवान्वयः । सुरानकादुन्दुभय इत्येकं पदम् । आनकाश्च आदुन्दुभयश्च । आमहोंतो दुन्दुभयो भेर्यः । सुरानका इत्यसमानपदत्वान्न णत्वम् । '...सुरा चषकमद्ययोः । पुल्लिङ्गस्त्रिदिवेशे स्यात्' इति मेदिनी [रद्विकम्.९८] । 'सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित्' इति विश्वः [रद्विकम्.१४] । सुराणामानको नदन् नीरदः तद्वन्नदन्तो दुन्दुभय इति वा । आनकैर्मृदङ्गैः सहिता दुन्दुभय इति वा । सुराणका इति पाठस्तु क्वाचित्कः तथापि पदार्थः कथ्यते । शब्दार्थाद्रणतेः णिचि ण्वुलि राणयन्ति अत्यन्तं ध्वनयन्ति हरित इति सुराणकाः । हरित् प्रति स्वरयन्ते दुन्दुभय इति वा । 'गै शब्दे' लिट् । जगौ जगतुः जगुः । गन्धर्वेत्यनेन मधुरतरस्वरोत्तरानुत्तरीकरण-चतुरतरा इत्येव आदरणीया इत्येव न किं तु सौरभ्येनापि वासवादिसवभुक्सन्निधानपात्रं चित्ररथाद्या इति सूचयति । चो अनुक्तसमुच्चायकः सन् तिलोत्तमाद्युत्तमाप्सरस्सङ्घा ननृतुश्च इत्यर्थद्योतकः । यथोक्तं रामायणे सङ्ग्रहे– 'रत्नैर्देदीप्यमानानां विमानानामथावलिः । अलश्चकार गगनं देवदेवानुगाकुला ।। देववाद्यान्यवाद्यन्त गीतं गन्धर्वपुङ्गवैः । प्रवृष्टानि प्रसूनानि प्रनृत्तं चाप्सरोगणैः ।।' इति । गन्धर्ववराः पतयो यासां ते गन्धर्ववरा इत्यावृत्त्या वा वाराङ्गनाग्रहणेन तल्लाभो वा ज्ञेयः ।।३३।।

**वरदराजीया–** तदा विवाहसमये दिदृक्षतां द्रष्टुमिच्छतां नाकिनां देवानां विमानपङ्क्तिभिः नभस्थलं आकाशमण्डलं सङ्कुलमवकाशरहितमास बभूव । सुराणां विद्यमाना आनकाः पटहादिवाद्यविशेषाः तथा दुन्दुभयो भेर्यो विनेदिरे ताडनेन नादयुक्ता अभवन् । सहस्रशः सहस्राधिकं सङ्ख्याकाः गन्धर्वश्रेष्ठाः जगुश्च गानं चक्रुः ।।३३।।

**जनार्दनीया–** तदा विवाहहोमसमये दिदृक्षतां द्रष्टुमिच्छतां नाकिनां देवानां विमानानां आवलिभिः पङ्क्तिभिः नभःस्थलं आकाशस्थलं सङ्कुलं आस । सुराणां आनकाः पटहाख्याः दुन्दुभयः भेर्यः । 'भेरीपटहमानकौ' इत्यभिधानात् । विनेदिरे शब्दं चक्रुः । जगुश्च गानं चक्रुः ।।३३।।

**चट्टी–** ।। तदेति ।। तदा विवाहसमये दिदृक्षतां द्रष्टुमिच्छतां नाकिनां देवानां विमानानामावलिभिः नभस्स्थलं सङ्कुलं अवकाशरहितं आस । सुराणामानकाः पटहः दुन्दुभयो भेर्यः । 'भेरी स्त्री दुन्दुभिः पुमान्' 'आनकः पटहो ढक्का' इत्यमरः । विनेदिरे देवैरनभिताडिता एव शब्दं चक्रुः । एतदर्थसूचनाय वीत्युपसर्गोऽपि प्रयुक्तः । 'स्वयमेव प्रवाद्यन्ते देवतूर्याण्यतेकशः' इत्यादि हरिवंशे । सहस्रशः सहस्रसङ्ख्याकाः गन्धर्वश्रेष्ठाश्च जगुः गानं चक्रुरिति सम्बन्धः ।।३३।।

**अनन्तभट्टीया–** आनकाः पटहाः वाद्यविशेषाः ।।३३।।

**अतिविशद–** सुराणका इत्यत्र सुराणकादिवाद्यविशेषाः ? स्वयमेव प्रवाद्यन्ते नत्वन्यैस्ताडिता इत्यर्थः । 'स्वयमेव प्रवाद्यन्ते देवतूर्याण्यनेकशः' इति हरिवंशवचनात् ।।३३-३९।।

**प्रमाणसङ्ग्रह–** सुरानका दुन्दुभयो विनेदिरेत्यत्र अताडिता एव विनेदिरे इत्यर्थः । तदुक्तम्–'स्वयमेव प्रवाद्यन्ते देवतूर्याण्यनेकशः' इति हरिवंशे ।।३३-४९।।

**गूढवाक्यार्थ–** आनकः पटहाश्च वाद्यविशेषाः ।।३३।।

**विजानमाना जगतां हि मातरं पुराऽर्थितुं नाऽययुरत्र देवताः ।**
**तदा तु रामं रमया युतं प्रभुं दिदृक्षवश्चक्रुरलं नभस्थलम् ।।३४।।**

**व्यासतीर्थीया–** पूर्वं धनुष उद्धृतौ देव्यः किमर्थं ह्यगुः [देवाः किमर्थं न आययुः इति भाति ।] इत्यत आह– **विजानमाना इति** ।। अलंचक्रुः ।।३४-३५।।

**वादिराजीया–** तदा विवाहसमये तु विशेषेण सर्वेषां दृष्टिगोचरतया रमया युतं प्रभुं रामम् । दिदृक्षव इति पदसम्बन्धः । तुशब्दाभावे रमया युतत्वस्य सदातनत्वात्तदेत्यनुपपन्नं स्यात् । अलञ्चक्रुः आगमनसमये अलंकृतवन्तः । 'पुरा नाययुः' इति वदता इदानीं स्वयंवरदर्शनार्थमाययुरिति सूचितम् । अत एव 'भुवि समागमोऽभूत्' इति वक्ष्यति ।।३४।।

**सत्यधर्मीया–** यस्माद्देवताः देवाः । स्वार्थे तल् । 'देवता स्त्रियाम्' इत्यमरः । जगतां ब्रह्मादितृणावसानानां मातरं जननीं जानकीम् । चतुराननादिचेतनानां वा । नप्त्रादिसूत्रे निपातनात् 'मान पूजायाम्' अस्मात् नलोपे तृनि तृचि वा मातेति भवति । 'माता स्याज्जननी सस्यवती भूमिः' इति हैमः । 'जनयित्री प्रसूर्माता जननी ' इति चामरः । विजानमानाः । विशेषेण जानन्तः । ज्ञाधातोः 'ज्ञाजनोर्जा [२५११.कौ] इति जादेशे श्ना नकारे दीर्घनिर्देशादेव प्वादि? ह्रस्वाभावे जानेति जाते 'लटः शतृशानचावप्रथमासमानाधिकरणे' [कौ.३१००] इति शानचि शचयोर्लोप 'आने मुक्' इति मुकि जानमानेति भवति । ननु न भवेदेव 'अप्रथमासमानाधिकरण' इति निषेधादत्र च प्रथमासामानाधिकरण्यादिति चेत् । सत्यम् । यतो लटोऽनुवृत्तावपि पुनर्लटमसूत्रयत् सूत्रकृत्तेन प्रथमासामानाधिकरण्येऽपि कचित् शानच् भवतीत्यसूचयत् । उदाजहार भट्टोजिः 'सन् ब्राह्मण' इति । 'लक्षणहेत्वोः क्रियायाः' [३१०३.कौ] इत्यनेन आगमनहेतुर्ज्ञप्तिरिति ज्ञाधातोः शानच् । 'शयानाः भुञ्जते यवनाः' इतिवत् जानमाना नाकनिलया नाययुरित्यन्वयः । तस्मात् पुरा प्राक् पुरं प्रति नाययुः नागतवत्यः । लक्ष्म्या अनपेक्षया तूष्णीमागमने न किञ्चनवृजिनसमार्जनमित्यतोऽज्ञानां ज्ञानमन्यथा

स्यादित्यतिजानमाना नाजग्मुरिति वदति– **अर्थितुमिति** ।। अत्र एतत्काले । जगतामित्यत्रापि सम्बध्यते । अज्ञलोकानां अर्थितुम् । सीतामिति शेषः । मातरमित्यावृत्तिर्वा । अर्थितुं अस्मभ्यो विदेह देहि तव देहजामिति याचितुम् । प्रतीयेतेति शेषः । ततो नाययुरित्यन्वयः । मातरं अर्थितुं नाययुरिति वा अन्वयः । हि यतः पुरा अवतारात् पूर्वं जगतां मातरं अर्थितुं भूमाववतरेति प्रार्थितुं देवता आगता इति शेषः । तस्माद्विजानमाना ज्ञानिन इति हेतोरत्रैतत्समये नाययुरिति वा । जगतां तातो यन्नाथो माता सा सीतेति ज्ञातारो अमराः पुरा पुरीं नोपागुरिति भावः । यदा तु सीतासमेतो रघुनाथः तदागमने न नः काचिदनौचितीति मतिमन्त आगता इत्याह– **तदेति** ।। तदा सीताशयकुशेशयग्रहणसमनन्तरकाले तु न कदापि तदवियुक्तताविशेषं देव्या अवगमयति । रमया सीतात्मिकया कमलया युक्तं संयुक्तं प्रभुं स्वामिनं दिदृक्षवः सत्यः । 'सनाशंस..' [३१४८.कौ] इत्युः । 'वोतो गुणवचनात्' [५०२.कौ] इत्युकारान्तता । नभस्थलं आकाशप्रदेशम् । अलञ्चक्रुः अलंकृतवत्यः । यदा रमया युतं प्रभुं दिदृक्षवो देवता नभोऽलञ्चक्रुः । तदाऽत्र भुवि देवता नाम वसिष्ठवामदेवादिममेदिनीविबुधाः स्थलं विवाहशालां अलञ्चक्रुरिति वा । प्रकर्षेण भावयत्युत्पादयति जगदिति प्रभुस्तम् । जगतामिति बहुवचनेन प्रभुवचनेन चातीतानागतप्रपञ्चस्य सदा जननी जानकीति जनकस्तु जनकजामातेति च भगवान्भाष्यकृदभाषिष्टेति ज्ञेयम् । अथवात्र धरित्र्यां रमया युतं प्रभुं दिदृक्षवो देवा आदरादेव नभस्थलं अलञ्चक्रुः । न विद्यते लो लकारो यस्मिंस्तत्पदं नभस्थलमिति ततो नभस्थमिति भवति । नभस्थम् । उत्तरतो यथेत्याकृष्यते । यथा नभस्थं वस्तु तथा चक्रुः पुनः पुनर्निरीक्षणक्षणतः स्वसमीपे आकाशप्रदेशस्थितमिव चक्रुः । स्वहृदयाकाशे स्थितं वा । तद्ध्यानपराः सुरा आसुरिति भावः । यथा कथञ्चिदपि कदाचिद्योषितां योषिदपेक्षा नास्ति तथा देवानां मङ्गलदेवीविषये न अभिलाषः इति द्योतयितुं सुरादिपुल्लिङ्गशब्दं विहाय देवता इति स्त्रीलिङ्गदेवतापदनिर्देशं अतनुत अतनुमनीष इति ज्ञेयम् ।।३४।।

**वरदराजीया–** देवताः सर्वदेवाः सीतां जगतां मातरं विशेषेण जानन्ति हि यस्मात् तस्मात् तामर्थितुं पुरा दशाननादिसर्वागमनसमये अत्र मिथिलायां नाययुर्नागतवन्तः । ते तदा श्रीरामविवाहसमये तु रमया लक्ष्मीस्वरूपया सीतया युतं रामं दिदृक्षवो द्रष्टुमिच्छवो देवा नभस्थलं अलञ्चक्रुः अलंकृतवन्त इत्यर्थः ।।३४।।

**जनार्दनीया–** जगतां मातरं सीतां विशेषेण जानमानाः हि यस्मात् तस्मात् देवताः पुरा स्वयंवरविघोषणकाले अर्थितुं सीतायाचनार्थं अत्र स्वयंवरं प्रति नाययुः । तदा विवाहकाले दिदृक्षवः द्रष्टुमिच्छवः नभस्थलं अलं पूर्णं चक्रुः । अलंचक्रुः अलंकृतं चक्रुरिति वा ।।३४।।

**चट्टी–** जगतां मातरं सीतां विशेषेण जानमानाः हि यस्मात् तस्माद्देवताः पुरा स्वयंवरविघोषण-समये अर्थितुं सीतायाचनार्थमत्र मिथिलां प्रति नाययुः । तदा श्रीरामविवाहसमये तु रमया

लक्ष्मीस्वरूपया सीतया युतं प्रभुं समर्थं श्रीरामं दिदृक्षवः द्रष्टुमिच्छवः नभस्थलमलं पूर्णं चक्रुः । अलङ्कृतं चक्रुः इति वा ॥३४॥

**अनन्तभट्टीया–** अर्थितुं सीतामिति शेषः । अलश्चक्रुरित्यन्वयः ॥३४-३७॥

**भारतश्री–** दमयन्तीमिव देवाः पूर्वं किमिति नार्थितवन्त इति तत्राह– **विजानमाना इति** ॥३४-३७॥

**गूढवाक्यार्थ–** अर्थितुं सीतामिति शेषः । अलश्चक्रुरित्यन्वयः ॥३४॥

**यथा पुरा सागरजास्वयंवरे सुमानसानामभवत्समागमः ।**
**तथा ह्यभूत्सर्वदिवौकसां[१] तदा तथा मुनीनां सहभूभृतां भुवि ॥३५॥**

**वेदाङ्गतीर्थीया–** तथा सर्वदिवौकसां [समागमः अभूत् । स्वयवरं द्रष्टुमि]ति शेषः ॥३५॥

**वादिराजीया–** यथेति प्राचीनलक्ष्मीस्वयंवरं दृष्टान्तीकुर्वन् तत्रापि स्वयंवरदर्शनार्थमेवोभयतः पङ्क्तीकृत्य स्थिताः । न तु लक्ष्म्यपेक्षयेति सूचयति । 'हित्वेतरान् प्रार्थयत' इत्यस्यापि स्वहृदि कृपाकटाक्षं प्रार्थयत इत्येवार्थं प्राञ्चः सञ्चोदयन्ति । व्यासोऽप्यापाततः प्रार्थनं परमोहनायैवेति सूचयितुं प्रार्थयत इति परस्मैपदार्थकशत्रन्तपदं प्रयुक्तवान् । योगरूढसुमनश्शब्दस्य योगं प्रदर्शयितुं 'सुमानसानाम्' इत्युक्तम् ॥३५-३७॥

**सत्यधर्मीया–** श्रीनाथसीताविवाहः कथमभूत्? भूदेवनृदेवाश्च कथं संगता इत्यतो रामतद्रामासमानकामिनीकामुकयोरभावादन्यं सपक्षमाचक्षाणः साक्षान्महेक्षः तद्रूपरूपान्तरस्वयंवरे सुरादिमसमवायो यथा यथा च लक्ष्म्या सहितः तदध्यक्षोऽभात् तथात्रेति कथयति– **यथेति द्वाभ्यां श्लोकाभ्याम्** ॥ पुरा पूर्वम् । सागरजास्वयंवरे । सगरस्यायं सागरस्तस्येदमित्यण् । 'सरस्वान् सागरोऽर्णव' इत्यमरः । तस्माज्जायत इति सागरजा नीरनिधिकन्या । 'पद्मा पद्मालया वार्धिकन्या लक्ष्मीः' इति हैमः । 'क्षीरसागरकन्यका' इत्यमरश्च । तस्याः स्वयंवरस्तस्मिन् । सुमनःपदं देववाच्यर्थापयन् तथा निर्वक्ति– **सुमानसानामिति** ॥ सु शोभनं मानसं मनो येषां ते तथा तेषाम् । 'स्वान्तं हृन्मानसं मन' इत्यमरः । सुमानसानां देवानां मुनीनां भूभृतां च समागमः सङ्गमः यथा अभवत् । दिवि भुवि चेत्यन्वयः । तथा तेन प्रकारेण । सर्वदिवौकसां सर्वे समस्ताश्च ते दिवं नाकं ओको गृहं येषां ते दिवौकसश्च । दिवशब्दोऽयम् । 'मन्दिरः सैरिभः शक्रभवनं त्रिदिवं नभः' इति त्रिकाण्डशेषः [१.४.]। पौरोको येषामिति विग्रहे दिवौकसोऽपि । 'स्याद्दिवोका दिवौकाश्च देवे वापीह पक्षिणि' इति रन्तिदेवः । 'दिवोकाश्च दिवौकाश्च पुंसि देवे च चातके' । शब्दपरविप्रतिषेधात् परयणादेशस्थानिवत्वेन न पूर्वस्य यण् । सकृद्गताविति न्यायात् । ततश्च दिवौकसां दिवोकसामित्युभयथापि पाठः सम्भवतीति बोध्यम् । यथा

१. 'दिवोकसाम्' इति सत्यधर्मीये ।

वासवादिसुमनसां समुदायो दिव्यभवत् तदा खेऽमरसङ्गमसमये मुनीनां वसिष्ठविश्वामित्रादीनां च । ते कीदृशा इत्यतो दर्शयति– **सहभूभृतामिति** ।। बिभ्रतीति भृतः भुवोर्भृतो भूभृतो राजानः तैः सहिताः सहभूभृतस्तेषां महीभृत्सहितानाम् । भुवि भूमौ समागमोऽभवत् । नोत्प्रेक्षादेव भूदेववसुधाधिपसङ्गमो दिवि भुवि चाभवदिति किन्तु मानानि अमानानि? अत्रार्थे सन्ति हिरित्याह । तदेत्यस्य एवमेवान्वयेऽर्थः सम्भवति नतु रामविवाहकाल इति तस्य दार्ष्टान्तिकतया इदंशब्दपरामृश्यत्वेन इदानीमिति वक्तव्यत्वात् । भृञः क्विप् । यद्वा पुरा सागरजास्वयंवरे पुरा पूर्वं लक्ष्मीरूपिणी सीता पुरा सागरजा तस्याः स्वयंवरे । पुरा सर्वदिवौकसां सर्वे लक्ष्मणाद्याश्च ते दिवौकसश्च तेषां भूभृद्भिः सहितानां सङ्गमोऽभूदित्येतत्पक्षेप्यन्वयो ध्येयः ।।३५।।

**वरदराजीया–** पुरा पूर्वं यथा सागरजास्वयंवरे सागरजायाः क्षीराब्धितनयायाः लक्ष्म्याः स्वयंवरे सुमानसानां देवानां समागमोऽभवत् । तथा सर्वेषां देवानां दिवौकसां तथा सह भूभृद्भिः सह वर्तमानानां मुनीनां भुवि तदा सीतास्वयंवरसमये समागमोऽभूदित्यर्थः ।।३५।।

**जनार्दनीया–** पुरा सागरजायाः समुद्रकन्यकायाः लक्ष्म्याः स्वयंवरे । सुमानसानां शोभनं मानसं येषां ते तथा तेषां सुमानसामित्यर्थः । तेषां वा समागमः यथा अभवत् । तथा तदा रामस्य विवाहकाले । सर्वदिवौकसां देवानां समागमोऽभूत् । दिवीति शेषः । तथा मुनीनां भूभृतां सह एकदा भुवि समागमोऽभूत् । यद्वा सर्वदिवौकसां लक्ष्मणादिरूपैः अवतीर्णानां देवानां तथा भूभृद्भिः सहितानां मुनीनां वसिष्ठविश्वामित्रादीनां च समागमो भुव्यभूत् ।।३५।।

**चट्टी–** ।। **यथेति** ।। पुरा पूर्वं सागरजायाः क्षीराब्धितनयायाः लक्ष्म्याः स्वयंवरे सुमानसानां शोभनं मानसं येषां ते तथा तेषां सुमानसानामित्यर्थः । समागमो यथा अभवत् । तथा तदा रामविवाहकाले सर्वदिवौकसां समागमः अभूत् । दिवीति शेषः । तथा मुनीनां भूभृद्भिः सहितानां एकदा भुवि समागमोऽभूत् । यद्वा सर्वदिवौकसां लक्ष्मणादिरूपैरवतीर्णानां देवानां तथा भूभृद्भिः सहितानां मुनीनां वसिष्ठविश्वामित्रादीनां समागमस्तदा सीतास्वयंवरसमये भुव्यभूत् ।।३५।।

**गूढवाक्यार्थ–** सह एकस्मिन् काले मुनीनां भूभृतां च भुवि समागम इति द्रष्टव्यम् । अथवा द्युस्था एव ते विवक्षिताः । तथा च दिव्येव तेषां समागमः ।।३५।।

**प्रगृह्य पाणिं च नृपात्मजाया रराज राजीवसमाननेत्रः ।**
**यथा[१] पुरा सागरजासमेतः सुरासुराणाममृताब्धिमन्थने ।।३६।।**

---

१. मुदा धरणिजां तस्मै प्रददौ मिथिलाधिपः । केशवाय श्रियमिव यथापूर्वं महार्णवः ।। पद्म.उ.२४२-१४७

**वेदाङ्गतीर्थीया–** अमृताब्धिमन्थने अमृतार्थमब्धिमन्थने ॥३६-३८॥

**सत्यधर्मीया–** यथा येन प्रकारेण । सुरासुराणाम् । कर्नरीयं षष्ठी । सुरासुरकर्तृके अमृताब्धिमन्थने कलशकनिधि ? मन्थने । तेन तत्कालो लक्ष्यते । ततश्च क्षीरवारिपूरितमन्थनसमये । सागरजा जलधिजा लक्ष्मीस्तया समेतः सहितः श्रीनारायण इति शेषः । रराजेत्यत्राप्यन्वेति । रेजे । 'अमृतश्च पयः क्षीरे नीरे च' इति रत्नकोशः । 'अब्धिरकूपार' इत्यमरः । मथेर्युच् । अमृतार्थं अब्धेः क्षीरवारिधेर्मन्थनं तत्रेति वा । अथवा मथनेनेनायातश्रमेषु व्योमधामसु सत्सु । अनेन भगवता कृतं यदब्धिमन्थनं तत्र तत्समये । अं भगवन्तम् । ऋता प्राप्ता । सर्वसुपर्वापेक्षया याता दृश्या सागरजा तयेति शेषः । तदुदितं भगवता भागवते अष्टमे । 'विलोकयन्ती निरवद्यमात्मनः' इत्यारभ्य 'एवं विमृश्याव्यभिचारिसद्गुणं पदं निजैकाश्रयसद्गुणाश्रयम् । वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुंदं निरपेक्षमीप्सितम् ॥ तस्यांसदेश उशती नवकञ्जमालामधात् मधुव्रतवरूथगिरोपघुष्टाम् । तस्थौ....' [८.२२-२३] इत्यन्तेन । तट्टीकायामप्युदाहृतम् ।

> 'एष ब्रह्मातिवृद्धः तपति दिनमणिश्चञ्चलो मातरिश्वा
> दिग्वासा नीलकण्ठः स सुरपतिरसौ गर्हितः क्षीयतेऽब्जः ।
> इत्थं देव्या विचिन्त्य भ्रमरकुलकलागीतशब्दप्रफुल्ला
> दत्ता माला मुरारेः सुरतरुकुसुमालङ्कृता पातु युष्मान् ॥' इति ।

या अमृता नित्यमुक्ता सागरजा तयेति वा । तथा नृपात्मजायाः जनकजायाः पाणिं करं प्रगृह्य गृहीत्वा । प्रेण सदा श्रीधरस्य जनमनुसरतो गुरूदीरितक्रमानतिक्रमो द्योत्यते । राजीवे कमले ताभ्यां तयोर्वा समाने सदृशे नेत्रे नयने यस्य सः । रां जीवतीति राजीवम् । 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इत्यमरः । यद्वा राजी रेखा अस्यास्तीति राजीवम् । 'अन्यत्रापि दृश्यते' इति मत्वर्थे वः । 'राजीवो मीनसारङ्गभेदयोः राजीवमब्ज' इति हैमः । मीनसारङ्गसमाननेत्रो वा । प्राङ्गत्स्यरूप इति राजीवः समानं आयतिव्यायतिपरिमाणविशिष्टनेत्रं यस्येति वा । अथवा राजीवाभ्यां समाने सहबहुमाने नेत्रे यस्येति । तदपेक्षयाक्ष्णोर्महत्त्वमिति भावः । अथवा राजीवेन कमलेन समानं नेत्रं यस्य सः । दवीयः पदवीयुताकाशे निशेशे प्रकाशमाने मम महीतलवर्तिनो ग्लानिः अस्य पुनर्नयननलिनस्य तु तुहिनभानुना सदा सहावस्थानेऽपि विकास एवेति पराजितं सरसिजं अजितनयनतामरसं मानयामासेति तात्पर्यम् । यथोक्तं श्रीभगवता 'शशिसूर्यनेत्रम्' [गी.११.१९] इति । तथा रराज रेजे । चेन नृपात्मजावस्थायां पाणिग्रहणमित्येव न अपि तु पितृ रामस्य मातुः सीतायाः अत्यन्तावियुक्ततां सूचयति । या सागरजा आस मा तया इत इति वा ॥३६॥

**वरदराजीया–** राजीवेन समाने नेत्रे यस्यासौ स रामो नृपात्मजायाः सीतायाः पाणिं प्रगृह्य गृहीत्वा यथा पुरा सुराणामसुराणां च सम्बन्धिनि अमृतार्थमब्धिमन्थने इति वा सागरजासमेतो रमया युक्तो रामः तथा रराजेत्यर्थः ।।३६।।

**जनार्दनीया–** राजीवसमाननेत्रः कमलसदृशनयनः । पाणिं प्रगृह्य विवाहं कृत्वा । 'पाणिग्रहो विवाहः स्यात्' इति हलायुधः । रराज बभौ । तत्र तुल्यदृष्टान्तमाह– **यथेति** ।। अमृतार्थे अमृतप्राप्त्यै अब्धेः क्षीरसमुद्रस्य मन्थनकाले ।।३६।।

**चट्टी–** ।। **प्रगृह्येति** ।। राजीवसमाननेत्रः कमलसदृशनयनः स रामो नृपात्मजायाः सीतायाः पाणिं प्रगृह्य विवाहहोमपाणिग्रहाणाख्यं कर्म कृत्वेत्यर्थः । पुरा सुराणामसुराणां च सम्बन्धिनि अमृतार्थममृत–प्राप्त्यै अब्धेः क्षीरसमुद्रस्य मथनकाले सागरजासमेतो रमापतिः यथा तथा रराज बभौ ।।३६।।

**गूढवाक्यार्थ–** मन्थने मथनकाले ।।३६।।

**स्वलंकृतास्तत्र विचेरुरङ्गना विदेहराजस्य च या हि योषितः ।**
**मुदा समेतं रमया रमापतिं विलोक्य रामाय ददौ धनं नृपः ।।३७।।**

**व्यासतीर्थीया–** विलोक्य मुदा ददौ इति सम्बन्धः ।।३७।।

**सत्यधर्मीया–** श्रीरमासमायुक्तं रामं पूर्णकामं निकाममवलोक्य कामिनो विभूषिता भूपयोषित-श्चरणरणरवणभूषणैश्चरणैः भूषयामासुर्विशालां विवाहशालामित्याह– **स्वलंकृता इति** ।। तत्र तस्मिन्समये । भूमिभूविभुसङ्गतदेशे वा । अङ्गनाः नगरमृगदृशः । स्वलंकृताः सु अत्यन्तं अलंकृताः । मुक्ताहीरयुक्तहारायलङ्काररोचीरुचिराः । अगेर्गत्यर्थाद्युच् । 'विशेषास्त्वङ्गनाभीरुर्नारीसीमन्तिनी वधूः' इत्यमरः । सु अलंकृताः स्वस्वपतिभिरभियाचितमणिगणघृणिप्रचुराभरणादिवितरणेन पूर्णीकृता वा विचेरुः सञ्चारं चक्रुः । विना कञ्चुकसन्धित्रोटनघटकोदघ्नकुचभारभीरुमध्या इति सुमध्यमानां गमनागमनायास इति यावत्सामर्थ्यं चरणचरणं द्योतयति । न केवलं कुवलयलोचना इतरा एव विचेरुरपि तु विदेहमहिष्योऽपीत्याह– **विदेहराजस्येति** ।। विदेहानां राजा जनकः तस्य याः योषितः योषाः ताः हि ता अपि विचेरुः । स्वलंकृता इत्यत्रापि सम्बध्यते । यद्वा योषितः सामान्यसीमन्तिन्यः तत्र विचेरुः । विदेहराजस्य या अङ्गनाः ता हि विचेरुरिति व्युत्क्रमेणान्वयः । योषिदपेक्षया अङ्गनानां विशेषात् । स च राजरमणीष्वेव सम्भवतीति अङ्गनेति तद्ग्रहणमुचितमिति ज्ञेयम् । यथाहामरः 'स्त्रीयोषिदवला योषा' इति सामान्यपर्याय इति सूचयन् 'विशेषास्त्वङ्गनाभीरुः' इत्यादिना । 'अङ्गात्कल्याणे' [१९०७.कौ] इति गणसूत्रेण मत्वर्थे विहितस्तेनापि मनोहरशरीरवत्य इति विशेषो

लभ्यते । 'योषित' इति 'हृसृरुहियुषिभ्य इतिः' [उणादि.१०२] इति इतिः । सौत्राद्युषेस्ततः क्विपि पुगन्तगुणयोः योषिदिति भवति । 'पुरुषस्य योषित्' इति भाष्यात् [महाभाष्यम्] । अथवा विदेहराजस्य या अङ्गना ता एव विचेरुः । ताः मृगदृशः कीदृश्य इत्यतो लुप्तोमं दृष्टान्तमाचष्टे– **अहियोषित इति** ।। अहीनां योषितो नागाङ्गना ता इव अहियोषितो अङ्गनाः यथा या लक्ष्म्या शोभयेति यावत् । नागकन्या उज्वलाङ्ग्यः तथैता अपीत्यर्थः । यद्वा चरणकारणमाह– **येति** ।। या लक्ष्म्या सीतात्मिकया समेतं रामं समालोक्य तोषविशेषाद्योषा विचेरुरिति । यद्वा न केवलं नरनार्यः । याः ह्यङ्गनाः जनकराजयोषितोऽपि स्वलंकृता विचेरुः । केत्यतः स्थाननिर्देशपूर्वकं तत्सञ्चारकारणमाह– **येति** ।। या समेतो रामो यत्रोषितो आवात्सीत्तत्र प्रदेशे सञ्चारं चक्रुरित्यन्वयः । हन्तेः आङ्पूर्वात् 'आङि श्रिहनिभ्यां ह्रस्वश्च' [उणादि.५८७] इति ङिति इनि आहन्तीति अहिरिति भवति 'अहिर्वृत्रासुरे सर्पे पुंसि' इति मेदिनी [हद्विकम्.२] । 'वसतिक्षुधोरिट्' [३०४६.कौ] इति इटि क्ते यजादित्वात् सम्प्रसारणे 'शासिवसि...' [२४१०.कौ] इति सस्य षकारे च उषित इति भवति । नृपो मुदा प्रीत्या । एतर्हि रमया सीतया समेतमिव विद्यमानम् । वस्तुतस्तु रमापतिं सदा माधवं विलोक्य निरीक्ष्य । विना लोककौतुककारिविषयवत्तां निरीक्षणस्याभिप्रैति । रामाय जामात्रे धनं स्वापतेयं ददौ दत्तवान् । 'स्वापतेयं धनं वित्तम्' इति हैमः । मुदा समेतमिति रामविशेषणं वा । काकाक्षिनयेन समेतं अन्वयसमेतमुभयत्र चेति ज्ञेयम् । अथवा रमयासमेतमिति धनविशेषणम् । महीपतिर्यथा रामाय धनं ददौ तथा रमामपि ददावित्यर्थः । यद्वा रमया समेतम् । आपतिं शश्वद्विश्वेश्वरम् । अरं अलम् । विलोक्य । अरं अत्यन्तं भूरीति यावत् । धनं ददाविति वा अन्वयः । शीघ्रमविचारेणेति वा 'ऋ गतौ' पचाद्यच् । 'अरमङ्गे रथाङ्गस्य शीघ्रशीघ्रगयोरपि' इति विश्वः [शाश्वत इति रामाश्रमी] । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । अलमित्यव्ययस्य 'वालमूल...' ['वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यते' इति वार्तिकः] [वा.८.२.१८.पा.सू.] इति रेफपक्षे अरमित्यव्ययम् । अराणि दलविशेषाः सहस्रमस्य सन्तीति मत्वर्थे अचि चक्रं अरम् । आ सम्यगरं यस्येति स आरः तं राममिति वा । रमापतिं रमया समेतमिति वदन् मोदमुनिः यत्पत्नीकटाक्षविक्षेपमात्रेण नीरेजातसञ्जातमुखाखिलमखभुजां भवति भूरिभाग्यं तद्धवायोद्धवे वित्तं दत्तवान् विदेह इत्यहो इति विदेह इति उपाहसदिति मन्तव्यम् ।।३७।।

**वरदराजीया–** विदेहराजस्य जनकराज्ञः याः योषितः ताः अङ्गनाः स्वलंकृताः सम्यगलङ्कारयुक्ताः तत्र विवाहशालायां विचेरुः गमनागमने कृतवत्य इत्यर्थः । रमया सीतया समेतं रमापतिं रामं विलोक्य नृपो जनकः रामाय धनं ददौ ।।३७।।

**जनार्दनीया–** नृपः रमया सीतया समेतं विलोक्य मुदा रामाय धनं ददौ ।।३७।।

**चट्टी–** अङ्गनाः पुरस्त्रियः स्वलङ्कृताः सम्यगलङ्कारयुक्तास्तत्र विवाहशालायां विचेरुः । विदेहराजस्य जनकस्य या योषितः ताश्च स्वलंकृताः विचेरुः । नृपो जनकः रमया सीतया समेतं रमापतिं रामं विलोक्य मुदा प्रीत्या रामाय धनं ददौ ।।३७।।

**गूढवाक्यार्थ–** मुदा ददावित्यन्वयः ।।३७।।

**प्रियाणि वस्त्राणि रथान् सकुञ्जरान् [१]परार्घ्यरत्नान्यखिलस्य चेशितुः ।**
**ददौ च कन्यात्रयमुत्तमं मुदा तदा स रामावरजेभ्य एव च ।।३८।।**

**व्यासतीर्थीया–** परार्घ्यं उत्तमम् ।।३८-३९।।

**वादिराजीया–** अखिलस्य चेशितुरिति वदता तदीयमेव तस्य दत्तमिति सूचितम् ।।३८-४१।।

**सत्यधर्मीया–** अवन्या इनो मान्याय सामान्यतो विततार धनमिति निगद्य किं रूपं तदित्यतो विशदयितुं वा न केवलं धनं ददौ अपि तु वसनस्यन्दनदन्तिरदरत्नादि नैकस्मा अपि तु अन्येभ्योऽपीति समुच्चयं वा विवेचयितुमाह– **प्रियाणीति** ।। प्रियाणि इष्टानि । प्रीणयन्ति स्वधारणादिनेति प्रियाणि । 'इगुपधा' [कौ.२८९७] इति के इयङि प्रियेति भवति । 'प्रियमिष्टं च रुचिरम्' इति रन्तिदेवः । वस्त्राणि वसनानि । 'सर्वधातुभ्य' इति वसेष्ट्रः । 'वस्त्रमाछादनम्' इत्यमरः । प्रियाणीत्यनेन पीततां शुक्लतां वा राघवदेववसनानामभिप्रैति । 'पीताम्वरोऽच्युतः' 'पीताम्वरधरः स्रग्वी' 'पीतमहीशः' 'शुक्लाम्वरधरं विष्णुम्' इत्यादिवचनात् । रामावरजेभ्य इत्यत्रापि प्रियाणीत्यादियोज्यम् । ततः प्रियाणि लक्ष्मणादिभ्य इष्टानि नीलादीनि वसनानि ददाविति भाव आविष्कृतो भवति । 'नीलाम्बरो रौहिणेय' इति तद्रूपत्वाल्लक्ष्मणो नीलचैल इति ज्ञेयम् । रथान् स्यन्दनान् । प्रियाणीत्येतदावर्तितं पुल्लिङ्गीभूय यथायोगमन्वेति । प्रियानिष्टान् । कीदृशान् स्यन्दनान् दशस्यन्दननन्दनेभ्यो ददौ विदेहो मुदेत्यतो दर्शयति– **सकुञ्जरानिति** ।। कुञ्जरैर्गजैः सहितान् । यद्वा स जनकः कुञ्जरानिति पृथक्कर्म । अथवा सकुञ्जरान् गजबद्धान् स्यन्दनान् । यथा अश्वबन्धो रथानां तथा गजबद्धान् रथान् । एतेन अत्युन्नतता रथानां द्योत्यते ।। **परार्घ्यरत्नानि** ।। परा पुरु अर्घा मूल्यद्रव्यमर्हतीत्यर्हार्थे दडादि यति भवति रूपं तानि रत्नानि मणयः । रमयन्ति जनानिति रमेर्णिजन्तात् 'रमेस्त च' [उणादि.३०१] इति नश्चान्तादेशः । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी [नद्विकम्.१७] । अखिलस्येति ईशितृपदेन विशेषणतया अन्वेति । खिलो दुर्वलो नेत्यखिलः पूर्णवलः तस्य ईशितृ रामस्य । एवमन्वये 'न

---

१. अत्र रत्नानां परार्घ्यत्वं ब्रुवद्भिराचार्यवर्यैः तेषां दिव्यत्व द्योत्यते । तदेतदाह वाल्मीकिः सुन्दरकाण्डे [६६.४]। तथाहि मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले यथा बद्धं अधिकं मूर्ध्नि शोभते ।। अयं हि जल संभूतः मणिः प्रवर पूजितः । यज्ञे परमतुष्टेन दत्तश्शक्रेण धीमता ।।

लोकाव्यय...' [कौ.६२७] इति निषेधात् कथं ईशितृ इति तृन्नन्तेन वा तृजन्तेन वा योगे षष्ठीयमिति शङ्कानवकाशः । यद्वा शेषषष्ठीयम् । अखिलस्य समग्रस्य जगतस्तत्सम्बन्धिन ईशितुः प्रेरयितुरिति तदर्थः । 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह' इत्यादिप्रयोगात् । याजकादित्वात् प्रतिप्रसवेन वा अखिलस्य समस्तस्येशितुरिति वान्वयः । चतुर्थ्यप्रयोगतो रत्नादीनि सर्वाणि सर्वेश्वरस्यैव न मैथिलस्य एतद्दाने सामर्थ्यमिति यतिपतिः स्पष्टयति षष्ठीनिर्देशेनेति ज्ञेयम् ।

स जनकः लोके कुलकेतौ एकस्मिंल्लसति सति तदाश्रयेणेतरेऽपि फलमुपलभन्त इति नीतिं मानयन् श्रीमदानन्दतीर्थः श्रीनाथे मथितचापे च आपुस्तदपरजनुषो योषित इति भाषते– **रामावरजेभ्य एवेति** ।। तदा तदग्रजस्य जानकीसङ्गमनसमनन्तरसमये । रामावरजेभ्य लक्ष्मणभरतशत्रुघ्नेभ्यः । उत्तमं श्रेष्ठम् । कन्यात्रयम् कन्यानां त्रयं तत् । साक्षात्स्वकुक्षिजाता सीता अन्या कन्या चैका ऊर्मिला निजानुजकुशध्वजाजाते मालवीश्रुतकीर्तिश्चेति विश्रुते द्वे कन्ये चेति क्रमात्कन्यात्रयं भ्रातृत्रयाय ददावित्यन्वयः । यथोक्तं रामायणे– 'ददामि परमप्रीतो वध्वौ ते रघुनन्दन । सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च ।। वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् । द्वितीयां ऊर्मिलां चैव त्रिर्वदामि न संशयः ।।' [बा.का.७१.२०-२२] 'भ्राता यवीयान् धर्मज्ञ एष राजा कुशध्वजः । अस्य धर्मात्मनो राजन् रूपेणाप्रतिमं भुवि ।। सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ।।' [बा.का.४-५] इति जनकवाक्यम् [सार्धश्लोकोऽयं इदानीन्तनपाठे विश्वामित्रवाक्यतया श्रूयते] । 'भरतस्य कुमारस्य लक्ष्मणस्य च धीमतः'[बा.का.७२-६] इति विश्वामित्रवाक्यम् । 'अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् । इयं सीता मम सुता सहधर्मचरी तव । इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ।।' इति । 'लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ।।' इति । 'तमेवमुक्त्वा जनको भरतं चाभ्यभाषत । गृहाण पाणिं भरत मालव्याः पाणिमुत्तमम् ।। शत्रुघ्नं चापि धर्मात्मा ह्यब्रवीज्जनकेश्वरः । श्रुतकीर्तेर्महाबाहो पाणिं गृह्णीष्व पाणिना ।। जनकस्य वचः श्रुत्वा पाणिं पाणिभिरस्पृशन् । चत्वारस्ते चतसृणाम्...।।' इति । [बा.का.७३.२६-३५] सङ्ग्रहे च । 'ऊर्मिला लक्ष्मणस्यासीन्मालवी भरतस्य च । भार्याऽथ श्रुतकीर्तिश्च शत्रुघ्नस्याभवच्छुभा ।।' इति । [बा.का.३७.३८] न चैतद्याचनानिघ्न इति निर्विघ्नं शत्रुघ्नान्तिमेभ्यो संमत्या कन्यात्रयमितरेभ्यो ददौ विदेह इति किन्तु सन्तोषत एवेति वदति– **मुदेवेति** ।। 'सङ्ख्याया अवयवे तयप्'[१८४३.कौ] इति तयपि 'द्वित्रिभ्यां तयस्य अयज्वा' [१८४४.कौ] इति च अयचि त्रयमिति भवति । ननु न भवति कन्यात्रयमिति । तथाहि । त्रयो अवयवा यस्य तत् त्रयम् । कन्यानां त्रयं कन्यात्रयम् । कन्यात्रयमित्यत्र कन्यान्यपदार्थस्य अवयविनोऽभावात् । बहुव्रीहौ च अन्यपदार्थप्राधान्यनैय्यत्येन इति । सत्यम् । समुदायातिरिक्तावयविनोऽङ्गीकृतौ अनङ्गीकृतौ च कन्या च कन्या च कन्या च कन्याः तासां त्रयम् । एवमवयवघटकत्वेन पृथक्पृथगवयविकन्योपस्थितेः तयप्

अवयवे सम्भवति । अयं प्रकारः तत्वसुबोधिन्यां द्वित्रिसूत्रव्याख्यावसरे कथं मुनित्रयमित्याशङ्क्य विस्तरतो निरूपित इति ततोऽनुसन्धेयः ।।३८।।

**मधुसूदनीया–** कन्यात्रयं जनकः स्वगर्भजां ऊर्मिलां लक्ष्मणाय ददौ । स्वानुजकुशध्वजपुत्रीद्वयं भरतशत्रुघ्नाभ्यां ददाविति इति विवेकः । तत्र भरतपत्नी मालवी [माण्डवी] । शत्रुघ्नपत्नी श्रुतकीर्तिरिति ज्ञेयम् ।।३८-३९।।

**वरदराजीया–** तथा अखिलस्य जगतः श्रीरामस्य प्रियाणि मनोहराणि वस्त्राणि सकुञ्जरान् रथान् परार्घ्याणि उत्तमानि इन्द्रनीलमाणिक्यादीनि च ददावित्यर्थः । तदा स जनकः रामावरजेभ्यः लक्ष्मणभरतशत्रुघ्नेभ्यः यथासङ्ख्यं लक्ष्मणाय उर्मिलानाम्नीं आत्मकन्यां मालवीश्रुतकीर्तिश्चेति जनकानुजकुशध्वजसुते इति उत्तमं कन्यात्रयं मुदा प्रददावित्यर्थः ।।३८।।

**जनार्दनीया–** सः जनकः परार्घ्याणि उत्तमानि । ईशितुरित्यत्र सम्प्रदानमविवक्षितं सम्बन्ध-मात्रविवक्षया षष्ठी । तदा वस्त्रादिदानकाले मुदैव सः जनकः अवरजेभ्यः लक्ष्मणादित्रिभ्यः कन्यानां त्रयं च ददौ ।।३८।।

**चट्टी–** सः जनकः अखिलस्य जगतः ईशितुः श्रीरामस्य प्रियाणि वस्त्राणि सकुञ्जरान् रथान् परार्घ्यानि उत्तमानि रत्नानि च ददौ । तथैव रामावरजेभ्यः लक्ष्मणभरतशत्रुघ्नेभ्यः उत्तमं कन्यानां त्रयं मुदा ददावित्यर्थः । कन्यात्रयमित्यत्र जनकस्य स्वगर्भजामूर्मिलां लक्ष्मणाय स्वानुजकुशध्वजपुत्रीद्वयं भरतशत्रुघ्नाभ्यां ददाविति शेषः । तत्र भरतपत्नी मालवी शत्रुघ्नपत्नी श्रुतकीर्तिरिति विज्ञातव्यम् ।।३८।।

**अनन्तभट्टीया–** परार्घ्यान् उत्तमान् ।।३८-३९।।

**भारतश्री–** ।। **ददौ च कन्यात्रयमिति** ।। ऊर्मिलायाः जनकभार्यायां जातत्वात् । सीताया अयोनिजत्वात् । मालवीश्रुतकीर्त्योः जनकानुजकुशध्वजपुत्रीत्वात् । रामलक्ष्मणयोरेकोदरत्वाभावात् । भरतशत्रुघ्नयोश्च तथात्वात् न काचिदनुपपत्तिः । 'एकस्य पुत्रा एकस्य कन्या ऊह्य च नारकाः' इत्येतत् एकोदरविषयमिति ज्ञातव्यम् । अयं विशेषः सङ्ग्रहरामायणादवगन्तव्यः । अत्रापि उत्तमपदेन सूच्यते । उत्तमं योग्यमिति । एवेत्यस्य मुदेत्यनेन सम्बन्धः । न त्वन्यनिर्बन्धेनेत्यर्थः ।।३८-४०।।

**गूढवाक्यार्थ–** परार्घ्यानि उत्तमानि ।।३८।।

**महोत्सवं तं त्वनुभूय देवता नराश्च सर्वे प्रययुर्यथाऽऽगतम् ।**
**पिता च रामस्य सुतैः समन्वितो ययावयोध्यां स्वपुरीं मुदा ततः।।३९।।**

**वेदाङ्गतीर्थीया–** ततः विदेहनगर्याः ॥३९॥

**सत्यधर्मीया–** इदानीं दानवारीणामिव मानवानाञ्च स्वस्थानमिव स्वस्वस्थानं प्रति गतिमिव साकेतं प्रति लोकेशितृपितुः तापसानुकम्पातः सम्पादितमनोरथस्य दशरथस्यप्याह– **महोत्सवमिति** ॥ महाञ्छ्रेष्ठः स चासौ उत्सवः उद्भवश्च तम् । 'आन्महत' [कौ.८०७] इत्यात्वम् । उत्पूर्वकात् 'षुञ् प्रेरण' इत्यतः पचाद्यचि गुणे महोत्सवमिति भवति । 'मह उद्भव उत्सव' इत्यमरः । यद्वा 'मह पूजायम्' अतो घञ् सञ्ज्ञापूर्वकत्वात् न वृद्धिः । अथवा महतोऽच् । महस्य तेजोरूपस्य पूज्यस्य रामस्य वा उत्सवो विवाहरूपस्तम् । 'मह उत्सवतेजसोः' इति रत्नमाला । महान् सम्पूर्णफल इति श्रेष्ठ उत्सव उच्छ्रायेन तं वा । यद्वा महान् पूर्ण उत्सव इच्छा अस्मिन्कर्मणि यथा भवति तथा । यथेष्टमिति यावत् । तं विवाहमित्यर्थः । 'उत्सवो महदुत्सेक इच्छाप्रसरकोपयोः' इति च । 'इमम्' इति न वदन् 'तम्' इति च वदन् देवदेव्योः समवायो अनादिसिद्धो नेदानीमेवेति भावमाविश्चक्रे । अनुभूय अनुभूतिर्ज्ञान-सामान्यार्थोऽपि प्रेक्षणार्थकोऽत्रावसेयः । दृष्ट्वेत्यर्थः । यद्वा उत्सवे दर्शनश्रवणादिकार्यमपि सम्भवतीति ज्ञानसामान्यार्थक एव वा । ततश्च ज्ञात्वेत्यर्थ । 'समानकर्तृकयोः पूर्वकाले' [कौ.३३२०] इति क्त्वा ततो ल्यप् । यद्वा योगविभागात् अभूततद्भावे वा क्त्वा । कदाप्यननुभूतं अनुभवित्वेत्यर्थः । देवताः सुमनसः । नराश्चेति सर्वे समे समागताः यथागतम् । भावे क्तः । आगतं आगतिं आगमनं अनतिक्रम्य । 'यथाऽसादृश्ये' [कौ.६६१] इति चाव्ययीभावः । तथा प्रययुः । स्वपुरीमित्यत्राप्यन्वेति । यद्वा सर्व इति सर्वा इति विपरिणतं देवताविशेषणम् । सर्वा देवताः सर्वे नराश्च । आगमनतो गमनस्य सौमनसस्य मनुजस्य च कञ्चनविशेषं विदेहदत्ताहुतिवित्तौघवत्तारूपं, निरुपमरामविवाहससम्भ्रमसमीक्षणजनिता-नितरसाधारणप्राप्तापारसुकृतसहकृततादिकं वा प्रेण प्राणप्रणायकः प्राह । रामस्य पिता तातः । 'रामस्य पिता' इति तुष्यतुन्यायेन हर्षर्षिर्वभाष इति मन्तव्यम् । न केवलं सुरानराश्चैव प्रययुरपि तु सर्वपितुः पितापीति समुच्चये चः । चरामस्येति समस्तं वा पदम् । चरन्ति सञ्चरन्ति जानत इति वा चराश्चेतना ज्ञानिनो वा । तेषां आ सम्यक् मा सम्पत् विमुक्त्यादिसम्पद्येन स तस्य । 'चरेष्ट' इति टः भवेत् । ननु न टः । तस्याधिकरणे सुप्युपपदे विधानात् अत्र पुनस्तदभावात् इति वाच्यम् । अतदुपपदकोऽपि टो अवश्यमङ्गीकार्यः । अन्यथा चराचरमित्यादि न सिद्ध्येत् । यद्वा पचादौ चरडिति पाठादज्वा । सुतैः पुत्रैश्चतुर्भिः समन्वितो युक्तः । समा समागमनसमयतो रामलक्ष्मणाभ्यां सहिततया सीतोर्मिलामालवी-श्रुतकीर्तिसाहित्येन वा सामीचीन्यं सम्बन्धस्येति गमनसमयस्य विशेषं सूचयति । ततो विवाहानन्तरम् । मुदा सन्तोषेण । स्वपुरीं स्वावासनगरीम् । तन्नामा– **अयोध्यामिति** ॥ ततो विदेहगेहात् । ययौ जगाम । मुदा सन्तोषेण आततो व्याप्त इति वा मुदा तता यस्मिन् स मुदातत इति वैकं वा पदं 'महोत्सवं तं तु' इत्यत्राप्यन्वेति । साकेतादि साङ्केतिकं ग्रामनामान्तरमन्तरा

अयोध्याभिधाभिधानेन प्रतियोद्धृयुद्धाशक्यता नगर्या असूचयदिति चातुर्यवानाचार्य इति मन्तव्यम् । यद्वा 'महोत्सवंतम्' इत्येकं पदम् । महोत्सववदाचरतीतिमहोत्सवन् रामः तमनुभूय यथेच्छं सादरमवलोक्य । आचारार्थे क्विप् । साक्षादुत्सवरूपं श्रियं उपलक्ष्य प्रययुरित्यर्थः । तं महोत्सवं सागरजाभगवत्सङ्गममङ्गलविवाहोत्सवम् । यथा येनप्रकारेण । अनुभूय । सुरानराश्च आ आगतं आगतिमर्यादामनतिक्रम्य प्रययुः । तथा । इममिति शेषः । महोत्सवमित्यादि पूर्ववत् । प्राक् 'यथा पुरा सागरजास्वयंवरे सुमानसानाम्' 'यथा पुरा सागरजासमेत' इति पद्याभ्यामुक्तस्यार्थस्य निगमनमेवंगमनिकायां लभ्यत इति ज्ञेयम् ।।३९।।

**वरदराजीया–** देवतास्तु तं महोत्सवं अनुभूय तथा सर्वे नराश्च अनुभूय यथागतं तथा प्रययुः । ततस्तदनन्तरं रामस्य पिता दशरथः सुतैः रामादिभिः समन्वितः मुदा सन्तोषेण स्वस्य विद्यमानां अयोध्यां पुरीं ययावित्यर्थः ।।३९।।

**जनार्दनीया–** यथा सन्तोषेण आगतं तथा प्रययुः । ततः पिता ययौ ।।३९।।

**चट्टी–** ।। महोत्सवमिति ।। देवताः नराश्चेति सर्वे तं महोत्सवं अनुभूय यथागतं प्रययुः । ततस्तदनन्तरं श्रीरामस्य पिता दशरथश्च सुतैः श्रीरामादिभिः समन्वितो मुदा सन्तोषेण स्वपुरीमयोध्यां ययौ ।।३९।।

**तदन्तरे सोऽथ ददर्श भार्गवं सहस्रलक्षामितभानुदीधितिम् ।**
**विभासमानं निजरश्मिमण्डले धनुर्धरं [१]दीप्तपरश्वधायुधम् ।।४०।।**

**व्यासतीर्थीया–** अधिकारितारतम्यापेक्षया सहस्रलक्षामितभानुदीधितिमिति ।।४०।।

**वेदाङ्गतीर्थीया–** तदन्तरे विदेहनगरायोध्ययोर्मध्ये । सहस्रलक्षामितेति द्रष्टॄणां योग्यतापेक्षया ।।

**सत्यधर्मीया–** पामरा रामं नरं कञ्चन मन्वत इति तेषामेषोऽशेषजगज्जनक एव देवः कुतश्चित् कारणात् धरिणावुदभूदिति भावमावेदयितुं आगतं मार्ग एव भार्गवं परशुभासमानस्कन्धं ददर्श दशरथ इत्याह– **तदन्तर इति** ।। अथ मैथिलनगरीतो निर्गमनसमनन्तरम् । तयोः विदेहपुरीस्वपुरोः अन्तरे मध्ये सः दशरथः । 'अन्तरं मध्यमनसोः' इति हैमः । भार्गवं भृगोर्गोत्रापत्यम् । भार्गवो जामदग्न्यः । तं

---

१. 'रुषण्वन्तं सुषेणश्च वसुं विश्वावसुं तथा । पश्चात् तस्यां स्वयं जज्ञे भगवान् मधुसूदनः ।। कार्तवीर्यवधायाशु शक्राद्यैः सकलैः सुरैः । याचितः पञ्चमः सोऽभूत् तेषां रामाह्वयस्तु सः ।। भारावतरणार्थाय जातः परशुना सह । सहजं परशुं तस्य न जहाति कदाचन ।। स वेदानखिलान् ज्ञात्वा धनुर्वेदश्च सर्वशः । सततं कृतकृत्योऽभूत् वेदविद्याविशारदः।।' इति कालिका.पु.८३.२-७ ।

ददर्श । 'ऋष्यन्धक.....' [१११७.कौ] इत्यण् । अधिकारिविशेषतस्तं विशेषयति– **सहस्रेति** ।। सहस्रं लक्षश्चामिताश्च भानवः सूर्यास्तेषां दीधितय इव दीधितयः छवयो यस्य स तथा तम् । 'दाभाभ्यां नुः' [उणादि.३१९] इति भातेर्नौ भानुरिति भवति । अथवा सहस्रलक्षामिताः भानवो मरीचयो यस्य स सूर्यः तद्दीधितिरिव दीधितिर्यस्य तम् । लक्षामितमरीचिपक्षेऽभूतोपमेयमिति ज्ञेयम् । तस्य सहस्रांशुत्वादिति । 'भानू रश्मिदिवाकरौ' इत्यमरः । उत्तमानाममितभानुदीधितिः मध्यमानां लक्षभानुदीधितिः अधमानां सहस्रभानुदीधितिरिति विवेकः । यद्वा दवीयो मार्गगतभार्गवमवलोकयितू रामपितुः गतवयस्कत्वात् भास्करसहस्रप्रकाश आदौ अभाद्भगवान् । स्वल्पव्यवधाने नेत्रसमवधानेन लक्षभानुभा भगवान् भार्गवोऽभात् । केवलसमीपतो अपारपपीप्रकाशनिकाश ईशोऽभादिति । दीधीङः क्तिच् 'तितुत्र....' इति [३१६३.कौ] निषेधः 'इट्सु अग्रहादीनाम्' [। वार्तिकपाठः द्रष्टव्यः] इति वाररुचात् वचनान्न भवति । 'यीवर्णयो....' [२४८८.कौ] इतीकारलोपः । 'मरीचिः स्त्रीपुंसयोः दीधितिः स्त्रियाम्' इत्यमरः । 'दीधितिस्त्रियाम्' [पुल्लिङ्गाधिकार.१०१] इति लिङ्गानुशासनम् । निजरश्मिमण्डले निजाः स्वस्वरूपभूता रश्मयः किरणास्तेषां मण्डले बिम्बे । विभासमानं प्रकाशमानम् । 'अश्नोते रश्च' [उणादि.४९५] इति 'अशू व्याप्तौ' अतो मिप्रत्यये धातोः अशादेशे रश्मिरिति भवति । 'रश्मिः पुमान् दीधितौ स्यात् पक्षप्रग्रहयोरपि' इति मेदिनी [मद्विकम्.२५] । 'मडि भूषायां' ततो वृषादित्वात् लचि [कलचि] इदितनुमि मण्डलमिति भवति । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः । निजरश्मयः स्वपक्षा निजभजननिरतजनाः भक्ताः तेषां मण्डले समूहे वा । स्वरूपकथनमिदम् । विभासमानम् । 'भ्राजभास...' [३१५७.कौ] इति क्विप् । ततः शानजादिः । विभया विशिष्टप्रभया असमानं स्वसमानमानवादिहीनम् । किं मध्य इत्यतो वक्ति– **निजरश्मिमण्डले** ।। निजा रश्मयो येषां ते भानुशीतभानुवह्निरत्नादिपदार्थाः । तेषां मण्डले समूह इति वा । विशिष्टो भो विभो विभुः स चासावश्च तत्समानं तदात्मकम् । निजः स्वीयो रश्मिः पक्षो येषां वसिष्ठादीनां मण्डले स ददर्शेति वा । धरतीति धरः । धनुषो धरो धनुर्धरस्तम् । अनितरसुरनरसाधारणायुधधारणात् धरणीवरेण रेणुकाजठराभरणमिति निरणायीति वक्ति– **दीप्तेति** ।। दीप्तः निशातशाणत्वेन तेजस्वी परश्वधः कुठारः स आयुधं प्रहरणं यस्य स तथा । 'दीपी दीप्तौ' अतः क्तः । 'कुठारः स्वधितिः परशुश्च परश्वधः' । 'आयुधं तु प्रहरणम्' इत्युभयत्र चामरः । युधधातोः आङ्पूर्वादचि आयुधमिति भवति । *...परश्वध इति भवति । पद्मापद्म-भववायुतद्युवतीनाममितभानुदीधितिम् । भवभवान्यादीनां लक्षभानुदीधितिम् । इन्द्रेन्द्राणीमुखानां सहस्रकिरणदीधितिरिति विवेकः । इदमपि स्वरूपकथनम् । दशरथस्यैतन्नितयदर्शनायोग्यत्वात् । तथाचोक्तं ब्रह्माण्डे– [गी.ता.११.४७] 'विश्वरूपं प्रथमतो ब्रह्मापश्यच्चतुर्मुखः । तच्छतांशेन रुद्रस्तु तच्छतांशेन वासवः ।।' इति । यद्वाऽमितो मितकान्तिरिति मूर्खजना जानत इति वाह–

**सहस्रलक्षामितभानुदीधितिमिति** ।। ह्स्रा मूर्खास्तैर्लक्षसङ्ख्या आ मिता ये भानवस्तेषां दीधितिस्तया सहितः स तथा तम् । 'स्फायितञ्चि...' [उणादि.१७८] इति 'हसे हसने' इत्यतो रक् । 'ह्स्रो मूर्खे विदूषके' इति संसारावर्तः ।।४०।।

**मधुसूदनीया–** ।। **सहस्रलक्षामितभानुदीधितिम्** ।। उत्तमाधिकारिमध्ये इन्द्रादीनां सहस्रभानुदीधितिं रुद्रादीनां लक्षभानुदीधितिं ब्रह्मवायुतत्स्त्रीणां अमितभानुदीधितिमिति विवेक्तव्यम् । तथाचोक्तम्– 'विश्वरूपं प्रथमतो ब्रह्माऽपश्यच्चतुर्मुखः । तच्छतांशेन रुद्रस्तु तच्छतांशेन वासवः ।।' इति ब्रह्माण्डे इति गीतातात्पर्ये ।।४०-४१।।

**वरदराजीया–** अथ अनन्तरं स दशरथः तदन्तरे तयोर्मिथिलायोध्ययोरन्तरे मध्ये भार्गवं भृगुकुले प्रादुर्भूतं परशुरामं ददर्शेति सम्बन्धः । कथंभूतं सहस्राणां लक्षाणां अमितानां च भानूनां दीधितिरिव दीधितिर्यस्य तम् । अथ अधिकारिदृष्टिभेदेन तथा दृश्यमानमिति भावः । निजज्ञानाख्यरश्मिमण्डले विभासमानं प्रकाशमानं शार्ङ्गं धनुः वर्तते इति तथोक्तः तम् । परश्वधः परशुरायुधं यस्य स तथा ।।४०।।

**जनार्दनीया–** सः दशरथः तदन्तरे विदेहायोध्ययोर्मध्ये । सहस्राणि च लक्षाणि च अमिताश्च सहस्रलक्षामिताः । ते च ते भानवश्च तथा । तेषां दीधितिरिव दीधितिर्यस्य स तथा तम् । निजं स्वाभाविकं तच्च निजरश्मिमण्डलं च किरणमण्डलं च स्वाभाविकज्ञानमरीचिमण्डलमित्यर्थः । तस्मिन् विभासमानं प्रकाशमानं धनुः शार्ङ्गधनुः दीप्तश्चासौ परश्वधश्च कुठारश्च स एव आयुधवरं यस्य स तथा तम् । भार्गवं भृगुकुलोत्पन्नं श्रीपरशुरामं ददर्श । 'सहस्रलक्षामितम्' इति च मध्यमोत्तमाधिकारि–योग्यतामपेक्ष्योक्तमिति ज्ञातव्यम् ।।४०।।

**चट्टी–** ।। **तदिति** ।। अथानन्तरं सः दशरथस्तदन्तरं तयोः मिथिलायोध्ययोरन्तरे मध्ये सहस्राणि लक्षाणि च अमिताश्च सहस्रालक्षामिताः ते च ते भानवश्च तेषां दीधितिरिव दीधितिर्यस्य स तथा तम् । निजं स्वाभाविकं तच्च तद्रश्मिमण्डलं च स्वाभाविकज्ञानमरीचिवन्तमित्यर्थः । तस्मिन् विभासमानं प्रकाशमानं धरतीति धरः । धनुषो धरो धनुर्धरः तं शार्ङ्गनामकधनुर्धरमित्यर्थः । दीप्तश्चासौ परश्वधः कुठारश्च स एवायुधं यस्य स तथा तम् । भार्गवं भृगुकुलोत्पन्नं श्रीपरशुरामं ददर्श । सहस्रलक्षामितेत्यत्र उत्तमाधिकारिमध्ये इन्द्रादीनां सहस्रभानुदीधितिं रुद्रादीनां लक्षभानुदीधितिं ब्रह्मवायुतत्स्त्रीणां अमितभानुदीधितिमिति वक्तव्यम् ।।४०।।

**अनन्तभट्टीया–** मन्दमध्यमोत्तमाधिकार्यपेक्षया सहस्रलक्षामितभानुदीधितिम् । परश्वधः कुठारः ।।४०-४१।।

**ताम्रपर्णीयं–** ।। सहस्रलक्षामितेति ।। द्रष्टृपुरुषयोग्यतापेक्षया त्रिधोक्तिरिति ।।४०-४१।।[1]

**गूढकर्तृक–** सहस्रलक्षामितभानुदीधितिमित्यत्र अधिकारिविवक्षया इति वर्णयन्ति ।।४०।।

।। इति गूढकर्तृके चतुर्थोऽध्यायः ।।

**अतिविशद–** सहस्रलक्षामितभानुदीधितिमित्यत्र सहस्रेत्याद्यधिकारिविशेषविवक्षयेति वर्णयति । 'विश्वरूपं प्रथमतो ब्रह्माऽपश्यच्चतुर्मुखः । तच्छतांशेन रुद्रस्तु तच्छतांशेन वासवः ।।' इति गीतातात्पर्यमवलम्ब्य विशेषाकारेण इन्द्रादय इति च तद्वाक्यविचारे तथा प्रतीते तस्मादधिकारिणां विशेषतस्त्वप्रतीतत्वादेव सामान्यतस्तु सर्वसज्जना इति वक्तव्यम् । असज्जनानामनधिकारात् । सज्जनानामपि तद्दर्शनं ज्ञानदृष्ट्या उत इन्द्रियैरित्याशङ्का 'प्रादुर्भावानृते विष्णुमिन्द्रियैर्नैव पश्यति' [का.भा.२.२.४.१०] इत्यनेनैव परिहर्तव्या । न च प्रकृते तथा सहस्रेत्याद्युक्तत्वात् । एवमपीन्द्रियैरेवास्त्वित्याशङ्काऽपि । 'द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम । मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो । योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ।।' [गी.११.३-४] इत्यर्जुनप्रार्थनानन्तरम्, [गी.११.८] 'न तु मां शक्यसे द्रष्टुं अनेनैव स्वचक्षुषा । दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।।' इति भगवद्दत्तदिव्यदृष्ट्या दर्शनानन्तरं दृष्ट्युक्त्या निरस्ता । नैतद्दर्शनं दुष्टेन्द्रियदर्शनवत् निरर्थकम् । मोक्षोपयोगीत्यपि ग्राह्यम् । तदुक्तम्– [का.भा.२.२.४.१०] 'प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति । तदैव मुच्यते जीवो न दुष्टैरिन्द्रियैः क्वचित् ।।' इति ज्ञानदृष्ट्या विना सहस्रसूर्यादिवद्दर्शनं विरुद्धमिति भावः । ज्ञानदृष्ट्यापि मानुषादीनां अधिकार इति तु 'विद्युद्वन्मानवा विद्युः सूर्यमण्डलवत्सुराः । प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं वेद च स्वयम् ।।' [पश्यति स्फुटम्] [तै.भा.भृगुवल्ली] इति तैत्तिरीयभाष्यविरुद्धम् । तत्र ऋजव एव अधिकारिण इति केचिदाहुः । तज्ज्ञाने आमुक्तेः व्यक्त्यतिशयस्य विद्यमानत्वादिति । अयं भावः । शतसङ्ख्याका अपरोक्षज्ञानिनो ऋजवः । तन्मध्ये वायुब्रह्माणौ अमितज्ञानिनौ । मध्यस्था लक्षज्ञानिनः । अन्ये सहस्रज्ञानिन इति । नच ऋजूनामेवात्राधिकारित्वे 'दिवि सूर्यसहस्रस्य' [गी.११.१२] इत्यादिना गीतायां विश्वरूपाध्यायोक्तं अर्जुनस्य सहस्रसूर्यादिवद्दर्शनं विरुद्धं स्यादिति वाच्यम् । यथा न विरुद्धं तथा अष्टमाध्याये वक्ष्यते । अङ्गीकृत्य च इदमुदितम् । वस्तुतस्तु अनन्तसूर्यप्रकाश एव सर्वत्राङ्गीकार्यः । तथा व्याख्यातत्वात् गीताभाष्ये । अर्जुनदर्शनं नात्र विरोधि । तद्दर्शनस्य तदाविष्टवाय्वादेरेव निमित्तत्वात् । तदुक्तम्– '...पार्थोऽपीषत्तदात्मकः । अन्यावेशनिमित्तं चेद् बलमन्यात्मकं हि तत् ।।' बलमित्युपलक्षणम् । दर्शनाद्यपि ग्राह्यम् । अपरे तु

---

१. ।। सहस्रलक्षेति ।। एतच्च तद्द्रष्टॄणां योग्यतापेक्षया । 'सहस्रलक्षामितकान्तिकान्तम्' इत्यत्र द्रष्टृपुरुषयोग्यताभेदात् त्रिधोक्तिरिति प्रमेयदीपे [गी२.७२]।। ४०-४२ ।। इति हो पुस्तके अधिकः पाठः ।

इन्द्रादयोऽप्यत्राधिकारिणः । तथा प्रमाणात् । नच 'विद्युद्वत्' इति तैत्तिरीयभाष्यविरोधः । तत्र दर्शने विद्युदादिवत् चाञ्चल्यं ज्ञायते । अन्यथा 'एतद्वै मुखतोऽन्नगँ राद्धम्' [तै.उ.भृगुवल्ली] इत्यादिना उपनिषदि वक्ष्यमाणं 'पूर्वे वयसि चेत्कृतम्' इत्यादि तद्भाष्योक्तसाधनानुसारेण पादादिसर्वावयवदर्शनं विरुद्धमापतेदिति । ननु यदि प्रतिबिम्बदर्शनं रुद्रस्य उच्यते तर्हि 'यथाऽदर्शे तथात्मनि' [का.२.२.३.६] इत्यादिना काठकोपनिषद्युच्यमानं अन्येषां प्रतिबिम्बवद्दर्शनं विरुद्धं स्यादिति चेत्, तस्य तत्तल्लोकाधिकारि-दर्शनतारतम्यविवक्षया प्रवृत्तत्वेन तन्मात्रविषयतया एतद्विरोधकत्वाभावात् । तदुक्तं तद्भाष्ये– 'जीवे स्थितः स भगवान् दृश्यते ज्ञानदृष्टिभिः । आदर्शे मुखवत्सम्यक् न तथा पितृलोकगः ।। ततः किञ्चित्स्पष्टतया गन्धर्वैर्दृश्यते हरिः । नात्यातपे न छायायां यथैवाहनि दृश्यते ।। स्पष्टं तथा ब्रह्मलोके दृश्यते पुरुषोत्तमः ।।' इत्यादिना ब्रह्मलोकपर्यन्ततारतम्यस्योक्तत्वात् । काठकवाक्यस्यायमभिप्रायः । तत्तल्लोकस्थिता एव तथा पश्यन्ति त एव पुनर्भूम्यादौ गतास्तथा न पश्यन्ति सर्वलोकस्थिता न सर्वत्रस्थिता इति तैत्तिरीयभाष्यतद्वाक्यस्य मनुष्याधिकारिणः विद्युदादिरीत्या सर्वत्र स्थिता पश्यन्तीत्यभिप्रायः । रुद्रस्तु प्रतिबिम्बवत् सर्वत्र पश्यति न तथाऽन्ये इति । यद्वा 'सहस्रलक्ष' इत्यस्यायमभिप्रायः । यथा बहुधान्यगणने बहुप्रस्थपरिमितपात्रेण गणयन्ति तथा सहस्रं एकसङ्ख्याऽवधिं कृत्वा गणनेऽपि अमितसूर्यदीधितिमित्यर्थ इति ।।४०-४७।।

**गूढवाक्यार्थ–** मन्दमध्योत्तमाधिकार्यपेक्षया सहस्रलक्षामितभानुदीधितिम् । तदुक्तं प्रमेयदीपिकायां 'सहस्रलक्षामितकान्तिकान्तम्' इति भाष्यव्याख्यानावसरे द्रष्टृपुरुषयोग्यतापेक्षया द्विधोक्तिरिति । परश्वधः कुठारः ।।४०।।

**अजानतां राघवमादिपूरुषं समागतं ज्ञापयितुं निदर्शनैः ।**
**समाह्वयन्तं रघुपं स्पृधेव नृपो ययाचे प्रणिपत्य भीतः ।।४१।।**

**व्यासतीर्थीया–** निदृश्यते तत्त्वं एभिरिति निदर्शनैर्लिङ्गैः ।।४१।।

**सत्याभिनवीया–** तत्रैव अजानतां राघवमादिपूरुषं... इति श्लोके समाह्वयन्तं रघुपं स्पृधेवेत्यस्य स्पृधा स्पर्धया युक्त इव रघुपं समाह्वयन्तमित्यर्थः । एतेन स्पृधा युक्त इति वक्तव्यम् । स्पृधेवेति कथनमयुक्तमिति दूषणं परिहृतम् । युक्त इत्यस्याध्याहार इत्यभ्युपगमात् ।।४१।।

**सत्यधर्मीया–** किमर्थमत्यर्थप्रकाशो विप्ररूपी भार्गवो मार्ग आगादित्यतो विस्तरेण रेणुकातनुजजनकजजानिप्रभावं प्रकटयन् रामं प्रति रामागमनहेतुं तावदाह– **अजानतामिति** ।। राघवं रघोर्गोत्रापत्यं राघवस्तम् । 'लङ्घि बंह्योर्नलोपश्च [उणादि.२९] इति नलोपे कौ च 'वालमूल...' [वा] इति लरत्वे रघुरिति भवति । 'रघुमात्मसम्भवम्' इति कालिदासः । 'रघुर्नृपभेदे' इति कौमुदी ।

आदिपूरुषं पुरातनपुरुषं नारायणम् । 'पुरः कुषन्' [उणादि.५२३] इति पुर अग्रगमन इत्यतः कुषनि, 'अन्येषामपि...' [३५३९.कौ] इति दीर्घे कित्वाद्गुणाभावे च पूरुष इति भवति । 'पुरुषः पूरुषा नरा' इत्यमरः । 'पुरुषः पूरुषे साङ्ख्ये च पुन्नागपादपः' इति विश्वमेदिन्यौ [षत्रिकम्.१६] [षत्रिकम् ४१] । अजानताम् अज्ञातवतां जनानां निदर्शनैः स्पष्टदृष्टान्तैः । निदर्शयन्त्यर्थानिति निदर्शनानि । दृशेर्युच्यने गुणे रपरे निदर्शनमिति भवति । ज्ञापयितुं अवगमयितुम् । 'ज्ञा नियोगे' अस्मात् णौ 'अर्तिह्री..[२५७०.कौ] इति पुकि तुमुलि च ज्ञापयितुमिति भवति । समागतं प्राप्तवन्तम् । रघुपं रघून् पातीति रघुपस्तम् । स्पृधेव स्पर्धयेव । स्पर्धतेः क्विप् । समाह्वयन्तं आकारयन्तम् । स्पृधेवेत्यनेन अशेषदोषदूरस्य परशुरामस्य प्रतियोद्धॄन् प्रति स्पर्धा प्रदर्शनमात्रमिति सूचयति । 'ह्वेञ् स्पर्धायां शब्दे च' इति ह्वेञ् स्पर्धार्थकः शब्दार्थकश्च तथापि धातवोऽनेकार्था इति आकरणार्थको ज्ञेयः । स्पृधेवेति पृथगस्तीति मात्रार्थकश्च । यद्वा सम्यक्समीचीना च सा आह्वा च नाम च सः समाह्वः । ततो णिच् । ततः तत्कारयतीति समाह्वयन् तम् । लोकप्रसिद्धनामवन्तं कुर्वन्तं इति यावत् । स्पृधेव समागतमित्यन्वयः । अथवा हे समाह्व समाना राम इति आह्वा नाम यस्य समाह्वः तत् सम्बोधनम् । यन्तमिति इणो रूपम् । स्पृधेव यन्तं प्राप्तमिति वा । समाह्वयं तमिति वा । 'अथ आह्वय आख्या आह्वा' इत्युभयतश्च अमरः । अथवा दशरथबुद्धिपद्धतेः स्पृधा माधवसमाह्वानं विषयो न तु वस्तुतः श्रीस्तुते स्पर्धादिदोषगन्धः सन्देहार्ह इति इवेनावादीत् वादिद्विरदकण्ठीरव इति ज्ञेयम् । दृष्ट्वा एतादृशमीशं दशरथो अथ किं चकारेत्यत आह– **नृप इति** ।। नृपो दशरथः । भीतः त्रस्तः । क्तान्तोऽयं भीतशब्दः । यद्वा भिया भीत्या इति इणः क्तान्तः? । । स्वतनयं युतनयं अविनयेनाहवाय आह्वयामास स इति भ्रमतः ससम्भ्रमः सन् । प्रणिपत्य दण्डप्रपातं कृत्वा साष्टाङ्गप्रपतनं नत्वेति यावत् । ययाचे याचितवान् । निप्रौ [प्रणि उपसर्गौ] विप्रप्रवरावलोकनतः साकेतकेतोः शरीरस्मरणाभाववैशिष्टयं स्पष्टयतः पातस्येति ज्ञेयम् । नृप इत्यनेन हिंसितैकविंशतिवारधरावरस्य क्षत्रमात्रघातुकस्य दर्शनेन भीतिर्नीतियुता रघुजाततातस्येति सूचयति । यद्वा यद्वाणीप्रणयनादिवाचामगोचरचर्यस्य भार्गवस्य अवलोकनतो मानववरस्य तत्कोपस्वरूपाज्ञानतो भीतिर्नाश्चर्यहेतुरिति सूचयति यतिपतिर्नृपपदेनेति ज्ञेयम् । यद्वा आदिपूरुषम् । अदनं अदः भावेऽप् । सा आ सम्यक् स्वरूपतया विहिताविहितभक्षणं येषां त आदिनो राक्षसाः यस्य स आदी रावणः । तेषां तस्य वा पूः पत्तनं लङ्का तस्यै रुट् कोपो ताम् । तदधिपतिपतिकोपात् तत्रोपचारात् कोपोक्तिरिति ज्ञेयम् । यद्वा आदिपूर्नियामककामिन्याः निस्स्वामित्वघटनपटुरुट् ताम् । नियम्यनियामकसम्बन्धेन पूःशब्देन रक्षोध्यक्षग्रहो वा । यद्वा आदिनो राक्षसान् पूरयति पालयतीति निशाचराधीश आदिपूः । अथवा आदिनां पूरिव पूराश्रय इति रावणस्तस्मै या रुट् तां निदर्शनैः एतादृशधनुर्विधूननादिदृष्टान्तैः कदने दशवदनं दशस्यन्दननन्दनो हनिष्यतीति

तादृग्रोषं ज्ञापयितुं समागतम् । यद्वा निदर्शनैर्दाहनादिदृष्टान्तैर्ज्ञापयितुं समागतम् । समा सुमनोमनःप्रसादनेन आगमनमिति द्योतयति । अजानतां जनानां सतां पश्यतां सतां समाह्वयन्तमिति वा । यद्वा यं अं* । श्रीनारायणात्मकं रामम्, अजानता अजेन ब्रह्मणा आज्ञायत इत्यजः तेन आ सम्यक् नता नमस्कृता रमा रघुपं मनोहरपतिं प्रणिपत्य ययाच तं आदिपुरुषं समागतं ज्ञापयितुं इति ययाच । ई इदं पक्षे च्छेदः । याचतेरुभयपदत्वात् । 'आदिनो राक्षसाः प्रोक्ताः' इत्येकादशतात्पर्योदाहृत-पुराणवचनात् । 'रुड्रोष' इत्यमरः । रुषतेः क्विप् । निदर्शनैः रमया समा साकं ज्ञापयितुमागतमिति वा निदर्शनैरिति बहुवचनेन सुरासुरादीतराचरणनिरवकाशतां ईशव्यापाराणामसूचयत् ।।४१।।

**वरदराजीया–** राघवं श्रीराममादिपूरुषं अजानतां सज्जनानां पुराणपुरुषोऽयमिति निदर्शनैः दृष्टान्तैः ज्ञापयितुं समागतम्, तथा दैत्यमोहनार्थं रघुपं श्रीरामं स्पृधेव स्पर्धया इव समाह्वयन्तं रणायेति शेषः । एतादृशं ददर्शेति सम्बन्धः । दृष्ट्वा भीतः सन् नृपः प्रणिपत्य ययाचे ।।४१।।

**जनार्दनीया–** नृपः भीतः सन् आदिपुरुषं राघवं अजानतां राघवस्पर्धयेव समाह्वायन्तं, योद्धुमिति शेषः । प्रणिपत्य नत्वा ययाचे ।।४१।।

**चट्टी–** ।। **अजानतेति** ।। रघुवंशिराममादिपूरुषं पुराणपुरुषमजानतां निदर्शनैः दृष्टान्तैराज्ञापयितुं समागतं दैत्यमोहनार्थं रघुपं श्रीरामं स्पृधैव स्पर्धयेव समाह्वयन्तं योद्धुमिति शेषः । एतादृशं ददर्शेति सम्वन्धः । दृष्ट्वा भीतः नृपः प्रणिपत्य ययाचे ।।४१।।

**भारतश्री–** ज्ञापयितुं समागतं ददर्शेत्यन्वयः । निदर्शनमेवाह– **समाह्वयन्तमिति** ।। स रघुपं युद्धाय आह्वयामासेति वक्तव्यम् । अजानतां राघवमादिपूरुषं निदर्शनैः ज्ञापयितुं समाह्वयन्तमित्यनेनाप्यन्वयः ।।

**न मे सुतं हन्तुमिहार्हसि प्रभो वयोगतस्येत्युदितः स भार्गवः ।**
**सुतत्रयं ते प्रददामि राघवं रणे स्थितं द्रष्टुमिहागतोऽस्म्यहम् ।।४२।।**

**वादिराजीया–** उदितः स भार्गव उवाचेति योग्यपदाध्याहारेण सम्बन्धः ।।४२।।

**सत्यधर्मीया–** प्राचि प्राचीनपुरुषं सपरुषभाषारुषमिवावेक्ष्य ययाच इति या च नरवरयाचना-सूचिता तां मोचारससमीचावाचा* चोरादिदुराचाराणामपि करुणाकारिण्योदश्चयत्यधुना मधुनाशकजनक इति दशमतिर्विशदयति– **न म इति** ।। मे मम । सुतं पुत्रम् । 'सुतम्' इत्येकवचनेन राम एव रामस्य कटाक्षो नेतेरषु कुमारेष्विति तदलक्ष्यता लक्ष्मणभरतेतराणां सूचिता भवति । राम हे प्रभो समर्थ

*. मूलकोशेषु अस्पष्टमिदं पदम् ।

परशुराम । 'प्रभो' इत्यनेन त्वयैव कृपावता अस्मानवता भवितव्यं मान्यो मान्योऽत्र भवतो भवतो वर्तते येन तेन समीरिते शमीस्या अतोऽस्यां दशायां मच्छिशुकुशलं त्वदधीनमिति दीनःसन् महीनः सम्बोधितवानाधित इति बोधयति– **हन्तुं संहर्तुम्** ।। इह एतस्मिन्समये न अर्हसि नैव योग्यो भव । कुतस्तव न सुतो वध्य एतस्मिन् रामे सङ्ग्रामे मामकीने सति तावकीनाः परेऽपि तोकाः पुरतो स्तोकशक्तयो भविष्यन्तीत्यतोऽहं प्रवया इति प्राहेत्याह– **वयोगतस्येति** ।। वयोगतस्य वयो बहुलो लवो वा तमतीतो यस्य स वयोगतस्तस्य । एतेन न चाशा भविष्यत्तनयविषयिणी इति ईश न नाशयेः उपात्तनयं मत्तनयमिति प्रार्थयामास पार्थिव इत्युक्तं भवति । 'वातेर्डिति' [उणादि.५८३] इतीत्वे पुगन्तगुणेऽसुन्ययादेशे वय इति भवति । वार्धकं प्राप्तस्येति यावत् । इत्येवं रीत्या उदितः । दशरथेनेति शेषः । वदतेः सम्प्रसारणे क्त इटि च उदित इति भवति । सन् स भार्गवः । हे दशरथ । ते तुभ्यम् । सुतत्रयं लक्ष्मणभरतशत्रुघ्नरूपं प्रददामि दास्ये । प्रेण विप्रेण रणकरणसरणरणिकेनाप्यतदाचरणपूर्वकं कृतम् इतरसुतवितरणमिति सूचयति । 'राघवम्' इति 'सुतत्रयम्' इत्यत्राप्यन्वेति । अनेनानेन [अन्वयेन] राम एक औरसः सुतत्रयं पालनाय क्षमापालनायको अन्यदीयं स्वीयत्वेन सञ्जग्राहेति शङ्का निराकृता भवति । । राघवं रामम् । रणे समरे । 'वशिरण्योः..'[वा.३.२.५८.सू] इत्यप् । 'युद्धमायोधनं रण' इत्यमरः । 'सङ्ख्याजन्यं रणो युद्धं समरश्च' इति रत्नमाला । स्थितं अवस्थितम् । द्रष्टुं समीक्षितुम् । इह एतत्समये । आगतः उपागतोऽस्मि इति राघवमित्यावर्तते । दशरथं प्रति, उवाचेति शेषः । अन्यथा 'स इत्थमुक्त्वा नृपतिम्' इत्यनुदितानुवादप्रसङ्गात् । सुतत्रयं कन्यात्रयवज्ज्ञेयम् । 'वयोगतस्य' इति सुतास्मछब्दाभ्यामप्यन्वेति । [१] वयोगतस्य सुतम् । वयोगतस्याहमित्यन्वयः । षष्ठी शेषे । सम्बन्धस्तु तादात्म्यरूपः । तेन वयोगतस्य वयसा पक्षिणा तार्क्ष्येण गतम् । भावे क्तः । गतिर्गमनं यस्य स वयोगतो गरुत्मत्तुरगो भगवांस्तस्य सुतं तदात्मकं त्वदपत्यम् । अहश्च वयोगतस्य भगवदात्मक इति अप्रमतिप्रवादतस्तव सुतं रणे स्थितं द्रष्टुमागतोऽस्मीति च आवृत्त्यान्वयः सुवचितो भवति । [२] सुतवयोगतप्रभुपदैः रामो मम बालो अहमशक्तः त्वं तु शक्ततम इति ते करुणैव शरणं मच्छिशुत्राणे नेतरत्कारणमिति सूचितं भवति । यद्वा रामो बालो न बलवानिति न वध्य अहं प्रवया इति विप्रवर राम रामो न वध्यः त्वमतिसमर्थ इति शिशुहिंसा न यशःसम्पत्सम्पादिकेति च न वध्य इति वधाकरणे कारणत्रयं वा सूचितमिति मन्तव्यम् । नच नच मदकृतचेतः?। षष्ठ्यभेद इति वादः इति वाच्यम् । 'आनन्दं ब्रह्मणो विद्वान्' [तै.ब्रह्मवल्ली] 'पश्य मे पार्थ रूपाणि' [गी.११.५] 'राहोः शिरः' इत्याद्यनेकप्रयोगात् सुयोगोऽभेदबोधः षष्ठ्यापीति ज्ञेयम् । [३] वयोगतस्य साक्षात्तार्क्ष्यगत्यात्मनो महात्मनो रामस्य रणे युद्धे राघवं लाघवं द्रष्टुमिहाहमागतोऽस्मि । स्थितं पुरतोऽवस्थितं सुतत्रयं ते प्रददामीति वान्वयः । रणेऽस्थितं अनुपक्रान्तसमितिसुतत्रयमिति वा ।

मत्स्यादिः' इति । मत्स्याद्याः परमात्मात्मकाः तदंशत्वात् दशस्यन्दननन्दनादिवत् इत्यनुमानेन मीनाद्या अमीनाद्यपूरुषाभिन्ना इति दाशरथिदृष्टान्तेन निदर्शयन् । तेन 'अजानतां राघवमादिपूरुषं समागतं ज्ञापयितुं निदर्शनैः' इत्यनेन अस्यार्थस्योक्तेः पुनः 'अभेदमज्ञेष्वपि दर्शयन् परम्' इति कुत इति शङ्का पराकृतेति ज्ञेयम् । पुरापदात् तनपि पुरातन इति भवति । पुरेषु नानाशरीरेषु अततीति पुरातनः । अततेर्युच्वा । पुरेषु श्वेतद्वीपानन्तासनादिष्वततीति वा । परं हरिपदेन वा अन्वेति । तेन च वायुवासवसहस्रांशवो व्यावर्तिताः । रघूत्तमं परं दर्शयन् सर्ववरं प्रदर्शयन् तस्य स्वस्य चैक्यं प्रदर्शयन्निति वा । यद्वा परमिति लुप्तोपमा । परं अमित्रमिव प्राह । 'स्पृधेव' इत्यत इवानुवृत्तिर्वा । हरिणा वातजातेन हरिभिः सुग्रीवादिवानरैर्वा रेषयति हिंसयति व्यंसकानिति हरिरेषो रामः दाशरथिः अहं भार्गवः । अहं भार्गवः हरिरेषः राघव इति । हरिरेषो दाशरथिरहं च पुरातनो नारायण इति वा अभेदं दर्शयन्प्राहेति वा । 'रिष हिंसायाम्' अस्मात् पुगन्तगुणेऽचि रेष इति भवति । यद्वा अज्ञेति मध्यमाधिकारिग्रहणम् । अन्यथा भगवद्रूपात्यन्ताभेदज्ञानाधिकारहीनान्यथाज्ञानिग्रहणे विरोधापातात् । अं भगवन्तं जानते ये त उत्तमास्तामरससम्भवभवादयस्तेषु परमभेदं दर्शयन् । अज्ञेषु मध्यमाधिकारिषु अभेदमात्रं प्रदर्शयन् । उत्तमेषु प्रदर्शिताभेदस्य परता नाम मुक्तिहेतुता । इतरेष्वभेदमात्रप्रकाशन-मीशरूपेषु स्वयोग्यानन्दानानन्दात्मकसृतिशब्दबोध्यमध्यममुक्तिसाधनमिति विवेकः । विस्तरतो मध्यमानां लिङ्गभङ्गप्राप्तिपूर्वकं आनन्दानानन्दरूपफलभुक्तिर्मुक्तिरुक्तास्मत्कृतनमकव्याख्यायामिति ततो मन्तव्यस्तत्प्रकार इति । अथवा अज्ञेष्विति तामसानामपि प्रग्रहः । न च विरोध इति वाच्यम् । उत्तमानां श्रीपतिरूपाभेदज्ञानं स्वरूपभूतमध्यमानां संसृतौ चलं स्वरूपभूतं तामसानां सौदामिनीवदति-चञ्चलं अस्वरूपभूतश्चेति विवेक इत्यविरोधः । मोदमुनिरिदमसूचयत् 'दर्शयन्' इत्यनेन । 'दर्शयन्' इत्यनेनापि अपिरन्वेति । तेन तामसदर्शनं गर्हयामास अमानमानस इति वा अवसेयम् ।।४३।।

**वरदराजीया–** इत्थं भृगूत्तमो हरिः नृपतिं दशरथमुक्त्वा निजां तनुं निजस्वरूपं रघूत्तमं श्रीराममाह । किं कुर्वन् अज्ञेषु अजानत्सु सज्जनेषु परं मुक्तिसाधनं अभेदं अवताराभेदं दर्शयन् तथा अहं एषोऽपि पुरातनो हरिरिति च दर्शयन्नाहेति पूर्वेण सम्बन्धः ।।४३।।

**जनार्दनीया–** इत्थं स हरिः भृगूत्तमः । नृपतिं प्रत्युक्त्वा । अहं एषोऽपि रामोऽपि पुरातनो हरिरिति । अज्ञेषु रामो हरिरित्यजानत्सु जनेषु । परं इन्द्रार्जुनवद्विशेषरहितमभेदं स्वस्य रामस्यावताराणामभेदं दर्शयन् ज्ञापयन् । निजां तनुं स्वस्वरूपं रघूत्तमं प्राह ।।४३।।

**चट्टी–** ।। **स इति** ।। इत्थं सः भृगूत्तमो हरिः नृपतिमुक्त्वा अज्ञेषु श्रीरामो हरिरिति अजानत्सु सज्जनेषु अहमेष रामोऽपि पुरातनो हरिरिति परं मुक्तिसाधनमभेदं दर्शयन् ज्ञापयन् निजां तनुं निजस्वरूपं रघूत्तमं श्रीरामं प्राप ।।४३।।

**अनन्तभट्टीया–** एषोऽपि रामोऽपि....* ।।४३-४४।।

**ताम्रपर्णीया–** परमभेदं केवलाभेदम् । यद्वक्ष्यति 'नितान्तमैक्यम्' इति । यद्वा परमुत्तममभेदमित्यर्थः । तज्ज्ञानस्य मोक्षहेतुत्वात् । यथोक्तं प्राक् 'विष्णोः स्वाभेदमेव च । ज्ञात्वा मुक्तिर्न चान्यथेति' । अहं एषोऽपि पुरातनो हरिरेवेति प्रकाशयन्नित्यर्थः ।।४३-४६।।[१]

**भारतश्री–** ।। **निजां तनुमिति** ।। निजां तनुं स्वांशम् । अभेदमपीति सम्बन्धः । ज्ञापयितुमित्यनेन समुच्चयः । परं अभेदं अत्यन्ताभेदम् । अहं एषोऽपि ।।४३।।

**गूढवाक्यार्थ–** परं अभेदं केवलमभेदम् । यद्वा परमुत्तमं तद्ज्ञानस्य मोक्षहेतुत्वात् । एषोऽपि रामोऽपि हरिः ।।४३।।

**शृणुष्व राम त्वमिहोदितं मया धनुर्द्वयं पूर्वमभून्महाद्भुतम् ।**
**उमापतिस्त्वेकमधारयत्ततो रमापतिश्चापरमुत्तमोत्तमम् ।।४४।।**

**सत्याभिनवीया–** तत्रैव शृणुष्व राम त्वमिहोदितं मया... इति श्लोके शृणुष्व राम त्वमिहोदितं मयेत्यस्य हे राम त्वम् इह मत्पुरोदेशे स्थित्वा मयोदितं शृणुष्वेत्यर्थः । एतेन इहेत्येतत् व्यर्थमिति दूषणं परास्तम् । स्थित्वेत्यध्याहारेण इह स्थित्वेत्यर्थं वक्तुं इहेत्युक्तमिति स्वीकरणात् ।।४४।।

**सत्यधर्मीया–** मुनिजनूः अवनिजनिजानिं प्रति प्राहेति प्रतिज्ञातं प्राक् तत् प्राज्यप्रतिपदिदानीं विशदयति– **शृणुष्वेत्यादिना** ।। हे राम । यद्वा उत्तरत्र 'यदीदमागृह्य' इति स्वकरपरिगृहीतशरासनगुणारोपणकरणं कर्षणश्च गुणरूपहरिस्वरूपताहेतुरिति विवक्षुः पुरा पुरारातिकोदण्डखण्डनपाण्डित्यायातायतयशाः रामः भवानिति पिनाकिपिनाकश्रीशशार्ङ्गसम्भूतिविभूतिविभूषितहरिशयकुशेशयसातिशयप्राप्तिपूर्वकं सर्वसुपर्वणां शर्वतो हरिसर्वोत्तमताज्ञानमुदभूदिति दितिजत्रिपुरहरपराजयतो 'विष्णुबलं हराद्वरम्' इत्यन्तेन प्रतिपिपादयिषुरधुना विधुधरधृतमधुधनुरुद्धवादि वदति जमदग्निजन्मेति सन्मानतीर्थः कथयति– **शृणुष्वेत्यादिना** ।। हे राम त्वं भवान् शृणुष्व शृणुतात् । भेदे एव कर्तृकर्मभावो दृष्टो न अभेदे इति कर्मव्यतिहारात् आत्मनेपदम् । किं केनोक्तमित्यतः स्वेनेत्याह– **उदितं मयेति** ।। मया कर्त्रा उदितं उक्तं वच इति शेषः । इह अस्यामवस्थायां एतत्समये वा । पूर्वं पुरा धनुर्द्वयं धनुषोः पिनाकशार्ङ्गधन्वोः द्वयं युग्मम् अभूदभवत् । विश्वकर्मनिर्मितमिति शेषः । यथोक्तं रामायणे– [वा.का.७५.११-२७]

---

१. अभेदमज्ञेष्वपि दर्शयन् परमित्यत्र 'अभेदपरत्वं नाम तथाज्ञानस्य मोक्षसाधनत्वम्' इति वेदाङ्गतीर्थीये । भेदासमानाधिकरणत्वं वा परत्वम् ।। ४३-४७ ।। इति हो पुस्तके अधिकः पाठः ।

'इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिपूजिते । दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ।।
अतिसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे । त्रिपुरघ्नं नरश्रेष्ठ भग्नं काकुत्स्थ या त्वया ।।
इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः । तदिदं वैष्णवं राम धनुः परपुरञ्जय ।।.....
ऋचीके भार्गवे प्रादाद्विष्णुः स न्यासमुत्तमम् । ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ।।
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ।... तदिदं वैष्णवं राम पितृपैतामहं महत् ।।
क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ।।' इति इत्यादि ।

नेतरशरासनसमानता तद्द्वयस्येत्याह– **महाद्भुतमिति** ।। महत् परिमाणतः पूज्यतया वा श्रेष्ठश्च तदद्भुतं भूतले भूतमात्रविचित्रीभूतम् । अदिति चित्रार्थकमव्ययम् । 'अदिभुवो डुतच्' इति डुतचि ह्रस्वे च भूधातोः अद्भुतमिति भवति । 'चित्रमद्भुतमाश्चर्यम्' इत्यमरः । महैरुत्सवैरद्भुतमिति वा । शङ्करश्रीकरकरालङ्करणं तदिति वदति– **उमापतिरिति** ।। तुना तु तद्धनुर्द्वयमध्य इति विशेषं सूचयति । उमापतिः पार्वतीपतिः । उरु उत्कृष्टा मा सम्पत् यस्य यया वा सा उमा । उं रुद्रं प्रति मेति निषेधं कृतवतीति वा । दक्षाध्वरगमनसमये उना रुद्रेण पत्या मा मा गच्छ दक्षदीक्षास्थानमिति निषेधो यां प्रतीति वा मा वामदेववामोरुस्तस्याः पतिर्भर्ता । 'उमा कात्यायनी' इत्यमरः । एकं धनुर्द्वयपदांशधनुः-पदस्य एकपदेनान्वयः । तथाच एकधनुरुमापतिरधारयद्दधार । धारयतेः स्वार्थणिजन्ताल्लङ् । तच्चापस्वरूपं निरूपयति– **अपरमिति** ।। परमुत्तमं न इत्यपरम् । कस्मादित्यतो अस्मादिति शृङ्गिग्राहकतया अवधिमभिधत्ते– **तत इति** ।। ततो भागवतधनुषः सकाशात् अपरमधमं धनुः अन्धकबाधको अदीधरदिति भावः । अपरमन्यदिति व्याख्याने एकशब्दो असरसार्थः स्यात् । तत इत्युभयत्रान्वेति । ततश्च ततः शैवादपरं इतरच्छरासनम् । रमापतिः । चो अधारयदिति समुच्चायकः । कीदृशं शैवात् कैशवं कार्मुकमित्यतो दर्शयति– **उत्तमोत्तममिति** ।। उत्तमात् तामरसासनशरासनात् उ उत्कृष्टं यच्छ्रीधनुः तत उत्तममित्युत्तमोत्तमम् । न च श्रियः कथं धनुर्धरता स्त्रीत्वादिति वाच्यम् । 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे' [ऋ.१०.१२५.६] इति श्रुतत्वात् । ततश्च रमा अपतिरिति वा आपतिरिति वा पतिरिति वा छेदः । अः पतिः परदेवता यस्य सोऽपतिर्वायुः यद्धनुरधारयत् तदुत्तमं ततो वातनाथधनुषः रमा यदधारयत् तत उत्तमो ततः श्रीधनुषोऽपि उत्तमं भागवतम् । रमापतिरिति व्यस्तं समस्तं च । तत आवृत्तिः । उत्तममित्युक्त्या अर्थपूर्तावपि यत्पुनः उत्तममिति वदतो महानन्दतीर्थस्य तरतमभावतो भागवतधनुष उत्तमताभिमता इति मन्तव्यम् । उ उत्तममिति छेदः । उत्तम उ उत्तम । परोवरमितिवत् उत्तमोत्तममिति ज्ञेयम् । उ सम्बुध्यर्थकमव्ययम् । हे उत्तमेत्यर्थः । अवतीत्युः । क्विप् । 'ज्वरत्वर' इति ऊठ् । 'ह्रस्वो नपुंसक' [३१८.कौ] इति वा समासोत्तरं 'इको ह्रस्व...' [९९९.कौ] इति वा ह्रस्वः । 'उ सम्बुद्धौ रुषोक्तौ च शिववाची त्वनव्ययम्' [विश्व.२प.३] । 'उ प्रश्ने च' इति हैमः ।

यद्वा उत्तमेति रामसम्बोधनम् । हे उत्तम श्रेष्ठराम । उत्तमं श्रेष्ठम् । अथवा एकमित्यध्याहृतवचन–पदेनान्वेति । तथाच एकमुदितं वचनं शृणुष्व । यद्यपि पिनाकिकार्मुकत उत्तमस्य सर्वोत्तमशरासनस्य धारणाद्युदाहरणं प्राचि च आचारणीयं तथापि तदपेक्षयौत्तम्यकथनसौकर्याय अवधितया त्रिनयनशरासन-धारणादि प्राक्प्राह महामतिरिति ज्ञेयम् । यद्वा धनुर्द्वयं पूर्वमभूत् तत्स्वरूपं निरूपयति– **एकमिति** ।। तत इति सप्तम्यन्तात्तसिः । ततस्तद्धनुर्द्वयमध्ये । एकं महाद्भुतं तद्भागवतं आजगवतः उत्तमम् । एकमित्यावर्तते । एकं त्रैम्बकम् । अपरं नीचम् । असारमिति यावत् । दाशरथे त्वया शैवं धनुर्भग्नं नैवमिदमिति रघूर्वधीरतामुत्पादयितुं आदावुदितमुमापतिधनुर्धारणादिकमिति वा मन्तव्यम् । तत इति रमापतिविशेषणं वा । ततो व्याप्तः रमापतिरुत्तमोत्तमं एकं धनुरधारयदिति वा । एकमन्यदिति वा । 'एके मुख्यान्यकेवला' इत्यमरः । अथवा इह राघवे त्वयि इह मयि च । रामत्वं रामता परस्परमैक्यमिति यावत् । परस्परमेकनामता । यतस्ततो मम तवापि च समाननामत्वाल्लोकदृष्ट्या चित्राङ्गनयेन विनोदावह आहव इति मयोदितं शृणुष्व इत्यन्वयो वा । हे अपर । न विद्यते पर उत्तमो अमित्रं वा यस्य तत्सम्बुद्धिः । हे मुत्तम आनन्दात्मकात्मयुक्तमुक्ता मुदः तदुत्तम राम । अपराऽभिन्ना मुदेषां मुक्तानां तदुत्तमेति वा । अथवा परमुदः सावधिकानन्दा अशेषजीवाः तेभ्य उत्तमो वा ।।४४।।

**वरदराजीया–** किमिति प्राहेति तत्र आह– **शृणुष्वेति** ।। हे राम त्वमिहावसरे मयोदितं शृणुष्व । तत्किमित्यपेक्षायामाह– **धनुर्द्वयमित्यादिना** ।। महच्च तदद्भुतं चेति वैष्णवं रौद्रं चेति धनुर्द्वयं पूर्वं पुराऽभूदित्यर्थः । तयोर्मध्य एकं रौद्रं धनुरुमापतिरधारयत् ततो रौद्रादपरं अन्यत् तु उत्तमेषु धनुषु उत्तमं धनुः रमापतिरधारयत् ।।४४।।

**जनार्दनीया–** प्राहेत्युक्तं विवृणोति– **शृणुष्वेत्यादिना** ।। ततः उमापतिधृतधनुषः । अपरमन्यत् तत उत्तमोत्तमं अपरं द्वितीयमिति वा ।।४४।।

**चट्टी–** ।। **शृणुष्वेति** ।। हे राम त्वमिहावसरे मयोदितं शृणुष्व । तत्किमित्यत आह– **धनुर्द्वयमित्यादिना** ।। महच्च तदद्भुतं चेति महाद्भुतं धनुर्द्वयं पूर्वमभूदासीत् । तयोर्मध्ये एकं धनुरुमापतिरधारयत् । ततः उमापतिधृतधनुषः अपरं अन्यदुत्तमेषूत्तमं धनुः रमापतिश्चाधारयत् ।।४४।।

**भारतश्री–** चशब्दादन्यत् धनुरासीत्तच्चतुर्मुखो दधार इति ज्ञायते । अयं विशेषः भारतादवगम्यते ।।४४।।

**गूढवाक्यार्थ–** समर्थितः प्रार्थितः ['समर्थितौ प्रार्थितौ' इति स्यात्] ।।४४।।

**तदा[1] तु लोकस्य निदर्शनार्थिभिः समर्थितौ तौ हरिशङ्करौ सुरैः ।**
**रणे स्थितौ वां प्रसमीक्षितुं वयं समर्थयामोऽत्र निदर्शनार्थिनः ।।४५।।**

**वादिराजीया–** लोकस्य निदर्शनार्थिभिः सुरै रणे स्थितौ वां प्रसमीक्षितुं निदर्शनार्थिनो वयं समर्थयाम इति समर्थिताविति योजना ।।४५-४६।।

**सत्यधर्मीया–** यदर्थं मधुमन्मथमथनधनुर्जन्म तन्महिमानमिव हरिहरकरधारणादिनिरूपितं एतर्हि समसमर्हितचर्यः आचार्यवर्यो भृगुवरो रघुवरं प्रति तदाहेत्याह– **तदेति** ।। तदा तदायुधधारणा– नन्तरसमये । लोकस्य ज्ञानिजनसमूहस्य । तुः असतां सामान्यतः सतां विशेषतो निदर्शनमिति विशेषसूचकः । ततश्च लोकस्य सतामसताञ्च । प्रार्थनाकर्तॄनाह– **सुरैरिति** ।। तामरससम्भवादिदेवैः । यथोदितं रामायणे– 'अभिप्रायं तु विज्ञाय देवतानां पितामह' [१.७५.१५] इत्यादि । ते च अमराः पामरकृपापारवश्येन विज्ञातभागवतसर्वोत्तमताका अपि विशेषविवित्सया वेदविचारनिरता इत्याह– **निदर्शनार्थिभिरिति** ।। प्रबलाबलतानिश्चयो निदर्शनम् । परापरतत्वज्ञानमिति वा । अस्यैव मुक्तिकारणत्वात् । तत् अर्थयन्त इति निदर्शनार्थिनः तैः । निदर्शनमर्थोऽस्त्येषामिति वा । लोकस्य पश्यतः सत इति वा । परार्थं स्वार्थं च नाकौकोभिरेकान्ते उमारमाकान्तौ नार्थितौ किन्तु सकललोकसाक्षिसिद्धमिदमिति च अनेन सूचितं भवति । कर्माह– **तौ हरिशंकराविति** ।। यौ प्रागधनुरधारयेतां तौ । तौ प्रसिद्धाविति वा । हरिश्च शङ्करश्चेत्येतौ । **समर्थितौ सम्यक्प्रार्थितौ** । समा

१. अत्र देवैः विष्णुः सर्वदेवोत्तम इति सर्वत्र प्रख्यापनाय विष्णुशिवयोः वीर्यपरीक्षा कृता । तत्प्रसङ्गस्तु दक्षयज्ञध्वंसानन्तरं प्रवर्तत इति उदाहरिष्यमाणवाक्यद्वयान्यथानुपपत्त्या कल्पनीयम् । तथाहि- 'दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् । विध्वस्य त्रिदशान् रोषात् सलीलमिदमब्रवीत् ।। यस्माद्भागार्थिनो भागं नाकल्पयत मे सुराः । ....ततो विमनसस्सर्वे देवा वै मुनिपुङ्गव ।। प्रसादयन्त देवेशं तेषां प्रीतोभवद्भवः । ...तदेतद्देवदेवस्य धनूरत्नं महात्मनः ।। न्यासभूतं तदा न्यस्तं अस्माकं पूर्वजे विभौ' इति षट्षष्टितमाध्याये दक्षयज्ञवधानन्तरं जनकाय धनुःप्रदानं श्रूयते । पुनः उत्तरत्र ''अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तथा । धनू रुद्रस्तु विदेहेषु महायशाः ।। देवराजस्य राजर्षेः ददौ हस्ते ससायकम् ।।'' इति पञ्चसप्ततितमाध्याये विष्णुना शिवपराजयानन्तरं शिवः क्रुद्धस्सन् स्वधनुः जनकाय ददौ इति ज्ञायते । अतः तद्विरोधपरिहाराय दक्षयज्ञवधानन्तरमेव विष्णुशिवयोः बलतारतम्यपरीक्षा सम्बभूवेति तदनन्तरमेव रुद्रः वरुणद्वारा स्वधनुः दापयामास इति सम्भाव्यते ।

**महेश्वरतीर्थास्तु-** 'तदयमत्र धनुरागतिक्रमः । पूर्वं देवतास्त्रिपुरवधाय विश्वकर्मनिर्मितं धनुर्महादेवाय ददुः, तद्दक्षयज्ञे विरोधे विष्णुजृम्भितं देवैः प्रार्थितो महादेवः देवरातस्य हस्ते दत्तवान् । ततः प्रभृति न्यासभावेन मैथिलेषु वर्तमानं तत् स्वत्वेन देवा वरुणेन यज्ञे जनकायादापयन्निति । परशुरामकार्मुकस्य वरुणहस्ते निक्षेपणं दिव्यं देवेष्वेवास्तु किं मनुष्येष्विति विशेषेण तस्य हस्ते निक्षेपणम् । स देवानामायुधानां निधायको दायकश्चेति'इत्याहुः ।

प्रार्थनाया अर्थवत्वमभिप्रैति । प्रार्थनाप्रकारमाविष्करोति– **रण इत्यादिना** ।। स्वेषां परेषाञ्च निदर्शनार्थिनः सन्तो वयं रणे समरे स्थितावविस्थितौ । वां युवाम् । 'स्थितौ' इति वचनेन यः समर्थतस्तत्पुरतो अपरस्यावस्थितिर्दुःशका का कथा समरकरणस्येति सूचयति । अत्र प्रपञ्चप्रपञ्चे । भवतोर्मध्ये वा । प्रसमीक्षितुं द्रष्टुम् । समर्थयामः प्रार्थयामः । प्रसम्भ्यां साक्षिप्रत्यक्षबहिःप्रत्यक्षविषयतां रणधीरताया अभिप्रैति । स्थिरीभूताविति वा । तौ । आनन्दे परमविषये । रणेऽपरविषये स्थिताविति वा । इदमप्यवादीद्वाल्मीकिः– 'तदा तु देवता सर्वा पृच्छन्ति स्म पितामहम् । शितिकण्ठस्य विष्णोश्च वलाबलपरीक्षया ।।' इत्यादि । यद्वा 'निदर्शनार्थिन' इति लोकविशेषणम् । निदर्शनार्थिनः सतः सता लोकस्य निदर्शनार्थिभिः सुरैश्च समर्थितौ इत्यन्वयः । एतेन निदर्शनार्थिभिरिति पुरोदीरणात् पुनः 'निदर्शनार्थिभिः' इत्युक्तिरयुक्तेति प्रत्युक्तं भवति । तुः अमरतदितरनिदर्शनतरतमतारूपविशेषसूचकः । अथवा लोकैः साकं नाकनिकेतौ अयं निदर्शनार्थिनौ निदर्शनस्य अयमनयोर्ज्यायान् अयं कनीयानिति निश्चयस्यार्थो निवृत्तिः, अभाव इति यावत्, येषामस्ति त इति । निदर्शनार्थिभिः सुरैः समर्थितौ । एतत्कालपर्यन्तं कोऽधिको लोके इति लोके वयश्च न जानीमोऽतः तदर्थे प्रार्थनेति तात्पर्यम् । निदर्शनार्थिनो लोकस्येति वा । निदर्शनार्थिन इत्यावर्तितं प्रथमान्तं वयमित्यस्य विशेषणम् । ततश्च निदर्शनार्थिनो लोकस्य निदर्शनार्थिनिश्चयाभाववतो नो वयं निदर्शनार्थिभिः सुरैरिति च अन्वयो ज्ञेयः ।।

**वरदराजीया–** तदा तस्मिन् समये लोकानां निदर्शनार्थिभिः निदर्शनं निर्णयः हरिः सर्वोत्तम इत्येवं रूपं तदर्थिभिः सुरैः तौ हरिशङ्करौ समर्थितौ प्रार्थितौ । किमिति । अत्र लोके निदर्शनार्थिनो निर्णयमपेक्षमाणाः वयं वां युवां रणे युद्धे स्थितौ प्रसमीक्षितुं समर्थयाम इति समर्थिताविति पूर्वेणान्वयः ।।४५।।

**जनार्दनीया–** तदा धनुषः सङ्ग्रहणकाले । लोकस्य सत्समूहस्य । निदर्शनं परतत्त्वज्ञानं अर्थिभिः सुरैः तौ हरिशङ्करौ समर्थितौ । किमिति ? अत्रेदानीं निदर्शनार्थिनः परतत्त्वज्ञानार्थिनः । वयं रणे स्थितौ वां प्रसमीक्षितुं प्रसमीक्षयितुं समर्थयामः सम्प्रार्थयामहे । 'प्रार्थयन्ति शयिनोत्थितुं प्रिया' इत्यादिकृदन्तात् तत्करोतीति णिचि च ज्ञेयः [नेयः] इति वृत्तिकृत् ।।४५।।

**चट्टी–** ।। **तदेति** ।। तदा तस्मिन् समये लोकस्य सत्समूहस्य निदर्शनं निर्णयः हरिः सर्वोत्तम इत्येवंरूपः तदर्थिभिः सुरैस्तौ हरिशङ्करौ समर्थितौ प्रार्थितौ । किमिति । अत्र लोके निदर्शनार्थिनो निर्णयमपेक्षमाणा वयं वां युवां रणे स्थितौ प्रसमीक्षितुं सम्प्रार्थयाम इति ।।४५।।

**अनन्तभट्टीया–** समर्थितौ । निदर्शनं तत्र स्थितम् । अर्थिता जिज्ञासिता... * निदर्श्यते तत्वं यैरिति निदर्शनैर्लिङ्गैः ।।४५।।

**भारतश्री–** तु एव ।।४५।।

**तदा[१] तु लोकस्य निदर्शनार्थिभिः समर्थितौ तौ हरिशङ्करौ सुरैः ।**
**रणे स्थितौ वां प्रसमीक्षितुं वयं समर्थयामोऽत्र निदर्शनार्थिनः ॥४५॥**

**वादिराजीया–** लोकस्य निदर्शनार्थिभिः सुरै रणे स्थितौ वां प्रसमीक्षितुं निदर्शनार्थिनो वयं समर्थयाम इति समर्थिताविति योजना ॥४५-४६॥

**सत्यधर्मीया–** यदर्थं मधुमन्मथमथनधनुर्जन्म तन्महिमानमिव हरिहरकरधारणादिनिरूपितं एतर्हि समसमर्हितचर्यः आचार्यवर्यो भृगुवरो रघुवरं प्रति तदाहेत्याह– **तदेति** ॥ तदा तदायुधधारणा–नन्तरसमये । लोकस्य ज्ञानिजनसमूहस्य । तुः असतां सामान्यतः सतां विशेषतो निदर्शनमिति विशेषसूचकः । ततश्च **लोकस्य सतामसताञ्च** । प्रार्थनाकर्तृनाह– **सुरैरिति** ॥ तामरससम्भवादिदेवैः । यथोदितं रामायणे– 'अभिप्रायं तु विज्ञाय देवतानां पितामह' [१.७५.१५] इत्यादि । ते च अमराः पामरकृपापारवश्येन विज्ञातभागवतसर्वोत्तमताका अपि विशेषविवित्सया वेदविचारनिरता इत्याह– **निदर्शनार्थिभिरिति** ॥ प्रबलाबलतानिश्चयो निदर्शनम् । परापरतत्वज्ञानमिति वा । अस्यैव मुक्तिकारणत्वात् । तत् अर्थयन्त इति निदर्शनार्थिनः तैः । निदर्शनमर्थोऽस्त्येषामिति वा । लोकस्य पश्यतः सत इति वा । परार्थं स्वार्थं च नाकौकोभिरेकान्ते उमारमाकान्तौ नार्थितौ किन्तु सकललोकसाक्षिसिद्धमिदमिति च अनेन सूचितं भवति । कर्माह– **तौ हरिशंकराविति** ॥ यौ प्राग्धनुरधारयेतां तौ । तौ प्रसिद्धाविति वा । हरिश्च शङ्करश्चेत्येतौ । **समर्थितौ** सम्यक्प्रार्थितौ । समा

१. अत्र देवैः विष्णुः सर्वदेवोत्तम इति सर्वत्र प्रख्यापनाय विष्णुशिवयोः वीर्यपरीक्षा कृता । तत्प्रसङ्गस्तु दक्षयज्ञध्वंसानन्तरं प्रवर्तत इति उदाहरिष्यमाणवाक्यद्वयान्यथानुपपत्त्या कल्पनीयम् । तथाहि- 'दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् । विध्वस्य त्रिदशान् रोषात् सलीलमिदमब्रवीत् ॥ यस्माद्भागार्थिनो भागं नाकल्पयत मे सुराः । ....ततो विमनसस्सर्वे देवा वै मुनिपुङ्गव ॥ प्रसादयन्त देवेशं तेषां प्रीतोभवद्भवः । ...तदेतद्देवदेवस्य धनूरत्नं महात्मनः ॥ न्यासभूतं तदा न्यस्तं अस्माकं पूर्वजे विभौ' इति षट्षष्टितमाध्याये दक्षयज्ञवधानन्तरं जनकाय धनुःप्रदानं श्रूयते । पुनः उत्तरत्र ''अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तथा । धनू रुद्रस्तु विदेहेषु महायशाः ॥ देवराजस्य राजर्षेः ददौ हस्ते ससायकम् ॥'' इति पञ्चसप्ततितमाध्याये विष्णुना शिवपराजयानन्तरं शिवः क्रुद्धस्सन् स्वधनुः जनकाय ददौ इति ज्ञायते । अतः तद्विरोधपरिहाराय दक्षयज्ञवधानन्तरमेव विष्णुशिवयोः बलतारतम्यपरीक्षा सम्बभूवेति तदनन्तरमेव रुद्रः वरुणद्वारा स्वधनुः दापयामास इति सम्भाव्यते ।

महेश्वरतीर्थास्तु- 'तदयमत्र धनुरागतिक्रमः । पूर्वं देवतास्त्रिपुरवधाय विश्वकर्मनिर्मितं धनुर्महादेवाय ददुः, तद्दक्षयज्ञे विरोधे विष्णुजृम्भितं देवैः प्रार्थितो महादेवः देवरातस्य हस्ते दत्तवान् । ततः प्रभृति न्यासभावेन मैथिलेषु वर्तमानं तत् स्वत्वेन देवा वरुणेन यज्ञे जनकायादापयन्निति । परशुरामकार्मुकस्य वरुणहस्ते निक्षेपणं दिव्यं देवेष्वेवास्तु किं मनुष्येष्विति विशेषेण तस्य हस्ते निक्षेपणम् । स देवानामायुधानां निधायको दायकश्चेति'इत्याहुः ।

प्रार्थनाया अर्थवत्वमभिप्रैति । प्रार्थनाप्रकारमाविष्करोति– **रण इत्यादिना** ।। स्वेषां परेषाञ्च निदर्शनार्थिनः सन्तो वयं रणे समरे स्थितावस्थितौ । वां युवाम् । 'स्थितौ' इति वचनेन यः समर्थतस्तत्पुरतो अपरस्यावस्थितिर्दुःशका का कथा समरकरणस्येति सूचयति । अत्र प्रपञ्चप्रपञ्चे । भवतोर्मध्ये वा । प्रसमीक्षितुं द्रष्टुम् । समर्थयामः प्रार्थयामः । प्रसम्भ्यां साक्षिप्रत्यक्षबहिःप्रत्यक्षविषयतां रणधीरताया अभिप्रैति । स्थिरीभूताविति वा । तौ । आनन्दे परमविषये । रणेऽपरविषये स्थिताविति वा । इदमप्यवादीद्वाल्मीकिः– 'तदा तु देवता सर्वा पृच्छन्ति स्म पितामहम् । शितिकण्ठस्य विष्णोश्च बलाबलपरीक्षया ।।' इत्यादि । यद्वा 'निदर्शनार्थिन' इति लोकविशेषणम् । निदर्शनार्थिनः सतः सता लोकस्य निदर्शनार्थिभिः सुरैश्च समर्थितौ इत्यन्वयः । एतेन निदर्शनार्थिभिरिति पुरोदीरणात् पुनः 'निदर्शनार्थिभिः' इत्युक्तिरयुक्तेति प्रत्युक्तं भवति । तुः अमरतदितरनिदर्शनतरतमतारूपविशेषसूचकः । अथवा लोकैः साकं नाकनिकेतौ अयं निदर्शनार्थिनौ निदर्शनस्य अयमनयोर्ज्यायान् अयं कनीयानिति निश्चयस्यार्थो निवृत्तिः, अभाव इति यावत्, येषामस्ति त इति । निदर्शनार्थिभिः सुरैः समर्थितौ । एतत्कालपर्यन्तं कोऽधिको लोके इति लोके वयश्च न जानीमोऽतः तदर्थे प्रार्थनेति तात्पर्यम् । निदर्शनार्थिनो लोकस्येति वा । निदर्शनार्थिन इत्यावर्तितं प्रथमान्तं वयमित्यस्य विशेषणम् । ततश्च निदर्शनार्थिनो लोकस्य निदर्शनार्थिनिश्चयाभाववतो नो वयं निदर्शनार्थिभिः सुरैरिति च अन्वयो ज्ञेयः ।।

**वरदराजीया–** तदा तस्मिन् समये लोकानां निदर्शनार्थिभिः निदर्शनं निर्णयः हरिः सर्वोत्तम इत्येवं रूपं तदर्थिभिः सुरैः तौ हरिशङ्करौ समर्थितौ प्रार्थितौ । किमिति । अत्र लोके निदर्शनार्थिनो निर्णयमपेक्षमाणाः वयं वां युवां रणे युद्धे स्थितौ प्रसमीक्षितुं समर्थयाम इति समर्थिताविति पूर्वेणान्वयः ।।४५।।

**जनार्दनीया–** तदा धनुषः सङ्ग्रहणकाले । लोकस्य सत्समूहस्य । निदर्शनं परतत्त्वज्ञानं अर्थिभिः सुरैः तौ हरिशङ्करौ समर्थितौ । किमिति ? अत्रेदानीं निदर्शनार्थिनः परतत्त्वज्ञानार्थिनः । वयं रणे स्थितौ वां प्रसमीक्षितुं प्रसमीक्षयितुं समर्थयामः सम्प्रार्थयामहे । 'प्रार्थयन्ति शयिनोत्थितुं प्रिया' इत्यादिकृदन्तात् तत्करोतीति णिचि च ज्ञेयः [नेयः] इति वृत्तिकृत् ।।४५।।

**चट्टी–** ।। **तदेति** ।। तदा तस्मिन् समये लोकस्य सत्समूहस्य निदर्शनं निर्णयः हरिः सर्वोत्तम इत्येवंरूपः तदर्थिभिः सुरैस्तौ हरिशङ्करौ समर्थितौ प्रार्थितौ । किमिति । अत्र लोके निदर्शनार्थिनो निर्णयमपेक्षमाणा वयं वां युवां रणे स्थितौ प्रसमीक्षितुं सम्प्रार्थयाम इति ।।४५।।

**अनन्तभट्टीया–** समर्थितौ । निदर्शनं तत्र स्थितम् । अर्थिता जिज्ञासिता...* निदर्श्यते तत्वं यैरिति निदर्शनैर्लिङ्गैः ।।४५।।

**भारतश्री–** तु एव ।।४५।।

**ततो हि युद्धाय रमेशशङ्करौ व्यवस्थितौ तौ धनुषी प्रगृह्य ।**
**यतोऽन्तरस्यैव नियामको हरिस्ततो हरोऽग्रेऽस्य शिलोपमोऽभूत् ।।४६।।**

**सत्यधर्मीया–** रणकरणे चतुर्मुखमुखाखिलनिलिम्पपालिप्रार्थितौ वासुदेवमहादेवौ समरामरौ किं समरमकुरुतां उत नेत्यतो युद्धसन्नद्धावभूतां प्रभूतभूतेशभूतेशाविति शंसति– **तत इति** ।। ततो देवप्रार्थनादेव । प्रार्थनानन्तरं वा । युद्धाय युद्धार्थम् । रमेशशङ्करौ रमेशोमेश्वरौ व्यवस्थितौ ओमिति देवान् प्रत्युक्त्वा रणार्थं धरिणौ व्यवस्थितावित्यर्थः । 'व्यवस्थितौ' इत्यनेन समानप्रतिपत्ति–त्वादुभयोरवस्थानमात्रं न तु समरसमारम्भ इति भावमावेदयति । आयोधने प्रायो भाव्यमुभाभ्यां ससाधनाभ्यामित्यतस्तदाह– **धनुषी इति** ।। प्रगृह्य गृहीत्वा । प्रेण सदा सदाशिवस्य वासुदेवस्य च धारणयोग्ये एव ते इति धारणगुणारोपणासनेषुसु अनायासतां द्योतयति । प्राचि ये च धनुर्द्वयमिति सूचिते त एवैत इति स्मारयितुं त इत्युक्तम् । ये विश्वकर्मनिर्मिते सुरैः स्वाभ्यां च दत्ते ते । हिना अस्यार्थस्य प्रमाणप्रसिद्धितां द्योतयति । अवस्थानफलमाह– **हर इति** ।। हर स्मरहरः । अस्य अशब्दवाच्यस्य एतस्य वा अग्रे पुरतः हुङ्कारमात्रेण हरिकृतेन शिलोपमः शिलयोपमा साम्यं यस्य स तथा । उपलतुलः निर्व्यापार अभूत् । यथोक्तं रामायणे– 'तदेव जृम्भितं शैवं धनुर्भीमपराक्रमम् । हुङ्कारेण महादेवस्स्तम्भितोऽथ त्रिलोचनः ।।' इत्यादि । [१.७५.१८]

अगेर्गत्यर्थस्य नलोपे 'ऋज्रेन्द्राग्र...' [उणादि.१९६] इति च रनि [रकि] भवत्यग्रमिति । शिवशिलीभावे धनुर्जडीभावः स्वत एव सिद्ध इति पृथगत्र स नोक्त इति ज्ञेयम् । कस्माद्भस्मभृत एतादृशी दशेत्यतो हेतुमाह– **यत इति** ।। येन कारणेन । अस्य रुद्रस्य अन्तः हृदयाकाशपुण्डरीककोशे नियामकः प्रेरकः सन् , एष हरिरास्त इति शेषः । ततस्तेन हेतुना । अयं त्रिनयनो नो नियमयति सर्वं किन्तु मन एकलम् । हरिस्तु ततो व्याप्तः सन् शर्वादिसर्वं प्रेरयतीति युक्तमुक्तमिति वा वदति– **यत इति** ।। यतो यस्मादेषः दोषेश्वरशेखरः । अन्तः अस्य मनस एव । एवेत्युत्तरत आकृष्यते । 'अवधौ अवकाशे चाप्यन्तर्धौ भेदमध्ययोः । परिधाने च तादर्थ्ये विनार्थबहिरर्थयोः ।। आत्मीयानात्मीययोश्छिद्रे प्रस्तावेऽन्तरमात्मनी ।।' इति रत्नमाला । नियामकः प्रेरकः सन् । रमेश्वरस्तु ततो व्याप्तः सन् । अस्य तामरससम्भवभवसीरधरसुनासीरपुष्पधन्वपुष्यवन्तमनुष्यधर्मधर्मराजाद्यजरमुनिमनुमनुजयवसावसानप्रपञ्चस्य नियामक इति तत्पुरतः पुरतापकारिणो उपलीभवनमुचितमिति भावः । यतो हरिर्नियामकः सर्वप्रेरकः ततो हेतोः अन्तरस्यां तत्स्थित्वा रमणकृतोऽस्य हरेरग्र एष रुद्रः शिलोपमोऽभूदिति । 'अन्तस्स्थित्वा रमणकृदन्तरः समुदाहृतः' [अनु.१.२.अन्तराधिकरण] इति वचनात् । अन्तशब्दोपपदाद्रमेर्यमन्ताड्ः । एषः नियामकः ततो व्याप्तो हरिरस्य महादेवादेर्जगतोऽग्रे प्रलयावसानसमये यतोः ततः

प्रपञ्चप्रलयकारिताहेतोर्हरेः पुरतः शिलोपमोऽभूदिति वा । 'ब्रह्मचर्म शिरःपट्टी दिक्पालोर्ध्वाङ्गभूषणः' [पद्म.उ.का.वासुदेवसहस्रनाम] इति वचनात् । अथवा यतो निया नियति प्रेरयति सर्वानिति नीः तेन निया सर्वप्रेरकेण आमकः आ सम्यङ् मा सम्पत् ज्ञानं वां स आमः स एवामकः । ततोऽस्य हरेरग्रे हरः शिलोपमोऽभूत् । यस्माद्भगवतैव भवस्य ज्ञानादि ततस्तत्पुरतो अस्य पुरतोऽत्रापि तस्योपलीभवनं उप लीलामात्रेण युक्तमिति भावः । यद्वा निया हरिणा शिलोपमः कृत इति शेषः । अभूत् । यतो हरिरमको गमक इति ततोऽस्य अग्रे भवशिलीभवनं समुचितमिति भाव इति वा । अमेर्गत्यर्थात् ण्वुलि 'युवोरनाकौ' इत्यकि अमक इति भवति । यतो हरः शिलोपमो अस्य हरेरग्रेभूत्ततो अस्य प्रपञ्चस्य अन्तः मध्ये अभूत्तेन ततोऽप्याप्तो हरिर्नियामकः स्वतन्त्रोऽभूदिति वा । यस्मात् त्रिनयनो नयनोन्मेषणमात्रेण निस्त्राणोऽभवत् ततो अस्वतन्त्रवर्गे अभवत् । हरिस्तु स्वतन्त्र इति भावः ।।४६।।

**वरदराजीया–** ततः प्रार्थनानन्तरं रमेशशङ्करौ हरिहरौ ते पूर्वोक्ते धनुषी स्वं स्वं धनुः प्रगृह्य युद्धाय रणाय व्यवस्थितौ जातावित्यर्थः । यतः कारणादेषः हरिः हरस्य रुद्रस्यान्तः हृदयस्य नियामकः ततः कारणादस्य हरेरग्रे पुरतो हरो रुद्रः शिलोपमः पाषाणवच्चेष्टारहितोऽभूदित्यर्थः । अन्तर्नियामकस्य हरेः प्रतिविम्बत्वेन बहिःस्थितत्वात् नियमनोदासीनत्वेन चेष्टकाभावात् स्वतः चेष्टाविरहाच्चेति भावः ।।

**जनार्दनीया–** ततः प्रार्थनानन्तरम् । ते पिनाकशार्ङ्गसञ्ज्ञे । एषो हरिः । अस्य हरस्य । अन्तः हृत्कमले नियामकः प्रेरको यतः ततः हरः अस्य हरेरग्रे शिलया पाषाणेन उपमः सदृशोऽभूत् । व्यापाराभावाज्जडवदभूदिति भावः ।।४६।।

**चट्टी–** ।। **तत इति** ।। ततः प्रार्थनानन्तरं रमेशशङ्करौ ते पूर्वोक्तधनुषी स्वं स्वं धनुः प्रगृह्य युद्धाय व्यवस्थितौ । एषः हरिरस्यान्तः हृदये नियामकः प्रेरको यतः ततो हरः अस्य हरेरग्रे पुरतः शिला उपमा यस्य सः पाषाणसदृशोऽभूत् । व्यापाराभावादिति भावः ।।४६।।

**अनन्तभट्टीया–** यदीरणेन...* इत्यादीनामपि ईरणमस्तीति सूचितम् । सर्वतः परं हरेर्वलं हरात्परमिति...*।। ...नियामकः । अस्य विष्णोरग्रे ।।४६।।

**भारतश्री–** व्यवस्थितौ हीत्यन्वयः । अन्तरस्य अन्तःकरणाभिमानिनो रुद्रस्य । 'रुद्रोऽन्तःकरणात्मकः' इत्युक्तेः । 'अन्तरस्य मनसः' इति केचित् ।।४६।।

**गूढवाक्यार्थ–** ।। **यतोऽन्तरस्येति** ।। अन्तः अस्येति पदच्छेदः ।।४६।।

**शशाक नैवाथ यदाभिवीक्षितुं प्रस्पन्दितुं वा कुत एव योद्धुम् ।**
**शिवस्तदा देवगणास्समस्ताः शशंसुरुच्चैर्जगतो हरेर्बलम् ।।४७।।**

**व्यासतीर्थीया–** अथ कुत एवेति सम्बन्धः ।।४७।।

**वेदाङ्गतीर्थीया–** हरेर्बलं उच्चैः हरबलादुत्तमं जगतः शशंसुः ।।४७।।

**वादिराजीया–** स्वेषां पूर्वमेव निर्णयवत्त्वाज्जगतः शशंसुरित्युक्तम् । एतत्कथाश्रवणे सति योग्यसर्वजगतोऽपि संशयपरिहाराच्छशंसुरिव शशंसुः । उच्चैरुच्चम् । प्रत्यक्षेणैव हरिबलोच्चतायाः प्रदर्शितत्वात् । अर्थद्वयसूचनाय उच्चैरित्यव्ययपदप्रयोगः ।।४७-४९।।

**सत्याभिनवीया–** तत्रैव शशाक नैवाथ यदाऽभिवीक्षितुं... इति श्लोकः । तस्यार्थः । शिवः अभिवीक्षितुं प्रस्पन्दितुं वा नैव शशाक । योद्धुं शशाकेति कुतः । न कुतोऽपीति यदा निर्णयः जातः तदा समस्ता देवगणाः हरेः बलं जगतः उत्तममिति उच्चैः शशंसुरिति । एतेन योद्धुं कुत एव शशाकेत्येतत् अनन्वितमिति दूषणं परास्तम् । इति निर्णयो जातः । पदानां शेषेणान्वयस्योक्तत्वात् ।।४७।।

**सत्यधर्मीया–** इदानीं भवपराभवं शिलोपममिति निरूपितं विविच्य निरूपयन् सुमनोमनोभिप्रेतं इदमुपायतोऽपायनियामकः सर्वस्येति पार्वतीपतेः सर्वं कार्यं सम्पन्नमित्याह– **शशाकेति** ।। यदा यस्मिन्समये । शिवः शिवाधवः । अथ धनुरुज्जृम्भणानन्तरं अभिवीक्षितुं समीप उपस्थितं द्रष्टुं नैव शशाक । प्रस्पन्दितुं किञ्चिचलितुं नैव शशाक शक्तो नैवाभूत् । तदा कुत एव कस्माद्धेतोरेव योद्धुं युद्धं कर्तुं न शशाकेति वक्तव्यम् । नैव वक्तव्यम् । आभ्यां अनभिवीक्षणचलनाभावाभ्यां अमरसमर्थितसमरासमर्थतायाः निश्चितत्वात् तदसामर्थ्यं कण्ठतो न वक्तव्यमिति भावः । कुत इति चावर्तितं प्रस्पन्दितुं पदेनान्वेति । सप्तम्यन्तात् तसिः । कुतः कौ भूमौ प्रस्पन्दितुं न शशाकेत्यर्थः । पुरपराभवकृत् दवीयःपदवीस्थितपदार्थविलोकने केवलं निरालम्ब इत्येव न किन्तु पुरतः स्थितं वस्तु द्रष्टुमपि न शशाकेत्यभिना अभिप्रैति । प्राणभृन्मात्रनिष्ठा चेष्टा सापि पिनाकिनि नाकिनि च येन नोपलब्धेति प्रः प्राह । न केवलं विलोकयितुं न शशाक शङ्करः किन्तु प्रस्पन्दितुं न शशाकेति समुच्चायको वाशब्दः । उमेशवद्रमेशोऽपि चेत् ईदृशः समः समाधिरिति पुनरमरमनोलषितार्थासिद्धिरेवेत्यतो नैवैतादृशो हरिरित्याह– **नेति** ।। यत् उमाधवदशेदृशी तदोच्चैर्ना उत्तमपुमान् माधवः अभिवीक्षितुं पुरतोऽवस्थितं स्थाणुमिव समवेतमतीतमनागतं च द्रष्टुं शशाक योद्धुं शशाकेति कुत एव वक्तव्यम् । स्वत सिद्ध एवार्थे वचनमनुचितमिति भावः । इतरप्रेरणामन्तरेण भगवतो जगदाजगवभृदवलोकन–चलनयोः शक्तियुक्तताभिप्रायकौ अभिप्रौ ज्ञेयौ । शिवो भवः । तदा तस्मिन् समये समस्ताः सर्वे देवगणाः नाकौकोनिकायाः । 'समस्ता देवगणा' इत्यनेन ब्राह्ममारुतशैवशेषेन्द्रादिगणाः इति सर्वे

सुपर्वाणोऽत्र ग्राह्याः । देवगणाः पृथक् । समस्ता इतरे चेति वा । देवगन्धर्वेतराश्चेति तदर्थः । अथवा प्रमथनाथकथाचेदियं का कथा तदितरेषां सुमनसामिति वदति– **देवगणाः समस्ता इति** ।। इतरे देवगणाः समस्ता सकैमुत्येन निरस्ताः । निरासकानाह– **उच्चैरिति** ।। उच्चैर्भगवदवगमसहितैः श्रेष्ठैः निराकृताः सन्तः । समाऽसमत्वेन समाशङ्कितशङ्करोऽकिञ्चित्करोऽभूत् तदा तदधमामरनिरासस्य व्याप्यव्याप्यस्य सुतरां व्याप्यत्वमितिवत् न्यायायाततां सूचयति । जगतोऽभिपश्यतः सतो हरेर्बलमुच्चैरिति तुष्टुवुः, हरबलादिति शेषः । प्राकरणिकत्वात् तदुपस्थितिरिति वा । जगतो रमातामरससम्भवादेरिति व्याख्याने अयं रमाद्युत्तमो रुद्रोत्तमत्वादिति हेतुहेतुमद्भावो वाच्यः । स च विरुद्ध इत्येव न प्रत्युत वैपरीत्यमेवोचितं इति जगतोऽभिपश्यत इति व्याख्यातम् । रमाद्युत्तमता प्रागेव मता मतान्तरस्थैः शङ्करोत्तमतामात्रमाशङ्कितमिति तन्निरासे श्रीवत्साङ्कस्य सर्वोत्तमता सेत्स्यतीति जगतो रमादेरिति व्याख्यानं सम्भवतीति वा ज्ञेयम् । अथवा जगत उच्चैरुत्तमतया समाशङ्कितात् शङ्करात्, उपलक्षणया बलग्रहः । रौद्राद् बलाद्धरेर्बलं शशंसुः । उच्चैरित्यव्ययं यथासम्भवं भवपदेन अन्वेति । 'शक् शक्तौ' लिट् । अभिवीक्षितुमित्यादिकं तुमुलन्तम् । शशंसुरिति शंसेर्लिटि रूपम् । तदात् तेन भगवता तति नित्यं गच्छति यतोऽतः तदात्, तन्नियम्य इति यावत् । अवधारणेन अनन्यनियम्यभगवत्प्रेर्यस्य आर्यवर्यस्य कमलाकमलासनासुप्रवरतद्रमणीरूपामुख्यनियामकवतापि इतरोत्तरनियामकवतां व्यवच्छिनति । ततश्च तदा देवतन्मात्रमुख्यनियामकवानेवेत्यर्थः । गणाः, देवानामिति शेषः । वैधेयादिगणाः समस्ताश्शशंसुरिति वा । अभिवीक्षितुं प्रस्पन्दितुं न शशाकेति च उभयेन्द्रियव्यापारशून्यः शूलीति ज्ञेयम् । एवमरचितसमरः स्मरहरो अशक्ततरः प्रस्तरसम इति वदन् वदंश्च शिव इत्युपाहसदपारकृप इति ज्ञेयम् । जगतो जङ्गममात्रस्य । हरेरिन्द्रस्य । बलं स्वावरजगतो बलदो बलदोच्छेदक इति भावः । तस्य हरेरिन्द्रस्य शिवः रुद्रः वलं बलदः । अस्यानुवृत्तिः । अस्य रुद्रस्य । उच्चैः जगतो मुख्यप्राणस्य तस्माद्वा बलम् । तस्य उच्चैर्जगतो मुख्यप्राणस्य, उपलक्षणया वाणीतन्महिलादिपरिग्रहः । हरेः श्रीनारायणस्य बलं तन्मात्रोपजीवी पवनावक इति भावः । ईशकोटिनिवेशाद्धरिपदादेव मुकुन्दसुन्दर्या लाभः । एवमावृत्त्या अन्वये 'बलमिन्द्रस्य गिरिशो गिरिशस्य बलं मरुत् । हरिस्तस्य बलं साक्षान्न हरेर्बलमन्यतः ।।' इति मानार्थसङ्ग्रहो भवतीति ज्ञेयम् । इमञ्च अर्थमसूचयद्विचक्षणो हरिबलादिपदेनेति मन्तव्यम् । यदा हरेर्बलं उच्चैः श्रेष्ठं तदा जगतः शर्वादिः । शिवो मोक्षः हरेरेव भवतीति शशंसुरिति वा । शिवयतीति तत्करोतीति ण्यन्तात् पचाद्यचि अर्श आद्यचि वा शिव इति भवति । 'शिवो मोक्षे महादेवे कीलकग्रहयोगयोः । बालके गुग्गुले वेदे पुण्डरीकद्रुमेऽपि च ।। सुखे क्षेमे जले क्लीबं.... ।।' इति नामनिधानम् [मेदिनी.वद्विकम्.२६] ।।४७।।

**वरदराजीया–** सर्वेन्द्रियव्यापाररहितस्य युद्धकरणं दूरोत्सारितमित्याह– **शशाकेति** ।। शिवो यदा अभिवीक्षितुं प्रस्पन्दितुं प्रस्पन्दादिचेष्टां कर्तुं वा न शशाक न शक्तोऽभूत् तदा योद्धुं कुत एव शक्तः न कुतोऽपीत्यर्थः । अभिवीक्षितुं प्रस्पन्दितुमित्यनेन ज्ञानेन्द्रियकर्मेन्द्रियव्यापारमात्रं क्रमेण उपलक्षयति । एतावतैव निर्णयो जात इत्याह– **तदेति** ।। तदा तस्यामवस्थायां समस्ताः सर्वे देवगणाः जगतो लोकात् हरेर्बलं उच्चैः शशंसुः कीर्तितवन्तः ।।४७।।

**जनार्दनीया–** अथ जडत्वं प्राप्य अनन्तरं शिवः अभिवीक्षयितुं द्रष्टुं प्रस्पदिन्तुं सञ्चलितुं आभ्यां ज्ञानकर्मेन्द्रियव्यापारः उपलक्ष्यते । तदा नैव शशाक समर्थो न आस । योद्धुं कुत एव समर्थः ? न कुत एव इत्यर्थः । तदा तस्मिन् समये जगतः रमादेः सकाशात् हरेः बलं उत्तममिति उच्चैः शशंसुः ।।४७।।

**चट्टी–** सर्वेन्द्रियव्यापाररहितस्य युद्धकरणं दूरोत्सारितमित्याह– **शशाकेति** ।। अथानन्तरं शिवः अभिवीक्षितुं द्रष्टुं प्रस्पन्दितुं चलितुम् । आभ्यां ज्ञानकर्मेन्द्रियव्यापार उपलक्ष्यते । यदा नैव शशाक समर्थो नास । योद्धुं कुत एव समर्थः । न कुत एवेत्यर्थः । तदा तस्मिन् समये समस्ताः सर्वे देवगणाः जगतो लोकस्य हरेर्बलमुच्चैरुत्तममिति ते शशंसुः कीर्तितवन्तः ।।४७।।

**अनन्तभट्टीया–** जगतः ब्रह्मादिसर्वजगतः । उच्चैः स्पष्टम् । *....शशंसुः ।।४७-४९।।

**ताम्रपर्णीया–** शशंसुः हरेर्बलं जगतः उच्चैः उत्तमत्वेन शशंसुरित्यर्थः ।।४७।।

**भारतश्री–** जगतः पुरः । जगदर्थं किल समर्थयामासुः ।।४७।।

**गूढवाक्यार्थ–** जगतो लोकस्य अर्थे शशंसुः जगतः उच्चैः अधिकत्वेन शशंसुरिति वा ।।४७।।

**यदीरणेनैव विनैष शङ्करः शशाक न प्रश्वसितुं च केवलम् ।**
**किमत्र वक्तव्यमतो हरेर्बलं हरात्परं सर्वत एव चेति ।।४८।।**

**व्यासतीर्थीया–** हरात् हरबलात् । सर्वतः सर्वेषां बलात् ।।४८-४९।।

**वेदाङ्गतीर्थीया–** पूर्वश्लोकोक्तं विविच्याह– **यदीरणेनेत्यादिना** ।।४८।।

**सत्याभिनवीया–** तदनन्तरमेव यदीरणेनैव..... इति श्लोकः । तस्यार्थः । एषः शङ्करः यतः यदीरणेन विना प्रश्वसितुं च प्रश्वसितुमपि नैव शशाक, अतो वा अत्र अस्य हरेः सर्वसंहारकस्य विष्णोः बलं हरात् हरबलात् केवलम् अतिशयेन परं उत्तमं सर्वतश्च रुद्राधमेन्द्रादिसर्वबलादपि अतिशयेन उत्तमं एव इति किं वक्तव्यमिति । एतेन अत्रेत्येतत् व्यर्थमिति दूषणं निरस्तम् । अत्रेत्यस्य अस्येत्यर्थकत्वमङ्गीकृत्य विष्णोः प्रमाणप्रमितत्वं वक्तुं अत्रेत्युक्तमित्यभ्युपगमात् । एतेनैव प्रश्वसितुं न

शशाकेत्युक्त्या प्रकर्षेण श्वसितुमेव न शशाक, अप्रकर्षेण श्वसितुं शशाकेति प्रतीयते । तदनुपपन्नम् । प्रमाणविरुद्धत्वादिति चोद्यं प्रत्युक्तम् । प्रेत्यस्य श्वसितुमित्यनेनान्वयं अङ्गीकृत्य 'अ-क-य-प्र-वि-सं-भूम-स-ख-हाः विष्णुवाचकाः' [बृ.भा.अन्तर्यामिब्राह्मण] इति वचनात् विष्णुवाचकत्वमभ्युपेत्य बलमित्यनेनान्वय इत्यभ्युपगमात् । एतेनैव यदीरणेन विना श्वसितुमपि न शशाकेत्यनेनैव पूर्णत्वात् केवलमित्येतत् व्यर्थमिति दूषणं परिहृतम् । विष्णुबलस्य अतिशयेन परत्वं वक्तुं केवलमित्युक्तं इत्यभ्युपगमात् । एतेनैव यतः ईरणेन विना शंसितुं न शशाक, अतः विष्णोर्बलं हरात् सर्वतश्च वरं इत्यनेनैव पूर्णत्वात् किं वक्तव्यमित्येतत् व्यर्थमिति दूषणं परास्तम् । कैमुत्यन्यायेन सर्वतः परत्वं वक्तुं किं वक्तव्यमिति स्वीकरणात् ।।४८।।

**सत्यधर्मीया**– शंसनप्रकारं प्रचुरान्तरः प्रकाशयति– **यदित्यादिना** ।। यस्य भगवतः । येषां मुकुन्दे इन्दीवरमन्दिरेन्दीवरासनासुनायकादिकानामीरणेन प्रेरणया विनैव, प्रेरणां त्यक्त्वा इति यावत् । एषः शङ्करः । 'पृथग्विना' इति विनायोग ईरणेनेति तृतीया ज्ञेया । केवलं अत्यन्तम् । प्रश्वसितुं श्वासविसर्जनोपार्जनार्थमपि न शशाक शक्तो नाभूत् । केवलेन श्वासमात्रविसर्जनासुशकः शङ्करः का कथा धनुर्धारणादेस्तदेति सूचयति । चेन अभिवीक्षितुमिति समुच्चीयते । अथवा वाय्वादिसमुच्चये चः । यद्यस्मात्कारणाद् ई रमा हरेरीरणेन विना प्रश्वासिंतु नैव शशाक । याः रमाया ईरणेन । सवर्णदीर्घः । प्रेरणया विना । हरेः मातरिश्वनः प्रश्वसितुं च श्वासोच्छ्वासोत्सर्गार्थमपि बलं नैव । ईरणेन मातरिश्वना विना एषः शङ्करः प्रश्वसितुं न शशाक । प्रेरणेति स्त्रीलिङ्गप्रयोगं विना यदीरणेति समीरयन्नियतमर्थ-माचार्योऽसूचयदिति मन्तव्यम् । अन्यथा 'सर्वत एव च' इतीति वक्ष्यमाणमकारणकं स्यात् । यद्वा यस्य वायोरीरणे प्रेरणायां सत्यां एव विना गरुडेन सह । अनेन उपलक्ष्यते तत्तु एककुण्डलः । प्रश्वसितुं शशाक नेति न केवलं किन्तु तत्प्रेरणां विना न शशाकैव । अत्रास्यामवस्थायां हरेर्बलं पराक्रमः हरादिति तद्बलग्रहः । उमाधवबलात् माधवबलं परमुत्तमिति किं वक्तव्यं न वक्तव्यमेव । प्रागेव सिद्धार्थे वचनानपेक्षणात् । प्रतिपक्षत्वेन त्र्यक्षस्य तदुत्तमतावगममात्रत इतरोत्तरता स्वत एव ज्ञाता भवतीत्याह– **सर्वत एव चेति** ।। सर्वत एव सर्वस्मात् इतरस्माच्च परमिति किं वक्तव्यमिति शशंसुरिति सम्बन्धः । यद्वा यद्यत ईरणेन वाग्व्यवहारेण सह विना परमात्मनैव प्रश्वसितुं न शशाक । यथा श्वासोत्सर्जनासुशकः स पुरासुरहरो हरः परासुवदभवत् तथा निर्वचनोऽपि भवोऽभवदिति । अत एतद्धेतोः । अतः परमात्मनः सकाशात् । 'सर्वत' इति षष्ठ्यन्तात्तसिः । सर्वस्येति तदर्थः । यद्वा प्रथमान्तात्तसिः । अतो भवान् । बलमिति वा । अत्रैवं स्थितेऽर्थे हरात् परमिति किं वक्तव्यमित्यर्थः । अथवा हराद्धरबलाद् हरेर्बलं केवलम् । अन्यबलनिरपेक्षमिति । अत्र स्थाणौ निस्त्राणतया स्थाणुसमे सति सर्वत एव सर्वप्रकारेणैव हरात्परमिति किं वक्तव्यमिति शशंसुः । अथवा किं वक्तव्यमिति अतो हेतोः

केवलम् । जगन्मुख्यं हरिमिति यावत् । 'केवलो निर्गुणश्च' इति श्रुतेः । हरात् परमुत्तमं शशंसुः । हे अत्र वक्तव्येति शिवसम्बोधनं वा । त्रायते पालयतीति त्रः अत्रो यस्य सो अत्रः । अत्र इति वक्तव्यो वाच्यस्तत्सम्बुद्धिः । 'त्रैङ् पालने' अस्मात् 'आदेच...' [२३७०.कौ] इत्यात्वे 'आतोऽनुपसर्गे क' इति के अत्रेति रूपम् । अस्मत्सन्देहस्य नष्टत्वाद्धरिपरिरक्षित इति त्वं वाच्य एवेति भावः । सर्वतः । सर्वस्मिन्नस्मदादिप्रपञ्चे शङ्करस्त्वमतस्सम्मतः अस्मत्सम एव नास्मत्त उत्तम इति भावः । यद्वा ईरणेन रमाप्रेरकेण श्रीनारायणेन विना सर्वतः सर्वत्र के देवा वा मानवा बलं न केऽपीत्यर्थः । वबयोरभेदादेवमुक्तिः । अत इति हेतोर्हरेर्बलं हरबलादेव परमुत्तममिति न किं नाम सर्वतः सर्वस्मादुत्तमं शशंसुरिति वा । यद्वा ई रमा यद्यतः के स्वसुखविषये बलं वरम् । रलयोर्लळयोश्चैकत्वस्मरणात्, स्वोत्तमं पतिमिति यावत् । विना प्रश्वसितुं अपि न शशाक न शक्ताभूत् । तस्माच्छङ्करः रणेन युद्धेन सह प्रश्वसितुं न शशाकेति किं वक्तव्यमित्यन्वयः । साक्षाल्लक्ष्म्यपि स्वाध्यक्षकृपाकटाक्षेक्षणतो विना किञ्चिदुदश्वयितुं न क्षमा तदा का कथा तदतिनियम्यस्य भवस्येति भावः । यद्वा यदि यदा एषः रुद्रः शं सुखं विना केवलमत्यन्तं प्रश्वसितुं च न शशाक । अत्रैवं समये करो रुद्रहस्तः अस्यापत्यं इः उपलक्षणया सर्वदेवग्रहः । ब्रह्मादिदेवप्रार्थितश्चासौ रणो युद्धः तस्मिन् न शशाकेति किं वक्तव्यमित्यर्थः । यथाह महामुनिः–'अभिप्रायं तु विज्ञाय देवतानां पितामहः । विरोधं जनयामास....।।' इति । [बा.का.७५.१५] 'ई विधिस्मरौ' इति रत्नमाला । हे शशाकेति शिवसम्बोधनम् । शशेन अतिसुखात्मकेन श्रीशेन अकं दुखं यस्य स तथा । 'ज्ञानज्ञानः सुखसुखः स विष्णुः परमो मतः [परमोऽक्षरः]' [गी.भा.२.७२] इति भगवदुक्तेः । कंशंशब्दवत् कशशब्दावपिः सुखवाचकौ ज्ञेयौ । एषः रणे स्थिताविति प्रसक्तो रणः सर्वतः शर्वस्य तव शङ्करः सुखकरः । करोति इति करः शं सुखस्य करः शङ्करः । प्रश्वसितुमपि बलं नेति, नैवाभूदिति शेषः । 'यदीरणेन विना' इत्यत्राप्यन्वेति । 'षर्व हिंसायाम्' 'षर्व गतौ' इत्यतो वा वबयोरभेदात् पचाद्यचि धात्वादेः षस्य से सर्वोऽपि । 'सर्वस्तु भगवान् शम्भुः शर्वः कालञ्जरः शिव' इति नामनिधानात् । 'तालव्याश्चैव दन्त्याश्च' इति वचनात् सर्वः शर्वो ज्ञेयः । हे शशाक सर्वतः शर्वस्य तव यदीरणेन विना प्रश्वसितुश्च बलं यदि यदा न तदा शङ्करः एषः अस्मत्साक्षिसिद्धः केवलं ना मुख्यपुरुषो नैव अत्रैवं समये । शिष्टं पूर्ववदिति वा । यद्यपि हरेर्बलमिति वदतोत्तरत्रापि हरबलादित्येव वक्तव्यं तथापि तत्कार्यं किञ्चिदपि न जनैर्दृष्टमिति बलपदवाच्यतामसहमानो अमानमानसः कण्ठतो न जग्राहेति मन्तव्यम् ।।४८।।

**वरदराजीया–** किमिति । यस्य हरेः ईरणेन प्रेरणया विना एषः शङ्करः केवलं प्रश्वसितुं श्वासं विमोक्षितुं नैव शशाक । अतः कारणाद्धरेर्बलं हरात् परं हरबलादप्यधिकं सर्वतः सर्वेषां बलादप्यधिकं चेत्यत्र किं वक्तव्यं सन्देहाभावादित्यर्थः ।।४८।।

**जनार्दनीया–** शंसनं स्पष्टयति– **यदिति** ।। एषः शङ्करः । यदीरणेन यस्य हरेः प्रेरणया । विनैव प्रश्वसितुं च श्वासमोक्षणार्थमपि न शशाक । यतः अतः अत्र अस्यां अवस्थायां सत्याम् । हरेः बलं हरात् परमुत्कृष्टमिति किं वक्तव्यम् ? न वक्तव्यमित्यर्थः । प्रत्यक्षं दृष्टत्वादिति भावः । सर्वतश्च रमाब्रह्मादीनां बलादपि एष एव परमेवेति शशंसुरिति पूर्वेण सम्बन्धः ।।४८।।

**चट्टी–** शंसनं स्पष्टयति– **यदिति** ।। एषः शङ्करः यदीरणेन यस्य हरेरीरणेन प्रेरणया विना केवलं प्रश्वसितुं च श्वासमोक्षणार्थमपि नैव शशाक । अतः कारणाद्धरेर्बलं हराद् सर्वतश्च सर्वेषां रमाब्रह्मादीनां बलादपि अधिकमिति किं वक्तव्यम् । प्रत्यक्षदृष्टत्वादिति भावः ।।४८।।

**ताम्रपर्णीया–** ।। **यदीरणेनैवेति** ।। श्रीवाय्वादिप्रेरणे सत्यपि यत्प्रेरणामात्रेण विनैष शङ्करः केवलं प्रश्वसितुं न शशाक । अत्र विषये हरेर्बलं हरबलात् लक्ष्म्यादिबलाच्च परमिति किमु वक्तव्यमित्यर्थः । केचित्तु यस्य ईरणो यदीरणो भगवदधीनो वायुरिति यावत् । तेन विना नैव रुद्रः प्रश्वसितुमपि समर्थः । अत्र विषये हरेर्बलं अतो हरात् परं सर्वजगतोऽपि परमिति किमु वक्तव्यमित्यर्थमाहुः ।।४८-४९।।

**भारतश्री–** यतः यदीरणेनैव विना । यदीया [यदीरा,यदीरया] मुख्यप्राणेनैव विना एषः शङ्करः केवलं प्रश्वसितुं च न शशाक किमन्यप्रयोजनस्येत्यर्थः । अतः हरेः बलं हरात् सर्वत एव सर्वस्मादपि बलाच्छारीरादेः परमित्यत्र किमु वक्तव्यमिति शशंसुरित्यन्वयः । यद्भृत्यमुख्यप्राणप्रेरणं विना एषः शङ्करः प्रश्वसितुं च न शशाक तस्मात् शङ्करात् हरेर्बलं परमिति किं वक्तव्यमित्यर्थः । चशब्दात् नेमुरित्यपि ज्ञेयम् ।।४८-४९।।

**अतिविशद–** यदीरणेनैव विनैष शङ्करः इत्यत्र यतो हरेर्बलं हरात्परं अतः सर्वतः परमिति प्रतीयते तदनुपपन्नम् । हरात् परत्वस्य सर्वतः परत्वे हेतुत्वायोगात् । हरस्य भारत्यायवरत्वात् तस्मात् कथमेतदिति चेन्न । अत्रैवमक्षरयोजना । शङ्करः यदीरणेनैव यदधीनमुख्यप्राणेनैव केवलं प्रस्पन्दितुं चशब्दात् योद्धुं शशाक । तेन विना न शशाकैव । अतोऽत्र हरेर्बलं हरात् परमिति किं वक्तव्यं न वक्तव्यमेवेत्यर्थः । तस्य प्रत्यक्षसिद्धत्वात् । तर्हि किं वक्तव्यम् । सर्वतः परत्वमेव सर्वतः परस्याप्रस्तुतत्वात्कथमित्याशङ्का 'शशंसुरुच्चैर्जगतो हरेर्बलम्' इति पूर्ववाक्यविवरणत्वात् अस्य श्लोकस्य निरस्ता । 'कार्यकारणयोरेका व्यवहृतिर्भवेत्' इति न्यायेन अत्र वायुकर्म ईरणपदेन वायुग्रहणात् वायुनैव रुद्रस्पन्दनाद्युक्त्वा वायोः रुद्राधिक्यसिद्धिः । ईदृशवायोः हर्यधीनत्वोक्त्या 'आत्मत एष प्राणो जायते' इति वाक्येन 'यस्माद् ब्रह्मेन्द्ररुद्रादि देवतानां श्रियोऽपि च । ज्ञानःस्फूर्तिस्सदा...।।' [ई.भा] इति वाक्येन श्रियोऽपि हर्यधीनत्वोक्त्या हरेः सर्वतः परत्वसिद्धिरिति । यद्वा 'उकारः क्षत्रिये नेत्रे हरमौलौ हरे हरौ । ईकारो ज्वलने लक्ष्म्यां वायौ च... ।।' इत्यभिधानात् । ईर्लक्ष्मीर्वायुर्वा यद्धरेर्बलं विना

केवलम् । जगन्मुख्यं हरिमिति यावत् । 'केवलो निर्गुणश्च' इति श्रुतेः । हरात् परमुत्तमं शशंसुः । हे अत्र वक्तव्येति शिवसम्बोधनं वा । त्रायते पालयतीति त्रः अस्त्रो यस्य सो अत्रः । अत्र इति वक्तव्यो वाच्यस्तत्सम्बुद्धिः । 'त्रैङ् पालने' अस्मात् 'आदेच...' [२३७०.कौ] इत्यात्वे 'आतोऽनुपसर्गे कः' इति के अत्रेति रूपम् । अस्मत्सन्देहस्य नष्टत्वाद्धरिपरिरक्षित इति त्वं वाच्य एवेति भावः । सर्वतः । सर्वस्मिन्नस्मदादिप्रपञ्चे शङ्करस्त्वमतस्सम्मतः अस्मत्सम एव नास्मत्त उत्तम इति भावः । यद्वा ईरणेन रमाप्रेरकेण श्रीनारायणेन विना सर्वतः सर्वत्र के देवा वा मानवा बलं न केऽपीत्यर्थः । वबयोरभेदादेवमुक्तिः । अत इति हेतोर्हरेर्बलं हरबलादेव परमुत्तममिति न किं नाम सर्वतः सर्वस्मादुत्तमं शशंसुरिति वा । यद्वा ई रमा यद्यतः के स्वसुखविषये बलं वरम् । रलयोर्लळयोश्चैकत्वस्मरणात्, स्वोत्तमं पतिमिति यावत् । विना प्रश्वसितुं अपि न शशाक न शक्ताभूत् । तस्माच्छङ्करः रणेन युद्धेन सह प्रश्वसितुं न शशाकेति किं वक्तव्यमित्यन्वयः । साक्षाल्लक्ष्म्यपि स्वाध्यक्षकृपाकटाक्षेक्षणतो विना किञ्चिदुदश्वयितुं न क्षमा तदा का कथा तदतिनियम्यस्य भवस्येति भावः । यद्वा यदि यदा एषः रुद्रः शं सुखं विना केवलमत्यन्तं प्रश्वसितुं च न शशाक । अत्रैवं समये करो रुद्रहस्तः अस्यापत्यं इः उपलक्षणया सर्वदेवग्रहः । ब्रह्मादिदेवप्रार्थितश्चासौ रणो युद्धः तस्मिन् न शशाकेति किं वक्तव्यमित्यर्थः । यथाह महामुनिः–'अभिप्रायं तु विज्ञाय देवतानां पितामहः । विरोधं जनयामास....।।' इति । [वा.का.७५.१५] 'ई विधिस्मरौ' इति रत्नमाला । हे शशाकेति शिवसम्बोधनम् । शशेन अतिसुखात्मकेन श्रीशेन अकं दुखं यस्य स तथा । 'ज्ञानज्ञानः सुखसुखः स विष्णुः परमो मतः [परमोऽक्षरः]' [गी.भा.२.७२] इति भगवदुक्तेः । कंशंशब्दवत् कशशब्दावपिः सुखवाचकौ ज्ञेयौ । एषः रणे स्थिताविति प्रसक्तो रणः सर्वतः शर्वस्य तव शङ्करः सुखकरः । करोति इति करः शं सुखस्य करः शङ्करः । प्रश्वसितुमपि बलं नेति, नैवाभूदिति शेषः । 'यदीरणेन विना' इत्यत्राप्यन्वेति । 'षर्व हिंसायाम्' 'षर्ब गतौ' इत्यतो वा वबयोरभेदात् पचाद्यचि धात्वादेः षस्य से सर्वोऽपि । 'सर्वस्तु भगवान् शम्भुः शर्वः कालञ्जरः शिव' इति नामनिधानात् । 'तालव्याश्चैव दन्त्याश्च' इति वचनात् सर्वः शर्वो ज्ञेयः । हे शशाक सर्वतः शर्वस्य तव यदीरणेन विना प्रश्वसितुश्च बलं यदि यदा न तदा शङ्करः एषः अस्मत्साक्षिसिद्धः केवलं ना मुख्यपुरुषो नैव अत्रैवं समये । शिष्टं पूर्ववदिति वा । यद्यपि हरेर्बलमिति वदतोत्तरत्रापि हरबलादित्येव वक्तव्यं तथापि तत्कार्यं किञ्चिदपि न जनैर्दृष्टमिति बलपदवाच्यतामसहमानो अमानमानसः कण्ठतो न जग्राहेति मन्तव्यम् ।।४८।।

**वरदराजीया–** किमिति । यस्य हरेः ईरणेन प्रेरणया विना एषः शङ्करः केवलं प्रश्वसितुं श्वासं विमोक्षितुं नैव शशाक । अतः कारणाद्धरेर्बलं हरात् परं हरबलादप्यधिकं सर्वतः सर्वेषां बलादप्यधिकं चेत्यत्र किं वक्तव्यं सन्देहाभावादित्यर्थः ।।४८।।

**जनार्दनीया–** शंसनं स्पष्टयति– **यदिति** ।। एषः शङ्करः । यदीरणेन यस्य हरेः प्रेरणया । विनैव प्रश्वसितुं च श्वासमोक्षणार्थमपि न शशाक । यतः अतः अत्र अस्यां अवस्थायां सत्याम् । हरेः बलं हरात् परमुत्कृष्टमिति किं वक्तव्यम् ? न वक्तव्यमित्यर्थः । प्रत्यक्षं दृष्टत्वादिति भावः । सर्वतश्च रमाब्रह्मादीनां बलादपि एष एव परमेवेति शशंसुरिति पूर्वेण सम्बन्धः ।।४८।।

**चट्टी–** शंसनं स्पष्टयति– **यदिति** ।। एषः शङ्करः यदीरणेन यस्य हरेरीरणेन प्रेरणया विना केवलं प्रश्वसितुं च श्वासमोक्षणार्थमपि नैव शशाक । अतः कारणाद्धरेर्बलं हराद् सर्वतश्च सर्वेषां रमाब्रह्मादीनां बलादपि अधिकमिति किं वक्तव्यम् । प्रत्यक्षदृष्टत्वादिति भावः ।।४८।।

**ताम्रपर्णीया–** ।। **यदीरणेनैवेति** ।। श्रीवाय्वादिप्रेरणे सत्यपि यत्प्रेरणामात्रेण विनैष शङ्करः केवलं प्रश्वसितुं न शशाक । अत्र विषये हरेर्बलं हरबलात् लक्ष्म्यादिबलाच्च परमिति किमु वक्तव्यमित्यर्थः । केचित्तु यस्य ईरणो यदीरणो भगवदधीनो वायुरिति यावत् । तेन विना नैव रुद्रः प्रश्वसितुमपि समर्थः । अत्र विषये हरेर्बलं अतो हरात् परं सर्वजगतोऽपि परमिति किमु वक्तव्यमित्यर्थमाहुः ।।४८-४९।।

**भारतश्री–** यतः यदीरणेनैव विना । यदीया [यदीरा,यदीरया] मुख्यप्राणेनैव विना एषः शङ्करः केवलं प्रश्वसितुं च न शशाक किमन्यप्रयोजनस्येत्यर्थः । अतः हरेः बलं हरात् सर्वत एव सर्वस्मादपि बलाच्छारीरादेः परमित्यत्र किमु वक्तव्यमिति शशंसुरित्यन्वयः । यद्भृत्यमुख्यप्राणप्रेरणं विना एषः शङ्करः प्रश्वसितुं च न शशाक तस्मात् शङ्करात् हरेर्बलं परमिति किं वक्तव्यमित्यर्थः । चशब्दात् नेमुरित्यपि ज्ञेयम् ।।४८-४९।।

**अतिविशद–** यदीरणेनैव विनैष शङ्करः इत्यत्र यतो हरेर्बलं हरात्परं अतः सर्वतः परमिति प्रतीयते तदनुपपन्नम् । हरात् परत्वस्य सर्वतः परत्वे हेतुत्वायोगात् । हरस्य भारत्याद्यवरत्वात् तस्मात् कथमेतदिति चेन्न । अत्रैवमक्षरयोजना । शङ्करः यदीरणेनैव यदधीनमुख्यप्राणेनैव केवलं प्रस्पन्दितुं चशब्दात् योद्धुं शशाक । तेन विना न शशाकैव । अतोऽत्र हरेर्बलं हरात् परमिति किं वक्तव्यं न वक्तव्यमेवेत्यर्थः । तस्य प्रत्यक्षसिद्धत्वात् । तर्हि किं वक्तव्यम् । सर्वतः परत्वमेव सर्वतः परस्याप्रस्तुतत्वात्कथमित्याशङ्का 'शशंसुरुच्चैर्जगतो हरेर्बलम्' इति पूर्ववाक्यविवरणत्वात् अस्य श्लोकस्य निरस्ता । 'कार्यकारणयोरेका व्यवहृतिर्भवेत्' इति न्यायेन अत्र वायुकर्म ईरणपदेन वायुग्रहणात् वायुनैव रुद्रस्पन्दनाद्युक्त्वा वायोः रुद्राधिक्यसिद्धिः । ईदृशवायोः हर्यधीनत्वोक्त्या 'आत्मत एष प्राणो जायते' इति वाक्येन 'यस्माद् ब्रह्मेन्द्ररुद्रादि देवतानां श्रियोऽपि च । ज्ञानःस्फूर्तिस्सदा...।।' [ई.भा] इति वाक्येन श्रियोऽपि हर्यधीनत्वोक्त्या हरेः सर्वतः परत्वसिद्धिरिति । यद्वा 'उकारः क्षत्रिये नेत्रे हरमौलौ हरे हरौ । ईकारो ज्वलने लक्ष्म्यां वायौ च... ।।' इत्यभिधानात् । ईर्लक्ष्मीर्वायुर्वा यद्धरेर्बलं विना

प्रस्पन्दितुं नैव शक्तौ तदा शिवः रणे योद्धुं कुत इति । 'तदा समस्ता देवगणा हरेर्बलं जगत उच्चैः शशंसुः' इति । एतद्योजनायां 'यदीरणेनैव' इत्येकपदे पदचतुष्टयं बोध्यम् ।।४८-५८।।

**गूढवाक्यार्थ–** यदीरणेनैव...* रणे सत्यपि यत्प्रेरणेनैव विना प्रश्वसितुं न शशाक । अत्र विषये । अतस्सर्वतः सर्वतश्च परमित्युपपद्यते । अथवा यस्येरणो यदीरणः भगवदधीनो वायुस्तेन विना प्रश्वसितुमपि न समर्थः । अत्र विषये हरेः बलं हरात् परं सर्व...* त्तव्यमित्यर्थः । हरात् हरवलात् ।।४८।।

**ततः प्रणम्याशु जनार्दनं हरः प्रसन्नदृष्ट्या हरिणाऽभिवीक्षितः ।**
**जगाम कैलासममुष्य तद्धनुस्त्वया प्रभग्नं किल लोकसन्निधौ ।।४९।।**

**सत्यधर्मीया–** स्वशक्ततायामिव शिवशक्ततायां सुरवरैरवगतायां कारुणिकशिरोमणिः अघटितघटनापटीयस्या स्वेच्छया यथा पूर्वं शर्वसुपर्वभावमकलयत् तदुत शर्वोऽपि मतसर्वोत्तमः ततोऽतितरां भगवन्नतिमुन्नतिदात्रीं विधाय धाम स्वामगादित्याह– **तत इत्यादिना** ।। यतः प्रसन्नदृष्ट्या करणेन हरिणा कर्त्रा । प्रसन्ना प्रसादाभिमुखीभूता दृष्टिर्नेत्रं तया अभिवीक्षितः । अभिना विस्मरणाद्यभावसाधनतां वीक्षणस्याभिप्रैति । निरीक्षितः ततो हेतोः अमुष्य रुद्रस्य । तत् लोकानवलोकनं अस्पन्दनश्च जगाम अगच्छत् । श्रीहरि– करुणानिरीक्षणेन क्षणेनोपलतुलता गतेति भावः । एवममुष्यतज्जगामपदानां आवृत्त्या अन्वये जडीभावहेतुभूतासुरभावनिरास आससाद शिवस्येति भाव आविष्कृतो भवति । ततः हरः जनार्दनं जनो जननम् । भावे घञ् । नच ञित्वाद्भाव्यं वृद्ध्येति वाच्यम् । 'जनिवध्योश्च' इति निषेधात् । 'अर्द हिंसायां नन्द्यादित्वाल्ल्युः । जनान् समुद्रस्थदैत्यविशेषान् अर्दयतीति वा 'समुद्रस्था दितिसुता जनाः पुण्यजनाश्च ते' इति शब्दरत्नाकरः । उत्पत्तिः तदर्दयति नाशयति, पुनरुत्पत्तिर्यथा न भवेत्तथा करोति, मुक्तान् करोतीति यावत् । जनान् अर्दनयोग्यतया दुष्टेति लभ्यते । जनान् अहंकृतान् सज्जनान् वा अर्दयत्यवमानितान् करोतीति स तथा । इदानीं स्वान्तर्गतासुरार्दनकर्तृत्वेन उत्तरत्र मुक्ताप्रापक इति तन्नमनमचरदिति भावः । जनयतीति जनः अर्दयतीत्यर्दनः उत्पत्तिविनाशकर्ता तं वा । प्रणम्य प्रकर्षेण नत्वा । प्रेण यथा महद्द्रोहो न महानर्थहेतुर्भवेत् प्रत्युत सन्नतप्रसन्नताकारणमेव भवेन्नमनमिति सूचयति । आशु ईशप्रसादहेतुता वा प्रेण नमनस्य सूच्यते । एकान्त एवोमाकान्तो रमाकान्ताय ततान नमः किमित्यतो नेत्याह– **लोकसन्निधाविति** ।। लोकानां परीक्षकजनानां सन्निधौ सन्निधाने । एतेन रुद्रो न ननाम रमाकान्तमिति वदतां लोकानुभवविरोध उक्तो वेदितव्यः । यद्वा यतो हरिणाभिवीक्षितो हरः प्रसन्नदृष्ट्या प्रसन्ना अतिविशीर्णा उपस्थितसमीक्षणा दक्षिणादृष्टिर्नेत्रं ज्ञानं वा तया सहितः । तृतीयायोगे अनुक्तावपि सहादेः 'वृद्धो यूना' 'मयाध्यक्षेण प्रकृतिः' [गी.९.१०] इत्यादेर्लाभः । ततस्तस्मादेव देववीक्षणाद् अमुष्येत्यादि पूर्ववत्सर्वं

योज्यम् । किमर्थं भगवान्भवे ततान करुणामित्यतः तत्स्वरूपं वा निरूपयति– **प्रसन्निति** ।। प्रकर्षेण सन्साधुः, स्वभक्ताग्रेसर इति यावत् । प्रेण आशुतरविनाश्यासुरभावो भव इति भवति सूचितम् । एतत्पक्षे अप्रभङ्गमिति पदच्छेदः । तेनान्वेति नञ् । अप्रभङ्गं न किन्तु द्वौ नञौ प्रकृतन्यायेन प्रभङ्गमेवेत्यर्थः । अथवा किमिति मतिभ्रंशोऽसुररचितासीदीश्वरस्येत्यतः तत्स्थितिमाह– **प्रसन्नेति** ।। प्रसन् ब्रह्मेव शुद्धसत्वात्मको न किन्तु तमोरजोमिश्रितसत्ववानिति युक्ता असुरभावयुक्तता अन्धकबाधकस्येति भावः । 'सतां माने म्लाने मरणमथवा दूरगमनम्' इति वचनान्न तस्थावत्र स्थाणुरित्याह– **जगामेति** ।। किं प्रति जगामेत्यतस्तदाह– **कैलासमिति** ।। के उदके लासो लसनं यस्य स कैलासः स्फटिकः तस्यायम् । केलीनां विलासानां समूहः कैलं 'तस्य समूह' इत्यण् । तेनास्यते अत्र 'आस उपवेशने' इति वा 'हलश्च' इति घञि कैलासः स्वनिवासस्थानं पर्वतम् । परपराजितानां गिरिदर्यादिवास एव उचित इति सूचयितुं स्वमालयादिपदं विहाय कैलासमिति कर्माहेति ज्ञेयम् । किञ्चित् व्यापारव्यवधानेन गमनं किमित्यतो नेत्याह– **आश्विति** । परीक्षकसुरपुरोभवदवमतिरिति तन्मुखविलोकने अरुचिः अचिरेण गिरिमगादिति तात्पर्यं आशुः आविष्करोति । केऽपि लोका न लुलोकिरे गिरिं प्रति गिरिशगमनमित्यतो वाह– **लोकसन्निधाविति** ।। एतेन गिरिं गच्छन्तं लोका ददृशुः शिवमिति सूचितं भवति । यदर्थमिमां रामो रामाय कथामकथयत् तदिदानीं विवक्षुस्तदुपोद्घातमारचयतीत्याह– **त्वयेति** ।। अमुष्य एतादृशस्येशस्य । यद्धनुः सदा सदाशिवो अदीधरत् तदेव देवदेववरा तद्द्वारा प्राप्तं तद्धनुः । हे रामेति शेषः । मदितर एव जनो बभञ्ज आजगवमिति कदाचिद् वञ्चनाय वदेत् देव इति त्वयेति वदन् भृगुदेवस्तन्मुखबन्धं चकारेति ध्येयम् । तदपि नैकान्त इत्याह– **लोकसन्निधाविति** ।। 'यो लोकवीरसमितौ धनुरैशमुग्रम्' [९.८.८८] इति श्रीभगवते । प्रभङ्गं कार्यानुपयुक्ततया भङ्गं धनुषः प्रः सूचयति । किल एवं वार्ता । क्रीडयैव त्रिपुरद्विषो धनुषः पीडाऽभवदिति प्रः प्रकटयति । यद्वा हे लोक ज्ञानात्मक जन वा । अ रामया रमात्मिकया सीतया निमित्तेन । तुः एवार्थः स्त्रीनिमित्तेनैव हरिणा तद्धनुः प्रभङ्गं किल । 'वार्तासम्भवयोः किल' इत्यमरः । इहैवेति वार्ता न नाक इति चेन्नेत्यप्याह– **सन्निधाविति** ।। सन्ति नक्षत्राणि निधीयन्ते अस्मिन्निति सन्निधिर्गगनं तत्र भवता कृतं भवधनुर्भञ्जनमिति वार्ता भुवीव दिव्यपि व्याप्ताऽभूदिति भावः । धनुः तु अ या इति 'धनुस्त्वया' इत्यत्र पदचतुष्टयमिति ज्ञेयम् । इदं धनुर्भञ्जनं सकलजनाश्रये त्वयि नासम्भावितमित्यप्याह– **लोकसन्निधाविति** ।। लोकाः सम्यङ् निधीयन्ते अस्मिन्निति स तथा तस्मिन्भगवति त्वयि तत् धनुर्भञ्जनं किल सम्भावितम् । कैलासं प्रति जगामेति वदता पराजयचिन्तायातशुभ्रतापि स्फाटिकगिरिरूपोधित एव नतु निमित्तान्तरेणेति स्वावगुणाच्छादकस्थानमगाद् गङ्गाधर इति सूचितं भवतीति ध्येयम् । यद्वा विलासाश्रयस्थानत्वात्पराजयखेदविस्मारकता कैलासस्येति तं प्रति गतिरुचितेति सूचयति कैलासपदेनेति ध्येयम् ।।४९।।

प्रस्पन्दितुं नैव शक्तौ तदा शिवः रणे योद्धुं कुत इति । 'तदा समस्ता देवगणा हरेर्बलं जगत उच्चैः शशंसुः' इति । एतद्योजनायां 'यदीरणेनैव' इत्येकपदे पदचतुष्टयं बोध्यम् ।।४८-५८।।

**गूढवाक्यार्थ–** यदीरणेनैव...* रणे सत्यपि यत्प्रेरणेनैव विना प्रश्वसितुं न शशाक । अत्र विषये । अतस्सर्वतः सर्वतश्च परमित्युपपद्यते । अथवा यस्येरणो यदीरणः भगवदधीनो वायुस्तेन विना प्रश्वसितुमपि न समर्थः । अत्र विषये हरेः बलं हरात् परं सर्व...* त्तव्यमित्यर्थः । हरात् हरबलात् ।।४८।।

**ततः प्रणम्याशु जनार्दनं हरः प्रसन्नदृष्ट्या हरिणाऽभिवीक्षितः ।**
**जगाम कैलासममुष्य तद्धनुस्त्वया प्रभग्नं किल लोकसन्निधौ ।।४९।।**

**सत्यधर्मीया–** स्वशक्ततायामिव शिवशक्ततायां सुरवरैरवगतायां कारुणिकशिरोमणिः अघटितघटनापटीयस्या स्वेच्छया यथा पूर्वं शर्वसुपर्वभावमकलयत् तदुत शर्वोऽपि मतसर्वोत्तमः ततोऽतितरां भगवन्नतिमुन्नतिदात्रीं विधाय धाम स्वामगादित्याह– **तत इत्यादिना** ।। यतः प्रसन्नदृष्ट्या करणेन हरिणा कर्त्रा । प्रसन्ना प्रसादाभिमुखीभूता दृष्टिर्नेत्रं तया अभिवीक्षितः । अभिना विस्मरणाद्यभावसाधनतां वीक्षणस्याभिप्रैति । निरीक्षितः ततो हेतोः अमुष्य रुद्रस्य । तत् लोकानवलोकनं अस्पन्दनश्च जगाम अगच्छत् । श्रीहरि– करुणानिरीक्षणेन क्षणेनोपलतुलता गतेति भावः । एवममुष्यतज्जगामपदानां आवृत्त्या अन्वये जडीभावहेतुभूतासुरभावनिरास आससाद शिवस्येति भाव आविष्कृतो भवति । ततः हरः जनार्दनं जनो जननम् । भावे घञ् । नच ञित्वाद्धाव्यं वृद्ध्येति वाच्यम् । 'जनिवध्योश्च' इति निषेधात् । 'अर्द हिंसायां नन्द्यादित्वाल्ल्युः । जनान् समुद्रस्थदैत्यविशेषान् अर्दयतीति वा 'समुद्रस्था दितिसुता जनाः पुण्यजनाश्च ते' इति शब्दरत्नाकरः । उत्पत्तिः तदर्दयति नाशयति, पुनरुत्पत्तिर्यथा न भवेत्तथा करोति, मुक्तान् करोतीति यावत् । जनान् अर्दनयोग्यतया दुष्टेति लभ्यते । जनान् अहंकृतान् सज्जनान् वा अर्दयत्यवमानितान् करोतीति स तथा । इदानीं स्वान्तर्गतासुरार्दनकर्तृत्वेन उत्तरत्र मुक्ताप्रापक इति तन्नमनमचरदिति भावः । जनयतीति जनः अर्दयतीत्यर्दनः उत्पत्तिविनाशकर्ता तं वा । प्रणम्य प्रकर्षेण नत्वा । प्रेण यथा महद्द्रोहो न महानर्थहेतुर्भवेत् प्रत्युत सन्नतप्रसन्नताकारणमेव भवेन्नमनमिति सूचयति । आशु ईशप्रसादहेतुता वा प्रेण नमनस्य सूच्यते । एकान्त एवोमाकान्तो रमाकान्ताय ततान नमः किमित्यतो नेत्याह– **लोकसन्निधाविति** ।। लोकानां परीक्षकजनानां सन्निधौ सन्निधाने । एतेन रुद्रो न ननाम रमाकान्तमिति वदतां लोकानुभवविरोध उक्तो वेदितव्यः । यद्वा यतो हरिणाभिवीक्षितो हरः प्रसन्नदृष्ट्या प्रसन्ना अतिविशीर्णा उपस्थितसमीक्षणा दक्षिणादृष्टिर्नेत्रं ज्ञानं वा तया सहितः । तृतीयायोगे अनुक्तावपि सहादेः 'वृद्धो यूना' 'मयाध्यक्षेण प्रकृतिः' [गी.९.१०] इत्यादेर्लाभः । ततस्तस्मादेव देववीक्षणाद् अमुष्येत्यादि पूर्ववत्सर्वं

योज्यम् । किमर्थं भगवान्भवे ततान करुणामित्यतः तत्स्वरूपं वा निरूपयति– **प्रसन्निति** ।। प्रकर्षेण सन्साधुः, स्वभक्ताग्रेसर इति यावत् । प्रेण आशुतरविनाश्यासुरभावो भव इति भवति सूचितम् । एतत्पक्षे अप्रभग्नमिति पदच्छेदः । तेनान्वेति नञ् । अप्रभग्नं न किन्तु द्वौ नञौ प्रकृतन्यायेन प्रभग्नमेवेत्यर्थः । अथवा किमिति मतिभ्रंशोऽसुररचितासीदीश्वरस्येत्यतः तत्स्थितिमाह– **प्रसन्नेति** ।। प्रसन् ब्रह्मेव शुद्धसत्वात्मको न किन्तु तमोरजोमिश्रितसत्ववानिति युक्ता असुरभावयुक्तता अन्धकबाधकस्येति भावः । 'सतां माने म्लाने मरणमथवा दूरगमनम्' इति वचनान्न तस्थावत्र स्थाणुरित्याह– **जगामेति** ।। किं प्रति जगामेत्यतस्तदाह– **कैलासमिति** ।। के उदके लासो लसनं यस्य स कैलासः स्फटिकः तस्यायम् । केलीनां विलासानां समूहः कैलं 'तस्य समूह' इत्यण् । तेनास्यते अत्र 'आस उपवेशने' इति वा 'हलश्च' इति घञि कैलासः स्वनिवासस्थानं पर्वतम् । परपराजितानां गिरिदर्यादिवास एव उचित इति सूचयितुं स्वमालयादिपदं विहाय कैलासमिति कर्माहेति ज्ञेयम् । किञ्चित् व्यापारव्यवधानेन गमनं किमित्यतो नेत्याह– **आश्विति** । परीक्षकसुरपुरोभवदवमतिरिति तन्मुखविलोकने अरुचिः अचिरेण गिरिमगादिति तात्पर्यं आशुः आविष्करोति । केऽपि लोका न लुलोकिरे गिरिं प्रति गिरिशगमनमित्यतो वाह– **लोकसन्निधाविति** ।। एतेन गिरिं गच्छन्तं लोका ददृशुः शिवमिति सूचितं भवति । यदर्थमिमां रामो रामाय कथामकथयत् तदिदानीं विवक्षुस्तदुपोद्घातमारचयतीत्याह– **त्वयेति** ।। अमुष्य एतादृशस्येशस्य । यद्धनुः सदा सदाशिवो अदीधरत् तदेव देवदेववरा तद्द्वारा प्राप्तं तद्धनुः । हे रामेति शेषः । मदितर एव जनो बभञ्ज आजगवमिति कदाचिद् वञ्चनाय वदेत् देव इति त्वयेति वदन् भृगुदेवस्तन्मुखबन्धं चकारेति ध्येयम् । तदपि नैकान्त इत्याह– **लोकसन्निधाविति** ।। 'यो लोकवीरसमितौ धनुरैशमुग्रम्' [९.८.८८] इति श्रीभगवते । प्रभग्नं कार्यानुपयुक्ततया भङ्गं धनुषः प्रः सूचयति । किल एवं वार्ता । क्रीडयैव त्रिपुरद्विषो धनुषः पीडाऽभवदिति प्रः प्रकटयति । यद्वा हे लोक ज्ञानात्मक जन वा । अ रामया रमात्मिकया सीतया निमित्तेन । तुः एवार्थः स्त्रीनिमित्तेनैव हरिणा तद्धनुः प्रभग्नं किल । 'वार्तासम्भवयोः किल' इत्यमरः । इहैवेति वार्ता न नाक इति चेन्नेत्यप्याह– **सन्निधाविति** ।। सन्ति नक्षत्राणि निधीयन्ते अस्मिन्निति सन्निधिर्गगनं तत्र भवता कृतं भवधनुर्भञ्जनमिति वार्ता भुवीव दिव्यपि व्याप्ताऽभूदिति भावः । धनुः तु अ या इति 'धनुस्त्वया' इत्यत्र पदचतुष्टयमिति ज्ञेयम् । इदं धनुर्भञ्जनं सकलजनाश्रये त्वयि नासम्भावितमित्यप्याह– **लोकसन्निधाविति** ।। लोकाः सम्यङ् निधीयन्ते अस्मिन्निति स तथा तस्मिन्भगवति त्वयि तत् धनुर्भञ्जनं किल सम्भावितम् । कैलासं प्रति जगामेति वदता पराजयचिन्तायातशुभ्रातापि स्फाटिकगिरिरूपोधित एव नतु निमित्तान्तरेणेति स्वावगुणाच्छादक-स्थानमगाद् गङ्गाधर इति सूचितं भवतीति ध्येयम् । यद्वा विलासाश्रयस्थानत्वात्पराजय खेदविस्मारकता कैलासस्येति तं प्रति गतिरुचितेति सूचयति कैलासपदेनेति ध्येयम् ।।४९।।

**वरदराजीया–** ततस्तदनन्तरं हरो जनार्दनं प्रणम्य प्रसन्नदृष्ट्या कृपादृष्ट्या हरिणा अभिवीक्षितः अवलोकितः कैलासं जगामेत्यर्थः । ततः किमित्यत आह– **अमुष्येत्यादिना** ।। अमुष्य रुद्रस्य तत् तदानीं धृतं धनुः लोकसन्निधौ त्वया प्रभग्नमिति मया श्रुतम् ।।४९।।

**जनार्दनीया–** अमुष्य रुद्रस्य । तद्धनुः लोकसन्निधौ जनकसभायामित्यर्थः । त्वया प्रभग्नं किल प्रभग्नमिति श्रूयते ।।४९।।

**चट्टी–** ततो हरो जनार्दनं प्रणम्य हरिणा प्रसन्नदृष्ट्या अभिवीक्षितः अवलोकितः कैलासं जगामेत्यर्थः । अमुष्य रुद्रस्य तद्धनुः लोकसन्निधौ जनकसभायामित्यर्थः । त्वया प्रभग्नं किल ।।४९।।

**[१]धनुर्यदन्यद्धरिहस्तयोग्यं तत्कार्मुकात् कोटिगुणं पुनश्च ।**
**वरं हि हस्ते तदिदं गृहीतं मया गृहाणैतदतो हि वैष्णवम् ।।५०।।**

**व्यासतीर्थीया–** शिवधनुर्मया खण्डितं अतोऽहं विष्णुरिति । यतोऽहङ्कारोऽतो एतद्वैष्णवं धनुर्गृहाणेति ।।५०-५२।।

**वेदाङ्गतीर्थीया–** तत्कार्मुकात् रुद्रकार्मुकात् । कोटिगुणं कोटिगुणाधिकम् । पुनश्च वरमुत्तमम् । अतो हि अत एव विष्णुना मया स्वीयतया गृहीतत्वादेव ।।५०-५२।।

**वादिराजीया–** हरिहस्तयोग्यं यदन्यद्धनुस्तत् तत्कामुर्कात् शिवकार्मुकात् यतः पुनश्च कोटिगुणं अतो वरं हि । तदिदं वैष्णवं धनुर्मया हस्ते गृहीतं हि । आद्यो हिशब्दः अधिकगुणस्य वरत्वे प्रसिद्धिमाह । द्वितीयस्तु ग्रहणे प्रत्यक्षप्रसिद्धिमाह । अथवा हि यस्मात् कोटिगुणं तस्माद्वरं हीति सम्बन्धः । एतत् त्वमपि गृहणेति योजना ।।५०-५४।।

**सत्याभिनवीया–** तत्रैव धनुर्यदन्यद्धरिहस्तयोग्यं...इति श्लोके हरिहस्तयोग्यं पुनश्चेत्यस्य पुनश्च पुनः पुनरपि सर्वदेति यावत् । हरिहस्तयोग्यमित्यर्थः । एतेन पुनश्चेत्येतत् व्यर्थमिति दूषणस्यानवकाशः । हरिहस्तयोग्यमित्येवोक्ते कालविशेषे हरिहस्तयोग्यमिति शङ्का स्यात् । तन्निवारणार्थं सर्वदा हरिहस्तयोग्यमिति वक्तुं पुनश्चेत्यनेन पुनरित्यावृत्या पुनः पुनरपीत्यर्थः । सर्वदेति तात्पर्यार्थश्चोच्यते इति स्वीकरणात् ।।५०।।

**सत्यधर्मीया–** 'रमापतिश्चापरमुत्तमोत्तमम्' इति पुरा पुरारातिधनुष इतरद्धार हरिः शरासनमिति समीरितं कियती सीमा निःसीससामर्थ्यस्य भगवतो धनुषो महत्त्वस्य महादेवदोर्दण्डमण्डनायित-

१. बृहत् शार्ङ्गधरे-'शार्ङ्गं पुनर्धनुर्दिव्यं तद्विष्णोः परमायुधम् । वितस्तिसप्तमं मानं निर्मितं विश्वकर्मणा । न स्वर्गे न च पाताले न भूमौ कस्यचित् करे । तद्धनुर्वशमायाति त्यक्त्वैकं पुरुषोत्तमम् ।।

कोदण्डात् इत्यतः तत्तारतम्यं सम्यङ्निरूपयंस्तदेव देवदेवधृतमिदमिदानीं मया धृतमिति निगमयन् रामो रामकार्यं कार्यमवगमयतीत्याह– **धनुरित्यादिना** ।। यत् 'रमापतिस्त्वेकमधारयत्' इति पुरोदीरितं धनुः तत्कार्मुकात् तस्य हरस्य कार्मुकात् धनुषः कोटिगुणं कोटिः कोटिसङ्ख्याका गुणा यस्य तत्तथा । तस्मात्कोटिसङ्ख्याकगुणाधिकमिति । तत्र हेतुमाह– **हरिहस्तयोग्यमिति** ।। हरेः हस्तस्तस्य योग्यम् । हरिकरमात्रधारणपात्रमित्यर्थः । यतो भगवद्धस्तग्रहणयोग्यं ततस्ततो युक्ता कोटिगुणाधिकतेति भावः । इदं मन्दमतिविवक्षयोदितमपि तु न गणना गुणानामित्याह– **पुनश्च वरमिति** ।। ततो वरं पुनः । वरमेव कोटिकगुणतो वरमेव । हि यस्मात् मया भार्गवात्मना हस्ते करे गृहीतं धृतम् । तत् तस्मात् । इदं वैष्णवं विष्णोरिदम् । 'तस्येदम्' इत्यण् । यथा शिवधनुर्देवरातादिधृतं सदपि पूर्वं शर्वधृतत्वाच्छैवमुच्यते तथा पूर्वं हरिहस्तयोग्यं इदानीं तदितरधृतमपि वैष्णवमेवेति शब्यत इति नेत्याह– **अतो वैष्णवमिति** ।। ममापि विष्णुत्वादिति भावः । न केवलं हरिहस्तयोग्यत्वादेवेदं वैष्णवं किमुत मया धृतत्वादपीति समुच्चये चः । त्वमपि तत्त्वतस्साक्षाल्लक्ष्मीरमण इति धनुर्धारणयोग्य इति लक्षीकृत्य वदतीत्याह– **गृहाणेति** ।। राम त्वमिति मध्यमप्रयोगाल्लभ्यते । त्वं गृहाण उपादत्स्व । त्वयेति शेषः । यतस्त्वया गृहीतमिदमतोऽपि हेतोः वैष्णवम् । तवापि विष्णुत्वादिति भावः । यद्वा यद्रुद्रधनुः हरिहस्तयोग्यं हरेः श्रीनारायणात्मकस्य भवतो हस्तयोः धारणाकर्षणयोग्यं सत् कोटिगुणं कोट्योः चापाग्रभागयोः गुणो ज्या यस्य तत् । सत् प्रभग्नम् । ततः कार्मुकात् वरं पुनर्वरमेव हीन्वयः । एवमन्वये कोटिगुणाधिक्यमुक्त्वा पुनःपुनर्वरं हीति सामन्यत उत्तमताभिधानं किमर्थं 'वरं हि' इत्यनेनैव सर्वलाभादिति शङ्कानवकाश इति ध्येयम् । 'कोटिः स्यादग्रमात्रेऽपि चापाग्रेऽश्रौ प्रकर्षके । सङ्ख्याविशेषे च....।।' इति केशवः । 'मौर्वी ज्या शिञ्जिनी गुण' इत्यमरः । यद्धरिहस्तयोग्यं कोटिगुणं सत् प्रभग्नं ततस्तस्मात्तत्कार्मुकात् त्वत्खण्डितखण्डपरशुकार्मुकात् अखण्डपरशुना मया गृहीतमिति वैष्णवमेतत् परिदृश्यमानं गृहाण रामेति शेषः । यद्वा धनुस्तारतम्यतोऽपि पिनाकिकार्मुकतोऽपि नाकिनायककार्मुकस्य मया गृहीतस्यात्युत्तमताऽवसीयत इत्याह– **धनुरिति** ।। यदन्यत् इतरत् । तत्कार्मुकात् तस्य शिवस्य कार्मुकात् । हरिहस्तयोग्यम् हरेर्वायोर्हस्तयोग्यं धनुः कोटिगुणाधिकं कोटिसङ्ख्याकगुणतोऽधिकम् । ततः वायोर्धनुषः पुनर्व्यावृत्तं भिन्नमिति यावत् । मया रमया गृहीतं वरमुत्तमम् । तत्कार्मुकाद्रमाकार्मुकात् । चो अवरसमुच्चये । वैष्णवं धनुर्वरम् । अतोऽस्माद्धेतोर्मया गृहीतं कोटिगुणमित्यस्यावृत्तिर्वा । वायुकार्मुकात्कोटिगुणं रमाधनुस्ततो वैष्णवं वरमित्यन्वयः । 'रमापतिश्चापरमुत्तमम्' इत्येतावता पूर्णे यत्पूर्णप्रमतिः उत्तमोत्तममिति बभाण तेनेयं परम्परातः शरासनपरता तदभिप्रेतेति ज्ञायते । अपिचात्रैव 'हरिहस्तयोग्यम्' 'मया' 'कोटिगुणम्' 'पुनर्वरम्' इति जगादागाधधिषणः तेनापि ज्ञायते अयं क्रमस्तन्मत इति । अन्यथा 'वरम्' इत्येतावता विवक्षितार्थसिद्धेः कोटिगुणाधिकमिति निरर्थकं स्यादिति

भावः । 'मया गृहीतम्' इत्यनेनैव वैष्णवतावगता भवतीति हरिहस्तयोग्यमिति निष्प्रयोजनं सत् स्वरूपपरमिति वक्तव्यं स्यात् । 'तत्र भारसहं दिव्यं रौद्रादपि परन्तप' इति पद्मपुराणे भीमं प्रति श्रीकृष्णवचानाद् ज्ञायते रुद्रधनुषोऽपि श्रैष्ठ्यं भीमधनुषः । श्रीधनुषोऽपि सूक्तोक्तेश्च । वायुधनुषः श्रैष्ठ्यकथनादेव विधिधनुरपि श्रेष्ठमिति विदितमेवेति न तदनुक्तिदोषः । हरिहस्तयोगि हरिहस्तस्य योगः सम्बन्धोऽस्यास्तीति तत्तथा । अं भगवदात्मकं गृहाणेति जगादेति शेष इति वा । इदमिति रुद्रधनुर्विशेषणम् । इं स्मरं द्यति खण्डयतीति तत्तथा मन्मथमथनकृत् । अन्यत् यत्कार्मुकमिदं मन्मथखण्डनकृत् तत्कार्मुकादित्यन्वयः । एतेन अन्यदाजगवान्मदनभञ्जकादिदमिति सूचितं भवति । ही हेत्वर्थौ ।।५०।।

**मधुसूदनीया–** ।। धनुर्यदन्यदिति ।। ननु भार्गवस्य कथं वैष्णवधनुःप्राप्तिः इति शङ्का 'दृढे बलवती मुख्ये सुकृते विश्वकर्मणा' [बा.का.७५.११] इत्यारभ्य 'इदं च वैष्णवं राम धनुः परपुरञ्जय । रुचके भार्गवः प्रादात् विष्णुर्न्यासमनुत्तमम् ।। रुचकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः । पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ।। [बा.का.७५.२१-२३] तदिदं वैष्णवं नाम पितृपैतामहं महत् । क्षत्रधर्मं पुरस्कृत्य गृहीतं धनुरुत्तमम्' ।। [बा.का.७५.२७] इति रामायणवाक्येन परिहर्तव्या ।।५०।।

**वरदराजीया–** ततोऽपि किमित्यत आह– **धनुरिति** ।। अन्यत् द्वितीयं हरिहस्तयोग्यं हरिणैव हस्ते धर्तुं योग्यं तत्कार्मुकात् कोटिगुणं कोटिगुणाधिकं पुनश्च वरं उत्तमं हि यस्मात्तस्मादिदं मया हस्ते गृहीतं अतोऽहं हरिरिति भावः । अतो हि अत एव वैष्णवं धनुर्गृहाण स्वीकुरु ।।५०।।

**जनार्दनीया–** तस्य रुद्रस्य । कार्मुकाद्धनुषः । कोटिगुणं कोटिसङ्ख्याकाधिकगुणवदित्यर्थः । पुनश्च कोटिगुणादपि वरं उत्तमम् । अन्यद्धनुः शार्ङ्गसञ्ज्ञम् । हरिहस्तयोग्यं यद्यस्मात्तस्मात् इदं मया हरिणा मया हस्ते गृहीतं हि यस्मात् एतद्धनुर्वैष्णवं अतस्त्वं गृहाण स्वीकुरु ।।५०।।

**चट्टी–** ततः किमित्यत आह– **धनुरिति** ।। भग्नधनुषोऽन्यधनुरासीत् । तद्धरिहस्तयोग्यं पुनश्चेति चेत्यर्थः । तत्कार्मुकात् कोटिगुणं यथा भवति तथा वरम् । हरिहस्तयोग्यत्वे हेतुरयम् । अतो हि अत एव । मम हरित्वाद्धनुषश्च मद्धस्तयोग्यत्वादेवेत्यर्थः । इदं धनुर्मया गृहीतं त्वमपि वैष्णवं विष्णुसम्बन्धि एतद्धनुर्गृहाण स्वीकुरु ।।५०।।

**अनन्तभट्टीया–** तत्कार्मुकात्कोटिगुणं कोटिगुणदार्ढ्ययुक्तम् । अतो वरम् । भञ्जनात् अहं हरिरिति तव गर्वो जातः । अतो वैष्णवं एतद्धनुः गृहाण । गृहीतं हीति सम्बन्धः ।।५०-५२।।

**ताम्रपर्णीया–** ।। धनुरिति ।। यतो हरिहस्तयोग्यमतः । तत् कार्मुकात् कोटिगुणं वरं पुनश्च वरम् । यदन्यद्धनुः । ततो हरिहस्तयोग्यत्वादेव मया हरिणा गृहीतं इदं वैष्णवं धनुः त्वं गृहाणेति योजना । एतेन पुरातनोऽहं हरिरित्युपपादितम् ।।५०।।[१]

**भारतश्री–** पुनश्च श्रेष्ठं कोटिगुणादप्यधिकम् । प्रथमहिशब्दः एवार्थः । हरिहस्तयोग्यमित्यनेनान्वयः । द्वितीयो हेतौ । हि यतः वैष्णवं अतः मम विष्णुत्वात् मया गृहीतम् । उत्तरत्र वान्वयः ।।५०।।

**प्रमाणसङ्ग्रह–** वरं हि हस्ते तदिदं गृहीतमित्यत्र भार्गवस्य वैष्णवधनुःप्राप्तिः कथमभूदिति शङ्का 'दृढे बलवती मुख्ये सुकृते विश्वकर्मणा' इत्यारभ्य [बा.का.७५.११] 'धनू रुद्रस्तु संकृद्धो विदेहेषु महायशाः । देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ।। इदं च वैष्णवं राम धनुः परपुरञ्जय । ऋचके भार्गवे प्रादात् विष्णुर्न्यासमनुत्तमम् ।। ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः । पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ।। तदिदं वैष्णवं राम पितृपैतामहं महत् । क्षत्रधर्मं पुरस्कृत्य गृहीतं धनुरुत्तमम् ।।' [बा.का.७५.२०-२३,२७] इति रामायणवाक्येन परिहर्तव्या । एतेन सर्वाचाल्यस्य रुद्रधनुषः जनकगृहं प्रति आगतिः सूचिता । रुद्रेणैव तद्राज्ये स्थापितत्वात् । प्रदानवचनस्य अनुज्ञादानादिना उपपत्तेरिति ज्ञातव्यम् । 'गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः । वरुणायाप्रमेयात्मा ददौ हस्ते महायशाः ।।' इति इदं वचनं प्रासङ्गिकं रामायणगतमेव ।

'रौद्रं चापं दुराधर्षं भज्यमानं त्वया नृप । इदं तु वैष्णवं चापं तेन तुल्यमरिन्दम ।।
एवमुक्तस्तु काकुत्स्थो भार्गवेण प्रतापवान् । तच्चापं तस्य जग्राह रामो दशरथात्मजः ।।
शरं धनुषि सन्धाय विससर्ज तथाऽसुरे । तस्य नाभिप्रदेशे तु तपः कृत्वा सुदारुणम् ।।
तिष्ठत्येव सदा दैत्यस्तं ज्ञात्वा राघवो बली । तं तु भस्मीचकाराऽथ किं कर्तव्यं मया प्रभो ।।
इति श्रुत्वा वचस्तस्य रामस्य भृगुनन्दनः । आलिङ्गनं चकाराऽथ एकमूर्तिगतस्तदा ।।
पुनः पृथक् स्वरूपश्च भूत्वाऽसौ भार्गवो ययौ ।।'स्वान् स्वान् दारानुपागम्य रेमिरे हृष्टमानसाः' ।।

**गूढवाक्यार्थ–** ।। **धनुर्यदन्यदिति** ।। यदन्यत् धनुः तत्...* णात् तत्कार्मुकात् शङ्करधनुषस्सकाशात् पुनश्चकार पुनरित्यस्यावृत्तिद्योतकः । पुनः पुनः कोटिगुणं भारादिना कोटिगुणं पुनश्च परमधिकमिति वा । अतः कारणाद् वरं हि उत्तममिति प्रसिद्धं हि । तदिदं वैष्णवं विष्ण्वैकयोग्यं धनुं हस्ते गृहीतं त्वेमेतद् गृहाणेति योजना ।।५०।।

---

१. ।। धनुरिति ।। तत्कार्मुकात् रुद्रकार्मुकात् अन्यत् कोटिगुणोत्तरं पुनश्च वरं द्रष्टृपुरुषयोग्यतापेक्षया अनन्ताधिकमिति यावत् । रमाभिमन्यमानत्वात् । हरिहस्तयोग्यं यद्धनुस्तन्मया गृहीतम् । अतो हि अत एव विष्णुना मया गृहीतत्वादेव वैष्णवम् । इदं गृहाणेत्यर्थः । शिवधनुर्भञ्जनादहं हरिरिति यो गर्वः जातः अतो वैष्णवं इदं धनुर्गृहाणेत्यर्थः इति केचित् ।। ५०-५४ ।। इति हो पुस्तके अधिकः पाठः ।

**यदीदमागृह्य विकर्षसि त्वं तदा हरिर्नात्र विचार्यमस्ति ।**
**इति ब्रुवाणः प्रददौ धनुर्वरं प्रदर्शयन् विष्णुबलं हराद्वरम् ।।५१।।**

**सत्यधर्मीया–** गृहाणेत्यभणः गृहीत्वा किं कार्यमार्य मयेत्यतः फलितमभिलपति रामं राम इति वदति– **यदीति** ।। यदि यर्हि । इदं मद्धस्तविन्यस्तं धनुः । वरमिति काकाक्षिन्यायेनोभयत्राप्यन्वेति । इदं धनुर्वरमित्यन्वयः । यद्वा पूर्वप्रसक्तस्य धनुष इदं शब्देन परामर्शः । भो राम त्वं इदं धनुः आगृह्य प्रगृह्य विकर्षसि आकृष्टं करोषि । तदा तस्मिन् समये त्वं हरिः साक्षान्नारायणो भवसीति शेषः । कार्मुककर्षणानन्तरं अत्र तव भगवत्वविषये विचार्यं विचारणीयं नास्ति नैव वर्तते । त्वद्भगवत्वसंशयस्य पराशक्यशरासनाकर्षणत एव निरासादिति भावः । आगृह्यत्याङा धनुर्ग्रहणमात्रेण न भवति विकर्षणं किन्तु सति गुणारोपण इति तद्योत्यते । यद्वा कोटिगुणमिति पूर्वपद्यादाकृष्यते । आगृह्य कोटिगुणम्, कृत्वेति शेषः । विकर्षसि । तदा हरिरित्यादि पूर्ववत् । इति एवमादिप्रकारेण । 'ज्वलितिकसन्त' [२९०२.कौ] इति सूत्रस्थेतिशब्द आद्यर्थक इति कौमुदी । 'निपातानामनेकार्थत्वादिति भावः' इति तत्वसुबोधनी च । 'इति हेतुप्रकरणादि' इत्याद्यमरः । ब्रुवाणः व्यक्तं वदन् । भार्गव इति शेषः । रामं प्रति । रामायेति शेषः । रामं प्रति ब्रुवाणः रामाय धनुर्वरं धनुःश्रेष्ठं ददौ प्रदत्तवान् । एतावत्करणे किं प्रयोजनमित्यतो रामस्य रमारमणताप्रकटनमेवेत्याह– **प्रदर्शयन्निति** ।। विष्णुबलं विष्णोर्नारायणस्य बलं सामर्थ्यम् । हरात् तेन तद्बलश्च ग्राह्यम् । हरबलाद्वरमधिकं प्रदर्शयन् सन् । प्रेण दशस्यन्दननन्दनगोविन्दतायां सन्दिहानजनसन्दोहसन्देहोन्मूलनमूलकारणतां दर्शनस्य दर्शयति । प्रदर्शयन् ब्रुवाण इति सामानाधिकरण्येन दशरथतनयभगवत्वाज्ञानमज्जनकृपापारवश्येन ज्ञातसर्वस्वस्य भार्गवस्य प्रवृत्तिरिति द्योत्यते । 'विकर्षसि' इत्यत्र विना कार्मुककर्षणं शरसन्धानानन्तरमेव कार्यमिति भार्गवभावमाविष्क्रियत इति ज्ञेयम् । अन्यथा चकर्ष सन्धाय शरश्चेति जामदग्न्याननुशिष्टं दाशरथिर्वृथा शरसन्धानं व्यधादिति स्यात् । 'रामो रामाय' इति कण्ठतो निर्दिशन् तयोरभेदमिव धनुषो रामीयत्वमपि सूरिवरः सूचयामासेति ध्येयम् । विचारी अम् इति वा छेदः । विना गरुडेन चारः सञ्चारोऽस्यास्तीति विचारी गरुडारूढहरिः । यदीदमागृह्य विकर्षसि तदा त्वं विचारी गरुडगमनो हरिः भवसीति शेषः । अत्र त्वदितरप्रपञ्चेन त्वं प्रपञ्चोत्तम एवेति न प्रपञ्चमध्यस्थो इति भावः । हराद्वरं विष्णुबलं अस्तीति प्रदर्शयन् प्रददावित्यन्वयम् । अं भगवदात्मकं रामं प्रति ब्रुवाण इति वान्वयः । यद्वा यो विचारी हरिबलरुद्रबलप्रबलाबलताविचारवाञ्जनः । अत्र विचारकजनविषये हराद्वरं विष्णुबलं प्रदर्शयन्निति वान्वयः । वरं रघुवरं सर्ववरं रामं प्रतीति ब्रुवाणो रामः धनुः प्रददाविति वान्वयः ।।५१।।

**वरदराजीया–** एतद्धनुर्ग्रहणेन किं सिद्धं स्यादित्यत आह– **यदीदमिति** ।। इदं धनुर्यदि आगृह्य परिगृह्य विकर्षसि सज्जं करिष्यसि तदा तर्हि त्वं हरिरित्यत्र विचार्यं विचारणा नास्तीत्येवं ब्रुवाणः परशुरामो हरात्परं हरेर्बलं लोकस्य प्रकाशयन् धनुर्वरं धनुश्रेष्ठं प्रददावित्यर्थः ।।५१।।

**जनार्दनीया–** इदं शार्ङ्गधनुः । तदा तर्हि । त्वं हरिः । अत्र तव हरित्वविषये । हराद्धरबलादित्यर्थः ।।

**चट्टी–** एतद्धनुर्ग्रहणेन किं सिद्धं स्यादित्यत आह– **यदिति** ।। इदं धनुर्यद्यागृह्य विकर्षसि सज्जीकरिष्यसि तदा तर्हि त्वं हरिः अत्र तव हरित्वविषये विचार्यं नास्ति इति ब्रुवाणः परशुरामो विष्णुबलं हरात् हरबलादित्यर्थः । परं उत्तममिति लोकस्य प्रकाशयन् धनुर्वरं धनुःश्रेष्ठं प्रददावित्यर्थः ।।

**भारतश्री–** तदा हरिः नात्र विचार्यमस्ति हि यस्मात् इदं धनुः वैष्णवं अतो भवान् हरिरेवेति निर्णयो भविष्यतीति । हरात् वरं विष्णुबलं प्रकाशयन् ।।५१-५३।।

**ताम्रपर्णीया–** ।। **यदीदमिति** ।। एतेन एषोऽपि हरिरिति विवृतं ज्ञेयम् ।।५१-५४।।

**प्रगृह्य तच्चापवरं स राघवश्चकार सज्यं निमिषेण लीलया ।**
**चकर्ष सन्धाय शरं च पश्यतस्समस्तलोकस्य च संशयं नुदन् ।।५२।।**

**सत्यधर्मीया–** रामेणैवमुक्तो रामः किमतनुत तदनन्तरमित्यत आह– **प्रगृह्येति** ।। यदादावेव अकिञ्चित्पदव्यवधानेन 'प्रगृह्य' इत्यवदत् तेन किं राघवः शरासनमदीधरदुत नेति जनसन्देहः आदौ परिहृत इति मन्तव्यम् । यत् प्रददौ स्वस्मै भार्गवः तच्चापवरं स राघवः । रघोर्नृपविशेषस्य गोत्रापत्यम् । एतेन गोत्रनिक्षत्रीकरणोद्यतस्य भार्गवस्य क्षत्रियोत्तमरामसमरसमाह्वानं युक्तियुक्तमिति सूचितं भवति । लघेर्गत्यर्थात् 'लङ्घिबंह्योः...'[उणादि.२९] इति न लोपे लघुरिति भवति । 'वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यत' [वा] इति लघुरेव रघुः । 'स्त्री लघुः क्लीबं शीघ्रे कृष्णागरुण्यपि' इति त्रिकाण्डशेषः । [३.घान्तः.७३] 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागरुणि च पृक्कानामौषधौ तु स्त्री ।।' इति मेदिनी । [घद्विकम्.५] 'नृभेदे रघुरपि' इति कौमुदी । यद्वा तदिति धनुषः परामर्शः । कीदृशं तद्धनुरित्य आह– **अपवरमिति** ।। अपगतं वरमुत्तममन्यद्यस्मात्तत् तथा । कोदण्डकाण्डमिति यावत् । एतेन धनुर्वरमिति पूर्वमुक्तेः तदित्येतावता पूर्तौ पुनश्चापेति कुत इति शङ्का निरस्ता । दशस्यन्दननन्दन इदं व्याजेन कार्मुकमेव अलभतेत्यप्याह– **आपेति** ।। यत् धनुराप आप्तवान् । स राघवः तत् प्रगृह्येत्यन्वयः । यद्वक्ष्यति 'प्रदाय रामाय धनुर्वरम्' इति । इममेवार्थं रामेऽपरोक्षतः सति वक्तव्ये यमिति स इति पारोक्ष्यनिर्देशेन असूचयदिति ज्ञेयम् । शर्वशरासननिरासनगर्वतः पूर्वमजानन् जानकीजानिर्दधार धनुर्भार्गवतं पश्चात्पश्चात्तापमापेति किं नेत्याह– **चकार सज्यमिति** ।। सज्यं ज्या

मौर्व्या सहितं चकार कृतवान् । न तद्बहुकालेनेत्याह– **निमिषेणेति** ।। निमिषेण लवद्वयात्मकेन कालेन । 'प्रोक्तो निमेषस्तु लवद्वयम्' इति मानात् । पक्ष्मण उत्तानानुत्तानीकरणस्य कियान्कालोऽपेक्षितस्तावता कालेन वा । तदप्यनायासेनेत्याह– **लीलयेति** ।। विलासेन, अनायासेनेति यावत् । एतदर्थे बहुजनसाक्षी प्रमाणमित्याह– **समस्तलोकस्येति** ।। समस्तजनस्य पश्यतो अवलोकयतः सतः शरं बाणश्च चापवरमित्यावर्तते । चापवरं प्रतिसन्धाय संयोज्य । यद्वा पश्यतः समस्तस्य लोकस्य वरपरीक्षणाय मिलितलोकस्य संशयं नुदन् परिहरन् चकर्ष आकृष्टवान् । कार्मुकाकर्षणमेव लोकसंशयनिराकरणकारणमिति भावः । यद्वा 'षट्सु द्वितीया' इति स्मरणात् 'वाचं ब्रह्म' इत्यादिवच्च चापवरमिति सप्तम्यर्थे द्वितीया । ततश्च चापवरे शरं सन्धाय, पश्यतो रामस्येति शेषः । समस्तलोकस्य संशयं नुदन् चकर्षेत्यन्वयः । अथवा समस्तलोकस्य सर्वज्ञस्य । अपि च । समस्ता लोका यस्य तस्य । समस्तो लोको भुवनं यस्य तस्य वा । सम्यगेकविंशतिवारम् अस्तो निरस्तो लोकः क्षत्रियजनो येन तस्य वा भार्गवस्य पश्यतः सत इति वा । अथवा यः समस्तलोकस्य नुदन् । नुदति प्रेरयतीति स तथा । णुद प्रेरणे तुदादिः । सर्वप्रेरकः स रामः । पश्यतो भार्गवस्य शरं सन्धाय धनुश्चकर्ष यथा तथा संशयं च चकर्ष लोकस्येति शेषः । चः शरं संशयं च चकर्षेति समुच्चये । यद्वा चापवरं प्रगृह्य स राघवः । लघोर्भावो लाघवं तेन सहितः सलाघवः शैघ्र्यं वा सज्यं चकार । 'हस्ताल्लघुपराक्रमः' इति रामायणम् । सङ्ग्रहे च 'राघवो लाघवेनैव' इति । अथ निमिषेण तस्मिन् शरं सन्धाय लीलया चकर्षेति सज्जीकरणशरसन्धानकर्षणेति कार्यत्रयेऽपि 'सलाघव' 'निमिषेण' 'लीलया' इति पदत्रयेण अनायासतामीशस्य शंमुनिरसूचयत् । यद्धनुः । सर्वलोकस्य सर्वस्य रुद्रस्य लोक इव लोक, आधार इति यावत् । तस्य रामस्य संशयं सर्वदा सत्कर्मोपयुक्तत्वेन वा जयिष्णुत्वेन वा समीचीनः शयो हस्तस्तं आप । प्रददावित्युक्तेः । तद्धनुः प्रगृह्य । शिष्टं पूर्ववत् । वरं स्वापेक्षया उत्तमम् । नुदन् परिहरन् चकर्षेति वा । अथवा पूर्वं केनारोपितगुणं धनुरित्यत आह– **चकार सज्जमिति** ।। चकेन नित्यतृप्तेन पूर्णानन्देन हरिणा, आ सम्यक् रसन्ती टङ्कारशब्दं कुर्वन्ती ज्या यस्य तत् । चक चकि तृप्तौ । रस शब्दे । निमषेणेत्येतदत्राप्यन्वेति । तच्चापवरं प्रगृह्य तस्मिन् शरं सन्धाय गुणारोपणपूर्वकतामाधानस्य समा समसूचयत् ।। **प्रगृह्येति** ।। प्रो वा गुणारोपणसहितं ग्रहणमाह । शिष्टं पूर्ववत् । यद्वा धनुर्वरं प्रददौ तदा रामः कथं भवति वेति चिन्तया न शुशुभ इति किं नेत्याह– **सलाघव इति** ।। समनोज्ञत्वः अतिमनोहरः । अलक्ष्यीकृतधनुरिति मनोहर एवाभूदिति भावः । 'अथ संशयः सन्देहद्वापरौ' 'पञ्चशाखः शयःपाणिः' इत्युभयतश्चामरः ।।५२।।

**वरदराजीया–** स राघवो रामस्तच्चापवरं धनुःश्रेष्ठं प्रगृह्य निमिषेण निमिषमात्रेण लीलया सज्जं ज्यासहितमुन्नमितं चकार । न केवलं सज्जं चकार किन्तु सर्वजनस्य संशयं नुदन् परिहरन् शरं धनुषि सन्धाय चकर्ष च कर्णान्तमाकर्षयामासेत्यर्थः ।।५२।।

**जनार्दनीया**– सज्यं ज्यया सहितं आरोपितम् । पश्यतीति पश्यन् तस्य तथा । समस्तलोकस्य संशयं रामस्य हरित्वविषये संशयं नुदन् परिहरन् । समस्तलोकस्य पश्यतः सतः शरं सन्धाय । चाप इति शेषः । चकर्ष च ॥५२॥

**चट्टी**– ॥ **प्रगृह्येति** ॥ स राघवः श्रीरामः तच्चापवरं धनुःश्रेष्ठं प्रगृह्य निमिषेण लीलया सज्यं ज्यासहितं आरोपितं चकार । पश्यतीति पश्यन् तस्य समस्तलोकस्य संशयं श्रीरमस्य हरित्वविषये संशयं नुदन् परिहरन् समस्तलोकस्य पश्यतः सतः शरं सन्धाय धनुषेति शेषः चकर्ष च ॥५२॥

**प्रदर्शिते विष्णुबले समस्तशो हराच्च निस्सङ्ख्यतया महाधिके ।**
**जगाद मेघौघगभीरया गिरा स राघवं भार्गव आदिपूरुषः ॥५३॥**

**व्यासतीर्थीया**– सङ्ख्यता गणनेन ॥५३-५४॥

**वेदाङ्गतीर्थीया**– [समस्ततः परे] ॥५३॥

**सत्यधर्मीया**– रामो रामेण कृतं कार्मुकाकर्षणमवलोक्य अनन्तरमतनुत किमित्यत आह– **प्रदर्शित इत्यादिना** ॥ विष्णोर्व्याप्तस्य नारायणस्य बले । व्याप्त्यर्थकस्य विष् धातोः 'विषेः किच्च' [३२६. उणादि] इति नुः । स च कित् । ततो न पुगन्तगुणः । 'विष्णुर्नारायणः' इत्यमरः । महाधिको महच्च तदधिकं च । तस्मिन् विष्णुबल इति वदन् मोदमुनी रामस्य साक्षाद्विष्ण्वात्मकतां प्रत्यपादयत् । समस्तशः सर्वेषां द्रष्टृणाम् । सर्वप्रकारेणेति वा । आकर्षणादिना धनुषोत्यन्ताधिकत्वेन प्रदर्शिते सति । प्रेण दर्शनस्य संशयनिवर्तकत्वद्वारा विष्णुश्रेष्ठतानिर्णयकारणत्वं द्योत्यते । अवधिमाह– **हरादिति** ॥ हरबलादित्यर्थः । समस्तशः सर्वजगतोऽपि रमाब्रह्मादेरपि प्रदर्शिते सतीति वा । 'महाधिक' इत्युक्तिमात्रात् न सावधिकत्वशङ्का निराकृता स्यादित्यतस्तामपाकरोति– **निःसङ्ख्यतयेति** ॥ निर्गता सङ्ख्या यस्मात्तत् तस्य भावो निःसङ्ख्यता तया आनन्त्येन । किमभूदनन्तरमित्यत आह– **जगादेति** ॥ आदिपूरुषः । आदिः सर्वप्रथमः आदिः कारणं वा । स चासौ पुरुषः पुरुषश्च सः । स भार्गवः परशुरामः । मेघौघगभीरया मेघानां जलदानामोघः समूहः तद्वत् । तेन तद्ध्वनिर्लक्ष्यते । मेघध्वनिवद्गभीरया गम्भीरया गिरा वाण्या जगाद व्यक्ततयोवाच । गिरा जगादेति 'कुरुपाण्डव' 'सकीचकैर्मारुतपूर्णरन्ध्रैः' इत्यादिवज्ज्ञेयम् । गम् गतौ सम्पदादि क्विप् गीः । गाङ् गतौ । गम्लृ गतौ वा अस्मात् गभीरादयश्चेति गभीरगम्भीराविति निपाताद्गभीरेति भवति । मिह सेचने । पुगन्तगुणे हस्य च घे मेघ इति भवति । 'गीर्वाग्वाणी सरस्वती' 'निम्नं गभीरं गम्भीरं' 'अभ्रं मेघो वारिवाह' इति चामरः । 'ब्रह्माणी वचनं वाचा जल्पितं गदितं गिरा' इति शब्दार्णवात् । गिरेति टाबन्तोऽपिशब्दः 'टापं चैव हलन्तानाम्' इति च ।

'ओघः पुमान् प्रवाहे च समूह' इति शब्दार्णवः । 'ओघः पूर्वोऽथ वर्गश्च' इत्यनेकार्थध्वनिपदमञ्जर्याम् । यद्वा निःसङ्ख्यतया निर्गतं सङ्ख्यं रणो यस्मात् स तथा तस्य भावस्तया । निर्गतरणत्वेन निमित्तेन हरान्महाधिके निरवधिके सति समस्तशः सर्वप्रकारेण गणनायाश्च 'सङ्ख्या स्यात् सङ्ख्यं युद्धे' इति दर्पणः । अथवा विष्णुबलस्वरूपमाह– **समस्तश इत्यादिना** ।। समस्तशः सर्वैर्ब्रह्मादिभिः कर्तृभिः मेघौघगभीरया गिरा वा निःसङ्ख्तया आनन्त्येन प्रदर्शिते । गिरा वेदवाण्या वा हरात् महाधिके सतीत्यन्वयः । अथवा यः समस्तशः सर्वैः मेघौघगभीरया गिरा आदिपूरुष इति । आस, स्तुत इति शेषः । यद्वा निःसङ्ख्यतया निर्विचारेण, अथवा द्रष्टॄणां सर्वेषां निःसङ्ख्यतया निर्गता सङ्ख्या ज्ञानं यस्मात्तत्तथा तस्य भावस्तया, मन्दमतिकत्वात्तेषां निदर्शनैः प्रदर्शनमावश्यकमिति भावः । अथवा मेघौघगभी मेघानां ओघं गच्छतीति सा च सा भा कान्तिस्तद्वद्भा अस्यास्तीति स तथा । राम विशेषणम् । मेघसङ्घमेलने च एकदा या कान्तिः तत्समनीलकान्ती राघव इति भावः । ईः सकलप्रेरकरमाप्रेरको वा । या रमया कर्त्र्या गिरा वाचा समस्तशः पूर्णसुखः आदिपूरुष इति प्राक्प्रदर्शिते विष्णुबले च इदानीं हरात् रुद्रादत्यन्तमधिके सति । न केवलं हरादपि तु याः रमायाः सकाशाच्च । 'निःसङ्ख्यतया समस्तशः आदिपूरुष' इत्यध्याहारः । इति गिरा वेदः यं राघवं जगाद तं प्रति भार्गवो जागादेति वा । 'सङ्ख्या चर्चा विचारणे' इत्यमरः । 'सङ्ख्यावान् पण्डितो बुध' इति केशवः ।।५३।।

**वरदराजीया–** एवं समस्तशः समस्तात् रुद्राच्च महाधिके अभ्यधिके विष्णुबले निःसङ्ख्याकतया अगणितत्वेन रामेण दर्शिते सति आदिपुरुषो पुराणपुरुषो भार्गवो रामो मेघौघगभीरया मेघसन्दोहध्वनिवत् गम्भीरया वाचा राघवं रामं प्रति जगादेत्यर्थः ।।५३।।

**जनार्दनीया–** समस्तशः रमादिभ्यः हराच्च । निःसङ्ख्यतया अनन्तत्वेन महाधिके अत्युत्कृष्टे विष्णुबले प्रदर्शिते सति । रामेणेति शेषः । भार्गवः मेघानां ओघवत् गभीरया गम्भीरया गिरा वचसा राघवं जगाद ।।५३।।

**चट्टी–** समस्तशः सर्वस्माद् हरात् रुद्राच्च निस्सङ्ख्यतया अनन्तत्वेन महाधिके अत्युत्कृष्टे विष्णुबले प्रदर्शिते सति श्रीरामेणेति शेषः । आदिपुरुषः पुराणपुरुषः सः भार्गवो रामः मेघौघगभीरया मेघसन्दोहध्वनिगभीरया राघवं श्रीरामं जगाद ।।५३।।

**अनन्तभट्टीया–** हरात् हरबलात् । हरादाकृष्य एतद्धनुः [प्रकर्ष्य] प्रकाशयन्नित्यर्थः ।।५३।।

**अलं बलं ते जगतोऽखिलाद्वरं परोऽसि नारायण एव नान्यथा ।**
**विसर्जयस्वेह शरं तपोमये महासुरे लोकमये वराद्विभोः ।।५४।।**

**वेदाङ्गतीर्थीया–** अलं परिपूर्णम् । इह मयि स्थिते तपोमये तपःप्रधाने । लोकमये लोकव्याप्ते ।।५४।।

**सत्यधर्मीया–** किं जगाद अगाधसामर्थ्यं रामस्य रामः समालोक्येत्यत तत्प्रकारमेव विविच्याह– **अलमिति** ।। हे रामेति शेषः । ते तव बलं सामर्थ्यं अलं पर्याप्तं, पूर्णामिति यावत् । यद्वा अलं इतोऽप्यधिकं वर्तते तन्मा प्रदर्शय । इयतैव हरतदितरवरता सिद्धेः अधिकप्रदर्शनभाविप्रयोजना-भावादलमिति भावः । अखिलात् समस्ताज्जगतो रमादेः वरमुत्तमं तस्मात्त्वं परः श्रेष्ठः नारायण एव । एवकारो विशेष्यसङ्गत इति भवत्यन्ययोगव्यवच्छेदक इति नान्यथेति अधिकमिति चेत् सत्यं तदवधारणार्थविवरणरूपमिति नाधिकमिति मन्तव्यम् । यद्वा पर एवेति विशेषणसङ्गतः । ततश्च नारायणे परत्वायोगो नास्तीति तदर्थः । अन्यः परोऽस्ति किमित्यतो नान्यथेति तदितरपरतानिषेधकमिति सार्थकं नान्यथेतीति भावः । अथावा त्वं नारायणः । परो ना इतरः पुरुषः अन्यथा न । नारायण इति भावः । नेदं वचनेन प्रयोजनं शरासने शरश्च संयोजिते न अमोघो भवितुं युक्तो विना लक्ष्यविध्वंसात् त्वं तु न मदितर इति न लक्ष्यतार्ह अतो भवितव्यमेतद्धतिपात्रेणेतरेणेति राममानसिकं भावं विदित्वा भार्गवोऽवददित्याह– **विसर्जयस्वेति** । तापोमये तपःप्रचुरे लोकमये, तपसा करणेन लोके व्याप्ते । महासुरे महादैत्ये । महासुर इति वध्यत्व उपपत्तिमाह । असेरुरनि प्रज्ञाद्यणि च असुर आसुर इति च भवतः । कुतो घातुकस्य लोकमयतेत्यतो हेतुमाह– **विभोर्वरादिति** ।। विभोर्व्याप्तस्य समर्थस्य वा वरात् । न केनापि वध्यो भव भव च लोकव्याप्त इत्येवं रूपाद्वरात् । 'विभोः' इत्यनेन इतरापरिहार्यत्वं वरस्य असूचयत् । नातिदूरं वर्तते स इत्याह– **इहेति** । मदन्तर्वियमाने । 'स्वेच्छयान्तःकृतं मया' इति श्रीसङ्ग्रहरामायणोक्तेः । शरं बाणं विसर्जयस्व मुञ्च । सृज विसर्गे । यद्यपि सृजिः प्रच्छादिपरस्मैपदिषु पठितः । विसर्गार्थस्य सृजेर्वा 'विभाषा सृजिदृशोः..' [२४०४.कौ] इति वैकल्पिको गुणः । [रूपम्] । अतो णिचि विसर्जय । यद्वा षर्जेऽर्जनार्थस्य धातूनामनेकार्थत्वाद्विसर्जनार्थकत्वम् । विसर्जय हे स्वेह स्वेच्छ स्वरूपभूता ईहा चेष्टा यस्येति । उभयत्रापि स्वतन्त्र इत्यर्थः । अथवा हे स्व हरे । 'परःस्वो हरिरुद्दाम' [भा.ता.१०.] इति वचनात् । इह मयि । यद्वा खिलात् खिलो दुर्बलो नेत्यखिलः महान्, तस्मात् जगतः प्राणात् मुख्यप्राणादित्यर्थः । समस्तश इत्यावर्तते । रुद्राद्याः अलमत्यन्तं बलं ते सञ्चरन्ति । 'वल वल्ल संवरणे सञ्चरणे' इति धातुव्याख्यानात् । तस्मादपि परोऽसि । नामाह– **नारायण इति** । नाराः न विद्यन्ते अराः दोषा येषां ते नाराः । नसमासोऽयम् । सन्तः । देवादय इति यावत् । ते यस्मादित्यध्याहारः । अलं बलं ते चेष्टावन्तो भवन्ति स वायुः यण एव । ई रमा च अः नारायणश्च ताभ्यां णो बलं यस्य स तथा । 'णकारो बलम्' इति श्रुतेः [ऐ.उ.२प्र.८अ.७ब्रा.३] । णो निर्वृतिः मोक्षसुखं वा याभ्यां स तथा । 'णश्च निर्वृतिवाचकः' [उद्योग.६९.५] इति मानात् । विभोः

समर्थात् वरादुत्तमाद्वा वायोः परोऽसि उत्तमोऽसि । यद्वा जगतः प्राणादखिलात् अखिलान् अतयति सन्ततं गमयतीति स तथा । हेतुगर्भं विशेषणम् । अखिलप्रेरकत्वेन निमित्तेन प्राणात् परोऽसि । अथवा असिना वैरिनिरासकहेतुत्वादसिर्बाणादि तेन ते बलमलमिति । परः त्वदितरः अरायणो दोषाश्रयः । अन्यथा प्रकारान्तरं नैवेत्यर्थः । 'दोषारच्छिद्रशब्दानां पर्यायत्वम्' इति मानात् । ज्ञानाश्रयत्वात् सकलगुणाश्रयत्वाद्वा मुक्ताश्रयत्वाद्वा वेदवेद्यत्वेन तदयनत्वाद्वा दोषानाश्रयत्वाद्वा ना रमणं येनेति वा अक्षीणगुणत्वाद्वा नारायणः । 'पूर्वपदात्' इति णत्वम् । अरायण इति पदपक्षे तु 'अट्कुप्' [१९७.कौ] इति णः । यस्मादखिलात् सर्वे बलं ते [जगत् इति 'द्युतिगमिजुहोत्यादीनां द्वेचेत्युत्पादितस्य नुम् । जगत् शरम् । शेषे षष्ठी । सा च 'पदार्थस्य स्वरूपं' 'राहोश्शिर' इतिवत्तादात्म्ये । ततो जगत इति प्रथमाबहुवचनम् । प्राणाः बलं ते प्राणाः शरमिति वान्वयः । प्राणनार्थकबलतेर्वा बलन्त इति चेष्टावन्तो भवन्तीति तदर्थः ।] तदात्मकं शरमिति वा । 'पञ्चात्मको मारुत एव बाण' इति श्रीमद्वचनाद् अमोघत्वं शरस्य ज्ञेयम् । यथोक्तम् । रामायणे [बा.का.७५-८] 'न ह्ययं वैष्णवो दिव्यः शरः परपुरञ्जयः । मोघः पतति वीर्येण बलदर्पविनाशनः ।।' इति ।

यद्वा । लोकं मदावासस्थानं माहेन्द्रं अहं अये गच्छामि । एकत्रैकदिनं न वसामीति कश्यपं प्रति प्रतिज्ञाकरणात् त्वरयाहमय इति वदतीति भावः । यद्वा जगतो भूम्यादिलोकस्य विभोरधिकस्य कश्यपस्य लोकं मदीयं विसर्जयस्व त्यजेति वचनादिति शेषः । अये गच्छामि । यथोक्तं कविना [बा.का.७६.१३-१५]'कश्यपाय मया दत्ता यथापूर्वं वसुन्धरा । विषये मे न वस्तव्यं इति मां कश्यपोऽब्रवीत् ।। सोऽहं गुरुवचः कुर्वन् पृथिव्यां न वसे निशाम् । मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ।।' इति । हे अज उत्पत्तिरहित राम त्वं परोऽसीति गतो मत इति वा ।।५४।।

**वरदराजीया–** किमिति तत्राह– **अलमिति** ।। अखिलात् सर्वस्मात् जगतो वरमुत्तमं ते तव बलमलं परिपूर्णं अत एव परो नारायणोऽसि । अन्यथा अन्यप्रकारो नास्तीत्यर्थः । इह मयि स्थिते विभोर्ब्रह्मणो वरात् तपोमये तपःपूर्णे लोकमये लोकव्याप्ते अत एव महासुरे शरं बाणं विसर्जयस्व विमोचयस्व ।।५४।।

**जनार्दनीया–** किमिति । अखिलाज्जगतः वरं उत्तमम् । ते बलं अलं पूर्णम् । अत एव परः सर्वोत्कृष्टः । अत एव नारायणोऽसि । अन्यथा न जीवसङ्घो न भवसि । इह ममोदरस्थतपोमये तपःप्रधाने विभोः ब्रह्मणो वरात् लोकमये लोकव्याप्ते । सर्वत्र विद्यमान इत्यर्थः । अत एव महासुरे शरं विसर्जयस्व मुञ्च ।।५४।।

**चट्टी**– किमित्यत्राह– **अलमिति** ।। अखिलाज्जगतो वरमुत्तमं ते बलमलं पूर्णमेव । अत एव वरः सर्वोत्कृष्टः नारायणोऽसि । अन्यथा न जीवसङ्घवन्न भवसि । इह ममोदरस्थतपोमये तपःप्रधाने विभो ब्रह्मणो पराल्लोकमये लोकव्याप्ते सर्वत्र विद्यमान इत्यर्थः । अत एव महासुरे शरं विसर्जयस्व विमोचयस्व ।।५४।।

**अनन्तभट्टीया**– वलं वरमित्यन्वयः । विभोः ब्रह्मणः । लोकमये प्राप्तलोके ।।५४।।

**भारतश्री**– अलं तव विष्णुत्वज्ञापने अनेनैव निदर्शनेनालम् । तपोमये प्रचुरतपसि । लोकमये सर्वलोकेषु सर्वजनेषु च स्थिते । विभोः चतुर्मुखस्य ।।५४।।

**गूढवाक्यार्थ**– तपोमये तपःप्रचुरे बहुतपोवतीति यावत् । लोकमये लोकाभिमानिनि लोकव्याप्ते वा । लोकतां लोको लोकवान् तस्य भावो लोकता ताम् । लोकमयत्वमिति यावत् ।।५४।।

**पुराऽतुलो नाम महासुरोऽभवद्वरात्स तु ब्रह्मण आप लोकताम् ।**
**पुनश्च तं प्राह जगद्गुरुर्यदा हरिर्जितः स्याद्धि तदैव वध्यसे ।।५५।।**

**व्यासतीर्थीया**– लोकतां लोकव्याप्तत्वम् ।।५५-५७।।

**वेदाङ्गतीर्थीया**– तदेव विविच्याऽह– **पुराऽतुलो नामेति** ।। जगद्गुरुर्ब्रह्मा ।।५५-५६।।

**वादिराजीया**– अर्शवानर्श इतिवत् लोकवान् लोकः तस्य भावो लोकता ताम्, लोकमयत्वमिति यावत् । आप । हि लोकप्रसिद्ध्या यदा हरिर्जितः स्यादिति सम्बन्धः । वस्तुगत्या हरेर्न क्वापि पराजय इति ब्रह्मणो हृदयम् ।।५५-५६।।

**सत्यधर्मीया**– राम किन्नामा स तामसः कियवदवधिकं तल्लोकमयत्वमित्यत उभयमपि दर्शयति– **पुरेति** ।। पुरा पूर्वम् । अतुलोनाममहासुर इत्येकं पदम् । अतुल इति उत्कृष्टं नाम यस्य स चासौ महासुरश्च । न विद्यते तुला यस्य सोऽतुलः इति निर्वचनलभ्यस्वसमानशून्यत्वस्य निरवधिकत्वरूप-मुत्कृष्टत्वं उशब्दार्थः । नाम नामधेयम् । अथवा प्रथमा तृतीयार्थे । नाम नाम्ना अतुल इति तदन्वयः । अथवा अतुलः नामप्रसिद्धिः तेन तन्नामत्वं लक्ष्यते । अभवदासीत् । स तु स एव दैत्यः ब्रह्मण चतुर्मुखस्य वरात् लोकतां लोकमयतां प्राप प्रकर्षेणाप । अथवा लोकमय इत्यावर्तते । लोकमयोऽभवदिति तदन्वयः । जगद्गुरुः जगदुपदेशकः जगत्पिता वा । जगतो महान् वा गृह्णात्युपदिशतीति गुरुः । 'गृ शब्दे' 'कृग्रोरुच' [उणादि. २४] इति कुः । उश्चन्तादेशः । 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके । अलघौ दुर्जरे चापि...।।' इति हैमः । तल्लोकमयं प्रति पुनर्वरदानानन्तरं प्राह– **अब्रवीत्** ।। 'ब्रूञ् व्यक्तायां वाचि' इत्यतो लिटि 'ब्रुवः पञ्चानामादित....[२४५०.कौ] इत्याहादेशः । किमर्थं लोकमयतां प्रदाय किमर्थं

पुनरवदत् पितामह इत्यतो जगदन्तकोपद्रवभीतजगद्वचनादिति वाह– **जगदिति** ।। जगत् । आपलोकतां अपकृतो लोका येन सोऽपलोकः अतिशेयेनापलोको हि आपलोकः तस्य भाव आपलोकतां लोकापकारकारित्वं प्राह । हे स्वामिन् त्वया वरो दत्त इति सर्वानसौ गर्वतोऽसुरो बाधते अत एतत्प्राप्तः कृपातः पातः कथं भवेत्तथा कुर्विति प्रार्थनामुखेनेति प्रः सूचयति । पुनस्तद्वचनानन्तरं गुरुर्ब्रह्मा तश्च प्राहेति समुचिनोति । प्राह । तदेव विशदयति– **यदेति** ।। हिरेवार्थः । यदा हि यदैव हरिः विष्णुः जितः पराजितः स्यात् भवेत् । तदैव तत्काल एव वध्यसे । वध हिंसायां ततः अस्य थासः से च वध्यस इति भवति । वधं प्राप्स्यसि । 'किं यत्तत्' इत्यादिना काले विवक्षितयत्तच्छब्दात् दादेशः । अतुलः अनामा महासुर इति वा । नामः प्रह्वीभूतो नेत्यनाम स चासौ महासुरश्च । 'णमु प्रह्वत्वे शब्दे च' इति णमुधातोर्घञि नाम इति भवति । यद्वा कदापि परः पराजयवान्नेति सम्मतो मतस्य वरस्य वर इति हिराह । अथवा विष्णोरपराजितत्वे प्रमाणप्रसिद्धिं वा हिराह । हितदा एवेति वा पदम् । हे हितदा हितं ददातीति स तथा तत्सम्बुद्धिः । स्वोक्तं अङ्गीकारयितुं ब्रह्मा हितद इति सम्बोधयामासेति बोध्यम् । यद्वा हे हितदा लोकहितखण्डक । एतेन वध्यस इत्यभिहिते वधे हितदेति लोकाहितकर्तृत्वादिति चोपपत्तिः सूच्यते ।।

**वरदराजीया–** विभोर्वरं विविच्य दर्शयति– **पुरेति** ।। पुरा पूर्वं अतुलो नाम प्रसिद्धो महांश्चासावसुरश्चेति स तथा अभवदासीत् । स तु ब्रह्मणो वरात् लोकतां लोकव्याप्तत्वं लोकमयत्वमिति यावत् । आप प्राप । जगद्गुरुः ब्रह्मा पुनश्च तं महासुरं आह किमिति । यदा हरिर्जितः स्यात् तदैव वध्यसे वधं प्राप्स्यसीति प्राहेति पूर्वेणान्वयः ।।५५।।

**जनार्दनीया–** विभोर्वरादित्युक्तं विशदयति– **पुरेति** ।। लोकतां लोकव्याप्तत्वम् । जगद्गुरुर्ब्रह्मा । तं असुरम् । जितः पराजितः । स्यात्तदैव वध्यसे वधं प्रयास्यसीति पुनः प्राह यतः ।।५५।।

**चट्टी–** विभोर्वरादित्युक्तं विशदयति– **पुरेति** ।। पुरा पूर्वं अतुलो नाम प्रसिद्धः महासुर अभवदासीत् । स तु ब्रह्मणो वराल्लोकतां लोकव्याप्तत्वं लोकमयत्वमिति यावत् । आप । जगद्गुरुः ब्रह्मा तमसुरं प्रति यदा हरिः जितः पराजितः स्यात् तदैव वध्यसे । वधं प्राप्स्यसीति पुनः प्राप । यतः जगदन्तकस्य लोकविनाशकस्य वधार्थं सर्वाजितोऽहमपि जितवद्व्यवस्थितोऽस्मीति भार्गवेणेरिते सति स राघवः श्रीरामः जगदन्तके लोकमये असुरे बाणं मुमोच ।।५५-५६।।

**अनन्तभट्टीया–** उक्तं विशदयति– **पुरेति** ।। लोकतां लोकप्राप्तिम् । जगद्गुरुर्ब्रह्मा हि निश्चय इत्यर्थः ।।

**ताम्रपर्णीया–** लोकतां अर्श आद्यजन्तोऽयम् । लोकवत्तां लोकमयत्वमिति यावत् । ब्रह्मणो वरादित्युपलक्षणम् । रुद्रवरादित्यपि ग्राह्यम् । तदुक्तं गीताभाष्ये 'पूर्तेरचिन्त्यवीर्योऽयं यस्तु दाशरथिः स्वयम् । रुद्रवाक्यमृतं कर्तुमजितो जितवत्स्थितः ।।' इति । प्रमेयदीपे च 'ब्रह्मवाक्यवत्

रुद्रवाक्यमप्यतुलं प्रत्यस्तीत्यतो रुद्रवाक्यमित्युक्तम्' [गी२.७२] इति । नरहरितीर्थीये तु 'पूर्णत्वाद्यचिन्त्यवीर्यो भार्गवरामः । यतश्च स्वयमेव तु दाशरथी रामः स कथं दाशरथिना पराभूतः । किन्तु अजित एव । जितवत् स्थितः । रुद्रवाक्यमृतम् । यदा हरिः जितस्तदैव बहिर्गतस्सन् वध्यसे । अन्यथा रुद्रवाक्यं मृषा भवतीति हि ब्रह्मवाक्यमतुलं प्रति । अतो अन्यदपि[अन्यथापि] तं निरासयितुं समर्थोऽपि भगवान् जितवद्भूत्वैव निस्सारयामासेत्यविरोधः' इत्युक्तम् । तदाज्ञया रामोदरगः तदाज्ञया बहिर्गत इति सम्बन्धः कृतो भवति ।।५५-५७।।[१]

**भारतश्री–** उक्तं विशदयति– **पुरेति** ।। भार्गवरामे असुरावस्थानस्य कारणमाह– **पुरेति** ।।५५-५७।।

**भावचन्द्रिका–** तुशब्दो अप्यर्थे । ब्रह्मणः रुद्रस्यापि । 'रुद्रवाक्यं ऋतं कर्तुं अजितो जितवत्स्थितः ।' इति गीताभाष्ये ।।५५-६१।।

**गूढवाक्यार्थ–** ब्रह्मणो वरादिति उपलक्षणमेतत् । रुद्रवरादित्यपि ग्राह्यम् । अत एव प्रमेयदीपिकायां रुद्रवाक्यमृतं कर्तुमजितो जितवद् स्थित इति भाष्यव्याख्यावसरे ब्रह्मवाक्यवद् रुद्रवाक्यमप्युतलं प्रत्यस्तीत्यतो रुद्रवाक्यमित्युक्तमित्युक्तम् । जगद्गुरुश्चतुर्मुखः ।।५५।।

**अतो वधार्थं जगदन्तकस्य सर्वाजितोऽहं जितवद्व्यवस्थितः ।**
**इतीरिते लोकमये स राघवो मुमोच बाणं जगदन्तकेऽसुरे ।।५६।।**

**सत्यधर्मीया–** 'हरिर्जित' इत्यादिचतुराननवचनं न च मुधा विधातुं योग्यं तथैव न सर्वथा सर्वाजितस्य परपराजयो योग्यः इति मत्स्थितिः रक्षणीया । एवं जगच्च रक्षणीयं वध्यश्चातुल इति सञ्चिन्त्य सर्वानुगुण्याय इदमचारि चित्रचरित्रेणेत्याह– **अत इति** ।। अतः हरिपराजये त्वं वध्यस इति मत्पराजयस्य तद्वधनिमित्तत्वेन विधिना अभिहितत्वरूपैतद्धेतोः । अहं जगदन्तकस्य जगतो अन्तको नाशकस्तस्य । अन्तं करोति अन्तयतीति ण्यन्ताद्वा ण्वुल् । अन्तक इव यम इवान्तको अन्तकः । 'वैवस्वतोऽन्तक' इत्यमरः । वधार्थं नाशाय । जगदन्तकस्येति संहारे अरेरचिरेणोपपत्तिः सूचितेति मन्तव्यम् । जितवत् जितेन पराजितेन तुल्यं जितवत् । 'तेन तुल्यं क्रिया चेद्वतिः' [१७७८.कौ] इति वतिः । व्यवस्थितोऽस्मि । आवयोरैक्यात् न इत्थमवस्थितिः अवमानहेतुरिति व्यवौ सूचयतः । सर्वदा पराजित एव भवानिति शङ्कामुन्मूलयितुं स्वस्वरूपं निरूपयति– **सर्वाजित इति** ।। सर्वैः सर्वस्मिन्

---

१. ब्रह्मणो वरादित्युपलक्षणम् । रुद्रवरादित्यपि ग्राह्यम् । तदुक्तं गीताभाष्ये– 'पूर्तेरचिन्त्यवीर्योऽयं यस्तु दाशरथिः स्वयम् । रुद्रवाक्यमृतं कर्तुमजितो जितवत्स्थितः ।' इति । प्रमेयदीपे च 'ब्रह्मवाक्यवत् रुद्रवाक्यमप्यतुलं प्रत्यस्तीत्यतो रुद्रवाक्यमित्युक्तम्' इति । रुद्रस्तु स्वयं साक्षात् दाशरथिः स भार्गवो जितवत् स्थितः इति योजनायां न विरोधः ।। ५५-५८ ।।

काले देशे जितः पराजितो नेति स तथा । येन केन च यस्मिन् कस्मिन् वा काले यत्र क्वापि देशे पराजयः स्यादिति शङ्कैव विग्रहप्रदर्शनेन निरस्तेति ज्ञेयम् ।। **इतीरिते** ।। एवं प्रकारेणाभिहिते सति । भार्गवेणेति शेषः । स एवमुक्तो राघवः । यः शरं सन्धाय चकर्षेति पुरोदीरितं स वा । जगदन्तके पुनरनुवादेन तेन प्रजापतेर्वरतो महासुरेण महोपद्रवो दत्तः प्रजाभ्य इति सूचयति । बाणं शरं मुमोच अमुचत् । इदमुचितं जनहिंसाविहारस्येति तज्जातिमाह– **असुर इति** ।। हे अन्तकस्य अन्तकान् नाशकान् स्यति नाशयतीति स तथा तत्सम्बुद्धिः । षो अन्तकर्मणि । श्यन्विकरणस्थस्य अचि स्य इति भवति । अन्तकान्तकत्वं त्वत्स्वभाव इति मदुदितकरणं तवोचितमिति भावः । यद्वा अन्तकस्येति चासुरसंहारासमर्थतां निरस्यति । न केऽपि लोके लोका लुलोकिरे त्वद्विजयमित्यतो अहमेतादृश इति स्वस्वरूपं रामो रामं प्रति निरूपयतीत्याह– **सर्वाजित इति** ।। सर्वे आ इतरनैरपेक्ष्येण जिताः पराभूता येन सः । पराजितसर्व इत्यर्थः । आहितादित्वात् परनिपातः । अथवा अन्तक अ इति छेदः । हे आ विष्णो राम । त्वं सर्वाजितः सर्वेण शर्वेण आजी रणः ततः तन्निमित्तादन्तकसि यमवदाचरसि । किं विषय इत्यत आह– **जगदन्तक इति** ।। जगत्संहारकविषये त्वं यमसम इत्यर्थः । जगत् व्यव विशेषतो रक्षय । अस्मिन्पक्षे स्थित इति पदम् । अथवा शर्वस्य रुद्रस्य आजिः रणस्तदभावो सर्वाजिः ततः रुद्रनिर्युद्धत्वतो हेतोः । 'अज गतिक्षेपणयोः' इत्यतो 'अज्यतिभ्यां च' इति इण् [५८०.उणादि] तत आजिरिति भवति । 'समक्ष्मांशे रणेऽप्याजिः' इत्यमरः । इतीरिते सति । एवमन्वये जगदन्तक इति न पुनरुक्तं भवतीति ध्येयम् । सर्वाजितोहमित्येकं वा पदम् । सर्वो वा आजौ तोहं अर्दनं यस्मिन् कर्मणि तद्यथा भवति तथा अवेति वा । तुहिर् दुहिर् उहिर् अर्दने । अहमिति शेषः । न केवलमेतस्माज्जनानव अपि तु पुरतोऽपि सर्वदुर्वत्मदैत्यार्दनेनापि अवेति भावः । अभिभवार्थात् जेः क्ते जितः, 'द्यतिस्यतिमास्थामित्ति किति' [३०७४.कौ] इति ष्ठाधातोः इकारे तादेशे स्थित इति च भवतः ।।५६।।

**वरदराजीया–** अतो जगदन्तकस्य लोकविनाशकस्य वधार्थं सर्वैरजितोऽहं जितवत् पराजितवत् अवस्थितोऽस्मीति भार्गवेणेरिते सति स रामो जगदन्तके असुरे बाणं मुमोच ।।५६।।

**जनार्दनीया–** अतः जगतः अन्तकस्य वैरिणः । जितवत् पराजितवत् व्यवस्थितोऽस्मि ।।५६।।

**पुरा वरोऽनेन शिवोपलम्भितो मुमुक्षया विष्णुतनुप्रवेशनम् ।**
**स तेन रामोदरगो बहिर्गतस्तदाज्ञयैवाशु बभूव भस्मसात् ।।५७।।**

**वेदाङ्गतीर्थीया–** तपोमय इत्युक्तं विवृणोति– **पुरा वरोऽनेनेत्यादिना** ।। तदाज्ञया भृगूत्तमाज्ञया ।।५७।।

**वादिराजीया–** तदाज्ञया उग्रः शरो मदुदरं प्रत्यायाति त्वं बहिर्गच्छेति परशुरामाज्ञया रामोदरगो बहिर्गत एव । तेन राघवबाणेनाशु भस्मसाद्बभूव । मुमुक्षया विष्णुतनुप्रवेशाख्यवरात् रामोदर एव नाशे मोक्षोऽपि स्यादिति मत्वा उपायाद्बहिर्निष्कासित इति भावः ।।५७।।

**सत्यधर्मीया–** कथं अन्धतमसवासयोग्यस्य अयोग्यस्येव दामोदरोदरमन्दिरता इत्यतो कारणान्तरत इतीरयति– **पुरेति** ।। पुरा पूर्वम् । अनेन मदुदरवासित्वेन सन्निहितेन वरः देवापेक्ष्यः । 'देवात् वृते वर' इत्यमरः । शिवेन रुद्रेण उपलम्भितः प्राप्तः निष्पादितो वा । 'डुलभष् प्राप्तौ' अस्मात् सोपसर्गात् 'लभेश्च' [२५८२.कौ] इति नुमि(रधादि ईटि?) क्ते चोपलंभित इति भवति । निषेधस्तु शब्लिँड्विषय इति भवति नुम् । ननु 'तपोमये वरमदात् ब्रह्म' इति पाद्मे ब्रह्मादाद्वरमिति '....शिववरात् । अतुलो यो लोकमयो बाधते लोकम् ।।' इति नृसिंहपुराणे रुद्रवरादिति च प्रतीयते अतः कथं निर्णय इति चेत् । सत्यम् । तपोमयत्वलोकमयत्वविषये ब्रह्मवरः, हरिशरीरप्रवेशविषये शार्व इति तपोमयत्वात्तपोमयः लोकव्याप्ततया च लोकमयः अतुल इति चेति नामत्रयं च तस्येति 'स तु ब्रह्मण आप लोकताम्' 'तपोमये लोकमये' 'पुरातुलो नाम' 'पुरा वरोऽनेन शिवोपलम्भित' इति श्रीमदुक्तेः विषयभेदेन पुराणयोरर्थो ज्ञेय इति न विरोध इति ध्येयम् । किंरूपो वर इत्यतस्तमाह– **विष्णुतनुप्रवेशनमिति** ।। विष्णोः व्याप्तस्य नारायणस्य तनुः शरीरम् । 'तनु विस्तारे' अस्मात् 'भृमृशीतृचरित्सरितनिध-निमिमस्जिभ्य उः' [उणादि.७] इति उः । तनुः स्वल्पम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । तनौ प्रवेशनं प्रवेशः । विशते भावे ल्युः । ततः पुङन्तगुणः । किमिति भगवदुदरप्रवेशो असुरेण वरत्वेन वृतः इत्यतो मोक्षस्तदपेक्षितः स च भगवज्ज्ञानप्रसादसाध्यः । तौ च न विना भगवत्सहवासतो लभ्याविति भ्रान्तेन अकारि कार्यमित्याह– **मुमुक्षयेति** ।। मोक्षो मे भूयादितीच्छया । मुच धातोः सनि 'सन्यङोः' [२३९५.कौ] इति द्वित्वे अभ्यासशेषे मुमुच् स इति जाते चकारस्य ककारे कात्परत्वात् 'आदेश...'[२१२.कौ] इत्यादिना सस्य षत्वे कषयोगे क्षे च मुमुक्षेति भवति । तेन एवं सम्पादितवरेण कारणेन वा । रामोदरगः रामस्योदरे गच्छतीति स तथा । नाभिदेशगत इत्यर्थः । यथोक्तं पाद्मे उत्तरखण्डे– [२४२.१६०-१६३]

> 'रौद्रं चापं दुराधर्षं भज्यमानं त्वया नृप । इदं तु वैष्णवं चापं तेन तुल्यमरिन्दम ।।
> एवमुक्तस्तु काकुत्स्थो भार्गवेण प्रतापवान् । तच्चापं तस्य जग्राह रामो दशरथात्मजः ।।
> शरं धनुषि सन्धाय विससर्ज तथासुरे । तस्य नाभिप्रदेशे तु तपःकृत्वा तु दारुणम् ।।
> तिष्ठत्येव सदा दैत्यः तं ज्ञात्वा राघवो बली । तं तु भस्मीचकाराथ किं कर्तव्यं मया प्रभो ।।'

इति ।

उद्दृणातेः इत्यादिना अचि उदरमिति भवति । बहिर्गतः उदराद्बहिरागतः । ननु कथं भगवदुदरप्रवेशिनः स्वेच्छया बहिर्निर्गम इत्यत आह– **तदाज्ञयैवेति** ।। तस्य आज्ञा निदेशस्तया । उत्तरत्र किमभूदित्यत आह– **भस्मसाद्बभूवेति** ।। रामशरेणेति शेषः । आशुना बहिर्गमनानन्तरमकिञ्चिद्व्यवधानं भस्मीभावस्य सूचितं भवति । बभूवेति चास्तेर्भूभावे भूधातोर्वा लिटि रूपम् । 'भस भर्त्सनदीप्त्योः' इति भसेर्मनिनि आर्द्धधातुभ्य इति भस्मेति भवति । 'भूतिर्भसितभस्मनि' इत्यमरः । साकल्येन भस्मीभूत इति वा । भस्मव्याप्तोऽभूदित्यभिविधौ वा । विभाषा सातिकार्त्स्न्ये [२१२२.कौ] । अभिविधौ संपदा च [२१२४.कौ] कृभ्वस्तिभिः सम्पदा च योगे सातिः प्रत्ययो भवति । स तु पुराऽतद्भूतस्य तद्भावरूपच्व्यर्थे वर्तते । अभिविधिसाकल्ययोर्भेदस्तु कौमुद्युक्त इति ततो ज्ञेयः । 'तदधीनवचन' [२१२५] इति सूत्रेण अत्र सातिरिति नातिमनोहरम् । भस्मनोऽचेतनत्वादितिसुतस्य तदधीनत्वायोगात् । किञ्च सर्वथा भस्मतामुपागत इति भस्मेतरस्याभावात् । ननु सातिरत्र दुर्लभः । बभूवेति वर्तते पश्चात् साक्षादाशुः तद्योगाभावादिति चेन्न । अन्वयक्रमेण भूयोगो वा अस्तियोगो वा अस्तीति सातिसम्भवात् । अथवा यः सात् सुखात्मा रामः । तेन भस्मेव भसितमेव बभूवाभवत् । सातिः सुखार्थः सौत्रो धातुस्ततो वासरूपन्यायेन क्विपि सादिति कौमुद्युक्तेः । मुमुक्षा यथा विष्णुतनुप्रवेशने निमित्तं तथा भयाभावोऽपि भगवदुदरप्रवेशे नेतरभयं तस्य कुतो अभयत्वादिति वाह– **राम इति** ।। रामो भार्गवः । दरं भयं गच्छतीति दरगः स न इति अदरगः भयवान्नेति यावत् । तेन निमित्तेन । मुमुक्षया आशु । निपातानामनेकार्थत्वाच्चार्थे । न केवलं रामो निर्भय इति तत्तनुप्रवेशः किन्तु मुमुक्षया चेति तदन्वयः । यद्वा विष्णुतनुप्रवेशे हेतुमाह– **राम इति** ।। रामोदरग इति हेतोः मुमुक्षया करणेन विष्णुतनुप्रवेशोऽसुरस्येति । स सभयश्चेत् सत्यामपि मुमुक्षायां न भवेत् मोक्षो अतो भवितव्यं दात्रा निर्भयेणेतीत्थमुक्तिः । न केवलं यो रामः सात् तदाज्ञयैव भस्म बभूवेत्येव न किन्तु उदरगो दरे गर्ते नारकगर्ते गच्छतीति स तथा । तमोगर्ते वा एष्यन्न्यायेन गत एवेति भावः । दरगः उदरदरीगत इति वा । दृ भये । अप् । 'दरस्त्रास' इत्यमरः । 'दरः स्याद्भयगर्तयोः । शङ्खे दरी कन्दरी च' इति हैमः । एतत्पक्षे बहिर्गतः विष्णुतनोर्बहिर्गत इत्यर्थः । हे राम दाशरथे । उदरगो ब्रह्मात्मकरामगः बहिर्गतो भस्मसात् बभूवेति वा । 'उदरं ब्रह्मेति शार्कराक्ष्या उपासाञ्चक्रिर' [ऐ.उ.]इति श्रुतेः । उद्गतमरेभ्य इत्युदरम् ।।५७।।

**मधुसूदनीया–** रामोदरग रामस्य परशुरामस्य उदरगः उदरे नाभिदेशे स्थितस्येत्यर्थः । 'रौद्रं चापं दुराधर्षं भज्यमानं त्वया नृप । इदं तु वैष्णवं चापं तेन तुल्यमरिन्दम ।। एवमुक्तस्तु काकुत्स्थो भार्गवेण प्रतापवान् । तच्चापं तस्य जग्राह रामो दशरथात्मजः ।। शरं धनुषि सन्धाय विससर्ज तथासुरे । तस्य नाभिप्रदेशे तु तपःकृत्वा तु दारुणम् ।। तिष्ठत्येव सदा दैत्यः तं ज्ञात्वा राघवो बली । तं तु भस्मीचकाराथ किं कर्तव्यं मया प्रभो ।।' इत्युत्तरकाण्डे पाद्मे ।।५७।।

**वरदराजीया–** नन्वसुरस्य भार्गवे अवस्थानं कथमित्यत आह– **पुरेति** ।। पुरा अनेन असुरेण विष्णुतनुप्रवेशनं वरो मुमुक्षया मुक्तीच्छया शिवादुपलम्भितः प्राप्तः । तेन कारणेन सः असुरो रामस्य भार्गवस्य उदरे स्थितः तस्य भार्गवस्याज्ञया बहिर्गतो भस्मसात् बभूवेत्यर्थः ।।५७।।

**जनार्दनीया–** ननु हरिद्वेषिणो विष्णुतनुप्रवेशः कथं इत्यत आह– **पुरा वर इति** ।। अनेनासुरेण । मुमुक्षया मोक्षेच्छया विष्णुतनुप्रवेशनं मे स्यादितीति शेषः । वरः शिवादुपलम्भितः प्राप्तः तेन वरेण रामस्य परशुरामस्य उदरे नाभिदेशे गच्छति तिष्ठतीति रामोदरगः । सोऽसुरः तदाज्ञया भार्गवाज्ञया बहिर्गतः भार्गवदेहान्निर्गतः सन् भस्मसाद्भस्माधीनो बभूव । तस्य नाभिप्रदेशे तु तपःकृत्वा तु दारुणम् ।। तिष्ठत्येव सदा दैत्यः तं ज्ञात्वा राघवो बली । तं तु भस्मीचकाराथ किं कर्तव्यं मया प्रभो ।।' इति पाद्मे ।।

**चट्टी–** नन्वसुरस्य भार्गवे अवस्थानं कथमित्यत आह– **पुरेति** ।। पुरा पूर्वमनेनासुरेण मुमुक्षया मोक्षेच्छया विष्णुतनुप्रवेशनं मे स्यादिति विशेषवरः शिवादुपलम्भित आप्तः । तेन कारणेन रामोदरगो रामस्य परशुरामस्य उदरगो उदरे नाभिदेशे स्थित इत्यर्थः । सोऽसुरः तदाज्ञया परशुरामाज्ञया आशु बहिर्गतः भार्गवदेहान्निर्गतः सन् भस्मसाद्भस्माधीनं बभूव । तथोक्तम्– 'रौद्रं चापं दुराधर्षं भज्यमानं त्वया नृप । इदं तु वैष्णवं चापं तेन तुल्यमरिन्दम ।। एवमुक्तस्तु काकुत्स्थो भार्गवेण प्रतापवान् । तच्चापं तस्य जग्राह रामो दशरथात्मजः ।। शरं धनुषि सन्धाय विससर्ज तथासुरे । तस्य नाभिप्रदेशे तु तपःकृत्वा तु दारुणम् ।। तिष्ठत्येव सदा दैत्यः तं ज्ञात्वा राघवो बली । तं तु भस्मीचकाराथ किं कर्तव्यं मया प्रभो ।।' इत्युत्तरकाण्डे पाद्मे ।।५७।।

**अनन्तभट्टीया–** असुरस्य विष्णुतनुप्रवेशे हेतुमाह– **पुरेति** ।। अनेन असुरेण विष्णुतनुप्रवेशनं तदात्मको वर इत्यर्थः । तेन वरेण । तदाज्ञया बहिर्गतः । रामाज्ञयैवेति सम्बन्धः ।। ५७।।

**गूढवाक्यार्थ–** असुरस्य विष्णुतनुप्रवेशे निमित्तमाह– **पुरेति** ।। तदाज्ञया रामोदरगः तदाज्ञया बहिर्गत इति सम्बन्धः ।।५७।।

**इतीव रामाय स राघवः शरं विकर्षमाणो विनिहत्य चासुरम् ।**
**तपस्तदीयं[१] प्रवदन्मुमोद तदीयमेव ह्यभवत्समस्तम् ।।५८।।**

**व्यासतीर्थीया–** इति उक्तप्रकारेण रामायेव । त्वदीयं तपो दग्धमिति वदन् । ननु तपोमयोऽसुर स कथं तदीय इत्यत आह– **तदीयमिति** ।।५८।।

१. 'त्वदीयम्' इति सत्यधर्म-जनार्दन-चट्टीव्याख्यानेषु पाठः ।

**वेदाङ्गतीर्थीया–** इति हेतोः दैत्यनिधनार्थं रामायेव शरं विकर्षमाणः असुरं विनिहत्य च तदीयं भार्गवस्य विद्यमानं तपो मया नाशितमिति प्रवदन् मुमोद भार्गवः पराजित इति विमोहयन् मुमोदेति भावः । असुरं विनाश्य तदीयं तपो नाशितमिति कथमवोचदित्यत आह– **तदीयमेवेति** ।। समस्तं चेतनाचेतनात्मकं तदीयं तस्य परशुरामस्य [अधीनमेव अभवद्धि] ।।५८।।

**वादिराजीया–** 'रामायेव शरं विकर्षमाण' इति पूर्वोक्तप्रकारेणासुरं निहत्येति सम्बन्धः । ग्रन्थान्तरे राघवेण त्वदीयं तपः सर्वं दग्धमिति परशुरामस्य परिहासः कृत इति कथाऽस्ति । तस्या भावमाह– **तप इति** ।। असुरदाहात्तदीयतपसोऽपि दाहे सति तदीयं तस्य परशुरामस्य विद्यमानं तपो दग्धमिति प्रवदन् प्रकर्षेण वदन् मुहुर्मुहुर्वदन्नित्यर्थः मुमोद । असुरेण कृतं तपः कथं परशुरामतपः स्यादित्यत उक्तम्– **तदीयमेवेति** ।। चेतनाचेतनात्मकं समस्तजगत्परशुरामाधीनत्वात्तदीयमेव अभवत् । हीति हिशब्देन 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इत्यदिप्रमाणप्रसिद्धिं सूचयति । अतो जगदन्तःपातितपसोऽपि तदीयत्वमिति भावः । ननु रामादेरगस्य रक्षसो विनाशे समस्तलोकान्तःप्रविष्टतदंशानां कथं नाश इति चेदित्थम् । लोकव्याप्तेर्मूलीभूततपोनाशादंशिनो नाशात् शरप्रयोगसमये रामजप्तमन्त्रसामर्थ्याच्चेति ब्रूमः । अत एव तपो दग्धमिति प्रवदन् मुमोदेत्युक्तम् ।।५८-५९।।

**सत्यधर्मीया–** क्वचिद्भार्गवतपः तथा तदर्जिता लोका अपि रामशरेण शीर्णा इति प्रतिपादनात् कथमसुर एव नष्ट इत्युच्यते इत्यतस्तत्तात्पर्यमाह– **इतीति** ।। स राघवः । रामाय, तं लक्ष्यीकृत्येति यावत् । शरं विकर्षमाणः सन्निव । अथवा रामायेवेति वान्वयः । इवेन अलक्ष्यत्वं रामस्याभिप्रैति । विकर्षणफलमालपति– **विनिहत्य चेति** ।। असुरं विनिहत्य संहृत्य । विनी समूलघातं हननं सूचयतः । तपोनामासुरो यद्रामोदरगतो विनाशितस्तेन भार्गवतपो नष्टमिति रामो राममुपाहसदिवेत्याह– **तप इति** ।। तदीयं तस्येदं तदीयं तत्सम्बन्धि तपः ततस्तत्साध्यो लोकोऽपि लक्ष्यते । नष्टमिति शेषः । इति एवमादि प्रवदन् । यथा मोहिता असुराः भवेयुः न सुरादयस्तथा वचनचातुर्यं प्रेण अभिप्रैति । मुमोद तुतोष । मुद हर्षे । व्यत्ययेन नित्यप्रमोदस्य मोदप्रदर्शनं जनानुकरेणेनेति सूचयति । 'त्वदीयम्' इति पाठे तवेदं त्वदीयम् । तामसतपोनाशे कथमीशस्य ईशतपोनाशोपहासः सम्भवतीत्यत आह– **तदीयमित्यादि** ।। समस्तं विश्वं तदीयं तत्स्वामिकत्वेन तत्सम्बन्धि हि यतस्तस्मात् त्वदीयमिति वा तदीयमिति वा अपहासः सम्भवतीति भावः । अनेन– 'जामदग्न्यं ततो रामो रामं क्रुद्धोऽब्रवीद्वचः । ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च ।। तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् । इमां च त्वद्गतिं रामतपोवलसमन्विताम् ।। लोकानप्रतिमान् वाहं हनिष्यामि यदीच्छसि ।।' इति रामायणमप्युपपादितार्थम् [वा.का.७६.५-७] । तत्रैव 'यदीच्छसि' 'साक्षाद्विष्णुः' इत्यादेरस्यैव तात्पर्यावगतेश्च । 'प्रत्ययोत्तरपदयोश्च' [१३७३.कौ] इति मपर्यन्तयोः त्वमयोः सतोः सति च छे तस्य

इयादेशे त्वदीयम्, 'त्यदादीनि च' [१३३६.कौ] इति वृद्धत्वे 'वृद्धाच्छः' [१३३७.कौ] इति छे च तस्य 'आयनेयीनीय...' [४७५.कौ] इतीयादेशे तदीयमिति भवतः । यद्वा हे ईवर लक्ष्मीपते । अमाय अकपट । आ स्वरूपभूतो मा ऐश्वर्यं यो ज्ञानं च यस्य तत्सम्बुद्धिर्वा । 'येति ज्ञानं समुद्दिष्टम्' इति मानात् । गत्यर्थत्वाच्च ज्ञानार्थता । तदीयमित्यसुरपदेनान्वेति । रामोदरगत्वाद्रामीयमिति तदर्थः । तदीयं दैत्यसम्बन्धि तपः तत्साध्यो लोकश्च लक्ष्यते । इति सर्वं समस्तं सम्यङ् निराकृतमभवत् इति प्रवदन् मुमोद । न केवलं असुरो हतोऽपि तु उत्तरत्र दुर्योधनादीनामिव परत्र किञ्चिद्वीरस्वर्गादिप्रदर्शनसाधनमपि न भवदभूद् । अस्य तपो नष्टमिति समूलघातं हतोऽसुर इति मुमोद दामोदर इति भावः ।।५८।।

**वरदराजीया–** इति हेतोः राघवो रामाय इव शरं विकर्षमाणः सन् असुरं विनिहत्य दुष्टजनमोहनाय तदीयं तस्य भार्गवस्य विद्यमानं तपः मया नाशितमिति प्रवदन् मुमोदेत्यर्थः । तपोमयोऽसुरो मया नाशित इति वक्तव्ये तपो नाशितमिति प्रवदनमुमोदेति भावः । ननु तपमयोऽसुरो अस्तु तथापि तस्य तदीयत्वं कथमित्यत आह– **तदीयमेवेति** ।। समस्तं जगत् तदीयं तत्सम्बन्ध्येव सर्वसत्ताप्रवृत्त्यादेस्तदधीनत्वात् समस्तान्तःपतितत्वात् असुरः कथं तदीयो न स्यादिति भावः ।।५८।।

**जनार्दनीया–** इति हेतोर्दैत्यनिधनार्थं स राघवः । रामायेव भार्गवायेव । विकृष्यमाणः सन् । असुरं तपोमयनामानं असुरं निहत्य, अतुलाख्यासुरस्य तपःप्रधानत्वात् तपोमय इति नाम । लोकव्याप्तत्वाल्लोकमय इति नाम । असुरमोहनार्थं तदीयं भार्गवसम्बन्धि । 'तपस्त्वदीयम्' इति क्वचित्पाठः । मया नाशितमिति प्रवदन् मुमोद । नन्वसुरं निहत्य भार्गवसम्बन्धि तपः नाशितमिति कथं मुमोदेत्यत आह– **तदीयमेवेति** ।। समस्तं सर्वं जगत्तदीयं भार्गवसम्बन्धि अभवद्धि । जगति स्थितस्तपोसुरस्तदीय एवेत्यर्थः ।।५८।।

**चट्टी–** ।। **इतीति** ।। इति हेतोर्दैत्यनिधनार्थं स राघवः रामायेव भार्गवायेव शरं विकर्षमाणस्सन् असुरं तपोनामकं निहत्य अतुलाख्यासुरस्य तपःप्रधानत्वात् तपोनाम, लोकव्याप्तत्वाल्लोकमय इति नाम । दुष्टजनमोहनार्थं तदीयं भार्गवसम्बन्धि तपः । 'त्वदीयम्' इति क्वचित् । मया नाशितमिति प्रवदन् मुमोदेत्यर्थः । नन्वसुरं निहत्य भार्गवसम्बन्धि तपो नाशितमिति कथमुक्तवानित्यत आह– **तदीयमेवेति** ।। समस्तं जगत्तदीयं भार्गवसम्बन्ध्येव । अभवद्धि सर्वसत्ताप्रवृत्त्यादेस्तदधीनत्वात् । समस्तान्तःपातिनो असुरस्य कथं तदीयत्वं न स्यादिति भावः ।।५८।।

**अनन्तभट्टीया–** तपः तपोमयं नाम रक्षः । प्रवदन् दग्धमिति वदन् । अनेन तदीयं तपः दग्धमिति ग्रन्थान्तरोक्ततपःशब्दस्य तपोमयोऽसुरो वाच्य इत्युक्तं भवति । ननु असुरस्य तदीयत्वं कथमित्यत आह– **तदीयमिति** ।। समस्तं चेतनाचेतनात्मकं जगत् । तस्यापि जगदन्तःपातित्वादिति भावः ।।

**ताम्रपर्णीया–** ।। **इतीवेति** ।। **तपस्तदीयमिति** ।। त्वदीयं तपो दग्धमिति शेषः । कथं तपोमयस्य तदीयत्वमित्यत आह– **तदीयमिति** ।। एतेन त्वदीयं तपस्सर्वं दग्धमिति राघवेण भार्गवापहास इति ग्रन्थान्तरोक्तितात्पर्यमुक्तं भवति । स दाशरथी स हरिर्भार्गवश्च एक एव द्वितनुर्मुमोदेत्यर्थः । भार्गवस्तदानीं द्विरूपो भूत्वा एकेन रूपेण रघूत्तमेनैक्यमगात् । ऐक्यं समेत्य राघवभार्गवयोर्भेदशङ्कां राघवमूलरूपयोर्भेदशङ्कां राघवसर्वोत्तमत्वशङ्कां इत्यखिलां शङ्कां पराणुद्य रूपान्तरेण रामाय हरिहस्तयोग्यं धनुर्वरं प्रदाय जगामेत्यर्थः । इन्द्रार्जुनयोरिव द्विधाऽभाव इति दर्शयितुमेवेत्युक्तम् । 'हरेरपि स्वरूपाणामेकीभावो यदोच्यते । संश्लेष एव सिद्धत्वात् स्वरूपैक्यस्य नो भवः ।।' [आथ.४अ.१.६] इति भावेनोक्तमात्मनेति ।।५८-६४।।

**भारतश्री–** तदीयं तपः अतुलसम्बन्धि तपः । प्रवदन् मुमोद । हि यस्मात् समस्तं जगत् तपसा तदीयमेवाभवत् अतश्च तदीयं तपः तपश्चेदेवं कर्तव्यमिति प्रवदन् विशेषतो वदन् तद्धननात् मुमोद । अथवा तदीयं भार्गवरामसम्बन्धितपः प्रवदन् त्वदीयं तपो नष्टमिति प्रवदन् मुमोद । एवमुक्ते तस्य कोपः कथं नाभूदित्यत आह– **तदीयमेवेति** ।। समस्तं तदीयमेवाभवत् । तयोरैक्यादतो न कोपः । हिशब्दः प्रमाणप्रसिद्धिद्योतकः ।।५८-६०।।

**गूढवाक्यार्थ–** रामायेव शरं विकर्षमाणः इति पूर्वोक्तप्रकारेण असुरं निहत्येति सम्बन्धः । त्वदीयं तपः दग्धमिति शेषः । तपोमयस्य कथं तदीयत्वमित्यत आह– **तदीयमिति** ।। त्वदीयं तपस्सर्वं दग्धमिति राघवेण भार्गवापहासः कृत इति ग्रन्थान्तरोक्तेस्तात्पर्यमुक्तं भवति ।।५८।।

**निरन्तरानन्दविबोधसारः स जानमानोऽखिलमादिपूरुषः ।**
**वदन् शृणोतीव विनोदतो हरिस्स एक एव द्वितनुर्मुमोद ।।५९।।**

**व्यासतीर्थीया–** प्रष्टृत्ववक्तृत्वाभ्यां अज्ञानादिप्राप्तं तन्निवारयन्नाह– **निरन्तरेति** ।।५९।।

**वेदाङ्गतीर्थीया–** निरन्तरानन्दविबोधसारः अत एव अखिलं जानमानः आदिपूरुषः स हरिः वदन् शृणोतीव मुमोद द्वितनुः एक एव । एकत्वादेव वदन् शृणोतीवेत्युक्तम् ।।५९।।

**सत्यधर्मीया–** अनन्तगुणात्मकयोर्भगवतोः इयं लीलैवेत्यवगमयितुं हरिस्वरूपं तावदाह– **निरन्तरेति** ।। निरन्तरौ सान्द्रौ स्वरूपभूताविति यावत् । तौ च तावानन्दः सुखं च विबोधः ज्ञानं च तौ । अनितराधीनतया स्वपरगताखिलविशेषविषयकत्वं विना बोधस्य द्योत्यते, ताभ्यां सारो घनः श्रेष्ठः । यद्वा निरन्तराः परस्परं निर्भेदाः आनन्दो विबोधः सारो बलं यस्य सः । अनेन गुणिनो गुणैरभेदज्ञानवद्गुणानां परस्परमभेदज्ञानं मुक्तिसाधनमिति आवश्यकमिति द्योतितं भवति । तथाच श्रुतिः

'विज्ञानमानन्दं ब्रह्म' 'एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति' इत्यादिका । अरैः सहस्रसङ्ख्याकैर्दलैः सहितं सारं तौ च सारं सुदर्शनं यस्य स वा तौ । एवं विग्रहकरणेन अरिधरत्वलिङ्गेन भगवत्यसन्देहः परास्तो भवति । अखिलं समस्तम् । जानमानः जानन् । आदिपूरुषो हरिरेक एव वदन् अज्ञातमर्थं वदन् । इव शृणोतीव । द्वितनुः द्वे शरीरे राघवभार्गवशरीरे यस्य स तथा । कुत इत्यम्भावो भगवत इत्यत आह– **विनोदत इति** ।। यद्वा एकेन शरीरेण शरीरद्वयं सम्पाद्य कार्यं लब्धं न वा । लब्धं चेत् तद्ग्रहणं व्यर्थम् । न लब्धं चेद् अपूर्णो हरिरित्यागतमित्यतो 'लोकवत्तु लीलाकैवल्यम्' [सू.२.१.३४] इति सूत्रोक्तमुत्तरमाह– **विनोदत इति** ।। पूर्णोऽपि भगवान् लीलया अनेकरूपी भवतीति भावः । यद्वा य आनः आ अनो मुख्यप्राणः । आङर्थो मुख्य इति । जनानामिदं जानम् । सम्बन्धश्च समूहसमूहिरूपः न तु 'तस्य समूह' [१२४३.कौ] इत्यण् । 'ग्रामजनबन्धुभ्यस्तल्' [१२५१.कौ] इति तद्बाधनेन तलोऽपि विधानात् । विबोधसारः विबोधेन विज्ञानेन सारः श्रेष्ठः । 'देवादीनां तु यज्ज्ञानं विज्ञानमिति कीर्तितम्' इति वचनात् । अखिलं दृढं यथा भवति तथा आनन्दं बबन्ध । भूतैरिति शेषः । स तादृशोऽपि । येन विना परमात्मना उदतः उद्गतः, तत्सुत इति यावत् । हे निरन्तर निर्भेद । स आदिपूरुष एक एव वदन् शृणोतीव द्वितनुर्मुमोद । अखिलानां ब्रह्मादीनां मायाः सम्पदः आदिः कारणं स चासौ पूरुषश्चेति वा । अथवा अखिला कर्तुमकर्तुं शक्ता या मा सैव आदिपूः मूलनगरं श्रीभागरूपं यस्य । 'पृ पालनपूरणयोः' अस्मात् 'भ्राजभास' [२५६५.कौ.] इति क्विप् । 'उदोष्ठ्यपूर्वस्य' [२४१४.कौ] इति चोत्वं 'हलि च' [३५४.कौ] इति दीर्घः । 'पूः स्त्री पुरीनगर्यौ वा' इत्यमरः । यद्यप्यादिपूरित्यत्र 'ऋक्पूरब्धूः पथमानक्षे' [९४०.कौ] इति समासान्तप्रत्ययेन भाव्यं तथापि तदनित्यतायाः 'अप् पूः पथाम्' इति वदता सूत्रवृत्ताववगमनाद् पूरिति साधु । रुषः कोपात् वदन् शृणोतीत्यादि सर्वं पूर्ववत् । अभिमान्यधिकरणनयेन वा रमात्मकत्वं श्रीभागस्य ज्ञेयम् । अत एवोक्तं मध्वविजये 'पूर्णपुरुषस्य पुरी' [११.८] 'विमलाकृतिः प्रकृतिरेव महामणिहेममय्यखिलवस्तुमयी' [११.१३] 'स्वयमिन्दिरैव पतिमानकरी' [११.१६] इत्यादि 'रमैव बहुरूपिणी' इत्यादेः ।।५९।।

**वरदराजीया–** निरन्तरानन्दविबोधसागरः निर्भेदानन्दज्ञानघनोऽखिलं विश्वं जानमानोऽपि आदिपूरुषो हरिः द्विरूपो भूत्वा वदन् शृणोतीव विनोदतो लीलया मुमोद ।।५९।।

**जनार्दनीया–** निरन्तराभ्यां भेदरहिताभ्यां स्वरूपभूताभ्यामिति यावत् । आनन्दविबोधाभ्यां सुखचिद्भ्यां सारः श्रेष्ठः । अखिलं सर्वं जानमानः वेत्ता । आदिपुरुषः स हरिः । विनोदतो लीलया । वदन्निव सन् परशुरामरूपेण वदन्निव । शृणोतीव राघवरूपेण श्रुणोतीति । द्वितनुर्वक्ता श्रोता चेति द्विस्स्वरूपः । एक एव स हरिः मुमोदेति योजना । एकत्वादेव वदन्निव शृणोतीवेत्युक्तमिति भावः ।।५९।।

**चट्टी–** प्रष्टृत्ववक्तृत्वाभ्यां प्राप्तमज्ञानादिकं निवारयन्नाह– **निरन्तरेति** ।। निरन्तराभ्यां भेदरहिताभ्यां स्वस्वरूपभूताभ्यामिति यावत् । आनन्दविबोधाभ्यां सुखचिद्भ्यां सागर इवाखिलं सर्वं जानमानः वेत्ता आदिपुरुषः सः हरिः विनोदतो लीलया परशुरामरूपेण वदन्निव श्रीरामरूपेण शृणोतीव द्वितनुः वक्ता श्रोता चेति द्विस्वरूपः एक एव सः हरिः मुमोदेति योजना । एकत्वादेव वदन् शृणोतीवेत्युक्तमिति भावः ।।

**ताम्रपर्णीया–** ।। **निरन्तरेति** ।। सदा दाशरथिः स हरिः भार्गवश्च एक एव द्वितनुर्मुमोदेत्यर्थः ।।५९-६५।।

**अतिविशद–** निरन्तरानन्दविबोधसार इत्यस्मिन् श्लोके सजानमान इत्येकं पदं स इति पदम् । स एक एवेत्यत्र एक एव स इति पदद्वयमस्ति । तत्रैकेनैव चरितार्थत्वात् अन्यद् व्यर्थमिति वदन्ति । अत्र एके त्वाहुः । सः परशुरामः स दाशरथी रामः एक एव हरिः वदन् शृणोति इति द्वितनुः सन् मुमोदेति पदद्वयस्याप्यवैयर्थ्यमिति । निरन्तरानन्दविबोधसारः अखिलं जानमानः आदिपूरुषः सः हरिः एक एव रामरूपपरशुरामरूपाभ्यां वदन् शृणोति द्वितनुः इव मुमोद इति इत्थमन्वयेऽपि एकवैय्यर्थ्यपरिहारात् । तस्मादेकान्वये ह्येकमेवापेक्षितं न त्वन्यदिति । अत्रोच्यते । स एक एव इत्यत्र विद्यमानः स इति शब्दः न तच्छब्दः किन्तु अकारान्तः सारवाची । 'सं सारात्मने नम' इति मातृकामन्त्रसिद्धत्वात् । 'सारात्मा हंसळाळुकौ' इति तन्त्रसारसिद्धत्वाच्च [१.१०] । तथा–'नित्यं हीनोऽखिलैर्दोषैः साररूपत्वतो हरिः । हंस इत्युच्यते सद्भिः... ।।' इति काठकोपनिषद्भाष्यसिद्धत्वाच्च [२.२.२] । नच तथात्वे 'निरन्तरानन्दविबोधसार' इत्यनेन पौनरुक्त्यं स्यादिति वाच्यम् । न तत्रत्यः सारशब्दः सारवाची किन्तु स्वरूपवाची । 'तद्गुणसारत्वात्' [सू.२.३.२९] इति सूत्रव्याख्याने भाष्यकारैस्तथा व्याख्याततत्वात् । तथाच 'निरन्तरानन्दविबोधसार' इत्यस्यायमर्थः । निरन्तरौ निर्भेदौ आनन्दविबोधौ सारः स्वरूपं यस्येत्युक्तं भवति । तथाच स इति शब्दः न विशेष्यवाची किन्तु विशेषणपर एव । सः साररूप इति । वाक्ययोजना तु तद्विशेषणसाहित्येन पूर्वोक्तिवद् द्रष्टव्या । अथवा द्वे तनू स्वरूपे यस्य देवदत्तयज्ञदत्तसमूहस्य स द्वितनुः स्वयं वदन् शृणोति स इव रामपरशुरामस्वरूपाभ्यां हरिरेक एव मुमोद इति । कथम्भूतो हरिरित्याकाङ्क्षायां 'निरन्तरानन्दविबोधसार' इत्यादिविशेषणानि द्रष्टव्यानि । 'स जानमान' इत्येकं वा पदम् । तदर्थस्तु एक एव हरिः द्वितनुर्वदन् शृणोतीत्यादिकं जानमानैः ब्रह्मादिभिः सहित इति । आत्मना द्विधैव भूत्वेति आत्मना देहेन द्विधैव भूत्वा तेजोरूपेण समक्षं रघूत्तमेनैक्यमगादित्यर्थः । 'ततः परशुरामस्य देहान्निष्क्रम्य वैष्णवम् । पश्यतां सर्वभूतानां तेजो राममुखेऽविशत् ।। तद् दृष्ट्वा भार्गवो रामः प्रसन्नवदनोऽभवत् ।।' इति नृसिंहपुराणोक्तेः [४७.१४८] ।।५९।।

**गूढवाक्यार्थ–** ।। **निरन्तरानन्दविबोधसार इति** ।। सः परशुरामः । सः दाशरथिरामश्च । निरन्तरानन्दविबोधसारः अखिलं जानमानः सर्वज्ञः एक एवादिपूरुषः तथापि द्वितनुस्सन् विनोदतो वदन् शृणोतीव मुमोदेतियोजना ।।५९।।

**स चेष्टितं चैव निजाश्रयस्य जनस्य सत्तत्त्वविबोधकारणम् ।**
**विमोहकं चान्यतमस्य कुर्वन् चिक्रीड एकोऽपि नरान्तरे यथा ।।६०।।**

**व्यासतीर्थीया–** ननु युद्धकरणादि राघव आदिपूरुषमजानतामित्युक्तस्य विरुद्धमित्यत आह– **स चेष्टितमिति** ।।६०-६२।।

**वेदाङ्गतीर्थीया–** एवं विडम्बनस्य प्रयोजनमाह– **स चेष्टितमिति** ।। नरान्तरे पुरुषान्तरे ।।६०-६१।।

**वादिराजीया–** सः भार्गवः । चेष्टितं च विनोदचेष्टितमपि । निजाश्रितजनस्यैवेत्येवकारसम्बन्धः । सत्तत्वविबोधकारणं अहमपि हरिः रामोऽपि हरिरिति सत्तत्वविबोधकारणम् । अन्यतमस्य अयोग्यजनस्य एको जितः एकः पराजित इति विमोहकं च कुर्वन् चिक्रीड इति योजना ।।६०।।

**सत्यधर्मीया–** सदसदधिकारिणोः तत्तद्योग्यतानुसारेण ज्ञानफलदानायैव दानवारिव्यापार इत्याह– **स इति** ।। स हरिः । निजाश्रयस्य निजः स्वयं आश्रयो यस्येति स तथा । निजः स्वात्मीयः स्वसम्बन्धीति यावत् । आश्रयो यस्येति वा । 'निसर्गः स्वस्वकीयेषु निजस्त्रिषु' इति दर्पणः । 'निजमात्मीयनित्ययोः' इत्यमरः । जनस्य जनमूसहस्य सत्तत्त्वविवोधकारणं सत् सर्वदाविद्यमानं सत्यस्वरूपं वा प्रशस्तं वा यत्तत्त्वं स्वस्वरूपं तस्य विबोधो विशिष्टज्ञानं तस्य कारणं हेतुः । चेष्टितं व्यापारम् । अन्यतमस्य अतिशयेनान्यो अन्यतमः तमःपातयोग्यो दैत्यादिस्तस्य जनस्य विमोहकमेव वैचित्यजनकमेव च कुर्वन् । नायमन्यतमशब्दो बहुविषय एकनिर्धारको व्युत्पन्नः तथात्वे भायादेकस्यैव मोह इति तच्च असङ्गतमिति तमबन्त एव । अनेन सर्वेऽपि सन्तोऽसन्तश्चान्ये अन्यतमा इति सर्वेतरता सर्वेश्वस्योक्ता भवति । एकोऽपि स्वान्तर्भेदशून्योऽपि यथा नरान्तरे अन्यो नरो नरान्तरं तस्मिन् स्वभिन्नमनुष्ये तथा चिक्रीडे क्रीडयामास । जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधातीति समासः । चौ परस्परसमुच्चये । यद्वा निजः स्वयमेव आश्रयो यस्य स तस्य जनस्य दुर्जनस्य, स्वच्छन्दवर्तिन इति यावत् । सत्तत्त्वविबोधकारणं सन्निर्दोषं तत्त्वं स्वरूपं तस्य विबोधो विपरीतज्ञानं तस्य कारणम् । अन्यतमस्य अत्यन्तं स्वप्रेर्यस्य जनस्य सज्जनस्य । तमपा प्रेरणामन्तरेण अल्पमपि कल्पयितुं असमर्थता तस्य सूच्यते । विमोहकं मोहकविरुद्धम्, यथार्थज्ञानजनकमिति यावत् । अथवा निजाश्रयस्य जनस्येति मध्यमाधिकारिणो ग्रहणम् । तस्य विमोहकं तन्त्रन्यायेन मोहकं मोहकविरुद्धं च कुर्वन् । तेषां सदसदूज्ञानाधिकारित्वात् । सतामुत्तमाधिकारिणां साधूनां तत्त्वविबोधकारणं चेत्यर्थः । यद्वा सतो विशरणस्वभावस्य जीवस्येति

यावत् । तत्त्वं ब्रह्मात्मकत्वमिति बोधो ज्ञानं येषां तेषां कारणं बन्धनम् । कारणा यातना वा येन तत् । 'कृञ् हिंसायाम्' अस्माण्णिचि 'ण्यासं श्रन्थ' [३२८४.कौ] इति युच् । 'कारणं करणे हेतुबन्धयोश्च नपुंसकम् । स्त्री यातनायाम्... ।।' इति शाश्वतः । 'विष्टिराजूः कारणा तु यातना तीव्रवेदना' इत्यमरः । 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः । अथवा अन्यतमस्य अन्येष्वेकस्याभिन्नत्वेन निर्धारितस्यैकस्य यथा नरान्तरे तथा । यस्य निजाश्रयस्य स्वाश्रयस्य भगवतः चेष्टितं व्यापारः जनस्य स्वजनस्य मध्यमस्य च विमोहकं सत्तत्त्वविबोधकारणं सतां तत्त्वविबोधकारणं च । अन्यतमसि अन्येषां तमोविषये भवतीति शेषः । इत्थं कर्तुरपि तत्प्रयुक्तवृजिनादिसम्बन्धाभावादकर्तृत्वमेव इत्याह– **अकुर्वन्निति** ।। अकुर्वन्नेवेत्यर्थः । नरान्तरे । नरेत्युपलक्षणम् । सर्वमध्ये यथान्तर्यामी सन् क्रीडते तथेति वा । अन्यतमसीति 'निमित्तात् कर्मयोगे' [वा.६३३.सू] इति सप्तमी । ततश्च तमोरूपफलार्थमित्यर्थः ।।६०।।

**वरदराजीया–** एवं विडम्बनस्य प्रयोजनद्वयमाह– **स इति** ।। हरिः निजाश्रयस्य जनस्य स्वभक्तजनस्येत्यर्थः । सत्तत्त्वविबोधः तस्य कारणं जनकं तथा अन्यतमस्य अभक्तजनस्य विमोहकं भ्रान्तिजनकं चेष्टितं कर्म कुर्वन् इत्यर्थः । नरान्तरे भिन्नपुरुषे यथा एकोऽभिन्नोऽपि स्वस्मिन्नेव वदन् शृणोतीव चिक्रीडे क्रीडयामासेत्यर्थः ।।६०।।

**जनार्दनीया–** ननु एकश्चेत्तर्हि अन्यवद्विडम्बनं किमर्थमित्याशङ्कायां विडम्बने कारणद्वयमाह– **स चेष्टितमिति** ।। स हरिः । निजाश्रयस्य निजः स्वकीयः आश्रयो यस्य स तथा तस्य स्वाश्रयस्य । 'निजमात्मीयनित्ययोः' इत्यभिधानात् । जनस्य सत्तत्त्वविबोधस्य समीचीनज्ञानस्य कारणं जनकं कुर्वन् अतिशयेन अन्यः अन्यतमः अन्यो मनुष्याधमः । जातावेकवचनम् । अन्यतमः अतिशयेनाभक्त इत्यर्थः । असुरसङ्घ इति यावत् । तस्य विमोहकं हर्यवतारादिभेदभ्रान्तिजनकं कुर्वन् एकोऽपि भार्गवराघवरूपेण एकोऽपि नरान्तरे अन्यपुरुषे यथा तथा चिक्रीडे क्रीडितवान् ।।६०।।

**चट्टी–** एवं विडम्बनस्य प्रयोजनद्वयमाह– **स चेष्टितमिति** ।। सः हरिः निजाश्रयस्य स्वभक्तजनस्यैवेत्यर्थः । सत्तत्त्वविबोधस्य समीचिनज्ञानस्य कारणं जनकं तथा अन्यतमस्य अभक्तजनस्य विमोहकं हर्यवतारादिभेदभ्रान्तिजनकं च चेष्टितं कर्म कुर्वन् एकोऽपि भार्गवराघवरूपेण एकोऽपि नरान्तरे भिन्नपुरुषे यथा तथा चिक्रीडे क्रीडितवान् ।।६०।।

**अनन्तभट्टीया–** स हरिः परशुरामः...* राघवस्य स्वात्मकत्वादिकम् । अन्यतमस्य दुष्टजनस्य चेष्टितं कुर्वन्नित्यन्वयः ।।६०।।

**गूढवाक्यार्थ–** ।। **स चेष्टितश्चैवेति** ।। स परशुरामः तत्रैकार्य इतरप्तमया वित्युक्तेरन्यतरस्येत्युपपद्यते* ।।

**ततस्स कारुण्यनिधिर्निजे जने नितान्तमैक्यं स्वगतं प्रकाशयन् ।**
**द्विधेव भूत्वा भृगुवर्य आत्मना रघूत्तमेनैक्यमगात् समक्षम् ॥६१॥**

**वादिराजीया–** परस्परं विरोधभ्रमोत्पादनात् द्विधेव भूत्वा ॥६१-६४॥

**सत्यधर्मीया–** दशरथतनयमुनितनुजयोरभेदे बहुप्रत्यक्षं प्रमाणयति– **तत इत्यादिना** ॥ ततः क्रीडानन्तरम् । नितान्तं अत्यन्तम्, निर्विशेषमिति यावत् । ऐक्यं एकताम् । नेदमाहितं मायाविवत् प्रदर्श्यत इत्याह– **स्वगतमिति** ॥ स्वस्मिन् विद्यमानम् । ज्ञाताभेदानां पुनः प्रदर्शनमनुपपन्नमित्यतो वाह– **स्वगतमिति** ॥ सु अत्यन्तं अगतं अज्ञातम् । स्वेषु स्वगुणादिषु गतं वा । निजे जने भक्तजनविषये प्रकाशयन् । निजजन इत्यनेन प्रकाशनस्य आवश्यकता सूचिता । तत्रापि करुणैव कारणमित्याह– **कारुण्यनिधिरिति** ॥ करुणैव कारुण्यम् । निधीयतेऽस्मिन्निति निधिः । कारुण्यस्य निधिः आकरः । 'चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम्' [वा.१७८९.सू] इति स्वार्थे ष्यप्रत्ययः । निजे जने कारुण्यनिधिः स्वगतमैक्यं प्रकाशयन्निति वा । प्रकाशनं च निजानिजसाधारणम् । तथापि यत्र करुणा भागवती तस्यैव ऐक्यज्ञानं दृढनिरूढं भवतीति कारुण्यनिधिः बोधयति । यद्वा रामदृष्टान्तेन निजे स्वस्वरूपे द्विधा द्विःप्रकार आत्मना देहेन यो मत्स्यकूर्मवराहनारसिंहहयग्रीवादिः तस्मिन् जने । मीनादिमुखनराकारतया प्रकारद्वैविध्यं ज्ञेयम् । एवं सर्वरूपग्रहः । भृगुवर्यो भृगुषु तद्गोत्रजेषु वर्यो वरः । 'अत्रिभृगुकुलवसिष्ठगोतमाङ्गिरोभ्यश्च' [११४७.कौ] इति तद्गोत्रप्रत्ययस्य लुक् । बहुत्वेति भृगुषु इत्यस्य भार्गवेषु इत्यर्थः सम्भवतीति ज्ञेयम् । 'मुख्यवर्यवरा' इत्यमरः । रघूत्तमेन रामेण समक्षम् , सर्वेषामिति शेषः । जगत इत्याकर्षो वा । प्रत्यक्षं यथा भवति तथा । द्विधा इत्यत्राप्यन्वेति । द्विधा भूतो ततस्तदनन्तरं ऐक्यं तादात्म्यमगात् आप । द्विधेत्यत्र 'सङ्ख्याया विधार्थे धा' [१९८८.कौ] इति स्वार्थ एव धा 'प्रतिपरसमनुभ्योऽक्ष्ण' [ग.६७७.सू] इति टच् ॥६१॥

**वरदराजीया–** ततस्तदनन्तरं निजे जने स्वभक्तजने कारुण्यनिधिः करुणाकरः स हरिः स्वगतं स्वस्वरूपगतं नितान्तमैक्यं अत्यन्ताभेदं दर्शयन् भृगुवर्यः आदौ द्विधा भूत्वा वर्तमान इव आत्मना स्वस्वरूपेण रघूत्तमेनैक्यं एकत्वं समक्षं प्रत्यक्षं यथा भवति तथा अगात् प्राप्तवानित्यर्थः ॥६१॥

**जनार्दनीया–** ततः ज्ञानाज्ञानप्रापकक्रीडानन्तरं कारुण्यनिधिः कृपासमुद्रः स हरिः निजे जने विषये नितान्तं इन्द्रार्जुनवत् विशेषरहितमैक्यं गुणादिनैक्यं धनुःकर्षणात् बलैक्यं दर्शितमिति भावः । तदेव बलं प्रकाशयन् द्विधेव भूत्वा, आदाविति शेषः । भृगुवर्य आत्मना स्वस्वरूपेण रघूत्तमेन समक्षं प्रत्यक्षमैक्यमगात् प्राप ॥६१॥

**चट्टी—** ततो ज्ञानाज्ञानप्रापकक्रीडानन्तरं भृगुवर्यः स रामश्चेति आदौ द्विधा भूत्वैव स्थितः कारुण्यनिधिः भृगुवर्यात्मको हरिर्निजे जने विषये स्वगतं स्वरूपगतं नितान्तमैक्यमत्यन्ताभेदं प्रकाशयन् आत्मना स्वस्वरूपेण रघूत्तमेन समक्षं प्रत्यक्षमैक्यमगात् ।।६१।।

**अनन्तभट्टीया—** भूत्वा स्थित्वेत्यर्थः ।।६१।।

**भारतश्री—** द्विधेव भूत्वा भृगुवर्यः एकेनैक्यमगात् एकेन जगामेति । आत्मना स्वात्मना ।।६१।।

**गूढवाक्यार्थ—** ।। **ततः सः कारुण्यनिधिः इति** ।। भृगुवर्यः परशुरामः द्विधा भूत्वा एकेन रूपेण ऐक्यमगात् । ऐक्यं समेत्य राघवभार्गवयोः परस्परं भेदशङ्कां राघवमूलरूपयोः भेदशङ्कां रामस्य सर्वोत्तमत्वविषये शङ्कामित्यखिलां प्रणुद्य रूपान्तरेण रामाय धनुः दत्वा ययौ ।।६१-६२।।

**अतिविशद—** 'ततः स कारुण्यनिधिर्निजे..... समक्षम् ।। समेत्य चैक्यं.... रमापतिः ।।' इत्यत्र आत्मनो द्विधेत्यस्येवमर्थमाहुः । परशुरामो स्वयं द्विधा भूत्वा एकेन रूपेण राघवं विवेश अपरेण रूपेण स्वयं स्थित इत्येवं कुत इत्यतः पुनः द्विधा भूत्वेत्यनुक्तत्वात् 'जगाम रामानुमतो रमापतिः' इत्येतावन्मात्रस्योक्तत्वादिति च तदसङ्गतमिव भाति । परशुरामस्य एकेन रूपेण स्थितत्वात् प्रत्युत संशय एव स्यात् । परशुरामस्तावन्नाविष्टः ईदृशस्तु प्रविष्टः स एक एवेति तस्मादत्रायं श्लोकद्वयस्यान्वयः । कारुण्यनिधिः रमापतिर्भृगुवर्यः स्वगतं नितान्तं ऐक्यं प्रकाशयन् समक्षमैक्यमगात् ततः आत्मना रामेण द्विधैव भूत्वा रामानुमतः सन् प्रययौ चेति । किं कृत्वा जगतः पश्यतः सतः ऐक्यं समेत्य । पुनः किं कृत्वा जनस्य अखिलां शङ्कां प्रणुद्य । पुनः किं कृत्वा रामाय धनुर्वरं प्रदायेति । अथवा रामानुमत इत्यनेनैव पुनर्द्विधा भूत्वेत्यस्य सिद्धेः । अनुमतेर्भेदकार्यत्वात् प्रकृते तत्प्रतिनिधिविशेषस्य सत्वात् । नहि निर्विशेषाभिन्ने स्वस्मिन् स्वयं स्वेनानुमत इत्येतत् कुत्रापि दृष्टं श्रुतश्चेति । 'याहि त्वं स्वेच्छया राम अहं गच्छे तपोवनम् । इत्युक्त्वा पूजितस्तैस्तु मुनिभावेन भार्गवः ।। महेन्द्राद्रिं जगामाथ तपसे धृतमानसः ।।' इति नृसिंहपुराणवाक्याच्च [४७.१५२-१५३] ।

दशमतिसुकृतविनिर्णयोब्धिसारेऽल्पमतितिर्मलनामकाव्यविदुषा ।
कृतायां टिप्पण्यामतिविशदवाक्यविवृतावध्यायो भगवति समर्पितोऽस्तु तुर्यः ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ चतुर्थोऽध्यायः ।।

**समेत्य चैक्यं जगतोऽभिपश्यतः प्रणुद्य शङ्कामखिलां जनस्य ।**
**प्रदाय रामाय धनुर्वरं तदा जगाम रामानुमतो रमापतिः ॥६२॥**

**वेदाङ्गतीर्थीया**–अखिलां शङ्कां रूपादिभेदविषयशङ्काम् ॥६२-६४॥

**सत्याभिनवीया**– तत्रैव ततस्स कारुण्यनिधिर्निजे जने.... इति श्लोकद्वयम् । तस्यार्थः । ततः क्रीडानन्तरं कारुण्यनिधिः स भृगुवर्यः निजे जने भक्तजने आत्मना परमात्मना रघूत्तमेन स्वगतं नितान्तमैक्यं प्रकाशयन् द्विधैव द्विरूप एव भूत्वा समक्षं लोकप्रत्यक्षं यथा भवति तथा एकेन रूपेण रघूत्तमेन ऐक्यं संश्लेषं अगात् । रमापतिः भार्गवः जगतः अभिपश्यतः सतः एकेन रूपेण रघूत्तमेन ऐक्यं संश्लेषं समेत्य च समेत्यैव । जनस्य भक्तजनस्य अखिलस्य शङ्कां प्रणुद्य रामाय प्रदाय तदा तदैव रामानुमतः सन् जगामेति । एतेन भृगुवर्ये द्वित्वस्य विद्यमानत्वात् द्विधेवेति कथनमयुक्तमिति दूषणं परास्तम् । द्विधेवेति इवशब्दः एवार्थः इत्यङ्गीकारात् । एतेनैव रघूत्तमेन ऐक्यस्य सर्वदा विद्यमानत्वात् रघूत्तमेनैक्यमगादिति कथनमयुक्तमिति दूषणं परास्तम् । रघूत्तमेनैक्यमिति ऐक्यशब्देन संश्लेष एवोच्यते, न तु ऐक्यमित्यभ्युपगमात् । एकेन रूपेण संश्लेषानन्तरं गमनकाले विश्लेषो नास्तीति वक्तुं जगतोऽभिपश्यतः ऐक्यं समेत्यैव जगामेत्युक्तम् । तेनैक्यमगादिति संश्लेषप्राप्तेरुक्तत्वात् ऐक्यं समेत्येतत् व्यर्थमिति दूषणस्यानवकाशः । एतेनैव तदेत्येतत् व्यर्थमिति दूषणं परास्तम् । धनुःप्रदानोत्तरक्षण एव जगामेति वक्तुं तदेत्युक्तमिति स्वीकरणात् ॥६२॥

**सत्यधर्मीया**– कश्यपं प्रति न त्वद्विषये रात्रिमेकां निवसामीति स्वोक्तं स्मरन् यदर्थमागतस्तत्सर्वं विधाय रामो रामसंमत्या जगामेत्याह– **समेत्येति** ॥ रामेणेति शेषः । रामः ऐक्यं समेत्य प्राप्य यथोक्तं नृसिंहपुराणे– [४७-१४८] 'ततः परशुरामस्य देहान्निःसृत्य वैष्णवम् । पश्यतां सर्वदेवानां तेजो राममुपाविशत् ॥' इति ।[१] जगतोऽभिपश्यतः सतः । जनस्य भगवद्भक्तजनस्य । अखिलां रुद्रोत्तमत्वविषयाम्, रामस्य रामेणऽभेदविषयां च इति समस्तां शङ्कां संशयं महतीं वा प्रणुद्य परिहृत्य । द्विधेव भूत्वेत्याकर्षः । पुनर्द्विधा भूत्वा । अन्यथा ऐक्यं समेत्य शङ्कां प्रणुद्य रामाय धनुः प्रदाय रामो जगामेत्यसङ्गतं स्यात् । एकीभूतत्वेन लोकदृष्ट्यापि दातृप्रतिग्रहीत्रोरभावात् । यथोक्तमुत्तरकाण्डे पाद्मे– 'इति श्रुत्वा वचस्तस्य रामस्य भृगुनन्दनः । आलिङ्गनं चकाराथ चैकमूर्तिगतस्तदा ॥ पुनः पृथक्स्वरूपश्च भूत्वासौ भार्गवो ययौ ॥' इति । [२४२अ.]

रामाय धनुर्वरं पिनाकप्रवेकं प्रदाय दत्वा रामानुमतः याहीति श्रीरामाज्ञप्तः रमापतिः लक्ष्मीरमणः जगाम । माहेन्द्रमिति शेषः । यद्वा कामखिलाञ्जनस्य । कामः खिलो समर्थो येन स तथा । आ

---

१. 'राममुखेऽविशत्' इतिमुद्रितपुस्तकेषु ।

अत्यन्तमञ्जनं दोषो यस्य स आञ्जनः कामखिलश्चासावाञ्जनश्च तस्य रुद्रस्य । स्वेनेति शेषः । ऐक्यम् । अभिपश्यतो जगतो शं सुखञ्च प्रणुद्य, अन्वयव्यतिरेकाभ्यां रुद्रस्याशक्ततायाः प्रदर्शितत्वादीश्वराभेदज्ञानं कथं सुखप्रदं भूयादिति भावः । 'दोषं जनं चाञ्जनोऽद्रिरञ्जना स्त्री' इति शाश्वतः । वरं रामं समेत्य रामाय धनुः प्रदाय दत्वा । दत्वेत्याद्यनुक्त्वा 'प्रदाय' इति वचनेन प्रददातीति प्रदः दाता तस्मै प्रदायेत्यर्थात् रामस्य वदान्यत्वं सूच्यते । ननु रामः क्षत्रोत्तम इति न दानपात्रं प्रत्युत वैपरीत्यस्यैवौचित्यादित्यतो वाह- **रामानुमत इति** ।। यद्वा यो रामानुमतो धनुस्तं प्रदायेति यच्छब्दाध्याहारेणान्वयः । चो अनुक्तसमुच्चये । देवादिलोकोऽपि जगामेत्यर्थः । तथाचोक्तं सङ्ग्रहे 'स्वर्ययुः सुराः' इति । रामायणे च 'सुराः सर्षिगणाः' इत्यादि [बा.का.७६.२३] । रामराघवामोघचरित्रज्ञानं मोक्षनिदानमिति तन्निरूप्य अन्तेऽपि मङ्गलमाचरति- **रमापतिरिति** ।। रमा महालक्ष्मीः ।।६२।।

**मधुसूदनीया-** ।। **समेत्य चैक्यमिति** ।। हिशब्देन एतदर्थे प्रमाणसिद्धिं दर्शयति । तदुक्तम्- 'इति श्रुत्वा वचस्तस्य रामस्य भृगुनन्दनः । आलिङ्गनं चकाराऽथ एकमूर्तिगतस्तदा ।। पुनः पृथक् स्वरूपश्च भूत्वाऽसौ भार्गवो ययौ ।।' इति उत्तरकाण्डे पाद्मे । रामाय धनुर्वरं प्रदाय रमापतिः परशुरामः ययौ । तद्धनुश्च परशुरामगमनानन्तरं रामो वरुणाय ददौ । तदुक्तम्- 'गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः । वरुणायाऽप्रमेयाय ददौ हस्ते महायशाः ।। [बा.का.७७.१] इति रामायणे । इदं तु प्रसङ्गादुक्तमिति बोध्यम् ।।६२।।

**वरदराजीया-** जगतोऽभिपश्यतः जगति पश्यति सति ऐक्यं एकत्वं समेत्य जनस्य सज्जनस्य अखिलस्य स्वरूपभेदविषयां शङ्कां प्रणुद्य परिहृत्य रामाय धनुर्वरं धनुःश्रेष्ठं प्रदाय रामानुमतो गृहीतरामाज्ञो रमापतिः परशुरामो जगामेत्यर्थः ।।६२।।

**जनार्दनीया-** जगतोऽभिपश्यतः सतः । जनस्य भक्तजनस्य अखिलां शङ्काम् प्रादुर्भावादिभेदशङ्कां प्रणुद्य परिहृत्य । रमापतिः भार्गवः । रामाय धनुर्वरं प्रदाय, रामेण अनुमतः सम्मतः सन् जगाम ।।

**चट्टी-** ततः किं कृतवानित्यत आह- **समेत्येति** ।। रमापतिः भार्गवात्मको हरिर्जगत अभिपश्यतः सतः ऐक्यमेकत्वं समेत्य जनस्य भक्तजनस्य अखिलां स्वरूपविषयां शङ्कां प्रणुद्य परिहृत्य रामरूपात् पुनः वहिर्निर्गतः सन् रामाय धनुर्वरं प्रदाय रामानुमतो गृहीतरामानुज्ञः सन् इत्यर्थः । जगाम । तदुक्तम्- 'इति श्रुत्वा वचस्तस्य रामस्य भृगुनन्दनः । आलिङ्गनं चकाराथ चैकमूर्तिगतस्तदा ।। पुनः पृथक्स्वरूपश्च भूत्वासौ भार्गवो ययौ ।।' इत्युत्तरकाण्डे पाद्मे । रामः स्वस्य परशुरामदत्तं धनुः वरुणाय ददाविति वेदितव्यम् । तदुक्तम्- 'गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः । वरुणायाप्रमेयाय ददौ हस्ते महायशाः ।।' इति रामायणे । इदं तु प्रसङ्गादुक्तमिति बोध्यम् ।।६२।।

**अनन्तभट्टीया–** रामाय राघवाय रमापतिः परशुरामः ।।६२।।

**भारतश्री–** सः रामः परशुरामदत्तं धनुः वरुणाय दत्तवान् इति ज्ञेयम् इत्युक्तम्– 'गते रामे प्रसन्नात्मा रामो दाशरथिर्धनुः । वरुणायाप्रमेयाय ददौ हस्ते महायशाः ।।' इति रामायणे ।।६२।।

**भावचन्द्रिका–** ।। **समेत्येति** ।। पूर्वोक्तरीत्या व्यक्तिं विना शक्त्यात्मना संश्लेशविशेषप्रत्यक्ष अभेदोपपादकम् । अतो न हरिहरादिप्रतिबन्धो ।।६२-६३।।

**ततो नृपोऽत्यर्थमुदाऽभिपूरितः सुतैः समस्तैः स्वपुरीमवाप ह ।**
**रेमेऽथ रामोऽपि रमास्वरूपया तयैव राजात्मजया हि सीतया ।।६३।।**

**व्यासतीर्थीया–** अपिशब्दात् दशरथोऽपि रेमे । रमास्वरूपत्वं नोपचारेणेत्युक्तम्– **तयैवेति** ।। एकपत्नीव्रतं चोक्तम् ।।६३।।

**सत्याभिनवीया–** तत्रैव रेमेऽथ रामोऽपि रमास्वरूपया... इति श्लोके सीतयैव रेमे इत्येतत् हि प्रमाणप्रसिद्धमिति । एतेन तयेत्येतत् व्यर्थमिति दूषणं पराकृतम् । सीतायाः रमास्वरूपत्वं प्रमाणप्रसिद्धमिति वक्तुं तयेत्युक्तमिति स्वीकरणात् ।।६३।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां चतुर्थोऽध्यायः ।।

**सत्यधर्मीया–** भार्गवादिगमनानन्तरं दशरथो दाशरथिश्च किं चक्रतुरित्यत आह– **तत इति** ।। भार्गवादिगमनानन्तरम् । नृपो दशरथः । अथवा ततो रामोक्त्यनन्तरम् । यथोक्तं रामायणे 'रामस्य तद्वचः श्रुत्वा राजा दशरथः सुतम्' इत्यादि [१.७७.४] । अत्यर्थमुदा निर्भरसन्तोषेण अभिपूरितः पूर्णः । सुतैः समस्तैः चतुर्भिः । अथवा सुतैः चतुर्भिः । समस्तैः तदितरैर्वसिष्ठादिभिः सैन्यादिभिर्वा । यथोक्तं रामायणे– 'वसिष्ठप्रमुखैर्द्विजैः । शासनं काङ्क्षते सेना ...' इत्यादि । अथवा अत्यर्थो वस्तुश्रेष्ठः श्रीरामः तेन तस्मात् मुत् तया तन्निमित्ततोषेण । राम एव निमित्तं तोषस्येति भावः । ततः व्याप्तः । सुतैः समस्तैः । श्रीपरशुरामेणादक्षा इत्यलक्ष्यीकृत्य क्षिप्तैस्त्रिभिति वा । अथवा समस्तैः स्वस्त्रीजनैश्चाभिपूरितः । अनवकाशेन सङ्गतः । स्वपुरीं अयोध्यां अवाप प्राप । अति अतिशयवान्, महानिति यावत् । स तादृशोऽर्थो मोक्षो येन स वा । अत्यर्थस्य मुदिव मुक्त्या वा मोक्षसुखसमसुखेनेत्यर्थः । 'प्रकर्षे लङ्घनेप्यतिः' 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्युभयतश्चामरः । अतिलङ्घितो अर्थो निवृत्तिर्यस्य तेन वा । नित्येन रामेणेत्यर्थः । अथ पुरप्राप्त्यनन्तरं समस्तैः स्वस्त्रीजनै रेमे । इममर्थमपिः प्राह । रामोऽपि राजात्मजया जनकजातया तयैव रमास्वरूपया रमा स्वरूपं यस्याः सा तया रमास्वरूपभूतया ।

तन्नामाह– **सीतयेति** ।। कृष्णवन्नानेकरमासमाविष्टरामासङ्गमरुची राम इत्याह– **तयैवेति** ।। एककामिनीकान्तो राम इति भावः । यथोक्तं नवमस्कन्धे– [८.१३७] 'मृत्युश्चानिच्छतां नासीत् रामे राजन्यधोक्षजे । एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ।।' इति ।

अथवा या राजात्मजया राजसु आत्मा धृतिः प्रयत्नः वयं राजान इत्यात्मा धीर्वा येषां ते राजात्मानः तेषां जयो यया, यन्निमित्तेनेति यावत् । तेभ्यो जय उत्कर्षो वा यया रमा । नृपस्तया सह पुरीमवाप । रामः स्वरूपया स्वं स्वरूपभूतं सौन्दर्यं यस्याः सा तया । 'खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः' [उणादि.३१५] इति निपातनात् रुधातोः पश्च आदेः दीर्घः । 'रूपं स्वभावे सौन्दर्ये' इति कौमुद्युदाहृताभिधानात् । यद्वा राज्ञां तथा आत्मनो भार्गवात्मकस्य भगवतो जयः प्राप्तिर्यया सा । यद्यपि जिः अभिभवोत्कर्षार्थः तथापि धातूनामनेकार्थत्वादत्र प्राप्त्यर्थकः । 'धनजिते स्वर्जिते' [२.२खं] इति छान्दोग्योपनिषद्भाष्यव्याख्यायां 'स्वरादिजयो नाम तत्प्राप्तिः अन्यस्यासम्भवात्' इत्युक्तत्वात् जिः प्राप्त्यर्थकः । राजश्रीरादर्शननिमित्तं जानकीत्यर्थः । हः चार्थे सन् समुच्चिनोति । हिर्हेतौ ।।६३।।

**मधुसूदनीया–** तयैव इत्यनेन एकपत्नीव्रतत्वं सूचयति । तदुक्तं नवमस्कन्धे [९.८.१३७-१३८] । 'मृत्युश्चानिच्छतां नासीद्रामे राजन्यधोक्षजे । एकपत्नीव्रतभरो राजर्षिचरितश्शुचिः ।। स्वधर्मं गृहमेधीयो शिक्षयन् स्वयमाचरन् ।।' इति ।।६३।।

**वरदराजीया–** ततस्तदनन्तरं नृपो दशरथोऽत्यर्थं अत्यन्तं मुदा सन्तोषेणाभिपूरितः पूर्णः समस्तैः स्वसुतैः रामादिभिः सह स्वपुरीं स्वस्य विद्यमानां पुरीं अयोध्यामवापेत्यर्थः । अथानन्तरं रामोऽपि रमास्वरूपया राज्ञो जनकस्य आत्मजया सीतया रेमे । तयैवेत्यनेन श्रीरामस्य भार्यान्तरं निवारयति ।।

**जनार्दनीया–** अत्यर्थं अत्यन्तमभिपूरितः पूर्णः । अथ पुरप्रवेशानन्तरम् । राज्ञो जनकस्यात्मजया कन्यकया रमास्वरूपया तयैव सीतया । तयैव इत्युक्त्या अन्यथा नैवेत्यर्थः । रेमे । अपिशब्देन नृपोऽपि रेम इत्यर्थः ।।६३।।

**चट्टी–** ।। **तत इति** ।। ततस्तदनन्तरं नृपः दशरथः अत्यर्थमत्यन्तं मुदा सन्तोषेणाभिपूरितः पूर्णः समस्तैः सुतैः श्रीरामादिभिः सह स्वपूरीं अयोध्यामवाप । अनन्तरं रामोऽपि राज्ञो जनकस्यात्मजया पुत्र्या रमास्वरूपया तयैव सीतया रेमे । तयैवेत्यनेन एकपत्नीव्रतत्वं सूचितम् । अपिशब्देन नृपोऽपि रेम इत्यर्थः ।।६३।।

**भारतश्री–** तयैवेत्यवधारणेन विवाहान्तरं निषेधति ।।६३।।

**गूढवाक्यार्थ–** रामोऽपि इत्यपिशब्दात् दशरथोऽपि रेम इत्यर्थः । रमास्वरूपत्वं नोपचारेणेति वक्तुं सीतयेत्युक्तम् ।।६३।।

**यथा पुरा श्रीरमणः श्रिया तया रतो नितान्तं हि पयोब्धिमध्ये ।**
**तथा त्वयोध्यापुरगो रघूत्तमोऽप्युवास कालं सुचिरं रतस्तया ॥६४॥**

**व्यासतीर्थीया–** रमणमेव सदृष्टान्तमाह– **यथेति** ॥६४॥

**सत्यधर्मीया–** सपक्षान्तरमचक्षाणः 'रामरावणयोर्युद्धं रामरावणयोरिव' इतिवत् भगवतो भगवता रमणस्य रमणं दृष्टान्तत्वेनाह– **यथा इति** ॥ येन प्रकारेण । पुरा पूर्वम् । श्रीरमणः श्रीपतिः । तया श्रिया वक्षःस्थलाश्रितरमारूपविशेषेण नितान्तं अत्यन्तं रतः । मुख्यस्थलमाह– **पयोब्धिमध्य इति** ॥ पयांसि क्षीराणि आप इव धीयन्तेऽस्मिन्निति पयोब्धिः क्षीरसमुद्रस्तस्य मध्ये, शेष इति शेषः । यद्वा पूर्वश्लोकात् आहीतिपदमनुकृष्यते । ततश्चाङो अभिव्याप्तिरर्थः । ततश्च अहिं शेषमभिव्याप्य अहिरतः । क्षीरसमुद्रमध्ये शेषे रत इत्यर्थः । 'आङ् मर्यादाभिविध्योः' इति समासः । 'आङीषदर्थे अभिविधौ सीमार्थे धातुयोगजे' इत्यमरः । तथा तेन प्रकारेण । अयोध्यापुरि गच्छतीत्ययोध्यापुरिगा । 'तत्पुरुषे कृति बहुलम्' [९७२.कौ] इति सप्तम्या अलुक् । यद्वा काधिकारात् इति पुरीशब्दवत् पुरिशब्दः । ततश्च अवनी अवनिरितिवत् पुरिः पुरी पुरय इति भवति पुरौ पुरि वा गच्छतीति पुरिगः । 'अन्येष्वपि' इति गमेर्डः । रघूत्तमो रामः तया सीतया सुचिरं बहुकालं द्वादशसंवत्सरात्मककालम् । तदुक्तं पाद्मे– 'स्वां स्वां दारां उपायम्य रेमिरे हृष्टमानसाः । तत्र द्वादशवर्षाणि स रेमे सीतया सह ॥'

इति लोकदृष्ट्या एतदिति ज्ञेयम् । रतः क्रीडायुक्तः सन्नुवास अवसत् । नित्यावियुक्तत्वात्सुचिरमिति युक्तम् । उवासेत्यनेन सुचिरमन्वेति । मध्ये चतुर्दशवत्सरं विपिने वसतोऽपि श्रीशस्य पादुका सिंहासने आसीदिति न मध्ये विच्छेदो अतः सुचिरमुवासेति युज्यते । वस निवासे लिट् । 'लिट्यभ्यासस्योभयेषाम्' [२४०८.कौ] इति सम्प्रसारणम् । उवास ऊषतुः ऊषुः ॥६४॥

**मधुसूदनीया–** ॥ **यथा पुरेति** ॥ सुचिरं कालं उवासेति द्वादशवर्षाण्युवासेत्यर्थः । तदुक्तम्– 'स्वान् स्वान् दारानुपागम्य रेमिरे हृष्टमानसाः । तत्र द्वादशवर्षाणि स रेमे सीतया सह ॥' इत्युत्तरकाण्डे [२४२.१८२] पाद्मे ॥६४॥

॥ इति श्रीमद्विद्याधीशतीर्थपूज्यपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे चतुर्थोऽध्यायः ॥

**वरदराजीया–** यथा पुरा पूर्वं श्रीरमणो लक्ष्मीरमणः तया सीतास्वरूपया लक्ष्म्या पयोब्धिमध्ये नितान्तं रत आसीत् । तथा अयोध्यापुरिगो अयोध्यापुर्यां स्थितो रामोऽपि तया लक्ष्मीस्वरूपया सीतया सुचिरं बहुकालं रतः स्थित इत्यर्थः ॥६४॥

**जनार्दनीया–** रमणं दृष्टान्तेनाह– **यथेति** ।। तया सीतास्वरूपया । तथा रघूत्तमोऽपि तया रमास्वरूपया सीतया रतः रमन् [रममाणः] सन् उवास ।।६४।।

**चट्टी–** रमणमेव स्वदृष्टान्तेनाह– **यथेति** ।। यथा पुरा पूर्वं श्रीरमणः लक्ष्मीरमणः तया सीतास्वरूपया श्रिया लक्ष्म्या पयोब्धिमध्ये रत आसीत् । तथा अयोध्यापुरिगः अयोध्यापुर्यां स्थितो रघूत्तमः श्रीरामोऽपि तया लक्ष्मीरूपया सीतया रतस्सन् सुचिरं कालमुवास । द्वादशवर्षाण्युवासेत्यर्थः । तदुक्तम्–'स्वान् स्वान् दारानुपागम्य रेमिरे हृष्टमानसाः । तत्र द्वादशवर्षाणि स रेमे सीतया सह ।।' इत्युत्तरकाण्डे पाद्मे ।।६४।।

**अनन्तभट्टीया–** [तं] तदन्या स्त्री नास्तीति तयैवेत्युक्तम् । तथाच स्त्रीनामिकया इत्युक्तम् ।।६४।।

**भारतश्री–** तुः एव ।।६४।।

**भावचन्द्रिका–** सुचिरं द्वादशवर्षकालम् ।।६४-६५।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावचन्द्रिकायां चतुर्थोऽध्यायः ।।

**इमानि कर्माणि रघूत्तमस्य हरेर्विचित्राण्यपि नाद्भुतानि ।**
**दुरन्तशक्तेरथ चास्य वैभवं स्वकीयकर्तव्यतयाऽनुवर्ण्यते ।।६५।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये रामचरिते अयोध्याप्रवेशो नाम चतुर्थोऽध्यायः ।।

**व्यासतीर्थीया–** एतानि कर्माणि हरेरद्भुतानि अत एतानि परिमृग्योक्तानि इति मन्तव्यमिति भावेनाध्यायार्थं उपसंहरति– **इमानीति** ।। अन्येषां विचित्राण्यपि । अथ च तथाऽपि ।।६५।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्यणटीकायां भारतभावपश्चिकायां चतुर्थोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** एवं विचित्रतचरितानुवर्णनं किमर्थमित्यत आह– **स्वकीयेति** ।। अनेन [कर्तव्यतया] क्रियत इत्युक्तं भवति ।।६५।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां चतुर्थोऽध्यायः ।।

**वादिराजीया–** विचित्राण्यपि लोकस्य विचित्राण्यपि हरेरद्भुतानि नेति सम्बन्धः ॥६५॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां चतुर्थोऽध्यायः ॥

**सत्यधर्मीया–** यद्यपि पद्मापद्मभवभवादिवाङ्मनसागोचरः साकल्येनानन्तं अनन्तस्य माहात्म्यं तथापि तनुमनोवचनशुद्धिसिद्ध्ये तद्वर्णनमावश्यकमिति दिङ्मात्रं तत्प्रदर्श्यत इति वदति– **इमानीति** ॥ रघूत्तमस्य रामस्य । रघुशब्देन लक्षणया तत्कुलजानां ग्रहणम् । तथाच रघुषु रघुजातेषूत्तमः श्रेष्ठः तस्य । तद्राजलुको रघुशब्दादविधानात् । ऐकपद्याच्च लक्षणैव आवश्यकी । 'रघूणामन्वयं वक्ष्ये' 'निरुध्यमाना यदुभिः कथञ्चित्' इति कथमित्याशङ्क्य तदपत्ये लक्षणयेति कौमुद्युक्तेः । इमानि कर्माणि व्यापाराः । विचित्राण्यपि, लोकानामिति शेषः । आश्चर्यरूपाणि । 'चित्र् चयने विपूर्वकादस्मात् 'अमिचिमि...' इत्यादिना क्त्रः । 'आलेख्याश्चर्ययोः चित्रम्' इत्यमरः । चित्रयन्तीति ण्यन्ताद्वा पचाद्यच् । आश्चर्यकराणीति ।

'चित्रं लेख्येऽद्भुते चित्रा त्वाखुपर्णीसुभद्रयोः । गौडुम्बाप्सरसोः दान्त्यां नक्षत्रोरगभेदयोः ॥' इति हेमचन्द्रः । इमानीति इदंशब्दात् नित्यापरोक्षीकृतभगवत्त्वं स्वस्य दर्शयति विशदाशय इत्याशयः ॥ कर्माणि ॥ 'डुकृञ् करणे' अस्मात् 'सर्वधातुभ्यो मनिन्' [५९४.कौ] इति मनिनि कर्मेति भवति । 'कर्म व्याप्ये क्रियायां च पुन्नपुंसकयोर्मतम्' इति रुद्रः । हरेः कर्तुः श्रीनारायणस्य अद्भुतान्याश्चर्यवहानि न भवन्तीत्यर्थः । चित्राणां चरित्राणामानन्त्येन वर्णयितुमशक्यत्वे तत्त्याग एव वर इत्यत आह– **अथ चेति** ॥ अथ च कर्मणामानन्त्येन वक्तुमशक्यत्वेऽपि । भगवतः कुतो नान्तः क्रियाणामित्यतो हेतुमाह– **दुरन्तशक्तेरिति** ॥ दुःसाध्यो अन्तो अवसानं यस्याः सा च सा शक्तिः सामर्थ्यञ्च यस्य तस्यास्य रामस्य वैभवं सामर्थ्यम् । स्वकीयकर्तव्यतया स्वकीयं च तत् कर्तव्यं च तस्य भावस्तया । स्वकीयैः स्वकीयानां वा कर्तव्यता तया वा । 'कुग्जनस्य परस्य च' 'स्वस्य च' [ग.१३६२.सू] इति स्वशब्दात् कुकि गहादित्वात् छे कृधातोः तव्यप्रत्यये भावे तलि स्वकीयकर्तव्यतेति भवति । अनुवर्ण्यते अनुवर्णनविषयो भवतीत्यर्थः । 'वर्ण चूर्ण प्रेरणे' 'वर्ण वर्णने' इत्येके इत्युक्तवर्णधातोः रूपम् । 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' इति वर्णधातोः रूपम् । गुणवर्णनं स्तुतिः । स्तूयते । मयेति शेषः । विचित्राणि विगता चित्रा माया येषु तानि । विशिष्टा चिद् ज्ञानं येषां ते विचितः तान् त्रायन्ते इति विचित्राणि वा । चित्रो चित् तत त्रैङ् पालनार्था क्तः ।

'चित्राखुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् ॥
तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि । तद्युक्तयोस्त्वन्यलिङ्गं .... ॥' इति भानुः ।

यद्वा परपक्षं प्रदर्श्य तत्प्रतिक्षेपमुखेन नाकिलोकप्रवेकतां श्लोकेनैकेन लोकेशस्य अस्तोकप्रतीतिः प्राह– **इमानीत्यादिना** ।। तत्र कानिचिन्मतानि कैश्चित् पदैरादौ प्रदृश्यन्ते । तथाहि । चो यत इत्याद्यर्थे । च यस्य आस्यवैभवम् । आस्यानां मुखानां विभवं महत्त्वं यस्य ब्रह्मणस्तथा शेषस्य तथैव षण्मुखस्य अग्नेश्च । चतुःसहस्रषड्द्विमुखत्वादेषां आस्यवैभवं युक्तमिति भावः । इमानि कर्माणि यानि रघूत्तमस्य सर्वे व्यापाराः अस्य ब्रह्मण एव । न तु रामस्य सामर्थ्यमस्तीति वैधेयाः । एवमेव षाण्मुखशैषधनञ्जयानामेव इमानि कर्माणि इति स्कान्दशैषधानञ्जया जजल्पुः । हरेः सूर्यस्येति सौराः । वायवाश्च वायोरेवेति चोचुः । हे उत्तमस्य । तमो राहुः । 'तमः क्लीबं गुणे शोके सैंहिकेयान्धकारयोः' इति रभसः । 'तमो ध्वान्त गुणे शोके क्लीबं वा ना विधुन्तुदे' इति मेदिनी । तम अन्धकारं वा स्यति तमस्यः । 'षो अन्तकर्मणि' भावे ङः । [तदर्हतीति] तामर्हतीति स्यः । यद्वा क्विप् भावे । समर्हतीति स्यः । चन्द्रः । स उत् ऊर्ध्वम्, शिरउपरीति यावत् । यस्य तत्सम्बुद्धिः । शशिशेखर रुद्र । अस्य ते वैभवं लघु मनोज्ञम् । इमानि कर्माणि चास्य तवेति शैवा गिरीशमीशमीरयन्ति । तमु ग्लानौ । ततोऽसुनि । 'तमांसि तिमिरसैंहिकेया' इति त्रिकाण्डशेषः । पचाद्यचि पुल्लिङ्गो अकारान्तश्च । 'स्वर्भानुस्तु तमो राहुः' इति पुंस्काण्डे रत्नकोशः । 'तमो रात्रौ तमातम्यपि गीयते' 'तमं तु तमसा सार्धम्' इत्यादि केशवद्विरूपकोशौ । उत्तमस्य उद्गतं तमं उत्कृष्टा तमा वा येन स तस्य चन्द्रस्येति विधुमधिकं वैधवा बोधयन्ति । हरेश्चन्द्रस्येति वा । हरेरिन्द्रस्यैवेति बलभिद्वलका अलपन् । शक्तेः रमायाः भवान्याः ह्रीकार्यावेति शाक्तेया उक्तवन्तः । यद्विचित्राणि वीनां पक्षिणां चित्रं यथा भवति तथा णं गमनमस्यास्तीति गगनमुच्यते । ततस्तदभिमानवतो विनायकस्य लक्षणया ग्रहणम् । यद्विचित्राणि अस्य गणप्रणेतुः वैनायकाः रवमकुर्वन् । यद्वा अयोध्यापुरिगो रघूत्तमः इति पूर्वपद्यात् अयोध्यापुरि ग इति विच्छिद्य गो गृह्यते । अयोध्यापुर्युवास इत्यन्वयः । गः सर्वत्रगो व्याप्त इत्यर्थः । अत्र तु गो गणेशः । यः गः अस्येत्यन्वयः । 'गो गणेशे च को वायुविधिविष्णुषु गीयते' इति नामनिधानम् । स्वकीयकर्तव्यतयानुवर्ण्यत इति सर्वत्रापि सम्बध्यते । इति पूर्वपक्षः ।

अथैतैरेव पदैः पूर्वोक्तहेतुस्मारणमुखेन श्रुतिसूत्रानुवादेन तं पूर्वपक्षं महेक्षः प्रतिक्षिपति– **इमानीत्यादिना** ।। हे दुरन्त दुष्टस्वपक्षप्रतिवादिन् । यस्यास्यवैभवं अस्य धातुः नेमानि कर्माणि किन्त्वन्यानि मन्यामह इत्याह– **इमानीति** ।। अविदूर एवोक्तत्वात् 'इमानि' इत्युक्तिः । अपिकर्माणि गर्हितकर्माणि । 'ववन्दिरे ब्रह्ममुखाः सुरेशा' इति रामं प्रत्यागमननमनस्तवनादीनि । अतो न तेन स्वनतेन समः तामरससम्भव इति भावः । अथवा अस्य ब्रह्मणः कर्माणि लोकसर्जनादिक्रियाः रघूत्तमस्यैव । न तत्रापि न तत्र आदृते?। तस्य सामर्थ्यमिति भावः । 'आनन्दमयोभ्यासात्' [सू.१.१.१२] । 'स ब्रह्मणा विसृजति ब्रह्मणोऽधिपतिः' 'ब्रह्मेशानादिभिर्देवैः यत्प्राप्तुं नैव शक्यते ।

तद्यत्स्वभावः कैवल्यं स भवान्केवलो हरे ।।' 'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः । वालक्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः ।।' [सू.भा.१.१.१] इत्यादेर्न शोभां बिभर्ति विधिनिरव-ध्यधिकतावाद इति भावः ।।१।।

ये रमासमनिषेधकाः तान् प्रत्याह- **शक्तेरित्यादिना** ।। शक्तेः रमायाः स्वकीयकर्तव्यतया स्वकीयावश्यानुष्ठेयत्वेन कर्माणि रघूत्तमस्य चरणपरिचरणादीनि यतोऽतो नोत्तम इयं इति मेयमिति भावः । अथवा शक्तेः रमाया वैभवं न । यतः रघूत्तमस्य इमानि कर्माणि श्रीरमणादीनि । यथोक्तं प्राक् वक्ष्यति च । 'रमास्वरूपया' 'रतो नितान्तं हि पयोब्धिमध्ये' 'यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीः' 'मम योनिरप्स्वा अन्तः समुद्रे' 'अत एव प्राण' इति । इदम्पदेन नारायणप्राणत्वे श्रीलक्ष्मीपतित्वस्य लिङ्गत्वेन सूचनात् । 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इत्यादेः ।।२।।

त्र्यक्षपक्षोऽपि न चेति प्रोचे नीचेतरचेताः- **कर्माणीति** । रघूत्तमस्य रामस्य इमानि कर्माणि उपलयुवतीकरणकोदण्डखण्डनपुनःसुवदनीभवनादिकर्माणि यतोऽतः हे उत्तमस्य शिव त्वम् । अपिना कुत्सितपुरुषः, असमञ्जस इति यावत् । 'हरोऽग्रेस्य शिलोपमोऽभूत्' । 'पत्युरसामञ्जस्यात्' [सू.२.२.३७] 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणम्' [ऋ.१०.१२५.५] 'विदे हि रुद्रो रुद्रियं महित्वम्' [ऋ.७.४०.४] 'न ब्रह्मा न च शङ्करः' 'यत्पादपङ्कजरजो गिरिशश्च' इत्यादेः । यद्वा हे हरेः हरेण ई शोभा यस्य स तादृशः एकारान्तः शब्दः । हि यतो इमानि अस्य तव कर्माणि उत्तमस्योत्तमत्वेनाभिमतस्य सकाशादेव अस्य वैभवं लघु स्वल्पम् । अपि च विचित्राणि चिद्ज्ञानं त्राणं चास्य स्त इति चित्राणि विरुद्धं चित्राणि नेति तत्तथा । ज्ञानत्राणरहितमभवदिति भावः । 'शशाक नैवाथ यदाभिवीक्षितुं प्रस्पन्दितुं वा' इत्यादेः ।।३।।

अत एव न गणप्रणेता सेनानीश्च । तयोस्तत्पुत्रत्वात् । 'न विनायकः न च गुहः' इति श्रुतेः । एतस्मादेव न देवी भवानी । तद्भार्यात्वात् । धवाऽधम्यस्य देववधूनां नियतत्वादिति भावः । वायवोवादोऽपि न शोभावहः । इदमप्यूचे सुचेताः- **हरेरित्यादिना** ।। हरेर्वायोः कर्माणि श्वासोच्छ्वासप्राणिप्रणयनादीनि अस्य रघूत्तमस्यैव हरिकर्तृकाण्येव न तत्रापि तस्य सामर्थ्यमिति भावः । यद्वा प्राणशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वात् तथा श्रीलक्ष्मीपतित्वलिङ्गात् समुद्रमध्यवर्तित्वेन च लिङ्गेन प्राणनामा भगवानित्यर्थं तदुत्तममा, तत्समकमलभवचेष्टाप्रदं यद्वैभवमिति बभाषे भाष्यकार- **इमानीति** ।। इः ब्रह्म तेन सहिता मा रमा तस्याः तां वा नियन्तुं शीलमस्येति इमानि वैभवं अतो न कर्माणि हरेरिति भावः । श्रीरमणः श्रिया तया रतो नितान्तं हि पयोब्धिमध्ये । 'अत एव प्राणः' [सू.१.१.२३] 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' [महानारायण.] 'प्राणः प्रणयनादेषः' 'भीषास्माद् वातः पवते' [तै.उ.ब्रह्मवल्ली] इत्यादेश्च । न महान्तः स्वाधिपतिपतित्वविरोधिवचनं स्वमहत्वसम्पादकमपि

तदेकतानमानसा असहन्त इति मारुतगरिष्ठतावादखण्डनेन अखण्डमतिः मरुद्वरिष्ठो असूचयदिति ज्ञेयम् । अत एवास भारतीनिरासः । न च सूर्याचन्द्रमसोरिदं वैभवं मन्तव्यम् । इदमपि जगदे जगदेकेन– **इमानि** ।। हरेः सूर्यस्य तथोत्तमस्य चन्द्रस्य कर्माणि भासकत्वादीनि दुरन्ततशक्तेः रामस्य । विषयत्वं षष्ठ्यर्थः । विषये न प्रवर्तन्त इति यावत् । अथवा चन्द्रस्य सूर्यस्य वा कर्माणि रघूत्तमस्यैव तदनुग्रहायातानीत्यर्थः । 'न तद्भासयते सूर्यो न शशाङ्कः' 'यदादित्यगतं तेजो जगद्भासयते अखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।।' [गी.१५.१२]

'भीषोदेति सूर्यः' [तै.उ.ब्रह्मवल्ली] इत्यादेः । सौरादिमतानां समानन्यायमतान्तरनिराकरणेनैव निराकृतत्वमभिप्रेत्य न पृथक्सूत्रयामास व्यासः तन्निराकरणमिति मन्तव्यम् । यथोक्तमनुव्याख्याने–

'स्कन्दसूर्यगणेशादि मतानि न्यायतोऽमुतः । निराकृतान्यशेषेण सिद्धान्तस्याविशेषतः ।। इति ।। [अनु.२.२.पत्युरधिकरण]

'सर्वत्र प्रसिद्धोपदेशात्' [सू.१.२.१] इत्यत्र अर्थात् वैभवं सर्वव्यापनं आदित्यस्येत्याशङ्क्य प्रसिद्धोपदेशादिति हरेरेव सर्वगतत्वकथनात् । तत्रैव 'चन्द्रमस्येतम्' [ऐ.उ.] इति यामिनीनाथनियामकत्वेन अवस्थानकथनाच्च ।।११।।

अणुवामाः भैरव्यादेः इमानि कर्माणि जगत्स्रष्टृत्वादीनि इति । न च चमदकृततदिति प्रोवाचाचार्यः– **शक्तेरिति** ।। भैरव्यादेः इमानि जगत्स्रष्टृत्वादीनि विचित्राणि आश्चर्यवहानि युक्तानीति यावत् पुरुषाननुगृहीताभ्यः केवलाभ्यो अबलाभ्यः सृष्ट्यनुपपत्तेः । तथाच सूत्रं 'उत्पत्त्यसम्भवात्' [सू.२.२.४२] इति ।।१२।।

न चेन्द्रस्य सम्भवन्तीमानि कर्माणीत्यूचे सुचेताः– **हरेरिति** ।। हरेरिन्द्रस्य यतः इमानि कर्माणि अहल्याधर्षणादीनि । ततो अस्य रघूत्तमस्य वैभवं नेत्यर्थः । 'भीषास्मादिन्द्रश्च' इत्यादेः ।।१३।।

हरेरग्नेरपि कर्माणि पाचकत्वादीनि रघूत्तमस्यैव । अन्तर्निवेशादीनि तथा कर्णादिविदूरत्वादीनि च । 'वैश्वानरः साधारणशब्दविशेषात्' [सू.१.२.२४] 'ज्योतिर्दर्शनात्' [सू.१.३.४०] 'ज्योतिश्चरणाभिधानात्' [सू.१.१.२४] इत्यादिसूत्रात् 'भीषास्मादग्निश्च' [तै.उ] 'अग्निर्वै देवानामवमः' [ऐ.ब्रा] इत्यादेः । 'अपि स्मर्यते' [सू.१.३.२३] 'अहं वैश्वानरो भूत्वा' [गी.१५.] ।।१४।।

केचिदविपश्चिदपश्चिमा जीवानामेव सर्वस्वातन्त्र्यमित्याहुः इत्याह– **अस्येति** ।। अस्य जीवस्य । तन्नेत्याह– **अस्येति** ।। स्वयमनवतीर्णन्यायेन जीवस्य वैभवं विशिष्टो भवो दुःखानुभवहेतुः संसारो योषां तद्भाव संसारित्वमिति यावत् । चित्रा माया येषां तानि इमानि कर्माणि तस्येति भावः । कोऽपि

शक्तः स्वानिष्टं अपेक्षेत आगतं वा कथञ्चिन्न परिहरतीत्यतः स्वासारसंसारनिरासासमर्थस्य नेतरसत्ताप्रदत्वादि । तथा च 'इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिः' [२.१.२२] इत्यादि । आत्मनाशाय को यतेत इतिन्यायात् । अतो नेमानि कर्माणि तस्येति भावः ।।१४।।

अस्य रघूत्तमस्य कर्माणि विचित्राणि विशेषेण चित्रा माया येषां तानि मायामयानीति यावत् । मायां उपादानीकृत्य केनचिदन्येन कृतानि कदाचित्कस्यचित्सर्जनसम्भवादिति मायाविविशेषाणां वादः तमप्यगाधबोधो दूषयति– **इमानीति** ।। उत्तमस्य उत् उद्गतं तमं अविद्या यस्य तस्य मायाविनः कर्माणि इमानि । देवभूदेवनृदेवादिसाक्षिसिद्धानि रुद्रविद्रावणादीनि विचित्राणि विगतमायानि यतोऽस्य दुरन्ता नित्या शक्तिस्तस्याः वैभवम् । अनितरवशतया चिरकालावस्थितत्वादिकम् । स्वकीयकर्तव्यतया । श्रुत्येति शेषः । काः विष्णुविधिवाय्वादय उपलक्षणया पुरुषमात्रग्रहः । तथा च कानामिदं कीयम्, कर्तव्यस्य भावः कर्तव्यता कीया कर्तव्यता सु अत्यन्तं नास्त्यस्यामिति स्वकीयकर्तव्यता तया पुरुषकृतिसाध्यतारहितया अपौरुषेय्येति यावत् अनुवर्ण्यते । एतेन भगवत्कृतेर्मायामयत्वे श्रुतिः मानमित्युक्तं भवति । यद्वा विशिष्टा चित्रा माया भगवदिच्छा सा अस्ति येषां तानि । तथाच सूत्रादि 'अनेन सर्वगतत्वमायामयशब्दादिभ्यः' 'एष एवेश्वरोऽचिन्त्यः एष परमः' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति । 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ।।' 'सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु । स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः ।। अतो मायामयं विष्णुं प्रवदन्ति सनातनम् ।।' इति [सू.भा.३.२.३८] ।।१५।।

केचित् अचित्प्रकृतिः कर्त्रीति चोदयन्ति तदप्याह– **विचिदिति** ।। विचित्प्रधानम् । इमानि जगत् त्राणि पालनसामर्थ्यापेतम् । न रघूत्तमस्येति पुंमात्रनिषेध इति । इदं न मदन्तिके शुशुभ इति भाष्यकृत् भाषते– **विचिदिति** ।। यतः अस्त्यत्र प्रधानं विचिच्छक्तिः ज्ञानहीनमचेतनं ततो न कर्माणि अस्य न । 'रचनानुपपत्तेश्च नानुमानम्' [सू.२.२.१] 'आनुमानिकम्' [सू.१.४.१] इत्यादिसूत्राणि मानमत्रार्थे ।।१६।।

काचित् चिच्छक्तिः कचित् प्रकृतिरिदं जगदुदश्वयतीति कश्चिदुश्चित्तो अवदत् तमप्याह– **विचित्** ।। चेताना प्रकृतिः इमानि कर्माणि, करोति इति शेषः । यतः यस्याः शक्तेः स्त्रीलिङ्गशब्दवाच्यत्वेन योषितः वैभवं स्वरूपं त्राणीति । तन्नेति उन्नतमतिः लपति– **रघूत्तमस्येति** ।। यतः तत्स्त्रीलिङ्गशब्दवाच्यता तस्येत्याह । दुरन्तशक्तेः शक्तिरूपत्वाच्छक्ते रामस्येमानि कर्माणीति । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुप-रोधात्' [सू.१.४.२४] इत्यादि 'हन्त एतमेव पुरुषं सर्वाणि नामान्यभिवविशंति यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमेवाभिविशँति एवमेवैतानि नामानि सर्वाणि पुरुषमभिसंविशँति' [ऐ.उ.] इत्यादेः ।

यद्यपि मुखतः प्रकृतिशब्दोऽत्र न स्फुरति तथापि कर्माणि करोतीत्यर्थात् 'प्रकृतिः प्रकृष्टकरणात्' इति प्रमाणात् प्रकृतिप्रतीतिर्ज्ञेया ।।१७।।

देवादभिन्ना जीवा इति न तस्यैवायं विशेष इति मतिरहिता आहेत्याह– **कर्माणीति** ।। कर्माणि जीवाः । करो देवं कं हस्तो या मीयते येषु तानि कर्माणि 'करोऽस्मिन्मीयत इति कर्म जीव उदाहृतः । विधिशब्देनामितत्वात् अकर्मा भगवान् हरिः ।।' इति नारदीय इति श्रीगीतातात्पर्योक्तेः । विचित् ज्ञानात्मकः त्राणी सर्जनादिशक्तिमान् इति स्वकीयकर्तव्यतया स्वकीयस्य स्वाध्ययनादेः कर्तव्यता यस्याः सा तया । 'स्वाध्यायोऽध्येतव्य' इति सर्वस्याध्ययनकर्मत्वमभिदधती स्वस्या अपि तदभिधत्त इति सा तथा तया । 'आम्नायस्य क्रियार्थत्वात्' इत्यादिव्याख्यावसरे 'स्वाध्यायविधिना वेदः सर्वोऽप्यध्यापनीयः' इत्यादेः । तया श्रुत्या 'तत्त्वमसि' [छां.६.८.७] 'अहं ब्रह्मास्मि' [बृ.३.४. अव्याकृतब्राह्मण] 'सर्वं खल्विदं ब्रह्म' [छां.३] 'नेह नानास्ति किञ्चन' [का.२.१.१.११] 'एकमेवाद्वितीयम्' [छां.६.२.१] इत्यादिकया अनुवर्ण्यते । जीवाः परमात्मैवेत्यनुवर्ण्यत इति यावत् । इदं मतं अतन्द्रितो यतीन्द्रो निराकरोति– **इमानीति** ।। जीवा न देवात्मकाः कुत इत्यतो हेतुमाह– **दुरन्तशक्तेरिति** ।। सर्वगुणानां तादात्म्याच्छक्तेरेकस्याः ग्रहणम् । मुख्यगुणत्वाद्वा । पूर्णस्येत्यर्थः । रघूत्तमस्य दुरन्तशक्तित्वाज्जीवानां चातथात्वात् । अथ कृत्स्नस्यास्य जीवसमूहस्य इत्यर्थः । वैभवं संसारित्वम् । यद्वा रघूत्तमस्य सकाशादेव वैभवं विभवता, मुक्तत्वमिति यावत् । यद्वा रघूत्तमस्य वैभवं नित्यमुक्तत्वं स्वत एवेत्यर्थः । यद्वा अस्य जीवसमूहस्य वैभवं विचित्रा विचितो विशिष्टज्ञानस्य अधीनमेव स्वकीयकर्तव्यतयानुवर्ण्यते । 'देये त्रा च' [२१२६.कौ] इति । ननु कृभ्वस्त्यादियोगाभावात् 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' [२१२७.कौ] इत्युक्तान्यतमत्वाभावाच्चेति चेत् । न । 'बहुलोक्तेरन्यत्रापि' इत्युक्त्वा 'बहुत्रा जीवतो मनः' इत्युदाहृतत्वादिति कौमुद्युक्तेः विचित्रेति भवति । अतो वैभवम् । आणि अणनमणशब्दः वाचकतासम्बन्धेन तद्वत् शाब्दः अत्रार्थे सर्वत्र श्रुतिः, स्वकीयकर्तव्यतया स्वकीयं भगवदीयं कर्तव्यत्वं यस्यास्तयेति स्मृतिः, विचिदिति साक्षी, दुरन्तशक्तेरित्यनुमानं चेमानि मानानि ज्ञेयानि । तर्हि 'सर्वं खल्विदम्' इत्यादिश्रुतेरप्रामाण्यं किमित्यतो नावगतं तत्तात्पर्यं भवतेत्याह– **कर्माणीत्यादिना** ।। विचिज्जीवः । यतो विचित् वें परमात्मनः, चिदित्युपलक्षणम् । ज्ञानादिगुणकः । परमात्मा यथानन्दादिगुणकः तथायमपीति स्वकीयकर्तव्यतया श्रुत्या तथानुवर्ण्यत इति भावः । पारिमित्यपारिमित्याभ्यां विशेषस्तेषां ज्ञेयः । अतत्वमसीति छेदेन तत्त्वं पदयोर्मुख्यार्थत्वाङ्गीकारेण असिपदस्यैकस्य गौणार्थत्वपरतया वा अन्तर्यामिविवक्षया वा तदर्थो ज्ञेयः । इह भगवद्बहिष्ठान्तर्यामिरूपेषु नाना भेदो नास्तीति तच्छ्रुत्यर्थः । 'पृथगुपदेशात्' [सू.२.३.२८] 'तद्गुणसारत्वात् तद्व्यपदेशो प्राज्ञवत्' [सू.२.३.२९]

'भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः ।
यतस्त्वसौ नित्यमुक्तोऽद्वयश्च बन्धान्मोक्षं तत एवाभिवाञ्छेत् ॥' इति कौशिकश्रुतेः ।
'भिन्ना जीवाः परोऽभिन्नस्तथापि ज्ञानरूपतः । प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः ॥'

इत्यादेः न देवजीवैक्यं सम्भवतीति । [यद्यपि] मादृशानां न [अ] ज्ञानानां तथापि श्रीमद्दशमतिविशददयया तथा गुरूरुकरुणातश्च केचिदर्थाः प्रकाशिताः विशेषाज्ञानात् ग्रन्थगौरवभीरुणा च मया इति दिक् ॥६५॥

श्रीमदाचार्यवाचायाः मोचानीचाः रसेन च । रचयन्त्यः क्व च वचो मम क्वचिदित्यहो ॥१॥
अगाधबोधगीर्भावो गीर्वाणादिमदुर्गमः । तदाविष्कृतियत्नं मां बालिशं वेद्म्यहं बुधः ॥२॥
अध्याहारानुकर्षाकर्षणदूरान्वयान्वितः । क्लिष्टकल्पनया युक्तो ग्रन्थोऽपूर्वो विरच्यते ॥३॥
नवा व्याकृतिमीमांसातर्कज्योतिःषु मे मतिः । तथापि मत्कृतिर्मान्या गुर्वाज्ञापूर्विका यतः ॥४॥

॥ इति नावरद्रिपुरुषोत्तमकृतायां(श्रीसत्यधर्मीतीर्थकृतायां)
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां लघुगुर्वर्थदीपिकायां चतुर्थोऽध्यायः ॥

**वरदराजीया–** अध्यायार्थमुपसंहरति– **इमानीति** ॥ रघूत्तमस्य रामस्य हरेः इमानि ताटकासंहरणादीनि कर्माणि अन्येषां विचित्राणि आश्चर्याण्यपि हरेर्नाद्भुतानि अत्यन्ताद्भुतरूपत्वादित्यर्थः । तत्र हेतुः– **दुरन्तशक्तेरिति** ॥ दुरन्ता अन्तरहिता शक्तिर्यस्येति स तथा । तस्य [न] विचित्राणि चेत् कथं वर्णितानीत्यत उक्तम्– **अथ चेति** ॥ अथच तथापि स्वकीयकर्तव्यतया स्वस्यावश्यं वर्णनस्य कर्तव्यत्वेन अस्य हरेर्वैभवं सामर्थ्यं स्वबुद्ध्यसारेण वर्ण्यत इत्यर्थः ॥६५॥

श्रीमद्भारततात्पर्य निर्णयाध्याय एव हि । चतुर्थो व्याकृतस्तावत् प्रीत्यै माधवमध्वयोः ॥

॥ इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
मन्दसुबोधिन्यां चतुर्थोऽध्यायः ॥

**जनार्दनीया–** इमानि 'शरेण मारीचमथार्णवेऽक्षिपत्' इत्यादीनि विचित्राण्यपि ब्रह्मादीनां आश्चर्यकराण्यपि । कर्माणि कृत्यानि । रघूत्तमस्य रामावतारस्य हरेरद्भुतानि न । कुतः ? दुरन्तशक्तेरिति हेतुगर्भविशेषणम् । अपरिमितशक्तित्वादित्यर्थः । तर्हि कुतो वर्णितानीत्यत आह– **अथ चेति** ॥ अथ च अथापि यद्यप्यद्भुतानि नैव तथेत्यर्थः । तस्य हरेर्वैभवं गुणकर्मसामर्थ्यं स्वकीयं च तत्कर्तव्यं च तस्य भावः कर्तव्यता तया । उत्तमश्लोकगुणकर्मानुवर्णनकर्तव्यविधिना इत्यर्थः । अनुवर्ण्यतेऽनुवादः क्रियते ॥६५॥

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पयुतात् ।
तुर्यस्तस्य कृतौ सतां सुखकरोऽध्यायः समाप्तिं शुभः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
पदार्थदीपिकायां चतुर्थोऽध्यायः ।।

**चट्टी–** अध्यायार्थमुपसंहरति । रघूत्तमस्य रामस्य हरेरिमानि 'शरेणमारीचमथार्णवे अक्षिपत्' इत्यादीनि कर्माणि कृत्यानि विचित्राणि ब्रह्मादीनामश्चर्यकराण्यपि हरेरद्भुतानि न । कुतः दुरन्तशक्तेरिति हेतुगर्भविशेषणम् । अपरिमितशक्तित्वादित्यर्थः । तर्हि कुतो वर्णितानीत्यत आह– **अथ चेति** ।। अथ च अथापि । यद्यद्भुतानि न तथापि इत्यर्थः । अस्य हरेर्वैभवं गुणकर्मसामर्थ्यं स्वकीयं च तत्कर्तव्यं च तस्य भावः कर्तव्यता तया उत्तमश्लोकगुणकर्मानुवर्णनकर्तव्यविधिनेत्यर्थः । अनुवर्ण्यत अनुवादः क्रियते ।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां चतुर्थोऽध्यायः ।।

**अनन्तभट्टीया–** विचित्राणि लोके अघटमानानि । नाद्भुतानि विष्ण्वपेक्षया नाश्चर्याणि । तत्र हेतुः– **दुरन्तशक्तेरिति** ।। ननु दुरन्तशक्तित्वे तद्वैभवं कुतो वर्ण्यत इत्यत आह– **स्वकीयेति** ।।६५।।

।। इति श्रीमुष्णं अनन्तभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
तन्त्रमालायां(सत्तत्वमालायां) चतुर्थोऽध्यायः ।।

**ताम्रपर्णीया–** ननु 'पूर्णमद' इत्युक्तरीत्या मूलरूपेणाखण्डैकरसस्य मूलरूपाद्विश्लेषः, अव्यक्तस्वभावस्य जनप्रत्यक्षत्वं, नित्यं पूर्णस्य परिमाणविशेषादिव्यञ्जनं, व्यापकस्य गृहे अवस्थानं, सिद्धाश्रमगमनं, ब्रह्मादिवरावध्यताटकादिवधः, शिलायां मानुष्यप्रदानं, द्रव्यत एवानन्तदेशव्यापकस्य द्रव्याद् वहिर्गतानन्तचन्द्राधिककान्तियुक्तत्वं, युगपदेकस्यैव रामस्य मूलरूपादादिकाल एव विभक्तात् रामात् वामनाद् वासुदेवाच्च विश्लेषः, रुद्रधनुर्भङ्गः, 'अनन्तमन्तवदिव भुजयोरन्तरं गतम्' [द्वा.स्तो.१.५] इत्युक्तरीत्या पृथुतुङ्गवक्षस्त्वादिकं निरन्तरानन्दविबोधसारस्यैकस्यैव वचनप्रतिवचनादिना द्विरूपतया क्रीडत्यादिकर्माण्यतिविरुद्धान्यतिविचित्राणि कथं रामस्य युज्यन्ते इत्यत आह– **इमानीति** ।। इमानि उक्तकर्माणि रघूत्तमस्य हरेः लोकरीत्या विचित्राण्यपि अघटितघटकाचिन्त्याद्भुतदुरन्तशक्तिसम्पन्नत्वात् नाद्भुतानि नाश्चर्याणीत्यर्थः । इमानि कर्माणि यद्यचिन्त्यशक्तेर्नाद्भुतानि तर्हि कुतो वर्ण्यन्ते । अचिन्त्यमहिमावर्णनं च कथं साकल्येन भवतां घटते । वर्णनेन वा कथमधिकारिणां तद्बोध इत्यत

आह– **अचिन्त्यशक्तेरिति** ।। अचिन्त्यशक्तेरस्य नाद्भुतमपि । वैभवं स्वकीयकर्तव्यतया अनु अस्मद्योग्यतानुसारेणाधिकारिणां योग्यतामनुसृत्य च वर्ण्यत इत्यर्थः ।।६५।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना
श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) चतुर्थोऽध्यायः ।।

**भारतश्री–** लोकस्य विचित्राण्यपि हरेः नाद्भुतानि । इदं[स्व] कार्यकर्तव्यतया अनुवर्ण्यते । नास्मद्वर्णनेन तस्य प्रयोजनमित्यर्थः ।।

।। इति श्रीडम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां चतुर्थोऽध्यायः ।।

**प्रमाणसङ्ग्रह–** 'तत्र द्वादशवर्षाणि रेमिरे सीतया सह' इति पद्मपुराणे उत्तरखण्डे [द्विशतोत्तर] चत्वारिंशोऽध्याये । अनेन भार्गवनाभिगतदैत्यहननादिकमुक्तं प्रामाणिकं ग्रन्थान्तरे एतद्विरुद्धकथित-मप्रामाणिकं मोहनार्थमिति ज्ञातव्यम् ।।६५।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे चतुर्थोऽध्यायः ।।

**गूढवाक्यार्थ–** ।। **इमानीति** ।। इमानि कर्माणि मूलरूपेण अखण्डैकरसस्य मूलरूपाद्विश्लेशः अव्यक्तस्वभावस्य जनप्रत्यक्षत्वं, नित्यसर्वपरिमाणस्य परिमाणविशेषाभिव्यञ्जनं, आदिकाल एव विभक्तरामाद् वा वामनाद् वा वासुदेवाच्च विश्लेषः, रुद्रधनुर्भङ्गः, निरन्तरानन्दविबोधसारस्य एकस्यैव प्रश्नप्रतिवचनादिना द्विरूपे कर्माणि लोके विचित्राण्यपि अघटितघटनाचिन्त्यशक्त्युपेतस्य रामस्य नाद्भुतानि नाश्चर्याणि इत्यर्थः ।।६५।।

।। इति विठ्ठलाचार्यतनूजेन नरसिंहाचार्येण रचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां गूढवाक्यार्थविवृतौ चतुर्थोध्यायः ।।

।। श्रीकृष्णार्पणमस्तु ।।

★★★★★

# ।। अथ पञ्चमोऽध्यायः ।।

**इत्थं विश्वेश्वरेऽस्मिन्निखिलजगदवस्थाप्य सीतासहाये**
**भूमिष्ठे सर्वलोकास्तुतुषुरनुदिनं वृद्धभक्त्या नितान्तम् ।**
**राजा राज्याभिषेके प्रकृतिजनवचो मानयन्नात्मनोऽर्थ्यं**
**दध्रे तन्मन्थरायाः श्रुतिपथमगमद्भूमिगाया अलक्ष्म्याः ।।१।।**

**व्यासतीर्थीया–** एवं बालकाण्डकथां निरूप्य अयोध्याकाण्डकथामाह– **इत्थमिति** ।। सीतासहाये भूमिष्ठे अस्मिन् विश्वेश्वरे इति । निखिलजगदवस्थाप्य समीचीनं कृत्वा इत्थं वर्तमाने अनुदिनं वृद्धभक्त्या लोकाः तुतुषुरिति सम्बन्धः । विषयसप्तमी निमित्तसप्तमी च तन्त्रेणैवोपादत्ते । मन्थरा नाम केत्यत उक्तम्– **भूमीति** ।।१।।

**वादिराजीया–** इत्थं रघुकुले उत्पद्य, ताटकां निहत्य, विश्वामित्रयज्ञकण्टकं परिहृत्य, अहल्यायाः शापं विमोच्य, शैवं धनुर्विभज्य, सीतायाः पाणिं परिगृह्य, लोकमयाख्यं राक्षसं भस्मीकृत्य, नैजं वैष्णवं धनू रामादवाप्य अयोध्यायां द्रष्टृसकलजनमनोरञ्जकतया निवसति सतीत्यर्थः । निखिलजगदवस्थाप्य जगत्कण्टकराक्षससंहारेण जगतः स्थितिं कृत्वेत्यर्थः । राज्याभिषेके विषये । आत्मनोऽर्थ्यं इत्थं करोमीति प्रकृतिजनात् प्रति अर्थयितुं योग्यम् । प्रकृतिजनवचः प्रकृतीनां मन्त्रीणामितरजनानां च वचो रामस्य राज्याभिषेकः कर्तव्यः इति वचः मानयन् सन् दध्रे स्वमनसि धारयामास । तद्वचोऽलक्ष्म्याः दारिद्र्याभिमानित्वात् तन्नामिकाया लक्ष्मीविरोधिन्या ज्येष्ठानाम्न्याः कलिपत्न्या भूमिगाया मन्थरायाः कर्णपथमगमत् । तद्वचस्तया श्रुतमिति भावः ।।१।।

**मधुसूदनीया–** ।। **इत्थमिति** ।। प्रकृतिजनवचः प्रकृतिजनानां अमात्यमन्त्रिदूतश्रेणिपुरोहित–पौरजानपद–जनानां वचनमित्यर्थः । 'अमात्या मन्त्रिणो दूताः श्रेणयश्च पुरोहिताः । पुरं जनपदश्चेति सप्त [प्रणिधयः] प्रकृतयस्त्विमाः ।।' इति वचनात् । [भा.ता.१–१०] अलक्ष्म्याः अमङ्गलाभिमानिन्याः ।।

**वरदराजीया– ।। इत्थमिति ।।** इत्थं उक्तरीत्या निखिलं जगत् सर्वलोकान् अवस्थाप्य स्थापयित्वा, जगत्कण्टकराक्षससंहरणेन जगतः स्थितिं कृत्वा इति भावः । विश्वेश्वरे विश्वस्य जगतः ईश्वरे स्वामिनि । सीतासहाये सीता सहायो यस्य स तथा तस्मिन् । भूमिष्ठे पृथिवीस्थितत्वेन प्रत्यक्षे सति सर्वे सर्वलोकाः सर्वे जनाः अनुदिनं अत्यन्तं वृद्धभक्त्या वर्धमानभक्त्या तुतुषुः सन्तुष्टा बभूवुः । राजा दशरथः राज्याभिषेके रामस्य राज्याभिषेकविषये । प्रकृतिजनवचः प्रकृतीनां मन्त्रिणां इतरजनानां च रामराज्याभिषेकः कर्तव्यः इत्येवं रूपं वचः । कथम्भूतम् । आत्मनः स्वस्याप्यर्थ्यं प्राप्यं आकाङ्क्षिताभिधायकं एतादृशं वचः मानयन् तथाऽस्तु इत्यङ्गीकुर्वन् दध्रे मनसि तत्कार्यं कर्तव्यमिति दधारेत्यर्थः । तद्वचः रामस्य राज्याभिषेकः कर्तव्यः इत्येवं रूपम् । भूमिगायाः भूमौ जातायाः अलक्ष्म्याः दारिद्र्याभिमानित्वात् तन्नामिकायाः मन्थरायाः श्रुतिपथं कर्णपथं अगमत् तद्वचनं तया श्रुतमिति यावत् ।।१।।

**जनार्दनीया–** ॐ पूर्वाध्याये बालकाण्डकथामुक्त्वा अयोध्याकाण्डकथामाह– **इत्थमित्यादिना ।।** सर्वे लोकाः इत्थं अनेन प्रकारेण भूमिष्ठे भूमौ वर्तमाने सीतासहाये अस्मिन् रामाख्ये विश्वेश्वरे अनुदिनं प्रतिदिनं नितान्तं वृद्धभक्त्या निमित्तेन निखिलजगत् अवस्थाप्य समर्पयित्वा, 'दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत्' [भा.११.३.२९] इति स्मरणात् समर्प्य तुतुषुरिति योजना । विषयसप्तमी अधिकरणसप्तमी तन्त्रेणोपात्ते । यद्वा सीता सहायो यस्य स तथा तस्मिन् । अस्मिन् रामाख्ये विश्वस्य जगतः ईश्वरे इत्थं पूर्वोक्तप्रकारेण निखिलजगवदस्थाप्य, भगवद्भक्तौ इति शेषः । भूमिष्ठे सति भूमौ वर्तमाने सति सर्वलोकाः अनुदिनं प्रतिदिनं वृद्धया भक्त्या नितान्तं तुतुषुरिति । राजा दशरथः आत्मनः स्वस्य अर्थ्यं अपेक्षणीयं राज्याभिषेके रामस्य साम्राज्याभिषेकविषये प्रकृतिजनैः मन्त्रिपूरुषैः उक्तं वचः मानयन् सन् दध्रे । प्रकृतिजनवचः कर्तव्यमिति मनसि दधार । तद्वचः भूमिगायाः भुवं प्राप्तायाः अलक्ष्म्याः पूर्वजन्मानि दारिद्र्याभिमानित्वादलक्ष्मीः नाम्ना मन्थरायाः कैकेयीदासीत्वेन मन्थरानाम्न्याः श्रुतेः श्रवणेन्द्रियस्य पथं मार्गं अगमत् । वाक्यमश्रृणोदिति भावः ।।१।।

**अनन्तभट्टीया–** अवस्थाप्य सन्मार्ग इति शेषः वर्तमाने, विश्वेश्वरे । अस्मिन्निति भक्त्यपेक्षया निमित्तसप्तमी, तेषामपेक्षया निमित्तसप्तमी च राज्याभिषेके रामस्येति शेषः । अर्थ्यं प्रकृतिजनवचः मानयन् दध्रे अङ्गीचकारेत्यर्थः ।।१।।

**ताम्रपर्णीया– ।। इत्थमिति ।।** सीतासहाये भूमिष्ठेऽस्मिन् विश्वेश्वरे स्वावतारेण जगदवस्थाप्य समीचीनं कृत्वा इत्थं वर्तमाने अनुदिनं वृद्धभक्त्या लोकास्तुतुषुः इति सम्बन्धः । निमित्तसप्तमी विषयसप्तमी च तन्त्रेणोपात्ते । यद्वा न केवलं भगवदवतारस्य रक्षोवधादिकमेव प्रयोजनं किन्तु यथा

वासुदेवादिरूपाणां जगत्स्थापकत्वं एवमनन्तानन्तरामरूपाणि अवतारमात्रेण सर्वजगदन्तर्नियमनादिना सर्वजगदवस्थापकानि । तथा चास्मिन् विश्वेश्वरे स्वावतारमात्रेण निखिलजगत्स्थाप्येत्थं सीतासहाये भूमिष्ठे सतीति योजना[१] ।।१।।

**चट्टी**— बालकाण्डकथामुक्त्वा अयोध्याकाण्डकथामाह— **इत्थमिति** ।। विश्वेश्वरे विश्वस्य जगतः ईश्वरे स्वामिनि सीतासहाये अस्मिन् रामे इत्थमुक्तरीत्या निखिलजगत्सर्वलोकमवस्थाप्य जगत्कण्टकराक्षसहननेन जगतः स्थितिं कृत्वेत्यर्थः । भूमिष्ठे भूमौ वर्तमाने सति सर्वलोकाः सर्वे जनाः अनुदिनं वृद्धया वर्धमानया भक्त्या नितान्तं तुतुषुः । यद्वा उक्तविशेषणविशिष्टे अस्मिन् रामे इत्थं पूर्वोक्तप्रकारेण निखिलजगदवस्थाप्य भगवद्भक्ताविति शेषः । भूमिष्ठे सति सर्वलोकास्तुतुषुरिति । राजा दशरथः राज्याभिषेके श्रीरामस्य साम्राज्याभिषेकविषये आत्मनः स्वस्य अर्थ्यमपेक्षणीयं प्रकृतिजनवचः प्रकृतिजनानाममात्यमन्त्रिदूतश्रेणिपुरोहितपौरजनपदजनानां वचनमित्यर्थः । 'अमात्याः मन्त्रिणो दूताः श्रेणयश्च पुरोहिताः । पुरं जनपदं चेति सप्त प्रकृतयस्त्विमाः ।।' इति वचनात् । मानयन् सन् दध्रे । प्रकृतिजनवचः कर्तव्यमिति मनसि दधार । तद्वचः भूमिगायाः भूमिं प्राप्तायाः अलक्ष्म्याः पूर्वजन्मन्यमङ्गलाभिमानित्वाद् अलक्ष्मीनाम्न्या मन्थरायाः श्रुतिपथं श्रवणेन्द्रियमार्गमगमत् । मन्थरा तद्वाक्यमशृणोदिति भावः ।।१।।

**अतिविशद**— इत्थं विश्वेश्वरेऽस्मिन्नखिलजगदवस्थाप्येत्यत्र रामस्य समस्तजगदवस्थापनं प्रतीयते इदानीं रामस्वरूपेण सर्वजगदवस्थापनस्याकृतत्वात् अनिरुद्धादिरूपेण कृतत्वात् कथमित्यतः तदेतद्रूपयोः 'पूर्णमदः पूर्णमिदम्' इत्यादिश्रुत्या अभेदस्य सिद्धत्वात् रामरूपेणैतत्कृतम् । अथवा विश्वेश्वरे सकलजगदीश्वरे सर्वश्रुत्यादिप्रसिद्धत्वेन इदंशब्दपरामृष्टेऽस्मिन् अनिरुद्धरूपैः निखिलजगत् सर्वजगदवस्थाप्य पालयित्वा रामरूपेण सीतासहाये सति तथा भूमिष्ठे सति सर्वलोका अनुदिनं वृद्धभक्त्या । निखिलजगत् गम्यत इति जगत् ज्ञानधर्मलक्षणं वाक्यजातम् । निखिलजगत् निखिलश्च तत् जगच्च निखिलजगत् । अथवा रमा कलत्रं ब्रह्मा पुत्रः शिवाद्या सेवका इति सर्वजगत् अवस्थाप्य समर्थयित्वा अनुदिनं नितान्तं तुतुषुरिति । 'रामो रामो राम इति सर्वेषामभवत्तदा । सर्वो राममयो लोको यदा रामस्त्वपालयत् ।।' इति नवमस्कन्धतात्पर्यसिद्धम् [९.१७] । अथवा एष्यज्जगत्स्थापनस्य सिद्धत्वात् चक्रवत्परिवर्तनाद्वा 'अखिलजगदवस्थाप्य' इत्युक्तम् । तदुक्तम् [भा.ता.३.३.२५] 'एष्यत्तु

---

१. ।। इत्थमिति ।। भूमिष्ठे विश्वेश्वरे इत्थं निखिलजगदवस्थाप्य रुद्रधनुर्भञ्जनादिमहाकार्येण सुरनरादिनिखिल-जनमनःसमाधानं कृत्वा सीतासहाये सतीत्यर्थः यद्वा सृष्ट्यादिना सकलजगदवस्थाप्य स्थितेऽस्मिन् विश्वेश्वरे नारायणे । इत्थं उक्तरीत्या सीतासहाये भूमिष्ठे सतीत्यर्थः अथवा उक्तविशेषणविशिष्टे रामे अतिवृद्धभक्त्या तुतुषुरिति विषयसप्तमी ।।१-७।। इति हो पुस्तके अधिकः पाठः ।

निश्चितं यत्तदतीतत्वेन भण्यते । चक्रवत् परिवृत्तेः... ।।' इत्यादि । यद्वा 'निखिलजगदवस्थाप्य–सीतासहाये' इत्येकं पदम् । निखिलजगदवस्थाप्यं यया सा निखिलजगदवस्थाप्या सा च सा सीता च निखिलजगदवस्थाप्यसीता तस्याः सहाये सहायभूते तस्मिन् विश्वेश्वरे भूमिष्ठे सति सर्वलोकास्तुतुषुरिति । सीताया अम्भृणीत्वात् अम्भृण्याः 'अहं रुद्रेभिः' [ऋ.१०.१२५.१] इत्यारभ्य 'यं कामये तं तम्' [ऋ.१०.१२५.५] इत्यादिस्वमहिमानमुक्त्वा 'मम योनिरप्स्वान्तः' [ऋ.१०.१२५.७] इत्याह । तथा आचार्या अपि 'विश्वस्थितिप्रलय' [द्वा.स्तो.७.१] इत्यादिना तन्महिमानमुक्त्वा 'श्रीर्यत्कटाक्षबलवती' [द्वा.स्तो.७.१] इत्याहुः । तेन भगवतः सीतासहायत्वं ज्ञायते । 'श्रीरिति ह्रीरथैका' इति सीताया एव श्रीरूपत्वं वक्ष्यति नवम आचार्यः । यद्यप्यत्र निखिलं सृष्ट्वेत्यपि वक्तव्यं तथाऽपि सृष्टस्यैव पालनं युक्तं न त्वसृष्टस्येत्यनेन सृष्टिरपि लब्धा इत्यवस्थाप्येत्युक्तम् । अथवा रामे भूमिष्ठे इति वक्तव्ये यदा विश्वेश्वर इत्युक्तं तदा अतीताः ये चत्वारोऽध्यायाः तदर्थानुवादपूर्वकं उत्तराध्यायार्थः प्रदर्शित इति ज्ञायते । तत्र आद्याध्याये विश्वेश्वरत्वं सर्वोत्तमत्वं समस्तशास्त्रेणोपपादितं, तदेव भारतादिवाक्यग्रहणेनोपपादितं द्वितीये, तृतीये अनिरुद्धरूपेण सर्वजगदवस्थापनं कृतं, चतुर्थे* सीतासहाये रामरूपे भूमिष्ठे सति सर्वलोकाः पञ्चमे तुतुषुरिति वा न विरोधः ।।१–२।।

**गूढवाक्यार्थ–** ।। **इत्थमिति** ।। अवस्थाप्य सन्मार्ग इति शेषः । सीतासहाये भूमिष्ठे अस्मिन् विश्वेश्वरे निखिलजगदवस्थाप्य इत्थं वर्तमाने सति अनुदिनं वृद्धभक्त्या लोकास्तुतुषुरित्यन्वयः । अस्मिन्निति विषयसप्तमी निमित्तसप्तमी च तन्त्रेणोपात्ते । तथा च रामनिमित्तेन रामविषये तुतुषुरित्यन्वयः । यद्वा विश्वेश्वरे नारायणे सकलजगदवस्थाप्य सृष्ट्यादिकं कृत्वा रामरूपेण सीतासहाये भूमिष्ठे सति अनुदिनं वृद्धभक्त्या लोकास्तुतुषुरिति । राज्याभिषेके रामस्येति शेषः ।। **प्रकृतिजनेति** ।। 'अमात्याः मन्त्रिणो दूताः श्रेणयश्च पुरोहिताः...' इत्युक्तप्रकृतिजनवचो मानयन्नित्यर्थः । दध्रे अङ्गीचकारेत्यर्थः ।।१।।

**पूर्वं[1] क्षीराब्धिजाता कथमपि तपसैवाप्सरस्त्वं प्रयाता**
**तां नेतुं तत्तमोऽन्धं [2]कमलजनिरुवाचाशु रामाभिषेकम् ।**

---

*. मूलकोशेषु अस्पष्टमिदं वाक्यम् ।

१. ...ततो ज्येष्ठा समुत्थिता । कृष्णरूपधरा देवी सर्वाभरणभूषिता ।। आदि.१८.४७ पद्म.ब्रह्म.९अध्याये - ततो हृष्टमनोदेवाः ममन्थुः क्षीरसागरम् । ततोऽलक्ष्मीः समुत्पन्ना कालास्या रक्तलोचना ।। रूक्षपिङ्गलकेशा च जरन्तीं बिभ्रती तनुम् । सा च ज्येष्ठाब्रवीत् देवान् किं कर्तव्यं मयेति वै ।। लिङ्गपुराणे उत्तरभागे षष्ठाध्याये– ज्येष्ठामलक्ष्मीमशुभां वेदबाह्यान् नराधमान् ।।४।। ...अलक्ष्मीमग्रतः सृष्ट्वा पश्चाद् पद्मां जनार्दनः ।।५।। –

**भूत्वा दासी विलुम्प स्वगतिमपि ततः कर्मणा प्राप्स्यसे त्वं**
**सेत्युक्ता मन्थराऽऽसीत्तदनु कृतवत्येव चैतत् कुकर्म ।।२।।**

**व्यासतीर्थीया–** अलक्ष्म्या भूमिगतत्वे निमित्तं किमिति जिज्ञासायामाह– **पूर्वमिति** ।। तत् तस्या योग्यं श्रुतिप्रसिद्धं वा । तदनु तज्जन्मान्तरे ।।२।।

**वादिराजीया–** का नामा अलक्ष्मीः किमर्थं भूमिगेत्यत आह– **पूर्वमिति** ।। पूर्वं क्षीराब्धिमथनकाले क्षीराब्धिजाता । अनन्तरं कथमपि केनापि प्रयासेन तपसैव न तु स्वरूपयोग्यतया अप्सरस्त्रीत्वं प्रयाता अभूत् । अप्सरोजन्मन्यपि स्वस्वभावभूतदुःशीलादेः अत्यागात् कथमप्यप्सरस्त्व-मित्युक्तम् । यस्मात् एवं स्वरूपेण दुष्टा तत् तस्मात् कारणात् तां अलक्ष्मीं आशु अन्धन्तमो नेतुं ब्रह्मा उवाच शापं दत्तवान् । तत् तस्याः योग्यं अन्धन्तमः इति सम्बन्धः । स्वगतिं स्वस्याः योग्यां गतिं अन्धन्तमः इत्यर्थः अपवर्गमिति अस्याः भ्रममुत्पादयितुं स्वगतिमित्येवोक्तम् । ततो रामाभिषेकविलुम्पन-कर्मणा । सार्वविभक्तिकस्तसिः । स्वगतिं प्राप्स्यसे इत्युवाचेति पूर्वेण सम्बन्धः । सा अलक्ष्मीरित्युक्ता भूमौ मन्थरा तन्नामिका दासी आसीदित्यर्थः । तदनु तज्जन्मानन्तरमेव तदभिषेकनाशनरूपं कुकर्म कृतवती चेत्यर्थः । तदनु कृतवत्येवेत्यत्र मन्थराया कुकर्मकृतिः स्वपुण्यलोपायेति सूचनायैकस्य वर्णस्य लोपः कृतः । 'न वा एकेनाक्षरेण छन्दांसि वियन्ति' इति वचनात् स्वकृतग्रन्थस्य छन्दस्समानत्व-द्योतनार्थं वा । यद्वा चतुर्दशवर्षानन्तरं रामस्य पुनरपि राज्यप्राप्तेः तत्कृतकुकर्मणो न्यूनत्वसूचनार्थम् । अन्यथा तदनु च कृतवत्येवेति वक्तुं शक्यमपि वर्णं कुतो नावददिति द्रष्टव्यम् ।।२।।

**मधुसूदनीया–** ।। **पूर्वमिति** ।। लक्ष्मीतः पूर्वमित्यर्थः । अनेन इयं ज्येष्ठेति सूचितं भवति । ननु अप्सरस्त्वं नाम देवयोनित्वम् । तत्कथमसुर्याः इत्यत आह– **कथमिति** ।। देहतः एवाप्सरस्त्वं न स्वरूपत इति भावः अपिशब्देन पूर्वमुद्दालकोऽलक्ष्मीं उद्वाह्य अलक्ष्मीं तां कुरूपित्वेन तत्याजेति । सा 'सुन्दरी स्यामिति तपश्चकार' इति सूचयति । तदुक्तं पाद्मे । कुकर्म रामाभिषेकविघातात्मकं कृतवत्येव । चशब्देन तस्मिन् जन्मनि मन्थरायाः पूर्वजन्मनि ब्रह्मोक्तवचनाज्ञानात् कथं विहतवती इत्यतो रामः [३]कदाचित् तां पादेन तताड । तद्रोषाद् विघातं सा चकारेति सूचयति ।।२।।

---

– ज्येष्ठा तेन समाख्याता अलक्ष्मी द्विजसत्तमाः । अमृतोद्भववेलायां विषानन्तरमुल्बणात् ।।६।। अशुभा सा तथोत्पन्ना ज्येष्ठा इति च वै श्रुतम् ।। तां दुःसहो नामार्षिः उवाह । तस्याः दुर्गुणैः खिन्नः तां कुत्रचित् स्थले स्थापयित्वा पातालं विवेश । सः अद्यापि न निवर्तते ।। इति पुराणेषु श्रूयते [पद्मपुराणे]।।

२. तेषां समक्षं गन्धर्वी दुन्दुभी नाम नामतः । शशाप वरदो देवो गच्छ कार्यार्थसिद्धये ।। पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः । मन्थरा मानुषे लोके कुब्जा समभवत्तदा ।। [वन.२७७.१३]

३. 'पादौ गृहीत्वा रामेण कर्षिता सापराधतः । तेन वैरेण सा रामवनवासं च काङ्क्षति ।। इत्यग्निपुराणे ६.८८

**वरदराजीया–** ननु का नामालक्ष्मीः किमर्थं भूमिगा इत्यत आह– **पूर्वमिति** ।। पुरा क्षीराब्धिमथनकाले क्षीराब्धिजाता । अनन्तरं कथमपि केनापि प्रयासेन तपसैव न तु स्वरूपयोग्यतया अप्सरस्त्वं अप्सरस्त्रीत्वं प्रयाता प्राप्ता अभूत् । यस्मादेवं स्वरूपेण दुष्टा तपसैव अप्सरस्त्वं प्रयाता तत् तस्मात् कारणात् तां अलक्ष्मीं आशु अन्धन्तमो नेतुं कमलजनिः ब्रह्मा उवाच शापं दत्तवान् । किमित्युवाचेति– **आश्विति** ।। भूमौ इति शेषः । रामाभिषेकं रामस्य राज्याभिषेकं विलुम्प नाशय । तत्र प्रतिबन्धं कुर्विति यावत् । त्वं ततः तेन अभिषेकविलुम्पनेन कर्मणा स्वगतिं स्वयोग्यां गतिं प्राप्स्यसीत्युवाचेति पूर्वेण अन्वयः । सा अलक्ष्मीः इत्युक्ता भूमौ मन्थरा तन्नामिका आसीत् इत्यर्थः । तदनु तज्जन्मानन्तरमेव एतदभिषेकनाशनरूपं कर्म कृतवती चेत्यर्थः ।।२।।

**जनार्दनीया–** ननु असुरश्रेष्ठकलिभार्यायाः दासीत्वं किमर्थं प्राप्तमित्यत आह– **पूर्वमिति** ।। पूर्वं देवासुराणां समुद्रमथनकाले क्षीराब्धेः सकाशात् जाता तस्याः अलक्ष्म्याः कथमपि महाप्रयत्नेनैव अप्सरस्त्वं अप्सरःस्त्रीत्वं तपसैव तपोबलेन । एवकारस्तु योग्यताभावसूचकः । प्रयाता अवाप्ता । अभूदिति शेषः । यद्यस्मात् तत्तस्मात् कमलजनिः ब्रह्मा तां अप्सरस्त्वं प्राप्तामलक्ष्मीं अन्धंतमो नेतुं उवाच । किमिति ? दासी भूत्वा, कैकय्या इति शेषः । रामस्य अभिषेकं राज्याभिषेकं आशु अविलम्वेन विलुम्प विनाशय । त्वं ततस्तेन हरिद्रोहात्मकेन कर्मणा स्वगतिं स्वरूपयोग्यां गतिं प्राप्स्यसे यास्यसि इत्युक्ता सा अलक्ष्मीस्वरूपाप्सराः मन्थरा मन्थरेति नामवती आसीत् । तस्य मन्थराजन्मनः अनु अनन्तरं एतद्रामराज्याभिषेकविलुम्पनरूपं कुकर्म निन्द्यकर्म कृतवत्येव अकरोदित्यर्थः ।।२।।

**अनन्तभट्टीया–** कमलजनिर्ब्रह्मा । दासी भूत्वा । ततः तेन ।।२।।

**ताम्रपर्णीया–** तत्प्रसिद्धं तमः ।।२।।

**चट्टी–** नन्वलक्ष्म्याः भूमिगात्वे किं निमित्तमित्यत आह– **पूर्वमिति** ।। पूर्वं क्षीराब्धिमथनकाले क्षीराब्धेः सकाशाज्जाता अलक्ष्मीः कथमपि महाप्रयत्नेन तपसैव तपोबलेनैव न तु स्वयोग्यतया अप्सरस्त्वं अप्सरस्त्रीत्वं प्रयाता प्राप्ता । अभूदिति शेषः । अपिशब्देन पूर्वं कुरूपित्वेन उद्दालको अलक्ष्मीपतिः अलक्ष्मीं तत्याजेति सा सुन्दरी स्यामिति तपश्चचारेति सूचयति । यस्मादेवं स्वरूपेण दुष्टा तपसैवाप्सरस्त्वं प्रयाता । तस्मात् कारणात् तामलक्ष्मीं तदन्धन्तमः नेतुं कमलजनिः ब्रह्मा उवाच । किमिति । आशु दासी भूत्वा कैकेय्या इति शेषः । रामाभिषेकं विलुम्प विनाशय त्वं ततस्तेन हरिद्रोहात्मकेन कर्मणा स्वगतिं स्वयोग्यां गतिं प्राप्स्यसि इत्युक्ता सा अलक्ष्मीः भूमौ मन्थरा मन्थरेति नामवती आसीत् । तदनु तस्य मन्थराजन्मनोऽनु अनन्तरं एतद्रामराज्याभिषेकविलुम्पनरूपं कर्म निन्द्यं कर्म कृतवत्येव । अकरोदित्यर्थः । चशब्देन तस्मिन् जन्मनि मन्थराया पूर्वजन्मनि

ब्रह्मोक्तवचनाज्ञानात् कथं विघातयामासेत्यतो रामः कदाचित् तां पादेन तताड । तद्रोषाद् विघातं सा चकारेति सूचयति ॥२॥

**भारतश्री–** ॥१॥ कथमपि अतिक्लेशेन तपसैव न तु योग्यतया । पश्चात् अप्सरस्त्रीत्वं [चेत्] तस्मात् । अपेरप्सरस्त्वेन समुच्चयः । [१]एवेत्यनेन प्राप्स्यसे इत्यनेन सम्बन्धः । एतत् ब्रह्मणोक्तम् । तदनु चतुर्मुखवचनानन्तरम् । शीघ्रं वरात् मुख्यान्धन्तमश्च प्रापेत्यर्थः ॥२॥

**गूढवाक्यार्थ–** तत् प्रसिद्धमन्धन्तमः ॥२॥

**[२]तद्वाक्यात् कैकयी सा [३]पतिगवरबलादाजहारैव राज्यं**
**रामस्तद्गौरवेण त्रिदशमुनिकृतेऽरण्यमेवाविवेश ।**
**सीतायुक्तोऽनुजेन प्रतिदिनसुविवृद्धोरुभक्त्या समेतः**
**संस्थाप्याशेषजन्तून् स्वविरहजशुचा त्यक्तसर्वेषणार्थान् ॥३॥**

**व्यासतीर्थीया–** त्रिदशमुनिकृत एव । प्रतिदिनसुविवृद्धोरुभक्त्या युक्तेन अनुजेन समेतः ॥३॥

**वेदाङ्गतीर्थीया–** ॥१–२॥ पतिगवरबलादिति स्वगतविद्याबलात् युद्धे कैकेय्या रक्षितेन भर्त्रा दशरथेन प्रतिज्ञातवरद्वयबलादेवेत्यर्थः । तद्गौरवेण पित्राज्ञागौरवेण । त्रिदशमुनिकृते देवमुनिरक्षणार्थमेव । प्रतिदिनसुविवृद्धोरुभक्त्या समेतेनेति शेषः । त्यक्तसर्वेषणार्थान् त्यक्तसर्वकामार्थान् ॥३॥

---

१. मूलकोशेषु अस्पष्टमिदं वाक्यद्वयम् ।

२. न हि तद्बुबुधे पापं शापदोषेण मोहिता । केकयेषु हि सा बाल्ये ब्राह्मणं रूक्षरूपिणम् ॥ असूयितवती बाला तेन शप्ता महात्मना । यस्मादसूयसे विप्रं त्व रूपमददर्पिता ॥ तस्मादसूयां त्वमपि लोके प्राप्स्यसि कुत्सिताम् । इति शापसमाच्छन्ना मन्थरावशमागता ॥' इति तिलकः बा.का.९.४०.

३.'पूर्वं दैत्यैर्युद्धकाले दशरथेतरप्रयुक्तामासुरीं मायां धवलाङ्गमुनिदत्तविद्यया निवारयित्र्यै कैकेय्यै तुष्टो दशरथः वरद्वयमदात् इति कथा पुराणेषु प्रसिद्धा' इति महेश्वरतीर्थः । तत्र सम्मतिस्तु अग्निपुराणे दृश्यते तथाहि-'देवासुरे पुरा युद्धे शम्बरेण हतास्सुराः रात्रौ भर्ता गतस्तत्र रक्षितो विद्यया त्वया ॥' इति अग्नि.६.१३-१४॥
'देवदानवयुद्धे दशरथः दानवशस्त्रैः शकलीकृतः मूर्च्छितः तदा कैकेय्या संग्रामादपवाह्य रक्षितः, तत्रापि दूरपातिभिः आसुरीयैः शस्त्रैः विक्षतः ततोऽप्यन्यत्रापवाह्य रक्षितः एवं द्विःप्राणरक्षणतोषेण वरद्वयदानम्' इति गोविन्दराजः
ननु महाभारते 'सत्यप्रतिज्ञ यन्मे त्वं काममेकं विसृष्टवान्' इत्युक्तरीत्या कैकेय्या एक एव वरो वृतः अत्र तु वरद्वयं अतः विरोध इति चेत् । भारतगतरामचरितस्य पूर्वकल्पानुसारेण प्रवृत्तत्वात् न विरोधः तदुक्तं विष्णुधर्मोत्तरपुराणे– 'वर्तमाने तु यद्वृत्तं कल्पे यदुकुलोद्भव । रामस्य चरितं बद्धं तदा वाल्मीतिना शुभम् ॥ अतीतकल्पे यद्वृत्तं मया तत्काम्यके वने । युधिष्ठिराय कथितं धर्मपुत्राय पार्थिव ॥ कल्पानां सति सादृश्ये भेद एष तवेरितः॥'

**वादिराजीया–** तत्कुकर्मकरणप्रकारमाह– **तद्वाक्यादिति** ।। तस्या मन्थराया वाक्यात् भरतस्य राज्यं रामस्य वनवासं याचयेति वाक्यात् सा भरतस्य माता कैकेयी पतिगवरबलादेव । देवसाहाय्येन दैत्यान् प्रति युद्धकरणसमये रथचक्रकीलनिपतने सति कीलतया स्वहस्तदानेन प्रीतो राजा दशरथस्तवेष्टं दास्यामीति वरं दत्तवानिति रामायणकथासूचनाय पतिगवरबलादित्युक्तम् । पतिगवरबलाद्भरतस्य राज्यं रामस्य वनवासं ययाच इति भावः । रामस्य दीयमानं राज्यं भरतार्थमाजहारेत्यर्थः । रामस्तयोः पित्रोर्गौरवेण निमित्तेन । इदं निमित्तमात्रमरण्यप्रवेशने मुख्यप्रयोजनमन्यदेवेत्याह– **त्रिदशमुनिकृत एवेति** ।। देवानां मुनीनां चार्थे तत्कार्यं साधायितुमित्यर्थः । एवेति इदमेव मुख्यं प्रयोजनमिति सूचयति । कथम्भूतो विवेशेत्यत आह– **सीतायुक्त इति** ।। प्रतिदिनसुविवृद्धोरुभक्त्या युक्तेनानुजेनेति योग्यपदाध्याहारः । श्वेतद्वीपे स्वदृष्टिगोचरभगवन्मूर्तेः शयनीयतया सदा सेवायां सुविवृद्धोरुभक्त्या कारणेन अनु स्वानुकूलतया स्वानन्तरं च जेन जातेन लक्ष्मणेनेति वा । प्रतिदिनसुविववृद्धोरुभक्त्या त्यक्तसर्वेषणार्थानिति वा सम्बन्धः । किं कृत्वा । अशेषजन्तून् सहागतान् स्थापयित्वा । कथम्भूतान् । स्वविरहजन्यशोकेन त्यक्ता सर्वस्मात् प्रकारात् ईषणा इच्छा येषां ते त्यक्तसर्वेषणाः अर्थाः विषयाः येषां ते त्यक्तसर्वेषणार्थाः तान् अशेषजन्तून् । जन्तूनिति वदता पशुपक्ष्यादयोऽपि अन्वागता इति सूचितम् ।

**मधुसूदनीया–** ।। **तद्वाक्यादिति** ।। मन्थरा कैकेय्या पितृगृहादानीता । न तु दशरथस्य दासी । अतः सा कैकयीं प्रत्युक्तवतीति भावः । पतिगवरबलात् । पूर्वं देवासुराणां युद्धे प्राप्ते देवैः सहायार्थं आहूतो दशरथः युद्धं चकार । तदा दशरथः श्रान्तो बभूव । तत्समये असुरैः शिरः छेत्तुमुद्युक्ते सति तत्समीपस्था कैकयी दूरं रथं निनाय । तदनन्तरं सन्तुष्टो दशरथः वरद्वयं ददौ । तद्बलादित्यर्थः । 'ज्ञातिदासी यतो जाता कैकेय्यास्तु सहोषिता' इति रामायणे [अयो.का.७.१] 'असुरैश्च महायुद्धे शस्त्रैश्च शकलीकृतः । अपवाह्य त्वया देवि सङ्ग्रामान्नष्टचेतनः ।। तत्रापि विक्षतश्शस्त्रैः पतितो रक्षितस्त्वया । तुष्टेन तेन दत्तौ तु द्वौ वरौ शुभदर्शने ।।' इति [अयो.का.९.१५–१७] युद्धकाले 'पूर्वं दत्तवरा देवी वरमेनमयाचत । विवासनं च रामस्य भरतस्याभिषेचनम् ।।' इति च रामायणे [बा.का.१.२२]। अनेन कैकेय्या राज्यापहारे कृतेऽपि अरण्यवासः कुतो रामस्याभूदिति शङ्का निरस्तेति ज्ञातव्यम् । तद्गौरवेण तयोः पित्रोः गौरवेण इत्यर्थः । अनेन 'जीवतो वाक्यकरणात्' इति स्मृत्यर्थः सर्वथा न त्याज्य इति दर्शयति । त्रिदशमुनिकृते एव इति सम्बन्धः । अनेन त्रिदशमुनिसंरक्षणमेव मुख्यनिमित्तमरण्यप्रवेशे इति सूचयति । 'न गुरुर्न च धर्मोऽस्ति रामदेवस्य कुत्रचित् । तथापि धर्मरक्षार्थं गुरुभक्तिमदर्शयत् ।।' इति वाराहवचनात् [भा.ता.४.२२.६५] ।।३।।

**वरदराजीया–** तत्करणप्रकारमाह– **तद्वाक्यादिति** ।। तस्याः मन्थरायाः वाक्यात् भरतस्य राज्यं रामस्य अरण्यवासं याचय इत्येवं रूपात् । सा भरतस्य माता कैकेयी पतिगवरबलादेव

पतिप्रदत्तवरद्वयबलादेव युद्धकरणसमये कैकेय्या रक्षितेन भर्त्रा दशरथेन वरद्वयं दत्तं तत्तथैव आसीत् । तद्वरबलात् भरतस्य राज्यं रामस्य अरण्यवासं ययाच इति भावः । राज्यं रामाय दीयमानं भरतार्थं आजहारेत्यर्थः । रामः तयोः पित्रोः गौरवेण निमित्तेन । इदं निमित्तमात्रं अरण्यप्रवेशने मुख्यं प्रयोजनं अन्यदेवेत्याह– **त्रिदशमुनिकृतेति** ।। त्रिदशा देवाः मुनयश्च तेषां अर्थे तत्कार्यं साधयितुमिति भावः । एवेतीदमेव मुख्यं प्रयोजनं सूचयति । कथम्भूतो विवेश इत्यत आह– **सीतायुक्त इति** ।। सीतया सहितः । सुविवृद्धोरुभक्त्या युक्तेन अनुजेन सहितः सुविवृद्धोरुभक्त्या त्यक्तसर्वेषणार्थान् इति वा सम्बन्धः । किं कृत्वा अशेषजन्तून् समागतान् संस्थाप्य प्रस्थापयित्वा । कथम्भूतान् स्वस्य विरहः वियोगः तज्जन्यशोकेन त्यक्ता सर्वस्मात् प्रकारात् इषणाः इच्छाः येषां ते त्यक्तसर्वेषणाः अर्थाः विषयाः येषां ते त्यक्तसर्वेषणार्थाः तान् ।।३।।

**जनार्दनीया–** तद्वाक्यात् राज्ञा पूर्वं प्रतिज्ञातं वरद्वयं याचस्वेत्येवं रूपात् मन्थरावाक्यात् । सा पूर्वं युद्धसमये स्वविद्यया पतिं प्रसन्नं कृतवती कैकेयी दशरथभार्या । पतिगयोर्भर्तरि विद्यमानयोर्वरयोर्बलात् राज्यं आजहार । भरतार्थमिति शेषः । सीतया युक्तः, अनुजेन लक्ष्मणेन समेतः रामः प्रतिदिनं सु सम्यक् तारतम्यज्ञानेन इत्यर्थः । विवृद्धया विशेषेण वृद्धया उरोः उत्कृष्टस्य हरेर्भक्त्या निमित्तेन स्वस्य विरहात् वियोगात् जातया शुचा शोकेन त्यक्ताः सर्वेषणार्थाः इच्छाविषयसर्वपदार्थाः यैस्ते तथा तान् । अशेषजन्तून् संस्थाप्य निवर्त्य तस्य दशरथस्य गौरवेण वचनगौरवेण निमित्तमात्रेण त्रिदशानां देवानां मुनीनां अर्थे इति त्रिदशमुनिकृते तानुपकर्तुमेव इति यावत् । अरण्यं आविवेश । कैकेयी भरतार्थं राज्यग्रहणं, वनाय रामस्य प्रेषणं एवं रूपं वरद्वयं पत्युरवापेति भावः ।।३।।

**अनन्तभट्टीया–** पतिगवरबलात् प्राचीनयुद्धसमये कृतात्मसेवातुष्टदशरथदत्तवरनिमित्तादित्यर्थः । तद्गौरवेण पितृवचो मानयितुमित्यर्थः । त्रिदशमुनिकृते देवानाश्चोपकर्तुमित्यर्थः । त्यक्तसर्वेषणार्थान् त्यक्तानि पुत्रमित्रवित्तलोकविषयेच्छानां प्रयोजनानि यैस्तानीत्यर्थः ।।३।।

**ताम्रपर्णीया–** त्रिदिशमुनिकृत एवेत्यन्वयः । प्रतिदिनसुविवृद्धोरुभक्त्या युक्तेनेति शेषः । यद्वा अनुजानयने हेतुमाह– **प्रतिदिनसुविवृद्धोरुभक्त्या** कारणेना**नुजेन समेत इति** ।। **त्यक्तेति** ।। सर्वाश्च ता ईषणाश्च सर्वेषणाः । पुत्रेषणावित्तेषणालोकेषणास्तत्सामर्थ्यविषया ईषणार्थास्त्यक्ताः सर्वेषणार्था यैस्तानि इति विग्रहः ।।३।।

**चट्टी–** तत्करणप्रकारमाह– **तद्वाक्यादिति** ।। तद्वाक्याद् राज्ञा पूर्वं प्रतिज्ञातं वरद्वयं याचयेत्येवं रूपात् मन्थरावाक्यात् । मन्थरा कैकेय्याः पितृगृहादानीता न तु दशरथस्य दासी अतः सा कैकेयीं प्रत्युक्तवतीति भावः । सा कैकेयी पतिगवरबलाद् पतिगयोः भर्तरि विद्यमानयोः वरयोः बलाद् । पूर्वं

देवासुराणां युद्धे प्राप्ते देवैः सहायार्थमाहूतो दशरथः युद्धं चकार । तदा दशरथः श्रान्तो बभूव । तत्समये असुरैः भेत्तुमुद्युक्ते सति तत्समीपस्था कैकेयी दूरं रथं निनाय । तदनन्तरं सन्तुष्टो दशरथो वरद्वयमदात् । तद्बलादेवेत्यर्थः । राज्यमाजहार । भरतार्थमिति शेषः । श्रीरामः सीतया युक्तः प्रतिदिनसुवृद्धोरुभक्त्या प्रतिदिनं सु सम्यक् तारतम्यज्ञानेनेत्यर्थः । विवृद्धया विशेषेण वृद्धया उरू उत्कृष्टस्य हरेर्भक्त्या सहितेन अनुजेन लक्ष्मणेन समेतस्सन् स्वविरहजशुचा स्वस्य विरहाद् वियोगाज्जातया शुचा शोकेन त्यक्ताः सर्वेषणार्थाः इच्छाविषयसर्वपदार्थाः यैस्ते तथा ताम् । सहागतान् अशेषजन्तून् संस्थाप्य स्थापयित्वा तद्गौरवेण तयोः पित्रोः गौरवेण वचनगौरवेण निमित्तमात्रेण त्रिदशमुनिकृते त्रिदशानां देवानां मुनीनां कृते प्रयोजनायैव अरण्यं विवेश । तद्गौरवेणेत्यनेन 'जीवतोर्वाक्यकरणात्' इति स्मृत्यर्थः सर्वथा न परित्याज्य इति सूचितः । त्रिदशमुनिकृत इत्यनेन त्रिदशमुनिसंरक्षणमेवारण्यप्रवेशे मुख्यं कारणं सूचितम् । तदुक्तम्– 'न गुरुर्न च धर्मोऽस्ति रामदेवस्य कुत्रचित् । ततोऽपि धर्मरक्षार्थं गुरुभक्तिमदर्शयदिति ।।' कैकेयी भरतार्थं राज्यग्रहणं वनाय रामप्रेषणमित्येवं रूपं वरद्वयं पत्युरवापेति भावः ।।३।।

**भारतश्री–** वरबलादेवाजहारेति सम्बन्धः न तु राज्ञा प्रीत्या दत्तमित्यर्थः । एवेत्यस्य त्रिदशमुनिकृत इत्यनेनान्वयः । अनुजेन भक्त्या समेतः न तु बलात्कारादिनेत्यर्थः । भार्यात्वात् सीतानुयाता भक्त्यानुजो अनुयात इति भावः ।।३।।

**अतिविशद–** पतिगवरबलादाजहारैव राज्यमित्यत्र पतिगौ वरौ तद्बलादित्यर्थः । तथोक्तं सङ्ग्रहे– 'पुरा सुरासुररणे त्वां निशासु शरक्षतम् । अरक्षं ननु रक्षोभ्यो विद्यया विप्रदत्तया ।। ततः प्रीत्या प्रदत्तौ मे वरौ नृपवंर त्वया ।।' इति ।।३।।

**प्रमाणसङ्ग्रहः–** पतिगवरबलादित्यत्र 'पूर्वं दत्तवरा देवी वरमेनमयाचत । विवासनं च रामस्य भरतस्याभिषेचनम् ।।' इति रामायणे । अनेन राज्यापहारे अरण्यप्रवेशः कुत इति शङ्का परिहृता । तयापि तथा प्रार्थित्वात् इति ज्ञेयम् । पतिगवरयोर्बलादिति विग्रहः । 'असुरैश्च महायुद्धे शस्त्रैश्च शकलीकृतः । अपवाह्य त्वया देवि सङ्ग्रामान्नष्टचेतनः ।। तत्रापि विक्षतश्शस्त्रैः पतितो रक्षितस्त्वया । तुष्टेन तेन दत्तौ तु द्वौ वरौ शुभदर्शने ।।' [अयो.का.९.१५–१७] इति रामायणोक्तेः । तद्वाक्यात्कैकयीत्यत्र मन्थराया कैकयीसहवासे निमित्तं 'ज्ञातिदासी यतो जाता कैकेयास्तु सहोषिता' इति रामायणवाक्येन ज्ञातव्यम् ।।३।।

**गूढवाक्यार्थ–** त्रिदशमुनिकृत एवेत्यन्वयः प्रतिदिनसुविवृद्धोरुभक्त्या युक्तेनेति शेषः । त्यक्तसर्वेषणार्थान् त्यक्तानि पुत्रादिलोकविषय...* प्रयोजनानि यैस्तानीत्यर्थः ।।३।।

पतिप्रदत्तवरद्वयबलादेव युद्धकरणसमये कैकेय्या रक्षितेन भर्त्रा दशरथेन वरद्वयं दत्तं तत्तथैव आसीत् । तद्वरबलात् भरतस्य राज्यं रामस्य अरण्यवासं ययाच इति भावः । राज्यं रामाय दीयमानं भरतार्थं आजहारेत्यर्थः । रामः तयोः पित्रोः गौरवेण निमित्तेन । इदं निमित्तमात्रं अरण्यप्रवेशने मुख्यं प्रयोजनं अन्यदेवेत्याह– **त्रिदशमुनिकृतेति** ।। त्रिदशा देवाः मुनयश्च तेषां अर्थे तत्कार्यं साधयितुमिति भावः । एवेतीदमेव मुख्यं प्रयोजनं सूचयति । कथम्भूतो विवेश इत्यत आह– **सीतायुक्त इति** ।। सीतया सहितः । सुविवृद्धोरुभक्त्या युक्तेन अनुजेन सहितः सुविवृद्धोरुभक्त्या त्यक्तसर्वेषणार्थान् इति वा सम्बन्धः । किं कृत्वा अशेषजन्तून् समागतान् संस्थाप्य प्रस्थापयित्वा । कथम्भूतान् स्वस्य विरहः वियोगः तज्जन्यशोकेन त्यक्ता सर्वस्मात् प्रकारात् इषणाः इच्छाः येषां ते त्यक्तसर्वेषणाः अर्थाः विषयाः येषां ते त्यक्तसर्वेषाणार्थाः तान् ।।३।।

**जनार्दनीया**– तद्वाक्यात् राज्ञा पूर्वं प्रतिज्ञातं वरद्वयं याचस्वेत्येवं रूपात् मन्थरावाक्यात् । सा पूर्वं युद्धसमये स्वविद्यया पतिं प्रसन्नं कृतवती कैकेयी दशरथभार्या । पतिगयोर्भर्तरि विद्यमानयोर्वरयोर्बलात् राज्यं आजहार । भरतार्थमिति शेषः । सीतया युक्तः, अनुजेन लक्ष्मणेन समेतः रामः प्रतिदिनं सु सम्यक् तारतम्यज्ञानेन इत्यर्थः । विवृद्धया विशेषेण वृद्धया उरोः उत्कृष्टस्य हरेर्भक्त्या निमित्तेन स्वस्य विरहात् वियोगात् जातया शुचा शोकेन त्यक्ताः सर्वेषणार्थाः इच्छाविषयसर्वपदार्थाः यैस्ते तथा तान् । अशेषजन्तून् संस्थाप्य निवर्त्य तस्य दशरथस्य गौरवेण वचनगौरवेण निमित्तमात्रेण त्रिदशानां देवानां मुनीनां अर्थे इति त्रिदशमुनिकृते तानुपकर्तुमेव इति यावत् । अरण्यं आविवेश । कैकेयी भरतार्थं राज्यग्रहणं, वनाय रामस्य प्रेषणं एवं रूपं वरद्वयं पत्युरवापेति भावः ।।३।।

**अनन्तभट्टीया**– पतिगवरबलात् प्राचीनयुद्धसमये कृतात्मसेवातुष्टदशरथदत्तवरनिमित्तादित्यर्थः । तद्गौरवेण पितृवचो मानयितुमित्यर्थः । त्रिदशमुनिकृते देवानाञ्चोपकर्तुमित्यर्थः । त्यक्तसर्वेषणार्थान् त्यक्तानि पुत्रमित्रवित्तलोकविषयेच्छानां प्रयोजनानि यैस्तानीत्यर्थः ।।३।।

**ताम्रपर्णीया**– त्रिदिशमुनिकृत एवेत्यन्वयः । प्रतिदिनसुविवृद्धोरुभक्त्या युक्तेनेति शेषः । यद्वा अनुजानयने हेतुमाह– **प्रतिदिनसुविवृद्धोरुभक्त्या** कारणेनानुजेन **समेत इति** ।। **त्यक्तेति** ।। सर्वाश्च ता ईषणाश्च सर्वेषणाः । पुत्रेषणावित्तेषणालोकेषणास्तत्सामर्थ्यविषया ईषणार्थास्त्यक्ताः सर्वेषणार्था यैस्तानि इति विग्रहः ।।३।।

**चट्टी**– तत्करणप्रकारमाह– **तद्वाक्यादिति** ।। तद्वाक्याद् राज्ञा पूर्वं प्रतिज्ञातं वरद्वयं याचयेत्येवं रूपात् मन्थरावाक्यात् । मन्थरा कैकेय्याः पितृगृहादानीता न तु दशरथस्य दासी अतः सा कैकेयीं प्रत्युक्तवतीति भावः । सा कैकेयी पतिगवरबलाद् पतिगयोः भर्तरि विद्यमानयोः वरयोः बलाद् । पूर्वं

देवासुराणां युद्धे प्राप्ते देवैः सहायार्थमाहूतो दशरथः युद्धं चकार । तदा दशरथः श्रान्तो बभूव । तत्समये असुरैः भेत्तुमुद्युक्ते सति तत्समीपस्था कैकेयी दूरं रथं निनाय । तदनन्तरं सन्तुष्टो दशरथो वरद्वयमदात् । तद्बलादेवेत्यर्थः । राज्यमाजहार । भरतार्थमिति शेषः । श्रीरामः सीतया युक्तः प्रतिदिनसुवृद्धोरुभक्त्या प्रतिदिनं सु सम्यक् तारतम्यज्ञानेनेत्यर्थः । विवृद्धया विशेषेण वृद्धया उरू उत्कृष्टस्य हरेर्भक्त्या सहितेन अनुजेन लक्ष्मणेन समेतस्सन् स्वविरहजशुचा स्वस्य विरहाद् वियोगाज्जातया शुचा शोकेन त्यक्ताः सर्वेषणार्थाः इच्छाविषयसर्वपदार्थाः यैस्ते तथा ताम् । सहागतान् अशेषजन्तून् संस्थाप्य स्थापयित्वा तद्गौरवेण तयोः पित्रोः गौरवेण वचनगौरवेण निमित्तमात्रेण त्रिदशमुनिकृते त्रिदशानां देवानां मुनीनां कृते प्रयोजनायैव अरण्यं विवेश । तद्गौरवेणेत्यनेन 'जीवतोर्वाक्यकरणात्' इति स्मृत्यर्थः सर्वथा न परित्याज्य इति सूचितः । त्रिदशमुनिकृत इत्यनेन त्रिदशमुनिसंरक्षणमेवारण्यप्रवेशे मुख्यं कारणं सूचितम् । तदुक्तम्– 'न गुरुर्न च धर्मोऽस्ति रामदेवस्य कुत्रचित् । ततोऽपि धर्मरक्षार्थं गुरुभक्तिमदर्शयदिति ।।' कैकेयी भरतार्थं राज्यग्रहणं वनाय रामप्रेषणमित्येवं रूपं वरद्वयं पत्युरवापेति भावः ।।३।।

**भारतश्री–** वरबलादेवाजहारेति सम्बन्धः न तु राज्ञा प्रीत्या दत्तमित्यर्थः । एवेत्यस्य त्रिदशमुनिकृत इत्यनेनान्वयः । अनुजेन भक्त्या समेतः न तु बलात्कारादिनेत्यर्थः । भार्यात्वात् सीतानुयाता भक्त्यानुजो अनुयात इति भावः ।।३।।

**अतिविशद–** पतिगवरबलादाजहारैव राज्यमित्यत्र पतिगौ वरौ तद्बलादित्यर्थः । तथोक्तं सङ्ग्रहे– 'पुरा सुरासुररणे त्वां निशासु शरक्षतम् । अरक्षं ननु रक्षोभ्यो विद्यया विप्रदत्तया ।। ततः प्रीत्या प्रदत्तौ मे वरौ नृपवर त्वया ।।' इति ।।३।।

**प्रमाणसङ्ग्रहः–** पतिगवरबलादित्यत्र 'पूर्वं दत्तवरा देवी वरमेनमयाचत । विवासनं च रामस्य भरतस्याभिषेचनम् ।।' इति रामायणे । अनेन राज्यापहारे अरण्यप्रवेशः कुत इति शङ्का परिहृता । तयापि तथा प्रार्थित्वात् इति ज्ञेयम् । पतिगवरयोर्बलादिति विग्रहः । 'असुरैश्च महायुद्धे शस्त्रैश्च शकलीकृतः । अपवाह्य त्वया देवि सङ्ग्रामान्नष्टचेतनः ।। तत्रापि विक्षतश्शस्त्रैः पतितो रक्षितस्त्वया । तुष्टेन तेन दत्तौ तु द्वौ वरौ शुभदर्शने ।।' [अयो.का.९.१५–१७] इति रामायणोक्तेः । तद्वाक्यात्कैकयीत्यत्र मन्थराया कैकयीसहवासे निमित्तं 'ज्ञातिदासी यतो जाता कैकेयास्तु सहोषिता' इति रामायणवाक्येन ज्ञातव्यम् ।।३।।

**गूढवाक्यार्थ–** त्रिदशमुनिकृत एवेत्यन्वयः प्रतिदिनसुविवृद्धोरुभक्त्या युक्तेनेति शेषः । त्यक्तसर्वेषणार्थान् त्यक्तानि पुत्रादिलोकविषय...* प्रयोजनानि यैस्तानीत्यर्थः ।।३।।

**प्रमाणसङ्ग्रहः-** ।।१-२।। रामस्तद्गौरवेण त्रिदशमुनिकृतेऽरण्यमेवाविवेश इत्यत्र 'जीवतो वाक्यकरणात्' इत्यादिस्मृत्यर्थः सर्वथा न त्याज्यमिति लोकशिक्षार्थं प्रदर्शितस्य तत्कृतस्य धर्मस्यानुवादस्तद्गौरवेण इति । अरण्यप्रवेशे तु मुख्यं निमित्तं त्रिदशमुनिकृते इति । अरण्यं विवेशेति ज्ञातव्यम् । 'न गुरुर्न च धर्मोऽस्ति रामदेवस्य कुत्रचित् । तथापि धर्मरक्षार्थं गुरुभक्तिं प्रदर्शयेत् ।।' इति वराहवचनात् । (भा.ता.४.२२.६५) ।।३।।

**वृक्षान्[१] पक्षीभकीटान् पितरमथ सखीन् मातृपूर्वान् विसृज्य**
**प्रोत्थां गङ्गां स्वपादाद्धर इव च गुहेनार्चितः सोऽथ तीर्त्वा ।**
**देवार्च्यस्यापि पुत्रादृषिगणसहितात् प्राप्य पूजां प्रयातः**
**शैलेशं चित्रकूटं कतिपयदिवसान्यत्र मोदन्नुवास ।।४।।**

**व्यासतीर्थीया–** देवार्च्यस्य बृहस्पतेः पुत्रात् भारद्वाजात् ।।४।।

**वेदाङ्गतीर्थीया–** गुहेन तन्नामकेन पुत्रेण हर इव गुहाख्यदाशराजेनार्चितः तीर्त्वाथेति सम्बन्धः ।।

**वादिराजीया–** तदेव विविच्याह– **वृक्षानिति** ।। अथाशेषजन्तुसंस्थापनानन्तरं गङ्गां प्राप्येति सम्बन्धः । विसृज्येति वदता ह्यनुगमनासमर्थेष्वपि अनुयायिवृक्षादिषु प्राक् संस्थापनेन दाक्षिण्यातिशयः सूचितः । गुहेन षण्मुखेन हर इव गुहेन गुहनामकेन नाविकेनापि अर्चितः इत्यावृत्त्या योजना । उत्ताराय करं गृहीतुरर्चनमदृष्टचरमिति सूचनाय चशब्दः । तीर्त्वा गङ्गामित्यत्र अपि[पद]सम्बन्धः । निषादाधिपतिना गुहेन पूजां गृहीत्वा गङ्गां ततारेति भावः । अत्र गुहो नाम निषादानां राजा रामस्य दयितः । स च 'धार्मिकस्तस्य बन्धुश्च गुहो नाम महाबलः' इत्यार्षेयरामायणवचनात् तथा 'गच्छन्नाप त्रिपथगां गङ्गां रामस्त्रयीमिव । प्रणनाम प्रभुं प्राप्य निषादाधिपतिर्गुहः ।।' इति सङ्ग्रहरामायणवचनाच्च एतदवगन्तव्यम् । अनन्तरं देवार्च्यस्य बृहस्पतेः पुत्रात् भरद्वाजात् पूजां प्राप्य । गङ्गायमुनासङ्गमे इति शेषः । अत्र चित्रकूटपर्वते ।।४।।

---

१. विषये ते महाराज रामव्यसनकर्शिताः । अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ।। उपतप्तोदका नद्यः पल्वलानि सरांसि च । परिशुष्कपलाशानि वनान्युपवनानि च ।। न च सर्पन्ति सत्त्वानि व्याला न प्रसरन्ति च । रामशोकाभिभूतं तं निष्कूजमिव तद्वनम् ।। लीनपुष्करपत्राश्च नद्यश्च कलुषोदकाः । सन्तप्तपद्माः पद्मिन्यो लीनमीनविहङ्गमाः ।। जलजानि च पुष्पाणि माल्यानि स्थलजानि च । नातिभान्त्यल्पगन्धीनि फलानि च यथापुरम् ।। अत्रोद्यानानि शून्यानि प्रलीनविहगानि च ।। अयो.५९.४-९ । ...अप्रहृष्टमनुष्या च दीननागतुरङ्गमा: ।। अयो.५९.१६

**मधुसूदनीया–** ।। **वृक्षानिति** ।। विसृज्य तान् वञ्चयित्वा । गुहेन किरातेन । 'गुहस्तु रामभक्तोऽसौ स्वभावादेव वैष्णवः । कृताञ्जलिपुटो भूत्वा किङ्कर्तव्यमिति स्थितः ।। गुहोपनीतनावं तु[तां]गङ्गां स समपद्यत । उत्तीर्य गतवान् रामो भारद्वाजाश्रमं प्रति ।।' इति नृसिंहपुराणे ।। [४८.९०] 'ससीतं सानुजामात्यं हिङ्गुदीवृक्षमूलगम् । प्रणनाम गुरुं प्राप्य निषादाधिपतिर्गुहः ।।' इत्यारण्यपर्वस्थ-रामोपाख्याने । अथ गुहपूजाग्रहणाऽनन्तरं तीर्त्वा अत्र चित्रकूटे उवास । सीतालक्ष्मणाभ्यामेव सहित उवासेति विशेषो ज्ञातव्यः । 'रम्यमावसथं कृत्वा रममाणा वने त्रयः' [बा.का.१.३१] इत्यादि रामायणोक्तेः ।।४।।

**वरदराजीया–** अशेषजन्तूनित्युक्तं विशदयति– **वृक्षानिति** ।। वृक्षान् तद्रूपान् जन्तून् पक्षिणश्च इभाश्च कीटाश्च ते तथा तान् पितरं दशरथं च सखीन् मित्राणि मातृपूर्वान् अन्यांश्च विसृज्य अरण्यं विवेश इति पूर्वेण अन्वयः । अथ अशेषजन्तुप्रस्थापनानन्तरं स्वपादोत्थां उत्पन्नां गङ्गां भागीरथीं प्राप्य इति शेषः । तत्र गुहेन तन्नाम्ना निषादानां राज्ञा हरिभक्तेन श्रीरामसखेन हर इव अर्चितः पूजितः सन् तदानीतया नावा तीर्त्वा गङ्गां इत्यत्रापि सम्बध्यते । निषादाधिपतिना गुहेन पूजां गृहीत्वा गङ्गां ततारेति भावः । अत्र गुहो नाम निषादानां राजा न तु स्कन्दः । तथाचोक्तम्– 'तत्र राजा निषादानां रामस्य दयितः सखा । धार्मिकः सत्यसन्धश्च गुहो नाम महाबलः ।।' इति आर्षेयरामायणवचनात् [अयो.का.५०.३३] । तथा– 'गच्छन्नाप त्रिपथगां गङ्गां रामस्त्रयीमिव । प्रणनाम प्रभुं प्राप्य निषादाधिपतिर्गुहः ।।' इत्यादिसङ्ग्रहरामायणवचनाच्च [अयो.का.८.५२] इत्यवगन्तव्यम् । अनन्तरं देवार्च्यस्य देवानामर्च्यः पूज्यस्य देवगुरोः बृहस्पतेः पुत्रात् भरद्वाजादपि । कथम्भूतात् ऋषीणां गणैः सहितात् पूजां प्राप्य गङ्गायमुनासङ्गम इति शेषः । तदुपदिष्टं शैलेशं पर्वतश्रेष्ठं चित्रकूटनामकं प्राप्तोऽभूत् । अत्र चित्रकूटे कतिपयदिवसानि कञ्चित्कालं मोदयन् उवास वासमकरोदित्यर्थः ।।४।।

**जनार्दनीया–** अशेषजन्तवः क इत्यत आह– **वृक्षानिति** ।। वृक्षजीवाः मनसा गता इत्यर्थः । वृक्षादीन् विसृज्य विहाय विवेशेति सम्बन्धः । अथ गुहेन स्कन्देन हर इव रुद्र इव गुहेन एतन्नामकनाविकेन अर्चितः सः रामः । स्वपादात् प्रोत्थां उत्पन्नां गङ्गाशब्दवाच्याम् । अन्यनदीव्यावृत्त्यर्थं 'स्वपदात् प्रोत्थाम्' इत्युक्तम् । गङ्गां भागीरथीं तीर्त्वा । गुहेनेत्यावृत्त्या योज्यम् । नाविकस्यापि गुहनामत्वात् । तथाहि– 'जनान्निवृत्त्य रामोऽसौ जगाम च गुहाश्रमम् । गुहश्च रामभक्तोऽसौ स्वभावादेव वैष्णवः ।। कृताञ्जलिपुटो भूत्वा किं कर्तव्यमिति स्थितः ।। [४८.८६–८७] गुहोपनीतनावा तु तां गङ्गां समपद्यत [सः महाद्युतिः] उत्तीर्य गतवान् रामो भारद्वाजाश्रमं प्रति ।।' इति नरसिंहपुराणे । [अ४८.९०] 'तत्र राजा निषादानां रामस्य दयितः सखा । धार्मिकः सत्यसन्धश्च गुहो नाम महाबलः ।।' इत्यार्षे रामायणे । [अ५०.३३] ऋषिगणसहितात् देवानां अर्च्यस्य पूज्यस्य बृहस्पतेः । पुत्रादपि भरद्वाजादपि । पूजां प्राप्य ।

प्रयागक्षेत्र इति शेषः । प्रयागान्नैऋत्यदिशि विद्यमानं शैलेशं चित्रकूटपर्वतम् । प्रयातस्सन् । अत्र पर्वते कतिपयानि कानिचित् दिवसानि मोदन् सन् तुष्यन् उवास उषितवान् । 'क्लीबे दिवसवासरौ' इत्यमरः ।।

**अनन्तभट्टीया–** वृक्षान् तदभिमानिनः जन्तूनिति सर्वत्र सम्बध्यते स्वपादात् प्रोत्थां......* पदेनैव इतरनदीव्यावृत्तिसिद्धेः गुहेन षण्मुखेन हर इव गुहेन गुहनामकनाविकेनापि अर्चित इत्यावृत्त्या योजना देवार्च्यस्य बृहस्पतेः पुत्रात् भरद्वाजात् ।।४।।

**ताम्रपर्णीया–** गुहेन षण्मुखेन हर इव गुहेन नाविकेनार्चित इति योज्यम् । देवार्च्यस्य बृहस्पतेः ।।४–५।।

**चट्टी–** अशेषजन्तूनित्युक्तं विशदयति– **वृक्षानिति** ।। वृक्षजीवाः मनसा गता इत्यर्थः । वृक्षान् पक्षिणश्च इभाश्च कीटाश्च ते तथा तान् पितरं दशरथं च अथ सखीन् मित्राणि मातृपूर्वान् अन्यांश्च विसृज्य विहायारण्यं विवेशेति पूर्वेणान्वयः । अथ सः श्रीरामः गुहेन स्कन्देन हर इव गुहेन तन्नामकनिषादाधिपेन अर्चितः सन् स्वात् पदात् प्रोत्थामुत्पन्नाम् । गङ्गाशब्दवाच्यान्यनदीव्यावृत्त्यर्थं स्वपदाद् प्रोत्थामित्युक्तम् । गङ्गां भागीरथीं तीर्त्वा गुहेनेत्यावृत्त्या योज्यम् । नाविकस्यापि तन्नामकत्वात् । तथा हि– 'जनान् निवृत्य रामोसौ जगाम च गुहाश्रमम् । गुहश्च रामभक्तोऽसौ स्वभावादेव वैष्णवः ।। कृताञ्जलिपुटो भूत्वा किं कर्तव्यमिति स्थितः । गुहोपनीतनावा तु तां गङ्गां समपद्यत ।। उत्तीर्य गतवान् रामो भरद्वाजाश्रमं प्रति ।।' इति नारसिंहपुराणे 'तत्र राजा निषादानां रामस्य दयितः सखा । धार्मिकः सत्यसन्धश्च गुहो नाम महाबलः ।।' इत्यार्षरामायणे । 'ससीतं सानुजामात्यमिङ्गुदीवृक्षमूलगम् । प्रणनाम प्रभुं प्राप्य निषादाधिपतिर्गुहः ।।' इति रामायणेऽप्यरण्य-पर्वणि । ऋषिगणसहितान् देवानामर्च्यस्य पूज्यस्य बृहस्पतेः पुत्रात् भरद्वाजात् अपि पूजां प्राप्य प्रयागक्षेत्र इति शेषः । प्रयागान्नैर्ऋत्यां दिशि विद्यमानं तदुपदिष्टशैलेशं चित्रकूटं प्रयातस्सन् अत्र चित्रकूटे कतिपयदिवसानि कानिचिद्दिनानि मोदन् तुष्यन् उवास ।।४।।

**भारतश्री–** इभशब्दः पशुसामान्यवाची । गुहेन षण्मुखेन हर इव गुहेन निषाधाधिपतिना गुहनामकेनार्चितः । चशब्देन कथाश्च कृत्वेति लभ्यते । देवार्च्यस्य बृहस्पतेः पुत्रात् भरद्वाजात् इत्यर्थः ।।

**अतिविशद–** गुहेनार्चित इत्यत्र गुहनामकनिषादाधिपेन इत्यर्थः । तदुक्तं आर्षे रामायणे– 'तत्र राजा निषादानां रामस्य दयितः सखा । धार्मिकस्सत्यसन्धश्च गुहो नाम महाबलः ।।' इति ।।४।।

**प्रमाणसङ्ग्रहः–** हर इव गुहेनेति गुहः किरातः । 'गुहस्तु रामभक्तोऽसौ स्वभावादेव वैष्णवः । कृताञ्जलिपुटो भूत्वा किङ्कर्तव्यमिति स्थितः ।। गुहोपनीतनावं तु[तां]गङ्गां स समपद्यत । उत्तीर्य गतवान् रामो भारद्वाजाश्रमं प्रति ।।' इति नरसिंहपुराणे ।। 'ससीतं सानुजामात्यं हिङ्गुदीवृक्षमूलगम् । प्रणनाम

गुरुं प्राप्य निषादाधिपतिर्गुहः ।।' इत्यारण्यपर्वस्थरामोपाख्याने । चित्रकूटे त्रय एव ऊषुः । तदुक्तम्– 'रम्यमावसथं कृत्वा रममाणा वने त्रय' इत्यादि रामायणवाक्यम् ।।४।।

**गूढवाक्यार्थ–** गुहेन षण्मुखेन हर इव गुहेन गुहनामकनाविकेनेति योज्यम् । देवार्च्यस्य बृहस्पतेः पुत्रात् भरद्वाजात् ।।४।।

**एतस्मिन्नेव काले दशरथनृपतिः स्वर्गतोऽभूद्वियोगात्**
**रामस्यैवाथ पुत्रौ विधिसुतसहितौ मन्त्रिभिः केकयेभ्यः ।**
**आनीतौ तस्य कृत्वा श्रुतिगणविहितप्रेतकार्याणि सद्यः**
**शोचन्तौ राममार्गं पुरजनसहितौ जग्मतुर्मातृभिश्च ।।५।।**

**वादिराजीया–** कैकेयीं प्रति कोपात् सहागच्छेत्यनुक्त्वैव भरतस्य गमनं सूचयितुं मातृभिश्चेत्येवोक्तं न तु सहिताविति । तृतीयाबलात् सहपदाध्याहारेण योजना ।।५।।

**मधुसूदनीया–** ।। **एतस्मिन्नेव काले इति** ।। चित्रकूटं यदा प्राप तस्मिन्नेव काले रामनिर्गमनानन्तरं षष्ठे दिवसे नृपतिः दशरथः स्वर्गतः मृतोऽभूत् । तत्र हेतुः रामस्य वियोगादेवेति । दशरथस्य पुत्रवियोगनिमित्तं तु श्रवणाख्यमुनिमातापितृशाप इति मन्तव्यम् । ननु नृपतिमरणानन्तरं भरतस्यागमने[१] चतुर्दशदिवसा गता इति श्रूयते । तावत्पर्यन्तं मृतो देहः स्थापितो न वेति शङ्का प्रासङ्गिकी 'तैलद्रोण्यां तदाऽमात्याः संवेश्य जगतीपतिम्' इति रामायणवाक्येन [अयो.का.६६.१४] परिहर्तव्या ।।५–७।।

**वरदराजीया–** एतस्मिन्नेव काले चित्रकूटे भगवतः निवासकाले रामस्य वियोगादेव दशरथनृपतिः स्वर्गतोऽभूत् स्वर्गलोकगतो मृतोऽभूत् इत्यर्थः । अथ नृपतिमरणानन्तरमेव विधिसुतेन वसिष्ठेन सहितौ मन्त्रिभिश्चि सुमन्त्राद्यैः भ्रातरौ भरतशत्रुघ्नौ कैकेयेभ्यो देशेभ्यः आनीतौ । श्रीरामगमनसमये मातामहगृहे वर्तमानौ इदानीमयोध्यामानीतौ इति भावः । आनीतौ तौ तस्य पितुः दशरथस्य श्रुतिसन्दर्भैर्विहितानि

---

१. यद्यपि दशरथः मध्यरात्रे मृतः । प्रातः मन्त्रिणः आगत्य विचार्य तैलद्रोण्यां तद्देहं निचिक्षिपुः । ततः (परदिने) वसिष्ठः विचार्य केकयान् प्रति दूतान् अप्रेषयत् । 'सप्तरात्रेण गत्वा वै दूतास्ते श्रान्तवाहनाः' इति वसिष्ठप्रेषितदूतानां कैकयदेशं गन्तु सप्तदिनानि जातानि । ततः भरतस्य अयोध्यां प्रति आगन्तुं सप्तदिनानि व्यतीतानि । तथोक्तं 'तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि' इति (अयो.का.७१.१८) । एवं मिलित्वा पञ्चदशषोडशदिनानि व्यतीतानि । तथापि दूतप्रयाणभरतप्रयाणदिनव्यपेक्षया चतुर्दशदिनानीति मधुसूदनभिक्षुभिरुक्तम् ।

प्रेतकार्याणि प्रेतमुद्दिश्य क्रियमाणानि कार्याणि कृत्वा सद्यः तत्समाप्त्यनन्तरमेव पुरजनैः अयोध्यानिवासिभिः लोकैः सहितौ शोचन्तौ शोकं कुर्वन्तौ मातृभिश्च सह राममार्गं रामः येन मार्गेण गतः तं जग्मुरित्यर्थः ।।५।।

**जनार्दनीया—** एतस्मिन्नेव काले चित्रकूटे अवस्थितिकाले । रामस्य वियोगादेव वियोगनिमित्तादेव । स्वः परलोकं गतोऽभूत् मृतः । 'स्मृतौ वृत्तनिषेधे स्म स्वः स्वर्गपरलोकयोः' इत्यभिधानात् । अथ मृत्यन्तरम् । विधिसुतेन वसिष्ठेन सहितौ । पुत्रौ भरतशत्रुघ्नौ । केकयेभ्यः केकयविषयेभ्यः आनीतौ । अयोध्यां प्रतीति शेषः । [१]विप्रशापाद्दशरथस्य पुत्राणां वियोगकाले मृतिरभूदिति भावः । तस्य पितुः श्रुतिगणेषु विहितानि च तानि प्रेतकार्याणि प्रेतसंस्कारकर्माणि कृत्वा । सद्यः प्रेतकार्यसमाप्त्यनन्तरमेव शोचन्तौ दुःखितौ भरतशत्रुघ्नौ रामेण गतं मार्गमनुजग्मतुः ।।५।।

**अनन्तभट्टीया—** विधिसुतो वसिष्ठः ।।५–६।।

**चट्टी—** एतस्मिन्नेव काले श्रीरामः चित्रकूटं यदा प्राप तस्मिन्नेव काले श्रीरामनिर्गमनानन्तरं षष्ठे दिवसे दशरथनृपतिः श्रीरामस्य वियोगान्निमित्तादेव स्वः स्वर्गं गतोऽभूत् । मृतः सन् स्वर्गं प्राप्त इत्यर्थः । दशरथस्य पुत्रवियोगनिमित्तं तु श्रवणाख्यमुनिमातापितृशाप इति मन्तव्यम् । नृपतिमरणानन्तरं भरतस्यागमने सति चतुर्दशदिवसाः गताः इति श्रूयते तावत्पर्यन्तं मृतदेहः स्थापितो न वेति शङ्का 'तैलद्रोण्यामथामात्यास्संवेश्य जगतीपतिम्' इति रामायणवाक्येन परिहर्तव्या । अथानन्तरं विधिसुतेन वसिष्ठेन सहितौ पुत्रौ भरतशत्रुघ्नौ मन्त्रिभिः सुमन्त्राद्यैः कैकयेभ्यः केकयविषयेभ्यः आनीतौ श्रीरामगमनसमये मातामहगृहे वर्तमानाविदानीं अयोध्यां प्रत्यानीताविति भावः । आनीतौ तौ तस्य पितुः दशरथस्य श्रुतिगणेषु विहितानि च तानि प्रेतकार्याणि च प्रेतसंस्कारकर्माणि कृत्वा सद्यः तत्समाप्त्यनन्तरमेव पुरजनैरयोध्यानिवासिभिः लोकैः सहितौ मातृभिः सहितौ शोचन्तौ शोकं कुर्वन्तौ राममार्गं श्रीरामेण गतं मार्गं अनुजग्मतुः ।।५।।

**भावचन्द्रिका—** ।।१–४।। रामवियोगात् षष्ठ एव दिवसे स्वर्गतः ।।५–७।।

**अतिविशद—** स्वर्गतोऽभूद्वियोगादित्यत्र स्वर्गशब्देन यमलोको विवक्ष्यते । 'तदा मृतान् राघव आनिनाय यमक्षयाद्देवगणांश्च सर्वशः । समन्वजानात् पितरं च तत्र... ।।' इत्युत्तरवाक्यात् न

---

१. श्रवणकुमारपितुः यज्ञदत्तनाम्नो विप्रस्य शापादिति जानीयात् । तथाहि अग्नि.पु.६.रामे वनं गते राजा षष्ठेऽह्नि निशि चाब्रवीत् । कौसल्यां स कथां पौर्वां यदज्ञानाद्धतः पुरा । कौमारे सरयूतीरे यज्ञदत्तकुमारकः । शब्दभेदाच्च कुम्भेन शब्दं कुर्वंश्च तत्पिता । शशाप विलपन्मात्रा शोकं कृत्वा रुदन्मुहुः । पुत्रं विना मरिष्यावस्त्वं च शोकान्मरिष्यसि ।। इति । एषा कथा एतन्नाम च सङ्ग्रहेऽपि सङ्गृहीता ।

चैवमर्थाङ्गीकारे 'वैष्णवं पदमवाप स राजा राजहंस इव निर्मलरूपः' इति सङ्ग्रहवाक्यविरोधः । 'आरभ्य तम आमुक्ते कृष्णस्य सदनं यतः' इति भागवततात्पर्यवचनेन सर्वस्य वैष्णवसदनत्वावगमात् । ब्रह्मणा सह दशरथाय वैष्णवलोकदानानन्तरं एतद्वाक्यं तत्परमिति ज्ञा न विरोधः ।।५—७।।

**प्रमाणसङ्ग्रहः—** एतस्मिन्नेव काले इति श्रीरामनिर्गमनान्तरं षष्ठे दिने नृपतिः स्वर्गतोऽभूत् । तदुक्तं रामायणे 'आनीतौ तस्य कृत्वा' इति । ननु नृपतिमरणानन्तरं भरतस्यागमने चतुर्दशदिवसा गता इति श्रूयन्ते । तावत्पर्यन्तं मृतदेहः स्थापितो न वा इति शङ्का 'तैलद्रोण्यामथामात्या संवेश्य जगतीपतिम्' इत्यादिरामायणवाक्येन परिहर्तव्या ।।५—७।।

**गूढकर्तृक—** स्वर्गतोऽभूद्वियोगादित्यत्र स्वर्गशब्देन यमलोको लक्ष्यते । 'तदा मृतान् राघव आनिनाय यमक्षयाद्देवगणांश्च सर्वशः । समन्वजानात्पितरश्च तत्र... ।।' इत्युत्तरवाक्यात् । नचैवमर्थाङ्गीकारे 'वैष्णवं पदमवाप स राजा राजहंस इव निर्मलरूपः' इत्यनेन विरोधः । 'आरभ्य तम आमुक्तेः कृष्णस्य सदनं यतः । अव्यक्तहरिलोकत्वात् अन्येषां अन्यलोकता ।।' इति द्वितीयतात्पर्यात् ।।५।।

**धिक्कुर्वन्तौ नितान्तं सकलदुरितगां मन्थरां कैकयीं च**
**प्राप्तौ रामस्य पादौ मुनिगणसहितौ तत्र चोवाच नत्वा ।**
**रामं राजीवनेत्रं भरत इह पुनः प्रीतयेऽस्माकमीश**
**प्राप्याशु स्वामयोध्यामवरजसहितः पालयेमां धरित्रीम् ।।६।।**

**व्यासतीर्थीया—** ।। राजीवनेत्रमिति ।। राज्यत्यागे अम्लानभावं सूचयति ।।६।।

**वेदाङ्गतीर्थीया—** तत्र तयोर्मध्ये ।।६।।

**वादिराजीया—** रामस्य पादौ प्राप्तावित्येकोऽन्वयः तत्र तेषां मध्ये भरत उवाचेत्यपरोऽन्वयः ।।६।।

**सत्याभिनवीया—** धिक्कुर्वन्तौ नितान्तं सकलदुरधिगां... इति श्लोके इहावरजसहितः पालयेमां धरित्रीमित्यस्य इह अयोध्यायां स्थित्वा अवरजसहितः सन् इमां धरित्रीं पालयेत्यर्थः । एतेन इहेत्येतत् व्यर्थमिति दूषणं परास्तम् । इहेत्यस्य अवरजसहित इत्यादिना अन्वयं स्थित्वेत्यध्याहारं च स्वीकृत्य सार्थक्यस्योक्तत्वात् ।।६।।

**वरदराजीया—** किं कुर्वन्तौ सकलदुरितगां अशेषदोषपात्रभूतां मन्थरां दासीं तथा तत्संसर्गिणीं कैकेयीं च नितान्तं अत्यन्तं धिक्कुर्वन्तौ भर्त्सयन्तौ मुनिगणसहितौ रामस्य पादौ प्रति प्राप्तौ । तत्र तयोर्मध्ये भरतः नत्वा राजीववत् कमलवत् नेत्रे यस्य तं रामं उवाच । किमिति । हे ईश अस्माकं प्रीतये इतः

पुनः परावृत्त्य आशु स्वां स्वस्य विद्यमानां अयोध्यां प्राप्य अवरजेन लक्ष्मणेन सहितः सन् इमां धरित्रीं भूमिं पालय रक्ष इत्यर्थः ।।६।।

**जनार्दनीया–** सकलदुरितगां विष्णुवैष्णवद्वेषादिसर्वपापाश्रयां मन्थरां नितान्तं धिक्कुर्वन्तौ धिक्कारं कुर्वन्तौ । सकलदुरितानि यस्यां सा तथा, तस्याः सर्वदोषरूपायाः निकृत्त्याख्यायाः आसुर्याः गां आश्रयाम् । आसुर्याविष्टामिति भावः । कैकयीं च तदुक्तिकरणाद्धिक्कुर्वन्तौ रामस्य पादौ प्राप्तौ प्रापतुरित्यर्थः । तत्र चित्रकूटे तयोर्मध्ये वा भरतः राजीवनेत्रं पङ्कजनयनम् । राजीवनेत्रमित्यनेन अरण्यवासशोकराहित्यं सूचयति । रामं नत्वोवाच । किमिति ? हे ईश! इह इतोऽरण्यात् पुनः निवृत्त्येत्यर्थः । अवरजसहितः सन् । स्वां स्वकीयामयोध्यां आशु अविचार्य प्राप्य अस्माकं प्रीतये इमां धरित्रीं पृथिवीं पालय ।।६।।

**ताम्रपर्णीया–** ।। **सकलदुरितगामिति** ।। सकलानि दुरितानि सर्वप्राणिभिराचरितानि गच्छन्त्येनामिति वा । सकलदुरितेष्वभिमानितया तिष्ठतीति वा । सकलदुरितगामित्यर्थः ।।६।।

**चट्टी–** ।। **धिगिति** ।। सकलदुरितगां विष्णुवैष्णवद्वेषाद्यशेषदोषाश्रयां मन्थरां नितान्तं धिक्कुर्वन्तौ धिक्कारं कुर्वन्तौ सकलदुरितनि यस्यां सा तस्याः सर्वदोषस्वरूपायाः निकृत्याख्यायाः आसुर्याः गामाश्रयां आसुर्याविष्टामिति भावः । कैकयीं च तदुक्तकरणाद्धिक्कुर्वन्तौ मुनिगणसहितौ श्रीरामस्य पादौ प्राप्तौ तत्र तयोर्मध्ये भरतः राजीवनेत्रं कमलनयनं श्रीरामं नत्वा उवाच । किमिति । हे ईश अवरजेन लक्ष्मणेन सहितस्सन् अस्माकं प्रीतये इहास्मात् प्रदेशात् पुनः परावृत्येति शेषः । आशु स्वां अयोध्यां प्राप्य इमां धरित्रीं भूमिं पालय ।।६।।

**गूढवाक्यार्थ–** सकलदुरितगां सकलदुरितेषु अभिमानितया तिष्ठन्तीम् ।।६।।

**इत्युक्तः कर्तुमीशः सकलसुरगणाप्यायनं रामदेवः**
**सत्यां कर्तुं च वाणीमवददतितरां नेति सद्भक्तिनम्रम् ।**
**भूयोभूयोऽर्थयन्तं द्विगुणितशरदां सप्तके त्वभ्यतीते**
**कर्तैतत्ते वचोऽहं सुदृढमृतमिदं मे वचो नात्र शङ्का ।।७।।**

**व्यासतीर्थीया–** ।। **नेति** ।। आगन्तव्यमित्यर्थयन्तम् ।।७।।

**वेदाङ्गतीर्थीया–** सकलसुरगणाप्यायनं रक्षोनिग्रहणेन सुरगण[सन्तोषणम्] । वाणीं चतुर्दशसंवत्सरं वनवासं करिष्यामीति कैकेयीं प्रति स्वोक्तवचनम् । अतितरां सद्भक्तिनम्रमिति सम्बन्धः ।।७।।

**वादिराजीया–** अतितरां सद्भक्तिनम्रमिति सम्बन्धः । 'सप्तके त्वभ्यतीत' इत्यत्र तुशब्देन प्रत्यागमनसमये द्विगुणितशरत्सप्तकादपि दिनविशेषोऽप्यपेक्षित इति सूचयति । अन्यथा 'सुदृढमृतमिदम्' इति वक्ष्यमाणसत्यत्वानुपपत्तिः स्यात् । ईषदनृतप्रवेशेऽपि ऋतत्वायोगादिति रघुपतेर्भावः । कर्तेति सुबन्तं पदं न तु लुट् । तथात्वेऽहं पदायोगात् । कर्ताऽस्मीत्युत्तमपदप्रयोगे सति तद्योगः स्यात् । नापरथा अतः आस्तिभवत्योः सर्वत्रान्वयादस्मीति योग्यपदाध्याहारेण योजना । नेत्यवददित्येकोऽन्वयः । नात्र शङ्केत्यवददिति क्रियावृत्त्याऽपरोऽन्वयः । चतुर्दशवर्षानन्तरमन्तरायशतकैर्वा तन्मध्ये शतावरणादिना वा मदीयवचनसत्यताया नैवापोहः । सत्यसङ्कल्पत्वादिति भावेन सुदृढमित्युक्तम् ।।७।।

**वरदराजीया–** इत्यनेन प्रकारेण उक्तो रामदेवः श्रीरामः सकलसुरगणाप्यायनं सकलदेवतासमूहस्य रक्षोवधेन मोदं कर्तुं तथा वाणीं स्ववाक्यं सत्यां कर्तुं चावदत् । किमिति । नेति नागम्यत इत्युक्तमित्यर्थः । सती निर्दोषा भक्तिः तया नम्रं प्रह्वीभूतम् । भूयो भूयो पुनः पुनः आगन्तव्यं इत्यर्थयन्तं प्रार्थयन्तं पुनः अवददिति शेषः । किमिति । द्विगुणितशरदां सप्तकेत्वभ्यतीते द्विवारं गुणिते शरदां वर्षाणां सप्तके चतुर्दशवर्षेषु अतीतेषु इत्यर्थः । अनन्तरं ततो एतदयोध्यां प्रत्यागन्तव्यं इति वचः कर्ता करिष्यामि इत्यर्थः । इदं मे वचः ऋतं सत्यं यथार्थं अत्र वचसि शङ्का न कार्या इत्येतत् दृढमित्यर्थः ।

**जनार्दनीया–** इत्युक्तो रामदेवः । सकलसुरगणस्य आप्यायनं राक्षसेभ्यो रक्षणं कर्तुम्, ईश इति हेतुगर्भविशेषणम्, समर्थत्वादित्यर्थः । वाणीं देवान् प्रति राक्षसान् हन्मीति स्ववाचं सत्यां कर्तुम्, यद्वा ईशो रामदेवः सकलसुरगणाप्यायनं कर्तुं वाणीं वनवासं करिष्यामीति स्वप्रतिज्ञारूपां वाचं सत्यां कर्तुम् । सद्भक्त्या अन्यत्र सर्वोत्तमत्वेन भक्त्यभावात् समीचीनया भक्त्या, नम्रं नम्रीभूतं भरतम् । नेति अयोध्यां प्रत्यागमनं न स्यादिति अवदत् । भूयः भूयः वारं वारं अर्थयन्तं प्रति, अवददिति शेषः । किमिति । शरदांसप्तक इत्यलुक् । द्विगुणितशरदांसप्तक इत्येकं पदम् । द्विगुणितं च तत् शरदां सप्तकं च तथा तस्मिन् । अभ्यतीते सति चतुर्दशाब्देषु गतेषु सत्स्वित्यर्थः । अहं ते एतद्वचः पुरं प्रत्येहीति प्रार्थनारूपं वचः कर्ता, अस्मीति शेषः । करिष्यामीत्यर्थः । इदं ते वचः कर्तास्मीति मे वचः सुदृढं यथा स्यात् तथा निश्चितमित्यर्थः । ऋतं सत्यम् । अत्र वचः सत्यमित्युक्ते विषये शङ्का न ते शङ्का मास्त्वित्यर्थः ।।७।।

**अनन्तभट्टीया–** द्विगुणितशरदां सप्तके चतुर्दश... *मीति योग्यपदाध्याहारेण योजना ।।७।।

**ताम्रपर्णीया–** द्विगुणितशरदांसप्तके इत्येकं पदम् । षष्ठ्याः अलुक् । द्विगुणितं च तत् शरदां सप्तकं चेति विग्रहः । अस्मीति शेषः ।।७।।

**चट्टी–** ईशः समर्थः इत्यनेन प्रकारेण भरतेनोक्तो रामदेवः सकलसुरगणाप्यायनं सकलसुरसमूहस्य रक्षोवधेन आप्यायनं प्रमोदं कर्तुं वाणीं चतुर्दशसंवत्सरं वनवासं करिष्यामीति कैकेयीं प्रति स्वोक्तां वाचं

सत्यां कर्तुं अतितरां सद्भक्तिनम्रं सती निर्दोषा च सा भक्तिश्च तया नम्रं भरतं नेति नावगम्यत इत्यवदत् । भूयो भूयः पुनः पुनः अर्थयन्तमागन्तव्यमिति प्रार्थयन्तं प्रत्यवददिति शेषः । किमिति । शरदां सप्तक इत्यलुक् द्विगुणितं च तच्छरदां सप्तकं च द्विगुणितशरदां सप्तकं तस्मिन् अभ्यतीते सति चतुर्दशवर्षेषु गतेषु अहं ते एतद्वचः अयोध्यां प्रत्यागन्तव्यमिति वचः सुदृढं यथा भवति तथा कर्तास्मीति शेषः । कर्तेति सुबन्तं पदं नतु लुट् । तथा ते अहंपदयोगात् कर्तास्मीत्युत्तमपुरुषप्रयोगः स्यात् । अतः 'अस्ति भवत्योः सर्वत्रान्वयः' इति वचनात् अस्मीति योग्यपदाध्याहारेण योजना । इदं मे वचः ऋतं सत्यं अत्र वचसि शङ्का न कार्येत्यर्थः ।।७।।

**भारतश्री–** वाणीं राक्षसहननविषयां स्वोक्ताम् ।।७।।

**श्रुत्वैतद्रामवाक्यं हुतभुजि पतने [१]स प्रतिज्ञां च कृत्वा**
**रामोक्तस्यान्यथात्वे न तु पुरमभिवेक्ष्येऽहमित्येव तावत् ।**
**कृत्वान्यां सप्रतिज्ञामवसदथ बहिर्ग्रामके नन्दिनाम्नि**
**श्रीशस्यैवास्य कृत्वा शिरसि परमकं पौरटं पादपीठम् ।।८।।**

**व्यासतीर्थीया–** रामोक्तस्य अन्यथात्वे हुतभुजि पतने प्रतिज्ञां चकार– **स** इति ।। प्रतिज्ञां कृत्वा तावत् पुरं नाभिवेक्ष्ये इत्यन्यां च प्रतिज्ञां कृत्वा पुरात् बहिः नन्दिनाम्नि ग्रामे अवसत् ।।८।।

**वेदाङ्गतीर्थीया–** [ए]तद् रामवाक्यं श्रुत्वा तावद् भवदागमनपर्यन्तं अहं पुरं न प्रवेक्ष्य इति सम्प्रति स्थण्डिलशयनादिप्रतिज्ञान्तरसहितां प्रतिज्ञां [रामो] क्तस्यान्यथात्वे हुतभुजि अग्नौ पतने अन्यां च प्रतिज्ञां कृत्वा बहिः पुरात् ग्रामकेऽल्पग्रामेऽवसदिति योजना ।।८–१०।।

**वादिराजीया–** स भरतः रामोक्तस्यान्यथात्वे हुतभुजि पतने प्रतिज्ञां कृत्वा तावत् रामागमनपर्यन्तं सप्रतिज्ञां अधःशयनब्रह्मचर्यसकृद्भोजनजटावल्कलधारणादिप्रतिज्ञाभिस्सहिताम् । 'अहं तु अनन्तकार्य-

---

१. न केवलं भरतः व्रतनिष्ठो भवामीति प्रतिजज्ञे अयोध्यावासिनस्सर्वेपि तथा प्रतिजज्ञिरे । तथाहि- 'यावदागमनं तस्य राघवस्य महात्मनः । तावद् व्रतपरास्सर्वे बभूवुः पुरवासिनः ।।' इति पद्म.उ.खं.२४२.१९३ भ्रातुर्वियोगजनितं दुःखचिह्नं वहन् बहु । गर्तशायी ब्रह्मचारी जटावल्कलसंयुतः ।। कृशाङ्गयष्टिः दुःखार्तः कुर्वन् रामकथां मुहुः । यवान्नमपि नो भुङ्क्ते जलं पिबति नो मुहुः ।। पद्म.पाताल.२.२९-३१ तथा अमात्या अपि तादृशा आसन् । तथाहि पद्म.पाताल.२.२१-२२ रामोपि दृष्ट्वा भरतं पादचारेण सङ्गतम् । जटावल्कलकौपीनपरिधानसमन्वितम् ।। अमात्यान् भ्रातृवेषेण समवेषान् जटाधरान् । नित्यं तपःक्लिष्टतया कृशरूपान् ददर्श ह ।। इति ।। भरताहारविषये भागवतेपि ९.१०.३६ उपगीयमानचरितः शतधृत्यादिभिर्मुदा । गोमूत्रयावकं श्रुत्वा भ्रातरं वल्काम्बरम् ।। महाकारुणिकोतप्यत् जटिलं स्थण्डिलेशयम् ।।

विशेषेऽपि पुरं नैवाभिवेक्ष्ये' इत्यन्यां च प्रतिज्ञां कृत्वेति प्राचीनप्रतिज्ञापदस्यावृत्त्या योजना । अवान्तरप्रतिज्ञानां बहुत्वादल्पविषयत्वाच्च प्रतिज्ञाद्वयवत् विविच्य विशेषानुक्त्या सामान्यत एव कथनम् । अतो बह्वर्थसङ्ग्राहकत्वात् त्रिविक्रमपादोपमावतौ पादाविति महत् कौशलं ग्रन्थकारस्य ।। ८।।

**सत्याभिनवीया–** तत्रैव श्रुत्वैतद्रामवाक्यं हुतभुजि पतने... इति श्लोकः । तस्यार्थः । सः रामभक्तत्वेन प्रसिद्धः भरत एतत् रामवाक्यं श्रुत्वा रामोक्तस्य अन्यथात्वे अन्यथात्वपक्षे हुतभुजि पतने प्रतिज्ञां कृत्वा । तुशब्दः चशब्दार्थे । अहं तावत् रामागमनपर्यन्तं पुनः अयोध्यापुरं नैव प्रवेक्ष्य इति च प्रतिज्ञाम् अन्यां पूर्वोक्तप्रतिज्ञाद्वयादन्यां अधश्शयनादिप्रतिज्ञां च कृत्वा । अथ मङ्गलार्थं नन्दिनाम्नि ग्रामके अणुग्रामे बहिःप्रदेशे एव श्रीशस्य अस्य रामस्य परमकं परमसुखप्रदं पौरटं सौवर्णं पादपीठं शिरसि कृत्वा न्यवसदिति । एतेन एकेन स इत्यनेन पूर्णत्वात् द्वितीयः सः इत्येतत् व्यर्थमिति दूषणं परास्तम् । एतादृशदुर्घटप्रतिज्ञायां रामभक्तिरेव निमित्तमिति वक्तुं आद्य–स इत्यनेन रामभक्तेः प्रसिद्धत्वमुच्यत इत्यभ्युपगमात् । एतेनैव तावत् अयोध्यापुरं नैव प्रवेक्ष्य इति प्रतिज्ञास्वरूपनिरूपणेनैव द्वितीयप्रतिज्ञाया ग्रहणमित्यनभ्युपगमात् । एतेनैव कृत्वेति क्त्वाप्रत्ययप्रयोगेणैव आनन्तर्यस्य अथशब्दो व्यर्थ इति दूषणं पराकृतम् । अथशब्दस्य आनन्तर्यार्थकत्वमित्यनभ्युपगमात् । एतेनैव ग्राम इत्यनेनैव पूर्णत्वात् कप्रत्ययो व्यर्थ इति दूषणं निरस्तम् । कप्रत्ययः अल्पार्थ इति स्वीकरणात् । एतेनैव बहिरित्येतत् व्यर्थमिति दूषणं निरस्तम् । नन्दिनामकग्रामेऽपि अन्तःप्रदेशे वासो न कृतः किन्तु बहिः प्रदेश इति वक्तुं बहिरित्युक्तमिति स्वीकरणात् । एतेनैव परमकमित्यत्र कप्रत्ययो व्यर्थ इति दूषणं निरस्तम् ।·नायं कप्रत्ययः, किन्तु सुखवाची कशब्द इत्यभ्युपगमात् ।।८।।

**मधुसूदनीया–** ।। **कृत्वान्यामिति** ।। सप्रतिज्ञां प्रतिज्ञान्तरेण कष्टशयनादिलक्षणेन सहितामन्यां च [१]प्रतिज्ञां कृत्वेत्यर्थः । तदुक्तम्– 'स कुर्वन् भ्रातुरादेशं नन्दिग्रामे स्थितो वशी । तपस्वी नियताहारः [शाक] कन्दमूलफलाशनः ।।' इति नृसिंहपुराणे । [४८.१६१] 'तपश्चरणयुक्तोऽयं तस्मिन् तस्थौ नृपोत्तमः' इति पाद्मे [उ.का.२४२.१९२] च । 'शयानो दुःखशय्यासु नन्दिग्रामे महामनाः । फलमूलाशनो भूत्वा जटाचीरधरस्तथा [अनुभूयेदृशं दुःखमेष राघवनन्दनः'] इत्यादि रामायणे । यद्वा उभयत्रापि स इति भिन्नपदमेव । 'सोऽहं पुरं तावन्नाभिवेक्ष्य' इति, द्वितीयस्य तच्छब्दस्यान्वयस्तु यन्निमित्तं तव राज्यापहारादि सोऽहमित्यर्थः ।।८–१०।।

**वरदराजीया–** सः भरतः एतत् चतुर्दशवर्षेषु गतेषु आगमिष्यामि इति वाक्यं श्रुत्वा रामोक्तस्य वाक्यस्य अन्यथात्वे तदाऽप्यनागमने हुतभुजि अग्नौ पतनविषये प्रतिज्ञां कृत्वा अग्निं प्रवेक्ष्यामीति

---

१. प्रतिज्ञान्तरं च काष्ठमौनाधःशयनादिकम् ।

प्रतिज्ञां कृत्वा इति भावः । तथा द्वितीया प्रतिज्ञा कृतेत्याह– **न तु पुरमिति** ।। अहं यावद्रामागमनं तावत् पुरं अयोध्यानगरं नाभिवेक्ष्ये न प्रवेक्ष्यामीति अन्यां द्वितीयां च प्रतिज्ञां कृत्वा । अथ प्रतिज्ञानन्तरं गत्वा इति शेषः । बहिः पुराद्बहिः नन्दिनाम्नि नन्दिनामके ग्रामेऽवसत् वासं अकरोत् । किं कृत्वा श्रीशस्य लक्ष्मीपतेः अस्य रामस्यैव पौरटं स्वर्णमयं पादपीठं पादुकां रामेण दत्तं शिरसि मस्तके धृत्वा अवसदिति पूर्वेणान्वयः ।।८।।

**जनार्दनीया–** स भरतः एतत्पूर्वोक्तं रामवाक्यं श्रुत्वा रामोक्तस्यान्यथात्वे वैपरीत्ये सति हुतभुजि वह्नौ पतने प्रवेशविषये प्रतिज्ञां कृत्वा यावद्रामस्यागमनं तावदहं पुरं अयोध्यां तु सर्वथा नाभिवेक्ष्य इति एवं विधां अन्यां द्वितीयां प्रतिज्ञां कृत्वा । कथंभूताम् ? अन्यां प्रतिज्ञां सप्रतिज्ञां अधःशयनं ब्रह्मचर्यादिप्रतिज्ञान्तरसहितां अथ कृतप्रतिज्ञाद्वयानन्तरं श्रीशस्य श्रीपतेरस्य रामस्य परममेव परमकं उत्तमं पौरटं सौवर्णं पादपीठं पादुकाद्वयमित्यर्थः । शिरसि कृत्वा निधाय बहिः अयोध्याबहिः स्थिते नन्दिनाम्नि ग्रामके आभीरादिनीचजनसेवितकुत्सितग्रामे अवसत् । 'स प्रतिज्ञाम्' इत्यत्र पूर्वार्धे भिन्नं पदम् । उत्तरार्धे एकं पदम् । 'स कुर्वन् भ्रातुरादेशं नन्दिग्रामे स्थितो वशी । तपस्वी नियताहारः शाकमूलफलाशनः ।।' इति नरसिंहपुराणात् । 'तपश्चरणयुक्तेन तस्मिन् तस्थौ नृपोत्तम' इति पाद्मवाक्यात् [उ.खं.२४२.१९२] प्रतिज्ञान्तरं ज्ञायते । स प्रकृतः भरतः हुतभुजि पतने प्रतिज्ञां कृत्वा स्थितः सोऽहं हुतभुजि पतनप्रतिज्ञावान् इति पूर्वोक्तां प्रतिज्ञां कृत्वा, तावत् पुरं नाभिवेक्ष्य इत्यन्यां प्रतिज्ञां च कृत्वा, अवसदिति योजना । प्रक्रान्तप्रसिद्धानुभूतविषयस्तच्छब्दो यच्छब्दं नापेक्षते ।।८।।

**अनन्तभट्टीया–** सः भरतः हुतभुजि पतने प्रतिज्ञां कृत्वा सप्रतिज्ञां अधःशयनब्रह्मचर्यसकृद्भोजन-जटावल्कलधारणादिप्रतिज्ञाभिः सहिताम् । तावद्रामागमनपर्यन्तं अहं तु कार्यविशेषे सत्यपि पुरं [नाभिवेक्ष्ये] इत्यन्यां प्रतिज्ञां च कृत्वा इति योजना । प्रतिज्ञाद्वयं विविच्योक्त्वा मध्यमप्रतिज्ञायाः सामान्येनोक्तिः विषयबहुत्वादित्यनुसन्धेयम् । पौरटं सुवर्णमयं पादपीठं पादुके इत्यर्थः ।।८।।

**ताम्रपर्णीया–** सप्रतिज्ञां स्थण्डिले शयनादिप्रतिज्ञान्तरसहिताम् ।।८।।[१]

**चट्टी–** सः भरतः एतत्पूर्वोक्तं रामवाक्यं श्रुत्वा रामोक्तस्यान्यथात्वे अनागमने हुतभुजि अग्नौ पतने प्रवेशविषये प्रतिज्ञां कृत्वा । यावत् रामस्यागमनं तावदहं पुरं अयोध्यां सर्वथा नाभिवेक्ष्ये इत्येवं विधां अन्यां द्वितीयां प्रतिज्ञां कृत्वा कथंभूतां अन्यां प्रतिज्ञां अधःशयनब्रह्मचर्यादिप्रतिज्ञान्तरसहिताम् अथ

---

१. ।। श्रुत्वेति ।। एतत् रामवाक्यं श्रुत्वा । तावत् रामागमनपर्यन्तं अहं पुरं न प्रवेक्ष्ये इति प्रतिज्ञां स्थण्डिलशयनादिप्रतिज्ञासहितां प्रतिज्ञां कृत्वा रामोक्तस्य अन्यथात्वे अग्नौ पतने अन्यां च प्रतिज्ञां कृत्वा नन्दिग्रामे अवसदित्यर्थः ।। ८-१४ ।।

कृतप्रतिज्ञानन्तरं श्रीशस्य श्रीपतेः अस्य श्रीरामस्य परममेव परमकं उत्तमं पौरटं सौवर्णं पादपीठं पादुकाद्वयमित्यर्थः । शिरस्यैव कृत्वा धृत्वा बहिरयोध्यायाः बहिस्स्थिते नन्दिनाम्नि ग्रामके पल्यामवसत् । सप्रतिज्ञामित्यत्र पूर्वार्धे भिन्नं पदं उत्तरार्धे एकं पदमिति योजना । 'स कुर्वन् भ्रातुरादेशं नन्दिग्रामस्थितो वशी । तपस्वी नियताहारः शाकमूलफलाशनः ।।' इति नरसिंहपुराणे । 'तपश्चरणयुक्तोऽयं तस्मिन् तस्थौ नृपोत्तम' इति पाद्मे च । 'शयानो दुःखशय्यासु नन्दिग्रामे महामनाः । फलमूलाशनो भूत्वा जटाचीरधरस्तथा ।।' इति रामायणे च ।।८।।

**भारतश्री–** अन्यां सप्रतिज्ञां अधःशय्याब्रह्मचर्यादिविषयप्रतिज्ञान्तरसहितां प्रतिज्ञामित्यर्थः बहिः नगरात् । पौरटं सुवर्णमयम् ।। ८।।

**भावचन्द्रिका–** सप्रतिज्ञां प्रतिज्ञया सहिता सप्रतिज्ञा तां सप्रतिज्ञाम् । तदुक्तं वाल्मीकिमहर्षिणा– [अयो.का.११२.२३] 'चतुर्दश च वर्षाणि जटाचीरधरोऽस्म्यहम् । फलमूलाशनो वीर भवेयं रघुनन्दन ।।' इति । अत्र प्रतिज्ञाद्वयं प्रधानम् । 'नगरं न प्रवेक्ष्यामि यावदागमनं तव । प्रवेक्ष्याम्यग्निमप्रेक्ष्य वत्सरे त्वां चतुर्दशे ।।' इति सङ्ग्रहरामायणोक्तेः [अयो.का.१२.१०४] ।।८।।

**अतिविशद–** हुतभुजिपतने सप्रतिज्ञां च कृत्वेत्यत्र स इत्येकं पदम् । कृत्वान्यां स प्रतिज्ञां इत्यत्र स इत्यपरं पदम् । एवं स स इति पदद्वयमस्ति तत्रैकेनैव चरितार्थत्वात् एकं व्यर्थमिति चेन्न । सप्रतिज्ञामित्येकपदोपपत्तेः । योजना तु भरतः एतद्वाक्यं श्रुत्वा रामोक्तस्यान्यथात्वे हुतभुजिपतने प्रतिज्ञां कृत्वा तावत्पुरं नाभिवेक्ष्ये पुनः प्रवेशं न करिष्ये इति प्रतिज्ञया सहितां अन्यां च प्रतिज्ञां कृत्वा, अथ रामागमनपर्यन्तं श्रीशस्य रामस्य परमकं पौरटं पादपीठं शिरसि कृत्वा नन्दिनाम्नि बहिर्ग्रामके न्यवसदिति । पीठस्य पौरटत्वात् परममिति वक्तव्ये परमकमिति कप्रत्ययः कुत इति चेन्न, लोके सर्वधात्वपेक्षया पौरटमेव परमं प्रकृते पीठस्य तदात्मकत्वात् न परमत्वं किन्तु भगवत्पादसम्बन्धादेव परमत्वमिति ज्ञापनार्थं कप्रत्यय इति । अत्र नन्दिनाम्नि ग्राम इति वक्तव्ये यद् ग्रामक इति कप्रत्ययः तद् मङ्गलवारस्य मङ्गलवारत्वं यथा तथाऽयं ग्राम इति सूचितं भवति । यद्वा श्रीशस्य पादपीठं परमकं उत्तमपादोदकं च शिरसि कृत्वेति । अथवा यस्मात्तत्पीठं शिरसि कृत्वा न्यवसत् अथ तस्माद्भरतस्य शिरःपरमकं उत्तमशिर इति । सप्रतिज्ञामित्येतत् प्रतिज्ञया सहितां अन्यां प्रतिज्ञामिति व्याख्यातम् । प्रतिज्ञान्तरं नृसिंहपुराणे उक्तम्– 'स कुर्वन् भ्रातुरादेशं नन्दिग्रामे स्थितो वशी । तपस्वी नियताहारः शाकमूलफलाशनः ।।' इति 'तपश्चरणयुक्तेन तस्मिन् तस्थौ नृपोत्तमः ।।' इति पद्मपुराणे च ।।८–१४।।

**प्रमाणसङ्ग्रहः–** ।। **कृत्वाऽन्यां सप्रतिज्ञामिति** ।। प्रतिज्ञान्तरेण सहितामन्यां प्रतिज्ञां कृत्वेत्यर्थः । प्रतिज्ञान्तरं काष्ठमौनमधःशयनादिकम् । तदुक्तम्– 'स कुर्वन् भ्रातुरादेशं नन्दिग्रामे स्थितो वशी ।

तपस्वी नियताहारः शाकमूलफलाशनः ।।' इति रामायणे । 'तपश्चरणयुक्तोऽयं[सौ] तस्मिन् तस्थौ नृपोत्तमः' इति पाद्मे च । 'शयानो दुःखशय्यासु नन्दिग्रामे महामनाः । फलमूलाशनो भूत्वा जटाचीरधरस्तथा ।। अनुभूयेदृशं दुःखमेष राघवनन्दनः ।।' इत्यादि रामायणे ।।८–२०।।

**कण्ठकोद्धार–** श्रुत्वैतद्रामवाक्यमिति श्लोके अयमन्वयः । स भरतः एतद्रामवाक्यं श्रुत्वा रामोक्तस्यान्यथात्वे हुतभुजिपतने प्रतिज्ञाञ्च कृत्वा अधःशयानो गोमूत्रेण अन्नपानं कृत्वा भोजयामीत्यादि प्रतिज्ञान्तरसहितां कृत्वा नन्दिग्रामे अवसत् ।।८।।

**गूढवाक्यार्थ–** द्विगुणितशरदां सप्तके द्विगुणितश्च तत् शरदां सप्तकश्च इति विग्रहः एतत् ते वचः कर्ता भवानीति शेषः सप्रतिज्ञां अधःशय्याब्रह्मचर्यजटावल्कलधारणविषयकप्रतिज्ञान्तरसहिता । तदुक्तं वाल्मीकाये– चतुर्दश हि वर्षाणि जटाचीरधरोस्म्यहम् । फलमूलाशनो वीर भवेयं रघुनन्दन ।। इति । न तु पुरमभिवीक्ष्येत्यन्यां प्रतिज्ञाम् ।।८।।

**समस्तपौरानुगतेऽनुजे गते स चित्रकूटे भगवानुवास ह ।**
**अथाजगामेन्द्रुसतोऽपि वायसो महासुरेणात्मगतेन चोदितः ।।९।।**

**व्यासतीर्थीया–** इन्द्रसुतोऽपि दोषाद्वायसः ।।९।।

**वादिराजीया–** इन्द्रसुतस्य वायसत्वं गर्हितमिति सूचनायापिपदम् । पक्षिषु चिरजीवित्वात् बहुतरबल्यन्न–लाभाच्च जयन्तेन वायसजन्म प्रार्थितमिति पौरणिकी कथा ।।९–११।।

**वरदराजीया–** समस्तेन पौरेण पुरस्थेन सज्जनेनानुगते सहिते अनुजे भरते गते अयोध्यां प्रति गते सति सः भगवान् रामः चित्रकूटे पर्वते उवास । अथ अनन्तरं इन्द्रसुतो जयन्तोऽपि महासुरेण दैत्येन आत्मनि स्थितेन चोदितः प्रेरितः वायसः काको भूत्वा आजगाम ।।९।।

**जनार्दनीया–** समस्तपौरैः अयोध्यावासिभिः अनुगते युक्ते अनुजे भरते । आत्मगतेन स्वाविष्टेन । इन्द्रसुतोऽपि जयन्तः वायसः काकः सन् ।।९।।

**अनन्तभट्टीया–** इन्द्रसुतोऽपि वायस इत्यत्र इन्द्रसुतस्य वायसत्वं गर्हितमित्येत्सूचनाय अपिपदम् । पक्षिषु चिरजीवित्वात् बहुतरबल्यन्नलाभाच्च जयन्तेन वायसजन्म प्रार्थितमिति पौराणिकी कथा ।।

**ताम्रपर्णीया–** ।। **इन्द्रसुतोऽपि वायस इति** ।। अरुचिं सूचयत्यपिपदेन । अत्रोक्तं वादिराजतीर्थैः 'पक्षिषु चिरजीवित्वात् बहुतरबल्यन्नलाभाच्च जयन्तेन वायसजन्म प्रार्थिमिति पौराणिकी कथा' इति । आत्मगतेन कदाचिदात्माविष्टेन कल्याद्यसुरेण ।।९–११।।

**चट्टी–** समस्तैः पौरैरयोध्यावासिभिरनुगते सहिते अनुजे भरते नन्दिग्रामं प्रति गते सति स भगवान् श्रीरामः चित्रकूटे पर्वते उवास । अथानन्तरं इन्द्रसुतो जयन्तोऽपि आत्मगतेन स्वाविष्टेन महासुरेण चोदितो प्रेरितस्सन् वायसः काको भूत्वा आजगाम ।।९।।

**भारतश्री–** शापात् वायसः । इन्द्रसुतोऽपि शुभोऽपि ।।९।।

**भावचन्द्रिका–** अनुगते अनुसृते । अनुसरणं तद्वत् व्रतपरत्वेनापि । तदुक्तं पाद्मे– 'यावदागमनं तस्य राघवस्य महात्मनः । तावत् व्रतपरास्सर्वे बभूवुः पुरवासिनः ।।' इति [पद्म.उ.का.२४२.१९३] ।।

**गूढवाक्यार्थ–** इन्द्रसुतस्य वायसत्वं...* मित्यपिशब्देन । वायसस्य पक्षिषु चिरजीवित्वात् बहुतरबल्यन्नलाभाच्च जयन्तेन वायसजन्म प्रार्थितमिति पौराणिककथास्तीति प्राज्ञाः आत्मगतेन कदाचिदात्माविष्टेन...* ।।९।।

**स चासुरावेशवशाद्रमास्तने यदा व्यधात्तुण्डमथाभिवीक्षितः ।**
**जनार्दनेनाशु तृणे प्रयोजिते चचार तेन ज्वलताऽनुयातः ।।१०।।**

**मधुसूदनीया–** ।। चचार तेनेति ।। एतेन 'जिजीविषुर्जीवनार्थं तमेव शरणं ययौ । देवैर्दत्तवरः पक्षी धरान्तरचरस्सदा ।।' [सं.रा.१२.११७–११८] इति काकस्य त्रिलोकसञ्चारे देववरं सूचयति ।।

**वरदराजीया–** सः वायसरूपी इन्द्रसुतः रमायाः स्तने हृदयदेशे तुण्डं चञ्चुं व्यधात् यदा तदनन्तरं जनार्दनेन अभिवीक्षितः दृष्टोऽभूदित्यर्थः । आशु रामेण तृणे प्रयोजितेन ज्वलता तृणेन अनुयातो अनुगतश्चचार । इतस्ततो गतवानित्यर्थः ।।१०।।

**जनार्दनीया–** स काकात्मा जयन्तः रमायाः सीतायाः स्तने कुचोपरि तुण्डं चञ्चुं यदा व्यधात्, तदा जनार्दनेनाभिवीक्षितः दृष्टः । अभवदिति शेषः । जनार्दनेनाशु तृणे प्रयोजिते प्रक्षिप्ते सति । ज्वलता अग्निवद्दीप्यमानेन तृणेनानुयातः अनुगतः, चचार । लोकान्तरेष्वपीति शेषः ।।१०।।

**चट्टी–** सः वायसरूपीन्द्रसुतः असुरावेशवशाद् रमायाः सीतायाः स्तने तुण्डं चञ्चुं यदा व्यधात् तदा जनार्दनेन अभिवीक्षितः दृष्टोऽभूदिति शेषः । अथ जनार्दनेन श्रीरामेणाशु तृणे प्रयोजिते सति ज्वलता अग्निवद्दीप्यमानेन तेन तृणेन अनुयातः अनुगतश्चचार । लोकान्तरेष्वपीति शेषः ।।१०।।

**भारतश्री–** जनार्दनेन इत्यस्योत्तरत्र सम्बन्धः ।।१०।।

**भावचन्द्रिका–** तुण्डमित्युपलक्षणम् । तृणे ब्रह्मास्त्रमन्त्रिते काशतृणे । तदुक्तं पाद्मे – 'विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् । तं दृष्ट्वा वायसं रामः काशं जग्राह पाणिना ।। ब्रह्मास्त्रेणाथ संयुज्य

चिक्षेप धरणीधरः ।।' इति । [पद्म.उ.ख.२४२.१९६–१९७] काको जयन्तः । 'जयन्तत्राणवरदः' इति रामाष्टोत्तरशतनामसु पाठात् ।।१०।।

**[१]स्वयम्भुशर्वेन्द्रमुखान् सुरेश्वराञ्जिजीविषुस्ताञ्छरणं गतोऽपि ।**
**बहिष्कृतस्तैर्हरिभक्तिभावतो ह्यलङ्घ्यशक्त्या परमस्य चाक्षमैः ।।११।।**

**वेदाङ्गतीर्थीया–** हरिभक्तिभावतः हरिभक्तिमत्वात् ।।११–१४।।

**वरदराजीया–** ब्रह्मरुद्रेन्द्रमुखान् सुरश्रेष्ठान् जिजीविषुः जीवितुमिच्छुः सन् तान् ब्रह्मादीन् शरणं गतोऽपि हरिभक्तिभावतः हरौ या भक्तिः तस्य भावतः विद्यमानत्वात् हरिभक्तिमत्त्वादित्यर्थः । तथा परमस्य उत्कृष्टस्य रामस्य अलङ्घ्यशक्त्या च तद्रक्षणाक्षमैः अशक्तैः बहिष्कृतः तिरस्कृतोऽभूदित्यर्थः ।।

**जनार्दनीया–** तान् हरिभक्त्यादिसद्गुणैः प्रसिद्धान् । शरणं गतोऽपि प्राप्तोऽपि । हरिभक्तेर्भावतः सद्भावात् । परमस्य सर्वोत्तमस्य रामस्य । अलङ्घ्यशक्त्या अनतिक्रमशक्त्या अक्षमैः असमर्थैश्च तैः स्वयम्भुपूर्वैः बहिष्कृतः निरस्तः, दूरीकृत इत्यर्थः ।।११।।

**अनन्तभट्टीया–** हरिभक्तिभावतो हरिभक्तौ तात्पर्यतः अलङ्घ्यशक्त्या च शक्तेरलङ्घ्यत्वाद्वा इत्यर्थः ।।

**चट्टी–** तान् हरिभक्त्यादिसद्गुणैः प्रसिद्धान् स्वयम्भुशर्वेन्द्रमुखान् सुरेश्वरान् जिजीविषुः जीवितुमिच्छुः सन् शरणं गतोऽपि हरिभक्तेर्भावतः सद्भावात् परमस्य सर्वोत्तमस्य श्रीरामस्य अलङ्घ्यशक्त्या चाक्षमैरसमर्थैः बहिष्कृतो दूरीकृतः ।।११।।

**भारतश्री–** परमस्य अलङ्घ्यशक्त्या अक्षमैरिति योज्यम् । अलङ्घ्यशक्त्येति इत्थभूतलक्षणे तृतीया ।।

**भावचन्द्रिका–** भक्तितो भावतश्च । भावश्चेष्टावचनलक्षणः । तदुक्तं सङ्ग्रहरामायणे– रामाय नम इत्युक्त्वा ब्रह्मरुद्रादिभिः सुरैः । कालितः स्वालयात् काको रामविक्रमभीरुभिः ।।' इति ।।११।।

---

१. 'यत्र यत्र ययौ काकः शरणार्थी स वायसः । तत्र तत्र तदस्त्रं तु प्रविवेश भयावहम् ।। ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । शरणार्थी जगामाशु वायसः शस्त्रपीडितः ।। तं दृष्ट्वा वायसं सर्वे रुद्राद्या देवदानवाः । न शक्ता स्मो वयं त्रातुं इति प्राहुर्मनीषिणः ।। ब्रह्मोवाच– भो भो बलिभुजां श्रेष्ठ तमेव शरणं व्रज । स एव रक्षकः श्रीमान् सर्वेषां करुणानिधिः ।। रक्षत्येव क्षमासारो वत्सलश्शरणागतान् ईश्वरस्सर्वभूतानां सौशील्यादिगुणान्वितः ।। रक्षिता जीवलोकस्य पिता माता तथा सुहृत् शरणं व्रज देवेशं नान्यत्र शरणं द्विज।।' इति पाद्मे उ.खं.२४२-२०५ । 'पुत्रः किल स शक्रस्य वायसः पततां वरः । धरान्तरं गतः शीघ्रं पवनस्य गतौ समः ।।' इति ५.३८.२७ । 'एतेन रामपराक्रमपरीक्षार्थं शक्रप्रेरणयैवायमागत इति ध्वनितम्' इति रामसहायकृतं विवरणं निराकृतं वेदितव्यम् ।। 'ऐन्द्रिः काकः समागम्य तस्मिन्नेव चचार ह । स दृष्ट्वा जानकीं तत्र कन्दर्पशरपीडितः ।। विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् ।।' इति पाद्मे उ.खं.२४२.१९५-१९६ ।

**पुनः प्रयातः शरणं रघूत्तमं विसर्जितस्तेन निहत्य चासुरम् ।**
**तदक्षिगं साक्षिकमप्यवध्यं प्रसादतश्चन्द्रविभूषणस्य ॥१२॥**

**व्यासतीर्थीया–** तेन रामेण तृणेन विसर्जितश्च । नन्वसुरो हन्तव्यः वायसाक्षिभङ्गे निमित्तं किमित्यत आह– **तदक्षिगमिति** ॥१२॥

**वादिराजीया–** विसर्जितस्तेन निहत्य चासुरमित्यत्र चन्द्रविभूषणस्य प्रसादतोऽवध्यमपि काकानां नेत्रगोळकद्वयगतचक्षुरिन्द्रियांशद्वयसहितता यावत् तावत्तदिन्द्रियगतस्य वधो मास्त्विति शिवस्य वरप्रसादतोऽवध्यमपि तदक्षिगं तदक्षीन्द्रियगतमसुरं साक्षिकमेकगोलकान्तस्थितेन्द्रियांशेन सहितं सन्तं निहत्य विसर्जितः काकरूपी जयन्तो विसर्जित इति योजना । एकेन्द्रियनाशेनावध्यत्ववरे गते सति वधार्हस्यापि तस्य स्वयमेव वधायोगात् हन्त्रा केनचित् हननं च कर्तव्यमित्यतो हेतोर्वरव्यर्थी–करणायेन्द्रियनाशः । हन्तुरभावेन हननायोगात् रामापराधिनस्तस्य हननं चेति द्वयमपि रामेणैव कृतम् । वक्ष्यमाणन्यायेन बलार्थितयाऽसुरस्य स्वचक्षुष्यवकाशदानदोषेण रामापराधकृद्देहाभिमानित्वाख्यक्षुद्रदोषेण च एकचक्षुषं कृत्वाऽन्यावेशबलेनैव रमास्तने तुण्डदातुर्जयन्तस्य रमायां रागाभावेन प्रबलापराधाभावात् जयन्तश्च जीवन्नेव विसर्जित इति भावः ॥१२॥

**वरदराजीया–** पुनरागत्य रघूत्तमं रामं शरणं प्रयातः । तेन रामेण तदक्षिगं तस्य वायसस्य आक्षिणि स्थितं चन्द्रविभूषणस्य रुद्रस्य प्रसादतः वररूपादवध्यं साक्षिकं अक्ष्णा सहितं असुरं निहत्य वायसस्वरूपः जयन्तः विसर्जितः विमोचितः ॥१२॥

**जनार्दनीया–** पुनः रघूत्तमं शरणं प्रयातः । अभूदिति शेषः । तेन तृणेन रामेण वा । चन्द्रविभूषणस्य चन्द्रालङ्कारभूतस्य हरस्य प्रसादतः वरलक्षणप्रसादात् अवध्यमपि तदक्षिणि वायसनेत्रे वर्तमानं अक्ष्येवाक्षिकं अक्षिकेण नेत्रेण सहितम् । नेत्रमेव हतं वायसो न हत इति भावः । असुरं कुरङ्गनामकं दैत्यं निहत्य विसर्जितः असुरावेशात् विमोचितः । जयन्त इति शेषः ॥१२॥

**अनन्तभट्टीया–** विसर्जितस्तेन निहत्य चासुरमित्यत्र चन्द्रविभूषणस्य प्रसादतः अलङ्घ्यमपि काकानां नेत्रगोलकद्वयगतचक्षुरिन्द्रियांशद्वयसहितता यावत् तावत् तदिन्द्रियगतस्य वधो मास्त्विति शिवस्य वरप्रसादतः अवध्यमपि तदक्षिगं तदक्षेन्द्रियगतं असुरं एकगोलकान्तस्थितेन सहितं निहत्य विसर्जितः काकरूपी जयन्त इति योजना ॥१२॥

**ताम्रपर्णीया–** ॥ **विसर्जित इति** ॥ न तु रामेण तेन शरेण निहत्य विसर्जित इत्यर्थः ॥ **प्रसादत इति** ॥ काकचक्षुर्द्वयगतो भवानवध्यो भवेति शिवप्रसादतः अवध्यं तदक्षिगं साक्षिकं एकगोलकान्तस्थितेन्द्रियेण सहितं निहत्येत्यर्थः ॥१२॥

**चट्टी–** पुनः रघूत्तमं शरणं प्रयातोऽभूदिति शेषः । तेन श्रीरामेण तृणेन वा चन्द्रविभूषणस्य रुद्रस्य प्रसादतः वरलक्षणप्रसादादवध्यमपि तदक्षिगं वायसनेत्रस्थितं असुरं कुरङ्गनामकं दैत्यं अक्ष्येवाक्षिकं अक्षिकेन नेत्रेण सहितं तं निहत्यासुरवेशाद् विमोचितः जयन्त इति शेषः ।।१२।।

**भारतश्री–** साक्षिकमिति क्रियाविशेषणम् । यन्नेत्रे स्थितः तन्नेत्रसहितं निहत्येत्यर्थः । अपीत्यस्य अवध्यमित्यनेन सम्बन्धः ।।१२।।

**भावचन्द्रिका–** ।। **पुनरिति** ।। ब्रह्मणोक्त इति शेषः । 'अथ प्रोवाच भगवान् ब्रह्मा त्रिभुवनेश्वरः । भो भो बलिभुजां श्रेष्ठ तमेव शरणं व्रज ।।' इति पाद्मे [उ.का.२४२.२०५] ।।१२–१५।।

**गूढवाक्यार्थ–** तेन रामेण काकरूपी जयन्तः विसर्जित इत्यर्थः प्रदृश्यत इति काक....* दुर्जयगतो भवानवध्यो भवेति चन्द्रविभूषणस्य प्रसादतोऽवध्यं तद...* सादिकं एकगोलकान्तस्थितेनेन्द्रियेण सहितं न हन्येयमिति ।।१२।।

**स वायसानामसुरोऽखिलानां वरादुमेशस्य बभूव चाक्षिगः ।
निपातितोऽसौ सह वायसाक्षिभिस्तृणेन रामस्य बभूव भस्मसात् ।।१३।।**

**व्यासतीर्थीया–** तदक्षिभङ्गः कर्तव्यः सर्ववायसाक्षिभङ्गः कस्मात् कृत इत्यत आह– **स इति** ।।

**वादिराजीया–** तर्हि सकलवायसानामक्षिनाशः किमर्थमित्यत आह– **स वायसानामिति** ।। रामस्य तृणेनेति वदता रामाभिमन्त्रितमन्त्रबलेनैकमेव तृणमनन्तीभूय वर्तमानसकलकाकाक्षिभिः सह तत्र तत्र गतदैत्यांशान् सर्वानपि भस्मीचकारेति सूचितम् । भविष्यतां तु काकानां रामसङ्कल्पबलात् जन्मारभ्यैवैकनेत्रत्वमिति विवेकः । अत एवात्र वायसाक्षिभिः सह भस्मसाद्बभूवेत्युक्तम् । उपरि तु 'भविष्यतश्चैकदृशश्चकार' इति वदिष्यति । एकदृक्त्वेनैव भविष्यत्काकसृष्टिः न तु तेषामपि अक्षिभिस्सह दैत्यभस्मीकरणमिति भावः ।।१३।।

**वरदराजीया–** ननु अक्ष्णा सह किमिति असुरं निहतवानित्यत आह– **स इति** ।। स असुरः उमेशस्य वरात् अखिलानां वायसानां अक्षिगो बभूव । तस्मान्निपातितः । असौ असुरः वायसाक्षिभिः सह रामस्य तत्प्रयोजितेन तृणेन भस्मसाद्बभूव इत्यर्थः ।।१३।।

**जनार्दनीया–** नन्वपराधिनो वधो योग्य एव । वायसस्य अक्षिपातः किमर्थं कृत इत्यत आह– **स वायसानामिति** ।। रामस्य सम्बन्धिना तृणेन । वायसानां अक्षिभिः सह निपातितोऽसौ रामस्य तृणेन भस्मसाद्भस्माधीनं बभूव ।।१३।।

**अनन्तभट्टीया–** तर्हि सकलाक्षिपातनं किमर्थं कृतमित्यत आह– **स वायसानामिति** ।। रामस्य तृणेनेति वदता रामाभिमन्त्रितमन्त्रबलेन एकमेव तृणं अनन्तीभूयवर्तमानं सकलकाकाक्षिभिः सह तत्र तत्र गतदैत्यांशान् सर्वानपि भस्मीचकारेति सूचितम् । भविष्यताञ्च काकानां रामसङ्कल्पबलात् जन्मारभ्यैव एकनेत्रत्वमिति विवेकः । अत एवात्र वायसाक्षिभिः सह भस्मसात् बभूवेत्युक्तम् उपरि तु भविष्यतश्चैकदृशश्चकारेति वक्ष्यति एकदृक्त्वेनैव भविष्यत्काकदृष्टिं न तु तेषामपि भस्मीकरणमिति भावः ।।१३।।

**ताम्रपर्णीया–** तर्हि सकलकाकाक्षिनाशः किमर्थ इत्यत आह– **स वायसानामिति** ।।१३।।

**चट्टी–** नन्वपराधिनो वधो योग्य एव वायसास्याक्षिपातः किमर्थं कृत इत्यत आह– **स वायसानामिति** ।। सो असुर उमेशस्य वरादखिलानां सर्वेषां वायसानामक्षिगो बभूव । असौ वायसाक्षिभिस्सह श्रीरामस्य सम्बन्धिना तृणेन वायसानामक्षिभिस्सह निपातितस्सन् भस्मसाद्बभूवेत्यर्थः ।।

**भारतश्री–** सः कुरङ्गनामासुरः ।।१३–१५।।

**गूढवाक्यार्थ–** तर्हि सकलकाकाक्षिनाशः किमर्थं कृत इत्यत आह– **स वायसानामिति** ।।१३।।

**ददुर्हि तस्मै विवरं बलार्थिनो यद्वायसास्तेन तदक्षिपातनम् ।**
**कृतं रमेशेन तदेकनेत्रा बभूवुरन्येऽपि तु वायसास्तदा ।।१४।।**

**व्यासतीर्थीया–** तथाऽपि सर्ववायसाक्षिभङ्गे किं निमित्तं उक्तमित्यत आह– **ददुर्हीति** ।।१४।।

**वादिराजीया–** यावद्वायसा द्विनेत्रास्तिष्ठन्ति तावत्तदक्षिगस्य तव मरणं मास्त्विति शिवेन दत्तवरस्यैका–क्षिनाशेऽपि वैयर्थ्यसद्भावात् काकेषु कृपालुना रामेणैकस्यैवाक्ष्णो विनिपातनं कृतम् । तर्हि निरपराधिकाकानामेकस्याप्यक्ष्णोः विनिपातने वैषम्यनैर्घृण्ये स्यातामित्यत आह– **ददुर्हि तस्मा इति** ।। शिवप्रसादादेव सकलकाकाक्षिषु प्रवेशं कुर्वते तस्मै बलार्थिनः प्रवलेऽसुरेऽस्मच्चक्षुषि प्रविश्य तिष्ठति सत्यस्माकमपि बलं भवतीति बलार्थिनो विवरं मनःपूर्वकं विवरं ददुः । अतस्तेषामपि क्षुद्रदोषोऽस्ति । तस्मात् काकानां चक्षुर्मात्रनाशो न सर्वथा नाश इति भावः । तदेकनेत्रा इत्यत्र तत् तस्मात् कारणादन्येऽपि वायसा एकनेत्रा बभूवुरिति योजना । गोळकद्वयेऽप्येकमेवेन्द्रियं द्विपत्नीपतिवत्कार्यानु–सारेण रामकृपया इतस्ततश्चरतीत्येकनेत्रत्वं न त्वेकस्य गोळकस्यापि नाशः । गोळकान्तस्तृणास्त्रप्रवेशे सति तस्य गोलकस्यानाशोऽपि[भवतु]उभयतोऽपि पश्यन्त्विति काकेषु दययेति ज्ञातव्यम् ।।१४।।

**मधुसूदनीया–** ।। **अन्येऽपि** ।। विवरप्रदा अपि । तुशब्देन दुष्टसमागमस्य दुःखहेतुत्वं सूचयति ।।१४–२०।।

**वरदराजीया–** ननु वायसाक्षिगत्वेऽपि असुरनिपातः कर्तव्यः । वायसैस्तु किमपराधं कृतं येन तदक्षिपातनं कृतमित्यत आह– **ददुरिति** ।। यत् यस्मात् बलार्थिनो असुरबलोपजीवनं अपेक्षमाणाः तस्मै असुराय विवरं अवकाशं स्थातुं ददुर्हि तेन कारणेन रमेशेन रामेण तदक्षिपातनं तेषां वायसानां अक्षिपातनं कृतम् । तत् तस्मादारभ्य वर्तमानाः जनिष्यमाणाश्च अन्ये वायसाः एकनेत्राः बभूवुरित्यर्थः ।।

**जनार्दनीया–** तर्हि अक्षिस्थो हन्तव्यः वायसानां को वापराध इत्यत आह– **ददुरिति** ।। तस्मै कुरङ्गासुराय विवरं अवकाशम् । स्थानमित्यर्थः । यद्यस्माद्ददुस्तेन कारणेन तदक्षिपातनं वायसानां नेत्रभङ्गः । तत्तस्मात् कृतम् । तदा तद्दिनमारभ्य एकस्य अक्षिपाते कृते सर्वेषां एकनेत्रत्वमभूदिति हरिसामर्थ्यसूचकस्तुशब्दः ।।१४।।

**अनन्तभट्टीया–** यावद्वायसाः द्विनेत्रास्तिष्ठन्ति तावत्तदक्षिस्थकुरङ्गस्य तव मरणं मास्त्विति शिवदत्तवरस्य एकाक्षिनाशे वैय्यर्थ्यं सम्भवेत् काके कृपालुना रामेण एकस्यैवाक्ष्णोर्निपातनं कृतम् । तर्हि निरपराधिकाकानां एकस्यैवाक्ष्णोर्निपातने कृते वैशम्यं नैर्घृण्यं स्यातां इत्यत आह– **ददुर्हि तस्मा इति** ।। तदेकनेत्रा बभूवुः स्म तत् तस्मात् कारणात् अन्येऽपि वायसा एकनेत्रा बभूवुरिति योजना । गोलकद्वयेऽपि एकनेत्रत्वं द्विपत्नीपतिवत् कार्यानुसारेण रामकृपया इतस्ततश्चरतीत्येकनेत्रत्वं न तु [एकस्यापि] गोलकस्य नाशः । तदपि काकेषु उभयतो पश्यन्त्विति दययेति ज्ञातव्यम् ।।१४।।

**ताम्रपर्णीया–** निरपराधिवायसादिनाशे निमित्तमाह– **ददुरिति** ।। एकाक्षिना तेनापि शिवविरोधाभावेन दैत्यवधलक्षणप्रयोजनसम्भवात् । काकेषु कृपावशाचापराधिनामपि काकानामेकाक्षिनाशः । काकानामेकनेत्रत्वं नामेन्द्रियस्य कार्यानुसारेणैकैकगोलकपरित्यागेन गोलकान्तरगमनात् यदा दक्षचक्षुषीदं दर्शनं तदा वामेन दर्शनाभावः । यदा वामेन दर्शनं तदा दक्षिणचक्षुषा दर्शनाभाव इत्येकत्वं विवक्षितं ज्ञेयम् । यद्वा भविष्यतामित्युक्ते दिनकल्पान्तरेऽपि काकानामेकनेत्रत्वमिति प्रतीयते । तदयुक्तम् । पुनः रामावतारपर्यन्तं द्विनेत्रत्वावश्यम्भावात् । अतः कुलग्रहणं यावदेतत्काककुलमनुवृत्तं वर्तते तावत् भविष्यतामिति विवक्षितत्वात् । दिनप्रलये कुलनाशान्न तदुपपत्तिरिति भावः । अक्षयं भावप्रधानो निर्देशः । अक्षयत्वम् । यद्वा पापाभावो अपापम् । मक्षिकाणाभावो निर्मक्षिकमितिवत् । अक्षयं क्षयाभावो दत्त इत्यर्थः । ननु भविष्यतां काकानां द्विनेत्रत्वाभावात् अपराधाभावात्तेषामेक–दृत्त्वकरणमन्याय्यमिति चेत् भविष्यतामपि अपराधिकुलोत्पन्नत्वदोषादेव एकदृत्त्वमिति भावः । अत एव कुलोद्भवानामित्युक्तम् ।।१४–१६।।

**चट्टी–** ननु वायसाक्षिगत्वेऽपि असुरनिपातः कर्तव्यः वायसैस्तु किमपराद्धं येन तदक्षिपातनं कृतमित्यत आह– **ददुरिति** ।। यद्यस्मात् वायसाः बलार्थिनोऽसुरबलोपजीवनमपेक्षमाणास्तस्मै कुरङ्गाय

असुराय विवरमवकाशं स्थानमित्यर्थः । ददुः हि तेन कारणेन रमेशेन श्रीरामेण तदक्षिपातनं कृतम् । तत्तस्मात् तदा तद्दिनमारभ्य अन्येऽपि वर्तमानाः जनिष्यमाणाः वायसाः अप्येकनेत्राः बभूवुः ।।१४।।

**गूढवाक्यार्थ–** निरपराधिनां वायसानामक्षिनाशे निमित्तमाह– **ददुरिति** ।। एकाक्षिनाशेनापि शिववरविरोधाभावेन दैत्यवधलक्षणप्रयोजनसम्भवात् काकेषु कृपया अपराधिनामपि काकानामेकाक्षि–नाशः कृतः...* ।।१४।। [१५–२३ श्लोकपर्यन्तं व्याख्यानं मूलकोशेषु गलितम् ।]

**भविष्यतामप्यथ यावदेव द्विनेत्रता काककुलोद्भवानाम् ।**
**तावत्तदक्ष्यस्य कुरङ्गनाम्नः शिवेन दत्तं दितिजस्य चाक्षयम् ।।१५।।**

**व्यासतीर्थीया–** तदुत्तरकालेऽपि काकानामेकनेत्रत्वे किं निमित्तमित्यत आह– **भविष्यतामिति** ।। अक्षिणि भवः अक्ष्यः । अक्षयं अक्षयत्वम् ।।१५।।

**वेदाङ्गतीर्थीया–** अक्षयमिति क्रियाविशेषणम् अक्षयं वाऽवध्यत्वम् ।।१५–२२।।

**वादिराजीया–** तर्हि तदानीन्तनकाकानामस्तु एकनेत्रत्वम् । भविष्यतां तु काकानां कुत एकनेत्रत्वमित्यत आह– **भविष्यतामिति** ।। तर्हि कल्पान्तरे भविष्यत्काकानामपि एकनेत्रत्वप्रसङ्गात् ब्रह्मणो दिनान्तरे भाविरामकथायां काकासुरवधकथाया अनुत्थानमेव स्यादित्यत उक्तम्– **काककुलोद्भवानामिति** ।। वर्तमानकाककुलोद्भवो येषां तेषाम् । इदं च कुलं दैनन्दिनकल्पावसाने सर्वं नश्यति । अतस्तदुपाधिको वरोऽपि नश्यति । कल्पान्तरे तु 'यथा पूर्वमकल्पयत्' इति श्रुतेस्तदानीन्तनब्रह्मणा द्विनेत्रा एव काकाः सृज्यन्ते । पुनर्दैत्येन वरे लम्भिते तदानीन्तनोऽपि रामस्तच्चक्षुर्नाशयति । अतो दैनन्दिनरामकथायां न कुचोद्यावकाशः । किञ्चातिसमर्थेनापि रामेण स्वप्रियाय विभीषणाय 'यावत्तिष्ठति मेदिनी तावज्जीव विभीषण' इति दत्तो वरोऽपि तदानीन्तनकल्पान्तपर्यन्तां मेदिनीमेवोपाधीकुरुते न तु कल्पान्तरां मेदिनीमपि । तदा का कथा तुच्छकाम्यतपसे स्वयं तुच्छाय दैत्याय शिवेन दत्तवरस्यैतत्कल्पान्त–पर्यन्तत्वे इति ग्रन्थकारस्याभिसन्धिः । तावदक्षयं क्षयरहितं तदक्षि काकानामक्षि । अस्य कुरङ्गनाम्नो दितिजस्य शिवेन दत्तं स्थानतया दत्तमित्यन्वयः । क्षये तु नेति सूचनाय अक्षयमित्युक्तम् ।।१५।।

**वरदराजीया–** ननु तदानीं वर्तमानैः सर्वैः बलार्थिभिः वायसैः स्वाक्षिस्थानं असुराय दत्तमित्यपराधात् तदक्षिपातनं भवतु । उत्पत्स्यमानानां वायसानां एकनेत्रं कुतो जातमित्यत आह– **भविष्यतामिति** ।। काककुलोत्पन्नानां वायसानां भविष्यतीति यावत् । यावत् यावता द्विनेत्रता तावत् तावता अक्ष्यस्य अक्षिणि विद्यमानस्य कुरङ्गनाम्नः असुरस्य तत् अक्षिविवरं अक्षयं यथा भवति तथा शिवेन दत्तम् ।।१५।।

**जनार्दनीया–** ननु तत्कालीनानां काकानां विवरदानापराधादेकनेत्रत्वं भवतु । उत्पत्स्यमानानां एकनेत्रत्वं कुत इत्यत आह– **भविष्यतामिति** ।। अथ वर्तमानकालानन्तरं भविष्यतां उत्पत्स्यमानानां काककुले उद्भवो येषां ते तथा तेषाम्, काकानामिति शेषः । न तु काकेभ्योऽन्येषामित्यर्थः । द्विनेत्रता यावत् तावत्तदक्ष्यस्य अक्षिणि भवः अक्ष्यः तेषां वायसानामक्ष्यः तस्य अक्षयं अवध्यत्वं दत्तं यतः ।।

**अनन्तभट्टीया–** तर्हि इदान्तीनकाकानां अक्षि...* कुत एकनेत्रत्वमित्यत आह– **भविष्यतामिति** ।। काककुलोद्भवानां...* ल्पमिति वर्तमानकाककुले उद्भवो येषां तेषाञ्च । इदञ्च कुतः । दैनन्दिनकल्पावसाने सर्वं नश्यति । अतः तदुपाधिको वरोऽपि नश्यति । कल्पान्तरे तु यथा पूर्वमकल्पयत् इति श्रुतेः तदनीन्तनब्रह्मणा द्विनेत्रा एव काका सृष्टाः ते...* तदानीन्तनो रामः तच्चक्षुर्नाशयति । अतो दैनन्दिनरामकथायां न कुतश्चिच्चोद्यावकाशः तत् अवध्यत्वम् ।।१५।।

**ताम्रपर्णीया–** ।। **भविष्यतामिति** ।। इच्छया काकरूपधारिव्यावृत्त्यर्थं कुलग्रहणम् ।।१५–२८।।

**चट्टी–** ननु तात्कालिकानां काकानां विवरदानापराधादेकनेत्रत्वं भवतु । उत्पत्स्यमानानामेकनेत्रत्वं कुत इत्यत आह– **भविष्यतामिति** ।। अथ वर्तमानकालानन्तरं भविष्यतां उत्पत्स्यमानानां काककुले उद्भवा येषां ते तथा तेषां काकानामित्यर्थः । न तु काकेभ्योऽन्येषामित्यर्थः । यावत् द्विनेत्रता तावत् तदक्ष्यस्य अक्षिणि भवो अक्ष्यः तेषां वायसानां अक्ष्यस्तदक्ष्यस्तस्य कुरङ्गनाम्नो दितिजस्य दैत्यस्य शिवेन अक्षयमवध्यत्वं दत्तम् ।।१५।।

**भारतश्री–** भविष्यतां काकानामित्युक्ते ब्रह्मणः भविष्यद्दिवसे प्रातरारभ्य मध्याह्नपर्यन्तं काकानां द्विनेत्रता न स्यात् । अतः काककुलोद्भवानामित्युक्तम् । तेषामादितः काककुलोद्भवत्वाभावात् द्विनेत्रता युक्ता । अतः मूले काककुलोद्भवानां आदितः काककुलोद्भावामित्यर्थो ज्ञेयः । अयं...* मनसि त्वं...* भविष्यतः काककुलोद्भवात् ।।१५–२०।।

**भावविवृतिः–** ।।१–१४।। भविष्यतामप्यथ यावदेव.... दितिजस्य चाक्षयं भविष्यतश्चैकदृशश्चकार इत्यत्र यतो यस्मात् यावदेव तद्दिनकल्पपर्यन्तं अथ एतद्वायसाक्षिपातनमारभ्य भविष्यतां जनिष्यमाणानां काककुलोद्भवानां काकानां द्विनेत्रत्वमस्ति तत्पर्यन्तं तदक्षिस्थकुरङ्गनाम्नस्तेषां भविष्यद्वायसानां अक्षिस्थकुरङ्गनाम्नो दितिजस्य अक्षयं वरं दत्तो...* अमुष्य कुरङ्गस्य पुनर्भावं पुनरुत्पत्तिं एतद्दिनकल्पपर्यन्तं... एतद्दिनपर्यन्तभविष्यो जनिष्यमाणान् काकानेकदृशश्चकार । तत्तद्दिनकल्पीयकाककुलानां भिन्नभिन्नत्वात् ।।१५–१९।।

**अतिविशद–** भविष्यतामप्यथ यावदेव द्विनेत्रता काककुलोद्भवानामित्यत्र भविष्यतां काकानामिति वक्तव्यं कुलग्रहणं कुतः यदि भविष्यतां काकानामित्येतावदुच्यते तदा एतन्मन्वन्तरान्तपर्यन्तमिति

प्रतीतिस्स्यात् । भवतु वा प्रतीतिः का नो हानिरिति नो वाच्यम् । तत्र कुलसर्जनादिविधायक– श्रुतेरभावात् । ब्रह्मणः प्रतिदिने तु तदभिधायक 'यथा पूर्वमकल्पयत्' इत्यादेर्विद्यमानत्वात् । एतदभिप्रेत्य 'काककुलोद्भवानाम्' इत्युक्तम् । 'कुलं संघे ग्रहे सार्थे जातिसाङ्कर्ययोरपि' इत्यभिधानम् । अथवा भविष्यतां काकानामित्येतावदुच्यते । तदा स्वरूपतः काकानामेव यावद्विनेत्रता तावदेवास्यावध्यता न तु पापेन काकयोनिं प्राप्तानां मनुष्यादीनां इच्छया वा प्राप्तानां देवादीनां यावद्विनेत्रता तावदिति प्रतीतिस्स्यात् । तदर्थं काककुलोद्भवानामित्युक्तम् । तेन काककुलोत्पत्तिमतां सर्वेषां यावद्विनेत्रता तावदस्य कुरङ्गनाम्नः अवध्यतेत्युक्तं भवति । ततश्चैवमक्षरयोजना । रामेण काकनेत्रनाशानन्तरं भविष्यतां काककुलोद्भवानां काककुले उद्भवः उत्पत्तिर्येषां ते तथा तेषां यावद्विनेत्रता तावत्तदक्षि तेषां काककुलोद्भवानां अक्षि नेत्रम् । अस्य एतस्य कुरङ्गनाम्नो दितिजस्य शिवेन अक्षयं यथा भवति तथा दत्तमित्युक्तं भवति । एतदुक्तं भवति । ब्रह्मणः प्रतिदिनं रामावतारपर्यन्तं काकाः द्विनेत्राः । ततश्च तेन विनाशितैकनेत्राः ब्रह्मणो दिनावसानमेकनेत्रास्तिष्ठन्तीति । नैवं मन्वन्तरादौ । ततस्तद्विहाय ब्रह्मणो दिनमेव ग्राह्य इति कुलशब्द इति । अथवा भविष्यतामप्यथ यावदेवेत्यत । यस्मिन्दिने रामेण काकनेत्रविनाशनं कृतं तत आरभ्य पुनर्मन्वन्तरे प्रतिदिने ब्रह्मकल्पे वा उत्पद्यमानानां काकानां पुर्नभविष्यतां अस्त्येव । तथा च कदापि द्विनेत्रता न स्यात् । न च माभूदिति वक्तव्यम् । 'यथा पूर्वं अकल्पयत्' [ऋ.१०.१९०.३] 'तथा ससर्जेदममोघदृष्टिः यथाप्ययात् प्राक् व्यवसायबुद्धिः' [भा.२.२.१] इति स्मृत्यादिः व्याकुप्येत तस्मात् 'भविष्यतामप्यथ यावदेव' 'भविष्यतश्चैकदृशश्चकार' इति कथमुक्तमिति चेन्न । भविष्यतामपि ब्रह्मणो दिनान्त एव पर्यवसायी इत्यभिप्रेत्य कुलग्रहणमित्याहुः । कुलादिव्यवस्था भूर्भुवसुवरिति त्रिलोकादिव्यवस्था ब्रह्मणो दिनादौ उत्पद्यमाना दिनान्ते नश्यन्तीति श्रुत्यादिसिद्धा इति भावः ।।१५–१८।।

**गूढकर्तृक–** 'भविष्यतामप्यथ यावदेव द्विनेत्रता काककुलोद्भवानाम्' भविष्यतां काकानामिति वक्तव्यम् । कुलग्रहणं कुतः । मैवं भविष्यतां भविष्यतां काकानामित्युच्येत तदा स्वरूपतः काकानामेव यावद्विनेत्रता तावदस्यावध्यता । न तु पापेन काकयोनिं प्राप्तानां मनुष्यादीनां इच्छया वा प्राप्तानां देवादीनां वा यावद्विनेत्रता तावदिति प्रतीतिस्स्यात् । तदर्थं काककुलोद्भवानामित्युक्तम् । तेन काककुलोत्पत्तिमतां सर्वेषां यावद् द्विनेत्रता तावत् कुरङ्गनाम्नोऽवध्यता इत्युक्तं भवति ।।

।। इति गूढकर्तृके पञ्चमोऽध्यायः ।।

**अतः पुनर्भावममुष्य हिन्वन् भविष्यतश्चैकदृशश्चकार ।**
**स वायसान् राघव आदिपूरुषस्ततो ययौ शक्रसुतस्तदाज्ञया ।।१६।।**

**वादिराजीया–** अतो वरसामर्थ्यादमुष्य दैत्यस्य पुनर्भावं सकृन्नष्टस्यापि पुनरुत्पत्तिम् । भविष्यत्काकानां त्वपराधिकाककुलोत्पन्नत्वं वाऽपराधः । वरमहिम्ना तेषामपि विवरदाने बुद्धिः स्यादिति वाऽपराधः ।।१६–१९।।

**वरदराजीया–** हि यस्मात् अतो अमुष्य असुरस्य पुनर्भावं भविष्यद्वायसाक्षिषु इदानीं हतस्य पुनरुत्पत्तिं हिन्वन् परिहरन् आदिपूरुषः सः राघवः भविष्यतः उत्पत्स्यमानांश्च वायसान् एकदृशः एकनेत्रांश्चकारेत्यर्थः । यावत् द्विनेत्रता तावन्नेत्रविवरस्य दत्तत्वात् एकनेत्रत्वे च तदभावात् तस्य पुनर्भावाभाव इति भावः । ततः तदनन्तरं शक्रसुतो जयन्तः तस्य रामस्य आज्ञया ययौ स्वलोकमिति शेषः ।।१६।।

**जनार्दनीया–** अतः अमुष्य कुरङ्गस्य पुनर्भावं पुनर्जन्म हिन्वन् परिहरन् भविष्यतः उत्तरत्र भाविनो वायसान् । एका दृक् दृष्टिर्येषां ते एकदृशः तान् । तदाज्ञया रामाज्ञया ।।१६।।

**अनन्तभट्टीया–** पुनर्भावश्च पुनरुत्पत्तिम् । भविष्यतः उत्तरभाविकालीनो वायसानित्यन्वयः ।।

**चट्टी–** हि यस्मादतः अमुष्य कुरङ्गस्य पुनर्भावं पुनरुत्पत्तिं हिन्वन् परिहरन्नादिपुरुषः सः राघवः भविष्यतः उत्तरत्र भाविनो वायसान् । एका दृग् दृष्टिः येषां ते एकदृशस्तानेकनेत्रांश्चकारेत्यर्थः । ततस्तदनन्तरं शक्रसुतः जयन्तः तस्य रामस्य आज्ञया ययौ । स्वर्लोकमिति शेषः ।।१६।।

**भावचन्द्रिका–** ।। **ययाविति** ।। 'स्वर्लोकं प्रययावाशु राघवेणैव रक्षितः' इति पाद्मे [उ.खं.२४२. २११]

**रामोऽथ [१]दण्डकवनं [२]मुनिवर्यनीतो लोकाननेकश उदारबलैर्निरस्तान् ।**
**श्रुत्वा खरप्रभृतिभिर्वरतो[३] हरस्य सर्वैरवध्यतनुभिः प्रययौ सभार्यः ।।१७।।**

---

१. इक्ष्वाकुपुत्रः दण्डकः । स शुक्रपुत्रीं अरजानाम्नीं शुक्रे पातालगते धर्षयामास । सः शुक्रः पुत्रीमुखात् तच्छ्रुत्वा सराष्ट्रबलसैन्यभृत्यवाहनं दण्डकं भस्मीचकार । ततः शङ्करस्याज्ञया दण्डकारण्यं राक्षसानां आलयमभूदिति वामनपुराणे– तव शिष्येण दण्डेन वार्यमाणेन चासकृत् । बलादनाथा रुदती नीताहं वचनीयताम् ।। एतत्पुत्र्या वचः श्रुत्वा क्रोधसंरक्तलोचनः । उपस्पृश्य शुचिर्भूत्वेदं वचनमब्रवीत् ।। यस्मात् तेनाविनीतेन ममाज्ञाभयमुत्तमम् । गौरवं च तिरस्कृत्य च्युतधर्मारजाः कृता ।। तस्मात् सराष्ट्रः सबलः सभृत्यो वाहनैः सह । सप्तरात्रान्तरात् भस्म नग्नां दृष्ट्वा भविष्यति ।। ....दण्डोऽपि भस्मसाद्भूतः सराष्ट्रबलवाहनः । महता बलगर्वेण सप्तरात्रान्तरे तदा ।। एवं ते दण्डकारण्यं परित्यक्ष्यन्ति देवताः । आलयं राक्षसानां तु कृतं देवेन शम्भुना ।। [श्लोक.११-२०]। इयं कथा रामायणे उत्तरकाण्डेऽपि वर्तते । एवं शुक्रशापदग्धं तदरण्यं अगस्त्येन उज्जीवितं रामकृपावलोकनेन पावनश्च अभूत् । तच्चोक्तं वासुदेवसहस्रनामस्तोत्रे 'ब्रह्मशापहताशेषदण्डकारण्यपावनः' इति संक्षेपेण । विस्तारेण इयं कथा रामायणे अरण्यकाण्डे द्वादशसर्गानन्तरप्राप्तप्रक्षिप्तसर्गे अगस्त्यरामसंवादे विद्यते । तथाहि (मैसूर–

**व्यासतीर्थीया–** अथ अरण्यकाण्डकथामारभते– **रामोऽथेति** ।।१७।।

**वरदराजीया–** अथ अनन्तरं दण्डकवनं दण्डकारण्यं प्रति मुनिवर्यनीतो मुनिश्रेष्ठैः प्रेरितो रामः ययौ इति सम्बन्धः । किं कृत्वा हरस्य वरतो वरात् सर्वैः जनैः अवध्यतनुभिः अवध्यदेहैः अत एव उदारबलैः खरप्रभृतिभिः खरदूषणादिभिः राक्षसैः अनेकशः अनेकान् बहून् लोकान् निरस्तान् पीडितान् श्रुत्वा ययौ इति पूर्वेणान्वयः ।।१७।।

**जनार्दनीया–** अयोध्याकाण्डकथा समासेनोक्ता । अरण्यकाण्डकथां आरभते– **रामोऽथेत्यादिना** ।। अथ कुरङ्गवधानन्तरं मुनिवर्यैः दण्डकारण्यस्थमुनिश्रेष्ठैः नीतः प्राप्तो रामः । अनेकशः बहून् । निरस्तान् बाधितान् । श्रुत्वा दण्डकवनं दण्डकारण्यं प्रति ।।१७।।

---

– पुस्तकं कतकव्याख्यायाः अधो भागे) अयं तु देशो निखिलः सर्व एव महातपः । अशरण्यैः शरण्योभूत् यथैव विनिवेशितः । तथाख्याह्यर्थतत्त्वेन परं कौतूहलं मम ।। श्रुत्वा तु वचनं तस्य रामस्य मधुराक्षरम् । प्रत्युवाच ततो रमामगस्त्यो भगवानृषिः ।। शृणु राघव तत्त्वेन देशस्यास्य यथातथम् । दण्डकेन परित्यक्तो ह्ययं देशो महात्मना ।। भार्गवस्य च शापेन निर्मानुष्यमृगोभवत् । वृक्षगुल्मलताहीनं तापसैरपि वर्जितम् ।। कान्तारमभवत् तात घोरं परमदारुणम् । योजनार्धसहस्रं तु विन्ध्यपादस्तु दक्षिणः ।। नानुवर्षति पर्जन्यः नानुवाति सुखोनिलः । रक्षः (रूक्षः) प्रतिभयं घोरमासीत् परमदारुणम् ।। बहून्यब्दसहस्राणि ह्येतदासीदमानुषम् । गन्धर्वैः ऋषिसङ्घैश्च देवैश्च परिवर्जितम् ।। कस्यचित् त्वथ कालस्य दैवयोगादहं नृप । हिमवच्छिखरात् श्वेतात् इह प्राप्तोस्मि मानद ।। ततो मया समाहूतः पर्जन्यो जलदैः सह । स्वच्छन्दवर्षश्च कृतः कश्चित् कालमरिन्दम ।। यमस्य चैव चारास्तु बहून्यब्दशतानि वै । तेजसा मृत्युदूताश्च व्याधयश्च निराकृताः ।। हिमवत्पादजाः वृक्षाः चिन्तिताः मनसागताः । प्रवृत्ताश्च पुनर्नद्यः फुल्लपङ्कजमण्डिताः ।। तटाकानि च रम्याणि सरितश्च सरांसि च । (नीरजस्कं सुगन्धं च सुखशीतजलानिलम्)।। प्रवृद्धवनषण्डं तु स्फीतसस्यवनाकुलम् । अचिरेणाभवद् रम्यं सर्षिसङ्घानुसेवितम् ।। केवलं त्वभिशापेन तस्यैव रघुनन्दन । सोपद्रुतमिवाप्येतत् राक्षसैरुग्रकर्मभिः ।। यदा प्रभृति चापि त्वं चित्रकूटमुपागतः । तदा प्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ।। ऋषीणामभयं वीर दातुमर्हसि मानद । अस्माद्धि कारणाद् राम दण्डकारण्यवासिनाम् ।।त्राणार्थमिह सम्प्राप्तः त्रातुमर्हति नो भवान् । समर्थो ह्यसि काकुत्स्थ त्रैलोक्यस्यापि रक्षणे ।। किं पुनर्वीर रक्षांसि द्विजमन्युहतानि वै । अयमिक्ष्वाकुपुत्रेण दण्डकेन महाबल ।। देशो निराकृतो राजन् शापदोषेण राघव । दण्डकारण्यमखिलं दर्शनादेव राघव ।। शापस्यान्ताय काकुत्स्थ प्राप्तस्त्वमरिमर्दन । स त्वमद्य पुरावृत्तैः पितृभिः सन्निराकृतम् ।।

२. तावूचुस्ते वनचरास्तापसा धर्मचारिणः । वनस्य तस्य सञ्चारं राक्षसैः समभिप्लुतम् ।। रक्षांसि पुरुषादानि नानारूपाणि राघव।वसन्त्यस्मिन्महारण्ये व्यालाश्च रुधिराशनाः ।। उच्छिष्टं वा प्रमत्तं वा तापसं ब्रह्मचारिणम् । अदन्त्यस्मिन्महारण्ये तान्निवारय राघव ।। इति वाल्मीकिरामायणे.अयोध्याकाण्ड.११९.१८-२१ ।

३. खरः खरपुरे लिङ्गं क्षीरनद्यास्तु दक्षिणे । दूषणोऽपि समाराध्य सह्यजायास्तु दक्षिणे । ...शतपत्रेश्वरं शम्भुं मातृभूतं सदा नृणाम् । सम्पूज्य बलिनो जाता दुराधर्षा सुरैरपि । इत्युमासंहितायां पञ्चमोध्यायः ।

**अनन्तभट्टीया–** निरस्तान् बाधितान् श्रुत्वा ।।१७।।

**ताम्रपर्णीया–** दण्डकवनं प्रति मुनिवर्यनीतः सन् प्रययावित्यन्वयः ।।१७–२०।।

**चट्टी–** अयोध्याकाण्डकथां समासेनोक्त्वा अरण्यकाण्डकथामाह– **राम इति** ।। अथानन्तरं सभार्यः मुनिवर्यनीतः मुनिश्रेष्ठैः प्रेरितः श्रीरामः हरस्य वरतो वरात् सर्वैः जनैः अवध्यतनुभिरवध्यदेहैरत एव उदारबलैः खरप्रभृतिभिः खरदूषणादिभिः राक्षसैरनेकशो बहून् लोकान् निरस्तान् पीडितान् श्रुत्वा दण्डकवनं दण्डकारण्यं प्रति ययौ ।।१७।।

**आसीच्च तत्र शरभङ्ग इति स्म जीर्णो लोकं हरेर्जिगमिषुर्मुनिरुग्रतेजाः ।**
**तेनादरोपहृतसार्घ्यसपर्यया स प्रीतो ददौ निजपदं परमं रमेशः ।।१८।।**

**व्यासतीर्थीया–** निजपदं वह्नौ प्रविष्टाय ।।१८।।

**वरदराजीया–** तत्र दण्डकवने उग्रतेजाः शरभङ्ग इति प्रसिद्धो मुनिः हरेर्लोकं हरेः पदं जिगमिषुः गन्तुं इच्छुः जीर्ण अतिवृद्धः आसीत् इति सम्बन्धः । तेन मुनिना आदरेण भक्त्या उपहृता आनीतार्घ्यादियुक्तसपर्या पूजा तया प्रीतः तुष्टः सः रमेशः रामः निजपदं वैकुण्ठादिस्थानं ददौ इत्यर्थः ।

**जनार्दनीया–** तत्र दण्डकारण्ये जिगमिषुः गन्तुमिच्छुः जीर्णः जरया कर्मकरणाशक्तः शरभङ्ग इति शरभङ्गाख्यः आसीत् । तेन शरभङ्गमुनिना आदरेण प्रीत्या उपाहृतया आनीतया सार्घ्यया अर्घ्याद्युपचारैः सहितया सपर्यया पूजया ।।१८।।

**अनन्तभट्टीया–** जीर्णः विहितानुष्ठानाक्षमदेहः । ददौ शरभङ्गायेति शेषः ।।१८।।

**चट्टी–** तत्र दण्डकारण्ये जीर्णोऽतिवृद्धः हरेर्लोकं जिगमिषुः गन्तुमिच्छुः उग्रं तेजो यस्य सः उग्रतेजाः । शरभङ्ग इति शरभङ्गाख्यः मुनिः आसीदिति सम्बन्धः । तेन मुनिना आदरेण भक्त्या उपहृतया आनीतया अर्घ्यसहितया सपर्यया पूजया प्रीतः तुष्टः सः रमेशः श्रीरामः परमं निजं पदं वैकुण्ठादिस्थानं ददौ ।।

**धर्मो यतोऽस्य वनगस्य नितान्तशक्तिह्रासे स्वधर्मकरणस्य हुताशनादौ ।**
**देहात्ययः [१]स तत एव तनुं निजाग्नौ सन्त्यज्य रामपुरतः प्रययौ रमेशम् ।।१९।।**

**व्यासतीर्थीया–** ननु वह्न्यादिपतनं न प्रशस्तम् । अथ कथं तत्र देहमत्यजदित्यत आह– **धर्म इति** ।।१९।।

---

१. 'सतत' इति 'सः तत' इति जनार्दनीये उभयथापि पठ्यते ।

**वरदराजीया—** ननु बलात् अग्नौ पातेन आत्मघातजनितप्रत्यवायदुष्टाय तस्मै कथं निजपददानं इत्यत आह— **धर्म इति** ।। वनगस्य वानप्रस्थाश्रमिणः अस्य शरभङ्गस्य स्वधर्मकरणस्य स्वाश्रमोचितधर्माचरणस्य सम्बन्धिनी या शक्तिः तस्या नितान्तं अत्यन्तं ह्रासे क्षये सति हुताशनादौ अग्निज्वालादौ देहात्ययः देहत्यागः धर्मः । यतः तत एव तस्मादेव कारणात् स शरभङ्गः रामपुरतः रामस्य अग्रे निजाग्नौ स्वधार्याग्नौ तनुं देहं सन्त्यज्य परमं रमेशं प्रययावित्यर्थः ।।१९।।

**जनार्दनीया—** ननु जानता मुनिना आत्मघातः कथं कृतः । आत्मघातं कृतवतो रामः कथं निजपदं ददावित्यत आह— **धर्म इति** ।। अस्य सर्वस्य । स्वधर्मकरणस्य स्वस्वाश्रमोचितधर्माचरणविषये नितान्तशक्तिह्रासे सति सर्वात्मना शक्तिनाशे सति । हुताशनादौ आदिपदेन जलादिकं ग्राह्यम् । देहस्य अत्ययः त्यागः सततः नित्यो धर्मः यतः । अतो वनगस्य वानप्रस्थाश्रमिणोऽस्य शरभङ्गस्य धर्म एवेत्यस्य द्विरावृत्तिः । एव अत एव निजाग्नौ आहिताग्नौ रामस्य पुरतः तनुं सन्त्यज्य, हरिस्मरणपूर्वकसमीचीनज्ञानेन त्यक्त्वेत्यर्थः । परेशं श्रीहरिं प्रययौ प्राप ।

[१]'दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि । असाध्यव्याधिना युक्तः स्वव्यापाराक्षमः पुमान् ।।
प्रविशेत् ज्वलनं दीप्तं करोत्यनशनं तथा । अगाधतोयराशिं च भृगोः पतनमेव वा ।।
गच्छेत् महापथं वापि तुषारागिरिकन्धरात् । प्रयागवटशाखाग्राद्देहत्यागं करोति वा ।।
उत्तमान् प्राप्नुयाल्लोकान्नात्मघाती भवेत्कचित् । महापापक्षयात्स्वर्गे दिव्यान् भोगान् समश्नुते ।।
एतेषामधिकारोऽस्ति सर्वेषामेषु सर्वथा । नराणामथ नारीणां सर्ववर्णेषु सर्वदा ।।' इति वाराहे

आपदि सर्ववर्णाश्रमिणां देहत्यागो धर्म इति पुराणगतवाक्यानि बहूनि सन्ति । तथा तस्मिन्नर्थे याज्ञवल्क्यादिस्मृतिषु प्रमाणानि सन्ति । यद्वा वनगस्य स्वधर्मकरणस्य, तद्विषय इत्यर्थः । नितान्तशक्तिह्रासे सति हुताशनादौ देहात्ययः सततो धर्मो यतः अतः अस्य वनगस्य शरभङ्गस्य धर्म इत्यर्थः । कुतः वनगत्वादिति शेषः । शेषं पूर्ववत् । यद्वा वनगस्यास्य शरभङ्गस्य नितान्तशक्तेर्ह्रासो यस्मिन् स तथा तस्मिन् काल एवेत्यर्थः । देहात्ययो धर्मो यतस्ततः शरभङ्गः तनुं सन्त्यज्य परेशं प्रययौ । जीर्णस्येति च हेतुगर्भविशेषणमेतत् । अस्मिन्नर्थे सतत इत्यत्र भिन्नं पदम् । 'यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः आत्मन्यग्निं समारोप्य मच्चित्तोऽग्नौ समाविशेत् ।।' इत्येकादशस्कन्धे [१८.११] 'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः । जलानशनभृग्वग्निमहाप्रस्थानमिष्यते ।।' इति वाराहे ।।१९।।

**अनन्तभट्टीया—** धर्मकरणस्य तद्विषये इत्यर्थः । शक्तिह्रासो सर्वात्मना शक्त्यभाव इत्यर्थः । देहविसर्जनम् ।।१९।।

---

१. एते श्लोकाः वराहपुराणे इदानीं नोपलभ्यन्ते । तथापि माधवाचार्यैः अपरार्के, हेमाद्रौ, पृथ्वीचन्द्रकृतप्रबन्धे, शुद्धितत्त्वप्रभृतिषु कृतिषु आदित्यपुराणान्तर्गततया विन्यस्ताः । अतः न टिप्पणीकारमतिविलासकल्पिताः ।

**चट्टी–** ननु जानता अग्नौ आत्मघातः कथं कृतः । आत्मघातं कृतवतः श्रीरामः कथं निजं पदं ददावित्यत आह– **धर्म इति** ।। स्वधर्मकरणस्य स्वाश्रमोचितधर्माचरणस्य विषये नितान्तशक्तिह्रासे सर्वात्मना शक्तिनाशे सति हुताशनादौ अग्निजलादौ देहस्यात्ययस्त्यागः सन्ततं नित्यो धर्मः यतः अतो वनगस्य वानप्रस्थाश्रमिणोऽस्य शरभङ्गस्य धर्म एवेत्यर्थः । अत एव शरभङ्गः निजाग्नौ आहिताग्नौ श्रीरामस्य पुरतः तनुं देहं सन्त्यज्य हरिस्मरणपूर्वकसमीचीनज्ञानेन त्यक्त्वेत्यर्थः । रमेशं श्रीहरिं प्राप । तदुक्तम्– 'दुश्चिकित्सैर्महारोगैः पीडितस्तु पुमानपि । असाध्यव्याधिना युक्तः स्वव्यापाराक्षमः पुमान् ।। प्रविशेत् ज्वलनं दीप्तं करोत्यनशनं तथा । अगाधतोयराशिं च भृगोः पतनमेव वा ।। गच्छेत् महापथं वापि तुषारागिरिकन्धरात् । प्रयागवटशाखाग्राद्देहत्यागं करोति वा ।। उत्तमान् प्राप्नुयाल्लोकान्नात्मघाती भवेत्कचित् । महापापक्षयात्स्वर्गे दिव्यान् भोगान् समश्नुते ।। एतेषामधिकारोऽस्ति सर्वेषामेषु सर्वथा । नराणामथ नारीणां सर्ववर्णेषु सर्वदा ।।' इति वाराहपुराणे ।।१९।।

**भावचन्द्रिका–** ।। **हुताशनादाविति** ।। आदिशब्दात् भृगुपतनादि । निजाग्नौ अग्निहोत्राग्नौ ।।

**अतिविशद–** देहात्ययः सतत एव तनुं निजाग्नौ इत्यत्र वानप्रस्थस्यैव अत्यन्ताशक्तौ देहात्ययो धर्म इति प्रतीयते । न केवलं तस्यैव किन्तु हरिपूजात्वेन विहितकर्मकर्तॄणां सर्वेषामपि । तदुक्तम्– 'दुश्चिकित्सैर्महारोगैः पीडितस्तु पुमानपि । असाध्यव्याधिना युक्तः स्वव्यापाराक्षमः पुमान् ।। प्रविशेत् ज्वलनं दीप्तं करोत्यनशनं तथा । अगाधतोयराशिं च भृगोः पतनमेव वा ।। गच्छेत् महापथं वापि तुषारागिरिकन्धरात् । प्रयागवटशाखाग्राद्देहत्यागं करोति वा ।। उत्तमान् प्राप्नुयाल्लोकान्नात्मघाती भवेत्कचित् । महापापक्षयात्स्वर्गे दिव्यान् भोगान् समश्नुते ।। एतेषामधिकारोऽस्ति सर्वेषामेषु सर्वथा । नराणामथ नारीणां सर्ववर्णेषु सर्वदा ।।' इति वाराहे । तथा एकादशस्कन्धेऽप्युक्तम्– यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः । आत्मन्यग्निं समारोप्य मच्चित्तोऽग्निं समाविशेत् ।।' इति ।।

**रामोऽपि तत्र ददृशे धनदस्य[1] शापाद्गन्धर्वमुर्वशिरतेरथ यातुधानीम् ।**
**प्राप्तं दशां सपदि तुम्बुरुनामधेयं नाम्ना विराधमपि [2]शर्ववरादवध्यम् ।।२०।।**

---

१. 'अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुम् । तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन हि ।। [३.४.१६] वाल्मीकिरामायणे तु रम्भासक्तिः शापकारणमित्युक्तम् [३.४.१९] । आचार्योक्ता कथा बहुकल्पानुसारिणी । वाल्मीकिना उक्ता तु वर्तमानकल्पमनुसृत्य प्रवृत्ता । अतः न आर्शवचनाचार्यवचनयोः विरोधः ।

२. विराधस्य शर्ववरादवध्यत्वे प्रमाणं स्कान्दे उमासंहितायां नवमाध्याये दृश्यते । तथाहि- 'विराधो हाटकपुरे विधिवन्मामपूजयत् । मदनुग्रहवैशिष्ट्यादवध्यः स सुरासुरैः ।।' इति । रामायणेऽपि 'स्पर्शात्तु वरदानेन प्राणान् संरोध्य राक्षसः । विराधः शूलमुद्यम्य राघवावभ्यधावत् ।।' इति [अ.का.३.१७] तट्टीकायामपि 'वरदानेन ईश्वरवरदानेन' इति व्याख्याय तदुक्तमिति उमासंहितावचनं उदाहृतम् ।

**वादिराजीया–** पूर्वं तुम्बुरुनामधेयमिदानीं विराधमपि विराधनामधेयं चेति योजना ।।२०।।

**वरदराजीया–** अथ अनन्तरं तत्र दण्डकवने रामोऽपि शर्ववरात् अवध्यं नाम्ना विराधनामकं राक्षसं ददर्शेति सम्बन्धः । कथम्भूतं विराधं तुम्बुरुनामधेयं गन्धर्वमिति शेषः । ननु गन्धर्वस्य कथं इयं दशा इत्यत आह– **धनदस्येति** ।। उर्वशिरतेः स्वेन भुज्यमानोर्वश्यां रमणात् अपराधात् धनदस्य कुबेरस्य शापात् सपदि तत्क्षणं यातुधानीं राक्षससम्बन्धिनीं दशां राक्षसत्वं प्राप्तं ददर्श इत्यनेनान्वयः ।।२०।।

**जनार्दनीया–** रामोऽपि तत्र दण्डकारण्ये उर्वश्याः रतेः रमणनिमित्तात् धनदस्य कुबेरस्य शापात् सपदि शीघ्रं यातुधानीं राक्षससम्बन्धिनीं दशामवस्थां प्राप्तं तुम्बुरुनामधेयं गन्धर्वं अथ राक्षसजन्मप्राप्त्यनन्तरं शर्ववरादवध्यं नाम्ना विराधमपि ददृशे ।।२०।।

**अनन्तभट्टीया–** उर्वशिरतेः स्वेनानुभूयमानोर्वशीभोगान्निमित्तात् ।।२०।।

**चट्टी–** ।। **राम इति** ।। रामोऽपि तत्र दण्डकारण्ये उर्वश्याः रतेः रमणनिमित्तात् धनदस्य कुबेरस्य शापात् सपदि तत्क्षणं यातुधानीं राक्षससम्बन्धिनीं दशां प्राप्तं तुम्बुरुनामधेयं गन्धर्वम् । अथ राक्षसजन्मप्राप्त्यनन्तरं शर्ववरादवध्यं नाम्ना विराधमपि ददृशे ।।२०।।

**भावचन्द्रिका–** अनुजेन सह बाहुयुगलं भङ्क्त्वा अनुजेन विलगं चकार कारयामास । तदुक्तम् – 'भ्रातरौ भोगिनौ तस्य खण्डयामासतुर्भुजौ । रामानुजो रामवाक्यात् तद्देहं विलगं व्यधात् ।।' इति ।।

**भावविवृति–** रामोऽपि तत्र ददृशे... तुम्बुरुनामधेयमित्यत्र रामस्तत्र उर्वशिरतेरुर्वश्यां रमणनिमित्तात् धनददत्तशापाद्यातुधानीं दशां योनिं प्राप्तां नाम्ना विराधं पूर्वं तुम्बुरुनामधेयगन्धर्वं ददृशेत्यन्वयः । ननु अप्सरस्त्रीसङ्गस्य सर्वैः क्रियमाणत्वात् तुम्बुरुं धनदः किमर्थं शशापेत्यतः स्वभोगायागमनकाले तुम्बुरुस्तां वलात्कारेण बुभुजे अतस्तां शशापेति । केचित्तु 'गन्धर्वादीनां अप्सरसः सङ्गस्य निषिद्धत्वात् धनदस्तं शशापेति । अत एव उर्वशीमपि शशाप । 'सा तुम्बुरोस्सङ्गत आविवेश रक्षस्तनुं शापतो वित्तपस्य' इति वक्ष्यमाणत्वात् ।।२०–३५।।

**भङ्क्त्वास्य बाहुयुगलं विलगं चकार संमानयन् वचनमम्बुजजन्मनोऽसौ ।**
**प्रादाच्च तस्य सुगतिं निजगायकस्य भक्षार्थमंसकमितोऽपि सहानुजेन ।।२१।।**

**व्यासतीर्थीया–** त्वद्धस्तप्राप्तं तव भक्ष्यमिति अम्बुजजन्मनो वचनम् ।।२१।।

**वादिराजीया–** अम्बुजजन्मनः वचनं तव वाहुयुगलमध्ये यः प्राप्नोति स त्वद्वशो भवतु इति वचनं सम्मानयन् सन्ननुजेन सह साकं अंसमितोऽपि प्राप्तोऽपि वाहुभङ्गं न करोत्विति वराभावादस्य बाहुयुगलं भंक्त्वा विलगं चकारेति योजना ।।२१–२२।।

**मधुसूदनीया–** ।। **भङ्क्त्वेति** ।। अनुजेन सहांसकमितोऽपि अम्बुजजन्मनो वचनं सम्मानयन् सन् अनुजेन सह बाहुयुगलं भङ्क्त्वा अनुजेन सह बिलगं चकारेति योज्यम् । अस्य विराधस्य बाहुयुगलं भङ्क्त्वालक्ष्मणः सव्यबाहुं रामो दक्षिणबाहुं चिच्छेद इति विवेकः । अनेन बाहुं भङ्क्त्वा छित्वा इति निरस्तं वेदितव्यम् । तदुक्तम्– 'तस्य रौद्रस्य सौमित्रिः बाहुं सव्यं बभञ्ज च । रामश्च दक्षिणं बाहुं तरसा तस्य रक्षसः ।।' इति रामायणे । [अर.का.४.५] बिलगं चकार बिले गर्ते भूविवरे इति यावत् । तद्गतं चकार । तत्र प्रक्षिप्य तं हतवान् इत्यर्थः । ननु एवं कृत्वा किमर्थं हतवान् शस्त्रेणैव किमर्थं न जघान इत्यतः आह– **सम्मानयन् वचनमम्बुजजन्मनः इति** ।। अम्बुजजन्मनः चतुर्मुखस्य वचनं शस्त्रेण अवध्यत्वाच्छेद्यत्वाभेद्यत्वप्रापकं वचनमित्यर्थः तदुक्तम्– 'अवध्यतां प्रेक्ष्य महावरस्य शितेन शस्त्रेण नरर्षभौ तौ । सम्मन्त्र्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ।। [अर.का.४.३०]इति रामायणे । 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ।।' [अर.का.३.६] अवटे चापि मां राम प्रक्षिप्य कुशलं व्रज' [३.४.२२] इति विराधोक्तिः रामायणे । 'गर्तोऽवटो भुवः श्वभ्रं' इत्यभिधानात् रामायणस्थावटशब्दो बिलवाचीति ज्ञेयम् । वरदराजाचार्यस्तु 'रामः शरणं गतं विराधं बिले संस्थापयामास न तु तदानीं हतवान् इति भावः'[१] इति व्याचक्षते । तच्चिन्त्यम् । तस्य तदानीमेव मरणाभावे प्रादादिति तदानीमेव गतिदानोक्त्ययोगात् । उक्तप्रमाणविरोधाच्च ।।२१।।

**वरदराजीया–** अस्य विराधस्य बाहुयुगळं भुजयुग्मं भङ्क्त्वा छित्वा असौ रामः अम्बुजजन्मनः ब्रह्मणः वचनं सम्मानयन् बिलगं बिले स्थितं चकार इत्यर्थः । तस्य निजगायकस्य तुम्बुरुनाम्नः गन्धर्वस्य सहानुजेन भक्षार्थं भक्षणार्थं अंसकं स्कन्धं इतः प्राप्तोऽपि सुगतिं सद्गतिं प्रादादित्यर्थः । अनेन विराधे सीतां गृहीत्वा गगनं गते सति रामलक्ष्मणाभ्यां शरेषु मुच्यमानेषु पुनरागत्य रामलक्ष्मणावपि स्वस्कन्धमारोप्य गच्छति सति रामः बाहुयुगलं चिच्छेद । अथ रामः शरणं गतं विराधं बिले संस्थापयामास इति कथा सूचिता भवति ।।२१।।

**जनार्दनीया–** असौ रामः अस्य विराधस्य बाह्वोर्युगलं भंक्त्वा छित्वा बिलगं बिलस्थं विराधं चकार । कथम्भूतः अम्बुजजन्मनः ब्रह्मणः वचनं सम्मानयन् । भक्षार्थं अंसकं स्कन्धम् । इतोऽपि प्रापितोऽपि । निजगायकस्य गन्धर्वस्य तस्य तुम्बुरोः ।।२१।।

**अनन्तभट्टीया–** अस्य विराधस्य बाहुयुगलं भङ्क्त्वा, यच्च विराधो सीतामादाय वन...* तस्मिन् शरान् प्रक्षिप्य तेन स्वांसस्थापितौ राघवौ तस्य बाहुयुगलं छेदतुरित्यर्थो द्रष्टव्यः अंसकं स्कन्धम् ।।२१।।

---

१. अत्र मधुसूदनीयव्याख्याने वरदराजीयत्वेन उद्धृतं 'न तु तदानीं हतवानिति भावः' इति पदकदम्बकं लिपिकृतप्रमदात् आगतमिति वा भावानुवादो वा स्यात् । मूलकोशेषु उदाहृतवाक्यस्य अदर्शनात् ।

**ताम्रपर्णीया–** ।। **संमानयन्निति** ।। तव बाहुयुग्ममध्ये यः प्राप्नोति सः त्वद्वशो भवत्विति ब्रह्मणो वरं संमानयन् अनुजेन सह भक्षार्थं असंकमितोऽपि अस्य बाहुयुगलं अनुजेन सह छित्वा शर्ववरात् अवध्यमपि तं हत्वा सहानुजेन तद्देहं विलगं चकार । निजगायकस्य तस्य सुगतिं प्रादाच्च इत्यन्वयः । अयं च अर्थः सङ्ग्रहरामायणे स्पष्टः ।।२१–२५।।

**चट्टी–** ।। **भङ्क्त्वेति** ।। असौ श्रीरामः अनुजेन सहांसकमितोऽपि अनुजेन सहास्य बाहुयुगलं भित्वा बिलगं चकारेति योज्यम् । अस्य विराधस्य बाहुयुगलं भङ्क्त्वा लक्ष्मणः सव्यं बाहुं बिभेद रामोऽपि दक्षिणबाहुं बिभेदेति विवेकः । तदुक्तम्– 'तस्य रौद्रस्य सौमित्रिर्बाहुं सव्यं बभञ्ज ह । रामश्च दक्षिणं बाहुं तरसा तस्य रक्षसः ।।' इति रामायणे । विलगं चकार बिलगे गर्ते भूविवरे इति यावत् । तद्गतं चकार । तत्र प्रक्षिप्य तं हतवानित्यर्थः । नन्वेवं कृत्वा किमर्थं हतवान् शस्त्रेणैव किमर्थं न जघानेत्यत आह– **सम्मानयन्निति** ।। अम्बुजजन्मनश्चतुर्मुखस्य वचनं शस्त्रेणावध्यत्वाभेद्यत्वप्रापकं वचनमित्यर्थः । तदुक्तम्–'अवध्यतां प्रेक्ष्य महावरस्य शितेन शस्त्रेण नरर्षभौ तौ । सम्मन्त्र्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ।। [अर.का.४.३०] इति रामायणे । 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ।।' [अर.का.३.६] 'अवटे चापि मां राम प्रक्षिप्य कुशलं व्रज' [अर.का.४.२२] इति विराधोक्तिः रामायणे । 'गर्तोऽवटो भुवः श्वभ्रं' इत्यभिधानात् रामायणस्थावटशब्दो बिलवाचीति ज्ञेयम् । रामानुजेन सह भक्षार्थं अंसकं स्कन्धमितोऽपि प्राप्तोऽपि निजगायकस्य गन्धर्वस्य तस्य तुम्बुरोः सुगतिं प्रादादित्यर्थः ।।२१।।

**भारतश्री–** अम्बुजजन्मनो चतुर्मुखस्य । अनेन तद्वरोऽप्यस्तीति ज्ञायते ।।२१–२२।।

**अतिविशद–** भङ्क्त्वास्य... सहानुजेन इत्यत्र सहानुजेन भक्षार्थमंसकं इतोऽपि अस्य बाहुयुगलं भङ्क्त्वा अम्बुजन्मनो वचनं सम्मानयन् अवध्यत्वं सम्मानयन् न जघान । किन्तु जीवत एव विलगं चकारेति प्रतीयते । तत्तु रामायणविरुद्धम् । 'तस्य रौद्रस्य सौमित्रिः सव्यं बाहुं बभञ्ज ह । रामश्च दक्षिणं बाहुं तरसा तस्य रक्षसः ।।' इति वचनात् । विलगं चकार, बिलगते भूविवर इति यावत् । तद्गतं चकार । तत्र प्रक्षिप्य तं हतवानित्यन्वयः । नन्वेवं कृत्वा किमर्थं हतवान् । शस्त्रेणैव किमर्थं न जघानेत्यत आह– **संमानयन् वचनमम्बुजजन्मन इति** ।। अम्बुजजन्मनश्चतुर्मुखस्य वचनं शस्त्रेण अवध्यत्वाभेद्यत्वाच्छेद्यत्वप्रापकवचनमित्यर्थः । तदुक्तम्– 'अवध्यतां प्रेक्ष्य महावरस्य शितेन शस्त्रेण नरर्षभौ तौ । सम्मन्त्र्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ।। [अर.का.४.३०] इति रामायणे 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोके अच्छेद्याभेद्यत्वमेव च ।। अवटे चापि मां राम प्रक्षिप्य कुशलो व्रज ।।' इति विराधोक्तेरिति रामायणे । 'गर्तोऽवटो भुवि श्वभ्रे' इत्यभिधानात् रामायणस्थावटशब्दो बिलवाचीति ज्ञेयम् ।।२१।।

**मधुसूदनीया–** ।। **भङ्क्त्वेति** ।। अनुजेन सहांसकमितोऽपि अम्बुजजन्मनो वचनं सम्मानयन् सन् अनुजेन सह बाहुयुगलं भङ्क्त्वा अनुजेन सह बिलगं चकारेति योज्यम् । अस्य विराधस्य बाहुयुगलं भङ्क्त्वालक्ष्मणः सव्यबाहुं रामो दक्षिणबाहुं चिच्छेद इति विवेकः । अनेन बाहुं भङ्क्त्वा छित्वा इति निरस्तं वेदितव्यम् । तदुक्तम्– 'तस्य रौद्रस्य सौमित्रिः बाहुं सव्यं बभञ्ज च । रामश्च दक्षिणं बाहुं तरसा तस्य रक्षसः ।।' इति रामायणे । [अर.का.४.५] बिलगं चकार बिले गर्ते भूविवरे इति यावत् । तद्गतं चकार । तत्र प्रक्षिप्य तं हतवान् इत्यर्थः । ननु एवं कृत्वा किमर्थं हतवान् शस्त्रेणैव किमर्थं न जघान इत्यतः आह– **सम्मानयन् वचनमम्बुजजन्मनः इति** ।। अम्बुजजन्मनः चतुर्मुखस्य वचनं शस्त्रेण अवध्यत्वाच्छेद्यत्वाभेद्यत्वप्रापकं वचनमित्यर्थः तदुक्तम्– 'अवध्यतां प्रेक्ष्य महावरस्य शितेन शस्त्रेण नरर्षभौ तौ । सम्मन्त्र्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ।। [अर.का.४.३०]इति रामायणे । 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ।।' [अर.का.३.६] अवटे चापि मां राम प्रक्षिप्य कुशलं व्रज' [३.४.२२] इति विराधोक्तिः रामायणे । 'गर्तोऽवटो भुवः श्वभ्रं' इत्यभिधानात् रामायणस्थावटशब्दो बिलवाचीति ज्ञेयम् । वरदराजाचार्यस्तु 'रामः शरणं गतं विराधं बिले संस्थापयामास न तु तदानीं हतवान् इति भावः'[१] इति व्याचक्षते । तच्चिन्त्यम् । तस्य तदानीमेव मरणाभावे प्रादादिति तदानीमेव गतिदानोक्त्ययोगात् । उक्तप्रमाणविरोधाच्च ।।२१।।

**वरदराजीया–** अस्य विराधस्य बाहुयुगळं भुजयुग्मं भङ्क्त्वा छित्वा असौ रामः अम्बुजजन्मनः ब्रह्मणः वचनं सम्मानयन् बिलगं बिले स्थितं चकार इत्यर्थः । तस्य निजगायकस्य तुम्बुरुनाम्नः गन्धर्वस्य सहानुजेन भक्षार्थं भक्षणार्थं अंसकं स्कन्धं इतः प्राप्तोऽपि सुगतिं सद्गतिं प्रादादित्यर्थः । अनेन विराधे सीतां गृहीत्वा गगनं गते सति रामलक्ष्मणाभ्यां शरेषु मुच्यमानेषु पुनरागत्य रामलक्ष्मणावपि स्वस्कन्धमारोप्य गच्छति सति रामः बाहुयुगलं चिच्छेद । अथ रामः शरणं गतं विराधं बिले संस्थापयामास इति कथा सूचिता भवति ।।२१।।

**जनार्दनीया–** असौ रामः अस्य विराधस्य बाह्वोर्युगलं भंक्त्वा छित्वा बिलगं बिलस्थं विराधं चकार । कथम्भूतः अम्बुजजन्मनः ब्रह्मणः वचनं सम्मानयन् । भक्षार्थं अंसकं स्कन्धम् । इतोऽपि प्रापितोऽपि । निजगायकस्य गन्धर्वस्य तस्य तुम्बुरोः ।।२१।।

**अनन्तभट्टीया–** अस्य विराधस्य बाहुयुगलं भङ्क्त्वा, यच्च विराधो सीतामादाय वन...* तस्मिन् शरान् प्रक्षिप्य तेन स्वांसस्थापितौ राघवौ तस्य बाहुयुगलं छेदतुरित्यर्थो द्रष्टव्यः अंसकं स्कन्धम् ।।२१।।

१. अत्र मधुसूदनीयव्याख्याने वरदराजीयत्वेन उद्धृतं 'न तु तदानीं हतवानिति भावः' इति पदकदम्बकं लिपिकृतप्रमदात् आगतमिति वा भावानुवादो वा स्यात् । मूलकोशेषु उदाहृतवाक्यस्य अदर्शनात् ।

**ताम्रपर्णीया**– ।। **संमानयन्निति** ।। तव बाहुयुग्ममध्ये यः प्राप्नोति सः त्वद्वशो भवत्विति ब्रह्मणो वरं संमानयन् अनुजेन सह भक्षार्थं असंकमितोऽपि अस्य बाहुयुगलं अनुजेन सह छित्वा शर्ववरात् अवध्यमपि तं हत्वा सहानुजेन तद्देहं विलगं चकार । निजगायकस्य तस्य सुगतिं प्रादाच्च इत्यन्वयः । अयं च अर्थः सङ्ग्रहरामायणे स्पष्टः ।।२१–२५।।

**चट्टी**– ।। **भङ्क्त्वेति** ।। असौ श्रीरामः अनुजेन सहांसकमितोऽपि अनुजेन सहास्य बाहुयुगलं भित्वा बिलगं चकारेति योज्यम् । अस्य विराधस्य बाहुयुगलं भङ्क्त्वा लक्ष्मणः सव्यं बाहुं बिभेद रामोऽपि दक्षिणबाहुं बिभेदेति विवेकः । तदुक्तम्– 'तस्य रौद्रस्य सौमित्रिर्बाहुं सव्यं बभञ्ज ह । रामश्च दक्षिणं बाहुं तरसा तस्य रक्षसः ।।' इति रामायणे । बिलगं चकार बिलगे गर्ते भूविवरे इति यावत् । तद्गतं चकार । तत्र प्रक्षिप्य तं हतवानित्यर्थः । नन्वेवं कृत्वा किमर्थं हतवान् शस्त्रेणैव किमर्थं न जघानेत्यत आह– **सम्मानयन्निति** ।। अम्बुजजन्मनश्चतुर्मुखस्य वचनं शस्त्रेणावध्यत्वाभेद्यत्वप्रापकं वचनमित्यर्थः । तदुक्तम्–'अवध्यतां प्रेक्ष्य महावरस्य शितेन शस्त्रेण नरर्षभौ तौ । सम्मन्त्र्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ।। [अर.का.४.३०] इति रामायणे । 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ।।' [अर.का.३.६] 'अवटे चापि मां राम प्रक्षिप्य कुशलं व्रज' [अर.का.४.२२] इति विराधोक्तिः रामायणे । 'गर्तोऽवटो भुवः श्वभ्रं' इत्यभिधानात् रामायणस्थावटशब्दो बिलवाचीति ज्ञेयम् । रामानुजेन सह भक्षार्थं अंसकं स्कन्धमितोऽपि प्राप्तोऽपि निजगायकस्य गन्धर्वस्य तस्य तुम्बुरोः सुगतिं प्रादादित्यर्थः ।।२१।।

**भारतश्री**– अम्बुजजन्मनो चतुर्मुखस्य । अनेन तद्वरोऽप्यस्तीति ज्ञायते ।।२१–२२।।

**अतिविशद**– भङ्क्त्वास्य... सहानुजेन इत्यत्र सहानुजेन भक्षार्थमंसकं इतोऽपि अस्य बाहुयुगलं भङ्क्त्वा अम्बुजन्मनो वचनं सम्मानयन् अवध्यत्वं सम्मानयन् न जघान । किन्तु जीवत एव विलगं चकारेति प्रतीयते । तत्तु रामायणविरुद्धम् । 'तस्य रौद्रस्य सौमित्रिः सव्यं बाहुं बभञ्ज ह । रामश्च दक्षिणं बाहुं तरसा तस्य रक्षसः ।।' इति वचनात् । बिलगं चकार, बिलगते भूविवर इति यावत् । तद्गतं चकार । तत्र प्रक्षिप्य तं हतवानित्यन्वयः । नन्वेवं कृत्वा किमर्थं हतवान् । शस्त्रेणैव किमर्थं न जघानेत्यत आह– **संमानयन् वचनमम्बुजजन्मन इति** ।। अम्बुजजन्मनश्चतुर्मुखस्य वचनं शस्त्रेण अवध्यत्वाभेद्यत्वाच्छेद्यत्वप्रापकवचनमित्यर्थः । तदुक्तम्– 'अवध्यतां प्रेक्ष्य महावरस्य शितेन शस्त्रेण नरर्षभौ तौ । सम्मन्त्र्य चात्यर्थविशारदावुभौ विले विराधस्य वधं प्रचक्रतुः ।। [अर.का.४.३०] इति रामायणे 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोके अच्छेद्याभेद्यत्वमेव च ।। अवटे चापि मां राम प्रक्षिप्य कुशलो व्रज ।।' इति विराधोक्तेरिति रामायणे । 'गर्तोऽवटो भुवि श्वभ्रे' इत्यभिधानात् रामायणस्थावटशब्दो बिलवाचीति ज्ञेयम् ।।२१।।

**प्रमाणसङ्ग्रहः–** ।। **बिलगं चकारेति** ।। 'अवध्यतां प्रेक्ष्य महावरस्य शितेन शस्त्रेण नरर्षभौ तौ । सम्मन्त्र्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ।। [अर.का.४.३०] इति रामायणे । 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ।। अवटे चापि मां राम प्रक्षिप्य कुशलं व्रज' [अर.का.४.२२] इत्यादि च । 'गर्तोऽवटो भुवः श्वभ्रं' इत्यभिधानम् । तथाच तन्मरणार्थे भूविवरगं चकारेत्यर्थः ।।२१।।

**कण्ठकोद्धार–** भङ्क्त्वास्य बाहुयुगलमिति श्लोके संमानयन् वचनमम्बुजजन्मनोऽसौ इति वर्तते । तदयुक्तम् पूर्वश्लोके शर्वाद्वरादवध्यमिति रुद्रवरादवध्यत्वश्लोकत्वेन अत्र पुनः अम्बुजजन्मन इति ब्रह्मवरादवध्यत्वे विरोधस्स्यादिति अथ सम्प्रदायः अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ इति श्रुतेः अम्बुजो हिरण्यगर्भः तस्माज्जन्मनः शर्वस्य वचनमिति ।।

।। इति चक्रपाणिश्रीनिवासाचार्यविरचिते कण्ठकोद्धारे पञ्चमोध्यायः ।।

**प्रीतिं विधित्सुरगमद्भवनं निजस्य कुम्भोद्भवस्य परमादरतोऽमुना च ।**
**सम्पूजितो धनुरनेन गृहीतमिन्द्राच्छार्ङ्गं तदादिपुरुषो निजमाजहार ।।२२।।**

**व्यासतीर्थीया–** कुम्भोद्भवस्य अगस्त्यस्य ।।२२।।

**मधुसूदनीया–** ।। **प्रीतिं विधित्सुरिति** ।। शार्ङ्गं वेणुनिर्मितं शार्ङ्गसंज्ञकं धनुरित्यर्थः तदुक्तम्–

'अस्त्रागमं ते वक्ष्यामि शृणु धर्मं शुचिस्मिते । युगान्तरे महादेवि कण्वो नाम महामुनिः ।।
मनस्समाधाय तदा तपः कर्तुं प्रचक्रमे । तदा तस्य तपो घोरं चरतः कालपर्ययात् ।।
वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये । वेणुर्वल्मीकसंयोगात् मूर्ध्नि तस्य बभूव ह ।।
सहमानश्च तत्सर्वं तपश्चर्यां तदाऽकरोत् । तस्मै ब्रह्मा वरं दातुं जगाम तपसार्चितः ।।
दत्वा तस्मै वरं चाऽथ वेणुं दृष्ट्वाप्यचिन्तयत् । [यदा तस्मै वरं दातुं वेणुं दृष्ट्वाऽप्यचिन्तयत्]
लोककार्यं समुद्दिश्य वेणुना तेन भामिनि । चिन्तयित्वा तमादाय कार्मुकार्थे त्वयोजयत् ।।
विष्णोर्मम च सामर्थ्यं ज्ञातुं लोकपितामहः । धनुषी द्वे तदा प्रादाद्विष्णवे मम चैव हि ।।
पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः । तृतीयमवशेषेण गाण्डीवमभवद्धनुः ।।
तच्च सोमाय निर्दिश्य ब्रह्मलोकं गतः पुनः । एतत्ते सर्वमाख्यातं अस्त्रागममनिन्दिते ।।'

इत्यनुशासनपर्वणि [२०६.१९–२६] 'एतद्धनुस्त्रिकं विश्वकर्मणा कृतमेव हि । वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ।।' इत्यादि रामायणे [अर.का.१२.३२] । एतेन शार्ङ्गं विषाणविकारात्मकमिति केषाञ्चित् व्याख्यानं निरस्तं वेदितव्यम् ।।२२।।

**वरदराजीया–** निजस्य स्वभक्तस्य कुम्भोद्भवस्य अगस्त्यस्य भवनं आश्रमं प्रति अनुग्रहं विधित्सुः कर्तुमिच्छुः अगमत् प्राप्तवान् । अमुना अगस्त्येन परमादरतः परमभक्त्या सम्पूजितोऽभूदित्यर्थः । अनेन अगस्त्येन शार्ङ्गधनुः इन्द्राद्गृहीतमभूत् । आदिपूरुषः रामः निजं स्वकीयमेव तद्धनुः आजहार स्वीकृतवान् ।।

**जनार्दनीया–** निजस्य स्वभक्तस्य कुम्भोद्भवस्यागस्त्यस्य प्रीतिं विधित्सुर्विधातुमिच्छुः रामः कुम्भोद्भवस्य भवनं गृहं अगमत् । अमुना अगस्त्येन परमादरतः उत्तमभक्त्या पूजितः सन् अनेन अगस्त्येन इन्द्रात् गृहीतम् अङ्गीकृतं निजं स्वीयं शार्ङ्गं शार्ङ्गाख्यं धनुः आजहार जग्राह ।।२२।।

**अनन्तभट्टीया–** निजस्य स्वभक्तस्येत्यर्थः ।।२२–२३।।

**चट्टी–** ।। **प्रीतिमिति** ।। श्रीरामः निजस्य स्वभक्तस्य कुम्भोद्भवस्य अगस्त्यस्य प्रीतिमनुग्रहं विधित्सुः विधातुमिच्छुः कुम्भोद्भवस्य भवनं गृहमगमत् । अमुना अगस्त्येन परमादरतः उत्तमभक्त्या सम्पूजितस्सन् आदिपुरुषः श्रीरामः अनेनागस्त्येन इन्द्राद् गृहीतं निजं प्रियं शार्ङ्गं वेणुनिर्मितं शार्ङ्गसञ्ज्ञिकं धनुरित्यर्थः । न तु शृङ्गविकारम् । अनुशासनिकपर्वणि तथा उक्तत्वात् । आजहार जग्राह ।।

**भावचन्द्रिका–** शार्ङ्गमित्युपलक्षणम् । '.... शार्ङ्गं प्रददौ कुम्भसम्भवः । इषुधी अक्षयेषू च खड्गं च खलखण्डनम् ।।' इति सङ्ग्रहरामायणे [अर.का.२.४६] यथा चक्रं बहुरूपेण स्थितम् । यथा च प्राक्तनं वह्निदत्तश्चैकमासीत् । तथा शार्ङ्गं बहुरूपं परशुरामदत्तं अगस्त्यदत्तश्च एकमासीत् इत्याचार्याः ।।

**अतिविशद– प्रीतिं विधित्सुरिति** ।। शार्ङ्गं वेणुनिर्मितं शार्ङ्गसञ्ज्ञकं धनुरित्यर्थः तदुक्तम्– 'अस्त्रागमं ते वक्ष्यामि शृणु धर्मं शुचिस्मिते । युगान्तरे महादेवि कण्वो नाम महामुनिः ।। मनस्समाधाय तदा तपः कर्तुं प्रचक्रमे । तदा तस्य तपो घोरं चरतः कालपर्ययात् ।। वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये । वेणुर्वल्मीकसंयोगात् मूर्ध्नि तस्य बभूव ह ।। सहमानश्च तत्सर्वं तपश्चर्यां तदाऽकरोत् । तस्मै ब्रह्मा वरं दातुं जगाम तपसार्चितः ।। दत्वा तस्मै वरं चाऽथ वेणुं दृष्ट्वाप्यचिन्तयत् । [यदा तस्मै वरं दातुं वेणुं दृष्ट्वाऽप्यचिन्तयत्] लोककार्यं समुद्दिश्य वेणुना तेन भामिनि । चिन्तयित्वा तमादाय कार्मुकार्थे त्वयोजयत् ।। विष्णोर्मम च सामर्थ्यं ज्ञातुं लोकपितामहः । धनुषी द्वे तदा प्रादाद्विष्णवे मम चैव हि ।। पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः । तृतीयमवशेषेण गाण्डीवमभवद्धनुः ।। तच्च सोमाय निर्दिश्य ब्रह्मलोकं गतः पुनः । एतत्ते सर्वमाख्यातं अस्त्रागममनिन्दिते ।।' इत्यनुशासनपर्वणि [२०६.१९–२६] 'एतद्धनुत्रिकं विश्वकर्मणा च महत्कृतम् । वैष्णवं पुरषव्याघ्र निर्मितं विश्वकर्मणा ।।' इति रामायणे । एतेन शार्ङ्गं विषाणात्मकमिति केषाञ्चिद् व्याख्यानं निरस्तं वेदितव्यम् ।।२२।।

**प्रमाणसङ्ग्रहः**– ।। **बिलगं चकारेति** ।। 'अवध्यतां प्रेक्ष्य महावरस्य शितेन शस्त्रेण नरर्षभौ तौ । सम्मन्त्र्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ।। [अर.का.४.३०] इति रामायणे । 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ।। अवटे चापि मां राम प्रक्षिप्य कुशलं व्रज' [अर.का.४.२२] इत्यादि च । 'गर्तोऽवटो भुवः श्वभ्रं' इत्यभिधानम् । तथाच तन्मरणार्थे भूविवरगं चकारेत्यर्थः ।।२१।।

**कण्ठकोद्धार**– भङ्क्त्वास्य बाहुयुगलमिति श्लोके संमानयन् वचनमम्बुजजन्मनोऽसौ इति वर्तते । तदयुक्तम् पूर्वश्लोके शर्वाद्वरादवध्यमिति रुद्रवरादवध्यत्वश्लोकत्वेन अत्र पुनः अम्बुजजन्मन इति ब्रह्मवरादवध्यत्वे विरोधस्स्यादिति अथ सम्प्रदायः अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ इति श्रुतेः अम्बुजो हिरण्यगर्भः तस्माज्जन्मनः शर्वस्य वचनमिति ।।

।। इति चक्रपाणिश्रीनिवासाचार्यविरचिते कण्ठकोद्धारे पञ्चमोध्यायः ।।

**प्रीतिं विधित्सुरगमद्भवनं निजस्य कुम्भोद्भवस्य परमादरतोऽमुना च ।**
**सम्पूजितो धनुरनेन गृहीतमिन्द्राच्छार्ङ्गं तदादिपुरुषो निजमाजहार ।।२२।।**

**व्यासतीर्थीया**– कुम्भोद्भवस्य अगस्त्यस्य ।।२२।।

**मधुसूदनीया**– ।। **प्रीतिं विधित्सुरिति** ।। शार्ङ्गं वेणुनिर्मितं शार्ङ्गसंज्ञकं धनुरित्यर्थः तदुक्तम्–

'अस्त्रागमं ते वक्ष्यामि शृणु धर्मं शुचिस्मिते । युगान्तरे महादेवि कण्वो नाम महामुनिः ।।
मनस्समाधाय तदा तपः कर्तुं प्रचक्रमे । तदा तस्य तपो घोरं चरतः कालपर्ययात् ।।
वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये । वेणुर्वल्मीकसंयोगात् मूर्ध्नि तस्य बभूव ह ।।
सहमानश्च तत्सर्वं तपश्चर्यां तदाऽकरोत् । तस्मै ब्रह्मा वरं दातुं जगाम तपसार्चितः ।।
दत्वा तस्मै वरं चाऽथ वेणुं दृष्ट्वाप्यचिन्तयत् । [यदा तस्मै वरं दातुं वेणुं दृष्ट्वाऽप्यचिन्तयत्]
लोककार्यं समुद्दिश्य वेणुना तेन भामिनि । चिन्तयित्वा तमादाय कार्मुकार्थे त्वयोजयत् ।।
विष्णोर्मम च सामर्थ्यं ज्ञातुं लोकपितामहः । धनुषी द्वे तदा प्रादाद्विष्णवे मम चैव हि ।।
पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः । तृतीयमवशेषेण गाण्डीवमभवद्धनुः ।।
तच्च सोमाय निर्दिश्य ब्रह्मलोकं गतः पुनः । एतत्ते सर्वमाख्यातं अस्त्रागममनिन्दिते ।।'

इत्यनुशासनपर्वणि [२०६.१९–२६] 'एतद्धनुस्त्रिकं विश्वकर्मणा कृतमेव हि । वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ।।' इत्यादि रामायणे [अर.का.१२.३२] । एतेन शार्ङ्गं विषाणविकारात्मकमिति केषाञ्चित् व्याख्यानं निरस्तं वेदितव्यम् ।।२२।।

**वरदराजीया–** निजस्य स्वभक्तस्य कुम्भोद्भवस्य अगस्त्यस्य भवनं आश्रमं प्रति अनुग्रहं विधित्सुः कर्तुमिच्छुः अगमत् प्राप्तवान् । अमुना अगस्त्येन परमादरतः परमभक्त्या सम्पूजितोऽभूदित्यर्थः । अनेन अगस्त्येन शार्ङ्गधनुः इन्द्राद्गृहीतमभूत् । आदिपूरुषः रामः निजं स्वकीयमेव तद्धनुः आजहार स्वीकृतवान् ।।

**जनार्दनीया–** निजस्य स्वभक्तस्य कुम्भोद्भवस्यागस्त्यस्य प्रीतिं विधित्सुर्विधातुमिच्छुः रामः कुम्भोद्भवस्य भवनं गृहं अगमत् । अमुना अगस्त्येन परमादरतः उत्तमभक्त्या पूजितः सन् अनेन अगस्त्येन इन्द्रात् गृहीतम् अङ्गीकृतं निजं स्वीयं शार्ङ्गं शार्ङ्गाख्यं धनुः आजहार जग्राह ।।२२।।

**अनन्तभट्टीया–** निजस्य स्वभक्तस्येत्यर्थः ।।२२–२३।।

**चट्टी–** ।। **प्रीतिमिति** ।। श्रीरामः निजस्य स्वभक्तस्य कुम्भोद्भवस्य अगस्त्यस्य प्रीतिमनुग्रहं विधित्सुः विधातुमिच्छुः कुम्भोद्भवस्य भवनं गृहमगमत् । अमुना अगस्त्येन परमादरतः उत्तमभक्त्या सम्पूजितस्सन् आदिपुरुषः श्रीरामः अनेनागस्त्येन इन्द्राद् गृहीतं निजं प्रियं शार्ङ्गं वेणुनिर्मितं शार्ङ्गसञ्ज्ञिकं धनुरित्यर्थः । न तु शृङ्गविकारम् । अनुशासनिकपर्वणि तथा उक्तत्वात् । आजहार जग्राह ।।

**भावचन्द्रिका–** शार्ङ्गमित्युपलक्षणम् । '.... शार्ङ्गं प्रददौ कुम्भसम्भवः । इषुधी अक्षयेषू च खड्गं च खलखण्डनम् ।।' इति सङ्ग्रहरामायणे [अर.का.२.४६] यथा चक्रं बहुरूपेण स्थितम् । यथा च प्राक्तनं वह्निदत्तश्चैकमासीत् । तथा शार्ङ्गं बहुरूपं परशुरामदत्तं अगस्त्यदत्तश्च एकमासीत् इत्याचार्याः ।।

**अतिविशद– प्रीतिं विधित्सुरिति** ।। शार्ङ्गं वेणुनिर्मितं शार्ङ्गसञ्ज्ञकं धनुरित्यर्थः तदुक्तम्– 'अस्त्रागमं ते वक्ष्यामि शृणु धर्मं शुचिस्मिते । युगान्तरे महादेवि कण्वो नाम महामुनिः ।। मनस्समाधाय तदा तपः कर्तुं प्रचक्रमे । तदा तस्य तपो घोरं चरतः कालपर्ययात् ।। वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये । वेणुर्वल्मीकसंयोगात् मूर्ध्नि तस्य बभूव ह ।। सहमानश्च तत्सर्वं तपश्चर्यां तदाऽकरोत् । तस्मै ब्रह्मा वरं दातुं जगाम तपसार्चितः ।। दत्वा तस्मै वरं चाऽथ वेणुं दृष्ट्वाप्यचिन्तयत् । [यदा तस्मै वरं दातुं वेणुं दृष्ट्वाऽप्यचिन्तयत्] लोककार्यं समुद्दिश्य वेणुना तेन भामिनि । चिन्तयित्वा तमादाय कार्मुकार्थे त्वयोजयत् ।। विष्णोर्मम च सामर्थ्यं ज्ञातुं लोकपितामहः । धनुषी द्वे तदा प्रादाद्विष्णवे मम चैव हि ।। पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः । तृतीयमवशेषेण गाण्डीवमभवद्धनुः ।। तच्च सोमाय निर्दिश्य ब्रह्मलोकं गतः पुनः । एतत्ते सर्वमाख्यातं अस्त्रागममनिन्दिते ।।' इत्यनुशासनपर्वणि [२०६.१९–२६] 'एतद्धनुत्रिकं विश्वकर्मणा च महत्कृतम् । वैष्णवं पुरषव्याघ्र निर्मितं विश्वकर्मणा ।।' इति रामायणे । एतेन शार्ङ्गं विषाणात्मकमिति केषाञ्चिद् व्याख्यानं निरस्तं वेदितव्यम् ।।२२।।

**प्रमाणसङ्ग्रहः–** ।। **शार्ङ्गमिति** ।। शार्ङ्गं पिनाकं गाण्डीवञ्चेति त्रयाणामुत्पत्तिः कथमितीयमाशङ्का 'अस्त्रागमं ते वक्ष्यामि शृणु धर्मं शुचिस्मिते । युगान्तरे महादेवि कण्वो नाम महामुनिः ।। मनस्समाधाय तदा तपः कर्तुं प्रचक्रमे । तदा तस्य तपो घोरं चरतः कालपर्ययात् ।। वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये । वेणुर्वल्मीकसंयोगात् मूर्ध्नि तस्य बभूव ह ।। सहमानश्च तत्सर्वं तपश्चर्यां तदाऽकरोत् । तस्मै ब्रह्मा वरं दातुं जगाम तपसार्चितः ।। दत्वा तस्मै वरं चाऽथ वेणुं दृष्ट्वाप्यचिन्तयत् । [यदा तस्मै वरं दातुं वेणुं दृष्ट्वाऽप्यचिन्तयत्] लोककार्यं समुद्दिश्य वेणुना तेन भामिनि । चिन्तयित्वा तमादाय कार्मुकार्थे त्वयोजयत् ।। विष्णोर्मम च सामर्थ्यं ज्ञातुं लोकपितामहः । धनुषी द्वे तदा प्रादाद्विष्णवे मम चैव हि ।। पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः । तृतीयमवशेषेण गाण्डीवमभवद्धनुः ।। तच्च सोमाय निर्दिश्य ब्रह्मलोकं गतः पुनः । एतत्ते सर्वमाख्यातं अस्त्रागममनिन्दिते ।।' [२०६.१९–२६] ।।' इत्यनुशासने । 'वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा' इति रामायणे । 'पूजयित्वा यथा कामं ततोऽगस्त्यस्तमब्रवीत् । इदं दिव्यं महच्चापं हेमवज्रविभूषितम् ।। वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा । अमोघः सूर्यसङ्काशो ब्रह्मदत्तः शरोत्तमः ।। दत्तौ मम महेन्द्रेण तूणी चाक्षयसायकौ । महारजतकोशोऽयं असिर्हेमविभूषितः ।। अनेन धनुषा राम हत्वा संख्ये महासुरान् । आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् ।। तद्धनुस्तौ च तूणी च शरं खड्गं च मानद । जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ।।' [अर.का.१२.३१–३६]।।२२–२३।।

**आत्मार्थमेव हि पुरा हरिणा प्रदत्तमिन्द्रे तदिन्द्र उत रामकरार्थमेव ।**
**प्रादादगस्त्यमुनये तदवाप्य रामो रक्षन्नृषीनवसदेव स दण्डकेषु ।।२३।।**

**व्यासतीर्थीया–** इन्द्रस्य शार्ङ्गं कुत आगतमिति जिज्ञासायामाह– **आत्मार्थमिति** ।।२३।।

**वेदाङ्गतीर्थीया–** ऋषीन् रक्षन्नेवेति सम्बन्धः ।।२३।।

**वादिराजीया–** आत्मार्थं स्वावतारभूतरामार्थम् । ऋषीनेव रक्षन् न तु रक्षांस्यपि रक्षन्निति भाविकथा–सूचनायैवकारः । बहुविस्तारवत्येकस्मिन्नपि दण्डकारण्ये प्रदेशविशेषापेक्षया बहुवचनम् ।।

**मधुसूदनीया–** ।। **अवसदेव स दण्डकेष्विति** ।। दण्डकारण्यप्राप्तिदशायां पुरान्निर्गत्य रामस्य त्रयोदशाब्दाः जाताः तथाचोक्तम्– 'तत्र त्रयोदशाब्दाश्च रामस्य समतिक्रमन् । गौतमस्याश्रमेऽरण्ये पञ्चवट्यां मनोरमे ।।' इति पाद्मे [उ.खं.२४२.२२७–२२८] । पञ्चवट्यां दण्डकवने ।।२३।।

**वरदराजीया–** ननु शार्ङ्गधनुः इन्द्रे कुतः स्थितं कुतश्च अगस्त्येन गृहीतं इत्यत आह– **आत्मार्थमिति** ।। पुरा रामावतारात् पूर्वं हरिणा मूलरूपेण आत्मार्थमेव रामावतारे मह्यं दातव्यं इति

इन्द्रे प्रदत्तं तद्धनुः उत अनन्तरं रामकरार्थं रामेण करे धर्तुमेव इन्द्रः अगस्त्यमुनये प्रादात् । तद्धनुः अगस्त्यादवाप्य ऋषीन् रक्षन्नेव सः रामः दण्डकेषु दण्डकाश्रमेषु अवसदित्यर्थः ।।२३।।

**जनार्दनीया–** ननु निजं चेदिन्द्रस्य धनुःप्राप्तिः कथं ? तस्मादृषिणा किमर्थं लब्धमित्यत आह– **आत्मार्थमिति** ।। आत्मार्थं मदर्थं रामावतारे देहीति दत्तं इन्द्रः रामकरार्थं रामेण करे धर्तुमेव तद्धनुः अगस्त्यमुनये प्रादात् । दण्डकेषु दण्डकारण्येषु ।।२३।।

**चट्टी–** ननु शार्ङ्गं धनुर्निजं चेदिन्द्रस्य धनुःप्राप्तिं कथमिन्द्रादृषिणा कथं लब्धमित्यत आह– **आत्मार्थमिति** ।। पुरा पूर्वं हरिणा मूलरूपेणात्मार्थमेव रामावतारे मह्यं देहीति इन्द्रे प्रदत्तं तद्धनुरुतानन्तरं रामकरार्थं रामेण धर्तुमेवेन्द्रः अगस्त्यमुनये प्रादात् । सः श्रीरामः तद्धनुरगस्त्यादवाप्य ऋषीनेव रक्षन् न तु रक्षांसीति भाविकथासूचनाय एवकारः । दण्डकेषु दण्डकारण्यप्रदेशेषु अवसत् । बहुविस्तरवति एकस्मिन्नपि दण्डकारण्ये प्रदेशविशेषापेक्षया बहुवचनम् ।।२३।।

**भारतश्री–** पूर्वं जामदग्न्येन गृहीतं धनुः अगस्त्यात् गृहीतं च एकमेव अभवत् । यथा कृष्णावतारे गोमन्ते प्राप्तं चक्रं खाण्डवदाहे अग्निना दत्तं च एकमभूत् तद्वदिति ज्ञातव्यम् ।।२३–२४।।

**अतिविशद–** अवसदेव स दण्डकेष्विति दण्डकारण्यप्राप्तिदशायां पुरान्निर्गत्य रामस्य त्रयोदशाब्दा जाता इति । तथा चोक्तम्–'तत्र त्रयोदशाब्दाश्च रामस्य समतिक्रमन् । गौतमस्याश्रमे रम्ये पञ्चवट्यां मनोरमे ।।' इति पाद्मे । पञ्चवट्यां दण्डकवने ।।२३।।

**काले तदैव खरदूषणयोर्बलेन रक्षःस्वसा पतिनिमार्गणतत्परासीत् ।**
**[1]व्यापादिते [2]निजपतौ हि दशाननेन प्रामादिकेन विधिनाऽभिससार रामम् ।।**

**व्यासतीर्थीया–** विधिः विधानं कर्म तेन विधिना ।।२४।।

**वेदाङ्गतीर्थीया–** शत्रुरयं हन्यत इति भ्रान्तिजनितेन विधिना कर्मणा व्यापादिते मारिते ।।

---

१. पातालदिग्विजयकाले कालखञ्जनिवातकवचकालकेयादिराक्षसैः सार्धं युद्धकाले व्यापादितः । तथाहि रामायणे- 'गत्वा तु कालकेयांश्च हत्वा तत्र बलोत्कटान् । शूर्पणख्याश्च भर्तारं असिना प्राच्छिनत् तदा ।।' इति । विद्युज्जिह्वस्तु बस्तमुखः । 'पतिं शूर्पणखायास्तु विद्युज्जिह्वं तु दानवम् । अजावक्त्रवतस्तत्र जघान रणगर्वितम् ।।' इति विष्णुधर्मोत्तरे १.२२३.३ ।

२. रक्षःस्वसापतिस्तु विद्युज्जिह्वः । तथाहि रामायणे– 'स्वसारं कालकेयाय दानवेन्द्राय राक्षसीम् । ददौ शूर्पणखां नाम विद्युज्जिह्वाय राक्षसः ।।' इति ७.१२.२.

**वादिराजीया–** प्रामादिकेन विधिना परैर्युद्धकरणसमये उभयसेनयोर्मेलने सति अज्ञाननिमित्त-शरप्रयोगाख्यकर्मणा । या पतिनिमार्गणतत्परा आसीत् । सा तदैव काले रामस्य दण्डकवननिवासकाले राममभिससारेति योजना । अनेन रण्डायाः पतिनिमार्गणं महानधर्मोऽतो रामेण सा शिक्षिता न तु सीतावशतया नापि निरपराधायाः शिक्षेति सूचितम् ।।२४–२५।।

**मधुसूदनीया–** ।। **काले तदैवेति** ।। रक्षःस्वसा रक्षसः रावणस्य स्वसा सपत्नीमातृजाभगिनी इत्यर्थः । तदुक्तं आरण्यपर्वणि [२७६.७–८] 'पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ । कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि । मालिनी जनयामास पुत्रमेकं विभीषणम् । राकायां मिथुनं जज्ञे खरः शूर्पणखी तथा ।।' इत्यादि ।। प्रामादिकेन अनवधानवता दशाननेन निजपतौ व्यापादिते निहते सति विधिना दैववशेन राममभिससारेत्यन्वयः । हिशब्देन एतदर्थे प्रमाणप्रसिद्धिं दर्शयति । 'युद्धे प्रमत्तो व्याक्षिप्तो जयाकांक्षी क्षिपन् शरान् । नावगच्छति युद्धेषु स्वान् परानप्यहं शुभे ।। तेन चाभिहतः सङ्ख्ये मया भर्ता स्वसस्तव ।।' इति रामायणे [उ.का.२४.३३–३५] 'प्रमादोऽनवधाने' इत्यमरः ।।२४।।

**वरदराजीया–** तदैव तस्मिन्नेव काले रक्षःस्वसा रक्षो रावणस्य अनुजा शूर्पनखी खरदूषणयोर्बलेन बलाश्रयेण स्वस्याः पतिनिमार्गणतत्परा भर्तृगवेषणे अत्यन्ततात्पर्यवती आसीत् । ननु तस्याः पूर्वतनः पतिः क्व गत इत्यत आह– **व्यापादित इति** ।। निजपतौ स्वभर्तरि दशाननेन रावणेन प्रामादिकेन प्रमादप्राप्तेन विधिना प्रकारेण व्यापादिते मारिते सति शत्रुरयं हन्य इति भ्रान्त्या मारिते सतीत्यर्थः । पतिनिमार्गणतत्पराऽभूदिति पूर्वेणान्वयः । एतादृशी सा राममभिससार रामसमीपं प्राप्ता इत्यर्थः ।।२४।।

**जनार्दनीया–** रक्षसः रावणस्य स्वसा भगिनी । दशाननेन रावणेन निजपतौ प्रामादिकेन परकीयोऽयमिति भ्रान्तिजनितेन विधिना कर्मणा व्यापादिते मारिते सति पत्युः निमार्गणं अन्वेषणं तस्मिन् तत्परा आसक्ता आसीत् । तदुक्तमार्षे 'नावगच्छामि युद्धेषु स्वान् परानपि शोभने' तथा । 'तेनायं निहतः सङ्ख्ये मया भर्ता प्रभुस्तव' इति [उ.का.२४.३४–३५] ।।२४।।

**अनन्तभट्टीया–** ।। **पतीति** ।। पतित्वेन वरणीयपुरुषपरा इत्यर्थः । प्रामादिकेन परैर्युद्धसमये अज्ञानेनेत्यर्थः । विधिना शरप्रयोगाख्यकर्मणा ।।२४–२५।।

**चट्टी–** तदैव तस्मिन्नेव काले रक्षःस्वसा रावणस्य स्वसा सापत्नीमातृजा भगिनीत्यर्थः । प्रामादिकेन अनवधानवता दशाननेति । 'प्रमादोऽनवधानता' इत्यमरः । निजपतौ व्यापादिते हते सति खरदूषणयोर्बलेन बलाश्रयणेन पतिनिमार्गणतत्परा पत्युर्निमार्गणमन्वेषणं तस्मिन् तत्परा आसक्ता आसीत् । विधिना दैववशेन राममभिससारेत्यन्वयः । हिशब्देनेतदर्थे प्रमाणप्रसिद्धिं दर्शयति– 'युद्धे प्रमत्तो व्याक्षिप्तो जयाकांक्षी क्षिपन् शरान् । नावगच्छति युद्धेषु स्वान् परानप्यहं शुभे ।। तेन चाभिहतः सङ्ख्ये मया भर्ता स्वसस्तव ।।' इति रामायणे [उ.का.२४.३३–३५] ।।२४।।

**अतिविशद–** ।। **काले तदैवेति** ।। रक्षःस्वसा रावणस्वसा सपत्निमातृजा भगिनीत्यर्थः । तदुक्तमारण्यपर्वणि– 'पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ । कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि । मालिनी जनयामास पुत्रमेकं विभीषणम् । राकायां मिथुनं जज्ञे खरः शूर्पणखी तथा ।।'इति । हिशब्देन एतदर्थप्रमाणप्रसिद्धिं दर्शयति । 'युद्धे प्रमत्तो व्याक्षिप्तो जयाकांक्षी क्षिपन् शरान् । नावगच्छति युद्धेषु स्वान् परानप्यहं शुभे ।। तेन चाभिहतः सङ्ख्ये मया भर्ता स्वसस्तव ।।' इति रामायणे [उ.का.२४.३३–३५] 'प्रमादोऽनवधानता' इत्यमरः ।।२४।।

**प्रमाणसङ्ग्रहः–** ।। **रक्षःस्वसा पतिनिमार्गणेति** ।। रक्षसो रावणस्य सापत्निमातृजा भगिनीत्यर्थः । तदुक्तमरण्यपर्वणि– 'पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ । कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि । मालिनी जनयामास पुत्रमेकं विभीषणम् । राकायां मिथुनं जज्ञे खरः शूर्पणखी तथा ।।' इति ।। प्रामादिकेन विधिनेति ।। 'युद्धे प्रमत्तो व्याक्षिप्तो जयाकांक्षी क्षिपन् शरान् । नावगच्छति युद्धेषु स्वान् परानप्यहं शुभे ।। तेन चाभिहतः सङ्ख्ये मया भर्ता स्वसस्तव ।।' इति रामायणे [उ.का.२४.३३–३५] ।।२४–२६।।

**गूढवाक्यार्थ–** ...इत्यादिना प्रामादिकेन विधिना अज्ञाननिमित्तशरप्रयोगाख्यकर्मणा ।। **पतीति** ।। पतित्वेन वरणीयपुरुषनिमार्गणपरेत्यर्थः ।।२४।।

## साऽनुज्ञयैव रजनीचरभर्तुरुग्रा भ्रातृद्वयेन सहिता वनमावसन्ती ।
## रामं समेत्य भव मे पतिरित्यवोचद्भानुं यथा तम उपेत्य सुयोगकामम् ।।

**सत्याभिनवीया–** तत्रैव रामं समेत्य भव मे पति... इत्यस्ति । तस्यार्थः । शूर्पणखी यथा तमः अन्धकारः भानुं सूर्यं उपेत्य सम्बध्य नष्टं भवति, तथा सुयोगकामं सुष्ठु योगो येषां ते सुयोगाः, तैः काम्यं रामं समेत्य नष्टा अभवत् । मे पतिर्भवेत्यवोचच्चेति । एतेन तमः यथा भानुमुपेत्य नष्टं भवति, तथा राममुपेत्य नष्टा अभवदिति वक्तव्यम् । यथा तमः भानुमुपेत्य वदति, तथा रामं समेत्य अवोचदिति कथनमनुपपन्नमिति दूषणं परिहृतम् । नष्टं भवतीत्यादेः शेषेण यथा तमः भानुमुपेत्य नष्टं भवति, तथा रामं समेत्य [शूर्पणखी] नष्टा अभवदित्यर्थस्योक्तत्वात् । रामं समेत्य नष्टा अभवदिति कथनमयुक्तमिति दूषणं परास्तम् । 'एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यते' इति वचनानुसारात् निश्चितत्वाभिप्रायेण नष्टा अभवदित्युक्तमिति स्वीकरणात् । एतेनैव सुयोगकामं इत्येतत् व्यर्थमिति दूषणं पराकृतम् । शूर्पणख्याः ज्ञानिकाम्यरामकामनमनुपपन्नमिति वक्तुं सुयोगकाममिति रामविशेषणं दत्तमित्यभ्युपगमात् ।।२५।।

**मधुसूदनीया–** सुयोगकामम् शोभनयोगो येषां ते सुयोगाः मुनयः तैः काम्यत इति सुयोगकामः तं रामं समेत्येत्यन्वयः । अनेन ज्ञानिप्राप्यं रामं मिथ्यामतिरियं शूर्पणखी कथं अयाचत इति सम्बन्धः । बत आश्चर्यमिति सूचयति । अत एव रामसम्बन्धस्तस्या अत्यन्तायोग्य इति सूचनाय अभूतोपमा इति दृष्टान्त इति बोध्यम् । तथाचोक्तम्– 'अवधीरितकन्दर्पकोटिलावण्यमच्युतम् । सर्वगोपस्त्रियो दृष्ट्वा मन्मथास्त्रनिपीडिताः ।। पुरा महर्षयः सर्वे दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् ।। ते सर्वे स्त्रीत्वमापन्नाः समुद्भूता हि गोकुले । हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात् ।।' इति पाद्मे [उ.खं.२४५.१६३–१६५] ।।२५–२६।।

**वरदराजीया–** कथम्भूता सा रजनीचरभर्तुः राक्षसाधिपस्य रावणस्य आज्ञयैव भ्रातृद्रयेन खरदूषणाभ्यां सहिता वनं दण्डकवनमावसन्ती दण्डकवने स्थिता इत्यर्थः । सा रामं समेत्य मे पतिर्भव इत्यवोचत् । तत्र दृष्टान्तमाह– **भानुं यथेति** ।। तमः अन्धकारः सुयोगकामं सूर्येण सह योगेन भवितव्यं इत्याकाङ्क्षमाणं तमो यथा भानुं तथा रामेण योगकामाऽभवदिति भावः ।।२५।।

**जनार्दनीया–** रजनीचरभर्तुः रावणस्य स्वसा शूर्पणखी भ्रात्रोः खरदूषणयोर्द्वयेन एकः सहोदरः दूषणस्तु मातृष्वसुः पुत्रः । तदुक्तमारण्यके । 'राकायां मिथुनं जज्ञे खरः शूर्पनखी तथा' इति[२७६.८] । आर्षे च [१]'तत्र मातृष्वसुः पुत्रो भ्राता तव सुखप्रदः । भविष्यति स ते कर्ता यत्त्वं वक्ष्यसि तद्वद ।।' इति । वनं दण्डकारण्यं आवसन्ती वासं कुर्वन्ती सती सुयोगकामं संयोगं काङ्क्षमाणं तमः अन्धकारः भानुं यथा तथा रामं समेत्येत्यर्थः । अचेतने चेतनवदुपचारः । यद्वा तमः राहुः सुयोगकामं सर्वदा सम्बन्धकामः 'सैंहिकेयस्तमस्तमौ' इति विश्वः ।।२५।।

**चट्टी–** उग्रा सा शूर्पणखा रजनीचरभर्तुः राक्षसाधिपस्य रावणस्य आज्ञया एव भ्रातृद्वयेन भ्रात्रोः खरदूषणयोः द्वयेन सहिता वनं दण्डकवनं आवसन्ती तत्र स्थिता सति । तमोऽन्धकारः राहुर्वा । 'तमस्तु राहुः स्वर्भानुः' इत्यमरः । भानुमुपेत्य यथा तथा श्रीरामं समेत्य मे पतिः भवेत्यवोचत् । भानुं कथं भूतं सुयोगकामं शोभनो योगो येषां ते सुयोगाः सज्जनाः तैः काम्यत इति वा । तं श्रीरामं कीदृग्विधम् ? सुयोगकामं शोभनो योगः येषां ते सुयोगाः मुनिरूपधराः अग्निपुत्रास्तैः काम्यत इति सुयोगकामः तं श्रीरामम् । अनेन ज्ञानिप्राप्यं श्रीरामं मिथ्यामतिरियं शूर्पणखा कथमयाचत सम्बन्धमत आश्चर्यमिति सूचयति । अत एव श्रीरामसम्बन्धस्तस्या अत्यन्तायोग्य इति सूचनायाभूतोपमानदृष्टान्त इति बोध्यम् ।।२५।।

---

१. तत्र मातृष्वसेयस्ते भ्रातायं वै खरः प्रभुः । भविष्यति तवादेशं सदा कुर्वन् निशाचरः ।। उ.का.२४.३७ इति इदानीं पठ्यते ।

**भारतश्री–** तमः राहुः । 'तमस्तु राहुः स्वर्भानुः' इत्यभिधानम् सुयोगकामं शोभनग्रहयोगकामम् 'तमः अन्धकार' इति च व्याचक्षते । तमः सुयोगकामं उदयकाममिति । हि यस्मात् दुष्टचरिता तस्मादिति योज्यम् ।।२५।।

**भावचन्द्रिका–** लक्ष्म्याविष्टस्त्रीकामोऽपि रामस्य भवेत् । कृष्णावतारे गोपिकादौ कामदर्शनात् इत्यतः राक्षसीयोगः विधवायोगः अयोग्यत्वात् लक्ष्म्यावेशरहितत्वाच्च हेयः । गोपिकायोगस्तु सुयोग इति भावेन सुयोगकामं राममित्याह । तमः भानुमुपेत्य यथा भवति तथा राममुपेत्येति योजना । तमसो भानुप्राप्तिवत् तस्याः रामप्राप्तिः नाशशिरस्का इति भावः ।।२५–२८।।

**अतिविशद–** सुयोगकामः शोभनो योगो येषां ते सुयोगाः तैः काम्यत इति सुयोगकामं रामं समेत्येत्यन्वयः । अनेन ज्ञानिप्राप्यं रामं मिथ्यामतिरियं शूर्पनखा कथमयाचत सम्बन्धं अतो आश्चर्यमिति बोध्यम् । तदुक्तम्–'अवधीरितकन्दर्पकोटिलावण्यमच्युतम् । सर्वगोपस्त्रियो दृष्ट्वा मन्मथास्त्रनिपीडिताः ।। पुरा महर्षयः सर्वे दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् ।। ते सर्वे स्त्रीत्वमापन्नाः समुद्भूता हि गोकुले । हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात् ।।' इति पाद्मे । भानुं यथा तम उपेत्य सुयोगकाममित्यत्र तमः अन्धकारः भानुमुपेत्य सुयोगकाममित्यभूतोपमा । तमो राहुः सुयोगकामं सर्वदा सम्बन्धकामं इति वा । 'तमस्तु राहुस्स्वर्भानुः' इत्यभिधानात् ।।

**तां तत्र हास्यकथया जनकासुताग्रे गच्छानुजं म इह नेति वचः स उक्त्वा ।**
**तेनैव दुष्टचरितां हि [१]विकर्णनासां चक्रे समस्तरजनीचरनाशहेतोः ।।२६।।**

**व्यासतीर्थीया–** जनकस्य सुता ईषत्सुता अयोनिजत्वेन सुतात्वव्यपदेशवती । अश्लाघ्यवनिताभङ्गकरणे निमित्तमाह– **समस्तेति** ।।२६।।

**वेदाङ्गतीर्थीया–** जनकासुताग्रे जनकस्य आसुता जनकासुता । आसुतेत्ययोनिजा 'अयोनिजा तु या नारी सासुतेत्यभिधीयते' इत्यभिधानात् ।।२६–२७।।

**वादिराजीया–** जनकासुताग्रे जनकस्य पत्नीयोनावजातत्वेनेषत्सुतात्वात् जनकासुता जानकी । 'अयोनिजा तु या कन्या आसुतेत्यभिधीयते' इत्यभिधानम् । यज्ञवेद्यां लाङ्गलेनाकर्षणे सति लाङ्गलपद्धतौ यज्ञभूमेरेव जातत्वादभिमानमात्रेण सुतेति भावः । अपराधिनां कर्णनासाच्छेदादिजुगुप्सितकर्मणः राजाधिराजेन स्वेन कर्तुमयोग्यत्वात् भृत्यन्ताराभावाच्च लक्ष्मणमुखेनैव कारितवानिति भावेनोक्तम्– **तेनैव विकर्णनासां चक्र इति** ।।२६–२८।।

---

१. कर्णौ स्तनौ नासिकाश्च अच्छिनद्रामशासनात् । कर्णनासापहरणं शृण्वतां पठतां सदा ।। न जातु मानभङ्गः स्यात् रघुनाथप्रसादतः ।। इत्युमासंहितायां नवमेऽध्याये फलश्रुतिः ।

**वरदराजीया–** सः रामः तां राक्षसीं जनकासुताग्रे जनकस्य विदेहस्य असुता तस्मात् अनुत्पन्ना अयोनिजा इत्यर्थः । 'अयोनिजा तु या कन्या साऽसुतेत्यभिधीयते' इति वचनादिति भावः । अथवा जनकस्य आ सुता ईषत्सुता जानकीति प्रसिद्धिमात्रं गता । वस्तुतः यज्ञभूमौ प्रादुर्भूता इत्यर्थः । तस्याः अग्रे पुरतः हास्यकथया अपहासरूपवचनेन अस्यां अहं आसक्तः त्वदपेक्षा मम नास्ति इत्येवं रूपेण इत्यर्थः । मे अनुजं लक्ष्मणं प्रति गच्छ तस्य अपत्नीकत्वात् । इह मयि कार्यं नेति वचः उक्त्वा तां लक्ष्मणं प्रति प्रेषयित्वा तेनैव लक्ष्मणेनैव दुष्टचरितां राक्षसीं विकर्णनासिकां चक्रे कारयमासेत्यर्थः । किमर्थमेवं चकार इत्यत आह– **समस्त इति** ।। सर्वेषां रजनीचराणां नाशाय उपोद्घातं रचितवान् इति भावः ।।२६।।

**जनार्दनीया–** स रामः जनकस्य आसुता अयोनिजा कन्या सीता तस्याः अग्रे । 'अयोनिजा तु या नारी सासुतेत्यभिधीयते' इत्यभिधानात् । हास्यकथया परिहासरूपकथया मे अनुजं लक्ष्मणं प्रति गच्छ । इह मद्विषये न काङ्क्षा मास्त्वित्यर्थः । इत्युक्त्वा रजनीचरनाशहेतोः नाशार्थं तेनैव लक्ष्मणेनैव । दुष्टं चरितं कर्म यस्याः सा ताम् । शूर्पणखीं विगतकर्णनासां चक्रे कारयामासेत्यर्थः ।।२६।।

**अनन्तभट्टीया–** जनकस्य सुताया अयोनिजत्वेन पालितत्वेन ईषत्सुतेत्यर्थः । मेऽनुजमिति सम्बन्धः । इह मद्विषये न मा काङ्क्षीः । तेन लक्ष्मणेन चक्रे कारयामास । नाशहेतोः नाशायेत्यर्थः ।।२६–२८।।

**ताम्रपर्णीया–** जनकासुताग्रे असुतेत्ययोनिजा । 'अयोनिजा तु या नारी असुतेत्यभिधीयते' इति वचनात् । तथा च जनकस्य अयोनिजसुताया अग्र इत्यर्थः ।।२६–२८।।

**चट्टी–** सः श्रीरामः तां राक्षसीं जनकासुताग्रे जनकस्य सुता अयोनिजा कन्या सीता तस्याः अग्रे । 'अयोनिजा तु या नारी सासुतेत्यभिधीयते' इत्यभिधानात् । यद्वा जनकस्यासुता ईषत्सुता जानकीति प्रसिद्धमात्रं गता । वस्तुतो यज्ञभूमौ प्रादुर्भूता । तस्याः अग्रे पुरतो हास्यकथया परिहासरूपकथया अस्यामहमासक्तः त्वदपेक्षा मम नास्ति । मेऽनुजं लक्ष्मणं प्रति गच्छ तस्य दूरस्थपत्नीकत्वादिह मद्विषये प्रयोजनं नास्तीति वच उक्त्वा तां लक्ष्मणं प्रति प्रेषयित्वा तेन लक्ष्मणेनैव । दुष्टं चरितं यस्या सा तां । राक्षसीं विगतकर्णनासां चक्रे कारयामास इत्यर्थः । किमर्थमेवं चकारेत्यत आह– **समस्तेति** ।। सर्वेषां रजनीचराणां नाशार्थमुपोद्घातं रचितवानित्यर्थः । अनेन रण्डायाः पतिनिमार्गणं महानधर्मः । अतः श्रीरामेण सा शिक्षिता न तु सीतावशतया नापि निरपराधा शिक्षितेति सूचितम् ।।२६।।

**भारतश्री–** 'अयोनिजा तु या कन्या सासुतेत्यभिधीयते' । जनकस्य पत्न्याः नाम जनकेत्यपि वदन्ति ।।२६।।

**अतिविशद–** जनकासुताग्र इत्यत्र जनकस्य असुता ईषत्सुता । 'ईषदर्थे क्रियायोग' इति वचनात् । ईषत्सुतात्वं भूमौ उत्पन्नत्वात् ज्ञातव्यम् । अथवा जनकस्यासुता जनकासुता । 'अयोनिजा तु या नारी सासुतेत्यभिधीयते' इत्यभिधानात् । विकर्णनासां कर्णौ च नासा च कर्णनासम् । 'द्वन्द्वः प्राणितूर्यसेनाङ्गानाम्' इति समाहारद्वन्द्वः । विगतं कर्णनासं यस्याः सा विकर्णनासा ।।२६।।

**गूढवाक्यार्थ–** जनकासुताग्रे जनकस्यासुताग्रे अयोनिजसुताया अग्रे 'अयोनिजसुतानारी आसुतेत्यभिधीयते' इति वचनात् ।।२६।।

**तत्प्रेरितान् सपदि [१]भीमबलान् प्रयातांस्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ।**
**जघ्ने चतुर्दशसहस्रमवारणीयकोदण्डपाणिरखिलस्य सुखं विधातुम् ।।२७।।**

**मधुसूदनीया–** ।। **अवारणीयकोदण्डपाणिरिति** ।। अत्र अवारणीयेति कोदण्डविशेषणेन एकं धनुः पूर्वं खरेण छिन्नं तदनन्तरं शार्ङ्गं धनुः गृहीत्वा खरादीन् जघान । खरच्छिन्नं धनुस्तु वरुणेन दशरथाय दत्तं तदानीतं रामेण इति सूचयति । तदुक्तम्– 'ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः । खरश्चिच्छेद रामस्य दर्शयन् पाणिलाघवम् ।।' [अर.का.२८.१५] सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा । वरं तद्धनुरुद्यम्य खरं समनुधावत ।।' [अर.का.२८.२१] इत्यादि रामायणे । 'धनुश्छित्वाऽच्छिनद्वर्म भूम्नः सप्तशरैः खरः । रामो विकवचो रेजे विधूम इव पावकः ।। शत्रुघ्नं दिव्यमच्छेद्यं शार्ङ्गं शार्ङ्गी प्रगृह्य सः । ध्वजं खरस्य चिच्छेद खरोऽमुश्चचतुःशरान् ।।' इति सङ्ग्रहे च [अर.का.४.६–७] ।।२७–३०।।

**वरदराजीया–** तदेव दर्शयति– **तदिति** ।। तया शूर्पणख्या स्वावस्थाप्रदर्शनेन प्रेरितान् सपदि तत्क्षणमेव प्रयातान् भीमं भयङ्करं बलं येषां ते तथा तान् । तस्याः शूर्पणख्याः खरत्रिशरदूषणमुख्याः येषां ते च ते बन्धवश्च तान् चतुर्दशसहस्रसङ्ख्याकान् जघ्ने । कथम्भूतः अवारणीयं वारयितुं अशक्यं कोदण्डः शार्ङ्गः पाणौ यस्यासौ तथा । किं कर्तुं अखिलस्य मुनिजनस्य सुखं विधातुं कर्तुम् ।।२७।।

**जनार्दनीया–** अवारणीयं अनिवार्यं कोदण्डं धनुः पाणौ हस्ते यस्य स तथा । रामः अखिलस्य सर्वभक्तसमूहस्य । तया शूर्पणख्या प्रेरितान् रामं हन्तुं प्रेरितानित्यर्थः । सपदि तत्काल एव । भीमबलात् भयङ्करशारीरबलात् । भयङ्करसेनासमूहनिमित्ताद्वा । भीमबलानिति क्वचित्पाठः । प्रयातानागतान् । योद्धुमिति शेषः । चतुर्दशसहस्रसङ्ख्याकानित्यर्थः । तस्याः शूर्पणख्याः । खरत्रिशिरदूषणाः मुख्याः येषां ते तथा । ते च ते बन्धवश्च तान् । जघ्ने ।।२७।।

---

१. 'भीमबलात्' इति जनार्दनीये ।

**चट्टी–** तदेव दर्शयति– **तदिति** ।। अवारणीयकोदण्डपाणिरवारणीयमनिवार्यं कोदण्डं धनुः पाणौ हस्ते यस्य स तथा । श्रीरामोऽखिलस्य भक्तसमूहस्य सुखं विधातुं कर्तुं तया शूर्पणख्या प्रेरितान् सपदि तत्क्षणमेव प्रयातान् । भीमं भयङ्करं बलं येषां तान् । चतुर्दशसहस्रं चतुर्दशसहस्रसङ्ख्याकान् । तस्याः शूर्पणख्याः खरत्रिशिरदूषणाः मुख्याः येषां ते तथा ते च ते बन्धवश्च तान् जघ्नुः ।।२७।।

**अतिविशद–** चतुर्दशसहस्रमित्यत्र चतुर्दशसहस्राणीति वक्तव्यं चतुर्दशसहस्रमिति कथमिति चेन्न । क्रियाविशेषणम् । तथा च चतुर्दशसहस्रं यथा भवति तथा प्रयातानित्यर्थः । चतुर्दशसहस्राणि यस्मिन् बले तत् चतुर्दशसहस्रमिति बलविशेषणं वा । ततश्च भीमबलानित्यस्य भयङ्करबलान् भयङ्करसैन्ययुक्तां–श्चेत्यर्थद्वयं सूचयति । तत्प्रेरितान् तस्याः खरत्रिशिरदूषणमुख्यबन्धून् तत्सैनिकांश्च जघ्न इत्यर्थ उक्तो भवति । अवारणीयकोदण्डपाणिरिति अत्रावारणीयेति कोदण्डविशेषणं बाधितम् । तस्य खरेण छिन्नत्वात् । धनुः पूर्वं खरेण च्छिन्नं तदनन्तरं शार्ङ्गं गृहीत्वा खरादीन् जघान । खरच्छिन्नं धनुस्तु वरुणेन दशरथाय दत्तम् । तदानीतं रामेणेति सूचयति । तदुक्तम्– 'ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः । खरश्चिच्छेद रामस्य दर्शयन् पाणिलाघवम् ।।' [अर.का.२८.१५] सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा । वरं तद्धनुरुद्यम्य खरं समनुधावत ।।' [अर.का.२८.२१] इत्यादि रामायणे । 'धनुश्छित्वाऽच्छिनद्वर्म भूम्नः सप्तशरैः खरः । रामो विकवचो रेजे विधूम इव पावकः ।। शत्रुघ्नं दिव्यमच्छेद्यं शार्ङ्गं शार्ङ्गी प्रगृह्य सः । ध्वजं खरस्य चिच्छेद खरोऽमुञ्चच्चतुःशरान् ।।' इति सङ्ग्रहे च [अर.का.४.६–७] ।।२७–३०।।

**प्रमाणसङ्ग्रहः–** ।। **अवारणीयकोदण्डपाणिरिति** ।। 'ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः । खरश्चिच्छेद रामस्य दर्शयन् पाणिलाघवम् ।। '[अर.का.२८.१५] सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा । वरं तद्धनुरुद्यम्य खरं समनुधावत ।।' [अर.का.२८.२१] इत्यादि रामायणे । 'धनुश्छित्वाऽच्छिनद्वर्म भूम्नः सप्तशरैः खरः । रामो विकवचो रेजे विधूम इव पावकः ।। शत्रुघ्नं दिव्यमच्छेद्यं शार्ङ्गं शार्ङ्गी प्रगृह्य सः । ध्वजं खरस्य चिच्छेद खरोऽमुञ्चच्चतुःशरान् ।।' इति सङ्ग्रहे च [अर.का.४.६–७] ।।२७–३२।।

**दत्तेऽभये रघुवरेण महामुनीनां दत्ते भये च रजनीचरमण्डलस्य ।**
**रक्षःपतिः स्वसृमुखादविकम्पनाच्च[1] श्रुत्वा बलं रघुपतेः परमाप चिन्ताम् ।।२८।।**

**वेदाङ्गतीर्थीया–** परं बलमिति सम्बन्धः ।।२८।।

१. 'त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः । प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ।।' इति अरण्यकाण्डे.३१.१ ।

**वरदराजीया–** एवं रघुवरेण रामेण महामुनीनामभये दत्ते सति रजनीचरमण्डलस्य भये दत्ते सति रक्षसां राक्षसानां पतिः रावणः स्वसुः भगिन्याः शूर्पणख्याः मुखतः तथा अविकम्पननाम्नो राक्षसाच्च रघुपतेः परं उत्कृष्टं बलं श्रुत्वा चिन्तामाप इत्यर्थः ।।२८।।

**जनार्दनीया–** रघुवरेण रामेण महामुनीनां अभये दत्ते सति च तथा रजनीचरमण्डलस्य राक्षससमूहस्य भये दत्ते सति रक्षःपतिः रावणः स्वसा भगिनी शूर्पणखी तस्याः मुखात् अविकम्पनाच्च अविकम्पनाख्यराक्षसात् रघुपतेः परमुत्कृष्टं वलं स्वाभाविकशक्तिम् ।।२८।।

**चट्टी–** एवं रघुवरेण श्रीरामेण महामुनीनामभये दत्ते सति तथा रजनीचरमण्डलस्य राक्षससमूहस्य भये च दत्ते सति रक्षःपतिः रावणः स्वसुः भगिन्याः शूर्पणख्याः मुखतः अविकम्पनाच्च राक्षसात् रघुपतेः परमुत्कृष्टं बलं स्वाभाविकशक्तिं श्रुत्वा चिन्तामवापेत्यर्थः ।।२८।।

**श्रुत्वाऽशु कार्यमवमृश्य जगाम तीरे क्षेत्रं [1]नदीनदपतेः श्रवणं धरित्र्याः ।**
**मारीचमत्र तपसि प्रतिवर्तमानं [2]भीतं शराद्रघुपतेर्नितरां ददर्श ।।२९।।**

**व्यासतीर्थीया–** धरित्र्याः श्रवणं गोकर्णम् ।।२९।।

**वेदाङ्गतीर्थीया–** धरित्र्याः श्रवणं क्षेत्रं गोकर्णक्षेत्रम् । नितरां भीतम् ।।२९–३३।।

**वादिराजीया–** धरित्र्याः गोरूपधरित्र्याः श्रवणं गोकर्णम् । अतो न भाक्तोऽयं प्रयोगः । वारकन्यापुरात् गोकर्णपर्यन्तं या परशुरामभूमिः सा गोरूपेण तिष्ठति तस्या ऊधः कोटीश्वरसन्निधानभूमौ । अत एव बहुसंस्यादिसमृद्धिमती सा भूमिः । कर्णस्तु गोकर्णः पृथिव्यामिति भारतकथा । अतो धरित्र्याः श्रवणमिति साधूक्तमाचार्यवर्येण ।।२९।।

---

१. शोणासिन्धुहिरण्याख्याः कोकलोहितघर्घराः । शतद्रुश्च नदाः सप्त पावनाः परीकीर्तिताः ।। इति निर्णयसिन्धौ उत्सर्जननिर्णयप्रकरणे कतिचिन्नदाः अनिर्दिशत् ।। मारीचतपःकरणप्रदेशः गोकर्णः-वनपर्व.२७८.६२-६३

२. मारीचः रामबाणेन विश्वामित्राध्वरे विद्धः वने चचार । यदा जनस्थानं रामः अगमत् तदा वनवासी तापसोयमिति बुद्ध्या तं धर्षयितुं राक्षसाभ्यां जगाम । तदा तौ राक्षसौ रामेण मम्रतुः । तदा भीतः मारीचः गोकर्णे तपसि अतिष्ठत् । विस्तरेणैतत् अरण्यकाण्डे ३९.१-१५ श्लोक पर्यन्तं विद्यते । तथाहि मारीचवचनम् । 'एवमस्मि तदा मुक्तः कथञ्चित् तेन संयुगे' । तथा सोहं वनगतं रामं परिभूय महाबलम् । तापसोयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् ।। अभ्यधावं सुसंक्रुद्धःस्तीक्ष्णशृङ्गो मृगाकृतिः । जिघांसुरकृतप्रज्ञस्तं प्रहारमनुस्मरन् ।। तेन त्यक्तास्त्रयो बाणाः शिताः शत्रुनिबर्हणाः । विकृष्य सुमहच्चापं सुपर्णानिलतुल्यगाः ।। ते बाणाः वज्रसंकाशाः सुघोरा रक्तभोजनाः । आजग्मुः सहिताः सर्वे त्रयः सन्नतपर्वणः ।। पराक्रमज्ञो रामस्य शठो दृष्टभयः पुरा । समुत्क्रान्तस्ततो मुक्तः तावुभौ राक्षसौ हतौ ।। शरेण मुक्तो रामस्य कथञ्चित् प्राप्य जीवितम् । इह प्रव्रजितो युक्तस्तापसोहं समाहितः ।।

**वरदराजीया–** स तु रावणः आशु शीघ्रं कार्यमवमृश्य विचार्य नदीनदपतेः नदीनां नदानां च पत्युः समुद्रस्य तीरे विद्यमानं धरित्र्याः भूम्याः श्रवणं कर्णं गोकर्णमित्यर्थः । तन्नामकक्षेत्रं जगाम । अत्र क्षेत्रे तपसि प्रतिवर्तमानं तपश्चरन्तं रघुपतेः शरात् नितरां भीतम्, पूर्वं अर्णवे प्रक्षेपसमये इति शेषः । एतादृशं मारीचं ददर्श रावण इति शेषः ।।२९।।

**जनार्दनीया–** श्रुत्वा रावणो । रामबलमिति शेषः । आशु कार्यं अवमृश्य विचार्य । नद्यश्च नदाश्च नदीनदाः । तेषां पत्युः स्वामिनः समुद्रस्य तीरे तटाके धरित्र्याः भूम्याः श्रवणं क्षेत्रं गोकर्णक्षेत्रं प्रति जगामेत्यर्थः । रघुपतेः शरात् नितरां भीतं पूर्वमिति शेषः । 'शरेण मारीचमथार्णवेऽक्षिपत्' इति पूर्वाध्याये उक्तम् । अत एव अत्र गोकर्णे तपसि प्रतिवर्तमानं विद्यमानं तपः कुर्वाणमित्यर्थः । मारीचं मारीचाख्यराक्षसं ददर्श ।।२९।।

**अनन्तभट्टीया–** धरित्र्याः श्रवणं गोकर्णस्याब्धिमित्यर्थः ।।२९।।

**ताम्रपर्णीया–** ।। **नदीनदपतेरिति** ।। 'अन्धश्शोणश्च महानदौ' इति भागवतोक्तेः[१] [५.१९.१७] पुरुषाभिमन्यमानकाः नदा इति ज्ञेयम् । धरित्र्याः श्रवणं गोकर्णम् । 'परशुरामभूमिः गोरूपेण तिष्ठति तस्याः ऊधाः कोटीश्वरभूमौ कर्णस्तु गोकर्णः पृथिव्याम्' इति भारतकथा । अतो धरित्र्याः श्रवणं इति साधूक्तम् ।।२९।।[१]

**चट्टी–** ।। **स इति** ।। स तु रावणः आशु शीघ्रं कार्यमवमृश्य विचार्य नद्यश्च नदाश्च नदीनदास्तेषां पत्युः स्वामिनः समुद्रस्य तीरे विद्यमानं धरित्र्याः भूम्याः श्रवणं कर्णं गोकर्णमित्यर्थः । तन्नामकं क्षेत्रं जगाम । रघुपतेः शरान्नितरां भीतं पूर्वमर्णवे प्रक्षेपसमय इति शेषः । अत एवात्र गोकर्णे तपसि प्रतिवर्तमानं विद्यमानं मारीचं मारीचाख्यं राक्षसं ददर्श ।।२९।।

**भारतश्री–** धरित्र्याः क्षेत्रं गोकर्णक्षेत्रम् ।।२९–३३।।

**भावचन्द्रिका–** ।। **मारीचमिति** ।। प्राक् शरपीडितः सर्वदा तदनुसन्धत्ते । तथोवाच चेति त्रिकरणानुस्यूतभीतिं वक्तुं त्रिवारं शरवेगप्रयुक्तभीतिसूचनम् ।।२९–३१।।

**गूढवाक्यार्थ–** पुरुषाभिमन्यमानकाः अन्धःशोणादयो नदाः । धरित्र्याः श्रवणः नानार्थवर्गे...* न्तर्गतधरित्रीशब्दस्य भूम्यर्थकत्वमुक्तम् । श्रवणशब्दस्य कर्णार्थकत्वं प्रसिद्धमेव ।।२९।।

---

१. ।। नदीनदपतेरिति ।। अन्धशोणादयो नदशब्देनोक्ताः । केचित् पश्चिमवाहिन्यो नदशब्दवाच्याः इत्याहुः । तच्चिन्त्यम् । सरस्वतीवेत्रवत्यादिषु नदशब्दादर्शनात् । तस्मात् पुरुषाभिमन्यमानाः अन्धशोणादयो नदशब्देनोक्ताः ।।२९-३७।। इति हो पुस्तके अधिकः पाठः ।

**तेनार्थितः सपदि राघववञ्चनार्थं मारीच आह शरवेगममुष्य जानन् ।**
**शक्यो न ते रघुवरेण हि विग्रहोऽत्र जानामि संस्पर्शमस्य शरस्य पूर्वम् ॥३०॥**

**व्यासतीर्थीया–** पूर्वमारभ्यास्य शरस्य संस्पर्शं जानामि ॥३०॥

**वादिराजीया–** मारीचस्य पलायनार्थमेव शनैः शरं मुमोच । अतः सम्यक् तदङ्गे शरस्पर्शो नास्तीति सूचनाय स्पर्शमिति विश्लेषोक्तिः । अत एव भृशमाहत इति तस्य मरणकाले वक्ष्यति । सोऽपि मार्जारस्य लीला मूषिकस्य प्राणसङ्कटमिव मारीचस्य सम्यक् सङ्कटमकरोदिति सूचनाय समित्युपसर्गश्च ।

**वरदराजीया–** तेन रावणेन राघववञ्चनार्थं रामं वञ्चयितुं अर्थितः प्रार्थितो मारीचः अमुष्य रामस्य शरवेगं बाणवेगं जानन्नाह किमिति । अत्र भूमौ रघुवरेण साकं विग्रहो विरोधः ते तव शक्यो न भवति । कुतः हि यस्मादस्य रामस्य सम्बन्धिनः शरस्य संस्पर्शं पूर्वं जानामि इत्याहेति पूर्वेणान्वयः ॥३०॥

**जनार्दनीया–** तेन रावणेन राघवस्य वञ्चनार्थं वञ्चयितुं सपदि अर्थितः प्रार्थितः अमुष्य राघवस्य शरवेगं जानन् मारीच आह । किमिति । ते रघुवरेण विग्रहः विरोधः शक्यो न । अहमस्य रामस्य शरस्य संस्पर्शं सन्तापम् । 'स्पृश उपतापे' इति धातोः । पूर्वं जानामि ज्ञातवान् । हि यस्मात् तस्मात् अत्र अत्रस्थ इत्यर्थः । इत्याहेति सम्बन्धः ॥३०॥

**अनन्तभट्टीया–** अमुष्य रामस्य ॥३०–३१॥

**चट्टी–** तेन रावणेन राघववञ्चनार्थं श्रीरामं वञ्चयितुं सपदि अर्थितः प्रार्थितो अमुष्य श्रीरामस्य शरवेगं जानन् मारीच आह । किमिति । अत्र भूमौ रघुवरेण श्रीरामेण विग्रहः विरोधस्ते शक्यो न । कुतः । हि यस्मात् अस्य श्रीरामस्य सम्बन्धिनः शरस्य संस्पर्शं पूर्वं अहं जानामीत्याहेति पूर्वेणान्वयः । श्रीरामः मारीचस्य पलायनार्थमेव शरं मुमोच अतः सम्यक् तदङ्गे शरसंस्पर्शो नास्तीति सूचनाय स्पर्शमिति विश्लिष्टोक्तिः । सोऽपि मार्जाललीला मूषकस्य प्राणसङ्कटमिव मारीचस्य प्राणसङ्कटमकरोदिति सूचनाय समित्युपसर्गश्च ॥३०॥

**इत्युक्तवन्तमथ रावण आह खड्गं निष्कृष्य हन्मि यदि मे न करोषि वाक्यम् ।**
**तच्छुश्रुवान्भययुतोऽथ निसर्गतश्च पापो जगाम रघुवर्यसकाशमाशु ॥३१॥**

**वादिराजीया–** अथ उक्त्यनन्तरमेव रावण आहेति पूर्वाथशब्दान्वयः । तद्रावणवाक्यं शुश्रुवान् । अथ श्रवणसमनन्तरमेव निसर्गतः पापश्च निसर्गतः पापोऽपि तस्य नीचपदार्थस्यासम्भावितकार्योद्योगः सम्भावित इति सूचनार्थस्य पदार्थसम्भावनार्थकापेरर्थे चशब्दः । पापश्च विष्णुद्वेषी चेति समुच्चयार्थे वा । अत एवाशु जगामेत्युक्तम् ॥३१॥

**मधुसूदनीया–** खड्गं निष्कृष्य रावणः आहेत्यन्वयः किमित्याहेत्यत आह– **यदीति** ।।३१–३२।।

**वरदराजीया–** अथ अनन्तरं इत्यनेन प्रकारेण उक्तवन्तं मारीचं रावणः आह । किमिति । यदि मे वाक्यं न करोषि तर्हि इति शेषः । खड्गं निकृष्य हन्मीत्याह इति वचनं शुश्रुवान् । शृण्वानः भययुतः मां अयं हनिष्यति इति भीतः निसर्गतः स्वभावतः पापो दुरात्मा इति कृत्वा रघुवर्यसकाशं रामस्य समीपं आशु शीघ्रं जगाम इत्यर्थः ।।३१।।

**जनार्दनीया–** निष्कृष्य कोशान्निस्सार्य आहेत्यन्वयः । अथ तद्रावणवाक्यं अश्रौषीदिति शुश्रुवान् । 'भाषायां सदवसश्रुवः' [कौ.३०९७] इति क्वसुः । भूतसामान्ये लिट् । श्रुतवान् भययुतः । स्वभावात् पापः दोषरूपो मारीचः ।।३१।।

**चट्टी–** इत्युक्तवन्तं मारीचमथोक्त्यनन्तरमेव रावण आह । किमिति । यदि मे वाक्यं न करोषि तर्हि खड्गं निकृष्य कोशादिति शेषः । हन्मीत्याहेति पूर्वेणान्वयः । तद्रावणवाक्यं शुश्रुवान् शृण्वन् । अथ श्रवणसमनन्तरमेव भययुतः निसर्गतः स्वभावात् पापश्च दोषरूपो मारीचः रघुवर्यसकाशमाशु जगाम ।

**अतिविशद–** खड्गं निष्कृष्य रावण आहेत्यन्वयः । किमित्यत आह– **यदिति** ।।३१–३२।।

**सम्प्राप्य [१]हैममृगतां बहुरत्नचित्रः सीतासमीप उरुधा विचचार शीघ्रम्**
**निर्दोषनित्यवरसंविदपि स्म देवी रक्षोवधाय जनमोहकृते तथाऽऽह ।।३२।।**

**वादिराजीया–** निर्दोषनित्यवरसंविदो देव्या अज्ञवद्वचनं गर्हितमिति सूचनाय संविदपीत्यपिपदम् । तथा आह स्मेति स्मपदसम्बन्धः तथा आह यथोत्तरश्लोकेन उच्यते तथाऽऽहेत्यर्थः । 'या लीलया धृततनोरनुरूपरूपा' इति प्रमाणप्रसिद्धिसूचनार्थं स्मपदम् । 'स्मातीते च प्रसिद्धौ च' इत्यनुशासनम् ।

**वरदराजीया–** तत्र वञ्चनप्रकारमाह– **सम्प्राप्य इति** ।। हैममृगतां स्वर्णमयमृगरूपं सम्प्राप्य धृत्वा च बहुरत्नचित्रो नानावर्णः सीतायाः समीपे उरुधा बहुवारं शीघ्रं वेगेन विचचार इत्यर्थः । निर्दोषा

---

१. अर.का.४२.मणिप्रवरशृङ्गाग्रः सितासितमुखाकृतिः । रक्तपद्मोत्पलमुख इन्द्रनीलोत्पलश्रवाः ।। किञ्चिदत्युन्नतग्रीवः इन्द्रनीलनिभोदरः । कुन्देन्दुवज्रसंकाशमुदरं चास्य भास्वरम् ।। मधूकनिभपार्श्वश्च कञ्जकिञ्जल्कसन्निभः ।। वैदूर्यसंकाशखुरस्तनुजङ्घः सुसंहतः । इन्द्रायुधसवर्णेन पुच्छेनोर्ध्वं विराजितः ।। मनोहरस्निग्धवर्णो रत्नैर्नानाविधैर्वृतः । इति मायामृगवर्णनं वाल्मिकिमुनिना अकारि । परन्तु सुवर्णमृगः इति स्वस्थाने मुनिः न न्यरूरुपत् । तथापि सीतामुखेन मृगस्य सुवर्णत्वं वाचयति । तथाहि– निहतस्यास्य सत्वस्य जाम्बूनदमयत्वचि इति [अर.का.४३.२०] तथा तेन काञ्चनरोम्णा इति । महाभारतेपि सुवर्णरत्नचित्रेण मृगरूपेण रक्षसा [वन.१४९.३४] इति अवर्णयत् ।

दोषरहिता नित्या नाशरहिता वरा उत्तमा संवित् ज्ञानं यस्याः सा तथा । देवी सीता केवलं रक्षसां रावणादिराक्षसानां वधाय तथा जनमोहकृते सुराणकादिदुष्टजनमोहनार्थं तथा वक्ष्यमाणरीत्या आह ।

**जनार्दनीया–** वचनप्रकारं दर्शयति– **सम्प्राप्येति** ।। हैममृगतां सुवर्णसम्बन्धि वर्णं मृगत्वं सम्प्राप्य भूत्वा । बहुरत्नवचित्रः अनेकवर्णः मृगरूपो मारीचः । उरुधा बहुप्रकारेण । निर्दोषा अज्ञानसम्बन्धरहिता, नित्या आदिविनाशरहिता, वरा श्रेष्ठा, संविद् ज्ञानं यस्याः सा तथा । एतादृशी अपि देवी सीता रक्षसां वधाय जनानां दुष्टजनानां मोहकृते अज्ञानोत्पादनार्थम् । यथा रक्षोवधो भवेत् यथा जनमोहो भवेत् तथा आहेत्यर्थः ।।३२।।

**अनन्तभट्टीया–** हैममृगतां सुवर्णमृगताम् । चित्रं नानावर्णः । रक्षोवधाय रावणादिराक्षसवधाय । मोहकृते मोहनार्थम् ।।३२।।

**चट्टी–** वञ्चनप्रकारमाह– **सम्प्राप्येति** ।। हैममृगतां स्वर्णमयमृगत्वं सम्प्राप्य धृत्वा बहुरत्न-वचित्रनानावर्णः मृगरूपो मारीचः सीतायाः समीपे उरुधा बहुवारं शीघ्रं वेगेन विचचारेत्यर्थः । निर्दोषा अज्ञानसम्वन्धरहिता नित्या आदिविनाशरहिता वरा श्रेष्ठा संविद् ज्ञानं यस्याः सा तथा । एतादृशापि देवी सीता रक्षसां रावणादीनां वधाय जनानां सुराणकादिदुष्टजनानां मोहकृते अज्ञानोत्पादनार्थं तथा वक्ष्यमाणप्रकारेणाह ।।३२।।

**भावचन्द्रिका–** ईशादन्यत्र अनालोचनेऽपि सर्वविषयं लक्ष्मीज्ञानम् । तच्च स्वरूपमेव । अतो अज्ञानादि नेत्याह– **निर्दोषेति** ।। निर्दोषा उत्पत्त्यादिरहिता स्वरूपभूतेत्यर्थः । नित्या आलोचनानधीना । वरा सर्वविषया । असर्वविषयत्वे ज्ञानाभावः स्यादिति वरेत्युक्तम् । अनालोचनदशायां ज्ञानाभाव इत्यतो नित्येति । तादृशस्याप्यागन्तुकत्वे ज्ञानाभाव इति अतो निर्दोषेति ।।३२–३६।।

**देवेममाशु परिगृह्य च देहि मे त्वं क्रीडामृगं त्विति तयोदित एव रामः ।**
**अन्वक्ससार ह शरासनबाणपाणिर्मायामृगं निशिचरं निजघान जानन् ।।३३।।**

**वादिराजीया–** सर्वगस्य सरणायोगात् जनप्रसिद्धसरणं सूचयितुं ससार हेत्युक्तम् ।।३३।।

**मधुसूदनीया–** ।। **निशिचरं निजघान जानन्निति** ।। अत्र लक्ष्मणोऽपि मायामृगं निशिचरं जानातीति ज्ञातव्यम् । तदुक्तम्– 'तमेवैनमहं मन्ये मारीचं राक्षसं मृगम् ' [अर.का.४३.५] इत्यादि रामायणे ।।३३–३६।।

**वरदराजीया–** किमिति । हे देव क्रीडादिगुणविशिष्ट । हेतुगर्भं सम्बोधनमिदम् । त्वमिमं पुरोवर्तिनं क्रीडामृगं परिगृह्य मे मह्यमाशु देहीत्याहेति पूर्वेणान्वयः । इत्यनेन प्रकारेण तया सीतयोदित एव

कालक्षेपं अकृत्वा रामोऽन्वक् पृष्ठतः शरासनबाणपाणिः धृतधनुर्बाणः ससार गतवान् । मायां छद्मना मृगरूपं निशाचरं राक्षसं मारीचं जानन् जघानेत्यर्थः । अनेन क्रीडार्थं याचितं मृगं कुतो जघानेति शङ्का परिहृतेति भावः ।।३३।।

**जनार्दनीया–** आहेत्युक्तं विशदयति– **देवेति** ।। स्त्रीवशादिदोषं परिहर्तुं देवेति सम्बोधनम् । इमं दृश्यमानम् । क्रीडामृगं क्रीडायोग्यमृगम् । अन्वक् पश्चात्ससार अगात् । मायया छद्मना मृगं मृगभूतं निशिचरं राक्षसं मारीचं जानन् ।।३३।।

**अनन्तभट्टीया–** अन्वक् पश्चात् ।।३३।।

**चट्टी–** आहेत्युक्तं विवृणोति– **देवेति** ।। स्त्रीवशादिदोषं परिहर्तुं देवेति सम्बोधनम् । हे देव क्रीडादिगुणविशिष्ट त्वमिमं पुरोवर्तिनं क्रीडामृगं क्रीडायोग्यं मृगं परिगृह्य मे मह्यं आशु देहीति आहेति पूर्वेणान्वयः । इत्यनेन प्रकारेण तया उदित एव कालक्षेपमकृत्वा सः श्रीरामः अन्वक् पृष्ठतः शरासनबाणा पाण्योः यस्य सः तथाविधस्सन् ससार अगात् । मायया छद्मना मृगं मृगरूपं निशिचरं राक्षसं मारीचं निजघान ।।३३।।

**अतिविशद–** ।। **निशिचरं निजघान जानन्निति** ।। तत्र लक्ष्मणोऽपि मायामृगं निशिचरं जानातीति ज्ञातव्यम् । तदुक्तम् । 'तमेवैनमहं मन्ये मारीचं राक्षसं मृगम्' इति रामायणे ।।३३–३६।।

**प्रमाणसङ्ग्रहः–** ।। **मायामृगं निशिचरं निजघान जानन् इति** ।। लक्ष्मणोऽपि जानाति । 'तमवैनमहं मन्ये मारीचं राक्षसं मृगम्' इति रामायणवचनात् ।।३३–३६।।

**तेनाहतः शरवरेण भृशं ममार विक्रुश्य लक्ष्मणमुरुव्यथया स पापः ।**
**श्रुत्वैव लक्ष्मणमचूचुददुग्रवाक्यैः सोऽप्याप रामपथमेव सचापबाणः ।।३४।।**

**वेदाङ्गतीर्थीया–** लक्ष्मणं विक्रुश्य लक्ष्मणेत्याहूय उग्रवाक्यैः मामपेक्ष्य राममुपेक्षसे इति निष्ठुरवचनैः ।।

**वादिराजीया–** विकृश्य 'क्रुश आह्वाने च' इति धातोराहूय । श्रुत्वैव लक्ष्मणेत्याक्रोशं श्रुत्वैवेति योग्यपदाध्या–हारेण योजना ।।३४।।

**वरदराजीया–** तेन रामेण शरवरेण भृशं सम्यक् आहतः विद्धः स पापः पापात्मा उरुव्यथया अतिदुःखेन लक्ष्मणं प्रति विकृष्य अहो लक्ष्मणेति उच्चैः आहूय लक्ष्मणस्याप्यागमनेन रावणस्यावकाशं दातुमिति भावः । ममार मृतोऽभूत् । सीता च अहो लक्ष्मणेति वचनं श्रुत्वा अविलम्वेन लक्ष्मणमुग्रवाक्यैः राममुपेक्ष्य मामपेक्षस इत्यादिरूपैर्वाक्यैरचूचुदत् प्रेरयामास । गन्तुमिति शेषः । सोऽपि लक्ष्मणोऽपि सचापबाणः धनुर्बाणसहितः रामपथं राममार्गं आप प्रापेत्यर्थः ।।३४।।

**जनार्दनीया–** तेन रामेण शरेण भृशं गाढं आहतः पापः पापरूपः स मारीचः उरुव्यथया तीव्रवेदनया । लक्ष्मणं विक्रुश्य अहो लक्ष्मणेति शब्दं कृत्वेत्यर्थः । ममार मरणं प्राप । श्रुत्वा सीता अहो लक्ष्मणेति शब्दमिति शेषः । उग्रवाक्यैः मामिच्छसीत्येवंरूपं निष्ठुरवाक्यैः अचूचुदत् प्रेरयामास । चापश्च धनुः वाणश्च ताभ्यां सहितः स लक्ष्मणः रामपथं रामगतमार्गं आप ।।३४।।

**अनन्तभट्टीया–** विक्रुश्य अहो लक्ष्मणेति भावः अचूचुदत्...* करोषीत्यादिवाक्यैः ।।३४–३५।।

**चट्टी–** तेन श्रीरामेण शरवरेण भृशं गाढं आहतो विद्धः पापरूपो मारीचः उरुव्यथया तीव्रवेदनया लक्ष्मणं विकृश्य अहो लक्ष्मणेत्युच्चैराहूय लक्ष्मणस्यापगमनेन रावणस्यावकाशं दातुमिति भावः । ममार मृतोऽभूत् । सीता च आहेति । लक्ष्मणमिति शेषः । श्रुत्वैव लक्ष्मणं उग्रवाक्यैः मामपेक्ष्य राममुपेक्षसे इति निष्ठुरवचनैः अचूचुदत् प्रेषयामास । गन्तुमिति शेषः । सचापबाणः धनुर्बाणसहितः सोऽपि लक्ष्मणोऽपि रामपथं रामगतमार्गं आप ।।३४।।

**भारतश्री–** उग्रवाक्यैः मामिच्छसीत्यादि उग्रैः । अतर्क्यनिति याभूदित्यादि* रामायणे प्रसिद्धम् ।।

**गूढवाक्यार्थ–** लक्ष्मणेत्याक्रोशितमिति शेषः...* ।।३४।।

## यां[१] यां परेश उरुधैव करोति लीलां तां तां करोत्यनु तथैव रमापि देवी । नैतावतास्य परमस्य तथा रमाया दोषोऽणुरप्यनु विचिन्त्य उरुप्रभू यत् ।।३५।।

**व्यासतीर्थीया–** निशिचरमायामृगं जानन्नत्र किञ्चिदज्ञानादिप्राप्तं तत्परिहृतमपि विस्पष्टं परिहरति– **यामिति** ।।३५।।

**वादिराजीया–** परेशः सर्वेश्वर एवेति आदेरेवकारस्य सम्बन्धः । सर्वेश्वर एवाज्ञाननुकरोति चेत् मम का वार्तेति सूचनं तत्फलम् ।।३५।।

**वरदराजीया–** एवं चरतोर्देवदेव्योरज्ञानादिशङ्का प्राप्ता तां सर्वपुराणग्रन्थतात्पर्यप्रदर्शनेन परिहरति भगवानाचार्यः– **यां यामिति** ।। परेशो ब्रह्मादीनामपि पतिः हरिः अवतारेषु यां यां लीलां करोति तेनैव

---

१. 'अहं दाशरथिर्भूत्वा हन्मि रावणमाहवे । श्रीमद्रामावतारेऽस्मिन् अज्ञवत्क्रियते मया ।। तत्र शङ्का न कर्तव्या सर्वज्ञेनापि मायया । मन्मायामोहितं रक्षो मनुष्यं मामवेक्ष्यति ।। अन्यथा तस्य सा नूनं न भवेद्यत्र कुत्रचित् ।। इति स्कान्दे उमासंहितायां देवान्प्रति विष्णुवचनं ५अ । 'एवं यदा जगत्स्वामी देवदेवो जनार्दनः अवतारं करोत्येषा तदा श्रीस्तत्सहायिनी । पुनश्च पश्चादुत्पन्ना आदित्योऽभूद्यदा हरिः यदा तु भार्गवो रामस्तदाभूद्धरणी त्वियम् ।। राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोरेषानपायिनी ।। देवत्वे देवदेहेऽयं मनुष्यत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषाऽत्मनस्तनुम् ।।' इति विष्णुपुराणे१अं.१०अ.१४२-१४५

प्रकारेण अनु हरेरनु देवी रमापि तां तां तादृशीं तादृशीं लीलां करोति । एतावता विडम्बनेनास्य परमस्य हरेः तथा रमायाः अणुरपि अल्पोऽपि अज्ञानादिदोषो नैव विचिन्त्यः न मन्तव्यः । कुतः यद्यस्मात् कारणात् उभावपि उरू प्रभू अत्यन्तसमर्थौ तस्मादित्यर्थः ।।३५।।

**जनार्दनीया–** अत्र सीतारामयोः प्राप्तमज्ञानं परिहरति– **यां यामिति** ।। परेशो हरिः उरुधा बहुप्रकारेण यां यां लीलां करोति रमापि देवी, अनु हरिमनु तां तां हरिलीलासदृशीं लीलां तथैव हरिवदेव करोत्येव । एतावता विडम्बकरणेन अस्य परमस्य तथा रमाया अणुरपि ईषदपि दोषः अज्ञानदुःखादिदोषः नैवानुविचिन्त्यः नैव चिन्तनीयः । कुतः ? यद्यस्मादुरुप्रभू उरूणां ब्रह्मादीनां प्रभू ईश्वरौ । अत एवेत्यर्थः ।।३५।।

**चट्टी–** अत्र सीतारामयोः प्राप्तमज्ञानं परिहरति भगवानाचार्यः– **यां यामिति** ।। परेशो हरिः । उरुधा बहुप्रकारेण यां यां लीलां करोति । रमापि अनु हरिमनु तां तां हरिलीलासदृशीं लीलां तथैव हरिवदेव करोत्येव । एतावतापि विडम्बकरणेन अस्य परमस्य हरेः तथा रमायाः अणुरपि अल्पोऽपि दोषःअज्ञानदुःखादिदोषः नैवानुचिन्त्यः नैव चिन्तनीयः । कुतः ? यद्यस्मात् उभावपि उरुप्रभू उरूणां ब्रह्मादीनां प्रभू ईश्वरौ । अत एवेत्यर्थः ।।३५।।

**क्वाज्ञानमापदपि [१]मन्दकटाक्षमात्रात् सर्गस्थितिप्रलयसंसृतिमोक्षहेतोः ।**
**देव्या हरेः किमु विडम्बनमात्रमेतद्विक्रीडतोः सुरनरादिवदेव तस्मात् ।।३६।।**

**व्यासतीर्थीया–** उरुप्रभुत्वमेव दर्शयति– **क्वेति** ।।३६।।

---

१. 'यदपाङ्गाश्रितं सर्वं जगत्स्थावरजङ्गमम् । त्वया विलोकितास्सर्वे प्रभवन्ति दिवौकसः ।। माता रुद्रादिदेवानां ऐश्वर्यं त्वत्कटाक्षतः ।।' इति पाद्मे उ.खं.२३२अ.५७-५८ ।

'ननु सीता लक्ष्म्यवतार इति सिद्धम् वक्ष्यति च 'सीता लक्ष्मीर्भवान् विष्णुः' इति विष्णुपुराणे चोक्तम् 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति एवंभूतां सीतां समरसीमनि जनितमूर्च्छालक्षणं लक्ष्मणमप्युद्धर्तुं असमर्थो रावणः कथं बलात्करोति स्म उच्यते देवकार्यनिर्वाहाय स्वयमेव स्वधर्षणमङ्गीचकार प्रजायां कूपपतितायां यथा माता स्वयं तदुपरि पतति वात्सल्यातिशयेन तथा रावणबन्दीकृतदेवस्त्रीरक्षणाय स्वयं तत्र स्वगमनमनुमतवती । वक्ष्यति सुन्दरकाण्डे– 'नापहर्तुमहं शक्या तस्य रामस्य धीमतः विधिस्तव वधार्थाय विहितो नात्र संशयः ।।' इति तर्हि सीता प्रलापादिकं किमर्थं कृतवतीति चेत् श्रुणु पतिविरहे पतिव्रतयैवं वर्तितव्यमिति लोकहितप्रवर्तनाय प्रलापादिकमकरोदिति' इति गोविन्दराजः ३.५६. । वस्तुतस्तु नीता केवलं प्रतिकृतिरेव सीतायाः सच्चिदानन्दरूपं एतत् तत्त्वं गोविन्दराजादेरपि सम्मतम् । इदं तु यावदग्निदर्शनं रावणेन नीता स्वयं सीता एव । अग्निदर्शनात् परं तत्तनया वेदवतीत्येवं कथाप्रतिपादक भविष्योत्तरपुराणप्रामाण्यउपपादनाय उपयोगीति उदाहृतम् ।

**वेदाङ्गतीर्थीया–** देव्याः अज्ञानादि क ततोऽधिकस्य हरेः किमु ।।३६–३७।।

**वादिराजीया–** तर्ह्येतन्मृगानुगमनादिकं किमु किमर्थमिति प्रश्नः । उत्तरं तु तस्मादज्ञानापदादिदोष–रहितत्वादेतन्मृगानुगमनादिकं विडम्बनमात्रं न त्वज्ञानादिदोषकृतमित्युत्तरार्धयोजना । पूर्वार्धस्य तु यथास्थितैव ।।३६।।

**वरदराजीया–** एतदेव विशदयति– **केति** ।। मन्दकटाक्षमात्रेण सर्गस्थितिप्रलयसंसृतिमोक्षहेतोः सृष्टिस्थितिसंहारसंसारमुक्तीनां हेतोः कारणभूतायाः देव्याः तथाभूतस्य हरेश्चाज्ञानं क कुत्रेत्यर्थः । तथा आपत् दुःखमपि क । तर्हि किमर्थमेवं कृतमित्यत आह– **तस्या उरु प्रभुत्वादिति** ।। एतत्प्रकृतं चरितं विडम्बनमात्रं दुष्टमोहनमात्रम् । कथम्भूतयोः सुरनरादिवत् देवमनुष्यादिवत् विक्रीडतोः क्रीडां कुर्वतोरित्यर्थः ।।३६।।

**जनार्दनीया–** उरुप्रभुत्वं स्पष्टयति– **केति** ।। मन्दकटाक्षमात्रेण ईषन्नयनान्तावलोकमात्रेण । सर्गः उत्पत्तिः, स्थितिः पालनं, प्रलयो नाशः, संसृतिः संसारः, मोक्षः सायुज्यादिमुक्तिः, संसारान् मोक्षो वा एषां हेतोः कारणभूतायाः देव्याः प्रकृतेः अज्ञानं आपच्च क । नास्तीत्यर्थः । देव्याः सकाशादपि हरेरुत्तमस्येति शेषः । अज्ञानादिकं किमु कथं स्यात् यस्मात्तस्मात् सुरनरादिवत् विक्रीडतोः क्रीडां कुर्वतोः देव्याः, हरेः । एतत् सुरनरादिवत् कृतं कर्म विडम्बनमात्रमेव असुराणाम् । स्वयोग्यताधिक-कृतकर्मणां देवानामपीति शेषः ।।३६।।

**अनन्तभट्टीया–** उक्तं विशदयति– **केति** ।। तस्मात् काज्ञानमिति सम्बन्धः ।।३६।।

**ताम्रपर्णीया–** उरुप्रभुत्वहेतुं विशदयन् तत्साध्यं दोषाभावं स्पष्टयति– **केति** ।। तर्हि अज्ञवदाचरणं कथं इति शङ्क्ते– **किमु इति** ।। उत्तरं सहेतुकमाह– **विडम्बनेति** ।। तस्मात् उरुशक्तित्वादेव एतदज्ञवदाचरणं अनुकरणमात्रं इत्यर्थः ।।३६–३७।।

**चट्टी–** उरुप्रभुत्वं स्पष्टयति– **केति** ।। मन्दकटाक्षमात्रेण ईषन्नयनान्तावलोकनमात्रेण सर्गः उत्पत्तिः स्थितिः पालनं प्रलयो नाशः संसृतिः संसारः मोक्षः सायुज्यादिमुक्तिः संसारान्मोक्षो वा येषां हेतोः कारणभूतायाः देव्याः अज्ञानं आपत् च क । नास्तीत्यर्थः । उत्तमस्येति शेषः । देव्याः सकाशात् उत्तमस्य हरेः अज्ञानादिकं किमु कथं स्यात् । यद् यस्मात् । तस्मात् सुरनरादिवत् विक्रीडतोः क्रीडां कुर्वतोः देव्याः हरेः एतत् सुरादिवत् कृतं कर्म विडम्बनमेव ।।३६।।

**भावविवृति–** काज्ञानमापदपि मन्दकटाक्षमात्र इत्यत्र जगतः मन्दकटाक्षमात्रात् सर्गस्थितिप्रलय–संसृतिमोक्षहेतोः देव्या हरेश्च अज्ञानं आपच्च क । नेत्यर्थः । सुरनरादिवद्विक्रीडतोर्हरिदेव्योः

एतत्सुरादिवद्विक्रीडनं विडम्बनमात्रमेव । एतद्व्यावर्त्यमेव स्पष्टयति– **तस्मादिति** ।। तस्माद्विक्रीडनादपि किमु नु किमपि प्रयोजनमिति भावः । 'लोकवत्तु लीलाकैवल्यम्' [सू.२.१.३४] 'देवस्यैष स्वभावोऽयं आप्तकामस्य का स्पृहा' [माण्डूक्य.१.१९] इत्यादेः ।।३६।।

**देव्याः समीपमथ रावण आससाद साऽदृश्यतामगमदप्यविषह्यशक्तिः ।**
**सृष्ट्वात्मनः प्रतिकृतिं प्रययौ च शीघ्रं कैलासमर्चितपदा न्यवसच्छिवाभ्याम् ।।३७।।**

**वादिराजीया–** रावणहनने देव्या एव शक्तिः सम्भावितेति सूचियतुं अविषह्यशक्तिरपीत्यपिपदम् । 'शिवा भवानी रुद्राणी' इति वचनात् शिवा च शिवश्च शिवौ ताभ्यां शिवाभ्याम् ।।३७।।

**मधुसूदनीया–** ।। **देव्या इति** ।। रावणस्तापसवेषं धृत्वेति शेषः तदुक्तं आरण्यपर्वणि– 'रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डभृत्' [२७९.१६] इत्यादि । आत्मनः स्वस्याः प्रतिकृतिं प्रतिमां सृष्ट्वा । यद्यप्यग्निनैव प्रतिकृतिस्सृष्टा तथापि भृत्ये जितेऽपि राजा शत्रूञ्जितवानिति स्वातन्त्र्यविवक्षया राज्ञि यथा जयिपदप्रयोगः तथाऽत्रापि सा सृष्ट्वेत्युक्तमिति भावः । कैलासमगमत् प्रथमतः स्वकीयाऽग्निहोत्रस्थ-वह्निना पातालं प्रापिता तदनन्तरं वीरभद्रेणाऽऽहूता सती कैलासमगमदित्यर्थः ।

'यस्य रामस्य सुभगा सीता त्रैलोक्यविश्रुता । पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ।।
रामस्य भार्यां सुभगां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालचोदितः ।।
गृहीत्वा तापसं वेषं चरन्तीं विजने वने । समाहर्तुं मतिं चक्रे आयासं किल भामिनी ।।
विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निं आवसथ्यं शुचिस्मिता ।।
अथावसथ्यो भगवान् हव्यवाहो महेश्वरः । आविरासीत्सुदीप्तात्मा तेजसा च दहन्निव ।।
सृष्ट्वा मायामयीं सीतां रावणस्य वधेप्सया । सीतामादाय धर्मिष्ठः पावकोऽन्तरधीयत ।।
तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः । समादाय ययौ लङ्कां सागरोत्तरसंस्थिताम् ।।'
इति कौर्मे [द्वितीयभाग.३३.११२–११५,१२६–१२८]

'अग्निहोत्रगतो वह्निः तं ज्ञात्वा रावणोद्यमम् । आदाय सीतां पाताले स्वाहया च निवेश्य च ।।
शिवस्थानेऽवसद्देवी तत्र मां ध्यायती सदा ।।' इति वाराहे च । अनेनोत्तरश्लोकार्थोऽपि कियदंशो विवृत इति ज्ञेयम् ।।३७।।[१]

**वरदराजीया–** अथ लक्ष्मणगमनानन्तरं रावणो देव्याः सीतायाः समीपं आससाद प्राप्तवान् । अविषह्या सोढुं अशक्या शक्तिः यस्याः सीतायाः सा तथा । तदैव रावणसंहरणे शक्तापीत्यर्थः । सा सीता

१. इमानि वचनानि स्कान्दे, वैष्णवखण्डे.वेङ्कटाचलमाहात्म्ये. ५.२१ कियताचित् व्यत्यासेन पठितानि ।

भाविकार्यानुरोधात् अदृश्यत्वमप्रत्यक्षत्वमगमत् प्राप । आत्मनः स्वस्याः प्रतिकृतिं प्रतिरूपं सृष्ट्वा तदैव निर्माय तां तत्र स्थापयित्वा स्वयं शीघ्रं कैलासं कैलासपर्वतं अगमत् । तत्र आगमने प्रयोजनमाह– **अर्चितेति** ।। शिवाभ्यां शिवश्च शिवा च ताभ्यां उभामहेश्वराभ्यां अर्चितपदे यस्याः सा न्यवसत् उवासेत्यर्थः ।।३७।।

**जनार्दनीया–** अविषह्या सोढुमशक्या शक्तिर्यस्याः सा तथा । सा सीता आत्मनः स्वस्य प्रतिकृतिं प्रतिमां सृष्ट्वा उत्पादयित्वा अग्निनेति शेषः । उक्तं कौर्मे– 'तमाह देवो लोकानां दाहको हव्यवाहनः' 'या नीता राक्षसेन्द्रेण सीता भगवती हृता । मया मायामयी सृष्टा रावणस्य वधेप्सया ।।' [उत्तरभाग.३३.१३५–१३८] अदृश्यतां अगमत् कैलासं प्रति प्रययौ च । अत्र कैलासे । शिवाभ्यां शिवा च शिवश्च तथा ताभ्याम् । पार्वतीरुद्राभ्यां अर्चितपदा पूजितपदा सीता न्यवसत् ।।३७।।

**अनन्तभट्टीया–** सा सीता । शिवाभ्यां पार्वतीशिवाभ्यां वसति ।।३७।।

**चट्टी–** अथ लक्ष्मणगमनानन्तरं रावणः तापसवेषं धृत्वेति शेषः । देव्याः सीतायाः समीपं आससाद तदुक्तं आरण्यपर्वणि 'रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डभृत्' इत्यादि । अविषह्य सोढुमशक्या शक्तिर्यस्या सा तथा । सीता तथा विधापि पुनः स्वस्याः प्रतिकृतिं प्रतिमां सृष्ट्वा उत्पाद्य अदृश्यतां अगमत् । कैलासं प्रति शीघ्रं ययौ च । अत्र कैलासे शिवाभ्यां उमामहेश्वराभ्यां ताभ्यां अर्चितपदा पूजितपदा सती न्यवसत् उवास देव्या एव रावणहनने शक्तिरस्तीति सूचयितुं अविषह्यशक्तिरपीत्यपि– पदम् ।।३७।।

**भावचन्द्रिका–** ।। **अदृश्यतामिति** ।। 'त्वं तु छायां...' इति वासिष्ठरामायणे सीतां प्रति रामवाक्यम् । कूर्मपुराणे चतुस्त्रिंशेऽध्याये– 'विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निं आवसथ्यं शुचिस्मिता ।।' इति । तत्रैवान्यत्र– 'आविरासीत् प्रदीप्तार्चिः तेजसा प्रदहन्निव । सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया ।। सीतामादाय धर्मिष्ठां पावकोऽन्तरधीयत । सा दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः ।। समादाय ययौ लङ्कां सागरान्तरसंस्थिताम् ।।' इति । तत्रैवान्यत्र – कृत्वा च रावणवधं रामो लक्ष्मणसंयुतः । समादाय गतः सीतां...मानसः ।। सा प्रत्ययाय भूतानां सीतां मायामयीं पुनः । विवेश पावकं दीप्तं अदहत् त्वनलोऽपि ताम् ।। दग्ध्वा मायामयीं सीतां भगवान् हव्यवाहनः । रामायादर्शयत् सीतां पेतुः खे पुष्पवृष्टयः ।।' इति 'सृष्ट्वा मायामयी सीता सा रावणवधेप्सया' 'सीताकृतिं दिव्यपरीक्षणच्छलात् सीतापतिर्हव्यवहे निधाय । कैलासशैलात् पुनरागतां प्रियां सीतां पुनः प्रैक्षत पावकार्पिताम् ।।'इति सङ्ग्रहे [यु.का.१४.४८] देव्याः । तदुक्तं वराहपुराणे वेङ्कटगिरिमाहात्म्ये [उत्तरार्द्धे] पञ्चमेऽध्याये– 'अग्निहोत्रगतो वह्निस्तं ज्ञात्वा रावणोद्यमम् । आदाय सीतां

पाताले स्वाहायां सन्निवेश्य च ।। तेनैव रक्षसा स्पृष्टां पुरा वेदवतीं शुभाम् । अग्नौ विसृष्टदेहां तां शप्त्वा[संहर्तुं] तं रावणः पुनः ।। सीताया रूपसदृशीं कृत्वा वै चोत्ससर्ज च । सा रावणहृता भूत्वा लङ्कायाश्च निवेशिता ।।' इति ।। वेदवती ।। वेदवती लक्ष्मीरेव । 'हिमालये वीक्ष्य स देवमायां कन्यां परां वेदवतीं प्रगृह्य । शप्तस्तया त्वन्मृतये पुनः स्यामित्थं ज्वलन्तं ज्वलनं विशन्त्या ।।' इति सङ्ग्रहरामायणे [अर.का.१.२७] 'देवमायां लक्ष्मीम्' इति तत्रैव टिप्पणौ । 'या देवमाया जलधेरिव श्रीः' इति प्रयोगाच्च । पद्मपुराणे लक्ष्मीनामामृते वेदवतीनामप्रयोगाच्च । सा वेदवत्येव सीता जाता मरणहेतुर्बभूवेत्यर्थाङ्गीकारे ।* देव्याः सीताया इत्यर्थः । श्रीदेहे शक्रप्रवेशः । अर्जुनस्यैवेदं नियामकान्तरं भविष्यतीति ।।३७–४२।।

**भावविवृति–** सृष्ट्वात्मनः प्रतिकृतिं शीघ्रमित्यत्र सीता स्वसदृशप्रतिमां सृष्ट्वा एकांशेन तत्र प्रविश्य रामसमीपेऽप्येकांशेन अन्यरहस्यतया स्थित्वा 'रूपान्तरेण कैलासं गता नित्यावियोगिनी' सीता स्वस्यास्तदानीं प्रतिगमनमपि रामाभिप्रेतमिति ज्ञात्वा तत्र गतेति ज्ञेयम् । उक्तश्च सङ्ग्रहरामायणे– 'विश्वेश्वरी तिरोभूत् सा सृष्ट्वा प्रतिकृतिं निजाम् । विज्ञाय रामस्य मतं सीता कैलासमाययौ ।। वन्द्यमानावसत् तत्र शिवया च शिवेन च । तां जनकीप्रतिकृतिं मन्वानो जानकीं... ।।' इति । किञ्च अन्तरिक्षचारिणां दैत्यानां मोहनाय तथा ऋष्यादीनां यथायोग्यफलप्राप्त्यै च रामसमीपे स्थित्वापि रूपान्तरेण गमनमिति ज्ञेयम् । तदेतदुक्तम्– 'प्रादुर्भावा हरेस्सर्वे नैव प्राकृतदेहिनः । निर्दोषगुणसम्पूर्णा दर्शयन्त्यन्यथैव तु ।। दुष्टानां मोहनार्थाय सतामपि तु कुत्रचित् । यथायोग्यफलप्राप्त्यै लीलैषा परमात्मनः ।।' 'यां यां परेश उरुधैव' 'देवीति च' ।।३७–४५।।

**अतिविशद–** ।। **देव्या इति** ।। रावणः तापसवेषं धृत्वा इति शेषः । तदुक्तमारण्यकपर्वणि– 'रावणस्तु यतिर्भूत्वा मुण्डी कुण्डी च दण्डभृत्' इत्यादि । आत्मनः स्वस्याः प्रतिकृतिं प्रतिमां सृष्ट्वा । यद्यपि अग्निनैव प्रतिकृतिः सृष्टा तथापि भृत्ये जितेऽपि राजा जितवानिति स्वातन्त्र्यविवक्षया यथा राज्ञि जयशब्दप्रयोगः तथाऽत्रापि सृष्ट्वेत्युक्तमिति भावः ।। **कैलासमिति** ।। प्रथमतः स्वकीयाग्निना पातालं प्रापिता तदनन्तरं वीरभद्रेणाहृता सती कैलासमगमदित्यर्थः । 'यस्य रामस्य सुभगा सीता त्रैलोक्यविश्रुता । पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ।। रामस्य भार्यां सुभगां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालचोदितः ।। गृहीत्वा तापसं वेषं चरन्तीं विजने वने । समाहर्तुं मतिं चक्रे आयासं किल भामिनी ।। विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निं आवसथ्यं शुचिस्मिता ।। अथावसथ्यो भगवान् हव्यवाहो महेश्वरः । आविरासीत्सुदीप्तात्मा तेजसा च दहन्निव ।। सृष्ट्वा मायामयीं सीतां रावणस्य वधेप्सया । सीतामादाय धर्मिष्ठः पावकोऽन्तरधीयत ।।तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः । समादाय ययौ लङ्कां सागरोत्तरसंस्थिताम् ।।' इति कौर्मे

[द्वितीयभाग.३३.११२–११५,१२६–१२८] 'अग्निहोत्रगतो वह्निः तं ज्ञात्वा रावणोद्यमम् । आदाय सीतां पाताले स्वाहया च निवेश्य च ।। शिवस्थानेऽवसद्देवी तत्र मां ध्यायती सदा ।।' इति वाराहे च च । अनेन उत्तरश्लोकार्थे कश्चिदंशो विवृत इति ज्ञेयम् ।।३७।।

**प्रमाणसङ्ग्रहः–** सृष्ट्वात्मनः प्रतिकृतिं प्रविवेश शीघ्रं कैलासमर्चितपदा न्यवच्छिवाभ्यां इति 'यस्य रामस्य सुभगा सीता त्रैलोक्यविश्रुता । पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ।। रामस्य भार्यां सुभगां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालचोदितः ।। गृहीत्वा तापसं वेषं चरन्तीं विजने वने । समाहर्तुं मतिं चक्रे आयासं किल भामिनी ।। विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निं आवसथ्यं शुचिस्मिता ।। अथावसथ्यो भगवान् हव्यवाहो महेश्वरः । आविरासीत्सुदीप्तात्मा तेजसा च दहन्निव ।। सृष्ट्वा मायामयीं सीतां रावणस्य वधेप्सया । सीतामादाय धर्मिष्ठः पावकोऽन्तर-धीयत ।। तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः । समादाय ययौ लङ्कां सागरोत्तरसंस्थिताम् ।।' इति [कौर्मे.द्वितीयभाग.३३.११२-११५,१२६-१२८] कृत्वाऽथ रावणवधं रामो लक्ष्मणसंयुतः । समादायाभवत् सीतां शङ्काकुलितमानसः ।। सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ।। दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः ।। प्रगृह्य भर्तुश्चरणे कराभ्यां सा सुमध्यमा । चकार प्रणतिं भूमौ रामाय जनकात्मजा ।। ननाम वह्निं शिरसा तोषयामास राघवः । तमाह देवो लोकानां दाहको हव्यवाहनः ।। या नीता राक्षसेशेन सीता भगवती हृता । मया मायामयी सृष्टा रावणस्य वधेप्सया' ।। इत्यादि कौर्मे । [द्वितीयभाग.३३.१२९–१३३,१३५,१३८] । वाराहे च । 'अग्निहोत्रगतो वह्निः तं ज्ञात्वा राक्षसोत्तमम् । आदाय सीतां पाताले स्वाहया च निवेश्य च ।। [रावणोद्यमम्] शिवस्थानेऽवसद्देवी तत्र मां ध्यायती सदा ।।' इत्यादि ।।३७।।

**तस्यास्तु तां प्रतिकृतिं [१]प्रविवेश शक्रो देव्याश्च सन्निधियुतां व्यवहारसिद्ध्यै ।**
**आदाय[२] तामथ ययौ रजनीचरेन्द्रो [३]हत्वा जटायुषमुरुश्रमतो निरुद्धः ।।३८।।**

---

१. 'स्थाप्य सीताकृतिं क्रूरः इन्द्राविष्टां स राक्षसः । कृतकृत्यं तदात्मानं मेने वै कालचोदितः ।।' इति वें.मा.८. ६५-६६ । इति इदानीं मुद्रिते भविष्योत्तरपुराणान्तर्गतवेङ्कटेशमाहात्म्ये पठ्यते । किन्तु अस्य पाठस्य प्राचीनकोशेषु स्थितिः गवेषणीया ।

२. अत्र ब्रह्मादिशापसद्भावात् रावणः सीतां न पस्पर्श इति ज्ञायते । तथाहि- 'विमाने खेऽपि रोदन्त्या चक्रे स्पर्शं न राक्षसः' इति नृ.पु.४९.८८ । इदमेव प्रमेयं रामायणटीकाकारैरप्युपपाद्यते । तथाहि–'नन्वत्र नलकूबरवेदवत्यादि-शापसद्भावात् बलात् कथं परदारस्पर्श इति चेत्,सत्यम्, रावणः सीतां साक्षान्न जग्राह न स्पृष्टवान् । ...

पाताले स्वाहायां सन्निवेश्य च ।। तेनैव रक्षसा स्पृष्टां पुरा वेदवतीं शुभाम् । अग्नौ विसृष्टदेहां तां शप्त्वा[संहर्तुं] तं रावणः पुनः ।। सीताया रूपसदृशीं कृत्वा वै चोत्ससर्ज च । सा रावणहृता भूत्वा लङ्कायाश्च निवेशिता ।।' इति ।। वेदवती ।। वेदवती लक्ष्मीरेव । 'हिमालये वीक्ष्य स देवमायां कन्यां परां वेदवतीं प्रगृह्य । शप्तस्तया त्वन्मृतये पुनः स्यामित्थं ज्वलन्तं ज्वलनं विशन्त्या ।।' इति सङ्ग्रहरामायणे [अर.का.१.२७] 'देवमायां लक्ष्मीम्' इति तत्रैव टिप्पणौ । 'या देवमाया जलधेरिव श्रीः' इति प्रयोगाच्च । पद्मपुराणे लक्ष्मीनामामृते वेदवतीनामप्रयोगाच्च । सा वेदवत्येव सीता जाता मरणहेतुर्बभूवेत्यर्थाङ्गीकारे ।* देव्याः सीताया इत्यर्थः । श्रीदेहे शक्रप्रवेशः । अर्जुनस्यैवेदं नियामकान्तरं भविष्यतीति ।।३७–४२।।

**भावविवृति–** सृष्ट्वात्मनः प्रतिकृतिं शीघ्रमित्यत्र सीता स्वसदृशप्रतिमां सृष्ट्वा एकांशेन तत्र प्रविश्य रामसमीपेऽप्येकांशेन अन्यरहस्यतया स्थित्वा 'रूपान्तरेण कैलासं गता नित्यावियोगिनी' सीता स्वस्यास्तदानीं प्रतिगमनमपि रामाभिप्रेतमिति ज्ञात्वा तत्र गतेति ज्ञेयम् । उक्तश्च सङ्ग्रहरामायणे– 'विश्वेश्वरी तिरोभूत् सा सृष्ट्वा प्रतिकृतिं निजाम् । विज्ञाय रामस्य मतं सीता कैलासमाययौ ।। वन्द्यमानावसत् तत्र शिवया च शिवेन च । तां जनकीप्रतिकृतिं मन्वानो जानकीं... ।।' इति । किञ्च अन्तरिक्षचारिणां दैत्यानां मोहनाय तथा ऋष्यादीनां यथायोग्यफलप्राप्त्यै च रामसमीपे स्थित्वापि रूपान्तरेण गमनमिति ज्ञेयम् । तदेतदुक्तम्– 'प्रादुर्भावा हरेस्सर्वे नैव प्राकृतदेहिनः । निर्दोषगुणसम्पूर्णा दर्शयन्त्यन्यथैव तु ।। दुष्टानां मोहनार्थाय सतामपि तु कुत्रचित् । यथायोग्यफलप्राप्त्यै लीलैषा परमात्मनः ।।' 'यां यां परेश उरुधैव' 'देवीति च' ।।३७–४५।।

**अतिविशद–** ।। **देव्या इति** ।। रावणः तापसवेषं धृत्वा इति शेषः । तदुक्तमारण्यकपर्वणि– 'रावणस्तु यतिर्भूत्वा मुण्डी कुण्डी च दण्डभृत्' इत्यादि । आत्मनः स्वस्याः प्रतिकृतिं प्रतिमां सृष्ट्वा । यद्यपि अग्निनैव प्रतिकृतिः सृष्टा तथापि भृत्ये जितेऽपि राजा जितवानिति स्वातन्त्र्यविवक्षया यथा राज्ञि जयशब्दप्रयोगः तथाऽत्रापि सृष्ट्वेत्युक्तमिति भावः ।। **कैलासमिति** ।। प्रथमतः स्वकीयाग्निना पातालं प्रापिता तदनन्तरं वीरभद्रेणाहृता सती कैलासमगमदित्यर्थः । 'यस्य रामस्य सुभगा सीता त्रैलोक्यविश्रुता । पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ।। रामस्य भार्यां सुभगां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालचोदितः ।। गृहीत्वा तापसं वेषं चरन्तीं विजने वने । समाहर्तुं मतिं चक्रे आयासं किल भामिनी ।। विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निं आवसथ्यं शुचिस्मिता ।। अथावसथ्यो भगवान् हव्यवाहो महेश्वरः । आविरासीत्सुदीप्तात्मा तेजसा च दहन्निव ।। सृष्ट्वा मायामयीं सीतां रावणस्य वधेप्सया । सीतामादाय धर्मिष्ठः पावकोऽन्तरधीयत ।।तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः । समादाय ययौ लङ्कां सागरोत्तरसंस्थिताम् ।।' इति कौर्मे

[द्वितीयभाग.३३.११२–११५,१२६–१२८] 'अग्निहोत्रगतो वह्निः तं ज्ञात्वा रावणोद्यमम् । आदाय सीतां पाताले स्वाहया च निवेश्य च ।। शिवस्थानेऽवसद्देवी तत्र मां ध्यायती सदा ।।' इति वाराहे च च । अनेन उत्तरश्लोकार्धे कश्चिदंशो विवृत इति ज्ञेयम् ।।३७।।

**प्रमाणसङ्ग्रहः–** सृष्ट्वात्मनः प्रतिकृतिं प्रविवेश शीघ्रं कैलासमर्चितपदा न्यवच्छिवाभ्यां इति 'यस्य रामस्य सुभगा सीता त्रैलोक्यविश्रुता । पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ।। रामस्य भार्यां सुभगां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालचोदितः ।। गृहीत्वा तापसं वेषं चरन्तीं विजने वने । समाहर्तुं मतिं चक्रे आयासं किल भामिनी ।। विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निं आवसथ्यं शुचिस्मिता ।। अथावसथ्यो भगवान् हव्यवाहो महेश्वरः । आविरासीत्सुदीप्तात्मा तेजसा च दहन्निव ।। सृष्ट्वा मायामयीं सीतां रावणस्य वधेप्सया । सीतामादाय धर्मिष्ठः पावकोऽन्तरधीयत ।। तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः । समादाय ययौ लङ्कां सागरोत्तरसंस्थिताम् ।।' इति [कौर्मे.द्वितीयभाग.३३.११२-११५,१२६-१२८] कृत्वाऽथ रावणवधं रामो लक्ष्मणसंयुतः । समादायाभवत् सीतां शङ्काकुलितमानसः ।। सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ।। दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः ।। प्रगृह्य भर्तुश्चरणे कराभ्यां सा सुमध्यमा । चकार प्रणतिं भूमौ रामाय जनकात्मजा ।। ननाम वह्निं शिरसा तोषयामास राघवः । तमाह देवो लोकानां दाहको हव्यवाहनः ।। या नीता राक्षसेशेन सीता भगवती हृता । मया मायामयी सृष्टा रावणस्य वधेप्सया' ।। इत्यादि कौर्मे । [द्वितीयभाग.३३.१२९–१३३,१३५,१३८] । वाराहे च । 'अग्निहोत्रगतो वह्निः तं ज्ञात्वा राक्षसोत्तमम् । आदाय सीतां पाताले स्वाहया च निवेश्य च ।। [रावणोद्यमम्] शिवस्थानेऽवसद्देवी तत्र मां ध्यायती सदा ।।' इत्यादि ।।३७।।

**तस्यास्तु तां प्रतिकृतिं [१]प्रविवेश शक्रो देव्याश्च सन्निधियुतां व्यवहारसिद्ध्यै ।**
**आदाय[२] तामथ ययौ रजनीचरेन्द्रो [३]हत्वा जटायुषमुरुश्रमतो निरुद्धः ।।३८।।**

---

१. 'स्थाप्य सीताकृतिं क्रूरः इन्द्राविष्टां स राक्षसः । कृतकृत्यं तदात्मानं मेने वै कालचोदितः ।।' इति वें.मा.८. ६५-६६ । इति इदानीं मुद्रिते भविष्योत्तरपुराणान्तर्गतवेङ्कटेशमाहात्म्ये पठ्यते । किन्तु अस्य पाठस्य प्राचीनकोशेषु स्थितिः गवेषणीया ।

२. अत्र ब्रह्मादिशापसद्भावात् रावणः सीतां न पस्पर्श इति ज्ञायते । तथाहि- 'विमाने खेऽपि रोदन्त्या चक्रे स्पर्शं न राक्षसः' इति नृ.पु.४९.८८ । इदमेव प्रमेयं रामायणटीकाकारैरप्युपपाद्यते । तथाहि–'नन्वत्र नलकूबरवेदवत्यादिशापसद्भावात् बलात् कथं परदारस्पर्श इति चेत्,सत्यम्, रावणः सीतां साक्षान्न जग्राह न स्पृष्टवान् । ...

**वेदाङ्गतीर्थीया–** 'उरुश्रमतो निरुद्धः' इत्यनेन जटायुषो भक्त्यतिशय उक्तः ।।३८।।

**वादिराजीया–** उरुश्रमतो हत्वेति पूर्वेणान्वयः ।।३८।।

**मधुसूदनीया–** ।। **उरुश्रमतो निरुद्धः** ।। जटायुषा निरुद्धस्सन् उरुश्रमेण महाप्रयत्नेन । जटायुषं हत्वेति योज्यम् । तदुक्तम्–

'ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । चरणाभ्यां महातेजाः बभञ्ज पतगेश्वरः ।।
काञ्चनोरच्छदान्दीप्तान्पिशाचवदनान् खरान् । अश्वांश्च जवसम्पन्नाञ्जघान स महाबली ।।
मणिहेमविचित्राङ्गं बभञ्ज च महारथम् । पूर्णचन्द्रप्रतीकाशं छत्रव्यजनकैः सह ।।
पातयामास वेगेन ग्राहिभी राक्षसैस्सह । सारथेश्चापि वेगेन तुण्डेनैवाहरच्छिरः ।।
अङ्के निधाय वैदेहीं पपात भुवि रावण ' इत्यादि रामायणे [अर.का.५१.१०,१५–१९]

उरुश्रमतो निरुद्ध इति वा । तस्यास्त्विति तुशब्देन सीतापहरणेन रावणवधस्स्यादिति देवास्तुतुषुरिति सूचयति । तदुक्तं 'प्रहृष्टा देवताश्चाऽस्यास्सर्वे ते परमर्षय' इत्यादि रामायणे [अर.का.५२.११] ।।३८।।

**वरदराजीया–** ननु प्रतिमानिर्माणेऽपि चेतनसम्बन्धाभावे कथं वचनादिव्यवहारः कथं रावणस्येयं सीतेति बुद्धिरभूदित्यत आह– **तस्या इति** ।। तस्याः सीतायाः तां प्रतिकृतिं प्रतिमां सेवार्थं शक्र आविवेश प्रविष्टवान् । कुतः व्यवहारसिद्ध्यै अभिवादनादिव्यवहारसिद्ध्यर्थम् । न केवलमेतावत् रावणस्यातिद्रोहघटनार्थं देव्याः सन्निधियुतां च देव्याः सीतायाः सन्निधानयुक्तां प्रविवेशेति सम्बन्धः । अथेन्द्रप्रवेशानन्तरं रजनीचराणां राक्षसानां इन्द्रो राजा रावणः तां सीताप्रतिकृतिं आदाय प्रययौ । मध्ये च जटायुषा उरुश्रमतः अतिप्रयासेन निरुद्धः सीतां गृहीत्वा क यास्यसीति निवारितो रावणः जटायुषं तन्नामकं रामभक्तं गृध्रं हत्वा हतप्रायं कृत्वा प्रययाविति सम्बन्धः ।।३८।।

**जनार्दनीया–** ननु रावणस्य निश्चेतनप्रतिमायां सीतेयमिति कथं बुद्धिरभूदित्यत आह– **तस्या इति** ।। शक्रः तस्याः कैलासं प्रति गतायाः देव्याः सीतायाः सन्निधियुतां सन्निधानयुक्तां तां आश्रमे निर्मितां प्रतिकृतिं प्रतिमां । व्यवहारसिद्ध्यै गत्यादिव्यापारसिद्ध्यर्थं प्रविवेश । अथेन्द्रप्रवेशनानन्तरं रजनीचरेन्द्रः तां प्रतिकृतिं आदाय ययौ । आश्रमादिति शेषः । किं कृत्वा उरुश्रमतः उरुशिक्षया अतिप्रयासेन वा निरुद्धः रोधितः सन् । जटायुषेति शेषः । जटायुषं हत्वा पोथयित्वेत्यर्थः ।।३८।।

---

... जानुकेशादिच्छायामेव जग्राह । राक्षासानां छायाग्राहित्वात् । तदुक्तं स्कान्दे उमा.सं.९अ.– 'छायाग्राहित्वमप्यस्ति सर्वविद्याविशारदे । केशच्छायां परामृश्य जानुच्छायां तथैव च ।। गृहीत्वा जनकीं हृष्टो लङ्कां प्रायात् स रावणः । सीतापहरणञ्चैव ये शृण्वन्ति नरोत्तमाः ।। न तेषामशुभं देवि भविष्यति कदाचन ।।' इति ।।

३. 'श्रुत्वा खगेश्वरस्यापि रक्षसामीश्वरस्य च । आयोधनं ऋणान्मुक्तो भृत्यस्वामिकृतात् ऋणात् ।।' इति उमा.सं.९अ ।

**अनन्तभट्टीया**– निरुद्धः जटायुषा इति शेषः ।।३८।।

**ताम्रपर्णीया**– ननु कटाक्षमात्रेण सर्गादिहेतुत्वे 'स विष्णुनामा श्रियमाप सृष्टये' 'सुषाव सैवाण्डं' इत्यादि कथं इति चेत् तादृशसामर्थ्येऽपि लीलयैव स्त्रीपुंभावादिना सृष्ट्याद्युपपत्तेः ।। **शक्र इति** ।। हरहिरण्यगर्भयोः रावणस्यापि वरदातृत्वेन तद्बाध्यत्वयोगात् । अन्यस्य शक्रवत् वचनचातुर्याद्यभावात् ईश्वराज्ञया शक्रप्रवेश इत्यभिप्रायः । व्यवहारसिद्ध्यै प्राचीनरामवाक्यप्रत्यभिज्ञानहनुमदभिवन्दनादि-व्यवहारसिद्ध्यर्थं इत्यर्थः । ईश्वरादन्याहंभावरहितदेहे श्रियो अनवस्थानात् न केवलं दैवीसन्निधिः आकृतौ युज्यते इत्यन्यप्रवेशो अपेक्षितः इति भावः । तदुक्तं एकादशस्कन्धतात्पर्ये– 'अन्याहंभावयुग्देह एवासौ हरिरास्थितः । न तदन्येषु देहेषु क्वचित् तस्य प्रवेशनम् ।।' [११.११.२७] इति ।।३८–४२।।[1]

**चट्टी**– ननु निश्चेतनप्रतिमायां सीतेयमिति बुद्धिः रावणस्य कथमभूदित्यत आह– **तस्या इति** ।। शक्रः तस्याः कैलासवासं प्रति गतायाः देव्याः सीतायाः सन्निधियुतां सन्निधानयुक्तां तां प्रतिकृतिं प्रतिमां व्यवहारसिद्ध्यै गत्यादिव्यवहारसिद्ध्यर्थं प्रविवेश । अथ इन्द्रप्रवेशानन्तरं रजनीचरेन्द्रः तां प्रतिकृतिमादाय जटायुषेति शेषः । तेन उरुश्रमतो अधिकप्रयासेन रुद्धः रोधितस्सन् जटायुषं तन्नामकरामभक्तं गृध्रं हत्वा पोथयित्वा प्रययौ च । आश्रमादिति शेषः ।।३८।।

**अतिविशद**– उरुश्रमतो निरुद्धः । जटायुषा निरुद्धः सन् उरु श्रमतो उरु श्रमेण जटायुषं हत्वा इति योज्यम् । तदुक्तम्– 'ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । चरणाभ्यां महातेजाः बभञ्ज पतगेश्वरः ।। काञ्चनोरच्छदान्दीप्तान्पिशाचवदनान् खरान् । अश्वांश्च जवसम्पन्नाञ्जघान स महाबली ।। मणिहेमविचित्राङ्गं बभञ्ज च महारथम् । पूर्णचन्द्रप्रतीकाशं छत्रव्यजनकैः सह ।। पातयामास वेगेन ग्राहिभी राक्षसैस्सह । सारथेश्चापि वेगेन तुण्डेनैवाहरच्छिरः ।। अङ्के निधाय वैदेहीं पपात भुवि रावण ' इत्यादि रामायणे । उरुश्रमतो निरुद्ध इति वा । तस्यास्त्विति तुशब्देन सीता... ।।३८।।

**प्रमाणसङ्ग्रहः**– उरुश्रमतो निरुद्ध इति महाप्रयत्नेन निरुद्धः । 'ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । चरणाभ्यां महातेजाः बभञ्ज पतगेश्वरः ।। काञ्चनोरच्छदान्दीप्तान्पिशाचवदनान् खरान् । अश्वांश्च जवसम्पन्नाञ्जघान स महाबली ।। मणिहेमविचित्राङ्गं बभञ्ज च महारथम् । पूर्णचन्द्रप्रतीकाशं छत्रव्यजनकैः सह ।। पातयामास वेगेन ग्राहिभी राक्षसैस्सह । सारथेश्चापि वेगेन तुण्डेनैवाहरच्छिरः ।। अङ्के निधाय वैदेहीं पपात भुवि रावण ' इत्यादि रामायणे ।।३८।।

---

१. ।। व्यवहारसिद्ध्यै इति ।। हनुमदभिवन्दनादिव्यवहारसिद्ध्यै । केचित् स्त्रीभावप्राप्त्यर्थमित्यर्थमाहुः । ईश्वर-वदन्याहंभावरहिते श्रियाऽप्यनवस्थितेः इन्द्रप्रवेशोऽप्याकृतावावश्यकः ।।३८-४५।। इति हो पुस्तके किञ्चिदधिकं पठ्यते ।

**गूढवाक्यार्थ–** ननु देव्या एव प्रवेशेनालं [प्रवेशेनैव इति स्यात्] शक्रप्रवेशः कुत इति चेन्न । ईश्वरवदन्याहंभावरहिते देहे श्रियोऽनवस्थानात् । न केवलं देविसन्निधिराकृतावित्यतो अन्यप्रवेशोऽपेक्षित इति भावः । तदुक्तम् । अन्याहंभावयुग्देह एवासौ हरिरास्थितः । न तदन्येषु देहेषु कचित्तस्यः प्रवेशनम् ।। इत्येकादशतात्पर्ये [११.२८] ।।३८।।

**मार्गे व्रजन्तमभियाय ततो हनूमान् संवारितो रविसुतेन च जानमानः ।**
**दैवं तु कार्यमथ कीर्तिमभीप्समानो रामस्य नैनमहनद्वचनाद्धरेश्च ।।३९।।**

**व्यासतीर्थीया–** मयैव वध्यौ भवतमिति हरेर्वचनाच्च ।।३९।।

**वादिराजीया–** जानमानो दैवं कार्यं जानमान इति सम्बन्धः ।।३९।।

**मधुसूदनीया–** ।। **कीर्तिमभीप्समानो रामस्येति** ।। तथाचोक्तं हनुमता भीमं प्रति 'मया तु निहते तस्मिन् रावणे लोककण्टके । कीर्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् ।।' इत्यारण्यपर्वणि [१५२.२०] ।।३९।।

**वरदराजीया–** ततस्तदनन्तरं मार्गे व्रजन्तं गच्छन्तं रावणं हनूमान् अभिपद्य प्राप्तोऽपि एनं रावणं नाहनत् न जघान । कुत इत्यपेक्षायां हेतुचतुष्टयमाह । रविसुतेन सुग्रीवेण संवारितो नैनं जहीति निवारित इति कृत्वा, तथा देवकार्यं देवतासम्बन्धिकार्यं अशेषराक्षससंहरणादिरूपं जानमानो जानातीति कृत्वा, अथशब्दः समुच्चये रामस्य कीर्तिमभीप्समानः इच्छमान इति कृत्वा, तथा हरेर्वचनात् जन्मत्रये 'मयैव वध्यौ भवताम्' इति जयविजयौ प्रति वचनाच्चेति हेतुचतुष्टयेनैनं न जघानेति भावः ।।३९।।

**जनार्दनीया–** ततः जटायुषो युद्धानन्तरं हनुमान् मार्गे गच्छन्तं रावणं अभियाय अभिगम्य एनं रावणं न जघान । यद्वा अभि इयाय न जघान च । शकन्ध्वादित्वात् पररूपम् । ननु जटायुषोऽप्यतिसमर्थो भक्तश्च हनुमान् कुतो नाहनदित्यपेक्षायां हेतुचतुष्टयं दर्शयति– **संवारित इति** ।। रविसुतेन सुग्रीवेण संवारितः मा जहीति निवारितः । दैवं देवतासम्बन्धिकार्यं सर्वराक्षसवधरूपं कार्यं जानमानः । इदानीं रावणे हते सर्वराक्षसवधो न भवेदिति जानन्निति भावः रामस्य कीर्तिं अभीप्समानः रावणवधेनाङ्गेषु रामबलप्रकाशः स्यादितीच्छन्निति भावः । हरेर्वचनात् 'मयैव वध्यौ भवतं त्रिजन्मसु' इति पूर्वं जयविजयौ प्रत्युक्तवचनान्नाहनदित्यर्थः । अत्र पूर्वपूर्वहेतुतः उत्तरोत्तरहेतुर्बलीयानिति द्रष्टव्यम् ।।३९।।

**अनन्तभट्टीया–** कार्यं जानमान इत्यन्वयः । हरेर्वचनात् अहमेव युवां वधिष्यामीति जयविजयौ प्रति उक्तवचनात् ।।३९–४०।।

**चट्टी–** अनन्तरं हनुमान् मार्गे व्रजन्तं गच्छन्तं रावणं अभियाय अभिगम्य एनं रावणं नाहनत् न जघान । कुत इत्यत हेतुचतुष्टयमाह । रविसुतेन सुग्रीवेण संवारितः मा न इति निवारितः, तथा दैवं देवतासम्बन्धिकार्यं सर्वराक्षसवधरूपं कार्यं जानमानः इदानीं रावणे हते सर्वराक्षसवधो न भवेत् इति जानतेति भावः । अथशब्दः समुच्चये । रामस्य कीर्तिमभीप्समानः रावणवधेन अज्ञेषु रामवलप्रकाशः स्यादिति इच्छन्निति भावः । हरेर्वचनात् 'मयैव वध्यौ भवतां त्रिजन्मसु' इति पूर्वं जयविजयौ प्रति उक्तवचनाच्चेति हेतुचतुष्टयेन नाहनदिति भावः ।।३९।।

**अतिविशद–** ।। **कीर्तिमभीप्समानो रामस्येति** ।। तथाचोक्तं हनुमता भीमं प्रति 'मया तु निहते तस्मिन् रावणे लोककण्टके । कीर्तिर्न स्याद्राघवस्य तत एतदुपेक्षितम् ।।' इत्यारण्यकपर्वणि ।।३९।।

**गूढवाक्यार्थ–** ।। **वचनाद्धरेश्चेति** ।। 'मयैव वध्यौ भवतं त्रिजन्मसु' इति जयविजयौ प्रति वचनादित्यर्थः ।।३९–४२।।

**प्राप्यैव राक्षस उतात्मपुरीं स तत्र सीताकृतिं प्रतिनिधाय ररक्ष चाथ**
**रामोऽपि तत्तु विनिहत्य सुदुष्टरक्षः प्राप्याश्रमं स्वदयितां न हि पश्यतीव ।।४०।।**

**वेदाङ्गतीर्थीया–** राक्षस उत राक्षसश्च स्वपुरीं प्राप्य अथ ररक्ष ।।४०।।

**वादिराजीया–** रामोऽपि तत्तु विनिहत्येत्यत्र स्वस्तीति दशायां कपटकारणेन मरणकालेऽपि परापकारकरणेन चेतरदैत्येभ्योऽपि तु विशेषेण सुदुष्टरक्ष इति सम्बन्धः । न पश्यतीवाऽभवद्धीति योजना । 'एष सर्वज्ञः' इति श्रुतेः सर्वज्ञत्वाख्यविरुद्धशक्तिप्रसिद्धिसूचनाय हिशब्दः ।।४०–४१।।

**मधुसूदनीया–** ।। **प्राप्यैवेति** ।। राक्षस आत्मपुरीं प्राप्य तत्राऽशोकवने सीतां प्रतिनिधाय ररक्ष । अत्र एवकारेण रावणः सीतासंसर्गं न कृतवान् किन्तु रक्षणमात्रमेव कृतवानिति सूचयति । तत्संसर्गं कुतो वा न कृतवानित्यतः परस्त्रीधर्षणे शापसद्भावादिति सूचयति चेति । तदुक्तम्–

'यद्यन्यरा[का]मां कामार्तो धर्षयिष्यति योषितम् । मूर्धा हि शतधा तस्य शकलीभविता तव[था] ।।
अस्मिन्नुदाहृते शापे [ह्यजे]जवेनाग्निसमप्रभे । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्युता ।।
श्रुत्वा च स दशग्रीवः तं शापं रोमहर्षणम् । नारीषु मैथुनं भावं नाकामास्वप्यरोचयत् ।।
स्त्रियश्च तेन निर्भीताः प्रीतिमापुः पतिव्रताः । नलकूबरनिर्मुक्तशापं श्रुत्वा मनः प्रियाम् ।।'
इत्यादि रामायणे [उ.का.२६.५५,५७]
मन्त्रिणां वाक्यमाकर्ण्य सस्मितो वाक्यमब्रवीत् । सत्यमेवमिदं किन्तु गोप्यं किञ्चिद्वदामि वः ।।
मया बलेनोपभुक्ता मञ्जुला पुञ्जकस्थली । पितामहो लोकहितः तदा शापं ददौ हि मे ।।

बलाच्चेद्भोक्ष्यसे काञ्चिच्छिरः शीर्येत ते तदा । शापोऽयं ननु सीतायाः पातिव्रत्यैकपालकः ।।'
इति सङ्ग्रहे [यु.का.१.३१–३२] च ।
'मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् । नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ।।
शप्तो ह्येष पुरा पापो रन्तुं रम्भां परामृशन् ।।'

इत्यरण्यपर्वणि [२८१.६०–६१] च सीतां प्रति त्रिजटावचनम् । तत्र सीतायाः भोजनं कथमिति प्रासङ्गिकी शङ्का 'परमान्नं तु वैदेह्याः ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ।।' [किष्कि.का.६२.८] इति रामायणवाक्येन परिहर्तव्या । [अनेन] राक्षसान्नादिसंसर्गोऽपि नास्तीति ज्ञायते]। रामोऽपि तत्त्विति तुशब्देन लोके श्रीरामेण पत्नीवियोगप्रदर्शनं तु भृगुशापेन कृतमिति सूचयति । तथा चोक्तम्–

'ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपुबलार्दनम् ।।
यस्मादवध्यां मे पत्नीं अवधीः क्रोधमूर्च्छितः । तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ।।
तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ।।' इत्युत्तररामायणे दूर्वाससो दशरथं प्रति
[अर.का.५१.१५–१६] ।।४०।।

**वरदराजीया–** उतानन्तरं राक्षसो रावण आत्मपुरीं लङ्कां प्राप्य स रावणस्तत्र लङ्कायां सीताकृतिं प्रतिनिधाय स्थापयित्वा ररक्षैव न तु बबाधे । अथानन्तरं रामोऽपि तत् सुदुष्टरक्षः अत्यन्तदुष्टराक्षसं मारीचं निहत्य आश्रमं प्राप्य च स्वदयितां न पश्यन्निव अन्वेषमाण इव चचारेति शेषः ।।४०।।

**जनार्दनीया–** स राक्षसो रावणः आत्मपुरीं प्राप्य उत तत्र पुर्यां सीताकृतिं प्रतिनिधाय, ररक्ष च ररक्षैव । अन्यत्र गमनविषये निरोधमकरोदित्यर्थः । तत् सुदुष्टरक्षः मृगरूपं मारीचाख्यं रक्षः निहत्य स्वदयितां सीतां न पश्यतीवेति हि प्रसिद्धिरभूदिति शेषः ।।४०।।

**चट्टी–** उत अनन्तरं सः राक्षसो रावणः आत्मपुरीं लङ्कापुरीं प्राप्य तत्र पुर्यां सीताकृतिं प्रतिनिधाय ररक्षैव अन्यत्रगमनरोधमकरोदित्यर्थः । तत्र राक्षसान्नं भोक्ष्यमाणा स्थिता किं उपवासमेव कृतवतीति शङ्का प्रत्यहं इन्द्रः तस्याः परमान्नं ददौ इति परिहर्तव्या । तदुक्तम्– 'परमान्नं तु वैदेह्याः ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ।।' इति रामायणे । अथ रामोऽपि सुदुष्टरक्षः मृगरूपं मारीचाख्यं रक्षः विनिहत्य आश्रमं प्राप्य स्वदयितां सीतां न पश्यतीवेति हि प्रसिद्धिः अभूदिति शेषः ।।

**अतिविशद–** ।। **प्राप्यैवेति** ।। राक्षसः आत्मपुरीं प्राप्य तत्राशोकवने सीताकृतिं प्रतिनिधाय ररक्ष । अत्र एवकारेण रावणः सीतासंसर्गं न कृतवानित्येतत् परस्त्रीदर्शने शापसद्भावादिति सूचयति । तदुक्तम् – 'यद्यन्यरा[का]मां कामार्तो धर्षयिष्यति योषितम् । मूर्धा हि शतधा तस्य शकलीभविता तव[था] ।।

अस्मिन्नुदाहृते शापे [ह्यजे]जवेनाग्निसमप्रभे । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ।। श्रुत्वा च स दशग्रीवः तं शापं रोमहर्षणम् । नारीषु मैथुनं भावं नाकामास्वप्यरोचयत् ।। स्त्रियश्च तेन निर्भीताः प्रीतिमापुः पतिव्रताः । नलकूबरनिर्मुक्तशापं श्रुत्वा मनः प्रियाम् ।।' इत्यादि रामायणे [उ.का.२६.५५, ५७] । मन्त्रिणां वाक्यमाकर्ण्य सस्मितो वाक्यमब्रवीत् । सत्यमेवमिदं किन्तु गोप्यं किञ्चिद्वदामि वः ।। मया बलेनोपभुक्ता मञ्जुला पुञ्जकस्थली । पितामहो लोकहितः तदा शापं ददौ हि मे ।। बलाच्चेद्भोक्ष्यसे काश्चिच्छिरः शीर्येत ते तदा । शापोऽयं ननु सीतायाः पातिव्रत्यैकपालकः ।।' इति सङ्ग्रहे [यु.का.१.३१–३२] च । 'मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् । नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ।। शप्तो ह्येष पुरा पापो रन्तुं रम्भां परामृशन् ।।' इत्यरण्यपर्वणि [२८१.६०–६१] सीतां प्रति त्रिजटावचनम् । तत्र सीतायाः भोजनं कथमिति प्रासङ्गिकी शङ्का 'परमन्नं तु वैदेह्या ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ।।' इति रामायणवाक्येन परिहर्तव्या ।। रामोऽपि तत्त्विति ।। तुशब्देन लोके श्रीरामेण पत्नीवियोगप्रदर्शनं भृगुशापेन कृतमिति सूचयति । तथाचोक्तम्– 'ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपुबलार्दनम् ।। यस्मादवध्यां मे पत्नीं अवधीः क्रोधमूर्च्छितः । तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ।।तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ।।' इत्युत्तररामायणे दूर्वाससो दशरथं प्रति [अर.का.५१.१५–१६] दुर्वाससा दशरथं प्रति ।।४०।।

**प्रमाणसङ्ग्रहः**– सीताकृतिं प्रतिनिधाय ररक्ष चाथ इति । अस्पृष्ट्वैव ररक्षेत्यर्थः । अस्पर्शने निमित्तं शापः । 'यद्यन्यरा[का]मां कामार्तो धर्षयिष्यति योषितम् । मूर्धा हि शतधा तस्य शकलीभविता तव[था] ।। अस्मिन्नुदाहृते शापे [ह्यजे] जवेनाग्निसमप्रभे । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ।। श्रुत्वा च स दशग्रीवः तं शापं रोमहर्षणम् । नारीषु मैथुनं भावं नाकामास्वप्यरोचयत् ।। स्त्रियश्च तेन निर्भीताः प्रीतिमापुः पतिव्रताः । नलकूबरनिर्मुक्तशापं श्रुत्वा मनः प्रियाम् ।।' इत्यादि रामायणे [उ.का.२६.५५, ५७] । मन्त्रिणां वाक्यमाकर्ण्य सस्मितो वाक्यमब्रवीत् । सत्यमेवमिदं किन्तु गोप्यं किञ्चिद्वदामि वः ।। मया बलेनोपभुक्ता मञ्जुला पुञ्जकस्थली । पितामहो लोकहितः तदा शापं ददौ हि मे ।। बलाच्चेद्भोक्ष्यसे काश्चिच्छिरः शीर्येत ते तदा । शापोऽयं ननु सीतायाः पातिव्रत्यैकपालकः ।।' इति सङ्ग्रहे [यु.का.१.३१–३२] च । 'मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् । नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ।। शप्तो ह्येष पुरा पापो रन्तुं रम्भां परामृशन् ।।' इत्यरण्यपर्वणि [२८१.६०–६१] त्रिजटावचनं सीतां प्रति । 'परमान्नं तु वैदेह्याः ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ।।' इति वचनात् राक्षसान्नादिसंसर्गोऽपि नास्तीति ज्ञायते ।।४०।।

बलाच्चेद्भोक्ष्यसे काश्चिच्छिरः शीर्येत ते तदा । शापोऽयं ननु सीतायाः पातिव्रत्यैकपालकः ।।'
इति सङ्ग्रहे [यु.का.१.३१–३२] च ।
'मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् । नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ।।
शप्तो ह्येष पुरा पापो रन्तुं रम्भां परामृशन् ।।'

इत्यरण्यपर्वणि [२८१.६०–६१] च सीतां प्रति त्रिजटावचनम् । तत्र सीतायाः भोजनं कथमिति प्रासङ्गिकी शङ्का 'परमान्नं तु वैदेह्याः ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ।।' [किष्कि.का.६२.८] इति रामायणवाक्येन परिहर्तव्या । [अनेन] राक्षसान्नादिसंसर्गोऽपि नास्तीति ज्ञायते]। रामोऽपि तत्त्विति तुशब्देन लोके श्रीरामेण पत्नीवियोगप्रदर्शनं तु भृगुशापेन कृतमिति सूचयति । तथा चोक्तम्–

'ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपुबलार्दनम् ।।
यस्मादवध्यां मे पत्नीं अवधीः क्रोधमूर्च्छितः । तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ।।
तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ।।' इत्युत्तररामायणे दूर्वाससो दशरथं प्रति [अर.का.५१.१५–१६] ।।४०।।

**वरदराजीया–** उतानन्तरं राक्षसो रावण आत्मपुरीं लङ्कां प्राप्य स रावणस्तत्र लङ्कायां सीताकृतिं प्रतिनिधाय स्थापयित्वा ररक्षैव न तु बबाधे । अथानन्तरं रामोऽपि तत् सुदुष्टरक्षः अत्यन्तदुष्टराक्षसं मारीचं निहत्य आश्रमं प्राप्य च स्वदयितां न पश्यन्निव अन्वेषमाण इव चचारेति शेषः ।।४०।।

**जनार्दनीया–** स राक्षसो रावणः आत्मपुरीं प्राप्य उत तत्र पुर्यां सीताकृतिं प्रतिनिधाय, ररक्ष च ररक्षैव । अन्यत्र गमनविषये निरोधमकरोदित्यर्थः । तत् सुदुष्टरक्षः मृगरूपं मारीचाख्यं रक्षः निहत्य स्वदयितां सीतां न पश्यतीवेति हि प्रसिद्धिरभूदिति शेषः ।।४०।।

**चट्टी–** उत अनन्तरं सः राक्षसो रावणः आत्मपुरीं लङ्कापुरीं प्राप्य तत्र पुर्यां सीताकृतिं प्रतिनिधाय ररक्षैव अन्यत्रगमनरोधमकरोदित्यर्थः । तत्र राक्षसान्नं भोक्ष्यमाणा स्थिता किं उपवासमेव कृतवतीति शङ्का प्रत्यहं इन्द्रः तस्याः परमान्नं ददौ इति परिहर्तव्या । तदुक्तम्– 'परमान्नं तु वैदेह्याः ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ।।' इति रामायणे । अथ रामोऽपि सुदुष्टरक्षः मृगरूपं मारीचाख्यं रक्षः विनिहत्य आश्रमं प्राप्य स्वदयितां सीतां न पश्यतीवेति हि प्रसिद्धिः अभूदिति शेषः ।।

**अतिविशद–** ।। **प्राप्यैवेति** ।। राक्षसः आत्मपुरीं प्राप्य तत्राशोकवने सीताकृतिं प्रतिनिधाय ररक्ष । अत्र एवकारेण रावणः सीतासंसर्गं न कृतवानित्येतत् परस्त्रीदर्शने शापसद्भावादिति सूचयति । तदुक्तम् – 'यद्यन्यरा[का]मां कामार्तो धर्षयिष्यति योषितम् । मूर्धा हि शतधा तस्य शकलीभविता तव[था] ।।

अस्मिन्नुदाहृते शापे [ह्यजे]जवेनाग्निसमप्रभे । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्चुता ।। श्रुत्वा च स दशग्रीवः तं शापं रोमहर्षणम् । नारीषु मैथुनं भावं नाकामास्वप्यरोचयत् ।। स्त्रियश्च तेन निर्भीताः प्रीतिमापुः पतिव्रताः । नलकूबरनिर्मुक्तशापं श्रुत्वा मनः प्रियाम् ।।' इत्यादि रामायणे [उ.का.२६.५५, ५७] । मन्त्रिणां वाक्यमाकर्ण्य सस्मितो वाक्यमब्रवीत् । सत्यमेवमिदं किन्तु गोप्यं किञ्चिद्वदामि वः ।। मया बलेनोपभुक्ता मञ्जुला पुञ्जकस्थली । पितामहो लोकहितः तदा शापं ददौ हि मे ।। बलाच्चेद्भोक्ष्यसे काञ्चिच्छिरः शीर्येत ते तदा । शापोऽयं ननु सीतायाः पातिव्रत्यैकपालकः ।।' इति सङ्ग्रहे [यु.का.१.३१–३२] च । 'मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् । नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ।। शप्तो ह्येष पुरा पापो रन्तुं रम्भां परामृशन् ।।' इत्यरण्यपर्वणि [२८१.६०–६१] सीतां प्रति त्रिजटावचनम् । तत्र सीतायाः भोजनं कथमिति प्रासङ्गिकी शङ्का 'परमन्नं तु वैदेह्या ज्ञत्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ।।' इति रामायणवाक्येन परिहर्तव्या ।। रामोऽपि तत्त्विति ।। तुशब्देन लोके श्रीरामेण पत्नीवियोगप्रदर्शनं भृगुशापेन कृतमिति सूचयति । तथाचोक्तम्– 'ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपुबलार्दनम् ।। यस्मादवध्यां मे पत्नीं अवधीः क्रोधमूर्च्छितः । तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ।।तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ।।' इत्युत्तररामायणे दूर्वाससो दशरथं प्रति [अर.का.५१.१५–१६] दुर्वाससा दशरथं प्रति ।।४०।।

**प्रमाणसङ्ग्रहः**– सीताकृतिं प्रतिनिधाय ररक्ष चाथ इति । अस्पृष्ट्वैव ररक्षेत्यर्थः । अस्पर्शने निमित्तं शापः । 'यद्यन्यरा[का]मां कामार्तो धर्षयिष्यति योषितम् । मूर्धा हि शतधा तस्य शकलीभविता तव[धा] ।। अस्मिन्नुदाहृते शापे [ह्यजे] जवेनाग्निसमप्रभे । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्चुता ।। श्रुत्वा च स दशग्रीवः तं शापं रोमहर्षणम् । नारीषु मैथुनं भावं नाकामास्वप्यरोचयत् ।। स्त्रियश्च तेन निर्भीताः प्रीतिमापुः पतिव्रताः । नलकूबरनिर्मुक्तशापं श्रुत्वा मनः प्रियाम् ।।' इत्यादि रामायणे [उ.का.२६.५५, ५७] । मन्त्रिणां वाक्यमाकर्ण्य सस्मितो वाक्यमब्रवीत् । सत्यमेवमिदं किन्तु गोप्यं किञ्चिद्वदामि वः ।। मया बलेनोपभुक्ता मञ्जुला पुञ्जकस्थली । पितामहो लोकहितः तदा शापं ददौ हि मे ।। बलाच्चेद्भोक्ष्यसे काञ्चिच्छिरः शीर्येत ते तदा । शापोऽयं ननु सीतायाः पातिव्रत्यैकपालकः ।।' इति सङ्ग्रहे [यु.का.१.३१–३२] च । 'मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् । नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ।। शप्तो ह्येष पुरा पापो रन्तुं रम्भां परामृशन् ।।' इत्यरण्यपर्वणि [२८१.६०–६१] त्रिजटावचनं सीतां प्रति । 'परमान्नं तु वैदेह्याः ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ।।' इति वचनात् राक्षसान्नादिसंसर्गोऽपि नास्तीति ज्ञायते ।।४०।।

**अन्वेषमाण इव तं च ददर्श गृध्रं सीतां रिरक्षिषुमथो रिपुणा विशस्तम् ।**
**[१]मन्दात्मचेष्टममुनोक्तमरेश्च कर्म श्रुत्वा मृतं तमदहत्स्वगतिं[२] तथाऽदात् ।।४१।।**

**वेदाङ्गतीर्थीया–** विशस्तम् ।।४१–४२।।

**मधुसूदनीया–** ।। **अन्वेषमाण इति** ।। अदहत् दहनादिप्रेतकर्म कृतवान् इत्यर्थः । ननु जटायुषो रामः दहनादिकं किमर्थमकरोत् । न च स्वभक्तत्वादिति वाच्यम् । शरभङ्गशबर्यादिः स्वभक्तत्वेऽपि दहनाद्यकरणात् । अतोऽत्र किं विशेषनिमित्तं इत्यतो विशेषनिमित्तं स्वपितृसखत्वं इति सूचयितुं अन्त्यश्चशब्दः । तदुक्तम्– 'सखा दशरथस्यापि जटायुररुणात्मजः । गृध्रराजो महावीर्यः सम्पातिर्यस्य सोदरः ।। संस्कारं लम्भयामास सखायं पूजयन् पितुः ।।' इति आरण्यपर्वणि [२८०.१,२४] 'यत्र प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः । तत्स्वर्गगमनं रामो क्षिप्रमेवाकरोद्बुधः ।। ततो गोदावरीं गत्वा नदीं नरवरात्मजौ । उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ।।' इति रामायणे [अर.का.६८.३४–३५] । जटायुर्नासिकाक्षेत्रे मृत इति ज्ञेयम् ।।४१।।

**वरदराजीया–** अथानंतरं सीतां रिरिक्षुं रक्षितुं इच्छुं रिपुणा रावणेन अभिशस्तं आयुधैः छिन्नं मन्दात्मचेष्टं मन्दा अल्पीभूता आत्मनः स्वस्य चेष्टा शरीरव्यापारो यस्य तं गृध्रं ददर्श । अमुना गृध्रेणोक्तं अरेः वैरिणो रावणस्य सीताप्रतिकृतिनयनरूपं कर्म श्रुत्वा मृतं तं गृध्रं अदहत् । तद्देहं संस्कृतवान् यथा स्वगतिं स्वयोग्यामुत्तमां गतिं स्वप्राप्तिं वा अदाच्चेत्यर्थः ।।४१।।

**जनार्दनीया–** अन्वेषमाण इव सीतान्वेषणं कुर्वन्निव इतस्ततः परिभ्रमन् राम इति वाक्यशेषः । सीतां रिरक्षिषुः रक्षितुमिच्छति रिरक्षिषति । रिरक्षिषतीति रिरक्षिषुः तं तथा । रिपुणा वैरिणा रावणेन । विशस्तं हतप्रायम् । मन्दा आत्मनः जीवस्य देहस्य वा चेष्टा व्यापारो यस्येति विग्रहः । तं गृध्रं गृध्रपक्षिस्वरूपं जटायुषं ददर्श । अमुना जटायुषा उक्तं अरेः वैरिणो रावणस्य कर्म सीताप्रतिकृति-

---

१. ननु प्राप्तब्रह्मवरस्य दशमुखस्य कृपाणकृन्तितोऽपि जटायुः कथं तदानीमेव नममार ? इत्यतः उच्यते । आकृत्याविष्टसीतादत्तवरः जटायुः यावद्रामागमनं प्राणान् दधार । सा हि खलु जीवानां प्राणधारिणी यथाहुः– 'जीवभूतां महाबाहो ययेदं धार्यते जगत्' इति । एतदेव पुराणेषु उच्यते । तथाहि– 'यावद्रामेण सङ्गस्ते भविष्यति महाद्विज । तावत्तिष्ठन्तु ते प्राणाः इत्युक्त्वा तं खगोत्तमम् ।।' महेश्वरतीर्थस्तु स्कान्दवचनमुदाहरति तथाहि- 'देवी मां प्राह राजेन्द्र यावत्सम्भाषणं मम । भवतस्तावदासन्मे प्राणा इत्याह जानकी ।।'इति उमा.सं.९ ।

२. 'या गतिर्यज्ञशीलानां आहिताग्नेश्च या गतिः अपरावर्तिनां या च या च भूमिप्रदायिनाम् ।। मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ।।' इति रामवचनम् [अर.का.६८.२९-३०] । 'मत्कृते मरणं यस्मात् त्वया प्राप्तं द्विजोत्तम । तस्माद्रामप्रसादेन विष्णुलोकमवाप्स्यसि ।।' इति सीतावचनम् ।

हरणादिकर्म श्रुत्वा, मृतं तं जटायुषं अदहत् । तथा स्वकृतसंस्कारानुसारिणीं स्वगतिं स्वलोकगतिं अदात् ॥४१॥

**अनन्तभट्टीया–** अरेः रावणस्य ॥४१॥

**चट्टी–** अन्वेषमाण इव सीतान्वेषणं कुर्वन्निव इतस्ततः परिभ्रमन् राम इति शेषः । अथ सीतां रिरक्षिषुं रक्षितुमिच्छुं रिपुणा रावणेन विशस्तं हतप्रायम् । मन्दा आत्मनः देहस्य चेष्टा व्यापारो यस्य तम् । गृध्रं पक्षिस्वरूपं अमुं ददर्श । अमुना जटायुषा उक्तं हरेः वैरिणः रावणस्य कर्म सीताप्रतिकृतिहरणादिकर्म श्रुत्वा मृतं तं पितृसखायं जटायुषं अदहत् । तद्देहं संस्कृतवान् । तथा स्वकृतसेवानुसारिणीं स्वगतिं स्वलोकगतिं स्वप्राप्तिमिति वा अदात् ॥४१॥

**अतिविशद–** ॥ **अन्वेषमाण इति** ॥ अदहत् दहनादिप्रेतकर्म कृतवानित्यर्थः । ननु जटायुषो दहनादि रामः किमर्थमकरोत् । नच स्वभक्तत्वादिति वाच्यम् । शरभङ्गशबर्यादेः स्वभक्तत्वेऽपि दहनाद्यकरणात् । अतोऽत्र किं विशेषनिमित्तमित्यतो विशेषनिमित्तं स्वपितृसखत्वमिति सूचयितुं चशव्दः । तदुक्तम्– 'सखा दशरथस्यापि जटायुररुणात्मजः । गृध्रराजो महावीर्यः सम्पातिर्यस्य सोदरः ॥ संस्कारं लम्भयामास सखायं पूजयन् पितुः ॥' इति आरण्यपर्वणि [२८०.१,२४] 'यत्र प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः । तत्स्वर्गगमनं रामो क्षिप्रमेवाकरोद्बुधः ॥ ततो गोदावरीं गत्वा नदीं नरवरात्मजौ । उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥' इति रामायणे । जटायुषो मरणं नासिकाक्षेत्र इति ज्ञातव्यम् ।

**प्रमाणसङ्ग्रहः–** ॥ **मृतं तमदहत् इति** ॥ स्वपितृसखित्वात् जटायुषः प्रेतकर्मकरणम् । तदुक्तं अरण्यपर्वणि– 'सखा दशरथस्यापि जटायुररुणात्मजः । गृध्रराजो महावीर्यः सम्पातिर्यस्य सोदरः ॥ संस्कारं लम्भयामास सखायं पूजयन् पितुः ॥' इति आरण्यपर्वणि [२८०.१,२४] ॥४१॥

**[१]अन्यत्र चैव विचरन् सहितोऽनुजेन प्राप्तः करौ स सहसाऽथ कबन्धनाम्नः ।**
**[२]धातुर्वरादखिलजायिन उज्झितस्य मृत्योश्च वज्रपतनादतिकुञ्चितस्य ॥४२॥**

---

१. 'अन्यत्र चैव विचरन्' इति कथयता आचार्यवर्येण महारण्यं दण्डकारण्यं व्यतिक्रम्य जनस्थानात् त्रिकोशाभ्यन्तरे विद्यमानं क्रौञ्चारण्याख्यं गहनं वनं विविशतुः इति रामायणकथा समसूचि । तथाच दण्डकारण्यात् क्रौञ्चारण्यं, तदतिक्रमानन्तरं मार्गमध्ये मतङ्गाश्रमं ददर्शतुः इति रामायणवाक्यादवगम्यते । वा.रा.३.६९.३-८ ।

२. 'अहं हि तपसोग्रेण पितामहमतोषयम् । दीर्घमायुः स मे प्रादात् ततो मां विभ्रमोऽस्पृशत् ॥ दीर्घमायुर्मया प्राप्तं किं मां शक्रः करिष्यति । इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ॥ तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा । सक्थिनी च शिरश्चैव शरीरे सम्प्रवेशितम् ॥ स मया याच्यमानः सन् नानयद्यमशासनम् । पितामहवचः सत्यं तदास्त्विति ममाब्रवीत् ॥' इति वाल्मीकीये ३.७१.८-१२ ।

**वादिराजीया–** अथ गृध्रगतिदानानन्तरमन्यत्र विचरन्नेवेत्यथैवशब्दयोः सम्बन्धः । धातुर्वरादखिलजायिनो मृत्योरुज्झितस्य चेति चशब्दसम्बन्धः । कबन्ध एव दृश्यते शिरस्तु वज्रपातात् कबन्धान्तर्विवर एव लग्नमतः कबन्ध इत्याख्या ।।४२।।

**मधुसूदनीया–** ।। **अन्यत्र चैव विचरन्निति** ।। अन्यत्र विचरन् सञ्चरन् अनुजेन सहितः कबन्धनाम्नः राक्षसस्य करौ सहसा प्राप्तौ । अस्य राक्षसस्य कबन्धनाम न रूढम् । किन्तु यौगिकमित्याह– **वज्रपतनात् अतिकुञ्चितस्येति** ।। अनेन कबन्धनाम्नः कस्य शिरसः बन्धः कुञ्चनं यस्य सः कबन्धः तन्नामकस्येत्युक्तं भवति । 'क्रियावाचित्वमाख्यातुं एकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ।।' इत्यभियुक्तोक्तेः बधिधातोः कुञ्चनार्थत्वं युक्तं इति ज्ञेयम् ।

**वरदराजीया–** अथानुजेन लक्ष्मणेन सहितः स रामो अन्यत्राश्रमान्तरे विचरन् सहसा अकस्मात् कबन्धनाम्नो राक्षसस्य करौ हस्तौ प्राप्तः । कथंभूतस्य धातुर्ब्रह्मणो वरादखिलजायिन अखिलं जेतुं शीलमस्य अस्तीति तथा तस्य तस्मादेव मृत्योश्च मरणादप्युज्झितस्यातिक्रान्तस्य इन्द्रस्य वज्रपतनात् अतिकुञ्चितस्य कुक्षिगतस्य आस्यस्य कबन्धनाम्न इत्यनेनान्वयः ।।४२।।

**जनार्दनीया–** अनुजेन सहितः स रामः । अन्यत्र वनान्तरे विचरन् सन् । सहसा अकस्मात् । धातुर्वरात् अखिलं विश्वं जेतुं शीलमस्यास्तीत्यखिलजायी तस्य । 'सुप्यजातौ णिनिस्ताच्छील्ये' [सि.कौ.२९८८] इत्यनेन णिनिः, णित्वात् वृद्धिः । मृत्योर्मरणात् उज्झितस्य मुक्तस्य । वज्रपतनात् इन्द्रेण मुक्तवज्रपतनादित्यर्थः । अत्यन्तं कुञ्चितस्य उदरे शिरसः सक्थिप्रवेशात् सङ्कोचं प्राप्तस्य कबन्धनाम्नो राक्षसस्य करौ प्राप्तोऽभूदिति शेषः ।।४२।।

**अनन्तभट्टीया–** मृत्योः मृत्युना कुञ्चितस्य कुक्षिगास्यस्य ।।४२।।

**चट्टी–** अथ अनुजेन लक्ष्मणेन सहितः रामो अन्यत्र वनान्तरे विचरन्नेव सहसा अकस्मात् धातुः ब्रह्मणः वरात् । अखिलं विश्वं जेतुं शीलमस्यास्तीति अखिलजायी तस्य । 'सुप्यजातौ णिनिस्ताच्छील्ये' इत्यनेन णिनिः । णित्वाद् वृद्धिः मृत्योर्मरणादुज्झितस्य च मुक्तस्य वज्रपतनादत्यन्तं कुञ्चितस्य उदरे शिरसः प्रवेशात् सङ्कोचं प्राप्तस्य कबन्धनाम्नो राक्षसस्य करौ प्राप्तः । अस्य राक्षसस्य कबन्धनाम रूढं न किन्तु यौगिकम् । कस्य शिरसः बन्धः कुञ्चनं यस्य सः कबन्धः इत्युक्तं भवति । 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ।।' इत्यभियुक्तोक्तेः बधिधातोः कुञ्चनार्थकत्वं युक्तमिति ज्ञेयम् ।।४२।।

**अतिविशद–** अन्यत्र चैव विचरन्निति अन्यत्र विचरन् सञ्चरन् अनुजेन सहितः । कबन्धनाम रूढं न किन्तु यौगिकमित्याह– **वज्रपतनादतिकुञ्चितस्येति** ।। अनेन कबन्धनाम्नः कस्य शिरसः बन्धः

कुञ्चनं यस्य सः कबन्धः तन्नामकस्येत्युक्तं भवति । 'क्रियावाचित्वमाख्यातुं एकैकोऽर्थः प्रचक्षते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ।।' इत्यभियुक्तोक्तेः बन्धधातोः कुञ्चनार्थत्वमुक्तमिति ज्ञेयम् ।

**छित्त्वास्य बाहुयुगलं सहितोऽनुजेन तं पूर्ववत्प्रतिविधाय[1] सुरेन्द्रभृत्यम् ।**
**नाम्ना दनुं त्रिजटयैव पुराभिजातं गन्धर्वमाशु च ततोऽपि तदर्चितोऽगात्[2] ।।४३।।**

**वेदाङ्गतीर्थीया–** अनुजेन सहितः छित्वेति उभाभ्यां बाहुद्वयं छिन्नमिति भावः । पूर्ववत् प्रतिविधाय गन्धर्वं कृत्वेत्यर्थः । पुरा नाम्ना दनुं गन्धर्वं अत्र त्रिजटयाऽभिजातम् ।।४३।।

**वादिराजीया–** त्रिजटयैवेत्यत्रैवकारस्य पूर्ववदेव प्रतिविधायेति सम्बन्धः ।।४३।।

**मधुसूदनीया–** प्राप्त्यनन्तरं किं कृतवानित्यतः आह– **छित्वेति** ।। अनुजेन सहितः तस्य बाहुयुगलं छित्वा कबन्धं पूर्ववद् यथा विराधं विले प्रक्षिप्य हतवान् तथैव विले प्रक्षिप्य हत्वेत्यर्थः । 'रामाज्ञयाऽथ सौमित्रिः तं देहमदधाद्विले' इत्युक्तेः । ननु इदानीं हतः कबन्धः पूर्वं क इत्यत आह– **सुरेन्द्रभृत्यमिति** ।। इदानीं कुत्रोत्पन्नः तस्य रूढनाम च किं इत्यत आह– **नाम्ना दनुमिति** ।। पुरा पूर्वजन्मनि इन्द्रभृत्यं गन्धर्वं विश्वावस्वाख्यं इदानीं त्रिजटायां विप्रशापेन जातं नाम्ना दनुं इति पूर्वेणान्वयः । 'तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप । प्राप्तो ब्राह्मणशापेन योनिं राक्षससेविताम् ।।' इत्यारण्यपर्ववचनात् [२८०.४०] 'अष्टमवसुवत् विश्वावसुगन्धर्वस्यैव दनुरिति नामान्तरम्' इति केचिदाहुः । [3]एतेन 'तं पूर्ववत् सुरेन्द्रभृत्यं प्रतिविधाय तदर्चितोऽगात्' इत्येकेषां व्याख्यानं अपास्तम् । तस्य मरणानन्तरं सुरेन्द्रभृत्यत्वस्य स्वयमेव सिद्धत्वात् ।।४३।।

**वरदराजीया–** अनुजेन लक्ष्मणेन सहितो अस्य कबन्धस्य बाहुयुगलं छित्वा उभाभ्यां मिलित्वा बाहुद्वयं छिन्नमिति भावः । [4]लक्ष्मणेन दाहयित्वा चेति द्रष्टव्यम् । तं कबन्धं पूर्ववत् पूर्वे यथा

---

१. 'प्रतिनिधाय' इति जनार्दनीयताम्रपर्णीययोः पाठान्तरम् ।

२. 'कबन्धरामसंवादं ये श्रृण्वन्ति नरा भुवि । विप्रावमानजनितं पापान्नाशं गमिष्यति ।।' इति उमा.सं९.अ ।

३. यत्तु मधुसूदनीये 'तस्य मरणानन्तरं सुरेन्द्रभृत्यत्वस्य स्वयमेव सिद्धत्वात्' इत्यादि प्रतनव्याख्यानपराकरणम् । तदपि चिन्त्यम् । पूर्वं विराधोद्धारप्रसङ्गे स्वतःसिद्धस्यैव स्वमूलरूपगमनस्य 'प्रादाच्च तस्य सुगतिं निजगायकस्य' इत्यादिना आचार्यचरणैरेव उक्तत्वात् । किञ्च 'पूर्ववत्प्रतिविधाय सुरेन्द्रभृत्यम्' इत्युक्तिः 'किं श्रीरामः कबन्धस्य कबन्धत्वं हापयित्वा दनुमेव व्यधात् उत स्वमूलरूपं विश्वावसुस्वरूपं प्रापयामास? इति शङ्काशमनिकापि भवति । अतः चिरन्तनव्याख्यानमेव पेशलमिति प्रतीमः ।

४. 'लक्ष्मणस्तु महोल्काभिः ज्वलिताभिः समन्ततः । चित्तमादीपयामास सा प्रजज्वाल सर्वतः ।।' इत्यार्षे ३.७२.२ ।

सुरेन्द्रभृत्य आसीत् तथा सुरेन्द्रस्य भृत्यं प्रतिविधाय पुनः कृत्वा । नन्वयं कबन्धः पूर्वं क इदानीं च कुत्रोत्पन्न इत्यत आह– **नाम्ना चेति** ।। पुरा पूर्वं नाम्ना दनुगन्धर्व अत्र त्रिजटानाम्न्यां राक्षस्यां अभिजातं उत्पन्नं पूर्ववत्कृत्वेति सम्बन्धः । तदर्चितः तेन तद्दनुनाम्ना गन्धर्वेणार्चितः तदनन्तरं अगात् । स्थानान्तरमिति शेषः ।।४३।।

**जनार्दनीया–** अनुजेन सहितः रामः अस्य कबन्धस्य बाहुयुगलं छित्वा । अनुजेन सहित इत्यनेन लक्ष्मणोऽप्येकं बाहुं चिच्छेदेत्यर्थः । तं देहं पूर्ववत् विराधवत् प्रतिविधाय । अन्तर्णीतणिच् । बिलगं कारयित्वा । तदुक्तं सङ्ग्रहे 'रामाज्ञयाथ सौमित्रिस्तद्देहमदधाद्बिले' इति [अर.का.६.२९] । गन्धर्वं विश्वावस्वाख्यं गन्धर्वम् । त्रिजटानाम्न्या राक्षस्या अभिजातम् । [1]स्थूलशिरोनामब्राह्मणशापेनेति शेषः । पुरा इन्द्रस्पर्धायाः पूर्वम् । नाम्ना दनुं सुरेन्द्रभृत्यं गन्धर्वम् । प्रतिविधायेति देहलीदीपवत् अत्रापि सम्बध्यते । प्रतिविधाय कृत्वा । प्रतिनिधायेत्यपि पाठः । तत्र पूर्ववत् प्रतिनिधायेत्यन्तर्णीतणिच् । बिलमिति शेषः । सुरेन्द्रभृत्यं कृत्वेति शेषः । ततः तस्माद्देशात् । तेन विश्वावसुना । अर्चितोऽगादिति योजना । विश्वावसुः शापेन दनुनामा राक्षसो भूत्वा इन्द्रकृतकुक्षिगास्यत्वात् कबन्धनामाऽभूदित्यर्थः । अयं पूर्वं विश्वावसुगन्धर्व इति आरण्यपर्वण्युक्तम् । यथा 'तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप । प्राप्तो ब्राह्मणशापेन योनिं राक्षससेविताम् ।।' इति [२८०.४२] दनुरिति नाम्ना दानव इत्युक्तम् । आर्षे रामायणे तथा '...दनुर्नाम्ना च दानवम् । इन्द्रकोपादिदं रूपं प्राप्तवन्तमवैहि च ।।' इति [अर.का.७१.७] 'तस्य बाहुप्रयुक्तेन वज्रेण शतपर्वणा । सक्थीनि मे शिरश्चैव शरीरे त्रीण्यवेशयत् ।।' इत्युक्तम् । [अर.का ७१.११] राक्षसत्वे दनुनामवान् इत्याचार्यैरपि सप्तदशोऽध्याये जरासन्धराजसंवादे उक्तं यथा 'अतोऽन्यथा दनुर्यथा वरादमृत्युकोऽपि सन् । सुरेन्द्रवज्रताडनात् बभूव कुक्षिगास्ययुक् ।।' इति । पुरा पूर्वं नाम्ना दनुगन्धर्वं अत्र त्रिजटानाम्न्यां राक्षस्यां अभिजातं उत्पन्नम् । पूर्ववत् कृत्वेति सम्बन्ध इति केचिदाहुः । तदुक्तं विष्णुभट्टीयतारतम्यस्तोत्रे तथा । 'दमघोषः कबन्धश्च दनुगन्धर्व उच्यते' इति । यत्तु सङ्ग्रहे– 'दनुनामास्मि गन्धर्वः शापाद्रक्षस्त्वमागतः' [अर.का.६.२८] इत्येतस्य गन्धर्वो विश्वावसुगन्धर्वः शापात् स्थूलशिरःशापाद्रक्षस्त्वमागतः इति एतस्य दनुनामास्मीत्यर्थः । 'दनुस्वरूपी प्रोवाच' इत्यत्र दनुःस्वरूपी गन्धर्वः विश्वावसुरूपी सन् प्रोवाचेत्यर्थः । 'दनुर्दनुजसूदनम्' 'दनुनोक्तेन वर्त्मना' [सं.रा.अर.का.६.३१] इत्येतत्पूर्वं दनुत्वात् ग्रन्थकारेण तथोक्तमिति ।।४३।।

---

१. 'पुरा राम महाबाहो महाबलपराक्रमम् । रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ।। यथा सूर्यस्य सोमस्य शक्रस्य च यथा वपुः । सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् ।। ऋषीन् वनगतान् राम त्रासयामि ततस्ततः । ततः स्थूलशिरा नाम महर्षिः कोपितो मया ।। एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ।।' इति रामायणे ३.७१.१-४ ।

**अनन्तभट्टीया–** पूर्ववत् विराधवत् बिलगमित्यर्थः तं तत्र लक्ष्मणेन अदहच्चेति द्रष्टव्यम् मूलगन्धर्वश्च विधाय...* ।।४३।।

**ताम्रपर्णीया–** ।। **तं पूर्ववत् इति** ।। उभाभ्यां वामदक्षिणहस्तच्छेदे कृते मृतं लक्ष्मणेन पूर्ववत् बिले निधाय । पुरा नाम्ना दनुं गन्धर्वं त्रिजटया अभिजातं तं पूर्ववत् सुरेन्द्रभृत्यं प्रतिनिधाय कृत्वा तदर्चितः सन् ततो देशात् अगात् इत्यर्थः । स्पष्टं च एतत् सङ्ग्रहरामायणे ।।४३।।

**चट्टी–** तत्प्राप्त्यनन्तरं किं कृतवानित्यत आह– **छित्वेति** ।। अनुजेन सहितः स रामः अस्य कबन्धस्य बाहुयुगलं छित्वा । अनुजेन सहित इत्यनेन लक्ष्मणोप्येकं बाहुं चिच्छेदेत्यर्थः । तं कबन्धं पूर्ववत् विराधवत् प्रतिविधाय । अन्तर्णीतणिच् । बिलगं चकार हत्वा बिले प्रक्षिप्य हत्वेत्यर्थः । 'रामाज्ञयाथ सौमित्रिः तद्देहमदधाद् बिले' इति विष्णुपुराणोक्तेः । तदर्चितः तेन विश्वावसुना अर्चितः आशु ततः तस्मात् देशादगादिति योजना । ननु इदानीं हतः कबन्धः पूर्वं कः इदानीं कुत्रोत्पन्नः तस्य रूढनाम किमित्यत आह– **पुरेति** ।। पुरा पूर्वजन्मनि सुरेन्द्रभृत्यं गन्धर्वं विश्वावस्वख्यमिदानीं त्रिजटायाः त्रिजटानाम्न्याः राक्षस्याः स्थूलशिरोनामब्राह्मणशापेनाभिजातमुत्पन्नं नाम्ना दनुं तमिति पूर्वेणान्वयः । अयं पूर्वं विश्वावसुगन्धर्व इत्यरण्यपर्वण्युक्तम् । यथा– 'तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप । प्राप्तो ब्राह्मणशापेन योनिं राक्षससेविताम् ।।' इति । 'अष्टमवसुवत् विश्वावसुगन्धर्वस्यैव दनुरिति नामान्तरम्' इति केचिदाहुः । राक्षसत्वे दनुनामवानित्याचार्यैरपि सप्तदशाध्याये जरासन्धराजसंवादे उक्तं– 'अतोऽन्यथा दनुर्यथा वरादमृत्यकोऽपि सन् । सुरेन्द्रवज्रताडनात् बभूव कुक्षिगास्ययुक् ।।' इति 'पूर्वं नाम्ना दनुं गन्धर्वं अत्र त्रिजटानाम्न्या राक्षस्या अभिजातं पूर्ववत् हत्वेति सम्बन्धः' इति केचिदाहुः । तदुक्तं विष्णुभट्टीयतारतम्यस्तोत्रे 'दमघोषः कबन्धश्च दनुगन्धर्व उच्यते' इति ।।४३।।

**भावचन्द्रिका–** पुरा नाम्ना दनुं गन्धर्वम् । 'दनुनामास्मि गन्धर्वः शापाद्रक्षस्त्वमागत' इति 'तस्य आचचक्षे गन्धर्वो विश्वावसुरहं नृप । प्राप्तो ब्रह्मर्षिशापेन योनिं राक्षससेविताम् ।।' इति भारते [वनपर्व. २८०.४२] इति रामं प्रति कबन्धदेहान्निर्गतस्य वचनम् । दनोर्नामान्तरम् ।।४३–५०।।

**अतिविशद–** प्राप्त्यनन्तरं किं कृतवानित्यत आह– **चिच्छेदेति** ।। अनुजेन सहितः अस्य बाहुयुगलं छित्वा कबन्धं पूर्ववत् यथा विराधं बिले प्रक्षिप्य हतवान् तथेति शेषः । 'रामाज्ञयाथ सौमित्रिः तद्देहमदधात् बिले' इत्युक्तेः । नन्विदानीं निहतः कबन्धः पूर्वं क इत्यत आह– **सुरेन्द्रभृत्यमिति** ।। इदानीं कुत्रोत्पन्नः तद्रूढनाम च किमित्यत आह– **नाम्ना दनुमिति** ।। पुरा पूर्वजन्मनि इन्द्रभृत्यं गन्धर्वं विश्वावस्वाख्यं इदानीं त्रिजटायां विप्रशापेन जातम् । नाम्ना दनुमिति पूर्वेण अन्वयः । 'तस्याचचक्षे वसुवित्' 'विश्वावसुगन्धर्वस्यैव दनुरिति नामान्तरम्' इति केचिदाहुः ।।४३।।

**प्रमाणसङ्ग्रह–** ।। **पूर्ववत् प्रतिनिधायेति** ।। 'रामाज्ञयाथ सौमित्रिः तद्देहमदधाद्बिले' इति श्रीविष्णुपुराणवचनात् अस्यार्थोऽवगन्तव्यः ।।४३।।

**गूढवाक्यार्थ–** ।। **तं पूर्ववदिति** ।। पुरा नाम्ना दनुं गन्धर्वं इदानीं त्रिजटयाभिजातं तं पूर्ववद् बिलगं कृत्वा सुरेन्द्रभृत्यं प्रतिविधाय कृत्वा तदर्चितस्सन् ततो देशान्तरमगादित्यर्थः ।।४३।।

**दृष्ट्वा तमेव [1]शबरी परमं हरिं च ज्ञात्वा विवेश दहनं पुरतोऽस्य तस्यै ।**
**प्रादात्स्वलोकमिममेव हि सा प्रतीक्ष्य पूर्वं मतङ्गवचनेन वनेऽ[2]त्रसाऽभूत् ।।४४।।**

**व्यासतीर्थीया–** अत्रसा उद्वेगरहिता । त्रसी उद्वेगे ।।४४।।

**वेदाङ्गतीर्थीया–** सा पूर्वं मतङ्गवचनेन रामागमनं प्रतीक्षस्वेति मतङ्गवचनेन अत्रसा भयरहिता अभूदिति योजना ।।४४–४५।।

**वादिराजीया–** पूर्वं या शबरी मतङ्गवचनेन रामं परमं सर्वोत्तमं ज्ञात्वा तमेव रामं दृष्ट्वास्य पुरतः दहनं विवेश तस्यै स्वलोकं प्रादाद्धि । 'दृष्ट्वैव मुच्यते' इति प्रमाणप्रसिद्धिसूचनाय हिशब्दः । सा शबरी इममेव रामं प्रतीक्ष्य वनेऽत्रसा त्रासरहिता सती अभूदिति योजना । त्रसुधातोः पचाद्यचि कृते त्रस इत्यपि रूपमस्ति । अतस्तच्छब्दद्वयाभावात् न पौनरुक्त्यमिति ज्ञेयम् ।।४४।।

**मधुसूदनीया–** मतङ्गवचनेन 'आगमिष्यति काकुत्स्थः सुपुण्यं तव चाश्रमम् । स ते प्रतिगृहीतव्यो रामस्सौमित्रिणा सह ।। तमर्चित्वा ध्रुवं स्वर्गो भविष्यति तथाक्षयः ।।' इति रामायणोक्तप्रकारेण [अर.का.७४.१५,१६] ।।४४।।

**वरदराजीया–** शबरी शबरजाता तन्नामिका काचित् स्त्री तं रामं परमं सर्वोत्तमं तत एव हरिं साक्षान्नारायणं ज्ञात्वैवास्य रामस्य पुरतो अग्रे दहनं वह्निं विवेश । प्रवेशेन तद्देहं त्यक्तवतीत्यर्थः । रामः तस्यै शबर्यै स्वलोकं स्वस्य लोकं स्थानं प्रादात् । सा शबरी पूर्वं मतङ्गस्य ऋषेः वचनेन रामोऽत्रागमिष्यतीत्येवं रूपेण वचनेन अस्मिन्नाश्रमे इमं रामं प्रतीक्ष्यैव तदागमनं प्रतीक्षन्ती अत्रसा त्रासरहिता भयरहितेति यावत् । यद्वा अत्रैव वने सा प्रसिद्धेति द्वितीयतच्छब्दस्य प्रसिद्धमर्थः । 'सर्वनामप्रसिद्धार्थम्' इति वचनात् अतो न पौनरुक्त्यमिति द्रष्टव्यम् ।।४४।।

---

१. गोविन्दराजीये तु– शबरी प्रतिलोमा स्त्री । तदुक्तं नारदीये- नृपायां वैश्यतो जातः शबरः परिकीर्तितः । मधूनि वृक्षादानीय विक्रीणीते स्ववृत्तये ।। इति ।।

२. 'अत्र सा' इति भिन्नपदमिति चट्टीटिप्पण्याशयः ।

**जनार्दनीया**— शबरी शबरकुलोत्पन्नत्वात् शबरीति नामवती तमेव तदृषिप्रोक्तलक्षणवन्तमेव दृष्ट्वा परमं हरिं श्रीरामं ज्ञात्वा अस्य रामस्य पुरतः अग्रे दहनं अग्निं विवेश । रामस्तस्यै शबर्यै स्वलोकं प्रादात् । सा शबरी पूर्वं रामस्य चित्रकूटपर्वतगमनकाले मतङ्गवचनेन एतद्वनं प्रति राम आगमिष्यतीति मतङ्गऋषिवाक्येन वने मतङ्गवने । 'मतङ्गवनमित्येद्विश्रुतं भुवि राघव' इत्यार्षरामायणे [अर.का.७४.२२] इममेव राममेव प्रतीक्ष्य अपेक्ष्येति यावत् । अत्रसा त्रस्यतीति त्रसा । न त्रसा अत्रसा । उद्वेगरहिता अभूत् । 'त्रसी उद्वेगे' इति धातुः । 'आगमिष्यति काकुत्स्थः सुपुण्यं तव चाश्रमम् । स ते प्रतिगृहीतव्यो रामस्सौमित्रिणा सह ।। तमर्चित्वा ध्रुवं स्वर्गो भविष्यति तथाक्षयः ।।' इति रामायणे [अर.का.७४.१५,१६] ।।४४।।

**अनन्तभट्टीया**— वचनेन रामोऽत्रागमिष्यतीति वचनेन । प्रतीक्ष्य अवेक्ष्येत्यर्थः । अत्रसा भयरहिता ।

**ताम्रपर्णीया**— अत्रसा उद्वेगरहिता ।।४४।।

**चट्टी**— शबरी शबरजातौ उत्पन्नत्वात् शबरीनामवती काचित् स्त्री तं ऋषिप्रोक्तं लक्षणवन्तं दृष्ट्वा तमेव रामं हरिं परमं च ज्ञात्वा अस्य पुरतः दहनमग्निं विवेश । अग्निप्रवेशेन तद्देहं त्यक्तवतीत्यर्थः । श्रीरामः तस्यै शबर्यै स्वलोकं प्रादात् । सा शबरी पूर्वं रामस्य चित्रकूटपर्वतगमनकाले मतङ्गवचनेन एतद्वनं श्रीरामः आगमिष्यतीति मतङ्गर्षिवाक्येन वने मतङ्गवने । 'मतङ्गवनमित्येतद्विश्रुतं भुवि राघव' इत्यार्षेयरामायणे [अर.का.७३.३०] । इममेव श्रीराममेव प्रतीक्ष्यावेक्ष्येति यावत् । अत्रसा उद्वेगरहिता भयरहितेति यावत् । अभूत् । 'त्रसि उद्वेगे' इति धातोः पचाद्यचि अत्रसेति रूपं सिद्ध्यति । यद्वा अत्र वने सा प्रसिद्धेति द्वितीयतच्छब्दस्य प्रसिद्धत्वमर्थः । सर्वनामप्रसिद्धमिति वचनात् । अतो न पौनरुक्त्यमिति द्रष्टव्यम् । अभूत् स्थिता । 'आगमिष्यति काकुत्स्थः सुपुण्यं तव चाश्रमम् । स ते प्रतिगृहीतव्यो रामस्सौमित्रिणा सह ।। तमर्चित्वा ध्रुवं स्वर्गो भविष्यति तवाक्षयः ।।' इति रामायणोक्तप्रकारेण [अर.का.७४.१५,१६] इत्यार्षरामायणे ।।४४।।

**अतिविशद**— मतङ्गवचनेन— 'आगमिष्यति काकुत्स्थः सुपुण्यं तव चाश्रमम् । स ते प्रतिगृहीतव्यो रामस्सौमित्रिणा सह ।। तमर्चित्वा ध्रुवं स्वर्गो भविष्यति तवाक्षयः ।।' इति रामायणोक्तप्रकारेण ।

**प्रमाणसङ्ग्रह**— 'आगमिष्यति काकुत्स्थः सुपुण्यं तव चाश्रमम् । स ते प्रतिगृहीतव्यो रामस्सौमित्रिणा सह ।। तमर्चित्वा ध्रुवं स्वर्गो भविष्यति तथाक्षयः ।।' इत्यार्षरामायणे ।।४४।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे पञ्चमोऽध्यायः ।।

**गूढवाक्यार्थ**— अत्रसा निर्भया अभूत् ।।४४।।

**शापाद्वराप्सरसमेव हि तां विमोच्य शच्या कृतात्पतिपुरस्त्वतिदर्पहेतोः ।**
**गत्वा ददर्श पवनात्मजमृश्यमूके स ह्येक एनमवगच्छति[१] सम्यगीशम् ॥४५॥**

**व्यासतीर्थीया–** गत्वा पवनात्मजदर्शने निमित्तमाह– **स हीति** ॥ परमज्ञानित्वात् प्रियत्वाच्चेत्यर्थः ।

**वादिराजीया–** ऋजुयोगिनां सर्वज्ञत्वप्रसिद्धिद्योतनाय एनमीशमवगच्छति हीति हिशब्दः ॥४५॥

**मधुसूदनीया–** ॥ **शापाद्वराप्सरसमिति** ॥ ननु 'स्त्रियां बहुष्वप्सरसः' इत्यभिधानात् वराप्सरसमित्येकवचनप्रयोगो असङ्गत इति चेत् सत्यम् । 'एकाप्सरःप्रार्थितयोः विवाद' इति एकवचनान्तत्वेनापि प्रयोगदर्शनात् । तट्टीकायामपि 'स्त्रियां बहुष्वप्सरस' इति बहुत्वाभिधानं प्रायिकत्वाभिप्रायं इत्युक्तेश्च । 'अद्रिकाप्सरसा युक्तं' इति भारतादौ एकवचनप्रयोगदर्शनाच्च ॥४५–५१॥

॥ इति श्रीमद्विद्याधीशतीर्थपूज्यपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे पञ्चमोऽध्यायः ॥

**वरदराजीया–** नन्वेवं रामानुग्रहपात्रभूता शबरी पूर्वं का नामेत्यत आह– **शापादिति** ॥ वराप्सरसं उत्तमाप्सरसस्त्रियम् । पूर्वमुत्तमाप्सरसस्त्रीति भावः । तर्हि किमर्थमिदं रूपं प्राप्तमित्यत उक्तम्– **शच्या कृतादिति** ॥ पतिपुरः पत्युरिन्द्रस्य पुरतः अतिदर्पो गर्वो हेतुः यस्य स तथोक्तः । शच्या इन्द्राण्या कृतात् दत्तात् शापात् तां विमोच्य मोचयित्वा स्वलोकं प्रादादिति पूर्वेणान्वयः । ततो गत्वा ऋश्यमूके पर्वते पवनात्मजं ददर्श । स हि पवनात्मज एव एनमीशं स्वामिनं रामं सम्यगवगच्छति जानाति ।

**जनार्दनीया–** शबरी पूर्वं केत्यत आह– **शापादिति** ॥ रामः पत्युः स्वस्य पत्युः इन्द्रस्य पुरः अग्रे अतिदर्पहेतोः निमित्तात् अप्सरसः स्त्रिया कृतगर्वहेतुनिमित्तात् । शच्या कृताच्छापात् शबरकुले जन्म भवेदित्येवं रूपशापात् सकाशात् । तां नीचयोनिं प्राप्तां वराप्सरसं उत्तमाप्सरसः स्त्रियं विमोच्य । गत्वा शबर्याश्रमात् हनुमदनुग्रहार्थं इति शेषः । पवनात्मजं श्रीहनुमन्तं ऋष्यमूके ऋश्यमूकनाम्नि गिरौ ददर्श । 'स्त्रियां बहुष्वप्सरसः स्यादेका त्वप्सरा अपि' इति शब्दार्णवे । ननु हनुमत्यनुग्रहः किमर्थमित्यत आह– **स हीति** ॥ एकः स हि एको हनूमानेव ईशं एनं रामं सम्यक् अवगच्छति जानाति । सर्वेश्वरोऽयमिति साकल्येन जानाति यस्मात् तस्मादनुग्रहार्थमगमदित्यर्थः ॥४५॥

---

१. 'बुद्धिमन्तं हनूमन्तं हिमवन्तमिव स्थितम्' इति वनपर्वणि । यस्मात् हनूमानेव बुद्धिमान् सम्यगीशज्ञानवान् अतः रामलक्ष्मणौ पूर्वं पवनात्मजं दृष्ट्वा, तेन सह सम्भाष्य सुग्रीवं जग्मतुः इति भारते सूचितं प्रमेयविशेषं सङ्गृह्णाति । 'रामतत्वं विजानाति हनूमानथ लक्ष्मणः । तद्विमर्शे तु का शक्तिः इतरस्य च कस्यचित् ॥' इत्यार्षटीकासु पुराणवचनम् ।

**अनन्तभट्टीया–** पतिपुरः इन्द्रपुरतः दर्पहेतोः शच्याकृतात् शापादित्यर्थः...* पवनदर्शनार्थमित्यर्थः । गत्वा तद्दर्शने निमित्तमाह– **स हीति** ।। ज्ञानित्वात्...* ।।४५।।

**ताम्रपर्णीया–** गत्वा पवमानात्मजदर्शने निमित्तमाह– **स हीति** ।। 'प्रियो हि ज्ञानिनोऽत्यर्थं अहं स च मम प्रियः' [गी.७.१७] इत्युक्तरीत्या परमज्ञानित्वेन परमप्रियत्वात् तत्समीपगमनं उपपन्नं इति भावः ।।४५।।

**चट्टी–** एषा शबरी पूर्वं केत्यत आह– **शापादिति** ।। श्रीरामः पत्युः स्वस्य पत्युरिन्द्रस्य पुरो अग्रे अतिदर्पः अधिकदर्पः हेतुर्यस्य स तथोक्तस्तस्माच्छच्या कृतात् दत्तात् शापात् तां नीचयोनिं प्राप्तां वराप्सरमुत्तमाप्सरस्त्रियं विमोच्य ततो गत्वा हनुमदनुग्रहार्थमिति शेषः । ऋश्यमूके गिरौ पवनात्मजं हनुमन्तं ददर्श । ननु हनुमत्यनुग्रहः किमर्थमित्यत आह– **स हीति** ।। एकः स हि एको हनुमानेव ईशं एनं श्रीरामं सम्यगवगच्छति जानाति । सर्वेश्वरोऽयमिति साकल्येन जानाति यस्मात् तस्मात् अनुग्रहार्थमगादित्यर्थः ।।४५।।

**अतिविशद–** ।। **शापाद्वराप्सरसमिति** ।। ननु 'स्त्रियां बहुष्वप्सरसः' इत्यभिधानात् वराप्सरस–मित्येकवचनप्रयोगो असङ्गत इति चेत् सत्यम् । 'एकाप्सरःप्रार्थितयोः विवाद' इति एकवचनान्तत्वेनापि प्रयोगदर्शनात् । तट्टीकायामपि 'स्त्रियां बहुष्वप्सरस' इति बहुत्वाभिधानं प्रायिकत्वाभिप्रायं इत्युक्तेश्च । 'अद्रिकाप्सरसायुक्तम्' इति भारतादौ एकवचनप्रयोगदर्शनाच्च ।।४५।।

**गूढवाक्यार्थ–** गत्वा पवनात्मजदर्शनार्थमिति शेषः । गत्वा तद्दर्शने निमित्तमाह– **स हीति** ।। परमज्ञानित्वेन परमप्रियत्वात् तत्समीपगमनं युक्तमिति भावः ।।४५।।

**देहेऽपि यत्र पवनोऽत्र हरिर्यतोऽसौ तत्रैव वायुरिति वेदवचः प्रसिद्धम् ।**
**'कस्मिन् न्वहं' त्विति तथैव हि सोऽवतारे तस्मात्स मारुतिकृते रविजं ररक्ष ।।**

**व्यासतीर्थीया–** अस्य भगवत्प्रियत्वं कुतः वायुरूपत्वात् । वायुरूपत्वेऽपि कुतोऽस्य भगवत्प्रियत्वमित्यतो वायोरतिशयेन भगवत्प्रियत्वे प्रमाणमाह– **देहेऽपीति** ।। यत्र देहे पवनोऽत्र हरिरपि यतो यत्रासौ तत्रैव वायुरित्यविनाभावप्रतिपादकं प्रसिद्धं वेदवचोऽस्ति । तत्प्रसिद्धं वेदवचःप्रतीकं गृह्णाति– **कस्मिन् न्वहन्त्विति** ।। अवतारेऽपि प्रिय एवेत्याह– **तथैवेति** ।। स वायुरवतारेऽपि तथैव मूलरूपे इव प्रियः प्रिय एव । तत्कुतोऽवगतं इत्यत आह– **तस्मादिति** ।। तस्मात् मारुतेर्भगवतः प्रियत्वात् स रामो मारुतिकृते तदाश्रितं रविजं सुग्रीवं ररक्ष ।।४६।।

**वेदाङ्गतीर्थीया–** इति एतस्मिन् विषये कस्मिन् न्वहं त्विति 'कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् न्वहं प्रतिष्ठिते प्रतिष्ठास्यामि' [षट्प्र.६.५] इत्यादि वेदवचः प्रसिद्धम् । स भगवानवतारे तथैव अविभक्त एव हि ।।४६–४७।।

**वादिराजीया–** अपेः अभिव्याप्त्यर्थकत्वात् जातावेकवचनसद्भावाच्च देहेऽपि सर्वप्राणिदेहेष्वपि यत्र पवनस्तत्र हरिर्यतो यत्रासौ हरिस्तत्र तत्रैव वायुरिति 'कस्मिन् न्वहं' इति वेदवचः प्रसिद्धमिति योजना । द्विविधापि व्याप्तिर्देहिनां देहेष्वेव न तु सर्वत्रेति भावेन देहेऽपीत्युक्तम् । अन्यथा हरेः सर्वगतत्वेन वायोस्तु महत्तत्त्वप्रदेश एव स्थितत्वेन यत्र हरिस्तत्रैव वायुरिति द्वितीयव्याप्तेरसम्भवादिति भावः कस्मिन् न्वहन्त्विति प्रतीकग्रहणेन 'कस्मिन् न्वहमुत्क्रान्त उत्क्रमिष्यामि कस्मिन्वहं स्थिते स्थास्यामि' इति 'सः प्राणमसृजत' इति श्रुतिं संगृह्णाति । यस्मिन् गतेऽहमपि प्रेमवशात् गमिष्यामि यस्मिन् स्थितेऽहमपि स्थास्यामि तादृशं भक्तं सृजामीत्यालोच्य स परमात्मा प्राणमसृजतेति श्रुतेरर्थः ।

**सत्याभिनवीया–** तत्रैव देहेऽपि यत्र पवनोऽत्र हरिर्यतोऽसौ.... इत्यस्ति । तस्यार्थः पवनः देहेऽपि देहे देहात् बहिश्च यत्र यस्य जीवस्य रक्षणार्थं प्रवर्तते, तत्र अत्रैव तस्य अस्य जीवस्यैव रक्षणार्थं हरिरपि प्रवर्तते । असौ हरिः देहे देहात् बहिश्च यतः यस्य जीवस्य रक्षणार्थं प्रवर्तते, तस्यैव जीवस्य रक्षणार्थं वायुरपि प्रवर्तते इत्यर्थप्रतिपादकं प्रसिद्धं वेदवचोऽस्तीति । एतेन देहे देहात् बहिश्च यत्र पवनः तत्र हरिः यत्र हरिः तत्र पवनो वर्तते इति हरिवाय्वोः समव्याप्तिकथनं प्रमाणविरुद्धमिति दूषणं परास्तम् । अत्र हरिवाय्वोः समव्याप्तिरुच्यत इत्यनुभ्यपगमात् ।।४६।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां पञ्चमोऽध्यायः ।।

**वरदराजीया–** ननु सुग्रीवपरिग्रहणे वाली निहत इत्युत्तरत्र कथा प्रवर्तते । तत्र वालिन इन्द्रावतारत्वेन उत्तमत्वात् पक्षपातेन सुग्रीवस्य सूर्यावतारत्वात् ततोऽधमत्वेन सुग्रीवे हन्तव्ये किमर्थं विपरीतं कृतमित्यपेक्षायां हरिपरिग्रहे उत्तमत्वं न प्रयोजकं तदपरिग्रहे च हीनत्वं न प्रयोजकमपि तु उभयत्र मारुतिपरिगृहीतत्वापरिगृहीतत्वे प्रयोजके मारुतेरतिप्रियत्वादित्युत्तरं मनसि निधाय मारुतेः हरिप्रियत्वे प्रमाणं तावद्देहस्वरूपमधिकृत्याह– **देहेऽपीति** ।। न केवलं मूलरूप इत्यर्थः । यत्र कार्ये पवनो वायुः प्रवर्तते अत्र कार्ये हरिरपि प्रवर्तते । यतः यत्र असौ हरिः प्रवर्तते तत्रैव वायुः प्रवर्तते नान्यत्रेति इदं प्रमेयं 'कस्मिन् न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि' 'कस्मिन् प्रतिष्ठिते प्रतिष्ठास्यामि' इत्यादिवेदवचोभिः प्रसिद्धं प्रमितमित्यर्थः । यद्वा इति एतदर्थप्रतिपादकं वेदवचः 'कस्मिन् न्वहम्' इति वेदवाक्यं प्रसिद्धं उपनिषत्सु सुप्रसिद्धमित्यर्थः । अनेन परस्परं परमप्रेमास्पदत्वमवगम्यत इति भावः । यथा देहगतहरिवायुरूपयोः नियमस्तथा अवताररूपेष्वयमेव नियम इत्याह– **तथैवेति** ।। स हरिरवतारे

रामकृष्णाद्यवतारे तथैव मारुत्यङ्गीकृतमेवाङ्गीकरोतीत्यर्थः । तस्मात् मारुतेरत्यन्तप्रियत्वात् मारुतिकृते हनुमदर्थं हनुमता स्वीकृतत्वात् रविजं सुग्रीवं ररक्ष । तथा मारुतिना अस्वीकृतत्वात् सुग्रीवापेक्षयोत्तममपि वालिनं जघानेत्यपि द्रष्टव्यम् । तथाच अधमत्वाद्धन्तव्यमित्यत्र प्रमितसाध्यात्यन्ताभाववति पक्ष एव सुग्रीवे व्यभिचारः । तथोत्तमत्वात् रक्षणीय इत्यनुमानेऽपि निश्चितसाध्याभाववति पक्ष एव वालिनि व्यभिचार इति भावः ।।४६।।

**जनार्दनीया–** ननु सुग्रीवादिषु सत्सु हनुमत्येवानुग्रहः किमर्थमित्याशङ्कयां वायुर्हरिप्रियस्तदवतारत्वात् हनुमानपि प्रिय इति वक्तुं वायुप्रियत्वे प्रमाणं तावदाह– **देहेऽपीति** ।। केवलं मूलरूपे प्रिय इति न, किन्तु देहादावपि प्रिय इत्यर्थः । यत्र यस्मिन् देहे पवनः अत्र अस्मिन् देहे हरिः । यतो यत्र असौ हरिः तत्रैव वायुः । एतदर्थप्रतिपादकं प्रसिद्धम् । उपनिषत्सु इति शेषः । वेदवचोऽस्ति । तत्प्रतीकेन गृह्णाति– **कस्मिन् न्वहमिति** ।। 'कस्मिन् न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' [ष.प्र.६.५] इत्यादिवेदवचः प्रसिद्धम् । स वायुः अवतारे रामकृष्णाद्यवतारे तथैव मूलरूपवदेव प्रिय इत्यर्थः । अवतारप्रियत्वं लेशतो दर्शयति– **तस्मादिति** ।। यस्मात् हनुमान् रामप्रियः तस्मात् कारणात् स रामः मारुतिकृते हनुमत्प्रियार्थं रविजं सुग्रीवं ररक्ष । अथवा वेदवचः इत्यनेन 'इन्द्रस्य युज्यः सखा' [ऋ.१.२२.१९] इत्येतदभिप्रेति । अत्र च इन्द्रशब्दो मुख्यप्राण इति ऋग्भाष्य एवाचार्यैः सप्रमाणमुक्तम् । तथैवेति समुच्चये । तुशब्दो विशेषार्थः । 'कस्मिन् न्वहम्' इत्यत्र प्राणशब्दश्रवणात् तस्मात् स अवतारे रामावतारे हनुमदर्थं सुग्रीवं ररक्ष ।।४६।।

**अनन्तभट्टीया–** तदेव विशदयति– **देहेऽपीति** ।। 'कस्मिन् न्वहम्' इति वेदवचः न केवलं मूलरूपेण प्रियः किन्तु अवताररूपेणापि इत्याह– **तथैवेति** ।। यथा मूलरूप तथा अवताररूप इति अतिप्रियत्वे लिङ्गमाह– **तस्मादिति** ।। मारुतिपरिगृहीतत्वलक्षणेन तस्यातिप्रियत्वमवगम्यत इति भावः ।

**ताम्रपर्णीया–** वायोर्भगवत्प्रियत्वे श्रुतिसिद्धं ज्ञापकान्तरमाह– **देहेऽपीति** ।। अधिदैवरूपसमुच्चयार्थं अपिपदम् । देहेऽपि अध्यात्मरूपेऽपि यत्र कार्ये पवनः प्रवर्तते तत्र कार्ये हरिः प्रवर्तते । यतः यत्र कार्ये हरिः प्रवर्तते तत्रैव वायुः प्रवर्तते इत्यर्थे 'कस्मिन् न्वहं उत्क्रान्ते उत्क्रमिष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' 'स प्राणमसृजत्' इति प्रसिद्धं स्पष्टं वेदवागस्तीत्यर्थः । तुशब्दो भिन्नक्रमः । अस्तु मूलरूपत्वात् अध्यात्माधिदैवरूपयोः प्रीतिः अवताररूपे हनुमति प्रीतिः कुतः इत्यत आह– **तथैवेति** ।। तथैव मूलरूपे इव । तथैव देहे इव अवतारेऽपि स भगवान् यत्र कार्ये वायुः तत्र स्वयं प्रवर्तते इत्यर्थः । तत्र उदाहरणमाह– **तस्मादिति** ।। तस्मात् वायो अतिप्रियत्वादेव ।।४६।।[१]

---

१. ।। देहेऽपीति ।। देहेऽपि यत्र पवनः तत्र हरिः । यत्र यत्र असौ हरिः तत्रैव वायुरिति 'कस्मिन् न्वहम्' इति श्रुतिरस्तीत्यर्थः । इतिशब्दात्परं तुशब्दो योज्यः । न च यावदव्याकृताकाशे पवनाभावात् कथमेतदिति वाच्यम्।..

**चट्टी–** ननु सुग्रीवादिषु सत्सु हनुमत्येवानुग्रहः किमर्थमित्याशङ्कायां वायुः हरिप्रियः तदवतारत्वाद् हनुमानपि प्रियः इति वक्तुं वायुप्रियत्वे प्रमाणं तावदाह– **देहेऽपीति** ।। केवलं मूलरूपे प्रिय इति न किन्तु देहादावपि प्रिय इत्यर्थः । यत्र यस्मिन् देहे पवनः अत्र अस्मिन् देहे हरिः यतः यत्रासौ हरिः तत्रैव वायुरित्येतदर्थप्रतिपादकं 'कस्मिन् न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' इत्यादि वेदवचः वेदवाक्यं प्रसिद्धं उपनिषत्सु प्रसिद्धमित्यर्थः । यद्वा इतीदं प्रमेयभूतं 'कस्मिन् न्वहम्' इति वेदवचोभिः प्रसिद्धं प्रमितमित्यर्थः । अनेन परस्परं परमप्रेमास्पदत्वमवगम्यते । यथा देहगतहरिवायुरूपयोः नियमस्तथा अवताररूपेष्वप्येवमेव नियम इत्याह– **तथेति** ।। स वायुरवतारे रामकृष्णाद्यवतारे तथैव मूलरूप इव प्रिय इत्यर्थः । अवतारप्रियत्वं लेशतो दर्शयति– **तस्मादिति** ।। यस्माद् हनुमान् प्रियस्तस्मात् कारणात् सः श्रीरामः मारुतिकृते हनुमत्प्रियार्थं तदाश्रितं रविजं सुग्रीवं ररक्ष ।।४६।।

**भारतश्री–** देहेऽपि यत्र पवमानो [पवनः] अत्र हरिः यत्रासौ पवनः तत्रैव हरिः सन्निहितः देश एव व्याप्त इत्यर्थः । 'देहेऽपि' इत्यनेन व्याप्तिरुच्यते । 'यतो असौ इत्यनेन' तु उपपाद्यत इति ज्ञातव्यम् ।।

।। इति श्रीडम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां पञ्चमोऽध्यायः ।।

**भावविवृत्ति–** देहेऽपि यत्र पवनोऽत्र... ररक्षेत्यत्र यस्मिन् देहे पवनस्तत्र तस्मिन् देहे हरिः । न केवलं देह एवायं नियमः । किन्तु यत्र यस्मिन् पक्षे वायुः तत्र तस्मिन् पक्षेऽप्यसौ हरिरिति । यतो यस्मादस्मिन्नर्थे 'कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति प्रसिद्धं वेदवचः प्रमाणमस्ति । यस्मात् स हरिरवतारे तथैव मूलरूपवदेव वाय्ववतारगृहीतपक्षं गृह्णाति । तत् स रामो हनुमद्गृहीतपक्षं सुग्रीवं ररक्ष कृष्णो भीमगृहीतं अर्जुनं ररक्षेति । यद्वा यस्मिन् देहे एव नस्तत्र तस्मिन् देहे एव हरिः । एवेत्यनेन यस्मिन् देहे पवनो न तत्र तस्मिन् देहेऽसौ हरिर्नैति इति व्यतिरेकव्याप्तिरपि सूचिता । स्थूलदेहे हर्यवस्थानानवस्थाने पवनावस्थानानवस्थान एव निमित्त–मित्यस्मिन्नर्थे यतो यस्मात् 'कस्मिन् न्वहं तु' इति प्रसिद्धं वेदवचोऽप्यस्ति । यस्मात् स हरिरवतारेऽपि तथैव मूलरूपवदेव पवनावतारगृहीतपक्षमेव गृह्णाति । अन्यं पक्षं न गृह्णाति । तस्मात् स

---

– 'सर्वत्रगः स वायुः महानेष मुख्यप्राणः' 'येन व्याप्तं चराचरम्' इत्यादिश्रुतिस्मृतिभ्यः सर्वत्र सत्त्वावगमात् अस्त्येव सर्वत्र व्याप्तिः । अत्र विशेषः । रमायाः एकरूपेणैव व्याप्तिः । न वायोस्तथा । किन्तु यावदव्याकृताकाशसञ्चार एवेति । यद्वा सूक्ष्मबहुरूपैरुपपद्यते एव सर्वत्र स्थितिः । वायुप्रकाशस्तावदव्याकृताकाशव्याप्तः । अन्यथा सर्वत्र व्याप्तभगवद्दर्शनायोगात् । 'अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम्' इत्युक्तरीत्या प्रकाशेन व्याप्तेरावश्यकत्वाच्चेति । अन्ये तु देहे तु यत्र पवनः तत्र हरिरपीत्यर्थमाहुः ।।४६-५१।।

रामो हनुमत्कृते रविजं ररक्ष इति । अथवा न केवलं स्थूलदेहे एवायं नियमः किन्तु स्वदेहेऽपीत्यपिशब्दः । जीवहृदिस्थितजीवाङ्गुष्ठपरिमितरूपविशेषावस्थान एव पवनावस्थानं निमित्तमिति सूचनाय तुशब्दः । ननु जीवदेहे व्यासरूपावस्थाने तस्य सत्ताप्रदत्वेन नित्यत्वात् पवनावस्थानस्यैतद्ब्रह्मकल्पावधित्वात् तत्र अस्य न निमित्तमिति चेन्न । जीवहृदिस्थजीवाङ्गुष्ठपरिमितरूपविशेषस्य जीवान्तःपवनावस्थानस्य चैतद्ब्रह्मकल्पावधित्वात् तयोस्सम्भवति । तदेतदुक्तम्– [ऐ.भा.१.६] 'वायुश्च वायुसंस्थश्च कदाचिन्न हि तिष्ठतः । वायुर्हि नित्यसञ्चारी सदा सर्वप्रवृत्तिमान् ।। चोदितः केशवेनैव तत्स्थेनानन्तशक्तिना । अतश्च सर्वभूतेषु चरतौ लोकसाक्षिणौ ।।' इत्यैतरेयभाष्ये 'इन्द्रियस्थैः स्वरूपैस्तु ज्ञानानि जनयत्यसौ । मनःस्थेन विशेषेण कार्मैः कर्मकृदेव च ।। पृथक्स्थितेन रूपेण जीवं धारयति प्रभुः । जीवस्थितेन रूपेण वेदयत्यहमित्यपि ।। प्राण एको वशी नित्यं बाह्यान्तःकरणेश्वरः ।।' इति न्यायविवरणे [४.२.२] 'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि । उत्तमो देवताभ्यश्च स्वात्मानं विविधात्मना ।। मत्स्यकूर्मादि-रूपेण गुहासंस्थमजीजनत् । भूतैस्सह महाविष्णुः परमात्मा युगे युगे ।।' इति काठकभाष्ये [२.४.१८] 'स एव च जीवस्य बहिर्हृदयाकाशसंस्थितः । योऽयं हृदब्जगोऽथ जीवान्तर्व्याप्यसंस्थितः ।। व्याप्तो जीवान्तरे सोऽसौ स जीवहृदिसंस्थितः ।।' इति छान्दोग्यभाष्ये । 'बहूपमोऽभूत्' इति च । अत्रोत्तरार्धे 'कस्मिन् न्वहं तु' इत्यत्र कस्मिन् उ अहं तु इति पदच्छेदः । तथाच 'कस्मिन् न्वहं तु' इत्येव प्रतीकात् [तु] शब्दस्यान्वयो न कर्तव्यः । यथा 'नवं हि नीतमाददे' इत्यत्र मध्यगतं हिशब्दं विहाय नवनीतमित्यन्वयः । 'शुनश्चिच्छेपम्' इत्यत्रापि शुनःशेपमिति पदमङ्गीकृत्य शुनःशेप इत्यन्वयः कृतः तथाऽत्रापीति भावः ।।४६–५१।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ पञ्चमोऽध्यायः ।।

**अतिविशद**– देहेऽपि यत्र पवन इत्यत्र वायोः हरिणा साकं देशतः कालतश्च समव्याप्तिः प्रतीयते सा तु कथमङ्गीकर्तव्येत्यतः– **देहेत्युक्तम्** ।। तत्रापि कथमित्यतः– **इतीत्युक्तम्** ।। तत्प्रकारोऽपि कथं ज्ञेय इत्यतः वेदवचः प्रसिद्धम् । कथं कस्मिन्नहं त्विति ।। तत्र प्रमाणमुक्तम् 'कस्मिन् न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति षट्प्रश्नोपनिषत्प्रसिद्धम् । ततश्चैवमक्षरार्थः । यत्र देहे यस्मिन् देहे वायुः प्रतितिष्ठति अत्र अस्मिन् देहे हरिः तिष्ठति । यतो यस्माद्देहात् वायुरुत्क्रान्तः ततः असौ हरिः उत्क्रान्त इति यथा तथा अवतारेऽपि यत्र वायुः यद्रक्षणे प्रवृत्तः अत्र तद्रक्षणे हरिः प्रवर्तते । यतः यद्रक्षणात् वायुः उत्क्रान्तः निवृत्तः ततः तद्रक्षणात् असौः हरिः निवृत्तः । रामावतारे वायुः वालिरक्षणान्निवृत्तः इति हरिः निवृत्तः । इति यस्मात् तस्मात् मारुतेः कृते रविजं ररक्ष । अत्र अपिशब्दः सम्भावनार्थः । 'अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु' इति सूत्रात् । तत सम्भावित रामकृष्णावतारः इति सिद्ध्यति ।।४६।।

**गूढवाक्यार्थ–** किञ्च भगवत्प्रियत्वं कुतः वायुस्वरूपत्वात् वायोरतिप्रियत्वं कुत इत्यतो...* वायोरतिप्रियत्वे श्रुतिसिद्धज्ञापकान्तरमाह– **देहेऽपीति** ।। न केवलमवतारे किन्तु देहेऽपीत्यर्थः । यत्र कार्ये पवनः प्रवर्तने तत्र कार्ये हरिः प्रवर्तते तत्रैव वायुः प्रवर्तत इत्यत्र 'कस्मिन् न्वहं उत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि । स प्राणमसृजत' इति श्रुतिप्रसिद्धं च वेदवचोऽस्तीत्यर्थः । अस्तु मूलरूपे वायौ प्रीतिः हनुमति कुत इत्यत आह– **तथैवेति** ।। तथैव मूलरूप इव अवतारे बहिरपि स भगवान् यत्र कार्ये मारुतिस्तत्र स्वयं प्रवर्तत इत्यर्थः । तत्रोदाहरणमाह– **तस्माच्चेति** ।। मारुतेरतिप्रियत्वादेव ।।४६।।

**एवं स कृष्णतनुरर्जुनमप्यरक्षद्भीमार्थमेव तदरिं रविजं निहत्य ।**
**पूर्वं हि मारुतिमवाप रवेः सुतोऽयं तेनास्य वालिनमहन् रघुपः प्रतीपम् ।।४७।।**

**व्यासतीर्थीया–** रविजरक्षणं स्वभावतः तस्य भगवत्प्रियत्वेऽपि घटतेऽतो मारुतिकृते रविजं ररक्षेति कुतोऽवगतमित्यत आह– **एवमिति** ।। एवं सुग्रीवमिव कृष्णतनुरपि सः यदि रविजः स्वभावतो भगवत्प्रियः स्यात्तर्हि कर्णं विहायार्जुनपरिरक्षणं अयुक्तं स्यात् । सुग्रीवस्य कर्णत्वात् अतो भीमार्थमेव तदरिं रविजं कर्णं निहत्य अर्जुनमरक्षदित्यर्थः । मारुतेर्वालिसुग्रीवसमत्वात् कथं मारुतिकृते वालिनं हत्वा रविजं ररक्षेत्युक्तिरित्यत आह– **पूर्वं हीति** ।।४७।।

**वादिराजीया–** तेन कारणेनास्य सुग्रीवस्य प्रतीपं वालिनं अहन् हतवान् । 'हन हिंसागत्योः' इति धातोः लङि अहन् इत्येव हि रूपनिष्पत्तिर्भवति ।।४७।।

**वरदराजीया–** मारुतिपरिगृहीतत्वात् रक्षणीयः तदपरिगृहीत्वात् हन्तव्य इत्युक्तानुमानद्वये न कुत्रापि व्यभिचार इत्याह– **एवमिति** ।। एवं कृष्णतनुः कृष्णरूपी स हरिरर्जुनं वालिस्वरूपिणं भीमार्थं भीमानुगृहीतत्वादित्यर्थः । अरक्षत् रक्षितवान् । भीमेनापरिगृहीतत्वादेव तदरिं वैरिणं रविजं कर्णं सुग्रीवात्मकमपि निहत्य अर्जुनमरक्षदिति पूर्वेणान्वयः । ननु उत्तमत्वात् मारुतिना वाल्येव किमिति न परिगृहीत इत्याह– **पूर्वमिति** ।। अयं रवेः सुतः सुग्रीवः पूर्वं वालिनः सकाशात् पुरेव मारुतिमवाप । हि यस्मात् तस्मात् सुग्रीवः मारुतिना स्वीकृत इति भावः । इदानीं प्रकृतमुपसंहरति– **तेनेति** ।। तेन मारुतिना स्वीकृतत्वेन रघुपः रामो अस्य सुग्रीवस्य प्रतीपं विरोधिनं वालिनं अहन् जघानेत्यर्थः ।।

**जनार्दनीया–** ननु स्वप्रयोजनार्थमेवारक्षदिति किं न स्यादित्याशङ्क्य उदाहरणान्तरमाह– **एवमिति** ।। भीमार्थं भीमप्रियार्थं तदरिं अर्जुनारिं रविजं कर्णम् । हनुमानपि श्रेष्ठं वालिनं विहाय सुग्रीवपरिग्रहणं किमर्थमकरोदित्यत आह– **पूर्वमिति** ।। हि येन कारणेन अयं रवेः सुतः सुग्रीवः पूर्वं आदौ मारुतिं अवाप । शरणमिति शेषः । तेन कारणेन अस्य सुग्रीवस्य प्रतीपं अहन् जघान ।।४७।।

**अनन्तभट्टीया–** रविजरक्षणं....* इति वक्तुं न शक्यम् कृष्णावतारे तद्वैपरीत्यादित्याह– **एव स इति** ।। रविजं कर्णम् मारुतिना सुग्रीवस्य परिग्रहे हेतुमाह– **पूर्वमिति** ।। अस्य प्रतीपम् ।।४७।।

**ताम्रपर्णीया–** ननु मारुतिवत् रविजस्यापि भक्तत्वात् मारुतिकृत इति कुतोऽवगतं तत्राह– **एवमिति** ।। एवं सुग्रीवमिति । कृष्णतनुरपि सः यदि रविजो हनुमत्प्रेक्षातिशयं विना स्वत एव भगवत्प्रियः स्यात् । तर्हि कर्णं विहाय अर्जुनपरिरक्षणं न स्यात् । सुग्रीवस्यैव कर्णत्वात् । अथो भीमार्थमेत्र तदरिं रविजं निहत्य अर्जुनमरक्षत् इत्यर्थः । हनुमानपि स्वरूपातिशायिनं वालिनं परित्यज्य रविजे प्रीतिं किमर्थं अकरोत् । यदर्थं रामः रविजं ररक्ष इत्यत आह– **पूर्वमिति** ।।४७।।

**चट्टी–** ननु रामः सीतान्वेषणादिस्वप्रयोजनार्थमेव सुग्रीवमरक्षदिति किं न स्यादित्याशङ्क्य उदाहरणान्तरमाह– **एवमिति** ।। एवं कृष्णतनुः कृष्णरूपी सः हरिः भीमार्थं भीमप्रियार्थं तदरिमर्जुनारिं रविजं कर्णं निहत्य अर्जुनमपि ररक्ष । हनुमानपि श्रेष्ठं वालिनं विहाय सुग्रीवपरिग्रहणं किमर्थं कृतवानित्यत आह– **पूर्वमिति** ।। हि यस्मात् अयं रवेस्सुतः सुग्रीवः पूर्वं आदौ मारुतिमवाप । शरणमिति शेषः । तस्मात् रघुपः अस्य सुग्रीवस्य प्रतीपं वालिनं अहन् जघान । 'हन हिंसागत्योः' इति धातो लङ् । अहन्नित्येव रूपनिष्पत्तिर्भवति ।।४७।।

**अतिविशद–** एवं स कृष्णतनुरित्यस्यायमर्थः । कृष्णतनुः कृष्णावतारो हरिः तदरिं तस्यार्जुनस्यारिं निहत्य ज्ञात्वा कर्णः अर्जुनवैरी न तु भ्रातेत्येवं प्रकारेण ज्ञात्वा स्थितः । एवं भीमार्थमेव अर्जुनमरक्षदिति । 'हन हिंसागत्योः' इति धातोः । यद्वा कृष्णतनुः तदरिं स चासावरिश्च तदरिः तं पूर्ववैरिणमित्यर्थः । निहत्य स्थितं अर्जुनं भीमार्थमेवारक्षदिति मूलकारैस्तथा उपपादनादिति ज्ञायते इति ।।

**गूढवाक्यार्थ–** एवं भीमार्थमेवार्जुनमप्यरक्षत्....* मतपक्षपातातिशयं विना स्वत एव हरिप्रियः स्यात् तर्हि सुग्रीवस्वरूपं कर्णं विहायार्जुनपरिरक्षणं न स्यादिति भावः । हनूमानपि स्वरूपाधिकं वालिनं विहाय रविजे किमर्थं प्रीतिमकरोदित्यत आह– **पूर्वं हीति** ।।४७।।

**एवं सुराश्च पवनस्य वशे यतोऽतः सुग्रीवमत्र तु परत्र च शक्रसूनुम् ।**
**सर्वे श्रिता हनुमतस्तदनुग्रहाय तत्रागमद्रघुपतिः सह लक्ष्मणेन ।।४८।।**

**व्यासतीर्थीया–** मारुतेर्भगवत्प्रियत्वे हेत्वन्तरमाह– **एवमिति** ।। एवं हनूमतो भगवत्प्रियत्वे लिङ्गं अन्यच्चास्तीत्यर्थः । सर्वे च सुराः अत्र सुग्रीवं परत्र च कृष्णावतारे शक्रसूनुं अर्जुनं आश्रिताः यतस्तावेव पवनस्य वशे अतः सर्वदेवाश्रयाश्रयत्वात् स पवनो भगवत्प्रिय इति सिद्धम् । हनूमतोऽनुग्रहाय तदनुग्रहाय सुग्रीवादिदेवाद्यनुग्रहाय च रघुपतिस्तत्रागमत् ।।४८।।

**वेदाङ्गतीर्थीया—** तदनुग्रहाय तत् तस्मात् सर्वसुराश्रयत्वात् हनुमतोऽनुग्रहाय सुग्रीवपरित्राणलक्षणाय ।

**वादिराजीया—** एवं सुराश्च यतः पवनस्य वशेऽतोऽत्र रामावतारे सुग्रीवं सर्वे देवाः श्रिताः । परत्र भाविकृष्णावतारे शक्रसुतं श्रिताः परसेनास्थिता अपि भीष्मद्रोणादयः अर्जुन एव पक्षपातवन्तो न तु कर्णे । अतः साधूक्तं 'सर्वे शक्रसुतं श्रिता' इति । तत्तस्मात् सर्वदेवेभ्योऽप्यतिप्रियत्वात् हनुमतोऽनुग्रहाय यत्र हनुमांस्तत्र अगमदिति योजना ।।४८।।

**वरदराजीया—** ननु तथापि रामावतारे देवावताराणां सर्वेषां कपीनां सुग्रीवाश्रयणे कृष्णावतारे देवावताराणां सर्वेषां राज्ञां अर्जुनाश्रयणे किं निमित्तमित्यत आह— **एवमिति** ।। यतः कारणात् सर्वे सुराः देवाः पवनस्य वायोः वशे अतः कारणात् अत्र रामावतारे सुग्रीवं सर्वे श्रिताः । सुग्रीवस्य पवनेन स्वीकृतत्वात् तमेवाश्रिता इति भावः । एवं परत्र कृष्णावतारे शक्रसूनुं अर्जुनं आश्रिता । पवनात्मजेन भीमेनार्जुनस्य स्वीकृतत्वात्तमेव सर्वे देवावतारा राजानः आश्रिता इति भावः । तत्तस्मात् हनूमतो अतिप्रियत्वात् हनुमतो अनुग्रहात् तत्तदनुगृहीतसुग्रीवादिसंरक्षणार्थे लक्ष्मणेन सहितः रघुपः श्रीरामस्तत्रागमदित्यर्थः ।।४८।।

**जनार्दनीया—** पवनस्य प्रियत्वं न केवलं रामप्रियत्वे प्रयोजकमपि तु सर्वदेवप्रियत्वेऽपीत्याह— **एवमिति** ।। एवं मारुतिप्रियत्वविषये हेत्वन्तरं अस्तीत्यर्थः । सुराः शेषादयो देवाः । मूलरूपेण पवनस्य वशे यतः । अतः सर्वदेवावताराः वानराः अत्र रामावतारे सुग्रीवं श्रिताः आश्रिताः । मारुतिप्रियत्वादिति शेषः । परत्र कृष्णावतारे शक्रसूनुमर्जुनमाश्रिताः । भीमप्रियत्वादिति शेषः । मूलरूपे अवताररूपे च सर्वसुराश्रयत्वात् वायोः हरिप्रियत्वं सिद्धम् । उक्तार्थं उपसंहरति— **हनूमत इति** ।। यतो हनूमान् प्रियः तत् तस्मात् कारणात् तत्र ऋश्यमूकं प्रति हनूमतोऽनुग्रहायागमदिति योजना ।।

**अनन्तभट्टीया—** पवनजस्यातिशयेन विष्णुप्रियत्वे लिङ्गान्तरमाह— **एवमिति** ।। किञ्चेत्यर्थः...* सुराः पवनजस्य वशे अतः सोऽतिप्रिय इति भावः । सर्वसुराणां पवनवशत्वं कथं निश्चितमित्यत्र युक्तिमाह— **अत्रेति** ।। अत्र रामावतारे सुग्रीवम् । पवनगृहीतमिति शेषः । अपरत्र कृष्णावतारे शक्रसूनुम्, पवनगृहीतमिति भावः सर्वे सुराः श्रिताः । एवं सर्वेषां सुराणां पवनजपरिग्रहानुसोण वर्तमानत्वात् तस्य सुराधिपत्वं अतस्तस्यातिप्रियत्वमिति भावः । तत्तस्मात् हनूमतः अनुग्रहाय तत्रागमत् । टिप्पणीकारः '....* अत्र सुग्रीवस्य परत्र शक्रसूनुं श्रिताः यतः तौ पवनस्य वशे अतः सर्वदेवाश्रयत्वात् स पवनो भगवत्प्रिय इति सिद्धम् । हनुमतोऽनुग्रहाय तदनुग्रहाय सुग्रीवादिदेवानुग्रहाय च रघुपतिस्तत्रागमत्' इति योजयामास ।।४८।।

**ताम्रपर्णीया—** मारुतिपरिग्रहणेनैव सुग्रीवार्जुनयोः भगवत्प्रियत्वं इत्यत्र हेत्वन्तरं वदन् मारुतेर्भगवदतिप्रियत्वे हेत्वन्तरं वदन् उपसंहरति— **एवमिति** ।। यतः सुराश्च पवनस्य वशे यतश्च सुग्रीवार्जुनौ मारुत्यन्तरङ्गतया तद्वशे अतो रामावतारे हनुमदन्तरङ्गं सुग्रीवं श्रिताः न वालिनम् । कृष्णावतारेऽपि भीमान्तरङ्गं शक्रतनुमाश्रिताः न कर्णम् । यत एवं वायुवशानां देवानामपि तदन्तरङ्गत्वमपेक्ष्यैवावतारद्वये सुग्रीवार्जुनाश्रयणं तत् तस्मात् मारुतिकृत एव रविजरक्षणमित्यस्य सिद्धं वायोर्भगवदतिप्रियत्वात् हनुमतोऽनुग्रहाय तेषां हनुमद्भक्तानां सुग्रीवादीनामनुग्रहाय च तत्रागात् इत्यर्थः । भीष्मद्रोणद्रौणिकृपादीनां दुर्योधनयूथगत्वेऽपि अर्जुने एव पक्षपातित्वात् सर्वे श्रिता इति युक्तमिति ज्ञेयम् ।।

**चट्टी—** पवनस्य हरिप्रियत्वे हेत्वन्तरं दर्शयति— **एवमिति** ।। सुराः शेषादयो देवाश्च मूलरूपेण पवनस्य वशे यतस्ततः । एवमेव सर्वे देवावताराः अत्र रामावतारे सुग्रीवं श्रिताः आश्रिताः । हनुमत्प्रियत्वादिति भावः । परत्र भाविनि कृष्णावतारे शक्रसूनुमर्जुनं श्रिता आश्रिताः भीमप्रियत्वादिति भावः । परसेनास्थिता अपि भीष्मद्रोणादयः अर्जुन एव पक्षपातवन्तः । न तु कर्णे । अतः साधूक्तं 'सर्वे शक्रसूनुं श्रिता' इति । तत् तस्मात् सर्वदेवेभ्यो अतिप्रियत्वात् हनुमत अनुग्रहाय सुग्रीवपरित्राण– लक्षणया? रघुपतिः लक्ष्मणेन सह यत्र हनुमान् तत्र ऋष्यमूकं प्रत्यगमदिति योजना ।।४८।।

**गूढवाक्यार्थ—** तत्र राम...* उक्तमुपसंहरति— **तदिति** ।। तत् तस्मात् मारुतिकृत एव रविजरक्षण ....*स्य सिद्धं हनुमत्यतिप्रियत्वात् तदनुग्रहाय तस्मिन् हनुमति अनुग्रहाय तत्रागमदित्यर्थः ।।४८।।

**यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजश्च गिरिशः सह लोकपालैः ।**
**सर्वेश्वरस्य परमस्य हि सर्वशक्तेः [१]किं तस्य शत्रुहनने कपयः सहायाः ।।४९।।**

**व्यासतीर्थीया—** स्वसहायार्थं तत्रागमदिति कुतो न स्यादित्यत आह— **यत्पादेति** ।।४९।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां पञ्चमोऽध्यायः ।।

**वादिराजीया—** 'यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजश्च गिरिशः सहलोकपालैः । लीलातनुः स्वकृतसेतुपरीप्सया यः काले दधत्स भगवान् स्वकृतेन तुष्येत् ।।' [१०.६२.४२] इति भागवतश्लोकार्धं स्वश्लोकपूर्वार्धतया संगृहीतम् । अतो मौक्तिकमणिना सह सुवर्णमणेर्योग इवायं योगः पूर्णप्रज्ञाचार्यस्य वचसोऽपीति ज्ञेयम् ।।४९–५०।।

**वरदराजीया—** सीतान्वेषणरावणहननादिरूपे कार्ये सहायत्वेन कपीन् सम्पादयितुं तत्रागत इति पुराणेषु आपाततः प्रतीतिरस्ति तां निवारयति— **यत्पादेति** ।। यस्य श्रीरामस्य पादपङ्कजयोः विद्यमानं

१. भाग.९.९.२० ।

रजः श्रीः लक्ष्मीः शिरसा बिभर्ति तथा अब्जजो ब्रह्मापि बिभर्ति गिरिशो रुद्रो लोकपालैरिन्द्रादिभिः सह बिभर्ति । सर्वेषां ईश्वरस्य उत्तमस्य सर्वा परिपूर्णा शक्तिः यस्य स तथा तस्य रामस्य शत्रुहनने रावणसंहरणे कपयो वानराः सहायाः किं नेत्यर्थः । तस्मात् श्रितानुग्रहार्थमेव आगत इति भावः ।।४९।।

**जनार्दनीया–** ननु स्वसहायार्थम् अगमदिति किं न स्यादित्यताह– **यत्पादेति** ।। सर्वशक्तेः सर्वविषये शक्तिमतः सहायाः किम् ? नैवेत्यर्थः ।।४९।।

**अनन्तभट्टीया–** ननु स्वसहायार्थमेव तत्रागमदिति किं न स्यादित्यत आह– **यदिति** ।। सहाया किं नेत्यर्थः ।।४९।।

**ताम्रपर्णीया–** स्वसहायार्थं तत्र अगमदिति किं न स्यात् इत्यत आह– **यत्पादेति** ।। लक्ष्म्यादिभिरुपासिदपादरजस्त्वं असिद्धं इति शङ्कां परिहर्तुं 'यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजश्च गिरिशस्सह लोकपालैः । लीलातनुस्स्वकृतसेतुपरीप्सया यः काले दधत्स भगवान् स्वकृतेन तुष्येत् ।।' इति भागवतश्लोकस्य आद्यार्ध एव स्वश्लोकपूर्वार्धतया भगवान् सञ्जग्राह इति ध्येयम् ।।४९–५०।।

**चट्टी–** ननु स्वसहायार्थं कपिसम्मेलनाय अगमदिति किं न स्यादित्याशङ्क्य नेत्याह– **यत्पादेति** ।। यस्य श्रीरामस्य पादपङ्कजयोः स्थितं रजः श्रीः लक्ष्मीः शिरसा बिभर्ति अब्जजो ब्रह्मा च बिभर्ति । गिरिशो रुद्रः लोकपालैरिन्द्रादिभिः सह बिभर्ति । सर्वेषामीश्वरस्य उत्तमस्य सर्वा परिपूर्णा शक्तिः यस्य स तथा तस्य श्रीरामस्य शत्रुहनने रावणसंहरणे कपयः वानराः सहायाः किं नैवेत्यर्थः । तस्मात् हनुमदनुग्रहार्थमेव आगत इति भावः ।।४९।।

**गूढवाक्यार्थ–** स्वसहायापेक्षया तत्रागमदिति किं न स्यादित्यत आह– **यत्पादपङ्कजेति** ।। इत्यनेन कारणेन...* दृश्यते तत्राप्ययमेवार्थः ।।४९।।

**समागते तु राघवे प्लवङ्गमाः [१]ससूर्यजाः ।**
**विपुप्लुवुर्भयार्दिता न्यवारयच्च मारुतिः ।।५०।।**

**वरदराजीया–** राघवे समागते सति भयेन अस्मान् मारयितुं वालिना प्रेरितोऽयमिति भीत्या अर्दिताः पीडिताः ससूर्यजाः ससुग्रीवाः प्लवङ्गमाः कपयो विपुप्लुवुः प्लवेन पलायनगताः । मारुतिः हनूमांश्च तान्न्यवारयत् निवारयामास ।।५०।।

**जनार्दनीया–** विपुप्लुवुः दुद्रुवुरित्यर्थः । भयेन इमौ वालिसम्बन्धिनौ इति भयेनार्दितान् पीडितान् न्यवारयत् ।।५०।।

---

१. 'उद्विग्नहृदयः सर्वा दिशः समवलोकयन् । न व्यतिष्ठत कस्मिंश्चिद्देशे वानरपुङ्गवः ।। तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ । वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ।।' इति वाल्मीकीये ४.२.२ ।

**अनन्तभट्टीया–** भयार्दिताः जातभयाः ।।५०।।

**चट्टी–** राघवे श्रीरामे समागते सति ससूर्यजाः सुग्रीवेण सहिताः प्लवङ्गमाः कपयः भयेन अस्मान् गृहीतुं वालिना प्रेषितोऽयमिति भीत्या विपुप्लुवुः दुद्रुवुः । मारुतिः हनुमांश्च तान् न्यवारयत् ।।५०।।

**[1]संस्थाप्याशु हरीन्द्रान् जानन् विष्णोर्गुणाननन्तान् सः ।**
**साक्षाद्ब्रह्मपिताऽसावित्येतेनास्य[2] पादयोः पेते ।।५१।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये
श्रीरामचरिते हनूमद्दर्शनं नाम पञ्चमोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** स हनुमान् विष्णोरनन्तान् गुणान् जानन्, असौ विष्णुः ब्रह्मपिता इति च जानन् यस्मात् एतेन कारणेन अस्य पादयोः पेत इत्यन्वयः एवं सम्यङ्माहात्म्यज्ञानेन तत्पादौ प्रपन्न इति भावः ।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
तात्पर्यदीपिकायां पञ्चमोऽध्यायः ।।

**वादिराजीया–** स हनूमान् । असौ रामः । साक्षाद् ब्रह्मपितेत्येतेन अनेन कारणेन अस्य पादयोः पेते पपात ।।५१।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां पञ्चमोऽध्यायः ।।

**वरदराजीया–** हनूमान् विष्णोरनन्तान् गुणान् जानन् आशु हरीन्द्रान् कपिश्रेष्ठान् संस्थाप्य दूरे स्थापयित्वा, असौ रामः साक्षाज्जनकत्वेन न तु उपचारेण ब्रह्मपिता इत्यनेन एतेनाभिप्रायेणास्य रामस्य पादयोः पेते पपातेत्यर्थः । यद्वेत्यनेन एतेन हनूमता अस्य पादयोः पेते पतितमिति भावे लिट् इत्यशेषमतिमङ्गलम् ।।५१।।

।। इति श्रीमद्भारततात्पर्यनिर्णयाध्याय एव हि । पञ्चमो व्याकृतस्तावत् प्रीत्यै माधवमध्वयोः ।।
।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
मन्दसुबोधिन्यां पञ्चमोऽध्यायः ।।

---

१. 'अहो शाखामृगत्वं ते व्यक्तमेव प्लवङ्गम । लघुचित्ततयात्मानं न स्थापयसि यो मतौ ।। बुद्धिविज्ञानसम्पन्नः इङ्गितैः सर्वमाचर । न ह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि ।।' इति वा.रा४.२.१७-१८ ।

२. 'इत्यनेनास्य' इति ताम्रपर्णीचट्टीटिप्पण्योः पाठान्तरम् ।

सुग्रीवो मारुतिं तत्र प्रेषयामास राघवे । मारुतिप्रेषणं श्रुत्वा सद्गुरुं लभते नरः ।। राममारुतिसंवादश्रवणात् राजवल्लभः । जायते...।। इत्युमासंहितायां दशमाध्याये ।

**जनार्दनीया–** 'स ह्येक एनमवगच्छति सम्यगीशम्' इत्युक्तार्थं विशदयति– **जानान्निति** ।। विष्णोः अनन्तान् गुणान् वेदोक्तान् अनन्तान् गुणान् इत्यर्थः । जानन् स हनुमान् । संस्थाप्य । किञ्चित् दूर इति शेषः असौ रामः साक्षात् ब्रह्मपिता न तूपचारेणेत्यर्थः । इति एतेन ब्रह्मपितेति ज्ञानेन अस्य रामस्य पादयोः पेते ननामेत्यर्थः । एतेन हनूमता । 'एतेन पतितम्' इति भावे लिङिति केचित् ।

यं गङ्गाजमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात्
पूर्तिं तस्य कृतौ सतां सुखकरोऽध्यायः शुभः पञ्चमः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
पदार्थदीपिकायां पञ्चमोऽध्यायः ।।

**अनन्तभट्टीया–** ननु हनुमान् किमर्थं न पुप्लुव इत्यत आह– **स इति** ।। सः हनूमान् यस्माद्विष्णोर्गुणान् अनन्तान् असौ रामः साक्षात् ब्रह्मपिता इति जानन् जानातीत्यर्थः । तेन हनूमता हरीन्द्रान् आशु संस्थाप्य एतस्य पादयो पेत इत्यन्वयः । पेत इति भावे लिट् । इत्यनेन इत्यभिप्रायेणेति वा अर्थः । अत्र पेत इति कर्तरि लिट् ।।

।। इति श्रीमुष्णं अनन्तभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
तन्त्रमालायां(सत्तत्वमालायां) पञ्चमोऽध्यायः ।।

**ताम्रपर्णीया–** ।। **इत्यनेनेति** ।। इत्यनेन कारणेन रामस्य पादयोः पपात इत्यर्थः । अनेन अभिप्रायेण इति वा । एतेन इति पाठेऽपि अयमेव अर्थः ।।५१।।

।। इति श्रीविट्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना
श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) पञ्चमोऽध्यायः ।।

**चट्टी–** 'स ह्येक एनमवगच्छति सम्यगीशम्' इत्युक्तार्थमेव विशदयति– **जानन्निति** ।। विष्णोरनन्तान् गुणान् वेदोक्ताननन्तगुणानित्यर्थः । जानन् हनूमान् आशु हरीन्द्रान् कपिश्रेष्ठान् संस्थाप्य दूरे स्थापयित्वा असौ श्रीरामः साक्षाज्जनकत्वेन ब्रह्मणः पिता न तूपचारेणेत्यर्थः । इत्यनेन एतेन अभिप्रायेणास्य श्रीरामस्य पादयोः पेते पपात ननामेत्यर्थः । कर्तरि लिट् । यद्वा अनेन हनुमता पेते पतितमिति भावे लिट् ।।५१।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पञ्चमोऽध्यायः ।।

**भावचन्द्रिका**– ।। **संस्थाप्येति** ।। 'स भिक्षुवेषो हनुमान् स्ववेषं विहाय विश्वेश्वरपार्श्वमाप्य' इति सङ्ग्रहरामायणोक्तेः । [कि.का.१.३५] यतेरवध्यत्वादिति ।।५१।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावचन्द्रिकायां पञ्चमोऽध्यायः ।।

**अतिविशद**– जानन् विष्णोर्गुणाननन्तान् इत्यत्र 'ब्रह्मणा त्वखिलैर्गुणैः । उपास्यः सर्ववेदैश्च' [अणु.भा.३.५] इति अणुवेदान्तवचनात् वेदोक्तानन्तगुणान् जानन्नित्यर्थः । गुणानित्युपलक्षणं क्रियादिकमपि ग्राह्यम् । तदुक्तमनुव्याख्याने– [३.३.विद्याधिकरणम्] 'ब्रह्मा सर्वगुणैश्चैव क्रियासामान्यतश्च गीः । गुणसामान्यतो रुद्रः द्रव्यसामान्यतः परे ।।' इत्यत्र सुधा 'ब्रह्मैवेति सम्बन्धः । सर्ववेदोदितैः । चशब्दः क्रियाद्रव्यसमुच्चयार्थः । हरिमुपासीतेति वर्तते । वेदोक्तसमस्तगुणोपेततयानन्तरूपं हरिं उपासितुं ब्रह्मैव योग्य इत्यर्थः । चस्त्वर्थः सरस्वती तु क्रियासामान्यतः क्रियासङ्कोचनेनोपास्ते । सकलवेदोक्तगुणोपेततया अनन्तरूपं हरिमुपास्ते । त्रिविक्रमादिक्रियास्तु नित्यविक्रान्त्यादिषु अन्तर्भावयति । रुद्रः गुणसामान्यतः समस्तरूपाण्युपास्ते । गुणान् क्रियाश्च सङ्कोचयतीत्यर्थः । परे शक्रादयः । द्रव्याणि रूपाणि । गुणक्रियासङ्कोचस्तु सिद्धः एव' इति ।

जनार्दनाचार्यसुतस्तु टीकां सुतिर्मलो मध्वपदाब्जसेविनाम्
दासो नितान्तं स चकार निर्णये पञ्चात्मके श्रीपुरुषोत्तमार्थम् ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ पञ्चमोऽध्यायः ।।

**गूढवाक्यार्थ**– पेते पपात ।।५१।।

।। इति विठ्ठलाचार्यतनूजेन नरसिंहाचार्येण रचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां गूढवाक्यार्थविवृतौ पञ्चमोध्यायः ।।

।। श्रीकृष्णार्पणमस्तु ।।

*****

# ।। अथ षष्ठोध्यायः ।।

**उत्थाप्य चैनमरविन्ददलायताक्षश्चक्राङ्कितेन वरदेन कराम्बुजेन ।**
**कृत्वा च संविदमनेन नुतोऽस्य चांसं[1] प्रीत्याऽऽरुरोह स हसन्सह लक्ष्मणेन ।।**

**व्यासतीर्थीया–** किष्किन्धाकाण्डकथामाह– **उत्थाप्येत्यादिना** ।। संविदं शपथं त्वां मद्भक्तेषु मुख्यं करिष्ये इति ।।१-४।।

**वेदाङ्गतीर्थीया–** संविदं सम्भाषणम् ।।१-३।।

**वादिराजीया–** अरविन्ददलायताक्ष इत्यनेन हनूमदुपरि कृपाकटाक्षनिरीक्षणं सूचयति । संविदं सम्यग्वेदयत्यपेक्षितार्थमिति संवित् प्रियवचनम् । हसन्नित्यनेन त्वं मूलरूपेऽपि मां च जीवं च स्कन्द आरोप्य शरीराच्छरीरान्तरं गच्छस्यतो नेदमपूर्वमिति सूचयति ।।१।।

**वरदराजीया–** ।। **उत्थाप्येति** ।। अरविन्ददलवत् पद्मदलवत् आयते विशाले अक्षिणी यस्य स तथा । एनं हनूमन्तं स्वपदयोः पतितं चक्रचिह्नितेन वरप्रदेन करपद्मेनोत्थाप्य मस्तके धृत्वोत्थाप्येत्यर्थः । अनेन हनूमता संविदं विचारं च कृत्वा भाविकार्यं सर्वं विचारयित्वा अनेन हनूमता नुतो स्तुतः हसन् सः रामो लक्ष्मणेन सह प्रीत्या प्रेम्णा अस्य हनूमतो अंसं स्कन्दं आरुरोहेत्यर्थः ।।१।।

**जनार्दनीया–** किष्किन्धाकाण्डकथां निरूपयति– **उत्थाप्येत्यादिना** ।। चक्राङ्कितेन चक्रचिह्नितेन । एनमुत्थाप्य । अनेन हनूमता नुतः स्तुतः स रामः अनेन हनूमता सह संविदं देवकार्यसाधनरूपं विचारं कृत्वा, हसन् अस्य हनूमतः अंसं स्कन्धम् ।।१।।

---

१. रूपलक्षणसम्पन्नौ कृताञ्जलिरुपस्थितः । तौ परिज्ञाततत्वार्थौ मया प्रीतिसमन्वितौ ।। पृष्ठमारोप्य तं देशं प्रापितौ पुरुषर्षभौ ।। इति वाल्मीकिरामायणे.५.३५.३०-३१

**अनन्तभट्टीया–** संविदं विचारम् । त्वां मद्भटेष्वधिपं करिष्यामीति शपथं वा ।।१।।

**ताम्रपर्णीया–** संविदं परस्परकालादिनिश्चयं आलोचनां वा ।।१।।

**चट्टी–** किष्किन्धाकाण्डकथामाह– **उत्थाप्येति** ।। अरविन्ददलवत् पद्मपत्रवद् आयते विशाले अक्षिणी यस्य स तथा । सः रामश्च एनं हनुमन्तं चक्राङ्कितेन चक्रचिह्नितेन वरप्रदेन करपद्मेन उत्थाप्य अनेन हनुमता नुतः स्तुतः अनेन सह संविदं देवकार्यसाधनरूपं विचारं कृत्वा हसन् लक्ष्मणेन सह प्रीत्या अस्य हनुमतः स्कन्धं अंसं आरुरोह ।।१।।

**भारतश्री–** उत्थाप्य चशब्दाद् आलिङ्ग्येति च लभ्यते । पुनश्चशब्दो समुच्चयार्थः ।।१।।

**भावचन्द्रिका–** ।। **उत्थाप्येति** ।। दुःखितस्य बन्धुदर्शने पुनर्दुःखोत्पादः । तद्दुःखं नेत्याह– **अरविन्ददलायताक्ष इति** ।। तत्कुत इत्यतः ईश्वरलक्षणाक्रान्तत्वेन ईश्वरत्वादित्याह– **चक्राङ्कितेनेति** ।। उत्थापने हेतुमदभीष्टप्रयोजनमित्याह– **वरदेनेति** ।। तात्कालिकमपीत्याह– **कराम्बुजेनेति** ।।१।।

**गूढवाक्यार्थ–** संविदं आलोचनाम् । त्वां मद्भक्तेष्वधिकं करिष्यामीति शपथं वा । अन्योन्यकुलादि-परिज्ञानं वा ।।१।।

**आरोप्य चांसयुगलं भगवन्तमेनं तस्यानुजं च हनुमान् प्रययौ कपीन्द्रम् ।**
**सख्यं चकार हुतभुक्प्रमुखे च तस्य रामेण शाश्वतनिजार्तिहरेण शीघ्रम् ।।२।।**

**वादिराजीया–** भगवन्तमित्यनेन पूज्यत्वबुद्ध्यैव स्कन्धे रामस्यारोपणं लक्ष्मणस्य त्वनुजपदोप-लक्षितविष्णुभक्तत्वबुद्ध्येति सूचितम् । शाश्वतनिजार्तिहरेण शाश्वतः शश्वदेकप्रकारो यो निजो भक्तः, न तु मध्यमजीववत्कदाचिद्भक्तः कदाचिदभक्तः इति भावः । तस्यार्तिहरेण ।।२।।

**वरदराजीया–** हनूमानेनं भगवन्तं षड्गुणसम्पन्नं रामं तस्य रामस्य अनुजं लक्ष्मणं अंसयुगलं स्कन्धद्वयमारोप्य स्थापयित्वा कपीन्द्रं सुग्रीवं प्रति ययौ । तस्य सुग्रीवस्य शाश्वतां बहुकालवर्तमानां निजां स्वसम्बन्धिनीं यां आर्तिं दुःखं तां हरतीति तथा तेन रामेण सख्यं हुतभुक्प्रमुखे अग्निमुखे सुग्रीवं हस्ते धृत्वा सप्तवारं अग्निं प्रदक्षिणीकृतं कारयमासेत्यर्थः ।।२।।

**जनार्दनीया–** कपीन्द्रं सुग्रीवं प्रति । हुतभुजः अग्नेः प्रमुखे अभिमुखे सन्निधावित्यर्थः । शीघ्रं स्वस्मृतिमात्रादेवेत्यर्थः । शाश्वतां सर्वकल्पेषु विद्यमानां निजानां भक्तानां आर्तिं दुःखं हरतीति तथा तेन । रामेण सह अस्य सुग्रीवस्य सख्यं चकार अकारयत् ।।२।।

**अनन्तभट्टीया–** हुतभुक्प्रमुखे अग्निसन्निधौ । तस्य रामेण सह सख्यमित्यर्थः । चकार अकारयत् ।।

**ताम्रपर्णीया–** ।। **निजार्तिहरेणेति** ।। जननादिसांसारिकदुःखनिवर्तकस्य अत एव अनादिसुखभूतस्य तात्कालिकदुःखनिवर्तकत्वं किमु वाच्यम् । अग्निसाक्षिकं सख्यकरणं च अयुक्तमिति सूचितम् ।।२।।

**चट्टी–** हनुमान् एनं भगवन्तं षड्गुणसम्पन्नं रामं तस्य अनुजं लक्ष्मणं च अंसयुगलं स्कन्धयुग्मं आरोप्य कपीन्द्रं सुग्रीवं प्रति ययौ । हुतभुजः अग्नेः प्रमुखे सन्निधावित्यर्थः । शीघ्रं स्वस्मृतिमात्रादेवेत्यर्थः । शाश्वतानां सर्वकल्पेषु विद्यमानानां निजानां स्वभक्तानां आर्तिं दुःखं हरतीति तथा तेन रामेण सह तस्य सुग्रीवस्य सख्यं चकार अकारयत् ।।२।।

**भारतश्री–** कपीन्द्रं सुग्रीवम् ।।२।।

**भावचन्द्रिका–** शाश्वता अनादिकालीना निजानामार्तिः । *...परिहारं किमेतादृशस्य तस्यपि आपन्नेत्यर्थः ।।२।।

**अतिविशद–** ।।१।। **'आरोप्य चांसयुगलं भगवन्तमेनम्'** इत्यत्र **'एनम्'** इत्येतत् **'भगवन्तम्'** इत्यत्र नान्वेति । तथात्वे एतस्यानुजमिति स्यात् । नतु तस्यानुजमिति । अपरोक्षतया प्रकृतस्य परोक्षतया परामर्शायोगात् । अत एव 'परोक्षत्वात्स इत्यपि' इत्युक्तं गीतातात्पर्ये । ततश्चैवमक्षरयोजना । हनुमान् भगवन्तं अंसयुगलमारोप्य तस्यानुजं एनं लक्ष्मणं च अंसयुगलमारोप्य कपीन्द्रं प्रययौ इति । **'सख्यं चकार हुतभुग्प्रमुखे च तस्य रामेण शाश्वतनिजार्तिहरेण शीघ्रम्'** इत्यत्र शाश्वतस्य आर्तिविशेषणत्वेन तथा शाश्वतपदस्य शश्वदेकप्रकारार्थत्वं तथाभूतार्तेः भक्तेष्वभावात् भगवतः परिहार एवानुपपन्नः । याऽसुरादावस्ति तादृशी ह्यार्तिः सा त्वपरिहार्य एव । स्वाभाविकत्वात् तस्याः कथमिति चेत् अत्रोच्यते । निजानामात्मीयानां भक्तानां आर्तिः निजार्तिः । तां हरतीति निजार्तिहरः । शाश्वतश्चासौ निजार्तिहरश्चेति समासः । निजार्तिहरत्वादिकं कदाचिदपि न जहातीति सूचनार्थं **'शाश्वत'** इत्युक्तम् । अत एवोक्तं गीतातात्पर्ये– 'अजो नित्यः शाश्वतोऽयं पुराण' इति व्याख्यानरूपे 'उपजीवकत्वं जीवत्वं ईशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात्कथञ्चन ।। वदन्ति शाश्वतावेतत्.... ।।' इति । अथवा 'शाश्वतश्च पुनःपुनः' इत्यभिधानात् पुनःपुनर्जायमाना या आर्तिः तां हरतीति तथोक्तस्तेनेति । अथवा शाश्वताः शश्वदेकप्रकाराः निजाः भक्तास्तेषां आर्तिं हरतीति निजार्तिहरः तेनेति ।।२-३।।

**गूढवाक्यार्थ–** हुतभुक्प्रमुखे अग्निसन्निधौ । शाश्वतनिजार्तिहरेण शाश्वती अनादितः प्राप्ता या निजार्तिस्तां हरतीति शाश्वतनिजार्तिहरः तेन रामेण । तस्य सख्यं चकार अकारयत् ।।२।।

**श्रुत्वास्य दुःखमथ देववरः प्रतिज्ञां चक्रे स वालिनिधनाय हरीश्वरोऽपि ।**
**सीतानुमार्गणकृतेऽथ स वालिनैव क्षिप्तां हि [१]दुन्दुभितनुं समदर्शयच्च ॥३॥**

**वादिराजीया–** 'समदर्शयच्च' इत्यत्र चशब्देनैतां त्वमपि दूरे क्षिप तदा मम विश्वासः स्यादिति रामायणादावुदितोत्तरकथां सङ्गृह्णाति ॥३॥

**मधुसूदनीया–** ॥१-२॥ दुन्दुभितनुं महिषाकृतिदुन्दुभ्याख्यदानवतनुम् । 'यदा तु दुन्दुभिर्नाम दानवो महिषाकृतिः' इति रामायणे ॥३॥

**वरदराजीया–** अथानन्तरं सः देववरो रामोऽस्य सुग्रीवस्य दुःखं वालिकृतं स्वनगरनिर्यापण-स्त्रीहरणादिजनितदुःखं श्रुत्वा वालिनो निधनाय मारणाय प्रतिज्ञां चक्रे । हरीश्वरः सुग्रीवोऽपि सीताया अनुमार्गणं अन्वेषणं तदर्थं प्रतिज्ञां चक्रे इत्यनुकर्षः । अथानन्तरं रामो वालिनं हन्तुं समर्थो न वेति स्वशङ्कापरिहारार्थं वालिना योजनमात्रं क्षिप्तां निरस्तां दुन्दुभेः दैत्यस्य तनुं देहं समदर्शयत् प्रदर्शयामास । इदं शरीरं विदूरं अतिदूरे निक्षेपयसि चेत् त्वं समर्थ इत्यभिप्रायेणेति शेषः ॥३॥

**जनार्दनीया–** स रामः अस्य सुग्रीवस्य दुःखं वालिकृतदुःखम् । हरीश्वरोऽपि सीतानुमार्गणकृते सीतान्वेषणार्थम् । अथ प्रतिज्ञानन्तरम् । स सुग्रीवः वालिना क्षिप्तां निरस्तां दुन्दुभितनुं दुन्दुभिनामराक्षसदेहं समदर्शयत् । वालिना दूरे क्षिप्तां दुन्दुभितनुं यदि ततोऽतिदूरे क्षिपसि तर्हि त्वं वालिवधे समर्थ इति भावेन समदर्शयदित्यर्थः ॥३॥

**अनन्तभट्टीया–** मार्गणकृते प्रतिज्ञा...* सम्बध्यते । दुन्दुभितनुं दुन्दुभिनामकासुरकायम् ॥३॥

**ताम्रपर्णीया–** शीघ्रं प्रतिज्ञां चक्रे इत्यन्वयः ॥३-९॥

**चट्टी–** अथ अनन्तरं देववरः सः रामः अस्य सुग्रीवस्य दुःखं वालिकृततत्स्थानापहारादिजनितं दुःखं श्रुत्वा वालिनो निधनाय मारणाय प्रतिज्ञां चक्रे । हरीश्वरोऽपि सीतानुमार्गणकृते सीतान्वेषणार्थं प्रतिज्ञां चक्रइत्यनुकर्षः । अथ अनन्तरं सुग्रीवः वालिनैव क्षिप्तां निरस्तां दुन्दुभितनुं महिषाकृतिं दुन्दुभ्याख्य-दानवतनुं च । 'यदा तु दुन्दुभिर्नाम दानवो महिषाकृतिः' इति रामायणे । समदर्शयत् । वालिना दूरे क्षिप्तां दुन्दुभितनुं यदि ततोऽपि दूरे क्षिपसि चेत् तर्हि त्वं वालिवधे समर्थ इति भावेन समदर्शयदित्यर्थः ।

---

१. 'महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः । बलं नागसहस्रस्य धारयामास वीर्यवान् ॥ स वीर्योत्सेकदुष्टात्मा वरदानेन मोहितः ॥' इति । वा.रा.४.११.७ । 'अत्र मायावीदुन्दुभी मयपुत्रौ रावणस्य श्यालकौ । तत्र प्रथमं मायावीवालिनोः स्त्रीकृते महद्वैरमासीत् । तदा वैरानुबन्धिना मायाविना निशीथे योद्धुमाहूतो वाली गुहां प्रविष्टः तेन वत्सरपर्यन्तं नियुद्ध्य तं निजघान । तदनन्तरं तदनुजेन दुन्दुभिनाम्ना असुरेण युद्धार्थं समाहूतः वाली तं निहत्य मतङ्गर्षेराश्रमपरिसरे चिक्षेप ।' इत्यादिकथा रामायणादवगम्यते ।

**भारतश्री–** ।। **सीतानुमार्गणकृते इति** ।। यद्यपि सीता न रावणेन नीता इति जानाति तथापि सः रावणः तां गृहीत्वा कुत्र गत इति न ज्ञायते । तस्मान्मार्गणमपेक्षितमित्यर्थः । 'मार्गे व्रजन्तमभियाय ततो हनूमान् संवारितो रविसुतेन च जानमानः' इति पूर्वोक्तेः । तावन्मात्रं चेत् रामोपि वेद जटायुवाक्यात् । अतः सीतानुमार्गणं नाम सीतावस्थानस्थलमार्गणमिति ज्ञेयम् । हिशब्दः दुन्दुभिकथाप्रसिद्धिद्योतकः ।।३-७।।

**भावचन्द्रिका–** महिषाकारं दुन्दुभिनामानं असुरं देवविरोधिनं वाली निहत्य तत्तनुं कन्दुकवत् योजनतः चिक्षेपेति कथा ।।३-९।।

**गूढवाक्यार्थ–** दुःखं दुःखकारणम् । मार्गणकृते प्रतिज्ञामिति सम्बध्यते । दुन्दुभितनुं दुन्दुभिनामकासुरकायम् ।।३।।

**वीक्ष्यैव तां निपतितामथ रामदेवः सोऽङ्गुष्ठमात्रचलनादतिलीलयैव ।**
**सम्प्रास्य [१]योजनशतेऽथ तयैव चोर्वीं सर्वान् विदार्य दितिजानहनद्रसास्थान् ।।**

**वेदाङ्गतीर्थीया–** रसास्थान् रसातळस्थान् ।।४।।

**वादिराजीया–** आकर्णान्तमाकृष्टविसृष्टशरस्येव सत्त्ववता क्षेपणीयाश्मन इव च नखाग्रस्पर्शमात्रेण ब्रह्माण्ड-खर्परनिर्भेदिरामाङ्गुष्ठशक्त्याहितशक्त्या प्राग्भूमिस्थदुन्दुभितनोरेव घनतरभूनिर्भेदसामर्थ्यमप्यभूदिति भावेनाह– **अथ तयैवेति** ।। अत एव ग्रन्थकारस्तस्याः सहजशक्त्यभावसूचनाय कुणपेनेति वक्ष्यति ।।

**मधुसूदनीया–** योजनशते सम्प्रास्यत ऊर्ध्वयोजनशते चिक्षेपेति भावः ।।४-७।।

**वरदराजीया–** अथानन्तरं रामदेवो निपातितां तां तनुं ईक्ष्यैव अतिलीलया अङ्गुष्ठमात्रस्य चलनाच्चालनात् योजनशते सम्प्रास्य क्षिस्वा अथानन्तरं तयैव तन्वा सर्वां भूमिं अतलादिविवरसहितां विदार्य रसास्थान् रसातलस्थान् दितिजानहनत् ।।४।।

---

१. ननु आर्षे 'तोलयित्वा महाबाहुः चिक्षेप दशयोजनम्' इति 'पादेन दुन्दुभेः कायं चिक्षेप दशयोजनम्' इति अग्निपुराणे च रामः दुन्दुभेः कायं दशयोजनमात्रं चिक्षेप इति कथ्यते । अतः आ योजनशतमिति आचार्यवचनं कथं उपपद्यते । उपपादयिष्यति लोकानुभवसिद्धा उपपत्तिरेव । तथाहि चतुर्गुणबलाधिकः पुरुषः शत्रुं परिभवत्येव न तु हन्ति । हनने तु शतगुणाधिकबलः अपेक्षित इत्येतत् लोकसिद्धम् । तथाच वालिना उभाभ्यामपि बाहुभ्यां या दुन्दुभितनुः योजनमात्रं चिक्षिपे, सैव वालिघातकेन अत एव शतगुणाधिकबलेन श्रीरामेण अनुद्धृतपादतलेन अङ्गुष्ठमात्रेण शतयोजनोत्तरमपि क्षिप्ता भवेदेव । अत एव स्कान्दे– ब्र.खं.से.मा.१५. 'सुग्रीवप्रत्ययार्थश्च दुन्दुभेः कायमाशु वै । पादाङ्गुष्ठेन चिक्षेप राघवो बहुयोजनम् ।। इति बहुयोजनप्रक्षेप उच्यते ।

**जनार्दनीया–** तां दुन्दुभितनुं वीक्ष्य, अङ्गुष्ठमात्रचलनात् अङ्गुष्ठक्षेपणमात्रादित्यर्थः । योजनशते सम्प्रास्य गाढं क्षिप्त्वा, अथ क्षेपणानन्तरं तया तन्वा उर्वीं विदार्य, रसास्थान् रसातले स्थितान् सर्वान् दितिजान् अहनत् अहन् ।।४।।

**अनन्तभट्टीया–** ।। **अङ्गुष्ठेति** ।। अङ्गुष्ठेन...*णादित्यर्थः ।।४।।

**चट्टी–** अथ अनन्तरं सः रामदेवः निपतितां दुन्दुभितनुं ईक्ष्यैव लीलया अङ्गुष्ठमात्रस्य चलनाच्चलनादेव योजनशते संप्रास्य गाढं क्षिप्त्वा अथ अनन्तरं तयैव तन्वा उर्वीं विदार्य रसास्थान् रसातले पाताले स्थितान् सर्वान् दितिजान् अहनत् अहन् ।।४।।

**अतिविशद–** सम्प्रास्य योजनशतेऽथ तयैव चोर्वीं सर्वान् विदार्येत्यनेन 'जेतुं चतुर्गुणबलो हि पुमान् प्रभुस्स्यात्' इत्यादिना वक्ष्यमाणा 'हन्तुं शताधिकबलोऽतिबलं सुशक्तः' इत्यादिका युक्तिर्लब्धा । 'जेतुं चतुर्गुणः' इत्यनेन पुनरुच्यमाना व्यर्था इति चेत्सत्यम् । यद्यपि कुणपस्य शतयोजनप्रक्षेपेण सिद्धा अथापि पुनर्वक्ष्यमाणा युक्तैव । कुणपस्य रामप्रक्षेपसमये अत्यायामताभावेन सावकाशत्वात् युक्तेरिति भावः । किञ्च कुणपस्य शतयोजनपातनं स्वयं गत्वा न ददर्श पाताले यत्कार्यं तेन कृतं तदपि न ददर्श । किन्तु दूरपतनमेव दृष्टवान् । शतयोजनपातादिकं ग्रन्थकारैरेव उक्तमिति तस्य पुनःशङ्कावकाश इति ।।

**गूढवाक्यार्थ–** ।। **अङ्गुष्ठेति** ।। अङ्गुष्ठेन क्षेपणादित्यर्थः । प्रास्य क्षिप्त्वा । सर्वान् दितिजानिति सम्बन्धः । रसा पातालम् ।।४।।

**शर्वप्रसादजबलाद्दितिजानवध्यान्सर्वान्निहत्य कुणपेन पुनश्च सख्या ।**
**भीतेन वालिबलतः कथितः स सप्ततालान् प्रदर्श्य दितिजान् सुदृढांश्च वज्रात् ।।**

**व्यासतीर्थीया–** कुणपेन शवेन ।।५-६।।

**वेदाङ्गतीर्थीया–** दितिजान् पूर्वमिति शेषः ।।५।।

**वादिराजीया–** वज्रात् वज्रादपि सुदृढान् दितिजान् दैत्यस्वरूपान् सप्ततालन् प्रदर्श्य कथित इति सम्बन्धः ।।५।।

**वरदराजीया–** कथंभूतान् शर्वप्रसादजं रुद्रप्रसादजं बलं तस्मादवध्यान् एवंभूतान् दितिजान् सर्वान् दैत्यान् कुणपेन शवेन निहत्य । पुनश्च पुनरपि सः वालिबलतो भीतेन वालिबलस्य अत्यन्ताधिकत्वादिति भावः । सख्या सुग्रीवेण कथित उक्तोऽभूदित्यर्थः । किं कृत्वा कथितः वज्रात् कुलिशादपि सुदृढान् कठिणान् दितिजान् दैत्यात्मकान् सप्तसङ्ख्याकान् तालान् प्रदर्शयित्वा ।।५।।

**जनार्दनीया–** कुणपेन शवेन निहत्य, स्थितो रामः । तेन समानकर्तृत्वोपपत्तिः । पुनश्च शवक्षेपणानन्तरमपि वालिबलतः भीतेन सख्या सुग्रीवेण । वज्रात् सुदृढान् अतिकठिणान् दितिजान् दैत्यस्वरूपान् सप्ततालान् सप्तसङ्ख्याकान् तालवृक्षान् प्रदर्श्य, कथितः स्म उदितोऽभूत् ।।५।।

**अनन्तभट्टीया–** ...* दितिजानिति सम्बन्धः । रसातलं कुणपेन शवेन सख्या...* ।।५।।

**चट्टी–** कथंभूतान् शर्वप्रसादजं रुद्रप्रसादजं बलं तस्मात् अवध्यान् एवं भूतान् सर्वान् दितिजान् दैत्यान् कुणपेन शवेन निहत्य स्थितो रामः । तेन समानकर्तृकत्वोपपत्तिः । पुनश्च शवक्षेपणानन्तरमपि वालिबलतः भीतेन सख्या सुग्रीवेण वज्रात् कुलिशादपि सुदृढान् अतिकठिणान् दितिजान् दैत्यस्वरूपान् सप्ततालान् सप्तसङ्ख्याकान् तालवृक्षांश्च प्रदर्श्य कथितः स्म उदितोऽभूत् ।।५।।

**गूढवाक्यार्थ–** सख्या सूर्यजेन ।।५।।

**एकैकमेषु स विकम्पयितुं समर्थः पत्राणि लोप्तुमपि तूत्सहते न शक्तः ।**
**[1]विष्वक्स्थितान्यदि भवान्प्रतिभेत्स्यतीमानेकेषुणा तर्हि [2]वालिवधे समर्थः ।।६।।**

**वेदाङ्गतीर्थीया–** एषु वृक्षेषु । लोप्तुं छेत्तुम् । विष्वक् परितः ।।६।।

**वादिराजीया–** कथं कथित इत्यत आह– **एकैकमेष्विति** ।। एकस्याप्यवशेषो यथा न भवति तथा प्रतिभेत्स्यतीत्यर्थसूचनाय प्रतीत्युपसर्गः । अनन्तबलपरिपूर्णे नारायणे सुग्रीवस्य ज्ञानदार्ढ्याभावसूचनाय प्रभोः शोधनोद्योगात् वालिबलाद्वा भीत्या कम्पमानहृदयस्य तस्य शब्दोऽपि न स्फुटं निस्सृत इति सूचनाय तर्हि इति विशकलितवर्णोच्चारणं कृतम् ।।६–९।।

**वरदराजीया–** किमिति कथित इत्यत आह– **एकैकमिति** ।। एषु तालेषु मध्ये एकैकं एकमेकं सः वाली कम्पयितुं चालयितुं समर्थः शक्तः । पत्राणि लोप्तुं छेत्तुं उत्सहते उद्योगं करोति । अपि तु परन्तु न शक्तः छेत्तुमिति शेषः । विष्वक् वक्रतया स्थितानिमान् तालानेकेषुणा एकेन बाणेन भवान् यदि प्रतिभेत्स्यति छिन्द्यात्तर्हि भवान् वालिवधे समर्थः स्यादित्यर्थः ।।६।।

**जनार्दनीया–** रामं प्रति सुग्रीवेणोक्तं दर्शयति– **एकैकमित्यादिना** ।। स वाली एषु सप्ततालेषु मध्ये एकैकं एकमेकं तालं कम्पयितुं चालयितुं समर्थः शक्तः । पत्राणि तालपत्राणि लोप्तुं छेत्तुं उत्सहते उद्योगं

---

१. विश्वक् स्थितान् अभितो व्याप्यस्थितानित्यर्थ इति भाति । तथाहि साङ्ग्रहिकं वचः- 'विश्वश्चस्ते विभिद्यन्ते त्वया यद्येकपत्रिणा । इति ।

२. भार्यापहारी दुष्टात्मा मदनासक्तमानसः । त्वामृते पुरुषव्याघ्र नास्ति हन्ताद्य वालिनः ।। ...युगपत्सप्ततालांस्तु तरून् यो वै वधिष्यति । स तं वधिष्यतीत्युक्तं पुराणज्ञैर्नृपोत्तम ।। इति नृसिंहपुराणे. ५०.२१-२२

करोति । अपि तु तथापि न शक्तः । भवान् विष्वक् स्थितान् वक्रस्थान् इमान् तालान् एकेषुणा एकेन शरेण यदि प्रतिभेत्स्यति छिन्द्यात् तर्हि ॥६॥

**अनन्तभट्टीया–** एषु तालेषु । लोप्तुं छेत्तुम् । विश्वक्स्थितान्...* ॥६॥

**चट्टी–** किमिति कथित इत्यत आह– **एकैकमिति** ॥ स वाली एषु सप्ततालेषु मध्ये एकैकं कम्पयितुं सञ्चालयितुं समर्थः शक्तः पत्राणि तालपत्राणि लोप्तुं छेत्तुं उत्सहते उद्वेगं करोति । अपि तु तथापि न शक्तः । भवान् विष्वक् स्थितान् वक्रतया स्थितान् तालान् एकेषुणा बाणेन यदि प्रतिभेत्स्यति छिन्द्यात् तर्हि वालिवधे समर्थः शक्तः । तर्हीत्यत्र तर्हीति विशकलितवर्णोच्चारणं कृतम् । प्रभोः पुरतः कम्पमानहृदयस्य अस्पष्टवर्णोच्चारणवत्वादिति भावः ॥६॥

**गूढवाक्यार्थ–** एषु तालेषु । लोप्तुं छेत्तुम् । विष्वक्स्थितान् व्युत्क्रमेण स्थितान् ॥६॥

**जेतुं चतुर्गुणबलो हि पुमान्प्रभुः स्याद्धन्तुं शताधिकबलोऽतिबलं सुशक्तः ।**
**तस्मादिमान् [1]हरिहयात्मजबाहुलोप्यपत्रान्विभिद्य मम संशयमाशु भिन्धि ॥**

**व्यासतीर्थीया–** तेष्वेकैकभेदनेन वालिवधसमर्थत्वावगमात् किं सर्वभेदनावगमेनेत्यतः तथा सति संशयः सर्वात्मना निवर्तते इति भावेनाह– **जेतुमिति** ॥७॥

**वेदाङ्गतीर्थीया–** अतिबलं जेतुं प्रभुः स्यात् । अतिवलं हन्तुं सुशक्तः स्यादिति सम्बन्धः । संशयं वालिवधशक्तिविषयसंशयम् ॥७॥

**वरदराजीया–** ननु वाल्यपेक्षया किञ्चिदधिकबलेन वालिवधसम्भवत् किमेतावता बलेनेत्यत आह– **जेतुमिति** ॥ जेतव्यापेक्षया चतुर्गुणाधिकबलः पुमान् जेतुं प्रभुः समर्थः स्यात् । तथा अतिबलं बलाढ्यं हन्तुं शताधिकबलः शतगुणाधिकबलः पुमान् सुशक्तः स्यादित्यर्थः । यस्मादेवं नियमस्तस्माद्धरिहयात्मजस्य इन्द्रात्मजस्य वालिनो बाहुभ्यां अलोप्यानि छेत्तुमशक्यानि पत्राणि येषां ते तथा तानिमान् सप्ततालान् विभिद्य छित्वा आशु शीघ्रं मम संशयं हन्तुं समर्थो न वा इत्येवं रूपं संशयं भिन्धि छिन्धीत्यर्थः ॥७॥

**जनार्दनीया–** ननु सुग्रीवोऽरिबलात् बहुगुणाधिकं बलं किमर्थमैच्छदित्याशङ्कायां नीतिरूपप्रमाणमाह– **जेतुमिति** ॥ अरिबलाच्चतुर्गुणबलाधिकः पुमान् जेतुम् । अरिमिति शेषः । प्रभुः समर्थः

---

१. हरिहयात्मजबाहुलोप्यपत्रान् इत्यत्र सकृदेव सप्तानामपि सालवृक्षाणां पत्राणि शातितुं सर्वथा न घटते । एकमेव वृक्षं पत्ररहितं कर्तुं उत्सहते न तु क्षमते इत्यर्थः । यदाह वाल्मीकिः– इमे च विपुला सालाः सप्तशाखावलम्बिनः । यत्रैकं घटते वाली निष्पत्रयितुमोजसा ॥ वा.रा.४.११.६७ । घटते प्रयतते । 'वेद्धुं शक्तः नतु कदाचित्तथा कृतवानित्यर्थः' इति केचित् ।

स्यात् । शताधिकबलः अतिशयबलत्वेन हन्तुं सुशक्तः स्याद्धि यस्मात्तस्मात् । हरिहयः इन्द्रः । तस्यात्मजो वाली । तस्य बाहुभ्यां अलोप्यानि छेत्तुमशक्यानि पत्राणि येषां ते तथा तान् । इमान् तालान् विभिन्य च्छित्वा, मम संशयं वालिवधसामर्थ्यविषये विद्यमानं संशयं आशु भिन्धि छिन्धि ॥७॥

**अनन्तभट्टीया–** ....* चतुर्गुणबलः । संशय....* ॥७॥

**चट्टी–** ननु वाल्यपेक्षया किञ्चिदधिकबलेन वालिवधसम्भवात् किमेतावद्बलेनेत्यत आह– **जेतुमिति** ॥ जेतव्यापेक्षया चतुर्गुणाधिकबलः पुमान् जेतुं प्रभुः समर्थः स्यात् । तथा शताधिकबलः पुमान् अतिबलं अधिकबलं हन्तुं सुशक्तः स्याद्धि । तस्मात् हरिहयः इन्द्रः तस्यात्मजो वाली तस्य बाहुभ्यां अलोप्यानि छेत्तुमशक्यानि पत्राणि येषां ते तथा तान् इमान् सप्ततालान् विभिन्य छित्वा मम संशयं वालिवधसामर्थ्यविषये विद्यमानं संशयं आशु भिन्धि छिन्धि ॥७॥

**गूढवाक्यार्थ–** ॥ **चतुर्गुणेति** ॥ जेतव्यापेक्षया चतुर्गुणितबलः । संशयं 'वालिवधे त्वं शक्तोऽसि न वा' इति संशयम् ॥७॥

**श्रुत्वाऽस्य वाक्यमवमृश्य दितेः सुतांस्तान् धातुर्वरादखिलपुम्भिरभेद्यरूपान् ।**
**ब्रह्मत्वमाप्तुमचलं तपसि प्रवृत्तानेकेषुणा सपदि तान्प्रबिभेद रामः ॥८॥**

**वेदाङ्गतीर्थीया–** अवमृश्य ज्ञात्वा । अचलमिति क्रियाविशेषणम् ॥८–९॥

**मधुसूदनीया–** अवमृश्य निश्चित्य सन्धायेति ॥८॥

**वरदराजीया–** रामोऽस्य सुग्रीवस्य वाक्यं श्रुत्वा धातुर्ब्रह्मणो वरात् अखिलपुम्भिः सर्वैः पुरुषैः अभेद्यं रूपं येषां ते तथा तान् । अचलं अक्षयं ब्रह्मत्वं चतुर्मुखत्वं आप्तुं प्राप्तुं तपसि तपश्चर्ये प्रवृत्तान् वर्तमानान् तान् तालान् दितिजान् दितेः सुतान् दैत्यानवमृश्य निश्चित्य सपदि शीघ्रमेव प्रबिभेद विदारयामासेत्यर्थः ॥८॥

**जनार्दनीया–** रामः अस्य सख्युर्वाक्यं श्रुत्वा, धातुर्वरादखिलपुम्भिः सर्वपुरुषैरभेद्यं रूपं येषां ते तथा तान् । ब्रह्मत्वं चतुर्मुखत्वं आप्तुं, अचलं यथा स्यात्तथा तपसि प्रवृत्तान् दितेः सुतान् दैत्यात्मकान् तान् तालान् अवमश्य ज्ञात्वा, एकेषुणा सपदि शीघ्रं तान् तालान् प्रबिभेद विददार ॥८॥

**अनन्तभट्टीया–** आप्तुमचलं ब्रह्मत्वमिति सम्बन्धः ॥८–९॥

**चट्टी–** रामः अस्य सुग्रीवस्य वाक्यं श्रुत्वा धातुर्ब्रह्मणो वरात् अखिलपुम्भिः सर्वपुरुषैः अभेद्यं रूपं येषां ते तथा तान् ब्रह्मत्वं परब्रह्मत्वं आप्तुं अचलं यथा स्यात् तथा तपसि प्रवृत्तान् वर्तमानान् तालान् दितिसुतान् दैत्यान् अवमृश्य ज्ञात्वा सपदि शीघ्रं एकेषुणा तान् प्रविभेद विददार ॥८॥

**भारतश्री–** अचलमिति क्रियाविशेषणम् ।।८–१३।।

**गूढवाक्यार्थ–** अचलं ब्रह्मत्वमिति सम्बन्धः ।।४।।

**सन्धाय कार्मुकवरे निशिते तु बाणेऽथाकृष्य दक्षिणभुजेन तदा प्रमुक्ते ।**
**रामेण सत्वरमनन्तबलेन सर्वे चूर्णीकृताः सपदि ते तरवो रवेण ।।९।।**

**सत्याभिनवीया–** सन्धाय कार्मुकवरे निशिते तु बाणे... इति श्लोकः । तस्यार्थः । अनन्तबलेन रामेण कार्मुकवरे बाणं सन्धाय अथ अनन्तरमेव दक्षिणभुजेन कार्मुकवरमाकृष्य तु विशेषतः निशिते बाणे सत्वरं प्रयुक्ते सति रवेण शब्दमात्रेण ते सप्ततरवः सपदि युगपत् चूर्णीकृताः । न केवलं सप्त तरवः चूर्णीकृताः किं तु तदा तस्मिन् काले तद्देशे ये ये तरवः अभूवन् ते सर्वे तरवः चूर्णीकृता इति । एतेन तदा सर्वे इत्येतत्पदद्वयं व्यर्थमिति दूषणं परास्तम् । न केवलमित्यादेः शेषेण न केवलं सप्ततरवः चूर्णीकृताः , किन्तु तस्मिन् काले तस्मिन् देशे ये ये तरवः अभूवन् ते सर्वे चूर्णीकृताः इत्यर्थं वक्तुं तदा सर्वे इति पदद्वयं प्रयुक्तमिति स्वीकरणात् ।।९।।

**मधुसूदनीया–** अत्र तुशब्दः रवेनेत्यनेन सम्बध्यते । स तु अवधारणार्थः । रवेणैव धनुष्टङ्कारेणैव चूर्णीकृताः । यथा रावणो धनुष्टङ्कारेणैव पूर्वं नष्टः तदनन्तरं राममुक्तशरैः विनष्टः तथा चूर्णितप्राय इत्यर्थः । 'धनुर्विस्फूर्जितैर्नष्टो रावणः पूर्वमेव तु । पुनः शरैः राममुक्तैः सानुबन्धो विनष्यति ।।' इति स्कान्दे । [भा.ता.२.७.२५] 'रवेणैव चूर्णीकृता' इत्युक्तिस्तु रवस्यैव तादृशं सामर्थ्यं किमु शरस्येति कैमुत्यद्योतनार्थम् ।।९–१०।।

**वरदराजीया–** तस्मिन् समये रामस्य हस्तलाघवं वर्णयत्याचार्यः– **सन्धायेत्यादिना** ।। अनन्तं अपरिच्छेद्यं बलं यस्य तेन रामेण कार्मुकवरे धनुश्रेष्ठे शार्ङ्गे निशिते तीक्ष्णे बाणे सन्धाय सन्निधाय अथानन्तरं दक्षिणभुजेनाकृष्य धनुरिति शेषः । सत्वरं वेगेन प्रमुक्ते सति ते तरवः सप्ततालाः रवेण ध्वनिनैव सर्वेऽपि चूर्णीकृताः तिलशः कृता इत्यर्थः ।।९।।

**जनार्दनीया–** छेदनप्रकारं विविच्याह– **सन्धायेति** ।। तदा तालच्छेदनसमये । अनन्तबलेन रामेण । कार्मुकवरे चापोत्तमे । बाणं सन्धाय संयोज्य, अथ सन्धानानन्तरं । दक्षिणभुजेनाकृष्य, सत्वरं जवेन सहितं यथा स्यात्तथा । निशिते क्रूरे बाणे प्रमुक्ते सति ते सर्वे तरवः सप्ततालवृक्षाः रवेण शब्देन चूर्णीकृताः ।।९।।

**चट्टी–** तस्मिन् समये रामस्य हस्तलाघवं वर्णयन् तरुच्छेदनप्रकारं विविच्याह– **सन्धायेति** ।। तथा तालभेदनसमये अनन्तमपरिच्छेद्यं बलं यस्य रामेण कार्मुकवरे धनुश्रेष्ठे निशिते तीक्ष्णे बाणे सन्धाय

संयोज्य, अथ अनन्तरं दक्षिणभुजेन आकृष्य सत्वरं वेगेन सहितं यथा स्यात् तथा प्रमुक्ते सति सर्वे ते तरवः सप्ततालवृक्षाः । तुशब्दः रवेणेत्यनेन सम्बध्यते । न तु अवधारणार्थः । रवेणैव धनुष्टङ्कारेणैव चूर्णीकृताः । यथा रावणो धनुष्टङ्कारेणैव पूर्वं नष्टः तदनन्तरं राममुक्तशरैर्विनष्टः तथा चूर्णितप्रायाः कृता इत्यर्थः । 'धनुर्विस्फूर्जितैर्नष्टो रावणः पूर्वमेव तु । पुनः शरैः राममुक्तैः सानुबन्धो विनष्यति ।।' इति स्कान्दे । रवेणैव चूर्णीकृता इत्युक्तिस्तु रवस्यैव तादृशसामर्थ्यं किमु शरस्येति कैमुत्यद्योतनार्थम् ।।९।।

**अतिविशद–** सन्धाय कार्मुकवरे निशिते तु बाणेऽथाकृष्य दक्षिणभुजेन तदा प्रमुक्ते । रामेण सत्त्वरमनन्तबलेन सर्वे चूर्णीकताः सपदि ते तरवो रवेण ।।' इत्यत्र रवेण चूर्णीकृतास्तरव इति प्रतीयते । तत्तु 'एकेषुणा सपदि तान् प्रविभेद राम' इति पूर्ववाक्यस्य विरुद्धम् । तत्र शरेण तरुभेदप्रतीतेः । 'भित्वा च तान् सगिरिकुं भगवत्प्रमुक्तः पातालसप्तकम्' इत्युत्तरवाक्येनापि तथा प्रतीतेः तस्मात्कथमिति चेन्न । 'रवेण युक्तेन शरेण' इत्यध्याहारेण वाक्ययोजनायां न विरोधः । रवेण सगिरिकुं पातालसप्तकं भित्वेति योजनायां वा न विरोधः । तरवः रावं कृत्वा चूर्णीकृता इति वा ।।९–१०।।

**गूढवाक्यार्थ–** बाणे सन्धाय आकृष्य मुक्ते इति सम्बन्धः । रवेण स्वध्वनिनैवेत्यर्थः ।।९।।

**[१]भित्वा च तान् सगिरिकुं भगवत्प्रमुक्तः पातालसप्तकमथात्र च ये त्ववध्याः ।**
**नाम्नाऽसुराः कुमुदिनोऽब्जजवाक्यरक्षाः सर्वांश्च तानदहदाशु शरः स एकः ।।**

**वेदाङ्गतीर्थीया–** सगिरिकुं पर्वतसहितां धराम् ।।१०।।

**वादिराजीया–** गिरिश्च कुः पृथ्वी च गिरिकू गिरिकुभ्यां सहितं सगिरिकुमिति पातालसप्तकस्य विशेषणम् । तान् सप्ततालान् भित्वा सगिरिकुं पाताळसप्तकं च भित्वेति योजना ।।१०।।

**वरदराजीया–** एवं रामेण मुक्तो बाणोऽन्यदपि बहुकार्यं कृतवानित्याह– **भित्वेति** ।। भगवता रामेण प्रमुक्त एक एव शरस्तान् तालान् भित्वा सगिरिकुं गिरिभिः भूम्या च सह वर्तमानं अतलाद्यारभ्य पातालपर्यन्तं लोकसप्तकं च भित्वा । अथानन्तरं अत्र पातालसप्तके तु अब्जजस्य ब्रह्मणो वाक्यं भवन्तोऽवध्या इत्येवं रूपं रक्षा रक्षणं येषां ते तथा अत एव अवध्याः नाम्ना कुमुदिनः कुमुदिनामानो येषां ते तथा असुरास्तान् सर्वान् च आशु अदहत् भस्मीचकारेत्यर्थः ।।१०।।

---

१. 'येन सप्तमहाताला गिरिर्भूमिश्च दारिताः । बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः ।। इति वा.रा. तत्रैव तिलकः– 'युगपत्सप्ततालांश्च रघुनाथो बिभेद ह । पातालदानवान् हत्वा पुनस्तूर्णीं विवेश च ।।' इति । स्कान्दे उमा.संहितायां– सप्तभूमीः सप्तगिरीन् सप्तसालान् महाबलान् । स बाणो वेगसम्पन्नो भित्वा तूणीरमाविशत् ।।' 'सप्ततालव्यधाकृष्टध्वस्तपातालदानवः' इति पाद्मे.उ.खं.७१-२२४

**जनार्दनीया–** राममुक्तशरप्रभावं वर्णयति– **भित्वेति** ।। भगवता प्रमुक्तः स एकः शरः । तान् सप्ततालान् । भित्वा विदार्य, गिरिभिः सहिता सगिरिः । सा च सा कुश्च भूमिश्च तथा ताम् । पर्वतसहितां पृथ्वीमित्यर्थः । भित्वा पातालसप्तकं च भित्त्वा, अथ पातालसप्तकभेदनानन्तरं । अत्र पातालसप्तकेषु अब्जजस्य वाक्यमेव रक्षा येषां ते तथा । अत एवावध्याः । नाम्ना कुमुदिनः कुमुदिनामान इत्यर्थः । ये असुराः अभूवन्निति शेषः । तान् सर्वान् अदहत् ददाह ।।१०।।

**अनन्तभट्टीया–** अब्जजवाक्यं रक्षा रक्षकं येषां ते तथोक्ताः । अत एवावध्याः ।।१०।।

**ताम्रपर्णीया–** सगिरिकुं गिरिश्च कुः पृथ्वी च गिरिकू । गिरिकुभ्यां सहितं सगिरिकुम्, पातालसप्तकं इत्यर्थः ।।१०।।

**चट्टी–** राममुक्तशरप्रभावं दर्शयति– **भित्वेति** ।। भगवता रामेण प्रमुक्तः स एकः शरः सप्ततालान् भित्वा विदार्य गिरिभिः पर्वतैः सहिता सगिरिः । सा च सा कुः भूमिश्च तथा ताम्, पर्वतसहित-पृथिवीमित्यर्थः । भित्वा पातालसप्तकं च । अथ पातालसप्तकभेदानन्तरम् । अत्र पातालसप्तकेषु । अब्जजस्य वाक्यमेव रक्षा येषां ते तथा । अत एव अवध्याः नाम्ना कुमुदिनः कुमुदिनामानो ये असुराः तान् सर्वांश्च आशु अदहत् ददाह ।।१०।।

**भारतश्री–** सगिरिकुं सपर्वतमहीम् । पातालसप्तकं च भित्वेति वर्तते । भित्वा विदार्य गत्वेति शेषः । अभ्यागादिति योजना ।।१०।।

**भावचन्द्रिका–** गिरिकुं ऋष्यमूकं तदधः पृथ्वीं च । शरो वायुमयः । 'प्रायाद्वायुमयो बाण एवं कृतपराक्रमः' इति संग्रहरामायणे । [कि.का.३.४५] ।।१०।।

**गूढवाक्यार्थ–** हतः । सः शरः तान् तालान् सगिरिकुं गिरिश्च कुः पृथिवी च ताभ्यां सहितं पातालसप्तकञ्च भित्वेति पदावृत्त्या योज्यम् । पातालव्यपदेशेन अतलादिलोका अपि गृह्यन्ते । अतः सप्तमीत्युपपन्ना । अत्र च पातालसप्तके ।।१०।।

**नैतद्विचित्रममितोरुबलस्य विष्णोर्यत्प्रेरणात्सपवनस्य भवेत्प्रवृत्तिः ।**
**लोकस्य सप्रकृतिकस्य सरुद्रकालकर्मादिकस्य तदपीदमनन्यसाध्यम् ।।११।।**

**व्यासतीर्थीया–** वृक्षादिभेदनमसम्भावितमित्यत आह– **नैतदिति** ।। विचित्रं न चेन्न वर्णनीयमित्यत उक्तम् । तदपि तथाऽपीति ।।११-१३।।

**वेदाङ्गतीर्थीया–** सरुद्रकालकर्मादिकस्य इत्यत्र काल इति कालाभिमानी गरुडः । 'कालात्मकः सोऽथ सुपर्ण आसीत्' इति भगवत्पादैरेव उक्तत्वात् । कर्मेति कर्माभिमानीन्द्रः । 'क्रियात्मा पाकशासनः' [६.४.४६] इत्युक्तत्वात् । तदपि तथापि ।।११-१२।।

**वादिराजीया–** 'लोकस्तु भुवने जने' इत्यनुशासनात् लोकस्य भुवनस्य जनस्य च । तदपि तथाऽपीदं मण्डलाकारतया स्थिततालानां भेदनं कुणपेन भूनिर्भेदनं विधेरुल्लङ्घनं चेत्यादिकमनन्य-साध्यमिति योजना ।।११-१२।।

**मधुसूदनीया–** कालकर्मादिकस्य कालाभिमानी गरुडः 'कालात्मकः सोऽथ सुपर्ण आसीत्' इति वचनं । कर्माभिमानी इन्द्रः । 'क्रियात्मा पाकशासनः' इति वचनात् ।।११-१२।।

**वरदराजीया–** नन्वन्यत्रासम्भाव्यमानमिदमतः स्तुतिमात्रमेतदिति न मन्तव्यमित्याह– **नैतदिति** ।। अमितं अनन्तं उरु उत्कृष्टं बलं यस्य तस्य विष्णोरेतत्कर्म न विचित्रं तस्मिन्नाश्चर्यकरं न भवति । कुतः यस्य विष्णोः प्रेरणान्नियमनात् सपवनस्य वायुना सह वर्तमानस्य सप्रकृत्या लक्ष्म्या च सहितस्य तथा रुद्रेण कालेन कालाभिमानिना गरुडेन 'कालात्मकः सोऽथ सुपर्ण आसीत्' इत्युक्तेः । तथा कर्मणा कर्माभिमानिना इन्द्रेण 'क्रियात्मा पाकशासन' इत्युक्तेः । तथादिपदोदितेन सूर्यादिना सह वर्तमानस्य लोकस्य जगतः प्रवृत्तिः व्यापारो भवेत् । तस्य विष्णोर्नैतच्चित्रमित्यर्थः । नैतावतान्यस्य सुलभमित्याह– **तदपीदमिति** ।। तदिदं कर्म अनन्यसाध्यमपि रामादन्येन साधयितुं कर्तुमयोग्यमपि विष्णोः न वैचित्र्यमिति पूर्वेणान्वयः ।।११।।

**जनार्दनीया–** एतत्पूर्वोक्तं कर्म न चित्रम् । कुतः ? इत्यत आह– **यदिति** ।। यस्य विष्णोः प्रेरणात् । सपवनस्य सप्रकृतिकस्य लक्ष्मीसहितस्य । रुद्रेण कालेन कालभिमानिना सुपर्णेन । कर्मणा कर्माभिमानिनेन्द्रेण । आदिपदेन कामाद्या विवक्ष्यन्ते । एतैः सहितस्य लोकस्य प्रवृत्तिः प्रवर्तनं भवेत् । ननु रामकृतं कर्म अन्यसाध्यं भवेत् किमित्यत आह– **तदपीति** ।। तदपि तथापि इदं सप्ततालच्छेदनादिकर्म न अन्यसाध्यं अनन्यसाध्यम् । तदपि यद्यपि अनन्यसाध्यं तथापि । अमितोरुबलस्येति हेतुगर्भविशेषणत्वात् । तथा लोकप्रवृत्तिकर्तृत्वात् विष्णोश्चित्रं न । तदपीति आवर्त्य योज्यम् । कालाभिमानीत्यत्र 'कालात्मकः सोऽथ सुपर्ण आसीद्' इति मानम् । कर्माभिमानीत्यत्र 'क्रियात्मा पाकशासनः' इति मानम् ।।११।।

**अनन्तभट्टीया–** प्रकृतिः लक्ष्मीः । तदपि तथापि । विष्ण्वनाश्चर्यकरत्वेऽपि । अनन्यसाध्यं विष्ण्वन्यासाध्यत्वेन....* दर्शयन्नित्यर्थः ।।११-१२।।

**ताम्रपर्णीया–** विचित्रं न चेत् न वर्णनीयं इत्यत उक्तम्– **तदपीति** ।। तथापीत्यर्थः । कालकर्मानन्त्यस्यातिविचित्रत्वात् लोकात् पृथग्ग्रहणम्[१] ।।११-१२।।

**चट्टी–** एतत्पूर्वोक्तं कर्म हरेः न चित्रमित्याह– **नैतदिति** ।। अमितमनन्तं उरु उत्कृष्टं बलं यस्य तस्य विष्णोः एतत्कर्म न चित्रम् तस्मिन्नाश्चर्यकरं न भवति । कुतः । यस्य विष्णोः प्रेरणात् सपवनस्य वायुना सहितस्य सप्रकृतिकस्य लक्ष्मीसहितस्य रुद्रेण कालेन कालाभिमानिना सुपर्णेन 'कालात्मकः सोऽथ सुपर्ण आसीत्' इत्युक्तेः । कर्मणा कर्माभिमानिना इन्द्रेण 'क्रियात्मा पाकशासनः' इत्युक्तेः । आदिपदेन कामाद्या विवक्ष्यन्ते । एतैस्सहितस्य लोकस्य जगतः प्रवृत्तिः व्यापारो भवेत् । तस्य विष्णोः नैतच्चित्रमित्यर्थः । नैतावता अन्यस्य सुलभमित्याह– **तदपीदमिति** ।। तदपि तथापि हरेः सुलभमपीत्यर्थः । इदं तालभेदनरूपं कर्म अनन्यसाध्यं अन्यैः कर्तुमशक्यमित्यर्थः ।।११।।

**भावचन्द्रिका–** कालो गरुडः । कर्म इन्द्रः । आदिना अन्यदेवाः ।।११-१२।।

**भावविवृति–** ।।१-१०।। नैतद्विचित्रममितोरु... अनन्यसाध्यम् इत्यत्र सम्बन्धार्थे षष्ठी । 'यत्प्रेरणात्' इति भिन्नं पदम् । यदिति प्रथमा षष्ठ्यर्थे । 'सप्तसु प्रथमा' इति सूत्रात् । तथाच विष्णुसम्बन्धिनो यस्य भ्रुवश्चालनात् लोकस्य चराचरात्मकप्रपञ्चस्य चलनादिप्रवृत्तिर्भवेत् । कथम्भूतस्य लोकस्य सरुद्रकालकर्मादिकस्य । लोकस्येत्यत्र षष्ठी प्रत्येकं सम्बध्यते । तथाच सरुद्रकालकर्मादिकस्य लोकस्यास्य सकालस्य सकर्मणः । आदिशब्देन वेदा गृह्यन्ते । सवेदस्येत्यर्थः । एवं सति जाग्रत्स्वप्नावस्थायां सरुद्रस्य अभिमन्यमानाभिमानिनोरैक्यव्यपदेशात् रुद्राभिमन्यमानान्तः-करणोपादानकपदार्थसहितस्येत्यर्थः । 'रुद्रोऽन्तःकरणात्मा' इत्युक्तेः [६.४.२५] । सुप्तौ मरणे च पवनसहितः स्वयं [परमात्मानमृते सुषुप्त्यनुस्मृतिरेव न] ।

'देहाद्देहान्तरगतौ प्रविशेत्प्राणमेव तु । जीवः प्राणः परात्मानमेवं सुप्तावपि स्फुटम् ।।
तदन्या देवतास्सर्वाः प्राणस्यैव वशे स्थिताः । ईषच्च सुप्तिमायान्ति नैव मानुषजीववत् ।।
स्वर्गस्थानां न तु स्वापः देहे प्रायोऽपि नाज्ञता । मृतिसुप्तिप्रबोधादेर्नियन्ता हरिरेकराट् ।।
तमृते नैव चावस्था नावस्थावान् न च स्मृतिः । ततस्तु देवदेवेशः प्राणः प्राणेश्वरो हरिः ।।'

इत्येकादशतात्पर्योक्तेः [११.३.३९] । कालप्रवाहस्यैव नित्यत्वेन क्षणलवादिकालोत्पत्तेः कदाप्युपरत्य-भावात् एतज्जगद्विलक्षणत्वेन पृथगुक्तिः । भूतभविष्यद्वर्तमानकालीनकार्यकारणात्मकाचेतनप्रपञ्चस्य कालकर्माकाशवेदानां चाभिमानिन्या प्रकृत्या सहितस्य लोकस्येति वक्तुं सप्रकृतिकस्येति । 'यस्यापाङ्ग-लवमात्रत ऊर्जिता सा श्रीः' इत्याद्युक्तेः । एतादृशभ्रूविजृम्भवतो रामस्य एतच्छरप्रक्षेपणमात्रेण दैत्यहननं चित्रं न । तथाप्येतद्दैत्यहननं रामादन्यैर्ब्रह्मादिभिः कर्तुमशक्यमित्यर्थः ।।११-१२।।

१. ।। अनन्यसाध्यमिति ।। अहमेव हन्मीति भगवत्सङ्कल्पादिति भावः ।।११-२५।। इति हो पुस्तके अधिकःपाठः ।

**अतिविशद–** यत्प्रेरणात् सपवनस्य भवेत्प्रवृत्तिः इत्यत्र प्रकृतेः ब्रह्माद्युत्तमत्वेन सप्रकृतिकस्य इत्यनेनैव चरितार्थत्वात् पुनः सपवनस्येत्यादेः वैयर्थ्यमिति चेन्न । तन्मतनिराकरणार्थं प्रवृत्तत्वेन सर्वस्य सार्थकत्वात् ।।११-१२।।

**गूढवाक्यार्थ–** तदपि तथापीत्यर्थः ।।११-१२।।

**दृष्ट्वा बलं भगवतोऽथ हरीश्वरोऽसावग्रे निधाय तमयात् [१]पुरमग्रजस्य ।**
**आश्रुत्य[२] रावमनुजस्य बिलात्स [३]चागादभ्येनमाशु [४]दयिताप्रतिवारितोऽपि ।।**

---

१. सप्तरात्रे व्यतीते वायुकृताहारत्वादिनिमित्तेन सप्तजनेति नाम्ना प्रथितसप्तजनादिमुनिजनपवित्रिताश्रमाद्यधिष्ठितं पुरं किष्किन्धां अयात् । तथाहि आर्षे सङ्ग्रहे च- 'अत्र सप्तजना नाम मुनयः संशितव्रताः । सप्तैवासन्नधःशीर्षा नियतं जलशायिनः ।। सप्तरात्रे कृताहारा वायुनाऽचलवासिनः । दिवं वर्षशतैर्याता सप्तभिः सकलेवराः ।। तेषामेतत्प्रभावेण द्रुमप्राकारसंवृतम् । आश्रमं सुदुराधर्षमपि सेन्द्रैः सुरासुरैः ।। पक्षिणो वर्जयन्त्येतत् तथान्ये वनचारिणः । विशन्ति मोहाद्येऽप्यत्र न निवर्तन्ति ते पुनः ।।' इति४.१३.१८-२२ । 'आलयं वालिनः प्रायात् सहितो हरिभिर्हरिः । मण्डितं कदलीषण्डैर्दृष्ट्वा सप्तजनाश्रमम् ।।' इति ४.४.११ ।

२. वाल्मीकीये तु 'आश्रुत्य रावमनुजस्य...दयिताप्रतिवारितोऽपि' इत्यन्ता कथा वालिसुग्रीवद्वितीयाहवादर्वागेव निबद्धा । आचार्यचरणास्तु सर्वज्ञतमेन भगवता वेदव्यासेन वनपर्वणि निबद्धां कथामनुसृत्य स्वग्रन्थं निबबन्धुः । अतः वाल्मीकिवचनं कथाव्यत्यासपरमिति भाति ।

३. अत्र चशब्देन सुग्रीवकृतरवश्रवणात् किष्किन्धानिवासिनां पतनादिकं समुच्चीयते । 'किष्किन्धावासिनो येन सम्भ्रान्ता वालिना विना' इति सङ्ग्रहवचनात् । तथाच वालिं विना तदनुयायिनो हरयः सुग्रीवसिंहनादेन निष्प्रभतां गताः भूमौ पेतुः । यत्तु रामायणे-[४.१५] 'श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् । मदश्चैकपदे नष्टः...२ इति, उपरक्त इवादित्यो सद्यो निष्प्रभतां गतः ३,शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः ५। इत्यादिवचनैः वालिनो पतनादिकमाह वल्मीकिः तत् पुरुषं व्यत्यस्य कथयति इति भाव्यम् ।

४. देशकालज्ञत्व-सर्वविज्ञानित्व-प्रत्यर्थिशक्तिज्ञत्व-अविसंवादित्व-दार्ढ्य-सर्वक्लेशसहिष्णुत्वादिचतुर्दशगुणोपेतत्वेन वालिदयिता राजनीत्यामत्युत्कृष्टा । तत एव सा कार्याकार्ये न कदापि परिभ्रमत्यत तन्मतं कदापि न हेयमित्यादिप्रमेयविशेषं भारतोक्तं दयिताप्रतिवारितोपि इत्यनेन सूचयति । तथाहि भारते- ''हेममाली ततो वाली तारां ताराधिपाननाम् । प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः । सर्वभूतरुतज्ञा त्वं पश्य बुद्ध्या समन्विता । केन चाश्रयवान् प्राप्तो ममैष भ्रातृगन्धिकः । चिन्तयित्वा मुहूर्तं तु तारा ताराधिपप्रभा । पतिमित्यब्रवीत्प्राज्ञा श्रुणु सर्वं कपीश्वर । हृतदारो महासत्वो रामो दशरथात्मजः । तुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्धर ।...मैन्दश्च द्विविदश्चापि हनूमांश्चानिलात्मजः । जाम्बवान् ऋक्षराजश्च सुग्रीवसचिवाः स्थिताः । ...अलं तव विनाशाय रामवीर्यव्यपाश्रयाः । तस्मात्तदाक्षिप्य वचो हितमुक्तं कपीश्वरः । पर्यशङ्कत तामीर्षुः सुग्रीवगतमानसाम् । तारां परुषमुक्त्वा तु निर्जगाम गुहामुखात् ।'' वाल्मीकिरपि वाचयामास वालिमुखेन । तथाहि-[४.२२.१३-१४] सुषेणदुहिता चेयं अर्थसूक्ष्मविनिश्चये । औत्पत्तिके च विविधे सर्वतः परिनिष्ठिता ।। यदेषा साध्विति ब्रूयात् कार्यं तन्मुक्तसंशयम् । नहि तारामतं किञ्चिदन्यथा परिवर्तते ।।

**वरदराजीया—** अथानन्तरं असौ हरीश्वरः सुग्रीवो भगवतो रामस्य बलं दृष्ट्वा तं रामं अग्रे पुरतो निधाय । पुरत इत्यनेन अतिभयं सुग्रीवस्य सूचयति । अग्रजस्य वालिनः पुरमगात् प्राप । स च वाली अनुजस्य सुग्रीवस्य रावं ध्वनिं श्रुत्वा पुरद्वारं प्रति रामेण प्रेषितः सुग्रीवः उच्चैः जगर्ज । तदा रावं श्रुत्वेत्यर्थः । दयितया तारया प्रतिवारितोऽपि मा गच्छेति निवारितोऽपि बिलात् बिलरूपात्पुरद्वारादेनं सुग्रीवं आशु अभि प्रत्यगात् आगतोऽभूदित्यर्थः ।।१२।।

**जनार्दनीया—** तं रामं अग्रे । स वाली अनुजस्य रावं सिंहनादं आश्रुत्य श्रुत्वा, दयितया वालिभार्यया तारया मा याहीति प्रतिवारितः सन्नपि । विलात् बिलसदृशपुरात् । निर्गत्येति शेषः । एनमपि सुग्रीवमपि अभ्यगात् अभिमुखोऽगादित्यर्थः ।।१२।।

**चट्टी—** अथ अनन्तरं असौ हरीश्वरः सुग्रीवः भगवतो रामस्य बलं दृष्ट्वा तं राममग्रे पुरतो निधाय, पुरत इत्यनेन सुग्रीवस्य अतिभयं सूचयति । अग्रजस्य वालिनः पुरं अगात् । स च वाली अनुजस्य रावं सिंहनादं आश्रुत्य श्रुत्वा दयितया स्वभार्यया तारया मा याहीति प्रतिवारितोऽपि बिलात् विलसदृशपुरात् एनं सुग्रीवं अभ्यगात् आभिमुख्येन अगादित्यर्थः ।।१२।।

**तन्मुष्टिभिः प्रतिहतः प्रययावशक्तः सुग्रीव आशु रघुपोऽपि हि [1]धर्ममीक्षन् ।**
**नैनं जघान विदिताखिललोकचेष्टोऽप्येनं स आह युधि वां न मया विविक्तौ ।।**

**वेदाङ्गतीर्थीया—** धर्ममीक्षन् धर्मं दर्शयन् ।।१३।।

**वादिराजीया—** धर्मं लोकधर्मं ईक्षन् ईक्षयन् । अन्तर्णीतो णिच् । 'धर्मं प्रदर्शयितुमेव' इति वक्ष्यमाणत्वात् । विदिताखिललोकचेष्टत्वादेतौ स्ववैरं मरणेऽपि न मुञ्चत इति लोकान् प्रतीमं वक्ष्यमाणं धर्मं दर्शयन्नपि न जघानेति भावः । 'व्यत्ययो बहुलम्' इति वचनात् वां युवां मया विविक्तौ 'विचिर् पृथग्भावे' इति धातोः कर्तरि क्तप्रत्यये कृते विशेषेण पृथग्भाववन्तौ न न ज्ञातौ । यद्वा मा कान्तिः, तया युवयोरुभयोरपि समानकान्त्या कारणेनेत्यर्थः । वां विविक्तौ विशेषेण पृथग्भाववन्तौ न अहं नाज्ञासिषमिति योग्यक्रियाध्याहारेण योजना । अस्मिन् पक्षे विविच्याज्ञाने हेतोरपि कथितत्वात्प्रशस्तेयं योजना । रामायणकथासंग्राहकत्वादियमेव ग्रन्थकृतोऽप्यभिमतेति ज्ञातव्यम् ।।१३।।

---

१. क्षत्रियस्य प्रतिज्ञापालनमेव परमो धर्मः, सुप्रजानां स्वप्रजानां देवमुनिमनुजादीनां अभयदानं परमोधर्मः,तथा कपीनामधिपस्य वालिनः त्रिलोककण्टकीभूतस्य रावण्स्य स्नेहसम्पादनं महानधर्मः । तदभावः परमोधर्मः इत्येतादृशं तादृशाभयदानप्रतिज्ञापालनादिकं धर्मम्, तथा वालिनि रावणसख्यरूपं अधर्मं च ईक्षन् वालिनं जघान । तथाहि स्कान्दे उमासंहितायां दशमाध्याये- अभयं वालिने दत्ते प्रतिज्ञा परिहीयते । रावणस्य सखा वाली रावणोऽपि व्रजेत्तु माम् ।। रावणस्य वधाभावात् अवतारफलं नहि' इति ।।

**मधुसूदनीया–** ।। **युधि वामिति** ।। युवामित्यर्थे वामित्यव्ययम् । तदुक्तं काशिकागणपाठे । अतो न वैय्याकरणशंकाऽवकाश इति ध्येयम् ।।१३।।

**वरदराजीया–** तस्य वालिनो मुष्टिभिः प्रतिहतः सुग्रीवो यतोऽशक्तः तस्मात् आशु प्रययौ पलाय्य गतः । ननु तस्यामवस्थायां रामः किमित्युपेक्षितवानित्यत आह– **रघुप इत्यादिना** ।। रघुपो रामोऽपि धर्ममीक्षन् लोकस्य धर्मं दर्शयितुं इत्यर्थः । एनं वालिनं आद्यकक्ष्यायां न जघान । स रामः एनं सुग्रीवमाह । किमिति । युधि युद्धे वां व्यत्ययेन युवां मया न विविक्तौ विविच्य न ज्ञातौ । अत्र विभक्तिव्यत्ययेनेदं विडम्बनमात्रं रामेण कृतमिति सूचयति । वास्तवमेव किं न स्यादित्यत उक्तम्– **विदिताखिललोकचेष्टोऽपीति** ।। विदिता अखिललोकचेष्टा येन असौ तथोक्तः ।।१३।।

**जनार्दनीया–** तस्य वालिनः मुष्टिभिः । प्रययौ । युद्धस्थानात् प्रदुद्रावेत्यर्थः । रघुपोऽपि समर्थोऽपि रामः धर्मं ईक्षन् दर्शयन्निति यावत् । एनं वालिनं न जघान । विदिता ज्ञाता अखिललोकस्य चेष्टा व्यापारो येन स तथा । सर्वज्ञोऽपीत्यर्थः । स रामः एनं सुग्रीवमाह । किमिति? युधि युद्धे । मया वां युवाम् । प्रथमाद्विवचनार्थे अव्ययमेतत् । वां युवयोः युधीति वा । अत्र विभक्तिपरिणामेन योज्यम् । विविक्तौ विविच्य न ज्ञातावित्यर्थः ।।१३।।

**अनन्तभट्टीया–** वां युवाम् । प्रथमाद्विचनं तत् । त्वं वाली च इत्यर्थः । न विविक्तौ विविच्य न ज्ञातावित्यर्थः ।।१३।।

**ताम्रपर्णीया–** धर्ममीक्षन् लोकधर्मं विचिन्तयन् । यद्वा ईक्षयन् । विविक्तौ विविच्य ज्ञातौ न भवत इत्यर्थः । ननु तर्हि रामस्य अनृतवादित्वं प्रसज्यते इति चेत् । सर्वसाधारण्येन विवेचकलताविशेषण-विशिष्टतया न ज्ञाताविति विवक्षितत्वात् ।।१३।।

**चट्टी–** तस्य वालिनः मुष्टिभिः प्रतिहतः सुग्रीवः यतो अशक्तः तस्मादाशु प्रययौ । युद्धस्थानात् प्रदुद्रावेत्यर्थः । ननु तस्यामवस्थायां रामः किमित्युपेक्षितवानित्यत आह– **रघुप इत्यादिना** ।। रघुपः समर्थोऽपि रामः धर्मं ईक्षन् ईक्षयन् दर्शयन्निति यावत् । वालिनं न जघान । विदिता ज्ञाता अखिललोकचेष्टा व्यापारो येन स तथा । सर्वज्ञोऽपीत्यर्थः । स रामः एनं सुग्रीवं आह । किमिति । युधि युद्धे मया वां युवां न विविक्तौ विविच्य न ज्ञातौ । युवामित्यर्थे वामित्यव्ययम् । तदुक्तं काशिकागणपाठे । अतो न वैयाकरणशङ्कावकाश इति ज्ञेयम् ।।१३।।

**भावचन्द्रिका–** वां युवयोः युधि । विविक्तौ युवामिति शेषः । यद्वा वामिति युवामित्यर्थे अव्ययम् । 'वामिति युवामित्यर्थे अव्ययम्' इति कौमुदी [प्रसादे] ।।१३-१७।।

**भावविवृति–** युधि वां न मया विविक्तौ इत्यत्र रामो मया युधि युद्धे वां युवां समानचेष्टास्वराकृतिमत्वान्न विविक्तौ इत्युक्त्वा एवं वदतो रामस्य अभिप्रायस्तु युवयोस्सादृश्यात् मया लौकिकलताबन्धाद्विना युवां न विविक्तौ । न विविक्तौ अतः शरो न मुक्त इत्यर्थः । एतदभिप्रायेणैव उत्तरत्र लतया विवेचनं कृतमिति ज्ञेयम् । अन्यथा 'न विष्णोर्वचनं क्वापि मृषा भवति कस्यचित्' इत्युक्तिविरोधात् ॥

**अतिविशद–** ॥ **युधि वामिति** ॥ युवामित्यर्थे वामित्यव्ययम् । तदुक्तं काशिकागणपाठे । अतो न वैयाकरणशङ्कावकाश इति ध्येयम् । वां युधि युवयोर्युद्धे युवामिति शेषो वा । ततश्च युवयोर्युद्धे युवां न मया विविक्तौ इत्यर्थः ॥१३॥

**गूढवाक्यार्थ–** वामिति द्वितीयार्थे । धर्ममीक्षन् लोकस्य धर्मं दर्शयितुमित्यर्थः । 'धर्मं प्रदर्शियितुमेव' इति वक्ष्यमाणत्वात् । विविक्तौ विविच्य ज्ञातौ न भवतः । इदश्च लोकमर्यादयैवोक्तं न वस्तुगत्येति भावेनोक्तम्– **विदिताखिललोकचेष्ट इति** ॥ ननु भगवतः सर्वज्ञत्वेन विविच्य न ज्ञातावित्य..तोक्तिः कथं घटत इति चेत् उच्यते सर्वसाधारण्येन स्पष्टं विवेचकलतादिविशेषणविशिष्टतया न ज्ञाताविति विवक्षितत्वात् ॥१३॥

**सौभ्रात्रमेष यदि वाञ्छति वालिनैव नाहं निरागसमथाग्रजनिं हनिष्ये ।**
**दीर्घः सहोदरगतो न भवेद्धि कोपो दीर्घोऽपि कारणमृते विनिवर्तते च ॥१४॥**

**व्यासतीर्थीया–** धर्ममीक्षन्नपीत्युक्तः धर्मः क इति जिज्ञासायामाह– **सौभ्रात्रमिति** ॥ दीर्घकोपः कथं सुभ्रातृत्वं वाञ्छतीत्यत आह– **दीर्घ इति** ॥१४-१५॥

**वेदाङ्गतीर्थीया–** धर्ममीक्षन्नित्यत्र प्रकृतधर्मस्वरूपं दर्शयति– **सौभ्रात्रमित्यादिश्लोकत्रयेण** ॥ सौभ्रात्रं स्नेहम् । वालिनैवेत्यवधारणेन विरोधिनापीत्यर्थः सूचितः । निरागसमपराधरहितम् । अथशब्दोऽप्यर्थः ।

**वादिराजीया–** सु शोभनो भ्राता यस्य चेतसि सुभ्राता तस्य भावः सौभ्रात्रम् । अग्रजे शोभनत्वबुद्धिमित्यर्थः । कारणं सन्धिकारणं धनादिकं ऋते विनिवतर्ते च । सहोदरत्वप्रयुक्तसहजस्नेहोद्बोधे सति स्वयमेव निवर्तते इति भावः । अथाद्यतनवैरानन्तरं एषः सौभ्रात्रं यदि वाञ्छतीत्यथपदस्य पूर्वत्राकर्षणेन योजना । अथ तर्हि न हनिष्य इति वा ॥१४॥

**सत्याभिनवीया–** तत्रैव सौभ्रात्रमेष यदि वाञ्छति वालिनैव... इति श्लोकद्वये सौभ्रात्रवाञ्छासन्देहः हन्तुं योग्यो न भवतीति विपर्ययश्च रामस्य जात इति अज्ञजनप्रतीतसन्देहविपर्यययोः अनुवाद एव क्रियते । न तु रामस्य हन्तुं सन्देहविपर्ययौ स्तः इत्युच्यत इति द्रष्टव्यम् । तेन सर्वज्ञस्य रामस्य कथं सन्देहविपर्ययौ इति शङ्कानवकाशः ॥१५॥

**मधुसूदनीया–** ।। **युधि वामिति** ।। युवामित्यर्थे वामित्यव्ययम् । तदुक्तं काशिकागणपाठे । अतो न वैय्याकरणशंकाऽवकाश इति ध्येयम् ।।१३।।

**वरदराजीया–** तस्य वालिनो मुष्टिभिः प्रतिहतः सुग्रीवो यतोऽशक्तः तस्मात् आशु प्रययौ पलाय्य गतः । ननु तस्यामवस्थायां रामः किमित्युपेक्षितवानित्यत आह– **रघुप इत्यादिना** ।। रघुपो रामोऽपि धर्ममीक्षन् लोकस्य धर्मं दर्शयितुं इत्यर्थः । एनं वालिनं आद्यकक्ष्यायां न जघान । स रामः एनं सुग्रीवमाह । किमिति । युधि युद्धे वां व्यत्ययेन युवां मया न विविक्तौ विविच्य न ज्ञातौ । अत्र विभक्तिव्यत्ययेनेदं विडम्बनमात्रं रामेण कृतमिति सूचयति । वास्तवमेव किं न स्यादित्यत उक्तम्– **विदिताखिललोकचेष्टोऽपीति** ।। विदिता अखिललोकचेष्टा येन असौ तथोक्तः ।।१३।।

**जनार्दनीया–** तस्य वालिनः मुष्टिभिः । प्रययौ । युद्धस्थानात् प्रदुद्रावेत्यर्थः । रघुपोऽपि समर्थोऽपि रामः धर्मं ईक्षन् दर्शयन्निति यावत् । एनं वालिनं न जघान । विदिता ज्ञाता अखिललोकस्य चेष्टा व्यापारो येन स तथा । सर्वज्ञोऽपीत्यर्थः । स रामः एनं सुग्रीवमाह । किमिति? युधि युद्धे । मया वां युवाम् । प्रथमाद्विवचनार्थे अव्ययमेतत् । वां युवयोः युधीति वा । अत्र विभक्तिपरिणामेन योज्यम् । विविक्तौ विविच्य न ज्ञातावित्यर्थः ।।१३।।

**अनन्तभट्टीया–** वां युवाम् । प्रथमाद्विचनं तत् । त्वं वाली च इत्यर्थः । न विविक्तौ विविच्य न ज्ञातावित्यर्थः ।।१३।।

**ताम्रपर्णीया–** धर्ममीक्षन् लोकधर्मं विचिन्तयन् । यद्वा ईक्षयन् । विविक्तौ विविच्य ज्ञातौ न भवत इत्यर्थः । ननु तर्हि रामस्य अनृतवादित्वं प्रसज्यते इति चेत् । सर्वसाधारण्येन विवेचकलताविशेषण-विशिष्टतया न ज्ञाताविति विवक्षितत्वात् ।।१३।।

**चट्टी–** तस्य वालिनः मुष्टिभिः प्रतिहतः सुग्रीवः यतो अशक्तः तस्मादाशु प्रययौ । युद्धस्थानात् प्रदुद्रावेत्यर्थः । ननु तस्यामवस्थायां रामः किमित्युपेक्षितवानित्यत आह– **रघुप इत्यादिना** ।। रघुपः समर्थोऽपि रामः धर्मं ईक्षन् ईक्षयन् दर्शयन्निति यावत् । वालिनं न जघान । विदिता ज्ञाता अखिललोकचेष्टा व्यापारो येन स तथा । सर्वज्ञोऽपीत्यर्थः । स रामः एनं सुग्रीवं आह । किमिति । युधि युद्धे मया वां युवां न विविक्तौ विविच्य न ज्ञातौ । युवामित्यर्थे वामित्यव्ययम् । तदुक्तं काशिकागणपाठे । अतो न वैयाकरणशङ्कावकाश इति ज्ञेयम् ।।१३।।

**भावचन्द्रिका–** वां युवयोः युधि । विविक्तौ युवामिति शेषः । यद्वा वामिति युवामित्यर्थे अव्ययम् । 'वामिति युवामित्यर्थे अव्ययम्' इति कौमुदी [प्रसादे] ।।१३-१७।।

**भावविवृति–** युधि वां न मया विविक्तौ इत्यत्र रामो मया युधि युद्धे वां युवां समानचेष्टास्वराकृतिमत्वान्न विविक्तौ इत्युक्त्वा एवं वदतो रामस्य अभिप्रायस्तु युवयोस्सादृश्यात् मया लौकिकलताबन्धाद्विना युवां न विविक्तौ । न विविक्तौ अतः शरो न मुक्त इत्यर्थः । एतदभिप्रायेणैव उत्तरत्र लतया विवेचनं कृतमिति ज्ञेयम् । अन्यथा 'न विष्णोर्वचनं क्वापि मृषा भवति कस्यचित्' इत्युक्तिविरोधात् ।।

**अतिविशद–** ।। **युधि वामिति** ।। युवामित्यर्थे वामित्यव्ययम् । तदुक्तं काशिकागणपाठे । अतो न वैयाकरणशङ्कावकाश इति ध्येयम् । वां युधि युवयोर्युद्धे युवामिति शेषो वा । ततश्च युवयोर्युद्धे युवां न मया विविक्तौ इत्यर्थः ।।१३।।

**गूढवाक्यार्थ–** वामिति द्वितीयार्थे । धर्ममीक्षन् लोकस्य धर्मं दर्शयितुमित्यर्थः । 'धर्मं प्रदर्शियितुमेव' इति वक्ष्यमाणत्वात् । विविक्तौ विविच्य ज्ञातौ न भवतः । इदञ्च लोकमर्यादयैवोक्तं न वस्तुगत्येति भावेनोक्तम्– **विदिताखिललोकचेष्ट इति** ।। ननु भगवतः सर्वज्ञत्वेन विविच्य न ज्ञातावित्य..तोक्तिः कथं घटत इति चेत् उच्यते सर्वसाधारण्येन स्पष्टं विवेचकलतादिविशेषणविशिष्टतया न ज्ञाताविति विवक्षितत्वात् ।।१३।।

**सौभ्रात्रमेष यदि वाञ्छति वालिनैव नाहं निरागसमथाग्रजनिं हनिष्ये ।**
**दीर्घः सहोदरगतो न भवेद्धि कोपो दीर्घोऽपि कारणमृते विनिवर्तते च ।।१४।।**

**व्यासतीर्थीया–** धर्ममीक्षन्नपीत्युक्तः धर्मः क इति जिज्ञासायामाह– **सौभ्रात्रमिति** ।। दीर्घकोपः कथं सुभ्रातृत्वं वाञ्छतीत्यत आह– **दीर्घ इति** ।।१४-१५।।

**वेदाङ्गतीर्थीया–** धर्ममीक्षन्नित्यत्र प्रकृतधर्मस्वरूपं दर्शयति– **सौभ्रात्रमित्यादिश्लोकत्रयेण** ।। सौभ्रात्रं स्नेहम् । वालिनैवेत्यवधारणेन विरोधिनापीत्यर्थः सूचितः । निरागसमपराधरहितम् । अथशब्दोऽप्यर्थः ।

**वादिराजीया–** सु शोभनो भ्राता यस्य चेतसि सुभ्राता तस्य भावः सौभ्रात्रम् । अग्रजे शोभनत्वबुद्धिमित्यर्थः । कारणं सन्धिकारणं धनादिकं ऋते विनिवर्तते च । सहोदरत्वप्रयुक्तसहजस्नेहोद्बोधे सति स्वयमेव निवर्तते इति भावः । अथाद्यतनवैरानन्तरं एषः सौभ्रात्रं यदि वाञ्छतीत्यथपदस्य पूर्वत्राकर्षणेन योजना । अथ तर्हि न हनिष्य इति वा ।।१४।।

**सत्याभिनवीया–** तत्रैव सौभ्रात्रमेष यदि वाञ्छति वालिनैव... इति श्लोकद्वये सौभ्रात्रवाञ्छासन्देहः हन्तुं योग्यो न भवतीति विपर्ययश्च रामस्य जात इति अज्ञजनप्रतीतसन्देहविपर्यययोः अनुवाद एव क्रियते । न तु रामस्य हन्तुं सन्देहविपर्ययौ स्तः इत्युच्यत इति द्रष्टव्यम् । तेन सर्वज्ञस्य रामस्य कथं सन्देहविपर्ययौ इति शङ्कानवकाशः ।।१५।।

**मधुसूदनीया–** ।। **दीर्घस्सहोदरगत इति** ।। कारणमृते यदर्थं कोप आगतः तत्कारणं ऋते तत्याग इत्यर्थः । यत्तु 'कारणं क्षमापणादिकं विना निवर्तत' इति व्याख्यानम् । तन्न । क्षमापणादिकं विना कोपनिवृत्त्यदर्शनात् इति ।।१४।।

**वरदराजीया–** धर्ममीक्षन्नित्युक्तं तमेव धर्मं दर्शयति– **सौभ्रात्रमित्यादिना** ।। एषः सुग्रीवः सौभ्रातं भ्रातृस्नेहं वालिना यदि वाञ्छति चेत्तर्हि अहं निरागसं अपराधरहितमग्रजनिं ज्येष्ठं वालिनं न हनिष्ये । नन्वेतादृशे विरोधे सति भ्रातरि कथं स्नेहं वाच्छेदित्यत आह– **दीर्घ इति** ।। सहोदरगतः भ्रातृगतः कोपो दीर्घो बहुकालमनुवर्तमानो न भवेदेव । जातो वा दीर्घोऽपि बहुकालवर्तमानोऽपि कारणमृते क्षमापनादिकारणं विनापि निवर्तते निवृत्तिमुपगच्छति ।।१४।।

**जनार्दनीया–** प्रकृतधर्मं विशदयति– **सौभ्रात्रमित्यादिना** ।। एष सुग्रीवः । वालिनैव सौभ्रात्रं स्नेहं यदि वाञ्छति वाञ्छेत् इच्छेत् । अथ तर्हि । अहं निरागसं निरपराधिनं अग्रजनिं वालिनं न हनिष्ये । परस्परं वधं इच्छतोः कथं स्नेहं स्यात्? इत्यत आह– **दीर्घ इति** ।। सहोदरेषु समानोदरभ्रातृषु गतो विद्यमानः कोपः दीर्घः बहुकालस्थो न भवेत् । दीर्घोऽपि बहुकालीनोऽपि कारणं ऋते द्वेषनिवृत्तिहेतुं विना । विनिवर्तते निवृत्तिं याति ।।१४।।

**अनन्तभट्टीया–** दीर्घः बहुकालानुवृत्तः । दीर्घोऽपि बहुकालानुवृत्तोऽपि कारणमृते निवर्तत इत्यन्वयः ।

**ताम्रपर्णीया–** सर्वज्ञत्वे कुतो 'न मया विविक्तौ' इति वचनं इत्यतो धर्मेक्षाप्रकारं वदन् तात्पर्यमाह– **सौभ्रात्रमिति** ।। अथ तर्हि पूर्वं अनुवृत्तद्वेषिणः कथं सौभ्रात्रेच्छा इत्यत आह– **दीर्घेति** ।। कारणं सन्निधिकारणधनादिकम् । न चाकारणकार्योत्पत्तिः । औत्पत्तिकस्य स्नेहरूपकारणस्या-निवारणादिति भावः ।।१४।।

**चट्टी–** तमेव धर्मं दर्शयति– **सौभ्रात्रमित्यादिना** ।। एषः सुग्रीवः सौभ्रात्रं भ्रातृस्नेहं हि तेनैव यदि वाञ्छति वाञ्छेत् इच्छेत अथ तर्हि अहं निरागसं निरपराधिनं अग्रजनिं अग्रजं वालिनं न हनिष्ये । परस्परं वधमिच्छतोः कथं स्नेहः स्यादित्यत आह– **दीर्घ इति** ।। सहोदरेषु समानोदरभ्रातृषु गतो विद्यमानः कोपः दीर्घः बहुकालस्थो न भवेत् । दीर्घोऽपि बहुकालीनोऽपि कारणं ऋते यदर्थं कोपः आगतः तत्कारणे ऋते तत्याग इत्यर्थः । विनिवर्तते निवृत्तिं याति । यद्वा कारणमृते द्वेषनिवृत्तिहेतुं विना विनिवर्तते ।।१४।।

**अतिविशद–** ।। **दीर्घस्सहोदर गत इति** ।। कारणमृते यदर्थं कोप आगतः तत्काराणान्ते त्याग इत्यर्थः । यत्तु 'कारणं क्षमापणादिकं विनापि निवर्तते' इति व्याख्यानम् । तन्न । क्षमापणादिना विना कोपनिवृत्त्यदर्शनादिति । एकस्य भङ्गे नाशे सति कोपस्तापकश्चेत्येवं झडिति न जघान । नान्यथेत्यर्थः । ननु

"नोचितस्ते राजवधो यतो लोके पिता नृपः । स्त्रीवधानां सहस्रेण तुल्यो गोवध इष्यते । गोवधानां सहस्रेण द्विजमातृवधोऽपि हि । सहस्रं द्विजहिंसायास्तुल्यं श्रोत्रियमारणम् । श्रोत्रियद्विजसाहस्रवधतुल्यं नृपस्य हि । तस्मात् त्याज्यो हि भूपोऽयं विचार्य च पुनः पुनः ।" इत्यादि नारदीयवचनाद्राजहनने महान् दोष इति कृत्वा वालिनोऽपि पट्टाभिषिक्तराजत्वेन च तं झडिति न जघानेति किं न स्यादित्यत आह– **अपास्तदोष इति** ।। पक्षपातादिदोषरहित इति वा ।।१४-१७।।

**गूढवाक्यार्थ–** धर्ममीक्षन्नित्युक्तमीक्षणप्रकारमेव दर्शयति– **सौभ्रात्रमिति** ।। निरागसं निरपराधिनम् । ननु पूर्वं कथं नु वृत्तद्वेषिणः सौभ्रात्रे...चेत्यत आह– **दीर्घ इति** ।। कारणमृते सन्धिकारणं धनादिकम् । यदि पुनरप्यनुवर्तते कोपस्तर्ह्यन्तकाले प्रायो निवृत्तमुपगच्छति । सुग्रीवादिव्यावृत्त्यर्थं प्राय इति । अन्तकालेऽनिवृत्तोऽपि कोपः एकस्य भङ्गे पश्चात्तापको भवतीत्यर्थः ।।१४-१५।।

**कोपः सहोदरजने पुनरन्तकाले प्रायो निवृत्तिमुपगच्छति तापकश्च ।**
**एकस्य भङ्ग इति नैव झडित्यपास्तदोषो निहन्तुमिह योग्य इति स्म मेने ।।१५।।**

**व्यासतीर्थीया–** अस्तु वा दीर्घः कोपो हननहेतुस्तथाऽपि न हन्तव्य इत्याह– **कोप इति** ।।१५ ।।

**वादिराजीया–** तापकः एकस्य भङ्गे वधे सति पश्चात्तापजनकः । निहन्तुमिह योग्य इति स्मेत्यत्रेति पूर्वोक्तप्रकारेण स्म लौकिकप्रसिद्धिं मेने ।।१५-१६।।

**मधुसूदनीया–** एकस्य भङ्गे नाशे सति कोपस्तापकश्चेत्येव झडिति न जघान न विव्याधेत्यर्थः । ननु "नोचितस्ते राजवधो यतो लोके पिता नृपः । स्त्रीवधानां सहस्रेण तुल्यो गोवध इष्यते । गोवधानां सहस्रेण द्विजमातृवधोऽपि हि । सहस्रं द्विजहिंसायास्तुल्यं श्रोत्रियमारणम् । श्रोत्रियद्विजसाहस्रवधतुल्यं नृपस्य हि । तस्मात् त्याज्यो हि भूपोऽयं विचार्य च पुनः पुनः ।" इत्यादि नारदीयवचनात् [नारदपुराणान्तर्गतश्रीमुष्णमाहात्म्यम्.४.१९-२१] राजहनने च महान् दोषः इति कृत्वा वालिनोऽपि पट्टाभिषिक्तराजत्वेन कपित्वेन च झडिति च न जघान इति किं न स्यादित्यत आह– **अपास्तदोष इति** ।। पक्षपातदोषरहितेति वा ।।१५-१७।।

**वरदराजीया–** तदेव विविच्य दर्शयति– **कोप इति** ।। सहोदरजने विषये जातः कोपः पुनरन्तकाले प्रायः प्रायेण । [सुग्रीवादि] कर्णादिगतकोपव्यावृत्त्यर्थं प्राय इत्युक्तम् । उभयोः सहोदरयोर्मध्ये एकस्यान्यतरस्य भङ्गे नाशे सति अवशिष्टस्य तापकः सन्तापकारी च भवति इति कारणात् । इह प्रथमकक्ष्यायामेव झटिति वेगेन हन्तुं नैव योग्यो वालीति रामो मेन इत्यर्थः । कुतो न योग्यः यतोऽपास्तदोषः विगतदोषः विरोधस्य परित्यक्तत्वादिति भावः । यद्वा अपास्तदोष इति रामस्य

**मधुसूदनीया–** ।। **दीर्घस्सहोदरगत इति** ।। कारणमृते यदर्थं कोप आगतः तत्कारणं ऋते तत्याग इत्यर्थः । यत्तु 'कारणं क्षमापणादिकं विना निवर्तत' इति व्याख्यानम् । तन्न । क्षमापणादिकं विना कोपनिवृत्त्यदर्शनात् इति ।।१४।।

**वरदराजीया–** धर्ममीक्षन्नित्युक्तं तमेव धर्मं दर्शयति– **सौभ्रात्रमित्यादिना** ।। एषः सुग्रीवः सौभ्रातं भ्रातृस्नेहं वालिना यदि वाञ्छति चेत्तर्हि अहं निरागसं अपराधरहितमग्रजनिं ज्येष्ठं वालिनं न हनिष्ये । नन्वेतादृशे विरोधे सति भ्रातरि कथं स्नेहं वाच्छेदित्यत आह– **दीर्घ इति** ।। सहोदरगतः भ्रातृगतः कोपो दीर्घो बहुकालमनुवर्तमानो न भवेदेव । जातो वा दीर्घोऽपि बहुकालवर्तमानोऽपि कारणमृते क्षमापनादिकारणं विनापि निवर्तते निवृत्तिमुपगच्छति ।।१४।।

**जनार्दनीया–** प्रकृतधर्मं विशदयति– **सौभ्रात्रमित्यादिना** ।। एष सुग्रीवः । वालिनैव सौभ्रात्रं स्नेहं यदि वाञ्छति वाञ्छेत् इच्छेत् । अथ तर्हि । अहं निरागसं निरपराधिनं अग्रजनिं वालिनं न हनिष्ये । परस्परं वधं इच्छतोः कथं स्नेहं स्यात्? इत्यत आह– **दीर्घ इति** ।। सहोदरेषु समानोदरभ्रातृषु गतो विद्यमानः कोपः दीर्घः बहुकालस्थो न भवेत् । दीर्घोऽपि बहुकालीनोऽपि कारणं ऋते द्वेषनिवृत्तिहेतुं विना । विनिवर्तते निवृत्तिं याति ।।१४।।

**अनन्तभट्टीया–** दीर्घः बहुकालानुवृत्तः । दीर्घोऽपि बहुकालानुवृत्तोऽपि कारणमृते निवर्तत इत्यन्वयः ।

**ताम्रपर्णीया–** सर्वज्ञत्वे कुतो 'न मया विविक्तौ' इति वचनं इत्यतो धर्मेक्षाप्रकारं वदन् तात्पर्यमाह– **सौभ्रात्रमिति** ।। अथ तर्हि पूर्वं अनुवृत्तद्वेषिणः कथं सौभ्रात्रेच्छा इत्यत आह– **दीर्घेति** ।। कारणं सन्निधिकारणधनादिकम् । न चाकारणकार्योत्पत्तिः । औत्पत्तिकस्य स्नेहरूपकारणस्या-निवारणादिति भावः ।।१४।।

**चट्टी–** तमेव धर्मं दर्शयति– **सौभ्रात्रमित्यादिना** ।। एषः सुग्रीवः सौभ्रात्रं भ्रातृस्नेहं हि तेनैव यदि वाञ्छति वाञ्छेत् इच्छेत अथ तर्हि अहं निरागसं निरपराधिनं अग्रजनिं अग्रजं वालिनं न हनिष्ये । परस्परं वधमिच्छतोः कथं स्नेहः स्यादित्यत आह– **दीर्घ इति** ।। सहोदरेषु समानोदरभ्रातृषु गतो विद्यमानः कोपः दीर्घः बहुकालस्थो न भवेत् । दीर्घोऽपि बहुकालीनोऽपि कारणं ऋते यदर्थं कोपः आगतः तत्कारणे ऋते तत्याग इत्यर्थः । विनिवर्तते निवृत्तिं याति । यद्वा कारणमृते द्वेषनिवृत्तिहेतुं विना विनिवर्तते ।।१४।।

**अतिविशद–** ।। **दीर्घस्सहोदर गत इति** ।। कारणमृते यदर्थं कोप आगतः तत्काराणान्ते त्याग इत्यर्थः । यत्तु 'कारणं क्षमापणादिकं विनापि निवर्तते' इति व्याख्यानम् । तन्न । क्षमापणादिना विना कोपनिवृत्त्यदर्शनादिति । एकस्य भङ्गे नाशे सति कोपस्तापकश्चेत्येवं झडिति न जघान । नान्यथेत्यर्थः । ननु

''नोचितस्ते राजवधो यतो लोके पिता नृपः । स्त्रीवधानां सहस्रेण तुल्यो गोवध इष्यते । गोवधानां सहस्रेण द्विजमातृवधोऽपि हि । सहस्रं द्विजहिंसायास्तुल्यं श्रोत्रियमारणम् । श्रोत्रियद्विजसाहस्रवधतुल्यं नृपस्य हि । तस्मात् त्याज्यो हि भूपोऽयं विचार्य च पुनः पुनः ।'' इत्यादि नारदीयवचनाद्राजहनने महान् दोष इति कृत्वा वालिनोऽपि पट्टाभिषिक्तराजत्वेन च तं झडिति न जघानेति किं न स्यादित्यत आह– **अपास्तदोष इति** ।। पक्षपातादिदोषरहित इति वा ।।१४-१७।।

**गूढवाक्यार्थ–** धर्ममीक्षन्नित्युक्तमीक्षणप्रकारमेव दर्शयति– **सौभ्रात्रमिति** ।। निरागसं निरपराधिनम् । ननु पूर्वं कथं नु वृत्तद्वेषिणः सौभ्रात्रे...चेत्यत आह– **दीर्घ इति** ।। कारणमृते सन्धिकारणं धनादिकम् । यदि पुनरप्यनुवर्तते कोपस्तर्ह्यन्तकाले प्रायो निवृत्तमुपगच्छति । सुग्रीवादिव्यावृत्त्यर्थं प्राय इति । अन्तकालेऽनिवृत्तोऽपि कोपः एकस्य भङ्गे पश्चात्तापको भवतीत्यर्थः ।।१४-१५।।

**कोपः सहोदरजने पुनरन्तकाले प्रायो निवृत्तिमुपगच्छति तापकश्च ।**
**एकस्य भङ्ग इति नैव झडित्यपास्तदोषो निहन्तुमिह योग्य इति स्म मेने ।।१५।।**

**व्यासतीर्थीया–** अस्तु वा दीर्घः कोपो हननहेतुस्तथाऽपि न हन्तव्य इत्याह– **कोप इति** ।।१५ ।।

**वादिराजीया–** तापकः एकस्य भङ्गे वधे सति पश्चात्तापजनकः । निहन्तुमिह योग्य इति स्मेत्यत्रेति पूर्वोक्तप्रकारेण स्म लौकिकप्रसिद्धिं मेने ।।१५-१६।।

**मधुसूदनीया–** एकस्य भङ्गे नाशे सति कोपस्तापकश्चेत्येव झडिति न जघान न विव्याधेत्यर्थः । ननु ''नोचितस्ते राजवधो यतो लोके पिता नृपः । स्त्रीवधानां सहस्रेण तुल्यो गोवध इष्यते । गोवधानां सहस्रेण द्विजमातृवधोऽपि हि । सहस्रं द्विजहिंसायास्तुल्यं श्रोत्रियमारणम् । श्रोत्रियद्विजसाहस्रवधतुल्यं नृपस्य हि । तस्मात् त्याज्यो हि भूपोऽयं विचार्य च पुनः पुनः ।'' इत्यादि नारदीयवचनात् [नारदपुराणान्तर्गतश्रीमुष्णमाहात्म्यम्.४.१९-२१] राजहनने च महान् दोषः इति कृत्वा वालिनोऽपि पट्टाभिषिक्तराजत्वेन कपित्वेन च झडिति च न जघान इति किं न स्यादित्यत आह– **अपास्तदोष इति** ।। पक्षपातदोषरहितेति वा ।।१५-१७।।

**वरदराजीया–** तदेव विविच्य दर्शयति– **कोप इति** ।। सहोदरजने विषये जातः कोपः पुनरन्तकाले प्रायः प्रायेण । [सुग्रीवादि] कर्णादिगतकोपव्यावृत्त्यर्थं प्राय इत्युक्तम् । उभयोः सहोदरयोर्मध्ये एकस्यान्यतरस्य भङ्गे नाशे सति अवशिष्टस्य तापकः सन्तापकारी च भवति इति कारणात् । इह प्रथमकक्ष्यायामेव झटिति वेगेन हन्तुं नैव योग्यो वालीति रामो मेन इत्यर्थः । कुतो न योग्यः यतोऽपास्तदोषः विगतदोषः विरोधस्य परित्यक्तत्वादिति भावः । यद्वा अपास्तदोष इति रामस्य

विशेषणम् । नित्यनिरस्तदोष इत्यर्थः । तेन स्वस्य दोषप्रसक्त्या झडिति न जघानेति शङ्का परास्ता भवति ।।१५।।

**जनार्दनीया–** उक्तार्थं विशेषेण स्पष्टयति– **कोप इति** ।। सहोदरजने स्थितः कोपः । पुनः अन्तकाले मरणसमये निवृत्तिं उपगच्छति । वालिसुग्रीवकर्णादिव्यावृत्त्यर्थं प्राय इत्युक्तम् । उभयोर्मध्य इति वाक्यशेषः । एकस्य भ्रातुर्भङ्गे सति । तापयतीति तापकः । तापकारीत्यर्थः । भवतीति शेषः । इति कारणात् । अपास्तः निरस्तः दोषः अनपराधिहननादिदोषो यस्य स तथा । रामः इह प्रथमयुद्धे । अपास्तदोषः विरोधत्यागादनपराधी वाली निहन्तुं न योग्य इति मेने ज्ञातवानित्यर्थः ।।१५।।

**अनन्तभट्टीया–** अन्तकाले मृतौ । सुग्रीवादिव्यवृत्त्यर्थं प्राय इत्युक्तम् । निवृत्तिमुपगच्छति । एकस्य अन्यतरस्य भङ्गे । अनिः... *सति सन्तापकारी । [प्रथमकस्तापक इत्यर्थः] दोषभयान्न जघानेति किं न स्यादित्यत आह– **अपास्तदोष इति** ।।१५।।

**ताम्रपर्णीया–** पुनरनुवृत्तोऽपि कोपः पुनरन्तकाले प्रायो निवृत्तिमुपगच्छति । अन्तकालेऽनिवृत्तोऽपि एकस्य भङ्गे पश्चात्तापको भवतीत्यर्थः ।।१५।।

**चट्टी–** एतदेव विविच्य दर्शयति– **कोप इति** ।। सहोदरजने स्थितः कोपः पुंसः अन्तकाले मरणसमये प्रायः निवृत्तिं उपगच्छति । वालिसुग्रीवकर्णादिव्यावृत्त्यर्थं प्राय इत्युक्तम् । उभयोर्मध्य इति शेषः । एकस्य भ्रातुः भङ्गे नाशे सति अवशिष्टस्य तापयतीति तापकः तापकारीत्यर्थः । भवतीति शेषः । इति कारणात् अपास्तः निरस्तः दोषः अज्ञानादिदोषो यस्य स तथा रामः इह प्रथमयुद्ध एव झडित्यावेगेन हन्तुं न योग्यः । स्यादिति शेषः । इति मेने ज्ञातवानित्यर्थः । अपास्तदोष इत्यनेन– 'नोचितस्ते...पुनः पुनः । इत्यादि नारदीयवचनाद्राजहननेन कपिहननेन च महादोष इति श्रुत्वा वालिनोऽपि पट्टाभिषिक्तराजत्वेन कपित्वेन च तं झटिति न जघानेति किन्न स्यादिति शङ्का परास्ता ।।१५।।

**भारतश्री–** अन्तकाले विनाशकाले । एकस्य भङ्गे सहोदरजने एकस्य भङ्गे नाशे तापकश्चेति सम्बन्धः । इति हेतोः यदा दीर्घः सहोदरगतो भवेद्धि कोपः इत्याद्युक्तानां मध्ये एकस्य आरादुक्तस्य भङ्ग इति कृत्वा अपास्तदोषः [स्वामिन्] ।।१५।।

**तस्मान्न बन्धुजनगे जनिते विरोधे कार्यो वधस्तदनुबन्धिभिराश्रितीह ।**
**धर्मं प्रदर्शयितुमेव रवेः सुतस्य भावी न ताप इति विच्च न तं जघान ।।१६।।**

**व्यासतीर्थीया–** ननु रामस्य सर्वज्ञत्वात् सुग्रीवस्य कोपो न निवर्तते तापकश्च न भावीति जानात्येव अतः कथं न जघान इत्यत आह– **तस्मादिति** ।। कोप इत्युक्तात्कारणात् ।।१६।।

**वेदाङ्गतीर्थीया–** आशु अवियोज्य इति इह वालिसुग्रीवविवेकविषये ।।१६।।

**वरदराजीया–** ननु सर्वज्ञत्वाद्रामो जानात्येव अन्तकालेऽप्यनयोः विरोधो न गमिष्यतीति वालिनि मृते सति सुग्रीवस्य तापो न भविष्यतीति तस्मात् प्रथममेव किमिति न जघानेत्यत आह– **तस्मादिति** ।। वन्धुजनगे विरोधे जनिते सति तदनुबन्धिभिः बन्धुजनसम्बन्धिभिः आशु अन्यतरस्य वधो न कार्य इति । इह लोके धर्मं प्रदर्शयितुमेव तं वालिनं न जघानेत्यर्थः ।।१६।।

**जनार्दनीया–** रवेः सुतस्य सुग्रीवस्य भावी तापः वालिवधेन भविष्यद्दुःखं न भवेत् इति वित् जानन् रामः । तस्मात् निवृत्तिं उपगच्छति तापकश्च भवति । यस्मात्तस्मादित्यर्थः । बन्धुजनगे सहोदरजनस्थे विरोधे जनिते सति तस्य एकतमस्य भ्रातुः अनुबन्धिभिः अनुकूलमित्रैः । आशु सन्धानमनपेक्ष्येत्यर्थः । वधः अन्यतमस्य वधो न कार्य इति इह लोके वालिसुग्रीवयुद्धे धर्मं प्रदर्शयितुमेव तं वालिनं न जघान ।।१६।।

**अनन्तभट्टीया–** न भावीति न भविष्यतीति ज्ञानवानपि इत्यर्थः ।।१६।।

**ताम्रपर्णीया–** ननु सुग्रीवस्य कोपः कदापि न निवर्तते । मृतेऽपि वालिनि पश्चात्तापोऽपि न जायते इति जानतो रामस्य कथं कालक्षेपार्थं 'न मया विविक्तौ' इति वचनं इत्यतः धर्ममीक्षयन् इत्युक्तं विशदमाह– **तस्मादिति** ।। झटिति वधस्य अधर्मत्वात् । अवध्यस्य धर्मत्वादेव ।।१६।।

**चट्टी–** वालिनि मृते सति सुग्रीवस्य तापो न भवेदिति जानन् रामः प्रथमममेव किमिति न जघानेत्यत आह– **तस्मादिति** ।। रवेः सुतस्य सुग्रीवस्य भावितापः वालिवधे भविष्यद् दुःखं न भवेदिति विच्च जानन् एव रामः तस्मात् निवृत्तिं उपगच्छति तापकश्च भवति । यस्मात् तस्मादित्यर्थः । बन्धुजनगे सहोदरजनस्थे विरोधे जनिते जाते सति तदनुबन्धिभिः तस्य एकतमस्य भ्रातुः अनुबन्धिभिः अनुकूलमित्रैः आशु सन्धानमनपेक्ष्येत्यर्थः । अन्यतरस्य वधो न कार्य इति इह लोके धर्मं प्रदर्शयितुमेव तं वालिनं न जघान ।।१६।।

**गूढवाक्यार्थ–** ननु सुग्रीवस्य कोपो न निवर्तते । वालिनिमित्तेऽपि तापो न जायत इति जानतोऽपि रामस्य...* विति व्यर्थं वचनं कथमित्यतः धर्ममीक्षन् इत्युक्तमेव विशदयति– **तस्मादिति** ।। न भविष्यतीति ज्ञानवानपीत्यर्थः । चशब्दोऽप्यर्थः ।।१६।।

**यः प्रेरकः सकलशेमुषिसन्ततेश्च तस्याज्ञता कुत इहेशवरस्य विष्णोः ।**
**तेनोदितोऽथ सुदृढं पुनरागतेन वज्रोपमं शरममूमुचदिन्द्रसूनौ ।।१७।।**

**व्यासतीर्थीया–** न मया विविक्तौ इत्युक्ताज्ञानादेव न जघानेति किन्न स्यादित्यत आह– **य इति** ।।

**वेदाङ्गतीर्थीया–** पुनरागतेन युद्धार्थमिति शेषः ।।१७।।

**वादिराजीया–** पुनरागतेन पुनरपरदिने युद्धार्थमागतेन तेन सुग्रीवेणोदितो वज्रोपमं शरमूमुचत् इति योजना ।।१७।।

**वरदराजीया–** ननु भ्रात्रोः सादृश्यादयं सुग्रीवोऽयं वालीति ज्ञानाभावात् न जघानेति वास्तवमेव किं न स्यादित्यत आह– **य इति** ।। सकलानां जीवानां शेमुषिसन्ततेः बुद्धिधारायाः यः प्रेरकः यत्प्रेरणया सर्वेषां ज्ञानान्युत्पद्यन्त इत्यर्थः । तस्येशवरस्य रुद्रादिभ्योऽपि वरस्योत्तमस्य विष्णोः इह वालिसुग्रीवयोर्विवेकविषये अज्ञता कुतो न कुतोऽपीत्यर्थः । पुनरागतेन वालिमुष्टिभिस्ताडितेन युद्धं त्यक्त्वा पुनः पुनरावृत्यागतेन सुग्रीवेण । अथानन्तरं सुदृढं शरं बाणममूमुचत् मोचयामास ।।१७।।

**जनार्दनीया–** ननु 'न मया विविक्तौ' इत्युक्तमेव सत्यं किं न स्यादित्यत आह– **य इति** ।। सकलानां शेमुषिसन्ततेर्बुद्धिसमूहस्य । 'बुद्धिर्मनश्चित्तम्' इत्यवान्तरभेदवत्त्वात् शेमुषिसन्ततेरित्युक्तम् । यः प्रेरकः तस्य रामस्वरूपस्य ईशात् मनोभिमानिरुद्रात् वरस्य श्रेष्ठस्य विष्णोः । इह अयं वाली अयं सुग्रीव इति विवेकविषये अज्ञता कुतः? नैवेत्यर्थः । प्रकृतमनुसरति– **तेनेति** ।। आगतेन युद्धान्निवृत्तेन तेन सुग्रीवेण । पुनः वाली हन्तव्य इति पूर्वमुक्तत्वात् पुनरित्युक्तम् । सुदृढं निश्चयं यथा स्यात् तथोदितः । वाली हन्तव्य इत्युदितो रामः । अथ वधनिश्चयोक्त्यनन्तरम् ।।१७।।

**अनन्तभट्टीया–** आगतेन निवृत्तेन सुग्रीवेण सुदृढमुदितः जहीत्युदितः अमूमुचत् ।।१७।।

**ताम्रपर्णीया–** ईशवरस्य ईशेभ्यो ब्रह्मरुद्रशेषादिभ्यो वरस्य ।।१७।।

**चट्टी–** ननु भ्रात्रोः सादृश्यात् 'न मया विविक्तौ' इति यदुक्तं तत्सत्यमेव किं न स्यादित्यत आह– **य इति** ।। सकलशेमुषिसन्ततेः बुद्धिसमूहस्य बुद्धिर्मनश्चित्तमित्यवान्तरभेदवत्वात् शेमुषिसन्ततेरित्युक्तम् । यः प्रेरकः तस्य रामस्वरूपस्य ईशेभ्यो वरस्य उत्तमस्य विष्णोः इह वालिसुग्रीवयोः विवेकविषये अज्ञता कुतः । न कुतोऽपीत्यर्थः । प्रकृतमनुसरति– **तेनेति** ।। वालिमुष्टिभिः ताडितेन युद्धं त्यक्त्वा परावृत्यागतेन तेन सुग्रीवेण पुनः वाली हन्तव्य इति पूर्वमुक्तत्वात् पुनरित्युक्तम् । सुदृढं यथा स्यात् तथा वाली अवश्यं हन्तव्य इत्युदितो रामः अथ वधनिश्चयोक्त्यनन्तरं वज्रोपमं वज्रवत् दृढं शरं बाणं इन्द्रसूनौ वालिनि अमूमुचत् ।।१७।।

**भारतश्री–** उदितः प्रेरितः ।।१७।।

**भावविवृति–** युवां न मया ज्ञातौ इत्येव किं न स्यादित्यत आह– **यः प्रेरक इति** ।। सकलस्य लक्ष्म्यादिमुक्तामुक्तचेतनगणस्य शेमुषिसन्ततेः प्रेरको यस्तस्याज्ञता कुत इति । तदेतदुक्तम्– 'भ्रातरौ समरूपौ स्थः समवेषौ समस्वरौ । अविवेकान्न मुक्तेषुरिति रामोऽब्रवीदिदम् ।।' इति संग्रहरामायणे [४.४.७] । 'कराग्रे कन्दुकवत् योऽनन्तं जगदीक्ष्यते । यश्च कर्ताऽखिलस्यास्य तस्य कुत्राविवेकिता ।।' इति उक्तश्च ईशावास्यभाष्ये– 'यस्माद्ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च । ज्ञानस्फूर्तिस्सदा तस्मै हरये गुरवे नमः ।।' ब्रह्मादिसर्वमनसां प्रकृत्या मनसोऽपि तु । ईशितृत्वान्मनीषी स...।।' इति च ।।१७–५९।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूज रामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ षष्ठोऽध्यायः ।।

**गूढवाक्यार्थ–** ईशवरस्य ईशेभ्यः ब्रह्मरुद्रादिभ्यः वरस्य ।।१७।।

**रामाज्ञयैव लतया रविजे विभक्ते वायोः सुतेन रघुपेण शरे प्रमुक्ते ।**
**श्रुत्वास्य शब्दमतुलं हृदि तेन विद्ध इन्द्रात्मजो गिरिरिवापतदाशु सन्नः ।।१८।।**

**वेदाङ्गतीर्थीया–** लतयेति पुष्पस्रजेति भावः । अस्य शरस्य । तेन शरेण । सन्नः मूर्च्छितः ।।

**वादिराजीया–** परदिने कथमागतः कथञ्च मृत इत्यतः पुनर्विविच्याऽह– **रामाज्ञयैवेति** ।। वायोः सुतेन रविजे । लतालम्बनमाज्ञापालनायैव कृतं न तु रामस्य अज्ञानशङ्कयेति भावेन रामाज्ञयैवेत्येवकारः । 'वय गतौ' इति धातोस्ताच्छील्यार्थेऽणुप्रत्यये कृते 'णिति च' इति धात्वादेर्वकारस्य वृद्धौ कृतायां गत्यर्थानां ज्ञानार्थत्वाद्वायुरनादितोऽप्यभिवृद्धज्ञानशील इति सिद्ध्यति । तत्पुत्रस्य काज्ञानमिति सूचयितुं वायोः सुतेनेत्युक्तम् । अस्य शरस्य शब्दम् । सन्नः सङ्कटं प्राप्तः ।।१८।।

**मधुसूदनीया–** ।। **रामाज्ञयैव रविज इति** ।। ननु रामायणादौ लक्ष्मणेन मालया रविजो विभक्त इत्युच्यते ['लक्ष्मणेन समुत्पाट्य एषा कण्ठे कृता तव' इति ४.१४.९] । तत्कथमुच्यते वायोस्सुतेन रविजे लतया विभक्त इति सत्यम् । भारतानुसारेणैव एतद्ग्रन्थस्य प्रवृत्तत्वात् । विरोधाभावात् । 'विशेषतो भारतवर्त्मचारी' इति वक्ष्यमाणत्वात् । 'सुग्रीवस्य तदा मालां हनूमान्कण्ठ आसजत्' इत्यादि अरण्यपर्वणि [२८१.३४] । हनूमानेव सुग्रीवकण्ठे मालां बबन्धेत्युक्तत्वात् ।।१८–२०।।

**वरदराजीया–** उक्तस्य निर्वाहार्थं वायोः सुतेन हनूमता रामाज्ञया लतया पुष्पस्रजा रविजे सुग्रीवे विभक्ते वाल्यपेक्षया विलक्षणे कृते सति रघुपेण रामेण च शरे विमुक्ते सति । अस्य शरस्य अतुलं असदृशं शरं श्रुत्वा तेन शरेण हृदि हृदयदेशे विद्धः ताडितः इन्द्रात्मजो वाली सन्नो अवसन्नः नष्टबलो गिरिः पर्वत इव अपतत् ।।१८।।

**व्यासतीर्थीया–** न मया विविक्तौ इत्युक्ताज्ञानादेव न जघानेति किन्न स्यादित्यत आह– **य इति** ।।

**वेदाङ्गतीर्थीया–** पुनरागतेन युद्धार्थमिति शेषः ।।१७।।

**वादिराजीया–** पुनरागतेन पुनरपरदिने युद्धार्थमागतेन तेन सुग्रीवेणोदितो वज्रोपमं शरमूमुचत् इति योजना ।।१७।।

**वरदराजीया–** ननु भ्रात्रोः सादृश्यादयं सुग्रीवोऽयं वालीति ज्ञानाभावात् न जघानेति वास्तवमेव किं न स्यादित्यत आह– **य इति** ।। सकलानां जीवानां शेमुषिसन्ततेः बुद्धिधारायाः यः प्रेरकः यत्प्रेरणया सर्वेषां ज्ञानान्युत्पद्यन्त इत्यर्थः । तस्येशवरस्य रुद्रादिभ्योऽपि वरस्योत्तमस्य विष्णोः इह वालिसुग्रीवयोर्विवेकविषये अज्ञता कुतो न कुतोऽपीत्यर्थः । पुनरागतेन वालिमुष्टिभिस्ताडितेन युद्धं त्यक्त्वा पुनः पुनरावृत्यागतेन सुग्रीवेण । अथानन्तरं सुदृढं शरं बाणममूमुचत् मोचयामास ।।१७।।

**जनार्दनीया–** ननु 'न मया विविक्तौ' इत्युक्तमेव सत्यं किं न स्यादित्यत आह– **य इति** ।। सकलानां शेमुषिसन्ततेर्बुद्धिसमूहस्य । 'बुद्धिर्मनश्चित्तम्' इत्यवान्तरभेदवत्त्वात् शेमुषिसन्ततेरित्युक्तम् । यः प्रेरकः तस्य रामस्वरूपस्य ईशात् मनोभिमानिरुद्रात् वरस्य श्रेष्ठस्य विष्णोः । इह अयं वाली अयं सुग्रीव इति विवेकविषये अज्ञता कुतः? नैवेत्यर्थः । प्रकृतमनुसरति– **तेनेति** ।। आगतेन युद्धान्निवृत्तेन तेन सुग्रीवेण । पुनः वाली हन्तव्य इति पूर्वमुक्तत्वात् पुनरित्युक्तम् । सुदृढं निश्चयं यथा स्यात् तथोदितः । वाली हन्तव्य इत्युदितो रामः । अथ वधनिश्चयोक्त्यनन्तरम् ।।१७।।

**अनन्तभट्टीया–** आगतेन निवृत्तेन सुग्रीवेण सुदृढमुदितः जहीत्युदितः अमूमुचत् ।।१७।।

**ताम्रपर्णीया–** ईशवरस्य ईशेभ्यो ब्रह्मरुद्रशेषादिभ्यो वरस्य ।।१७।।

**चट्टी–** ननु भ्रात्रोः सादृश्यात् 'न मया विविक्तौ' इति यदुक्तं तत्सत्यमेव किं न स्यादित्यत आह– **य इति** ।। सकलशेमुषिसन्ततेः बुद्धिसमूहस्य बुद्धिर्मनश्चित्तमित्यवान्तरभेदवत्वात् शेमुषिसन्ततेरित्युक्तम् । यः प्रेरकः तस्य रामस्वरूपस्य ईशेभ्यो वरस्य उत्तमस्य विष्णोः इह वालिसुग्रीवयोः विवेकविषये अज्ञता कुतः । न कुतोऽपीत्यर्थः । प्रकृतमनुसरति– **तेनेति** ।। वालिमुष्टिभिः ताडितेन युद्धं त्यक्त्वा परावृत्यागतेन तेन सुग्रीवेण पुनः वाली हन्तव्य इति पूर्वमुक्तत्वात् पुनरित्युक्तम् । सुदृढं यथा स्यात् तथा वाली अवश्यं हन्तव्य इत्युदितो रामः अथ वधनिश्चयोक्त्यनन्तरं वज्रोपमं वज्रवत् दृढं शरं बाणं इन्द्रसूनौ वालिनि अमूमुचत् ।।१७।।

**भारतश्री–** उदितः प्रेरितः ।।१७।।

**भावविवृति–** युवां न मया ज्ञातौ इत्येव किं न स्यादित्यत आह– **यः प्रेरक इति** ।। सकलस्य लक्ष्म्यादिमुक्तामुक्तचेतनगणस्य शेमुषिसन्ततेः प्रेरको यस्तस्याज्ञता कुत इति । तदेतदुक्तम्– 'भ्रातरौ समरूपौ स्थः समवेषौ समस्वरौ । अविवेकान्न मुक्तेषुरिति रामोऽब्रवीदिदम् ।।' इति संग्रहहरामायणे [४.४.७] । 'कराग्रे कन्दुकवत् योऽनन्तं जगदीक्ष्यते । यश्च कर्ताऽखिलस्यास्य तस्य कुत्राविवेकिता ।।' इति उक्तश्च ईशावास्यभाष्ये– 'यस्माद्ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च । ज्ञानस्फूर्तिस्सदा तस्मै हरये गुरवे नमः ।।' ब्रह्मादिसर्वमनसां प्रकृत्या मनसोऽपि तु । ईशितृत्वान्मनीषी स...।।' इति च ।।१७–५९।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूज रामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ षष्ठोऽध्यायः ।।

**गूढवाक्यार्थ–** ईशवरस्य ईशेभ्यः ब्रह्मरुद्रादिभ्यः वरस्य ।।१७।।

**रामाज्ञयैव लतया रविजे विभक्ते वायोः सुतेन रघुपेण शरे प्रमुक्ते ।**
**श्रुत्वास्य शब्दमतुलं हृदि तेन विद्ध इन्द्रात्मजो गिरिरिवापतदाशु सन्नः ।।१८।।**

**वेदाङ्गतीर्थीया–** लतयेति पुष्पस्रजेति भावः । अस्य शरस्य । तेन शरेण । सन्नः मूर्च्छितः ।।

**वादिराजीया–** परदिने कथमागतः कथञ्च मृत इत्यतः पुनर्विविच्याऽह– **रामाज्ञयैवेति** ।। वायोः सुतेन रविजे । लतालम्बनमाज्ञापालनायैव कृतं न तु रामस्य अज्ञानशङ्कयेति भावेन रामाज्ञयैवेत्येवकारः । 'वय गतौ' इति धातोस्ताच्छील्यार्थेऽणुप्रत्यये कृते 'णिति च' इति धात्वादेर्वकारस्य वृद्धौ कृतायां गत्यर्थानां ज्ञानार्थत्वाद्वायुरनादितोऽप्यभिवृद्धज्ञानशील इति सिद्ध्यति । तत्पुत्रस्य क्वाज्ञानमिति सूचयितुं वायोः सुतेनेत्युक्तम् । अस्य शरस्य शब्दम् । सन्नः सङ्कटं प्राप्तः ।।१८।।

**मधुसूदनीया–** ।। **रामाज्ञयैव रविज इति** ।। ननु रामायणादौ लक्ष्मणेन मालया रविजो विभक्त इत्युच्यते ['लक्ष्मणेन समुत्पाट्य एषा कण्ठे कृता तव' इति ४.१४.९] । तत्कथमुच्यते वायोस्सुतेन रविजे लतया विभक्त इति सत्यम् । भारतानुसारेणैव एतद्ग्रन्थस्य प्रवृत्तत्वात् । विरोधाभावात् । 'विशेषतो भारतवर्त्मचारी' इति वक्ष्यमाणत्वात् । 'सुग्रीवस्य तदा मालां हनूमान्कण्ठ आसजत्' इत्यादि अरण्यपर्वणि [२८१.३४] । हनूमानेव सुग्रीवकण्ठे मालां बबन्धेत्युक्तत्वात् ।।१८–२०।।

**वरदराजीया–** उक्तस्य निर्वाहार्थं वायोः सुतेन हनूमता रामाज्ञया लतया पुष्पस्रजा रविजे सुग्रीवे विभक्ते वाल्यपेक्षया विलक्षणे कृते सति रघुपेण रामेण च शरे विमुक्ते सति । अस्य शरस्य अतुलं असदृशं शरं श्रुत्वा तेन शरेण हृदि हृदयदेशे विद्धः ताडितः इन्द्रात्मजो वाली सन्नो अवसन्नः नष्टबलो गिरिः पर्वत इव अपतत् ।।१८।।

**जनार्दनीया–** 'यः प्रेरकः' इत्यनेन यद्यप्यज्ञानं परिहृतं तथापि 'न मया विविक्तौ' इति रामोक्तेर्निर्वाहकं दर्शयति– **रामेति** ।। वायोः सुतेनेति कर्त्रा । लतया पुष्पमालया रविजे विभक्ते सति । समानरूपात् वालिनः विलक्षणे कृते सति । अस्य बाणस्य शब्दं श्रुत्वा, तेन बाणेन विद्धः सन्नः मूर्च्छितः सन् ।।१८।।

**अनन्तभट्टीया–** सुतेन कर्त्रा । लतया सुग्रीवशिरसि वेष्टितया । अस्य शरस्य । तेन शरेण सन्नः अस्तबलः ।।१८–१९।।

**ताम्रपर्णीया–** हनुमतो रामाज्ञायाः अनुल्लङ्घ्यत्वादेव लतालम्बनं कृतं न त्वज्ञानशङ्कया इति भावेन रामाज्ञयैव इत्येवकारः ।।१८–२०।।

**चट्टी–** 'यः प्रेरकः' इत्यनेन यद्यप्यज्ञानं परिहृतं तथापि 'न मया विविक्तौ' इति रामोक्तेः निर्वाहकं दर्शयति– **रामेति** ।। वायोः सुतेन हनुमता कर्त्रा रामाज्ञयैव लतया पुष्पस्रजा रविजे सुग्रीवे विभक्ते सति समानरूपाद् वालिनः विलक्षणे कृते सति । तदुक्तम्– 'रजताभां सुवर्णाभे गजपुष्पमयीं स्रजम् । अमुमोचाथ सुग्रीवे हनुमान् रामशासनात् ।।' [सं.रा.४.४१०] । रघुपेण रामेण शरे मुक्ते सति अस्य शरस्य अतुलं असदृशं शब्दं श्रुत्वा तेन शरेण हृदि हृदयदेशे विद्धः ताडितः इन्द्रात्मजो वाली आशु सन्नः मूर्च्छितस्सन् गिरिः पर्वत इव अपतत् ।।१८।।

**भारतश्री–** अस्य शरस्य शब्दं श्रुत्वा अपतत् । तेन विद्धः सन् सन्नः मृतप्रायः कण्ठगतप्राणः । 'प्रमीयमाणः सन्नः स्यात्' इत्यभिधानम् ।।१८।।

**भावचन्द्रिका–** लतया पुष्पस्रजेव स्थितया । 'रजताभां सुवर्णाभे गजपुष्पमयीं स्रजम् । अमुमोचाथ सुग्रीवे हनुमान् रामशासनात् ।।' इति सङ्ग्रहरामायणे । [कि.का.४.१०] स्रजं स्रजमिव स्थिताम् । तदुक्तञ्च वाल्मीकिरामायणे– 'ततो गिरितटे जातां उत्पाट्य कुसुमायुताम् । लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत् ।। स तया शुशुभे श्रीमाल्लतया कण्ठसक्तया ।।' [कि.का.१२.३९–४०] ।।१८–२१।।

**अतिविशद–** ।। **रामाज्ञयैव रविज इति** ।। ननु रामायणादौ लक्ष्मणेन मालया रविजे विभक्ते इति उच्यते । वायोस्सुतेन लतया रविजे विभक्ते इति अत्र कथं सत्यम् । भारतानुसारेण एतद्ग्रन्थस्य प्रवृत्तत्वेन विरोधाभावात् । 'विशेषतो भारतवर्त्मचारी' इति वक्ष्यमाणत्वात् । 'सुग्रीवस्य तदा मालां हनुमान् कण्ठ आसजत्' इत्यारण्यपर्वणि । 'हनुमानेव सुग्रीवकण्ठे मालां बबन्ध ह' इत्युक्तत्वात् रामायणे पुंव्यत्यासो ज्ञेयः ।।१८–२०।।

**भक्तो ममैष यदि मामभिपश्यतीह पादौ ध्रुवं मम समेष्यति निर्विचारः ।**
**योग्यो वधो न हि जनस्य पदानतस्य राज्यार्थिना रविसुतेन वधोऽर्थितश्च ।।**

**व्यासतीर्थीया–** अदृश्यतया हनने किं निमित्तमित्यत आह– **भक्त इति** ।।१९।।

**वादिराजीया–** तर्ह्यतिसमर्थोऽपि रामः किमर्थमदृश्यतया जघानेत्यतस्तात्पर्यमाह– **भक्त इति** ।।

**वरदराजीया–** नन्वदृश्यतया रामो वालिनं जघानेति पुराणेषु श्रूयते । तेन वाली मां द्रक्ष्यति चेन्मां हनिष्यतीति भीत्या अदृश्य एव तं जघानेति अन्यथाप्रतीतिः लोकस्य, तां निवारयति– **भक्त इत्यादिना** ।। एष वाली मम भक्तः तस्मादिह युद्धे मां अभिपश्यति चेन्निर्विचारः विचाररहितो मम पादौ ध्रुवं समेष्यति । तथापि वधः किं न स्यादित्यत आह– **योग्य इति** ।। पदानतस्य पदयोरानतस्य पतितस्य जनस्य वधो न योग्यः । तर्हि वध एवमस्त्विति तत्राह– **राज्येति** ।। राज्यार्थिना रविसुतेन सुग्रीवेण वालिनो वधोऽर्थितः प्रार्थितश्च ।।१९।।

**जनार्दनीया–** 'रामो वालिभीत्या अदृश्यतया जघान' इति ग्रन्थान्तरोक्तविरोधं श्लोकद्वयेन परिहरति– **भक्त इत्यादिना** ।। एष वाली यदि अभिपश्यति तर्हि । इह शत्रुपक्षस्थे मयीत्यर्थः । निर्विचारः शत्रुपक्षस्थः प्राप्यो वा न वेति विचाररहितः सन् मम पादौ ध्रुवं निश्चयेन समेष्यति । तर्हि पादौ प्राप्तस्य वधः किं न क्रियत इत्यत आह– **योग्य इति** ।। पादयोरानतस्य प्रणतस्येत्यर्थः । जनस्य वधः योग्यो.नेति हि प्रसिद्धिः । धर्मशास्त्रेष्विति शेषः । ननु वालिवधकरणे किं निमित्तमित्यत आह– **राज्येति** ।। अर्थितः प्रार्थितः । वालिन इति शेषः ।।१९।।

**चट्टी–** रामः वालिभीत्या अदृश्यतया जघानेति ग्रन्थान्तरोक्तिविरोधं श्लोकद्वयेन परिहरति– **भक्त इत्यादिना** ।। एषः वाली मम भक्तः तस्मादिह युद्धे यदि मामभिपश्यति तर्हि निर्विचारः शत्रुपक्षस्थोऽयं प्राप्यो न वेति विचाररहितस्सन् मम पादौ ध्रुवं निश्चयेन समेष्यति । तथापि वधः किमर्थं न क्रियते इत्यत आह– **योग्य इति** ।। पदयोः नतस्य प्रणतस्येत्यर्थः । नतस्य वधः न योग्यः तर्हि वध एव मास्त्विति तत्राह– **राज्येति** ।। राज्यार्थिना रविसुतेन सुग्रीवेण वालिनः वधश्च अर्थितः प्रार्थितः ।।१९।।

**कार्यं ह्यभीष्टमपि तत्प्रणतस्य पूर्वं शस्तो वधो न पदयोः प्रणतस्य चैव ।**
**तस्माददृश्यतनुरेव निहन्मि शक्रपुत्रं त्विति स्म तमदृश्यतया जघान ।।२०।।**

**व्यासतीर्थीया–** योग्य इत्यादिनोक्तं विवृण्वन् सम्प्रधारितमाह– **कार्यमिति** ।।२०।।

**वेदाङ्गतीर्थीया–** एवमपि प्रणतवधस्य गर्हितत्वेऽपि प्रणतस्यावध्यत्वेऽपि इत्यर्थः । पदयोः प्रणतस्य वधो नैव शस्तो यस्मात् तस्मादेवादृश्यतनुरिति सम्बन्धः ।।२०।।

**वादिराजीया–** तर्ह्युभयोरपि भक्तत्वात्कुतः सुग्रीवस्याभीष्टं कार्यमित्यताह– **कार्यं हीति** ।। तत् तत्र तयोर्मध्य इत्यर्थः । 'शक्रपुत्रं त्विति स्म' इत्यत्र स्मपदेन वालिनो भयाद्भीतः सन् विलीन एव तं जघानेति शङ्कावारणाय 'भीषाऽस्माद्वातः पवते' इति श्रुतिप्रिसिद्धिं सूचयति । वालिनोऽप्यसाध्य-सप्ततालचूर्णीकरणादिना वालिनोऽप्यतिसमर्थस्य कुतस्तस्माद्भीतिरिति प्रात्यक्षिकप्रसिद्धिं च सूचयतीति भावः ।।२०।।

**वरदराजीया–** तत्तस्मात्पूर्वं प्रणतस्य अभीष्टं अर्थितं कार्यम्, पदयोः प्रणतस्य च वधो नैव शक्यः । तस्मादुभयसंरक्षणार्थं अदृश्यतनुः अदृश्यस्वरूप एव शक्रपुत्रं वालिनं निहन्मीति अभिप्रायेण अदृश्यतनुः सन् तं वालिनं जघान न तु भीत्येति भावः ।।२०।।

**जनार्दनीया–** तत् तस्मात् पूर्वं आदौ प्रणतस्य अभीष्टं कार्यम् । प्रणतस्य वधः शस्तो श्लाघ्यो नैव । हि यस्मात् तस्मात् कारणादिह युद्धे निहन्मीति विचार्य, तं वालिनं जघान ।।२०।।

**अनन्तभट्टीया–** पूर्वं प्रणतस्येति सम्बन्धः । ततस्तत्कार्यमभीष्टमिति सम्बन्धः । अस्त्रं...* । त्वत्प्रतिभटः त्वया दृष्टश्चेत् तद्बलं त्वामैत्विति वालिनं प्रति शिवेन वरस्य दानात् तद्भयात् वाल्यदृश्यस्सन् तं जघानेति किं न स्यादित्यत आह– **पुरेति** ।। किं कर्ता न किमपीत्यर्थः ।।२०–२१।।

**चट्टी–** तत् तस्मात् पूर्वं आदौ प्रणतस्य तत् अभीष्टं कार्यं पदयोः प्रणतस्य वधः शस्तः श्लाघ्यो नैवाह यस्मात् तस्मात् उभयसंरक्षणार्थं अदृश्यतनुः अदृश्यस्वरूपी एव शक्रपुत्रं वालिनं निहन्मीत्यभिप्रायेण तं वालिनं अदृश्यतया जघान । न तु भीत्येति भावः ।।२०।।

**यः प्रेरकः सकललोकबलस्य नित्यं पूर्णाव्ययोच्चबलवीर्यतनुः स्वतन्त्रः ।**
**किं तस्य दृष्टिपथगस्य च वानरोऽयं [1]कर्तेशचापमपि येन पुरा प्रभग्नम् ।।२१।।**

**व्यासतीर्थीया–** यः प्रतिभटः त्वया दृष्टः तद्बलं त्वामेतु इतीश्वरवरात् वालिनं अदृश्यतया जघानेति किं न स्यादित्यत आह– **य इति** ।। किं कर्ता इत्युक्तार्थे कैमुत्यमाह– **ईशेति** ।।२१-४०।।

---

१. अत्र प्रमाणं तु स्कान्दे उमासंहितायाम्१०अ.। तथाहि– 'आहूय वालिनं ब्रह्मा ददौ वरमनुत्तमम् । प्रतीपवर्तिनो भूयादर्धं बलमरिन्दम ।।' इति । 'आहूय वालिनं देवः' इति क्वचित् पठ्यते ।

**वेदाङ्गतीर्थीया–** वालिदर्शने स्वबलं तमुपैतीति भिया अदृश्यतनुर्जघानेति मोहं सोपपत्तिकं परिहरति– **यः प्रेरक इत्यादिना** ।।२१।।

**वादिराजीया–** स्मपदेन सूचितार्थं स्वयमेव स्पष्टयति– **यः प्रेरक इति** ।।२१।।

**मधुसूदनीया–** ननु यस्तव दृष्टिपथं याति तस्य बलिष्ठस्य बलं त्वामेत्विति रुद्रवरसद्भावात् वालिनमदृश्यतया जघानेति किं न स्यादित्यत आह– **यः प्रेरक इति** ।।२१।।

**वरदराजीया–** ननु भीत्यैवेति किं न स्यादित्यत आह– **य इति** ।। सकललोकबलस्य यः प्रेरकः यश्च नित्यं पूर्णे अव्यये उच्चे उत्कृष्टे बलवीर्ये तनुः स्वरूपं यस्य सः । यश्च स्वतन्त्रः तस्य रामस्य दृष्टिपथगस्य दृष्टिगोचरस्य ततः अयं वानरो वाली किं कर्ता किं करिष्यति येन रामेण ईशचापमपि त्रियम्बकधनुरपि पुरा सीतास्वयंवरसमये प्रभग्नं शकलीकृतम् । अनेन यस्त्वदृष्टिपथमेष्यति तदीयं तपोबलं च त्वामायात्विति वालिनं प्रति रुद्रवराद्भीत्या रामोऽदृश्यो बभूवेति शङ्कापि निरस्ता ।।२१।।

**जनार्दनीया–** 'दृष्टिगोचरप्रतिभटस्य बलं त्वामेव यास्यति' इति रुद्रदत्तवरस्य वालिनो भयेन अदृश्यतनुः रामो वालिनं जघान'' इति पुराणगतविरोधं प्रमाणेन तावत्परिहरन्नाह– **य इति** ।। बलस्य प्रेरकः । नित्यमिति सर्वत्र सम्बध्यते । प्रेरकत्वे हेतुगर्भविशेषणमाह– **पूर्णेति** ।। पूर्णे अव्यये नाशरहिते उच्चे उत्कृष्टे बलवीर्ये तनुर्यस्य स तथा । अत एव स्वतन्त्रो यो रामः तस्य रामस्य अयं वानरः वाली किं कर्ता? किं करिष्यतीत्यर्थः । कथंभूतस्य ? दृष्टेः पन्था इति दृष्टिपथः । दृष्टिपथं गच्छतीति तथा तस्य । दृष्टिगोचरस्येत्यर्थः । रुद्रवराज्जेष्यतीत्यत आह– **ईशेति** ।। येन रामेण ईशचापं जनकेन लब्धं रुद्रधनुः पुरा स्वयंवरकाले भग्नम् । तथाच तद्वरस्त्वकिञ्चित्कर इति भावः ।।२१।।

**ताम्रपर्णीया–** ।। **पूर्णाव्ययेति** ।। पूर्णत्वं नाम प्रत्येकं निस्सीमत्वम् । अव्ययत्वं एकदेशवृद्धिहास-राहित्यम् । उच्चत्वं तारतम्यकाष्ठावधित्वं बोध्यम् ।।२१।।

**चट्टी–** दृष्टिगोचरस्य प्रतिभटस्य बलं त्वामेव यास्यतीति रुद्रदत्तवरस्य वालिनो भयेन अदृश्यतनुः रामो वालिनं जघानेति पुराणगतविरोधं प्रमाणेन तावत्परिहरन्नाह– **य इति** ।। सकललोकस्य बलस्य यः प्रेरकः । नित्यमित्यत्र सर्वत्र सम्बध्यते । प्रेरकत्वे हेतुगर्भविशेषणमाह– **पूर्णेति** ।। यश्च नित्यं पूर्णे अव्यये उच्चे उत्कृष्टे बलवीर्ये तनुः स्वरूपं यस्य सः । अत एव स्वतन्त्रश्च यः रामः तस्य रामस्य दृष्टिपथगस्य दृष्टिगोचरस्य सतः अयं वानरो वाली किं कर्ता किं करिष्यति । येन रामेण ईशचापं त्र्यम्बकधनुरपि पुरा सीतास्वयंवरे भग्नम् । तथा च तद्वरस्त्वकिञ्चित्कर इति भावः ।।२१।।

**अतिविशद–** ननु यस्तव दृष्टिपथं याति तस्य बलिष्ठस्य बलं त्वामेत्विति रुद्रवरसद्भावात् वालिनमदृश्यतया जघानेति किं न स्यादित्यत आह– **यः प्रेरक इति** ।।२१-२२।।

**गूढवाक्यार्थ–** ननु सुग्री... *वायोः सुतेन लतावलम्बनं रामाज्ञाया अनुल्लङ्घ्यत्वादेव कृतम्, नतु रामस्याज्ञानशङ्कयेति भावः । न रामाज्ञयैवेत्येवकारः । त्वत्प्रतिभटस्त्वया दृष्टश्चेत् तद्बलं त्वामेत्विति वालिनं प्रति शिवेन वरस्य दानात् तद्भयात् वाल्यदृश्यस्सन् तं जघानेति किं न स्यादित्यत आह– **य इति** ।। पूर्णानि प्रत्येकं निस्सीमानि एकदेशवृद्धिह्रासरहितानि उच्चानि निरवधिकानि बलवीर्याण्येव तनुर्यस्य स तथोक्तः । किं कर्ता... *त्यर्थः ।।२१।।

**[1]सन्नेऽथ वालिनि जगाम च तस्य पार्श्वं**
**प्राहैनमार्द्रवचसा यदि वाञ्छसि त्वम् ।**
**उज्जीवयिष्य इति नैच्छदसौ त्वदग्रे**
**[2]को नाम नेच्छति मृतिं पुरुषोत्तमेति ।।२२।।**

**वेदाङ्गतीर्थीया–** इति वदन् नैच्छदित्यन्वयः ।।२२।।

**वादिराजीया–** वाल्युज्जीवने सुग्रीवार्थं कृतप्रतिज्ञाभङ्ग इति जानन् रामः कुतस्तत्र जगामेति चेत् सत्यम् । समीपं गत्वोज्जीविष्यामीति मयोक्तेऽप्यमोघमच्छरपातानन्तरं ज्ञानी स तथा न

---

१. अत्र वाली स्वमरणात्प्राक् स्वस्मै इन्द्रेण दत्तां स्वर्णमयीं मालां सुग्रीवाय दत्तवान् इत्यादिविशेषः रामायणादवगम्यते । तथाहि– 'इमाश्च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम् । उदारा श्रीः स्थिता ह्यस्यां सम्प्रजह्यान्मृते मयि ।। ...या दत्ता देवराजेन तव तुष्टेन संयुगे । शातकौम्भीं प्रियां मालाम्... ।। इत्यादि । ४.२२.१६,२८

ननु वालिनः स्वस्मादधमसुग्रीवभार्यापहारित्वेन अल्पदोषत्वात्, सुग्रीवस्य तु स्वोत्तमवालिभार्यास्वीकारित्वेन महादोषित्वात् तदाच्छाद्य वालिवधे कथं भगवता दोषाविष्करणं क्रियत इति चेत्, उच्यते । वालिनोऽल्पपापत्वात् तस्मै एतज्जन्मनि मरणलक्षणं अल्पपापफलं ददौ । सुग्रीवस्य तु स्वोच्चदारग्रहणलक्षणमहापातकस्य फलीभूतां मुक्तौ आनन्दह्रासप्राप्तिं श्रीकृष्णावतारे सहस्रवर्मनामकासुराविष्टतया जनिकारणीभूतदोषोत्पादकवालिमारणं निमित्तीकर्तुं च न तं जघान भगवान् रामः ।' इति रामायणव्याख्याने श्रीसत्यधर्मश्रीचरणाः ।

२. वाली बभाषे राममञ्जलिं मस्तके निधाय नमस्ते राम शृणुश्व वचनं मम । शङ्खचक्रगदापाणिः पीतवासाः जगद्गुरुः । नारायणः स्वयं साक्षाद्भवानिति मया श्रुतम् । त्वां योगिनः चिन्तयन्ति त्वां यजन्ति च यज्विनः । हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक् । मरणे चिन्तयानस्य त्वां विमुक्तिरदूरतः । स त्वं मे दर्शनं प्राप्तो राम मे पापसंक्षयः ।। इति पाद्मे.पा.खं.११६.२००-२०३

याचयिष्यतीति जानन्नेव जगाम । शस्त्रपातात्प्राग्दर्शने तु बाधकाभावात्पादौ गृहीत्वा स्वजीवनमेवाभ्यर्थयेतापि । अतः प्राक् स्वात्मनं नादर्शयच्चेति ब्रूमः ।।२२।।

**वरदराजीया–** अथानन्तरं वालिनि सन्ने क्षीणवले सति तस्य वालिनः पार्श्वं समीपं जगाम । राम इति शेषः । एनं वालिनं आर्द्रवचसा स्नेहार्द्रवचसा प्राह च । किमिति । यदि वाञ्छसि जीवितुं इति शेषः । तर्हि उज्जीवयिष्येति प्राहेति सम्बन्धः । असौ वाली हे पुरुषोत्तम त्वदग्रे तव पुरतः को नाम मृतिं नेच्छति इति वदन् उज्जीवनं नैच्छदित्यर्थः ।।२२।।

**जनार्दनीया–** राम इत्यध्याहारः । वालिनि सन्ने सति मूर्च्छिते सति अथ तस्य वालिनः पार्श्वं समीपम् । एनं वालिनं स्नेहामृतेन आर्द्रवचसा । वाक्यामृतेन आर्द्रीकृतत्वात् विमूर्च्छितं वालिनं प्राहेति भावः । हे वालिन् । जीवनमिति शेषः । यदि वाञ्छसि तर्हि उज्जीवयीष्य इति पूर्वेण सम्बन्धः । असौ वाली इति ब्रुवन्नैच्छत् । जीवनमिति शेषः । इतीति किं ? हे पुरुषोत्तम त्वदग्रे को नाम कः प्रसिद्धः पुरुषः ज्ञानीत्यर्थः । मृतिं नेच्छति सर्वोऽपीच्छतीत्यर्थः । असौ विश्वकर्तेत्यर्थः । कश्चतुर्मुखः स्वनियतकाले इच्छतीति नाम श्रुत्यादौ प्रसिद्धिः । यः नेच्छेत् स कः कुत्सितः पुरुष इति नाम प्रसिद्धिः । एवं सति मम जीवनं कथं युक्तमिति ब्रुवन्नैच्छदिति सम्बन्धः ।।२२।।

**अनन्तभट्टीया–** आर्द्रवचसा कृपायुक्तवचसेत्यर्थः । वाञ्छति जीवितुमिच्छसीति शेषः । इति वदन्नित्यर्थः । नैच्छत् जीवनमिति शेषः ।।२२।।

**ताम्रपर्णीया–** ।। **यदि वाञ्छसीति** ।। ननु वाञ्छायामपि उपजीवनं कथम् । रविसुतेन वध अर्थितश्च 'कार्यं हि अभीष्टं' इत्युक्तत्वात् । तथा च यदि वाञ्छसीति रामवचनं प्ररोचनामात्रं प्राप्तं इति चेत् वालिनश्च मरणावस्थांगतत्वेन मृतप्रायत्वेन रविसुताभीष्टस्य कृतत्वेन पुनरुज्जीवनस्य पुनर्जन्मतुल्यतया सुग्रीवमतेनैव तदुपपत्तेः । अत एव 'सन्ने च वालिनि' इत्युक्तम् ।।२२-२५।।

**चट्टी–** राम इति शेषः । वालिनि सन्ने मूर्च्छिते सति । अथ तस्य वालिनः पार्श्वं समीपं जगाम । एनं वालिनं आर्द्रवचसा स्नेहामृतेन आर्द्रवचसा प्राह च । किमिति । हे वालिन् जीवनमिति शेषः, यदि वाञ्छसि तर्हि उज्जीवयिष्ये इति प्राहेति सम्बन्धः । असौ वाली हे पुरुषोत्तम त्वदग्रे तव पुरतः को नाम कः प्रसिद्धः पुरुषः ज्ञानीत्यर्थः मृतिं नेच्छति । सर्वोऽपि इच्छतीत्यर्थः । कः चतुर्मुखः स्वनियतकाले इच्छतीति नाम श्रुत्यादौ प्रसिद्धिः । यः नेच्छति सः कः कुत्सितपुरुष इति नाम प्रसिद्धिः । एवं सति मम जीवनं कथं युक्तमिति वदन् नैच्छदिति सम्बन्धः ।।२२।।

**भावचन्द्रिका–** ।। **जगामेति** ।। 'इन्द्रागच्छ भवानत्र सर्वामरगुरोर्विधेः । परिहासे निदानं हि तस्मात्ते कपिजन्मनि ।। मत्प्रसादाद्भवेदन्यत् बलज्ञानादिकञ्च ते । रामावतारे मत्सेवा तव नैव

भविष्यति ।। पश्चात्कृष्णावतारे ते सखा भूत्वा मनोरथी । ददामि नात्र सन्देहः न कुर्यामि तवाप्रिये ।। वाली भव सुरश्रेष्ठ मृतौ मे दर्शनं भवेत् ।।' इति वाराहरूपिणा ईश्वरेण वरदानात् ।।२२।।

**गूढवाक्यार्थ–** आर्द्रवचसा कृपावचसेत्यर्थः । वाञ्छसि जीवितुमिति शेषः । ननु यदि वाञ्छसि तर्हि उज्जीवयिष्य इति कथम् ? रविसुतेन वधस्यार्थितत्वात् कार्यं ह्यभीष्टमित्युक्तत्वाच्चेति चेन्न । सन्नेऽथ वालिनीति । वालिनः अन्त्यावस्थां गतस्य मृतप्रायत्वेन सुग्रीवप्रयोजनस्य जातत्वात् इदानीमुज्जीवनस्य पुनर्जन्मतुल्यत्वेन सुग्रीवानुमतेनैव उज्जीवनोपपत्तेः रामवचनं न प्ररोचमात्रमिति भावः ।।२२।।

**कार्याणि तस्य चरमाणि विधाय पुत्रं**
**त्वग्रे निधाय रविजः कपिराज्य आसीत् ।**
**रामोऽपि तद्गिरिवरे चतुरोऽथ मासान्**
**दृष्ट्वा घनागममुवास सलक्ष्मणोऽसौ ।।२३।।**

**वेदाङ्गतीर्थीया–** पुत्रमङ्गदम् । अथानन्तरम् । गिरिवरे[प्रस्रवणपर्वते] घनागमं वर्षर्तुम् ।।२३-२५।।

**वादिराजीया–** तस्य वालिनः पुत्रमङ्गदं तु विशेषेणाग्रे निधाय, युवराजपट्टं बध्वेत्यर्थः । अत एव युवाराजयुक्तेति वदिष्यति । कपिराज्ये राज्ञस्सम्बन्धि राज्यं कपीनामाधिपत्यमित्यर्थः । तस्मिन्नासीत् ।।

**मधुसूदनीया–** ।। **राम इति** ।। अथ वालिवधानन्तरं तद्गिरिरिवरे माल्यवत्पर्वते चतुरो मासान् कार्तिकपौर्णिमान्तान् उवासेत्यन्वयः । तदुक्तम्– 'एतन्माल्यवतः शृङ्गं किष्किन्धोपरि भास्वरम् । चत्वारो वार्षिका मासा यत्र देवी कृता मया ।। इत्यादि रामायणे । ननु किष्किन्धायां सुग्रीवो वर्तत इति । तत्र निवासं विहाय रामः किमर्थं गिरिनिवासं कृतवानित्यतः तत्र निमित्तं सूचयति– **अपीति** ।। तन्निमित्तं तु पित्राज्ञा । 'चतुर्दश समा राजन् ग्रामं वा यदि वा पुरम् । न प्रवेक्ष्यामि हनुमन् पितुर्निर्देशपालकः ।।' इत्यादि रामायणवाक्यादवगन्तव्या [४.२६.९] ।।२२-२५।।

**वरदराजीया–** रविजः सुग्रीवः तस्य वालिनः पुत्रं अङ्गदं अग्रे पुरतो निधाय चरमाणि अन्ते क्रियमाणानि कार्याणि प्रेतकार्याणीति यावत्, विधाय कृत्वा कपीनां राज्याधिपतिरासीदित्यर्थः । अथानन्तरं असौ रामोऽपि तद्गिरिवरे तस्मिन् पर्वतश्रेष्ठे माल्यवति घनागमं मेघागमनम्, वर्षर्तुमिति यावत् । दृष्ट्वा सलक्ष्मणश्चतुरो मासान् श्रावणादीन् वासमकरोत् ।।२३।।

**जनार्दनीया–** रविजः तस्य पुत्रं अङ्गदं अग्रे निधायेत्यनेन पितृकर्मणि पुत्र एव मुख्याधिकारीत्युक्तम् । चरमाणि कार्याणि प्रेतसंस्कारकर्माणि विधाय, आसीद्राजेति शेषः । अथ सुग्रीवस्य राज्यप्राप्त्यनन्तरम् । रामोऽपि घनानां मेघानां आगमं आगमनं वर्षर्तुमित्यर्थः । दृष्ट्वा, स चासौ गिरिवरश्च तथा तस्मिन् माल्यवति ।।२३।।

**अनन्तभट्टीया–** चरमाणि प्रेतकार्याणि । आसीत् अभिषिक्त इत्यर्थः ।।२३।।

**चट्टी–** रविजः सुग्रीवः तस्य वालिनः पुत्रं अङ्गदं अग्रे निधायेत्यनेन पितृकर्मणि पुत्र एव मुख्याधिकारीत्युक्तं भवति । चरमाणि अन्ते क्रियमाणानि कार्याणि प्रेतकार्याणि प्रेतसंस्काररूपकर्माणि विधाय कृत्वा कपीनां राज्ये आसीत् । अथ अनन्तरं असौ रामोऽपि घनागमं मेघानां आगमं आगमनम्, वर्षर्तुमित्यर्थः । दृष्ट्वा स चासौ गिरिवरश्च तथा तस्मिन् माल्यवति सलक्ष्मणस्सन् चतुरो मासान् कार्तिकपौर्णिमान्तान् उवासेत्यन्वयः । तदुक्तम्– 'एतन्माल्यवतः... मया ।।' इत्यादि रामायणे । ननु किष्किन्धायां सुग्रीवो वर्तत इति तत्र निवासं विहाय रामः किमर्थं गिरिनिवासं कृतवानित्यत तत्र निमित्तं सूचयति तुशब्देन । तन्निमित्तं तु पित्राज्ञा । 'चतुर्दशसमा... पालकः ।।' इत्यादिरामायण-वाक्यादगन्तव्या ।।२३।।

**भावचन्द्रिका–** गिरिवरे माल्यवन्ते ।।२३-२५।।

**अतिविशद–** ।। **राम इति** ।। अथ वालिवधानन्तरं तद्गिरिवरे माल्यपर्वते चतुरो मासान् कार्तिकपौर्णिमान्तानुवासेत्यन्वयः । तदुक्तम्– 'एतन्माल्यवतः... मया ।।' इत्यादि रामायणे । ननु किष्किन्धायां सुग्रीवोऽपि वर्तते इति तत्र निवासं विहाय रामः किमर्थं गिरिनिवासं कृतवान् इत्यतः तत्र निमित्तं सूचयति– **अपीति** ।। तन्निमित्तं तु पित्राज्ञा । 'चतुर्दशसमा... पालक ।।' इति रामायणवाक्यादवगन्तव्यम् ।।२३-२५।।

**प्रमाणसंग्रह–** रामोऽथ तद्गिरिवरे चतुरोऽथ मासान् इति । गिरिवासे निमित्तं पित्राज्ञा । 'चतुर्दशसमा... कारणात् ।।' इति रामायणे ।।२३।।

**गूढवाक्यार्थ–** पुत्रं वालिनः पुत्रमङ्गदं तु विशेषेण अग्रे निधाय युवराजं कृत्वेत्यर्थः । आसीत् अभिषिक्त इत्यर्थः ।।२३।।

**अथातिसक्ते क्षितिपे कपीनां प्रविस्मृते रामकृतोपकारे ।**
**प्रसह्य तं बुद्धिमतां वरिष्ठो रामाङ्घ्रिभक्तो हनुमानुवाच ।।२४।।**

**वरदराजीया–** अथानन्तरं कपीनां क्षितिपे राज्ञि सुग्रीवे अतिसक्ते अत्यन्तं विषयासक्ते सति, अत एव रामकृतोपकारे प्रविस्मृते सति बुद्धिमतां मतिमतां वरिष्ठः श्रेष्ठः रामांघ्रिभक्तः श्रीरामचरणयोर्भक्तिमान् हनूमान् प्रसह्य आक्षिपन्निव उवाच ।।२४।।

**जनार्दनीया–** अथ राज्यप्राप्त्यनन्तरम् । रामेण कृतः उपकारो यस्य तस्मिन् । स्त्रीराज्यादिविषयेषु अतिसक्ते कपीनां क्षितिपे राज्ञि प्रविस्मृते सति । रामोपकारमिति शेषः । हनुमान् प्रसह्य, तं विनिन्द्येत्यर्थः । उवाच ।।२४।।

**अनन्तभट्टीया–** क्षितिपे राजनीत्यर्थः । अतिसक्ते विषयासक्ते ।।२४।।

**चट्टी–** अथ अनन्तरं कपीनां क्षितिपे राज्ञि सुग्रीवे अतिसक्ते सति स्त्रीराज्यादिविषयेषु अतिसक्ते सति अत एव रामकृतोपकारे प्रविस्मृते तेनेति शेषः । बुद्धिमतां मतिमतां वरिष्ठः श्रेष्ठः रामांघ्रिभक्तः श्रीरामचरणयोः भक्तिमान् हनुमान् प्रसह्य क्षिपन्नेव उवाच । यद्वा रामेण कृतः उपकारो यस्य तस्मिन् अतिसक्ते कपीनां क्षितिपे प्रविस्मृते सति रामोपकारमिति शेषः । हनुमानुवाचेति ।।२४।।

**न विस्मृतिस्ते रघुवर्यकार्ये कार्या कथञ्चित्स हि [१]नोऽभिपूज्यः ।**
**न चेत्स्वयं कर्तुमभीष्टमद्य ते [२]ध्रुवं बलेनापि हि कारयामि ।।२५।।**

**वादिराजीया–** अभीष्टं रामस्याभीष्टं कार्यं ते तव कर्तुमभीष्टमिच्छाविषयीभूतम् । न चेदित्यावृत्त्या योजना । अङ्गदपट्टबन्धोद्योगादियुक्तिसमुच्चयार्थं बलेनापीत्यपिपदम् । हनुमतः बलाधिक्ये युक्ताधिक्ये च 'वायुर्भीमः' इत्यादिप्रसिद्धिं सूचयितुं कारयामि हीति हिशब्दः ।।२५।।

**वरदराजीया–** किमिति रघुवर्यकार्ये सीतान्वेषणरूपे रामकार्ये ते त्वया विस्मृतिं कथञ्चिदपि न कार्या न विस्मर्तव्या । रामकार्यं न विस्मर्तव्यमित्यर्थः । अहं त्वदीय इति न मन्तव्यमित्याह– **स हीति** ।। हि यस्मात् स रामो नोऽस्माकं अभिपूज्यः तस्मात्ते तव अद्य अस्मिन् अवसरे रामकार्यं कर्तुं अभीष्टं न चेत्तर्हि बलेनापि बलादपि कारयामि ।।२५।।

**जनार्दनीया–** किमिति? ते त्वया । कार्ये सीतानुमार्गणरूपकार्ये । विस्मृतिर्विस्मरणं न कार्या न कर्तव्यम् । कुत इत्यत आह– **स इति** ।। हि यस्मात् तस्मादिति सम्बन्धः । ते त्वया । स्वयं हि स्वेनैव । कर्तुं अभीष्टं न चेत् अभीष्टं चेन्न भवति, तर्हि ध्रुवं निश्चयेन । ते हि त्वयैव । बलेनापि बलादपि । अद्येदानीं कारयामीति हीत्युभयत्र सम्बध्यते ।।२५।।

---

१. कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः । अप्रमेयप्रभावश्च स्वयं चाप्रतिमो गुणैः ।।... कामं खलु शरैः शक्तः सुरासुरमहोरगान् । वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञामवेक्षते ।।... देवदानवगन्धर्वा असुरा समरुद्गणाः । नच यक्षा भयं तस्य कुर्युः किमिव राक्षसाः ।।... तदेवं शक्तियुक्तस्य पूर्वं प्रीतिकृतस्तथा । रामस्यार्हति पिङ्गेश कर्तुं सर्वात्मना प्रियम् ।। [वा.रा.४.२९.१७-२४]

२. निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् । प्रसाद्य वाक्यैः विविधैः हेतुमद्भिर्मनोरमैः ।। वाक्यविद्वाक्यतत्त्वज्ञं हरीशं मारुतात्मजः । हितं तथ्यञ्च पथ्यञ्च सामधर्मार्थनीतिमत् ।। प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् । हरीश्वरमुपागम्य हनूमान् वाक्यमब्रवीत् ।। [वा.रा.४.२९.६-९]

**अनन्तभट्टीया–** न कार्येति सम्बन्धः । बलेन बलादपि ।।२५।।

**चट्टी–** किमिति । रघुवर्यकार्ये सीतान्वेषणरूपरामकार्ये ते त्वया विस्मृतिः कथञ्चन न कार्या न कर्तव्या । कुत इत्यत आह– **स हीति** ।। हि यस्मात् रामो नो अस्माकमभिपूज्यः तस्मादिति सम्बन्धः । ते तव अद्य स्वयं हि स्वेनैव कर्तुं अभीष्टं यदि न चेत् तर्हि ध्रुवं निश्चयेन ते हि त्वयैव बलेनापि बलादपि कारयामि ।।२५।।

**[१]स एवमुक्त्वा हरिराजसन्निधौ द्वीपेषु सप्तस्वपि वानरान् प्रति ।**
**सम्मेलनायाशु गतीन् स्म वानरान्प्रस्थापयामास समस्तशः प्रभुः ।।२६।।**

**वेदाङ्गतीर्थीया–** सप्तसु द्वीपेषु स्थितान् समस्तशः वानरान् प्रति वानरान् प्रस्थापयामास इति वाक्यभङ्गः ।।२६।।

**वादिराजीया–** शतयोजनप्रदेशे विद्यमानलङ्काद्वीपगमनेऽसमर्थानां कपीनां द्वीपेषु सप्तस्वपीत्युक्त-सप्तद्वीपगमनाय बहुलक्षयोजनाभ्यन्तरितसप्तद्वीपमर्यादीभूतसमुद्रोल्लङ्घने कथं सामर्थ्यमिति चेत्सत्यम् । सप्तस्वपि समुद्रेषु दशत्रिंशचत्वारिंशत्पञ्चाशदादिनवतिपर्यन्तयोजनेषु तत्र तत्र अवान्तरद्वीपाः गाधप्रदेशाश्च सन्ति तत्सर्वं हनुमदुपदेशेन वानरा जानन्ति । लङ्काद्वीपाभ्यन्तरे तु तदपि नास्तीति 'मार्गज्ञान् प्लवगान् सर्वानुर्वीशान्' इत्यादिपूर्वाचार्योक्तरीत्या परिहारसम्भवात् । अत एव आशुगतीन् आशु गमनसमय एव हनुमदुपदेशेन गतिः मार्गाणामवगतिः येषां त इति समासो ज्ञेयः ।।२६–२७।।

**मधुसूदनीया–** सप्तस्वपि द्वीपेषु जम्बूप्लक्षशाल्मलीकुशक्रौञ्चादिसप्तसु द्वीपेषु रमणकाद्यवान्तरद्वीपेषु च । तथाचोक्तम्–

'विनतस्य सुपर्णस्य तथा शतबलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।।
अत्यायामसमुद्राणां तारणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।।
हनूमतश्च सामर्थ्यप्राकट्याय महात्मनः । अङ्गदादिकपीन्द्राणां लवणाम्बुधितारणे ।।
नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।।
असामर्थ्यज्ञापनार्थं रामस्सेतुं बबन्ध ह ।।' इति स्कान्दे ।
ते समुद्रेषु गिरिषु वनेषु च सरित्सु च । वानरा वानरान्सर्वान् रामहेतोरचोदयन् ।।
मृत्युपाशोपमस्याज्ञां राजराजस्य वानराः । सुग्रीवस्य ययुः श्रुत्वा सुग्रीवभयदर्शिनः ।।

---

१. हरीश्वरमुपागम्य हनूमान् वाक्यमब्रवीत् [९]। तस्य तद्वचनं श्रुत्वा काले साधु निरूपितम् । सुग्रीवः सत्वसम्पन्नश्चकार मतिमुत्तमाम् [२८]।। सन्दिदेशातिमतिमान् नीलं नित्यकृतोद्यमम् । दिक्षु सर्वासु सर्वेषां सैन्यानामुपसङ्ग्रहे [२९]।। इति ४.२९.

**अनन्तभट्टीया–** क्षितिपे राजनीत्यर्थः । अतिसक्ते विषयासक्ते ।।२४।।

**चट्टी–** अथ अनन्तरं कपीनां क्षितिपे राज्ञि सुग्रीवे अतिसक्ते सति स्त्रीराज्यादिविषयेषु अतिसक्ते सति अत एव रामकृतोपकारे प्रविस्मृते तेनेति शेषः । बुद्धिमतां मतिमतां वरिष्ठः श्रेष्ठः रामांघ्रिभक्तः श्रीरामचरणयोः भक्तिमान् हनुमान् प्रसह्य क्षिपन्नेव उवाच । यद्वा रामेण कृतः उपकारो यस्य तस्मिन् अतिसक्ते कपीनां क्षितिपे प्रविस्मृते सति रामोपकारमिति शेषः । हनुमानुवाचेति ।।२४।।

**न विस्मृतिस्ते रघुवर्यकार्ये कार्या कथञ्चित्स हि [१]नोऽभिपूज्यः ।**
**न चेत्स्वयं कर्तुमभीष्टमद्य ते [२]ध्रुवं बलेनापि हि कारयामि ।।२५।।**

**वादिराजीया–** अभीष्टं रामस्याभीष्टं कार्यं ते तव कर्तुमभीष्टमिच्छाविषयीभूतम् । न चेदित्यावृत्त्या योजना । अङ्गदपट्टबन्धोद्योगादियुक्तिसमुच्चयार्थं बलेनापीत्यपिपदम् । हनुमतः बलाधिक्ये युक्ताधिक्ये च 'वायुर्भीमः' इत्यादिप्रसिद्धिं सूचयितुं कारयामि हीति हिशब्दः ।।२५।।

**वरदराजीया–** किमिति रघुवर्यकार्ये सीतान्वेषणरूपे रामकार्ये ते त्वया विस्मृतिं कथञ्चिदपि न कार्या न विस्मर्तव्या । रामकार्यं न विस्मर्तव्यमित्यर्थः । अहं त्वदीय इति न मन्तव्यमित्याह– **स हीति** ।। हि यस्मात् स रामो नोऽस्माकं अभिपूज्यः तस्मात्ते तव अद्य अस्मिन् अवसरे रामकार्यं कर्तुं अभीष्टं न चेत्तर्हि बलेनापि बलादपि कारयामि ।।२५।।

**जनार्दनीया–** किमिति? ते त्वया । कार्ये सीतानुमार्गणरूपकार्ये । विस्मृतिर्विस्मरणं न कार्या न कर्तव्यम् । कुत इत्यत आह– **स इति** ।। हि यस्मात् तस्मादिति सम्बन्धः । ते त्वया । स्वयं हि स्वेनैव । कर्तुं अभीष्टं न चेत् अभीष्टं चेन्न भवति, तर्हि ध्रुवं निश्चयेन । ते हि त्वयैव । बलेनापि बलादपि । अद्येदानीं कारयामीति हीत्युभयत्र सम्बध्यते ।।२५।।

---

१. कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः । अप्रमेयप्रभावश्च स्वयं चाप्रतिमो गुणैः ।।... कामं खलु शरैः शक्तः सुरासुरमहोरगान् । वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञामवेक्षते ।।... देवदानवगन्धर्वा असुरा समरुद्गणाः । नच यक्षा भयं तस्य कुर्युः किमिव राक्षसाः ।।... तदेवं शक्तियुक्तस्य पूर्वं प्रीतिकृतस्तथा । रामस्यार्हति पिङ्गेश कर्तुं सर्वात्मना प्रियम् ।। [वा.रा.४.२९.१७-२४]

२. निश्चितार्थोऽर्थतत्वज्ञः कालधर्मविशेषवित् । प्रसाद्य वाक्यैः विविधैः हेतुमद्भिर्मनोरमैः ।। वाक्यविद्वाक्यतत्वज्ञं हरीशं मारुतात्मजः । हितं तथ्यञ्च पथ्यञ्च सामधर्मार्थनीतिमत् ।। प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् । हरीश्वरमुपागम्य हनूमान् वाक्यमब्रवीत् ।। [वा.रा.४.२९.६-९]

**अनन्तभट्टीया**– न कार्येति सम्बन्धः । बलेन बलादपि ।।२५।।

**चट्टी**– किमिति । रघुवर्यकार्ये सीतान्वेषणरूपरामकार्ये ते त्वया विस्मृतिः कथञ्चन न कार्या न कर्तव्या । कुत इत्यत आह– **स हीति** ।। हि यस्मात् रामो नो अस्माकमभिपूज्यः तस्मादिति सम्बन्धः । ते तव अद्य स्वयं हि स्वेनैव कर्तुं अभीष्टं यदि न चेत् तर्हि ध्रुवं निश्चयेन ते हि त्वयैव बलेनापि बलादपि कारयामि ।।२५।।

**[१]स एवमुक्त्वा हरिराजसन्निधौ द्वीपेषु सप्तस्वपि वानरान् प्रति ।**
**सम्मेलनायाशु गतीन् स्म वानरान्प्रस्थापयामास समस्तशः प्रभुः ।।२६।।**

**वेदाङ्गतीर्थीया**– सप्तसु द्वीपेषु स्थितान् समस्तशः वानरान् प्रति वानरान् प्रस्थापयामास इति वाक्यभङ्गः ।।२६।।

**वादिराजीया**– शतयोजनप्रदेशे विद्यमानलङ्काद्वीपगमनेऽसमर्थानां कपीनां द्वीपेषु सप्तस्वपीत्युक्त-सप्तद्वीपगमनाय बहुलक्षयोजनाभ्यन्तरितसप्तद्वीपमर्यादीभूतसमुद्रोल्लङ्घने कथं सामर्थ्यमिति चेत्सत्यम् । सप्तस्वपि समुद्रेषु दशत्रिंशचत्वारिंशत्पञ्चाशदादिनवतिपर्यन्तयोजनेषु तत्र तत्र अवान्तरद्वीपाः गाधप्रदेशाश्च सन्ति तत्सर्वं हनुमदुपदेशेन वानरा जानन्ति । लङ्काद्वीपाभ्यन्तरे तु तदपि नास्तीति 'मार्गज्ञान् प्लवगान् सर्वानुर्वीशान्' इत्यादिपूर्वाचार्योक्तरीत्या परिहारसम्भवात् । अत एव आशुगतीन् आशु गमनसमय एव हनुमदुपदेशेन गतिः मार्गाणामवगतिः येषां त इति समासो ज्ञेयः ।।२६–२७।।

**मधुसूदनीया**– सप्तस्वपि द्वीपेषु जम्बूप्लक्षशाल्मलीकुशक्रौञ्चादिसप्तसु द्वीपेषु रमणकाद्यवान्तरद्वीपेषु च । तथाचोक्तम्–

'विनतस्य सुपर्णस्य तथा शतबलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।।
अत्यायामसमुद्राणां तारणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।।
हनूमतश्च सामर्थ्यप्राकट्याय महात्मनः । अङ्गदादिकपीन्द्राणां लवणाम्बुधितारणे ।।
नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।।
असामर्थ्यज्ञापनार्थं रामस्सेतुं बबन्ध ह ।।' इति स्कान्दे ।
ते समुद्रेषु गिरिषु वनेषु च सरित्सु च । वानरा वानरान्सर्वान् रामहेतोरचोदयन् ।।
मृत्युपाशोपमस्याज्ञां राजराजस्य वानराः । सुग्रीवस्य ययुः श्रुत्वा सुग्रीवभयदर्शिनः ।।

---

१. हरीश्वरमुपागम्य हनूमान् वाक्यमब्रवीत् [९]। तस्य तद्वचनं श्रुत्वा काले साधु निरूपितम् । सुग्रीवः सत्वसम्पन्नश्चकार मतिमुत्तमाम् [२८]।। सन्दिदेशातिमतिमान् नीलं नित्यकृतोद्यमम् । दिक्षु सर्वासु सर्वेषां सैन्यानामुपसङ्गहे [२९]।। इति ४.२९.

ततस्ते जनसङ्काशं गिरेस्तस्मान्महाजवाः । तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः ।।
अस्तं गच्छति यत्रार्कः तस्मिन्गिरिवरेऽपि तु । तप्तहेममहातालः तस्मात्कोट्यो दशच्युताः ।।
कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् । ततः कोटिसहस्राणि वानराणामुपागमन् ।।
फलमूलेन जीवन्तो हिमवन्तमुपश्रिताः । तेषां कोटिसहस्राणां सहस्रं समवर्तत ।।
अङ्गारकसमानानां भीमानां भीमकर्मणाम् । विन्ध्याद्वानरकोटीनां सहस्राण्यपतन् द्रुतम् ।।
क्षीरोदवेलानिलयास्तमालवनवासिनः । वनेभ्यो गह्वरेभ्यश्च सरोभ्यश्च महौजसः ।
आगच्छद्वानरीसेना पिबन्तीव दिवाकरम् ।।' इत्यादि रामायणे । [४.३७.१८–२६]
पयोधिवेलानिलयाः तमालवनगन्धिनः । वानरा नारिकेलाशाः ह्यसङ्ख्या ह्यपतन् भुवम् । तैः चोदिताः ततोऽस्ताद्रिः कोट्यो हाटकसन्निभाः । इति संग्रहरामायणे च । [४.६.५१]

एतेन 'सप्तसु द्वीपेषु जम्बूद्वीपेषु विद्यमानेषु रमणकसिंहळादिषु विद्यमानान् वानरान्प्रति' इति वरदराजीयं व्याख्यानं चिन्त्यमिति ध्येयम् । रमणकादीनामपि द्विशतत्वादियोजनतः समुद्रमध्यस्थत्वेन ततोऽपि तेषामागमनानुपपत्तेः । अपिशब्दवैय्यर्थ्यापाताच्च ।।२६–५०।।

**वरदराजीया–** प्रभुः सः हनूमान् हरिराजसन्निधौ सुग्रीवसमीपे एवमुक्तरीत्या उक्त्वा सप्तद्वीपेषु जम्बुद्वीपेषु विद्यमानेषु रमणकसिंहाचलादिषु विद्यमानान् वानरान् प्रति । यद्यपि उपद्वीपानामष्टत्वं भागवतादौ प्रसिद्धम् । तथापि लङ्काद्वीपस्य राक्षसैराक्रान्तत्वेन तत्र वानरप्रचाराभावात् तदतिरिक्तानां सप्तत्वात्तदभिप्रायेण द्वीपेषु सप्तस्वित्युक्तम् । सर्वेषां वानराणां सम्मेलनाय आशु गतिः गमनं येषां ते तथा तान् वानरान् समस्तशः सर्वस्थानेषु प्रस्थापयामास प्रेषयामासेत्यर्थः । अत्र टिप्पणीकाराः 'द्वीपेषु सप्तस्वित्येतत् जम्बूप्लक्षादिषु' इति व्याख्याताः । 'ननु शतयोजनायामलवणसमुद्रैकदेशप्लवने तारादयो न शेकुः । तत्कुतः किष्किन्धास्थितानां ताराद्यपेक्षया असमर्थानां कपीनां सप्तसमुद्रतरणे द्वीपगमने मध्यस्थाद्रिप्लवनेन तत्स्थकप्याह्वानशक्तिः कथं वा तत्रत्यानां बह्वायामसमुद्रतरणे शक्तिः । मैवम् । भाविकार्यानुसारेण तादृशशक्तेरीश्वरेण दत्तत्वात् लवणसमुद्रतरणे तु मारुतिबलप्रकटनाय तारादीनां तादृशशक्तेरदत्तत्वात्' इति परिहृतवन्तः ।।२६।।

**जनार्दनीया–** स हरिराजसन्निधौ समीपे । एवं पूर्वोक्तप्रकारेण उक्त्वा, सप्तसु द्वीपेषु जम्बुप्लक्षादिद्वीपेष्वपि स्थितान् वानरान् प्रति संमेलनाय । वानराणामिति शेषः । आशु गतीन् शीघ्रगतिमतः वानरान् सुग्रीवसमीपस्थवानरान् प्रस्थापयामास प्रेषयामासेत्यर्थः । ननु कपीश्वरे सुग्रीवे सति हनुमतः प्रेषणे क्व शक्तिरित्यत आह– **समस्तश इति** ।। समस्तशः सर्वेषां प्रभुः ईश्वरः । ननु ताराद्यपेक्षया असमर्थानां विनतादिकपीनां लवणादिसप्तसमुद्रतरणे शक्तिरस्तीत्युक्तम्, शतयोजनायामलवणसमुद्रैकदेशप्लवने ताराद्याः न समर्था इति च वक्ष्यते । इदमुभयं विरुद्धमिति चेन्न ।

भाविकार्यानुसारेण विनतादीनां तादृशी शक्तिः रामेण दत्ता । तारादीनां च हनुमद्बलप्रकाशनार्थं शक्तिर्न दत्तेत्यवगन्तव्यम् । अयमेवार्थ उक्तः स्कान्दे । तथाहि– 'विनतस्य सुपर्णस्य तथा शतबलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।। अत्यायामसमुद्राणां तरणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।। हनूमतश्च सामर्थ्यं प्राकट्याय महात्मनः । अङ्गदादिकपीन्द्राणां लवणाम्बुधितारणे ।। नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।। असामर्थ्यज्ञापनार्थं रामस्सेतुं बबन्ध ह ।।' इति ।।२६।।

**अनन्तभट्टीया–** द्वीपेषु जम्बुप्लक्षादिषु प्रस्थापयामासेति सम्बन्धः । संमेलनाय । कपीनामिति शेषः । ननु शतयोजनायामलवणसमुद्रैकदेशप्लवने तारादयो न शेकुः । तत्कुतः किष्किन्धास्थितानां तारापेक्षया ...* कपीनां सप्तद्वीपगमने मध्यसमुद्रतरणेन तत्स्थकप्याह्वाने शक्तिः । कथं वा तत्रस्थानां बह्वायामतरणे शक्तिः । मैवम् । भाविकार्यानुसारेण तादृशशक्तेः ईश्वरेण दत्तत्वात् । लवणसमुद्रतरणे तु तारादीनां शक्तेः अदत्तत्वात् । वादिराजीये तु सप्तस्वपि समुद्रेषु दशत्रिंशचत्वारिंशत्पञ्चाशत्... नवतियोजनेषु तत्र तत्र अवान्तरद्वीपाः गाधप्रदेशाश्च सन्ति । तत्सर्वं हनुमदुपदेशेन वानरा जानन्ति । लङ्काद्वीपाभ्यन्तरे तु तदपि नास्तीति मार्गज्ञाः प्लवगान् सर्वान् इत्यादि पूर्वाचार्योक्तरीत्या परिहारसम्भवात् । अतः आशुगतीन् आशु गमनसमय एव हनुमदुपदेशेन गतिः मार्गाणामवगतिः येषां त इति समासो ज्ञेय इत्युक्तम् ।।२६–२८।।

**ताम्रपर्णीया–** द्वीपेषु जम्बुद्वीपादिमहाद्वीपेषु । 'अतीत्य सिन्धून् द्वीपांश्च गत्वा सीता विमृग्यताम् । पयोब्धिवेलानिलयास्तमालवनवासिनः । वानरा नारिकेलासा' इति संग्रहरामायणे 'क्षीराब्धिवेलानिलयाः तमालवनवासिन' इति वाल्मीकिरामायणे च उक्तेः । ननु लङ्कां गन्तुं शतयोजनदूरसमुद्रोल्लङ्घनासमर्थानां सप्तद्वीपगमनाय बहुलक्षयोजनाभ्यन्तरितसप्तद्वीपमर्यादाभूतसमुद्रोल्लङ्घने कथं सामर्थ्यमिति चेत्सत्यं सप्तस्वपि समुद्रेषु दशत्रिंशचत्वारिंशत् पञ्चदशादिनवतिपर्यन्तयोजनेषु तत्रावान्तरद्वीपाः सन्ति गाधप्रदेशाश्च सन्ति तत्सर्वान् वानराः जानन्ति । लङ्काभ्यन्तरे तु तदपि नास्तीति तत्राशक्तिरित्युपपत्तेः । तदुक्तं संग्रहरामायणे 'इति वायुसुतेनोक्ताः वायुवेगास्तु वानराः । मार्गज्ञान् प्लवगान् सर्वान् देवांशान् [उर्वीगान्] अनयद्द्रुतम् ।।' [कि.का.६.४६] इति । यद्वा श्रीमुष्णमाहात्म्ये 'रामकार्ये दक्षिणजलनिधिं तर्तुमिच्छतां वायुसूनुं विनान्येषां शक्तिह्रासो भवेदिति शुक्रशापोक्तेः लङ्कां प्रति गमने सामर्थ्याभावः इति' । अपरे तु द्वीपेषु सप्तसु इत्यस्य रमणकायुपद्वीपेषु इत्यर्थः । लङ्कासहितानामष्टत्वेऽपि तत्र गमनानुपपत्तेः सप्तस्वित्युक्तमित्याहुः ।।२९।।[१]

१. ।। द्वीपेष्विति ।। द्वीपेषु जम्बूप्लक्षादिमहाद्वीपेषु । 'अतीत्य सिन्धून् द्वीपांश्च गत्वा सीता विमृग्यताम् । पयोब्धिवेलानिलयास्तमालवनवासिनः । वानरा नारिकेलासा' इति संग्रहरामायणे । क्षीराब्धिवेलानिलयास्तमाल-वनवासिनः ।।' इत्यार्षे श्रीरामायणे । नन्वेवं सति 'दशैव चारभ्य' इत्युक्तग्रन्थविरोधः । समुद्रेष्ववान्तरद्वीपा ...

**चट्टी—** सः हनुमान् हरिराजसन्निधौ सुग्रीवसन्निधौ एवं पूर्वोक्तप्रकारेण उक्त्वा सप्तस्वपि द्वीपेषु जम्बूप्लक्षशाल्मलिकुशक्रौञ्चादिसप्तद्वीपेषु रमणकाद्यवान्तरद्वीपेषु च स्थितान् वानरान् प्रति सम्मेलनाय वानराणामिति शेषः । आशुगतीन् शीघ्रगतीन् वानरान् सुग्रीवसमीपस्थवानरान् प्रस्थापयामास प्रेषयामासेत्यर्थः । ननु सुग्रीवे सति हनुमतः प्रेषणे क्व शक्तिरित्यत आह— **समस्तश इति** ।। समस्तशः सर्वेषां प्रभुः ईश्वरः । ननु ताराद्यपेक्षया असमर्थानां विनतादिकपीनां लवणादिसप्तसमुद्रतरणे शक्तिरस्तीत्युक्तम् । शतयोजनायामलवणसमुद्रैकदेशप्लवने ताराद्या न समर्था इति च वक्ष्यते इदमुभयं विरुद्धमिति चेन्न । भाविकार्यानुसारेण विनतादीनां कपीनां तादृशी शक्तिः श्रीरामेण दत्ता । तारादीनां च हनुमद्बलप्रकाशनार्थं शक्तिः न दत्तेत्यवगन्तव्यम् । तथा चोक्तम्— 'विनतस्य...बबन्ध ह ।।' इति स्कान्दे ।।२६।।

**भारतश्री—** सप्तस्वपि द्वीपेष्वित्यत्र सर्वेष्वपि समुद्रेषु अनेके अवान्तराः द्वीपाः आसन्नाः वर्तन्ते । तद्वारा सप्तद्वीपगमनं युक्तमिति ज्ञातव्यम् ।।२६।।

**भावचन्द्रिका—** द्वीपेषु जम्बूप्लक्षादिषु । लङ्कां विना उपद्वीपेषु सप्तसु इत्युक्तम् । 'जम्बूद्वीपमतिक्रम्य शिशिरं गिरिपुङ्गवम् । द्वीपानन्यानपि प्राप्य देवदेवी विमृग्यताम् ।। अतीत्य सिन्धून् द्वीपांश्च गत्वा सीता विमृग्यताम् । द्वीपानन्यानपि प्राप्य रामरामा विमृग्यताम् ।।' [कि.का.७.२९,३३,४३] इति चतुर्दिक्षु वानरप्रेषणसमये सुग्रीवोक्तमिति संग्रहरामायणवचनविरोधात् । चतुर्दिक्षु प्रत्येकं द्वीपानामभावाच्च । 'क्षीरोदवेलानिलया तमालवनगन्धिनः । नारिकेलाशनाश्चैव तेषां सङ्ख्या न विद्यते ।।' वाल्मीकि-विरोधाच्च । शतयोजनविस्तीर्णलङ्काप्रवेशे असमर्थानां सप्तद्वीपगमनाय बहुलक्षयोजनान्तरितसप्तसमुद्रोल्लङ्घने कथं सामर्थ्यमिति चेन्न । सप्तस्वपि समुद्रेषु दशविंशत्रिंशच्चत्वारिंशन्नवतिपर्यन्तेषु योजनेषु तत्र तत्र अवान्तरद्वीपाः उन्नतप्रदेशास्सन्ति तत्सर्वं हनुमदुपदेशेन वानराः जानन्ति । लङ्काद्वीपाभ्यन्तरे तु तदपि नास्ति विघ्नाश्च बहवस्सम्भवन्तीति संग्रहरामायणोक्तरीत्या परिहारसम्भवात् । तदुक्तं संग्रहरामायणे— [कि.का.६.४६]'इति वायुसुतेनोक्ताः वायुवेगास्तु वानराः । मार्गज्ञाः प्लवगास्सर्वान् देवांशान्... ।।' इति [इदानीन्तनपाठस्तु 'मार्गज्ञान् प्लवगान् सर्वानुर्वीगानानयद्द्रुतम् ।']

....बहवः सन्ति । देवांशत्वात् कपयः तान् जानन्ति । द्वीपाद् द्वीपान्तरतरणक्रमेण सप्तद्वीपेषु गच्छन्तीत्यङ्गीकारात् । लङ्काभ्यन्तरे तु द्वीपाभावात् । भावेऽपि गन्तुमशक्यत्वात् तद्गमने शक्त्यभाववर्णनमित्यदोषः । तदुक्तं संग्रहरामायणे— 'इति वायुसुतेनोक्ता वायुवेगास्तु वानराः । मार्गज्ञान् प्लवगान् सर्वान् देवांशान् अनयद् द्रुतम् ।।' इति । अन्ये तु मन्यन्ते । श्रीमुष्णमाहात्म्ये 'रामकार्ये दक्षिणाशां जलधिं तर्तुमिच्छताम् । वायुसूनुं विनाऽन्येषां शक्तिह्रासो भवेत्' इति कपीनां शुक्रशापोक्तेः लङ्कां प्रति गमने सामर्थ्याभावः इति । अपरे तु 'रमणकादिसप्तद्वीपेष्वित्यर्थः । लङ्कासहितानां अष्टत्वेऽपि तत्र गमनानुपपत्तेः सप्तस्वित्युक्तमित्याहुः ।।२६–३५।।

अत एव हनुमदुपदेशसमय एव तदुपदेशेन आशुगतिः मार्गावगतिः येषां ते आशुगतयः तान् । महेन्द्रलङ्काद्वीपमध्ये मार्गाभावेऽपि विघ्नसत्वेन मार्गान्तरसम्भवे असामर्थ्यं कुत इति चेत् । मार्गान्तरसम्भवेऽपि रामाज्ञया शुक्रशापाच्च तदज्ञानात् । 'विनतस्य सुपर्णस्य तथा शतबलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।। अत्यायामसमुद्राणां तारणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।। हनूमतश्च सामर्थ्यप्राकट्याय महात्मनः । अङ्गदादिकपीन्द्राणां लवणाम्बुधि-तारणे ।। नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।। असामर्थ्यज्ञापनार्थं रामस्सेतुं ववन्ध ह ।।' इति स्कान्दे । ऊर्जिता मार्गज्ञानादिनिमित्ता । तादृशीत्यस्याप्ययमेवार्थः । शुक्रे समाधिस्थे अभाषमाणे सति देवाः हेलनं चक्रुः । तदा शुक्रः शशाप । तदुक्तं वामनपुराणे श्रीमुष्णमाहात्म्ये चतुर्थेऽध्याये– 'तदुक्तवचनं श्रुत्वा देवा इन्द्रपुरोगमाः । चक्रुस्ते भार्गवे तीर्थे स्नानदानादिसत्क्रियाः ।। तपन्तं शुक्रमासाद्य प्रणेमुर्भक्तिसंयुताः । समाधिगमभाषन्तं चक्रुर्हेलनमञ्जसा ।। विघ्ने समाधियोगस्य शशाप परुषान्वितः । रामकार्ये दक्षिणाशां जलधिं तर्तुमिच्छताम् ।। वायुसूनुं विनान्येषां शक्तिह्रासो भवेदिति ।।' ह्रासो मार्गाज्ञाननिमित्तः ।।२६।।

**अतिविशद–** सप्तद्वीपेषु जम्ब्वादिसप्तद्वीपेषु रमणकाद्यवान्तरद्वीपेषु च । तथाचोक्तम्– 'विनतस्य सुपर्णस्य तथा शतबलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।। अत्यायामसमुद्राणां तारणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।। हनूमतश्च सामर्थ्यप्राकट्याय महात्मनः । अङ्गदादिकपीन्द्राणां लवणाम्बुधितारणे ।। नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।। असामर्थ्यज्ञापनार्थं रामस्सेतुं बवन्ध ह ।।' इति स्कान्दे । ते समुद्रेषु गिरिषु वनेषु च सरित्सु च । वानरा वानरान्सर्वान् रामहेतोरचोदयन् ।। मृत्युपाशोपमस्याज्ञां राजराजस्य वानराः । सुग्रीवस्य ययुः श्रुत्वा सुग्रीवभयदर्शिनः ।। ततस्ते जनसङ्काशं गिरेस्तस्मान्महाजवाः । तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः ।। अस्तं गच्छति यत्रार्कः तस्मिन्गिरिवरेऽपि तु । तप्तहेममहातालः तस्मात्कोट्यो दशच्युताः ।। कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् । ततः कोटिसहस्राणि वानराणामुपागमन् ।। फलमूलेन जीवन्तो हिमवन्तमुपश्रिताः । तेषां कोटिसहस्राणां सहस्रं समवर्तत ।। अङ्गारकसमानानां भीमानां भीमकर्मणाम् । विन्ध्याद्वानरकोटीनां सहस्राण्यपतन् द्रुतम् ।। क्षीरोदवेलानिलयास्तमालवनवासिनः । वनेभ्यो गह्वरेभ्यश्च सरोभ्यश्च महौजसः । आगच्छद्वानरीसेना पिबन्तीव दिवाकरम् ।।' इत्यादि रामायणे । [४.३७.१८–२६] पयोधिवेलानिलयाः तमालवनगन्धिनः । वानरा नारिकेलाशाः ह्यसङ्ख्या ह्यपतन् भुवम् । तैः चोदिताः ततोऽस्ताद्रिः कोट्यो हाटकसन्निभाः । इति संग्रहरामायणे । अत्र 'सप्तद्वीपेषु जम्बुद्वीपे विद्यमानेषु रमणसिंहळादिषु विद्यमानान् वानरान् प्रति' इति वदन्ति । तन्न रमणकादीनामपि

**चट्टी–** सः हनुमान् हरिराजसन्निधौ सुग्रीवसन्निधौ एवं पूर्वोक्तप्रकारेण उक्त्वा सप्तस्वपि द्वीपेषु जम्बूप्लक्षशाल्मलिकुशक्रौञ्चादिसप्तद्वीपेषु रमणकाद्यवान्तरद्वीपेषु च स्थितान् वानरान् प्रति सम्मेलनाय वानराणामिति शेषः । आशुगतीन् शीघ्रगतीन् वानरान् सुग्रीवसमीपस्थवानरान् प्रस्थापयामास प्रेषयामासेत्यर्थः । ननु सुग्रीवे सति हनुमतः प्रेषणे क शक्तिरित्यत आह– **समस्तश इति** ।। समस्तशः सर्वेषां प्रभुः ईश्वरः । ननु ताराद्यपेक्षया असमर्थानां विनतादिकपीनां लवणादिसप्तसमुद्रतरणे शक्तिरस्तीत्युक्तम् । शतयोजनायामलवणसमुद्रैकदेशप्लवने ताराद्या न समर्था इति च वक्ष्यते इदमुभयं विरुद्धमिति चेन्न । भाविकार्यानुसारेण विनतादीनां कपीनां तादृशी शक्तिः श्रीरामेण दत्ता । तारादीनां च हनुमद्बलप्रकाशनार्थं शक्तिः न दत्तेत्यवगन्तव्यम् । तथा चोक्तम्– 'विनतस्य...बबन्ध ह ।।' इति स्कान्दे ।।२६।।

**भारतश्री–** सप्तस्वपि द्वीपेष्वित्यत्र सर्वेष्वपि समुद्रेषु अनेके अवान्तराः द्वीपाः आसन्नाः वर्तन्ते । तद्द्वारा सप्तद्वीपगमनं युक्तमिति ज्ञातव्यम् ।।२६।।

**भावचन्द्रिका–** द्वीपेषु जम्बूप्लक्षादिषु । लङ्कां विना उपद्वीपेषु सप्तसु इत्युक्तम् । 'जम्बूद्वीपमतिक्रम्य शिशिरं गिरिपुङ्गवम् । द्वीपानन्यानपि प्राप्य देवदेवी विमृग्यताम् ।। अतीत्य सिन्धून् द्वीपांश्च गत्वा सीता विमृग्यताम् । द्वीपानन्यानपि प्राप्य रामरामा विमृग्यताम् ।।' [कि.का.७.२९,३३,४३] इति चतुर्दिक्षु वानरप्रेषणसमये सुग्रीवोक्तमिति संग्रहरामायणवचनविरोधात् । चतुर्दिक्षु प्रत्येकं द्वीपानामभावाच्च । 'क्षीरोदवेलानिलया तमालवनगन्धिनः । नारिकेलाशनाश्चैव तेषां सङ्ख्या न विद्यते ।।' वाल्मीकि-विरोधाच्च । शतयोजनविस्तीर्णलङ्काप्रवेशे असमर्थानां सप्तद्वीपगमनाय बहुलक्षयोजनान्तरितसप्तसमुद्रोल्लङ्घने कथं सामर्थ्यमिति चेन्न । सप्तस्वपि समुद्रेषु दशविंशत्रिंशच्चत्वारिंशन्नवतिपर्यन्तेषु योजनेषु तत्र तत्र अवान्तरद्वीपाः उन्नतप्रदेशास्सन्ति तत्सर्वं हनुमदुपदेशेन वानराः जानन्ति । लङ्काद्वीपाभ्यन्तरे तु तदपि नास्ति विघ्नाश्च बहवस्सम्भवन्तीति संग्रहरामायणोक्तरीत्या परिहारसम्भवात् । तदुक्तं संग्रहरामायणे– [कि.का.६.४६]'इति वायुसुतेनोक्ताः वायुवेगास्तु वानराः । मार्गज्ञाः प्लवगास्सर्वान् देवांशान्... ।।' इति [इदानीन्तनपाठस्तु 'मार्गज्ञान् प्लवगान् सर्वानुर्वीगानानयद्द्रुतम् ।']

....बहवः सन्ति । देवांशत्वात् कपयः तान् जानन्ति । द्वीपाद् द्वीपान्तरतरणक्रमेण सप्तद्वीपेषु गच्छन्तीत्यङ्गीकारात् । लङ्काभ्यन्तरे तु द्वीपाभावात् । भावेऽपि गन्तुमशक्यत्वात् तद्गमने शक्त्यभाववर्णनमित्यदोषः । तदुक्तं संग्रहरामायणे– 'इति वायुसुतेनोक्ता वायुवेगास्तु वानराः । मार्गज्ञान् प्लवगान् सर्वान् देवांशान् अनयद् द्रुतम् ।।' इति । अन्ये तु मन्यन्ते । श्रीमुष्णमाहात्म्ये 'रामकार्ये दक्षिणाशां जलधिं तर्तुमिच्छताम् । वायुसूनुं विनाऽन्येषां शक्तिह्रासो भवेत्' इति कपीनां शुक्रशापोक्तेः लङ्कां प्रति गमने सामर्थ्याभावः इति । अपरे तु 'रमणकादिसप्तद्वीपेष्वित्यर्थः । लङ्कासहितानां अष्टत्वेऽपि तत्र गमनानुपपत्तेः सप्तस्वित्युक्तमित्याहुः ।।२६–३५।।

अत एव हनुमदुपदेशसमय एव तदुपदेशेन आशुगतिः मार्गावगतिः येषां ते आशुगतयः तान् । महेन्द्रलङ्काद्वीपमध्ये मार्गाभावेऽपि विघ्नसत्वेन मार्गान्तरसम्भवे असामर्थ्यं कुत इति चेत् । मार्गान्तरसम्भवेऽपि रामाज्ञया शुक्रशापाच्च तदज्ञानात् । 'विनतस्य सुपर्णस्य तथा शतबलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।। अत्यायामसमुद्राणां तारणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।। हनूमतश्च सामर्थ्यप्राकट्याय महात्मनः । अङ्गदादिकपीन्द्राणां लवणाम्बुधि-तारणे ।। नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।। असामर्थ्यज्ञापनार्थं रामस्सेतुं बबन्ध ह ।।' इति स्कान्दे । ऊर्जिता मार्गज्ञानादिनिमित्ता । तादृशीत्यस्याप्ययमेवार्थः । शुक्रे समाधिस्थे अभाषमाणे सति देवाः हेलनं चक्रुः । तदा शुक्रः शशाप । तदुक्तं वामनपुराणे श्रीमुष्णमाहात्म्ये चतुर्थेऽध्याये– 'तदुक्तवचनं श्रुत्वा देवा इन्द्रपुरोगमाः । चक्रुस्ते भार्गवे तीर्थे स्नानदानादिसत्क्रियाः ।। तपन्तं शुक्रमासाद्य प्रणेमुर्भक्तिसंयुताः । समाधिगमभाषन्तं चक्रुर्हेलनमञ्जसा ।। विघ्ने समाधियोगस्य शशाप परुषान्वितः । रामकार्ये दक्षिणाशां जलधिं तर्तुमिच्छताम् ।। वायुसूनुं विनान्येषां शक्तिह्रासो भवेदिति ।।' ह्रासो मार्गाज्ञाननिमित्तः ।।२६।।

**अतिविशद–** सप्तद्वीपेषु जम्ब्वादिसप्तद्वीपेषु रमणकाद्यवान्तरद्वीपेषु च । तथाचोक्तम्– 'विनतस्य सुपर्णस्य तथा शतबलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।। अत्यायामसमुद्राणां तारणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।। हनूमतश्च सामर्थ्यप्राकट्याय महात्मनः । अङ्गदादिकपीन्द्राणां लवणाम्बुधितारणे ।। नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।। असामर्थ्यज्ञापनार्थं रामस्सेतुं बबन्ध ह ।।' इति स्कान्दे । ते समुद्रेषु गिरिषु वनेषु च सरित्सु च । वानरा वानरान्सर्वान् रामहेतोरचोदयन् ।। मृत्युपाशोपमस्याज्ञां राजराजस्य वानराः । सुग्रीवस्य ययुः श्रुत्वा सुग्रीवभयदर्शिनः ।। ततस्ते जनसङ्काशं गिरेस्तस्मान्महाजवाः । तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः ।। अस्तं गच्छति यत्रार्कः तस्मिन्गिरिवरेऽपि तु । तप्तहेममहातालः तस्मात्कोट्यो दशच्युताः ।। कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् । ततः कोटिसहस्राणि वानराणामुपागमन् ।। फलमूलेन जीवन्तो हिमवन्तमुपश्रिताः । तेषां कोटिसहस्राणां सहस्रं समवर्तत ।। अङ्गारकसमानानां भीमानां भीमकर्मणाम् । विन्ध्याद्वानरकोटीनां सहस्राण्यपतन् द्रुतम् ।। क्षीरोदवेलानिलयास्तमालवनवासिनः । वनेभ्यो गह्वरेभ्यश्च सरोभ्यश्च महौजसः । आगच्छद्वानरीसेना पिबन्तीव दिवाकरम् ।।' इत्यादि रामायणे । [४.३७.१८–२६] पयोधिवेलानिलयाः तमालवनगन्धिनः । वानरा नारिकेलाशाः ह्यसङ्ख्या ह्यपतन् भुवम् । तैः चोदिताः ततोऽस्ताद्रिः कोट्यो हाटकसन्निभाः । इति संग्रहरामायणे । अत्र 'सप्तद्वीपेषु जम्बुद्वीपे विद्यमानेषु रमणसिंहळादिषु विद्यमानान् वानरान् प्रति' इति वदन्ति । तन्न रमणकादीनामपि

द्विशतादियोजनतः समुद्रमध्यस्थत्वेन ततोऽपि तेषामागमनानुपपत्तेः । अपिशब्दवैय्यर्थ्यापाताच्च । अत्र समाधानं वक्ष्यमाणं छायाग्रहादिप्रतिबन्धकमत्र ज्ञेयम् ।।२६–५०।।

**गूढकर्तृक–** द्वीपेषु सप्तस्वपि वानरान् प्रतीत्यत्र प्लक्षादिप्रधानद्वीपेष्वित्यर्थः । नतु उपद्वीपेषु । ननु वानराणां यदा लङ्कागमनं अशक्यं तदा सप्तद्वीपगमने कथं शक्तिः स्यात् इत्याशङ्का सप्तभिर्दिनैः तेषां समुद्रतरणेनैव परिहृता । 'तेऽपि प्रययुः शीघ्रं प्लवन्तः सप्तवारिधीन् । अहोभिः सप्तभिः' इति तेषां समुद्रतरणं प्रतीयते । पदा बाहुभ्यां समुद्रतरणं कृतवन्तः । [पाण्डवानां द्वापरान्त उत्पन्नत्वेन तदपेक्षया शक्तिह्रासयुक्तत्वात्] तदवतारयोः विविदमैन्दयोः तदवतारजाम्बवतश्च समुद्रतरणशक्तिर्नास्तीति च सङ्गतम् । किञ्च गमनमात्रे जाम्बवता न पृष्टाः । तन्मात्रे नास्माकं शक्तिरित्युक्तवन्तः । किं नाम प्लवन एव शक्तिः पृष्टा । तत्रैव शक्तिर्नास्तीति तैरुक्तमिति ज्ञायते । अन्यथा 'पुरात्वहं षण्णवतिप्लवोऽस्मि शतं प्लवेयम्' इत्यादेरनुपपत्तेः । स्कान्दवचनाच्च एवमेवार्थोऽवसीयते । तथाहि– 'विनतस्य सुपर्णस्य तथा शतवलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।। अत्यायामसमुद्राणां तारणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।। हनूमतश्च सामर्थ्यं प्राकट्याय महात्मनः । अङ्गदादिकपीन्द्राणां लवणाम्बुधितारणे ।। नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।। असामर्थ्यज्ञापनार्थं रामस्सेतुं बबन्ध ह ।।' प्रियव्रतस्तु मैन्दविविदापेक्षया त्वतिनीचः । तस्य कर्मदेवसमानत्वात् विविदादीनां तात्त्विकदेवत्वात् । एवं च तेषां समुद्रतरणे शक्तिर्नास्तीति कथं ज्ञातं लोकोत्तरप्रज्ञेन । किञ्च तत्पुत्राणां सप्तद्वीपाधिपतित्वं श्रूयते । तच्च समुद्रतरणं विनानुपपन्नमेव भवति । ते त्वतिनीचाः । अतः तदपेक्षया अत्युत्तमानां तेषां समुद्रतरणे शक्तिर्नास्तीति वदन् देवानां प्रिय एव ।

।। इति गूढकर्तृके षष्ठोऽध्यायः ।।

**हरीश्वराज्ञाप्रणिधानपूर्वकं[१] हनूमता ते प्रहिता हि वानराः ।**
**समस्तशैलद्रुमषण्डसंस्थितान्हरीन्समादाय तदाऽभिजग्मुः ।।२७।।**

**वेदाङ्गतीर्थीया–** द्रुमषण्डेषु वनेषु ।।२७–३४।।

---

१. एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना । हनूमन्तं स्थितं पार्श्वे वचनं चेदमब्रवीत् [१] ।। महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च । मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः [२]।। प्रेषता प्रथमं ये च मयाज्ञाता महाजवाः । त्वरणार्थं तु भूयस्त्वं सम्प्रेषय हरीश्वरान् [१०]।। तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः । दिक्षु सर्वासु विक्रान्तान् प्रेषयामास वानरान्[१६]।। इति वाल्मीकिरामायणे । [४.३७.]

**वरदराजीया–** हनूमता हरीश्वराज्ञाप्रणिधाणपूर्वकं सुग्रीवाज्ञास्वीकारपूर्वकं प्रहिताः प्रेषिताः वानराः समस्तेषु शैलेषु पर्वतेषु द्रुमखण्डेषु वृक्षसमूहेषु वनेष्विति यावत् । तत्र संस्थितान् हरीन् वानरान् समादाय तदा अविलम्बेन अभिजग्मुः ।।२७।।

**जनार्दनीया–** हनुमता प्रहितास्ते विनतादयो वानराः । हरीश्वरस्य आज्ञाया प्रणिधानं अङ्गीकारपूर्वकं यथा स्यात्तथा । शैलाः पर्वताः द्रुमाणां वृक्षाणां खण्डः समूहो येषु ते तथा । वनानीत्यर्थः । समस्ताश्च ते शैलाश्च द्रुमखण्डाश्च तथोक्ताः तेषु संस्थितान् हरीन् समादाय, तदा तत्र सुग्रीवराजधानीं प्रतीत्यर्थः । अभिजग्मुः ।।२७।।

**चट्टी–** हनुमता हरीश्वराज्ञाप्रणिधानपूर्वकं सुग्रीवाज्ञास्वीकारपूर्वकं यथा स्यात् तथा प्रहिताः प्रेषिताः वानराः समस्तेषु शैलेषु द्रुमषण्डेषु वृक्षसमूहेषु वनेष्विति यावत् । तत्र स्थितान् कपीन् समादाय तदा अविलम्बेन अभिजग्मुः । तथा चोक्तम्– ते... दिवाकरम् ।।' इत्यादि रामायणे । [कि.का.३७.१८–२६] 'पयोधि... सन्निभाः ।।' इति संग्रहरामायणे । [कि.का.६.५१] । तदेव तस्मिन्नेव काले प्रभुः समर्थो रामः भोगसक्तं विषयभोगेषु आसक्तं अत एव प्रमत्तं विस्मृतकार्यं कपीश्वरं सुग्रीवं आलक्ष्य ज्ञात्वा सौमित्रिं लक्ष्मणं जगाद । किमिति । हे सौमित्रे । इदं वक्ष्यमाणं मे वचः प्लवङ्गमानां कपीनां ईशाय वद । आशु याहि । सुग्रीवमिति शेषः ।।२८।।

**गूढवाक्यार्थ–** सप्तस्वपि द्वीपेषु जम्बू... महाद्वीपेषु । तदुक्तम्– अतीत्य... विमृग्यताम् ।। इति संग्रहे । 'क्षीराब्धिवेलानिलयास्तमालवनवासिनः' इति रामायणे । ननु लङ्कां गन्तुं शतयोजनदूर-समुद्राल्लङ्घनाशक्तानां सप्तद्वीपगमनाय बहुलक्षयोजनाभ्यन्तरितसप्तद्वीपमर्यादाभूतसमुद्रोल्लङ्घने कथं सामर्थ्यमिति चेत् सत्यम् । सप्तस्वपि समुद्रेषु दशत्रिंशाचत्वारिंशत्सश्वारादि... नेषु तत्र तत्र अवान्तरद्वीपाः गाधप्रदेशाश्च सन्ति तत्सर्वं हनुमदुपदेशेन वानरा जानन्ति लङ्काद्वीपाभ्यन्तरे तु तदपि नास्तीति तत्राशक्तिरुपपद्यते । तदुक्तम् संग्रहे– इति... द्रुतम् । इतिश्रीरामायणेति ।।२७।।

**तदैव रामोऽपि हि भोगसक्तं प्रमत्तमालक्ष्य कपीश्वरं प्रभुः ।**
**जगाद सौमित्रिमिदं वचो मे प्लवङ्गमेशाय वदाशु याहि ।।२८।।**

**वादिराजीया–** तदैव रामोपि हीत्यत्र हिशब्देन सर्वज्ञत्वप्रसिद्धिं सूचयति । अत एव आलक्ष्य इत्युक्तम् । 'लक्ष दर्शनाङ्कनयोः' इति धातोः सम्यग्दृष्ट्वैवेत्यर्थः ।।२८–२९।।

**वरदराजीया–** तदैव तस्मिन्नेव काले भोगेषु विषयभोगेषु सक्तं आसक्तं अत एव प्रमत्तं विस्मृतस्वकार्यं कपीश्वरं सुग्रीवमालक्ष्य ज्ञात्वा प्रभुः समर्थोऽपि रामः सौमित्रिं जगाद । किमिति । इदं वक्ष्यमाणमेव प्लवङ्गमेशाय सुग्रीवाय वद तदर्थं उपयाहि ।।२८।।

**जनार्दनीया–** तदैव द्वीपस्थवानरागमनकाले । भोगसक्तं विषयेष्वासक्तं हरीश्वरं आलक्ष्य । सौमित्रिं लक्ष्मणं जगाद । किमिति ? मे इदं वक्ष्यमाणं वचः प्लवङ्गमानां कपीनां ईशाय वद । आशु याहि । सुग्रीवं प्रतीति शेषः ।।२८।।

**यदि प्रमत्तोऽसि मदीयकार्ये नयाम्यहं [1]त्विन्द्रसुतस्य मार्गम् ।**
**प्रायः स्वकार्ये प्रतिपादिते हि मदोद्धता न प्रतिकर्तुमीशते ।।२९।।**

**वरदराजीया–** किं तद्वच इत्याह– **यदीति** ।। मदीयकार्ये सीतान्वेषणरूपे प्रमत्तोऽसि विस्मृतिमानसि । तर्हि त्वा त्वां इन्द्रसुतस्य वालिनो मार्गं नयामि प्रापयामि । मदोद्धतास्त्वादृशाः स्वकार्ये प्रतिपादिते सम्पादिते सति प्रायः प्रायेण प्रतिकर्तुं नेशते नेच्छन्ति ।।२९।।

**जनार्दनीया–** इदमुक्तं विशदयति– **यदीति** ।। इन्द्रसुतस्य वालिनो मार्गं त्वां नयामि प्रापयामि । हनिष्य इति भावः । प्रतिपादिते सम्पादिते सति । मदेन उद्धताः प्रमत्ताः प्रतिकर्तुं प्रत्युपकारं कर्तुं नेशते । समर्थाः न भवन्ति । 'ईश ऐश्वर्ये' इत्यस्य धातोः लडात्मनेपदि प्रथमपुरुषबहुवचनम् । नेच्छन्तीत्यर्थः ।।

**अनन्तभट्टीया–** ईशते इच्छन्ति ।।२९।।

**चट्टी–** किं तद्वच इत्यत आह– **यदिति** ।। यदि मदीयकार्ये सतीन्वेषणरूपे प्रमत्तोऽसि तर्हि त्वां इन्द्रसुतस्य वालिनः मार्गं नयामि प्रापयामि । मदेन उद्धताः प्रमत्ताः स्वकार्ये प्रतिपादिते सम्पादिते सति प्रायः प्रतिकर्तुं प्रत्युपकारं कर्तुं नेशते समर्था न भवन्ति । 'इश ऐश्वर्ये' इत्यस्य धातोः लडात्मनेपदि प्रथमपुरुषवहुवचनम् । नेच्छतीत्यर्थः ।।२९।।

**भारतश्री–** ईशः समर्थः । ईट्त्वं ईशत्वं यान्तीति ईड्यः ।।२९।।

**इतीड्यरामेण समीरिते तदा ययौ सबाणः सधनुः स लक्ष्मणः ।**
**दृष्ट्वैव तं तेन सहैव तापनिर्भयाद्ययौ रामपदान्तिकं त्वरन् ।।३०।।**

**वादिराजीया–** 'तपनः सविता रविः' इत्यभिधानात् तपनः सूर्यः तस्यापत्यं तापनिः सुग्रीवः ।।३०–३१।।

---

१. अत्र तुशब्दः नयने विशेषद्योतकः । न केवलं वाली येन मार्गेण गतः तेनैव इत्येव न, किन्तु वाली येन बाणेन मृतः तेनैव बाणेन मृत्युसदनं नयिष्ये इति विशेषः तुशब्दार्थः । तथाहि नृसिंहपुराणे-[५०.४०] वालिहन्ता शरो दुष्ट करे मेऽद्यापि तिष्ठति । स्मृत्वैतदाचर कपे रामवाक्यं श्रुतं तव ।। इति । सङ्ग्रहेपि [४.६.१०] सूचितोऽयमर्थः । वालिघ्नमार्गणेनैव वालिमार्गं व्रजेदिति । इति ।

**वरदराजीया–** इति मे वचो वदेति ईड्येन पूज्येन रामेण समीरिते सति स लक्ष्मणः सधनुः सबाणः सन् ययौ । तापनिः सुग्रीवः तं लक्ष्मणं दृष्ट्वैव तेन लक्ष्मणेन सहैव भयाद्रामपदान्तिकं श्रीरामचरणसमीपं त्वरन् वेगं कुर्वन् ययौ ।।३०।।

**जनार्दनीया–** ईड्येन पूज्येन रामेण । इति पूर्वोक्तप्रकारेण समीरिते सति । तदा तत्र सुग्रीवपुरीं प्रति । तपनः सूर्यः । तत्पुत्रस्तापनिः सुग्रीवः । तं लक्ष्मणं दृष्ट्वा, तेन लक्ष्मणेन सहैव । त्वरन् जवेन । अन्तिकं समीपम् ।।३०।।

**अनन्तभट्टीया–** तं लक्ष्मणम् ।।३०।।

**ताम्रपर्णीया–** ।। **ईड्यरामेणेति** ।। ईड्यश्चाऽसौ रामश्च ईड्यरामः इति विग्रहः । यद्वा इति रामेण समीरिते तदा तमीड्य स्तुत्वा ययावित्यर्थः । तदुक्तं संग्रहरामायणे 'त्वद् भ्रूभङ्गेण नियतं ननु राम जगत्त्रयम्' [४.६.१३] इत्यादि ।।३०–३१।।

**चट्टी–** ईड्येन रामेण इति पूर्वोक्तप्रकारेण समीरिते सति तदा सः लक्ष्मणः सधनुः सबाणस्सन् ययौ । सुग्रीवं प्रतीति शेषः । तपनः सूर्यः तत्पुत्रः तापनिः सुग्रीवः तं लक्ष्मणं दृष्ट्वैव तेन लक्ष्मणेन सहैव भयाद् रामपदान्तिकं श्रीरामचरणसमीपं त्वरन् वेगं कुर्वन् ययौ ।।३०।।

**भारतश्री–** तापनिः सुग्रीवः ।।३०–४५।।

**भावचन्द्रिका–** त्वमेव समर्थः किंवेतरैः । तथापि त्वदाज्ञां करिष्यतीति ईड्य स्तुत्वा ययौ । ...* सत्वादसमासेऽपि ल्यप् । ईड्येत्येकं वा पदम् । त्वमिति प्रीतिकरणे समर्थः । अतस्त्वं याहीति ईड्य समीरिते सतीति वा ।।३०।।

**गूढवाक्यार्थ–** इति रामेण समीरिते तदा तमीड्य स्तुत्वा ययावित्यर्थः । तदुक्तं संग्रहे– त्वद् भ्रूभङ्गेन नियतं ननु नाथ जगत्त्रयम्' इत्यादि । यद्वा ईड्यश्चासौ रामश्च ईड्यरामः । तदाज्ञया उपविष्टः तदाज्ञयैवादिशदित्युभयत्र सम्बन्धः ।।३०।।

**हनूमतः [१]साधुवचोभिराशु प्रसन्नचेतस्यधिपे कपीनाम् ।**
**समागते सर्वहरिप्रवीरैः सहैव तं वीक्ष्य ननन्द राघवः ।।३१।।**

---

१. सुग्रीवेणैवमुक्ते तु हनूमान् हरिपुङ्गवः । उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् [९] ।। कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् [१७]।। अभिक्रुद्धः समर्थो हि चापमुद्यम्य राघवः । सदेवासुरगन्धर्वं वशे स्थापयितुं जगत् [१९]।। न स क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् । पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः [२०]।। इति वाल्मीकिरामायणे । ४.३२.

**वरदराजीया–** हनूमतः साधुवचोभिः मृदुवचनैः कपीनां अधिपे सुग्रीवे प्रसन्नचेतसि त्वया रहिते सर्वकपिप्रवीरैः सह वेगं समागते सति राघवस्तं सुग्रीवं वीक्ष्य ननन्द जहर्षेत्यर्थः ।।३१।।

**जनार्दनीया–** साधुवचोभिः शिक्षारूपसद्वाग्भिः । आश्वित्यनेन सुग्रीवस्य भक्त्यधिकारित्वं सूचितम् । प्रसन्नं रामे भक्तिमदित्यर्थः । चेतोऽन्तःकरणं यस्य स तथा तस्मिन् । तं सुग्रीवम् । ननन्द तुतोष ।।

**अनन्तभट्टीया–** प्रसन्नचेतसि वीतभयवतीत्यर्थः । वीरैः सहैव आगते सतीत्यर्थः ।।३१।।

**चट्टी–** हनुमतः साधुवचोभिः शिक्षारूपमृदुवचोभिः कपीनामधिपे सुग्रीवे प्रसन्नचेतसि भयरहिते सति सर्वकपिप्रवीरैः सह आश्वेव समागते सति राघवः तं सुग्रीवं वीक्ष्य ननन्द तुतोष ।।३१।।

**ससम्भ्रमं तं पतितं [१]पदाब्जयोस्त्वरन् समुत्थाप्य समाश्लिषत्प्रभुः ।**
**स चोपविष्टो जगदीशसन्निधौ तदाज्ञयैवादिशदाशु वानरान् ।।३२।।**

**वादिराजीया–** रामाज्ञयैवादिशदाशु वानरनित्यत्र जटायुषो मुखात् श्रुत्वा रावणेन सीता नीतेति जानन् रामः कथं पुनर्दशदिक्षु सीतान्वेषणायाज्ञामदिशदिति शङ्का स्यादेव । सा कथं परिहरणीयेति चेत्सत्यम् । लोके चोरा राजगृहात् राजोपभोग्यं वस्त्वपहृत्य पुनरतिसमर्थराजभयान्न तत्स्वगृह एव निक्षिपन्ति । किन्तु कस्याप्यगम्यदुर्गादिषु निक्षिप्य रक्षन्ति । राज्ञाऽपि स्वभटैस्तत्र तत्र विचार्य तद्वस्त्वानेयमिति लौकिकराजनीतिं प्रकटयितुं रामो जानन्नपि दिशि दिश्यन्वेषणायाज्ञामादिशदिति परिहारसम्भवात् । अत एव हनूमन्तं प्रति त्वं दक्षिणां दिशमेव याहीति स्वयमेवाज्ञापयिष्यति ।।

**वरदराजीया–** प्रभुः समर्थो रामः सम्भ्रमेण सहितं पदाब्जयोः पतितं सुग्रीवं त्वरन् वेगं कुर्वन् समुत्थाप्य समाश्लिषद् आलिलिङ्गे । स च सुग्रीवो जगदीशस्य रामस्य सन्निधौ समीपे तदाज्ञया [रामाज्ञयैव अत्रोपवेशेत्येवं रूपया उपविष्टः । तदाज्ञयेत्येतदुत्तरत्रापि सम्बध्यते ।] तदाज्ञयैवाशु वानरान् सीतान्वेषणार्थमादिशत् प्रेषयामास ।।३२।।

**जनार्दनीया–** प्रभुः रामः । सम्भ्रमेण सन्तोषेण सहितम् । स च सुग्रीवः । तदाज्ञया रामाज्ञया सन्निधौ । उपविष्टः आसीनः सन् । तदाज्ञयैव वानरान् आदिशत् दिदेश । सीतानुमार्गणार्थमिति शेषः । तदाज्ञयेत्युभयत्र सम्बध्यते ।।३२।।

**अनन्तभट्टीया–** तदा इत्येतत् उपविष्टेत्यनेन सम्बध्यते ।।३२।।

**ताम्रपर्णीया–** तदाज्ञया इत्यस्य पूर्वेण उत्तरेण च सम्बन्धः ।।३२-३५।।

---

१. पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम् । प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे ।। इति वा.रा.३८.१८.

**चट्टी–** प्रभुः समर्थो रामः सम्भ्रमेण सन्तोषेण सहितं पादाब्जयोः पतितं सुग्रीवं त्वरन् वेगं कुर्वन् समुत्थाप्य समाश्लिषत् आलिलिङ्गे । सः सुग्रीवश्च तदाज्ञया रामाज्ञया जगदीशस्य रामस्य सन्निधौ समीपे उपविष्टः आसीनस्सन् तदाज्ञयैव वानरान् आशु सीतान्वेषणार्थमिति शेषः । अदिशत् । तदाज्ञयैवेत्युभयत्र सम्बध्यते ।।३२।।

**समस्तदिक्षु प्रहितेषु तेन प्रभुर्हनूमन्तमिदं बभाषे ।**
**न[१] कश्चिदीशस्त्वदृतेऽस्ति साधने समस्तकार्यप्रवरस्य मेऽस्य ।।३३।।**

**वरदराजीया–** समस्तदिक्षु पश्चिमोत्तरादिषु सुग्रीवेण वानरेषु प्रहितेषु प्रेषितेषु सत्सु प्रभुः रामो हनूमंतं प्रति इदं वक्ष्यमाणं बभाषे अवदत् । किमिति । हे हनूमन् मे मम समस्तकार्यप्रवरस्य सर्वेषु कार्येषु श्रेष्ठस्यास्य कार्यस्य साधने सम्पादने त्वदृते त्वां विना कश्चिदपि पुरुषः ईशः समर्थो नास्ति ।।

**जनार्दनीया–** तेन सुग्रीवेण प्रहितेषु प्रेषितेषु सत्सु प्रभुः रामः बभाषे । किमिति ? मे समस्तकार्येषु प्रवरस्य मुख्यस्य अस्य सीतान्वेषणव्याजात्मकदेवकार्यस्य साधने सम्पादने त्वत् त्वत्तः ऋते कश्चित्पुरुषः ईशः समर्थो नास्ति यतः ।।३३।।

**अनन्तभट्टीया–** तेन रविजेन । वानरेष्विति शेषः । अस्य सीतामार्गणस्य कार्यस्य साधने ।।

**चट्टी–** तेन सुग्रीवेण समस्तदिक्षु पश्चिमोत्तरादिदिक्षु वानरेषु प्रहितेषु प्रेषितेषु सत्सु प्रभुः हनुमन्तं प्रति इदं वक्ष्यमाणं बभाषे । हे हनुमन् मे समस्तकार्येषु प्रवरस्य श्रेष्ठस्य अस्य सीतान्वेषण-व्याजात्मकदेवकार्यस्य साधने सम्पादने त्वदृते त्वां विना कश्चिदपि पुरुषः ईशः समर्थो नास्ति ।।३३।।

**भावचन्द्रिका–** समस्तदिक्षु किष्किन्धापेक्षया चतुर्दिक्षु इति नोपपद्यते । दक्षिणाशागतानां सङ्ग्रहरामायणे– 'गोदावरीश्च कावेरीं' [कि.का.७.३२] इति गोदावरीगमनस्योक्तेः । नापि मेर्वपेक्षया उत्तराशागतानाम् । सङ्ग्रहरामायणे 'मद्रकादीन् हिमाद्रिश्च' [कि.का.७.४१] इति हिमवद्गमनोक्तेः । अतो भरतवर्षापेक्षया इति ज्ञातव्यम् । पूर्वदिक्प्रेषणसमये 'यमुनोपवनं गत्वा'[कि.का.७.२२] इति सङ्ग्रहरामायणवचनात् । तदपेक्षया चतुर्दिक्षु इति वा । यदाश्रमे सीतापहारस्तदपेक्षया चतुर्दिक्ष्विति वा । बभाषे रहसि ।।३३।।

---

१. 'त्वया गम्यो न को देशः त्वञ्च ज्ञानवतां वरः । सप्तकोटिमहामन्त्रमन्त्रितावयवः प्रभुः ।।' इति हनूमन्तं प्रति श्रीरामवचनम् । हनूसत्सहस्रनामस्तोत्रम्.मन्त्रमहार्णव.पू.खं.९तरङ्ग । 'निश्चितार्थतरश्चापि हनूमान् कार्यसाधने' इति रामवचनम् । ४.४४.९ । 'न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये । नाप्सु वा गतिभङ्गं ते पश्यामि हरिपुङ्गव ।। सासुराः सह गन्धर्वाः सनागनरदेवताः । विदिता सर्वलोकास्ते ससागरधराधराः ।। गतिर्वेगश्च तेजश्च लाघवञ्च महाकपे । पितुस्ते सदृशं वीर मारुतस्य महौजसः ।। तेजसा वापि ते भूतं न समं भुवि विद्यते ।। इति रामायणे हनूमन्तं प्रति सुग्रीववचनम् । ४.४४.३-६

**अतस्त्वमेव प्रतियाहि दक्षिणां दिशं समादाय मदङ्गुलीयकम् ।**
**इतीरितोऽसौ पुरुषोत्तमेन ययौ दिशं तां युवराजयुक्तः ॥३४॥**

**वरदराजीया–** अतः कारणात् मदङ्गुलीयकं मम मुद्रिकां समादाय त्वमेव दक्षिणां दिशं प्रति याहीति पूर्वेणान्वयः । इत्यनेन प्रकारेण पुरुषोत्तमेन रामेण ईरितो सः हनूमान् युवराजेन अङ्गदेन युक्तः तां दक्षिणां दिशं प्रति ययौ ॥३४॥

**जनार्दनीया–** अतः कारणात् । मम अङ्गुलीयकं अङ्गुलीयभूषणम् । मुद्रिकामिति यावत् । याहीति ईरितोऽसौ हनूमान् । युवराजेन अङ्गदेन । तां दक्षिणाम् ॥३४॥

**चट्टी–** अतः कारणात् मम अङ्गुलीयकं अङ्गुलिभूषणं मुद्रिकामिति यावत् । समादाय त्वमेव दक्षिणां दिशं प्रति याहीति । पुरुषोत्तमेन रामेण ईरितः असौ हनुमान् युवराजेन अङ्गदेन युक्तः तां दक्षिणां दिशं प्रति ययौ ॥३४॥

**समस्तदिक्षु प्रतियापिता हि ते हरीश्वराज्ञामुपधार्य मासतः ।**
**समाययुस्तेऽङ्गदजाम्बवन्मुखाः सुतेन वायोः सहिता न चाययुः ॥३५॥**

**वेदाङ्गतीर्थीया–** उपधार्य अवधार्य । मासतः प्रागिति शेषः । न चाययुः नैवाययुः ॥३५ ॥

**वरद** समस्तदिक्षु पूर्वादिदिक्षु प्रतियापिताः प्रेषिताः ते वानराः मासमात्रेण आगन्तव्यमिति हरीश्वरस्य सुग्रीवस्य आज्ञामुपधार्य मासतः मासेन समाययुः । ते श्रीरामेण प्रेषिताः वायोः सुतेन हनूमता सहिता अङ्गदजाम्बवन्मुखाः अङ्गदजाम्ववत्प्रभृतयो मासेन न चाययुरित्यर्थः ॥३५॥

**जनार्दनीया–** प्रतियापिताः प्रेषिताः ते वानराः आज्ञामुपधार्य उपगृह्य मासतः मासमात्रेण समाययुः । वायोः सुतेन सहिताः युक्ताः । ते प्रसिद्धाः कपिश्रेष्ठा इत्यर्थः । अङ्गदादयः न चाययुः । मासत इति शेषः ॥

**अनन्तभट्टीया–** मासतः मासप्राप्तौ ॥३५॥

**चट्टी–** समस्तदिक्षु पूर्वादिदिक्षु प्रतियापिताः प्रेषिताः वानराः मासमात्रेणागन्तव्यमिति हरीश्वरस्य सुग्रीवस्य आज्ञामुपगृह्य संगृह्य मासतः मासमात्रेण समाययुः । वायुसुतेन हनुमता सहिताः युक्ताः ते प्रसिद्धाः कपिश्रेष्ठा इत्यर्थः । अङ्गदादयः न चाययुः मासत इति शेषः ॥३५॥

**गूढवाक्यार्थ–** मासतः माससमाप्तौ ॥३५॥

**समस्तदुर्गप्रवरं दुरासदं विमार्गतां विन्ध्यगिरिं महात्मनाम् ।**
**गतः स कालो हरिराडुदीरितः समासदंश्चाथ बिलं महाद्भुतम् ।।३६।।**

**वेदाङ्गतीर्थीया–** विन्ध्यगिरिं प्राप्येति शेषः ।।३६।।

**वादिराजीया–** ननु दक्षिणदिशं गतानां हनुमदादीनां किष्किन्धानगराद्बहुदूरोत्तरभागस्थविन्ध्याचलप्राप्तिः कथमिति चेदित्थम् । किष्किन्धानगरात्पूर्वसमुद्रपर्यन्तं पश्चिसमुद्रपर्यन्तं दक्षिणसमुद्रपर्यन्तं चत्वारिंशत्त्रिंशत्षष्टियोजनाभ्यन्तरितो देश एव । नतु ततोऽप्यधिको देशोऽस्ति । अत्र च बहुसङ्ख्याकवानराणां मासमात्रान्वेषणस्यासम्भवात् मेरुं मर्यादीकृत्यैव जम्बुद्वीपमात्रे प्राच्यादिदिक्ष्वन्वेषणायातिदेश इति सर्वैरपि वक्तव्यम् । एवं च मेरोर्दक्षिणभागः सर्वोऽपि हनुमदादीनामागत इति विन्ध्याचलविमार्गणमपि न्यायप्राप्तमिति भावेन 'विमार्गतां विन्ध्यागिरिं महात्मनाम्' इत्युक्तमिति ज्ञेयम् ।।३६–४२।।

**वरदराजीया–** कुतो नाययुरित्यत आह– **समस्तेति** ।। सर्वेषु दुर्गेषु प्रवरं अत एव दुरासदं दुष्प्राप्यं विन्ध्यगिरिं प्राप्य विमार्गतां गवेषणं कुर्वतां महात्मनां धीराणां कपीनां हरिराडुदीरितः सुग्रीवोक्तः स कालो मासरूपो गतोऽतिक्रान्तः । अथानन्तरं महदद्भुतं च बिलं गुहां समासदन् प्रापुः ।।३६।।

**जनार्दनीया–** समस्तदुर्गेषु सर्वागम्यस्थानेषु प्रवरं । अत एव दुरासदं दुष्प्राप्यं विन्ध्यगिरिं विमार्गतां अत्रापि सीतान्वेषणं कुर्वतां महात्मनां उत्तमानां अङ्गदादीनाम् । हरिषु राजते असौ हरिराट् । हरिराज्ञा सुग्रीवेण उदीरितः सः कालः मासमात्रावधिकः कालः गतः अतिक्रान्तः । अथ मासानन्तरं महाद्भुतं आश्चर्यकरं बिलं गुहां समासदन् प्रापुः ।।३६।।

**अनन्तभट्टीया–** दुर्गशब्देन अगम्यत्वमुच्यते । दुरासदमित्यनेन तु अविनाश्यत्वमित्यर्थः...* तेन न पुनरुक्तिः । ननु दक्षिणदेशं गतानां हनुमदादीनां किष्किन्धानगरात् [बहुदूराहगतस्य] विन्ध्याचलप्राप्तिः कथमिति चेत् इत्थम्– किष्किन्धानगरात् पूर्वसमुद्रपर्यन्तं पश्चिमसमुद्रपर्यन्तं चत्वारिंशत् षट्त्रिशत् षष्ठियोजनाभ्यन्तरितदेश एवास्ति । नतु ततो अधिकदेशोऽस्ति । [अत्र] बहुकोटिसङ्ख्याकवानराणां मासमात्रान्वेषणस्य असम्भवात् मेरुं मर्यादीकृत्यैव जम्बुद्वीपमात्रे प्राच्यादिदिक्षु अन्वेषणाय आदेश इति सर्वैर्वक्तव्यम् । एवञ्च मेरोर्दक्षिणभागः सर्वोऽपि हनुमदादीनां आदिष्ट इति विन्ध्याचलनिमार्गणमपि न्यायप्राप्तमिति भावेन 'विमार्गतां विन्ध्यागिरिं महात्मानाम्' इत्युक्तमिति ज्ञेयम् । यद्वा मलयाचलनिकटे अपरो विन्ध्योऽस्तीति भावेन 'विमार्गतां विन्ध्यगिरिम्' इत्युक्तम् ।।३६।।

**ताम्रपर्णीया–** ।। **विन्ध्यगिरिमिति** ।। ननु 'प्रतियाहि दक्षिणाम्' इति रामायणोक्तत्वात् किष्किन्धोत्तरस्थविन्ध्यगमनमनुपपन्नमिति चेत् नायं विन्ध्योऽगस्त्यस्तम्भितः किन्तु माहेन्द्राद्यवान्तर-नामवत्पर्वतकूट एव अत्र विन्ध्यनामकम् । तदुक्तं वाल्मीकिरामायणे– 'निर्दग्धपक्षपतितो विन्ध्येऽहं वानरोत्तमाः । विशालशिखरप्रांशु माहेन्द्रश्चातिदूरतः ।।' [कि.का.५८.७] । स्कान्दे च ईशानसंहितायां हनुमत्तीर्थमाहात्म्ये प्रथमेऽध्याये '... न मात्रतः । विन्ध्यत्रिकूटमलयमाहेन्द्राः यत्र सङ्गताः ।। यत्र त्रिकूटशिखरात् पुण्यतोयमहानदी । गङ्गा निर्झररूपेण भूमौ पतति पावनी ।। ... ईशान्यदिग्भागे परं क्रोशचतुष्टयात् । बिलस्यान्तर्गतं तीर्थं सर्वतीर्थमितीरितम् ।। दशयोजनविस्तीर्णं पञ्चयोजनमायतम् ।।' इति चित्रकाद्युत्पत्तिस्थलमारभ्य क्रोशचतुष्टयपरं बिलद्वारं अभिधाय तत्र 'स सर्वतीर्थं' इति तीर्थमुक्त्वा चतुर्थेऽध्याये तस्य हनुमत्तीर्थमिति सञ्ज्ञायां निमित्तमुच्यते । हेमाद्र्याम्– 'ततः सर्वे त्रिकूटाद्रेरैशान्यां दिश्यदूरतः । एकयोजनमात्रेण ददृशुर्विवृतं बिलम् । दैतेयपालितं दुर्गं लतागुल्मादिभिर्वृतम् । नाम्ना ऋक्षबिलं चेति घोरं कण्टकदुर्गमम् । क्षुत्पिपासार्दिता ह्येते पानीयार्थमुपागताः । घोरं तद्वानरास्तत्र विविशुः सुमहद्बिलम्' इत्यादिना हेमानाम अप्सरोनिमित्तं मयेन निर्मितं बिलं प्रविश्य तत्र हेमायाः सखीं स्वयंप्रभानाम्नीं काचन मेरुसावर्णेः पुत्रीं दृष्ट्वा तयार्चिताः प्लवङ्गमाः तयैव पुनर्बिलात् विनिर्गताः । तदा हनुमता साकं तत्रत्यं सर्वतीर्थ...णो वचनाद्बिलद्वारमुपागतम् इति तन्नामकं तदाप्रभृति तद्बिलद्वारि वर्तने च उक्तम् । तत्तीर्थं चापभ्रष्टभाषयाभ्यंकाश्युत्तर... । वादिराजतीर्थीये तु 'मेर्वपेक्षया प्रतियाहि दक्षिणामिति विवक्षितत्वात् किष्किन्धोत्तरदिग्गतविन्ध्यगमनमुपपन्नम्' इत्युक्तम् ।।३६–३७।।

**चट्टी–** कुतो नाययुरित्यत आह– **समस्तेति** ।। समस्तदुर्गेषु सर्वागम्यस्थानेषु प्रवरं अत एव दुरासदं दुष्प्राप्यं विन्ध्यगिरिं प्राप्य विमार्गतां अत्रापि सीतान्वेषणं कुर्वतां महात्मनां उत्तमानां अङ्गदादीनां हरिषु राजत इति हरिराट् सुग्रीवः तेन उदीरितः सः कालः मासमात्रावधिककालः गतः अतिक्रान्तः । अथ अनन्तरं महाद्भुतं अत्याश्चर्यकरं बिलं गुहां समासदत् प्रापुः ।।३६।।

---

१. ।। **समस्तदुर्गप्रवरमिति** ।। ननु 'प्रतियाहि दक्षिणाम्' इति रामेणोक्तत्वात् किष्किन्धोत्तरस्थविन्ध्यगमन-मनुपपन्नमिति चेत् । अत्र केचिदाहुः । किञ्चिदुत्तरं गत्वा प्रतियाहि दक्षिणमिति तत्र विवक्षितम् । एतच्च संग्रहरामायणे 'सहस्रशिखरं रम्यमिदं दुर्गदुरासदम्' । [कि.का.७.३१]इत्याद्युक्त्वा कावेरीमागत्य मलयाचलमिति तद्दक्षिणोक्त्या ज्ञायते इति । अन्ये तु 'यदाश्रमे सीतापहारः तदपेक्षया प्रतियाहि दक्षिणाम्' इति विवक्षितमित्याहुः । अपरे 'मेर्वपेक्षया प्रतियाहि दक्षिणाम्' इति विवक्षितमित्याहुः । वस्तुतस्तु नायं विन्ध्योऽगस्त्यस्तम्भितः । किन्तु मलयदेशीयः कश्चिदिति न दोषः । स च मलयभागविशेष एव । तदुक्तं वाल्मीकीये– 'निर्दग्ध...अविदूरतः ।।' इति ।।३६–४०।।

**भावचन्द्रिका–** ।। **विन्ध्येति** ।। दक्षिणस्यामेव दिशि महेन्द्रसमीपस्थो विन्ध्याचलः । वाल्मीकिरामायणे– 'विन्ध्यस्य शिखरप्रांशुः महेन्द्रश्च विदूरतः । वानरा गम्यतां तत्र... ।।' इति विन्ध्यशिखरस्थसम्पातिवचनात् ।।३६।।

**गूढवाक्यार्थ–** दुर्गशब्देनागम्यत्वमुच्यते । दुरासदशब्देनाविनाश्यत्वमित्यर्थभेदान्न पुनरुक्तिः ।। विन्ध्यगिरिमिति ।। प्रतियाहि दक्षिणामित्युक्तत्वात् किष्किन्धोत्तरस्य विन्ध्यगमनमनुपपन्नमिति चेत् नायं विन्ध्यो अगस्त्यनमितः उत्तरदेशस्थः किन्तु... विन्ध्यनामकः । तदुक्तं रामायणे– निर्दग्ध... अविदूरतः । इति ।।३६।।

**कृतं[1] मयेनातिविचित्रमुत्तमं समीक्ष्य तत्तार उवाच चाङ्गदम् ।**
**वयं न यामो हरिराजसन्निधिं विलङ्घितो नः समयो यतोऽस्य ।।३७।।**

**वेदाङ्गतीर्थीया–** समयः मासतः प्रागागन्तव्यमिति समयः ।।३७–४३।।

**वरदराजीया–** कीदृशं बिलं मयेन दैत्येन कृतं निर्मितम् । अत एव अतिविचित्रं उत्तमं तद्बिलं समीक्ष्य तारः अङ्गदस्य मातुलो अङ्गदमुवाच । किमिति । वयं सर्वे हरिराजस्य सुग्रीवस्य सन्निधिं समीपं न यामः न गच्छामः । कुतः यतः कारणादस्य सुग्रीवस्य समयो मासमात्रेणागन्तव्यमित्येवं रूपः सङ्केतो नोऽस्माकं विलङ्घितो गतः ।।३७।।

**जनार्दनीया–** महाद्भुतत्वे निमित्तमाह– **कृतमिति** ।। मयेन मयनाम्ना दैत्यवर्धकिना कृतम् । अत एव उत्तमम् । एतादृशं तत् बिलं तारः वालिभार्या तारा । तस्याः भ्राता नाम्ना तारः । सन्निधिं समीपम् । न यामः न यास्यामः । कुतः? अस्य सुग्रीवस्य । समयः मासमात्रावधिकाल इत्यर्थः । नोऽस्माभिः विलङ्घितः ।।३७।।

**अनन्तभट्टीया–** अवधिरूपः समयः । अवधिः सङ्केतः ।।३७।।

**चट्टी–** महाद्भुतत्वे निमित्तमाह– **कृतमिति** ।। मयेन मयनाम्ना दैत्यवर्धकिना कृतं निर्मितं अत एवातिचित्रं उत्तमं तद्बिलं समीक्ष्य तारः अङ्गदस्य मातुलः अङ्गदमुवाच । किमिति । वयं सर्वे हरीणां

---

१. 'मयो नाम महातेजा मायावी वानरर्षभ । तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ।। पुरा दानवमुख्यानां विश्वकर्मा बभूव ह । येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् ।। स तु वर्षसहस्राणि तपस्तप्त्वा महद्वने । पितामहाद्वरं लेभे सर्वमौशनसं धनम् ।।' इति [वा.रा.४का.५१.१०–१३] अत्र श्रूयमाणः विश्वकर्मशब्दः यौगिकः । न संज्ञा । तथाच विश्वस्य प्रासादादिकस्य कर्म यस्य सः इति व्युत्पत्तिः । तथा च विश्वकर्मशब्देन न देवतक्षकप्रसक्तिः ।

राजा हरिराजः तस्य सुग्रीवस्य सन्निधिं समीपं न यामः । कुतः यतः कारणात् अस्य सुग्रीवस्य समयः मासमात्रावधिकाल इत्यर्थः । नः अस्माभिः विलङ्घितः ।।३७।।

**भावचन्द्रिका–** ।। **कृतमिति** ।। बिलगमनानन्तरं चिन्ता । संग्रहरामायणे– [कि.का.७.८५-८८] 'बिलान्निर्गममार्गज्ञान् कपीनूचे स्वयम्प्रभा । योगाद्वो गमयिष्यामि निमीलयत लोचने ।। क्षणेनाचक्षतात्मानं विन्ध्यपृष्ठे प्लवङ्गमाः । हैमन्तिकैः प्रसूनैस्ते हेमन्तमृतुमागतम् ।। ज्ञात्वा सर्वे भयं भूयो भेजुः सुग्रीवदण्डतः ।। इति ।।३७–४०।।

**गूढवाक्यार्थ–** अवधिरूपः समयः अवधिः सङ्केतः ।।३७।।

**दुरासदोऽसावतिचण्डशासनो हनिष्यति त्वामपि किं मदादिकान् ।**
**अगम्यमेतद्बिलमाप्य तत्सुखं वसाम सर्वे किमसाविहाचरेत् ।।३८।।**

**वरदराजीया–** तथापि किमर्थं न गन्तव्यमित्यत आह– **दुरासद इति** ।। दुराराध्यः अतिचण्डशासनः अतिक्रूरो असौ सुग्रीवः त्वामपि भ्रातृपुत्रं युवराजमपि हनिष्यति । मदादिकान् वानरान् हनिष्यतीति किमु वक्तव्यमित्यर्थः । ननु सोऽत्र किं न हनिष्यति इति तत्राह– **अगम्यमिति** ।। तत्तस्मात्कारणादगम्यं तेनागम्यं गंतुमशक्यमेतद्बिलं आप्य सर्वे सुखं वसामः । असौ सुग्रीवः इह बिले किमाचरेत् किं कुर्यात् किमपि कर्तुं न समर्थः ।।३८।।

**जनार्दनीया–** न याम इत्युक्तकारणं दर्शयति– **दुरासद इति** ।। दुरासदः दुष्प्राप्यः । न सेव्य इत्यर्थः । अतिचण्डं अतिक्रूरं शासनं आज्ञा यस्य स तथा । त्वामपि युवराजमपि । अहं आदिः येषां ते मदादयः । स्वार्थे कप्रत्ययः । तान् किम्? किमिति कैमुत्यन्यायेनाह । यतो हनिष्यति तत् तस्मात् बिलं आप्य सुखं यथा स्यात् तथा । इह सर्वे वसामः । असौ सुग्रीवः इह किं आचरेत किं करिष्यतीत्यर्थः ।।३८।।

**अनन्तभट्टीया–** त्वामपि तत्पुत्रमपि । असौ रविजः ।।३८।।

**ताम्रपर्णीया–** ।। **बिलमाप्य तत्सुखमिति** ।। तत् तस्मात् ।।३८–४०।।

**चट्टी–** न याम इत्यत्र कारणमाह– **दुरासद इति** ।। दुरासदः दुष्प्राप्यः न सेव्य इत्यर्थः । अतिचण्डं अतिक्रूरं शासनं आज्ञा यस्य स तथा । असौ सुग्रीवः त्वामपि भ्रातृपुत्रमपि हनिष्यति । अहं आदिः येषां ते मदादयः स्वार्थे कप्रत्ययः । तान् वानरान् हनिष्यतीति किं वक्तव्यं इत्यर्थः । तत् तस्मात् । तेनागम्यं गन्तुमशक्यं आप्य सुखं यथा स्यात् तथा । इह सर्वे वसामः । असौ सुग्रीवः इह बिले किं कुर्यात् । किमपि कर्तुं न समर्थः ।।३८ ।।

**गूढवाक्यार्थ–** त्वामपि भर्तृपुत्रमपि । असौ रविजः ।। **बिलमाप्य तत्सुखमिति** ।। तत्र तस्मात् इह तद्बिलमाप्येति योज्यम् ।।३८।।

**न चैव रामेण सलक्ष्मणेन प्रयोजनं नो वनचारिणां सदा ।**
**न चेह नः पीडयितुं स च क्षमस्ततो ममेयं सुविनिश्चिता मतिः ।।३९।।**

**वरदराजीया–** तर्हि रामकार्यं न सम्पादितं स्यादित्यत आह– **न चैवेति** ।। सलक्ष्मणेन रामेण सदा वनचारिणां वने चरतां नोऽस्माकं नैव प्रयोजनम् । स च रामोऽपि इह बिले नोऽस्मान् पीडयितुं न क्षमो न समर्थः । ततः कारणात् ममेयं बुद्धिः सुविनिश्चिता इत्युवाचेति पूर्वेणान्वयः ।।३९।।

**जनार्दनीया–** ननु दुरासदत्वात् मास्तु । रामः कथं त्याज्य इत्यत आह– **न चेति** ।। सदा वनचारिणां वनस्थफलादिभक्षकानाम् । यद्वा । वने चरन्ति ते वनचारिणः तेषाम् । अटतामित्यर्थः । नः रामेण प्रयोजनं न । स्वकार्याकरणाद् रामः प्रतिकूलमाचरेदित्यत आह– **न चेति** ।। स रामः न क्षमः न समर्थः । ततः कारणात् मम इयं ईदृशी मतिः बुद्धिः सुनिश्चिता ।।३९।।

**अनन्तभट्टीया–** एवञ्चेत् रामा...* न कृतं स्यादित्याशङ्क्य न तत्प्रयोजनत्वादित्याह स च रामोऽपि नः अस्मद्विषय इत्यर्थः ।।३९।।

**चट्टी–** ननु सुग्रीवः दुरासदत्वात् परित्याज्यो अस्तु । रामः कथं परित्याज्य इत्यत आह– **न चेति** ।। सदा वनचारिणां वने विचरतां नो अस्माकं सलक्ष्मणेन रामेण प्रयोजनं नैव । स्वकार्यकर्माकरणात् रामः प्रतिकूलमारभेदित्यत आह– **स चेति** ।। स च रामोऽपि इह बिले नः अस्मान् पीडयितुं न क्षमः न समर्थः । ततः कारणात् मम इयं ईदृशी मतिः बुद्धिः सुनिश्चिता सम्यङ्निश्चिता इत्युवाचेति पूर्वेणान्वयः ।

**गूढवाक्यार्थ–** एवं चेत् रामानुसरणं न कृतं स्यादित्याशङ्क्य न तत्प्रयोजनत्वादित्याह– **न चैवेति** ।। स च रामोऽपि नः अस्मद्विषये क्षमी क्षमावान् क्षमते इति क्षमी...* इत्यन्ये...* वा ।।३९।।

**इतीरितं मातुलवाक्यमाशु स आददे [१]वालिसुतोऽपि सादरम् ।**
**उवाच वाक्यं च न नो हरीश्वरः क्षमी भवेल्लङ्घितशासनानाम् ।।४०।।**

१. प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे । अलं विषादेन विलं प्रविश्य वसाम सर्वे यदि रोचते वः ।। इहास्ति नो नैव भयं पुरंदरात् न राघवाद्वानरराजतोऽपि । श्रुत्वाङ्गदस्यापि वचोऽनुकूलमूचुश्च सर्वे हरयः प्रतीताः ।। [४.५३.२५-२६]

राजा हरिराजः तस्य सुग्रीवस्य सन्निधिं समीपं न यामः । कुतः यतः कारणात् अस्य सुग्रीवस्य समयः मासमात्रावधिकाल इत्यर्थः । नः अस्माभिः विलङ्घितः ।।३७।।

**भावचन्द्रिका–** ।। **कृतमिति** ।। विलगमनानन्तरं चिन्ता । संग्रहरामायणे– [कि.का.७.८५-८८] 'बिलान्निर्गममार्गज्ञान् कपीनूचे स्वयम्प्रभा । योगाद्वो गमयिष्यामि निमीलयत लोचने ।। क्षणेनाचक्षतात्मानं विन्ध्यपृष्ठे प्लवङ्गमाः । हैमन्तिकैः प्रसूनैस्ते हेमन्तमृतुमागतम् ।। ज्ञात्वा सर्वे भयं भूयो भेजुः सुग्रीवदण्डतः ।। इति ।।३७–४०।।

**गूढवाक्यार्थ–** अवधिरूपः समयः अवधिः सङ्केतः ।।३७।।

**दुरासदोऽसावतिचण्डशासनो हनिष्यति त्वामपि किं मदादिकान् ।**
**अगम्यमेतद्बिलमाप्य तत्सुखं वसाम सर्वे किमसाविहाचरेत् ।।३८।।**

**वरदराजीया–** तथापि किमर्थं न गन्तव्यमित्यत आह– **दुरासद इति** ।। दुराराध्यः अतिचण्डशासनः अतिक्रूरो असौ सुग्रीवः त्वामपि भ्रातृपुत्रं युवराजमपि हनिष्यति । मदादिकान् वानरान् हनिष्यतीति किमु वक्तव्यमित्यर्थः । ननु सोऽत्र किं न हनिष्यति इति तत्राह– **अगम्यमिति** ।। तत्तस्मात्कारणादगम्यं तेनागम्यं गंतुमशक्यमेतद्बिलं आप्य सर्वे सुखं वसामः । असौ सुग्रीवः इह बिले किमाचरेत् किं कुर्यात् किमपि कर्तुं न समर्थः ।।३८।।

**जनार्दनीया–** न याम इत्युक्तकारणं दर्शयति– **दुरासद इति** ।। दुरासदः दुष्प्राप्यः । न सेव्य इत्यर्थः । अतिचण्डं अतिक्रूरं शासनं आज्ञा यस्य स तथा । त्वामपि युवराजमपि । अहं आदिः येषां ते मदादयः । स्वार्थे कप्रत्ययः । तान् किम्? किमिति कैमुत्यन्यायेनाह । यतो हनिष्यति तत् तस्मात् बिलं आप्य सुखं यथा स्यात् तथा । इह सर्वे वसामः । असौ सुग्रीवः इह किं आचरेत किं करिष्यतीत्यर्थः ।।३८।।

**अनन्तभट्टीया–** त्वामपि तत्पुत्रमपि । असौ रविजः ।।३८।।

**ताम्रपर्णीया–** ।। **बिलमाप्य तत्सुखमिति** ।। तत् तस्मात् ।।३८–४०।।

**चट्टी–** न याम इत्यत्र कारणमाह– **दुरासद इति** ।। दुरासदः दुष्प्राप्यः न सेव्य इत्यर्थः । अतिचण्डं अतिक्रूरं शासनं आज्ञा यस्य स तथा । असौ सुग्रीवः त्वामपि भ्रातृपुत्रमपि हनिष्यति । अहं आदिः येषां ते मदादयः स्वार्थे कप्रत्ययः । तान् वानरान् हनिष्यतीति किं वक्तव्यं इत्यर्थः । तत् तस्मात् । तेनागम्यं गन्तुमशक्यं आप्य सुखं यथा स्यात् तथा । इह सर्वे वसामः । असौ सुग्रीवः इह बिले किं कुर्यात् । किमपि कर्तुं न समर्थः ।।३८ ।।

**गूढवाक्यार्थ–** त्वामपि भर्तृपुत्रमपि । असौ रविजः ।। **बिलमाप्य तत्सुखमिति** ।। तत्र तस्मात् इह तद्विलमाप्येति योज्यम् ।।३८।।

**न चैव रामेण सलक्ष्मणेन प्रयोजनं नो वनचारिणां सदा ।**
**न चेह नः पीडयितुं स च क्षमस्ततो ममेयं सुविनिश्चिता मतिः ।।३९।।**

**वरदराजीया–** तर्हि रामकार्यं न सम्पादितं स्यादित्यत आह– **न चैवेति** ।। सलक्ष्मणेन रामेण सदा वनचारिणां वने चरतां नोऽस्माकं नैव प्रयोजनम् । स च रामोऽपि इह बिले नोऽस्मान् पीडयितुं न क्षमो न समर्थः । ततः कारणात् ममेयं बुद्धिः सुविनिश्चिता इत्युवाचेति पूर्वेणान्वयः ।।३९।।

**जनार्दनीया–** ननु दुरासदत्वात् मास्तु । रामः कथं त्याज्य इत्यत आह– **न चेति** ।। सदा वनचारिणां वनस्थफलादिभक्षकानाम् । यद्वा । वने चरन्ति ते वनचारिणः तेषाम् । अटतामित्यर्थः । नः रामेण प्रयोजनं न । स्वकार्याकरणाद् रामः प्रतिकूलमाचरेदित्यत आह– **न चेति** ।। स रामः न क्षमः न समर्थः । ततः कारणात् मम इयं ईदृशी मतिः बुद्धिः सुनिश्चिता ।।३९।।

**अनन्तभट्टीया–** एवञ्चेत् रामा...* न कृतं स्यादित्याशङ्क्य न तत्प्रयोजनत्वादित्याह स च रामोऽपि नः अस्मद्विषय इत्यर्थः ।।३९।।

**चट्टी–** ननु सुग्रीवः दुरासदत्वात् परित्याज्यो अस्तु । रामः कथं परित्याज्य इत्यत आह– **न चेति** ।। सदा वनचारिणां वने विचरतां नो अस्माकं सलक्ष्मणेन रामेण प्रयोजनं नैव । स्वकार्यकर्माकरणात् रामः प्रतिकूलमारभेदित्यत आह– **स चेति** ।। स च रामोऽपि इह बिले नः अस्मान् पीडयितुं न क्षमः न समर्थः । ततः कारणात् मम इयं ईदृशी मतिः बुद्धिः सुनिश्चिता सम्यङ्निश्चिता इत्युवाचेति पूर्वेणान्वयः ।

**गूढवाक्यार्थ–** एवं चेत् रामानुसरणं न कृतं स्यादित्याशङ्क्य न तत्प्रयोजनत्वादित्याह– **न चैवेति** ।। स च रामोऽपि नः अस्मद्विषये क्षमी क्षमावान् क्षमते इति क्षमी...* इत्यन्ये...* वा ।।३९।।

**इतीरितं मातुलवाक्यमाशु स आददे [१]वालिसुतोऽपि सादरम् ।**
**उवाच वाक्यं च न नो हरीश्वरः क्षमी भवेल्लङ्घितशासनानाम् ।।४०।।**

१. प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे । अलं विषादेन विलं प्रविश्य वसाम सर्वे यदि रोचते वः ।। इहास्ति नो नैव भयं पुरंदरात् न राघवाद्वानरराजतोऽपि । श्रुत्वाङ्गदस्यापि वचोऽनुकूलमूचुश्च सर्वे हरयः प्रतीताः ।। [४.५३.२५-२६]

**वरदराजीया–** इत्यनेन प्रकारेण ईरितं उक्तं मातुलस्य तारस्य वाक्यं स वालिसुतो अङ्गदः सादरं यथा भवति तथा आशु आददे स्वीकृतवान् । वाक्यं चोवाच । किमिति । हरीश्वरः सुग्रीवः लङ्घितशासनानां लङ्घितमर्यादानां नोऽस्माकं क्षमी सहिष्णुर्न भवेत् ।।४०।।

**जनार्दनीया–** इति पूर्वोक्तप्रकारेण ईरितं उक्तं मातुलवाक्यं आशु अविचार्य सादरं प्रीतिसहितं यथा स्यात् तथा । आददे अङ्गीचकार । वाक्यमुवाच । किमिति? लङ्घितशासनानां आज्ञाभङ्गं कुर्वतामित्यर्थः । नः अस्माकं क्षमी क्षमावान् न च नैव भवेत् ।।४०।।

**अनन्तभट्टीया–** क्षमी क्षमावान् । अथवा क्षमत इति क्षमी । अत्र नः इति कर्मणि षष्ठी ।।४०–४२।।

**चट्टी–** इति पूर्वोक्तप्रकारेण ईरितं उक्तं मातुलस्य तारस्य वाक्यं आशु अविचार्य वालिसुतोऽपि अङ्गदोऽपि सादरं प्रीतिसहितं यथा स्यात् तथा आददे अङ्गीचकार । वाक्यं चोवाच । किमिति । हरीश्वरः लङ्घितशासनानां लङ्घितमर्यादानां नो अस्माकं क्षमी सहिष्णुर्न भवेत् ।।४०।।

**राज्यार्थिना[१] येन हि घातितोऽग्रजो [२]हृताश्च दाराः सुनृशंसकेन ।**
**स नः कथं रक्षति शासनातिगान्निराश्रयान्दुर्बलकान्बले स्थितः ।।४१।।**

**व्यासतीर्थीया–** नृशंसको हिंसकः ।।४१-४६।।

**वरदराजीया–** कुतः हि यस्माद्राज्यार्थिना येन सुनृशंसकेनातिहिंसकेन सुग्रीवेण अग्रजो ज्येष्ठो वाली घातितो मारितः दारास्त्रियोऽपि हृताः अपहृताः । सुग्रीवः स्वयं बले स्थितो बलवान् शासनातिगान् लङ्घिताज्ञान् निराश्रयान् आश्रयरहितान् दुर्बलकान् अतिदुर्बलान् नोऽस्मान् कथं रक्षति । न कथमपि किन्तु हनिष्यत्येवेत्यर्थः ।।४१।।

---

१. कथं स धर्मं जानीते येन भ्रात्रा दुरात्मना । युद्धायाभिनियुक्तेन बिलस्य पिहितं मुखम् ।। भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ।। वा.रा.४.५५.३-४ ।

२. तत्र स्कान्दे उमासंहितायामियं कथा १०. । ताराया सम्भवं देवि श्रुणु क्षीराब्धिमन्थने । तारा लक्ष्मी पशुश्चैव कल्पवृक्षस्तथैव च । अहल्याप्सरसश्चापि समुत्पन्नानि सुन्दरि ।। कराग्रं दक्षिणं वाली सुषेणो वाममग्रहीत् । ममेयमिति कलिरन्योन्यमुद्भवेत् ।। देवैः सुषेणस्य करे पुत्रीति प्रतिपादिता । सुषेणो दुहितुस्तस्या स्वयंवरमकल्पयत् ।। ब्राह्मे मुहूर्ते उत्थाय पूर्वपश्चिमवारिधौ । दक्षिणे चोत्तरे चैव स्नात्वा नत्वा महेश्वरम् ।। विरूपाक्षाभिधं नित्यं कल्पवृक्षप्रसूनकैः । अर्चयेद्यदि तस्येयं भार्या स्याद्वरवर्णिनी ।। एवं कृते वानरेन्द्राः न शेकुः स्पन्दितुं बलम् । वाली क्रमेण त्रिर्वारं कृतवानश्रमेण तत् ।। इत्थमूढा कपीन्द्रेण तारा सर्वाङ्गसुन्दरी । सुग्रीवमेकदा रात्रौ रूप[पति]सादृश्यमोहिता ।। प्रार्थयामास कामार्ता रन्तुं ऋतुमती प्रभुम् । अहल्याद्रौपदी-सीतातारामण्डोदरी तथा ।। नित्ययौवनसम्पन्नाः पातिव्रत्यगुणान्विताः । न मयायोनिजाताया गमनं लोकगर्हितम् ।।...

**जनार्दनीया– 'क्षमी न भवेत्' इत्युक्तेः कारणं स्पष्टयति– राज्येति ।। येन सुग्रीवेण घातितः हिंसितः । कथंभूतेन सुनृशंसकेन समीचीनहिंसकेन । दाराः अग्रजभार्याः हृताः । वले स्थितः रामाश्रयाद्बलीत्यर्थः । स सुग्रीवः शासनं आज्ञां अतिगानतिक्रान्तान् निराश्रयान् दुर्बलकान् निर्बलान् । नः कथं रक्षति? न कथञ्चिदित्यर्थः ।।४१।।**

---

... तथाच क्षीराब्धिमथनसमयोत्पन्नां तारां दृष्ट्वा सुषेणो वामं करमग्रहीत् । वाली तु ताराया दक्षिणं करमगृह्णात् । तदा अन्योन्यं विवदतोः वालितारयोः देवाः तारा सुषेणस्य दुहिता, वालिनो जाया इति निश्चिक्युः । ततः सुग्रीवरूपमोहिता सा रिरंसया सुग्रीवं प्राप । तथाच तारैव प्रथमं पुरुषान्तरं मनसा वा देहेन वा परिजग्राह । अतः तारायाः परपुरुषसङ्गात् महान् दोषः । यद्वक्ष्यति च आचार्यः- 'अधोऽधोऽधिकदोष' [२९] इति, 'तारादेहे सूर्यजस्याङ्गसङ्गात् स्वर्गं नागादन्तरिक्षादिहासीत्' इति तद्दोषफलमपि । [तारा दशमकक्षास्था,सुग्रीवस्तु द्वादशकक्षास्थः]।

वालिसुग्रीवयोर्मध्ये वाल्येव आगस्कृदिति धर्माकूतव्याख्याकृतः त्र्यम्बकराजमखिनः वदन्ति । तत्तु स्थूलदृशां दर्शनम् । तथाहि- 'परदारान् न गच्छेत मनसापि कदाचन । परदाररतिः पुंसां उभयत्रापि भीतिदा ।।''दुहिता च आर्यभार्या च स्वगोत्रशरणागता । आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।।' इत्यादि निषेधवचनानि, 'नष्टे मृते' इत्यादिभिर्भर्त्रन्तरपरिग्रहप्रापकप्रमाणबलेन भर्तृमरणादिनिमित्तरहितस्त्रीविषयाणि कलियुगविषयाणि च । त्रेतायुगादिषु भर्तृमरणादिनिमित्ते सति, **सत्यां भोगेच्छायां पुनर्विवाहस्य शास्त्रानुमतत्वात् तारासुग्रीवसङ्गमो युक्त एव** । ननु एवं चेत् वालिनि बिलं प्रविष्टे सुग्रीवः तारया कथं सङ्गतः ? यदाह अङ्गदः 'भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ।।' [४.५५.३] इति अतः सुग्रीवस्यापि महान् दोष इति चेन्न । वालिमरणं निश्चित्यैव सुग्रीवो तारामाप । आह सुग्रीवः 'अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं हतम् । पिधाय च बिलद्वारं शिलया गिरिमात्रया ।। शोकार्तश्चोदकं दत्वा किष्किन्धामागतस्सखे ।। [४.९.१९-२०]इति । अतो न सुग्रीवस्य दोष इति । वाली तु जीवतोपि सुग्रीवस्य भार्यां अपाजहार । यदाह रामः- 'तस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः । रुमायां वर्तसे कामात् स्नुषायां पापकर्मकृत् ।।' [४.१८.१९] इति । अत वालिनं जघान । सुग्रीवाय कपिराज्यं ददौ ।' इति । तदनुपपन्नम् । 'ज्येष्ठो यवीयसो भार्यां यवीयान्वाग्रजस्त्रियम् । पतितौ भवतो गत्वा नियुक्तावप्यनापदि ।। देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ।।' इति मन्वादिवचनेषु कृतादिषु नियोग एव विधीयते । नतु विवाहादिकम् । पूर्वोक्तनियोगोऽपि कलौ निषिद्धः । तथाहि- 'उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु । युगक्रमादशक्योऽयं कर्तुमन्यैर्विधानतः ।। तपोज्ञानसमायुक्ता कृतत्रेतायुगे नराः । द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता ।। अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः । न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरनिन्दितैः ।।' इति कुल्लूकभट्टः बृहस्पतिवचनान्युदाहरति । तथाच विधवाविवाहः सर्वदा निषिद्धः । नियोगस्तु कलियुगमात्रे निषिद्धः । तथाच त्रियुगसम्बन्धिनी तादृशी नियोगविधिरपि प्रजोत्पादनसमर्थधवहीनायां ज्येष्ठभार्यायाम्,सन्तानपरिक्षयादिरूपापदि, सन्तानप्राप्त्यर्थमेव नतु भोगेच्छया प्रवृत्ता । अतः सुग्रीवः गुरुभिरनियुक्तोऽपि सन्तानपरिक्षयादिरूपापदभावेऽपि यथेष्टं ज्येष्ठभार्यां बुभुज इति सोऽपि आगस्कृदेव ।

**ताम्रपर्णीया—** ।। **हृताश्च दारा इति** ।। 'जहास भार्या यस्माच्च सा स्याच्छालकगामिनी' इति श्रीमुष्णमाहात्म्ये [श्रीविष्णुमाहात्म्ये] शच्याः ब्रह्मशापोक्तेः सुग्रीवगमनमिति ।।४१-४२।।

**चट्टी—** कुतः हि यस्मात् राज्यार्थिना नृशंसकेन अतिहिंसकेन येन सुग्रीवेण अग्रजो ज्येष्ठः वाली घातितः मारितः । दाराः अग्रजभार्याः हृताः । बले स्थितः रामाश्रयात् बलीत्यर्थः । सः सुग्रीवः शासनं आज्ञातिगान् अतिक्रान्तान् निराश्रयान् आश्रयरहितान् दुर्बलकान् दुर्बलान् नो अस्मान् कथं रक्षति । न कथमपि । किन्तु हनिष्यत्येवेत्यर्थः ।।४१।।

**भावचन्द्रिका—** ।। **हृता इति** ।। 'जहास भार्या यस्माच्च सा स्यात् श्यालकगामिनी' इति ब्रह्मशापोक्तेः वामनपुराणे श्रीमुष्णमाहात्म्ये । दाराः भार्याः इन्द्रस्य ।।४१-४५।।

**इतीरिते शक्रसुतात्मजेन तथेति होचुः सहजाम्बवन्मुखाः ।**
**सर्वेऽपि तेषामथ चैकमत्यं दृष्ट्वा [१]हनूमानिदमाबभाषे ।।४२।।**

**वरदराजीया—** इति अनेन प्रकारेण शक्रसुतस्य वालिनः आत्मजेनाङ्गदेन ईरिते सति जाम्बवान् सुराः सर्वेऽपि सह एकवारमेव तथेति यथोक्तं त्वया तत्तथैवेति ऊचुरित्यर्थः । अथानन्तरं हनूमांस्तेषामैकमत्यमेकबुद्धित्वं दृष्ट्वा इदं वक्ष्यमाणं आबभाषे अवदत् ।।४२।।

**जनार्दनीया—** तथेति त्वया यथोक्तं तथा कर्तव्यमिति । जाम्बवन्मुखाः सर्वेऽपि सह संभूय ऊचुः । ह उक्तवतामिदं कष्टमित्यर्थः । अथ कपिविचारानन्तरम् । हनूमान् तेषां अङ्गदादीनां ऐकमत्यं एककार्यविषये बुद्धिं मत्वा ।।४२।।

**चट्टी—** इति अनेन प्रकारेण शक्रसुतस्य वालिनः आत्मजेन अङ्गदेन ईरिते सति । जाम्बवन्मुखाः सर्वे सह सम्भूय त्वया यथोक्तं तथा कर्तव्यमिति ऊचुः । उक्तवतामिदं कष्टमित्यर्थः । अथ कपिविचारानन्तरं हनुमान् तेषां अङ्गदादीनां ऐकमत्यं एककार्यविषयबुद्धिमत्वं दृष्ट्वा इदं वक्ष्यमाणमाबभाषे ।।४२।।

**विज्ञातमेतद्धि मयाऽङ्गदस्य राज्याय ताराभिहितं हि वाक्यम् ।**
**साध्यं न चैतन्न हि वायुसूनू रामप्रतीपं वचनं सहेत ।।४३।।**

---

१. तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् । भीषणैर्वाक्यैः कोपोपायसमन्वितैः ।। नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव । नाज्ञाप्यं विषहिष्यन्ति पुत्रदारं विना त्वया ।। त्वां नैते ह्यनुरज्येयुः प्रत्यक्षं प्रवदामि ते । यथायं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ।। न ह्यहं ते इमे सर्वे सामदानादिभिर्गुणैः । दण्डेन न त्वया शक्या सुग्रीवादपकर्षितुम् ।। इति वाल्मीकिरामायणे ४.५४.७-११ ।

**वादिराजीया–** मुख्यप्राणस्याच्छिन्नधर्मप्रसिद्धिं सूचयितुं वायुसूनुर्न सहेत हीति हिशब्दः ।।४३।।

**वरदराजीया–** किमिति । अङ्गदस्य राज्याय राज्यार्थं तारेणाभिहितमेतद्वाक्यं मया विज्ञातं हि । तथापि एतत् ताराभिहितं न साध्यं न सिद्ध्यति । हि यस्माद्वायुसूनुः हनूमान् रामप्रतीपं श्रीरामस्य विरोधवचनं न सहेत न क्षमते ।।४३।।

**जनार्दनीया–** मया अङ्गदस्य राज्याय साम्राज्यार्थं तारेण अभिहितं उदितं एतद्वाक्यं विज्ञातं हि । एतच्च तारोक्तं साध्यं न । कुतः? वायुसूनुः । 'स्वनामोच्चारणं न कर्तव्यम्' इति स्मरणाद्वायुसूनुरित्युक्तम् । हनूमान् रामस्य प्रतीपं प्रतिकूलवचनं न सहेत हि यस्मात् तस्मादिति सम्बन्धः ।।४३।।

**अनन्तभट्टीया–** राज्याय तत्प्राप्तय इत्यर्थः । कथमिदं अङ्गदराज्यसाधनाय....*इति चेत् एतत्....* प्रकृतकार्यविलोपे सति तस्मिन् कोपात् रामेण रविजे निहते अङ्गदं प्रति राज्यं स्वयमेव प्राप्तेरिति विज्ञातं विज्ञाताभिप्रायम् । इदं तारोदिताभिप्रायम् ।।४३।।

**ताम्रपर्णीया–** ।। **विज्ञातमेतदिति** ।। रामकार्याकरणे श्रीरामेण कोपवशात् सुग्रीवसंहारे कृते अङ्गदस्य कपिराज्यं भविष्यतीति भावः । तारस्येति भावः ।।४३-४६।।

**चट्टी–** किमिति । अङ्गदस्य राज्याय राज्यर्थं तारेणाभिहितं एतद्वाक्यं मया विज्ञातं हि । एतच्च तारोक्तं वाक्यं साध्यं न । कुतः वायुसूनुः हनुमान् । स्वनामोच्चारणं न कर्तव्यमिति स्मरणाद् वायुसूनुरित्युक्तम् । रामस्य प्रतीपं प्रतिकूलं वचनं न सहेत न क्षमते । हि यस्मात् तस्मादिति सम्बन्धः ।।

**गूढवाक्यार्थ–** अतृन[आददे] इति कर्मणि षष्ठी । राज्याय तत्प्राप्तय इत्यर्थः । विज्ञातं विज्ञाताभिप्रायम् । इदं तारोदितं कार्यम् ।। अङ्गदस्य राज्यायेति ।। सुग्रीवेण रामकार्याकरणे कोपात् रामेण सुग्रीवसंहारे कृते सति कपिराज्यमङ्गदस्य स्वयमेव भविष्यतीति ताराभिप्राय इति भावः ।।४३।।

**न चाहमाक्रष्टुमुपायतोऽपि शक्यः कथञ्चित्सकलैः समेतैः ।**
**सन्मार्गतो नैव हि राघवस्य दुरन्तशक्तेर्बलमप्रधृष्यम् ।।४४।।**

**वेदाङ्गतीर्थीया–** सन्मार्गतः आक्रष्टुम् ।।४४-४५।।

**वादिराजीया–** उपायतोऽपीत्यपिपदेन बलं समुच्चीयते । सन्मार्गत आक्रष्टुमिति पूर्वेण सम्बन्धः ।।

**वरदराजीया–** ननु त्वामपि बुद्ध्या बलेन वा आकृष्य अस्मन्मते स्थापयिष्याम इत्याशङ्क्य तदप्यशक्यमित्याह– **न चेति** ।। अहं सकलैः समस्तैः समेतैरपि कथञ्चित् केनापि प्रकारेण उपायतः बुद्ध्या वा बलेन वेत्यर्थः । सन्मार्गतः सन्मार्गात् आक्रष्टुं भवदीयमते पातयितुं न शक्यः शक्यो न

भवामि । 'न चेह नः पीडयितुं स च क्षम' इत्युक्तं भवद्भिस्तदप्यसम्बद्धमित्याह– **दुरन्तेति** ।। दुरन्ता अनन्ता शक्तिर्यस्य तस्य राघवस्य रामस्य किमेतत् बिलं अधृष्यं दुरासदं नैवेत्यर्थः ।।४४।।

**जनार्दनीया–** ननु उपायेन त्वामपि अस्मदनुकूलबुद्धिं करिष्यामीत्यत आह– **न चेति** ।। अहं समेतैः मिलितैः सकलैर्नीत्यादिकलाभिः सहितैर्भवद्भिः । उपायतोऽपि सामाद्युपायेनाऽपि । सन्मार्गतः रामानुकूलमार्गात् । आक्रष्टुं भवद्बुद्ध्यनुसारिणं कर्तुमित्यर्थः । कथञ्चिच्छक्यो न । 'न चेह नः पीडयितुं स च क्षमः' इत्युक्तस्योत्तरमाह– **नैवेति** ।। अप्रधृष्यं अगम्यमित्यर्थः ।।४४।।

**चट्टी–** ननु त्वामपि सामाद्युपायेन अस्मदनुकूलं करिष्याम इत्यत आह– **नचेति** ।। अहं समेतैः मिलितैः सकलैर्भवद्भिः उपायतोऽपि सामाद्युपायतोऽपि सन्मार्गतः रामानुकूलमार्गात् आक्रष्टुं भवद्बुद्ध्यनुवर्तिनं कर्तुमित्यर्थः, कथञ्चित् शक्यो न । 'न चेह नः पीडयितुं स च क्षमः' इत्युक्तस्योत्तरमाह– **नैवेति** ।। दुरन्ता अनन्ता शक्तिर्यस्य तस्य राघवस्य एतद्बिलं अप्रधृष्यं अगम्यं नैवेत्यर्थः ।।४४।।

**गूढवाक्यार्थ–** सन्मार्गतः आकृष्टुं भवदीयमते पातयितुं बलात् सन्मार्गगतानिति सम्बन्धः ।।४४।।

**वचो ममैतद्यदि चादरेण ग्राह्यं भवेद्वस्तदतिप्रियं मे ।**
**न चेद्बलादप्यनये प्रवृत्तान् प्रशास्य सन्मार्गगतान्करोमि ।।४५।।**

**वरदराजीया–** यदि मम एतद्वचः आदरेण वः युष्माकं भवेत् । तर्हि मे अतिप्रियं महान् सन्तोषः । न चेत् ग्राह्यं न चेत् तर्हि अनये कुमार्गे प्रवृत्तान् बलात् प्रशास्य शिक्षयित्वा सन्मार्गगतान् करोमीत्यर्थः ।।

**जनार्दनीया–** यदि आदरेण स्नेहेन ग्राह्यं अङ्गीकारयोग्यं भवेत्तर्हि मे अतिप्रियं अत्यन्तहर्षः । न चेद् ग्राह्यं न चेत् । तर्हि अनये अनीत्यां प्रवृत्तान् प्रशास्य शिक्षयित्वा बलात् सन्मार्गगतान् स्थितान् करोमि ।।

**अनन्तभट्टीया–** सन्मार्गतः आक्रष्टुं भवन्मते पातयितुम् । तत् तथातिप्रियं...* बलात् मार्गगतानिति सम्बन्धः ।।४५।।

**चट्टी–** यदि मम एतद्वचः आदरेण स्नेहेन हि युष्माकं ग्राह्यं भवेत् । तत् तर्हि मे अतिप्रियं महाहर्षः सन्तोषः न चेत् । ग्राह्यं न भवेत् । तर्हि अनये अनीत्यां प्रवृत्तान् प्रशास्य शिक्षयित्वा बलात् सन्मार्गे गतान् स्थितान् करोमि ।।४५।।

**इतीरितं तत्पवनात्मजस्य श्रुत्वातिभीता धृतमूकभावाः ।**
**सर्वेऽनुजग्मुस्तमथाद्रिमुख्यं माहेन्द्रमासेदुरगाधबोधाः ।।४६।।**

**वेदाङ्गतीर्थीया–** ईरितं वचनम् । 'नपुंसके भावे क्त' इति । अगाधबोधाः गम्भीरज्ञानिनः ।।४६।।

**सत्याभिनवीया–** तत्रैव इतीरितं तत्पवनात्मजस्य... इति श्लोके इतीरितं तत्पवनात्मजस्य श्रुत्वेत्यस्य पवनात्मजेन पुनः ईरितं पवनात्मजस्य तद्वचनं श्रुत्वेत्यर्थः । एतेन पवनात्मजस्येति षष्ठ्यैव वाक्यस्य पवनात्मजेरितत्वलाभात् ईरितमिति वाक्यस्य पवनात्मजेरितत्वकथनं व्यर्थमिति दूषणं निरस्तम् । पुनः पुनः ईरितमिति वक्तुं ईरितमित्युक्तमित्यभ्युपगमात् ।।४६।।

**वरदराजीया–** इत्युक्तरीत्या तत्पवनात्मजस्य हनूमता ईरितं वचनं श्रुत्वा अत्यन्तभीता अत्यंतं भययुक्ता अत एव धृतः मूकभावो मूकत्वं यैस्ते तथा एवंभूताः सर्वे कपयः तं हनूमन्तं अनुजग्मुः । अथानन्तरं अगाधबोधाः गम्भीरबुद्धयो माहेन्द्रनामकं गिरिं आसेदुः प्रापुः ।।४६।।

**जनार्दनीया–** तद्वाक्यं श्रुत्वा । धृतः मूकभावः मूकस्वभावो यैस्ते तथा । तं हनुमन्तं अनुजग्मुः । अथ विन्ध्यत्यागानन्तरं नाम्ना माहेन्द्रं अद्रिमुख्यं आसेदुः प्रापुः । अगाधबोधाः गम्भीरज्ञानिनो यत इति शेषः । अतो जग्मुरिति सम्बन्धः ।।४६।।

**अनन्तभट्टीया–** ईरितं वचनम् ।।४६।।

**चट्टी–** इत्युक्तरीत्या तत् पवनात्मजस्य हनुमतः ईरितं वचनं श्रुत्वा अतिभीताः अत्यन्तभययुक्ताः अत एव धृतो मूकभावः मूकत्वं यैस्ते तथा । एवंभूताः सर्वे कपयः तं हनुमन्तं अनुजग्मुः । अथ विन्ध्यत्यागानन्तरं अगाधबोधाः गम्भीरबुद्धयः माहेन्द्रनामकं अद्रिमुख्यं पर्वतश्रेष्ठं आसेदुः प्रापुः ।।४६।।

**भारतश्री–** अगाधबोधाः अनवस्थितबुद्धयः । अवस्थितिः गाध इत्युच्यते च ।।४६।।

**गूढवाक्यार्थ–** ईरितं वचनम् ।।४६।।

**निरीक्ष्य ते सागरमप्रधृष्यमपारमेयं सहसा विषण्णाः ।**
**दृढं निराशाश्च मतिं हि दध्रुः प्रायोपवेशाय तथा च चक्रुः ।।४७।।**

**व्यासतीर्थीया–** मेयं अधोमानम् । न विद्यते पारमेये यस्य स तथोक्तः तम् । पारमेयं न भवतीति वा ।।४७–५८।।

**वेदाङ्गतीर्थीया–** अप्रधृष्यं अलङ्घ्यम् । अपारमेयं अमेयपारम् ।।४७–४८।।

**वादिराजीया–** 'परावारे परार्वाचि तीरे पात्रं तदन्तरम्' इत्यभिधानात् पारेण परतीरेण मेयो न भवतीत्यपारमेयस्तमपारमेयम् ।।४७-४९।।

**सत्याभिनवीया–** तदनन्तरमेव निरीक्ष्य ते इति श्लोके अपारमेयमित्यस्य अपार इति ज्ञेयमित्यर्थः । एतेन अपारमित्यनेनैव पूर्णत्वात् मेयमित्येतत् व्यर्थमिति दूषणं परास्तम् । वस्तुतः पारस्य विद्यमानत्वेन अपारत्वस्य बाधितत्वात् अपारत्वेन ज्ञेयत्वं वक्तुं मेयमित्युक्तमित्यङ्गीकारात् ।।४७।।

**वरदराजीया–** ते कपयोऽप्रधृष्यं आक्रमयितुमशक्यं अपारमेयं अज्ञायमानं परं तीरं समुद्रं सहसा अकस्मात् अवलोक्य विषण्णाः ग्लानिं प्राप्ताः । दृढं निश्चयेन निराशाः सीतान्वेषणे आशारहिताः प्रायोपवेशाय निरशनव्रताय तदर्थं अतिबुद्धिं दध्रुः धृतवन्तः । तथा चक्रुश्च प्रायोपवेशनव्रतं चक्रुरित्यर्थः ।।

**जनार्दनीया–** ते कपयः । सहसा बलेन । अप्रधृष्यं पारगमनायोग्यम् । अपारमेयं अज्ञेयपरकूलं सागरं निरीक्ष्य, विषण्णाः श्रान्ताः । दृढं निराशाः जीवनाशारहिताः सन्तः । आज्ञा उल्लङ्घिता बहुकालेनापि कार्यं न कृतं तस्मात्सुग्रीवो हनिष्यत्येवेति निश्चयं चक्रुरिति भावः । प्रायोपवेशाय निरशनव्रताय । निरशनेन मृतिः प्रायः । तदर्थमवस्थानं प्रायोपवेशस्तस्मै । मतिं दध्रुः । 'प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः' इति विश्वः । 'सन्यासवत्यनशने पुमान् प्रायः' इत्यमरः । 'प्रायो भून्म्यन्तगमने' इति च । तथा यथा मनसि धृतं तथा निरशनपूर्वकं मृत्यर्थं उपविष्टाः सन्तः चक्रुः ।

**अनन्तभट्टीया–** अपारमेयं अतिविस्तीर्णम् । पारेण परतीरेण मेयो न भवतीत्यपारमेयः । तम् । सहसा बलेन । अप्रधृष्यं अतार्यम् । प्रायोपवेशाय अन्नं वर्जयित्वा प्रवेष्टुं चक्रुश्चेति सम्बन्धः ।।४७।।

**ताम्रपर्णीया–** मेयमधोमानं गाधत्वम् । न विद्यते पारमेये यस्य स तथोक्तः तम् । पारवत्वेन मेयं न भवतीति ।।४७–५०।।

**चट्टी–** ते कपयः अप्रधृष्यं आक्रमितुमशक्यं अपारमेयं अज्ञेयं परकूलं सागरं सहसा अकस्मात् निरीक्ष्य अवलोक्य विषण्णाः श्रान्ताः दृढं निराशाः जीवनाशारहितास्सन्तः । आज्ञा उल्लङ्घिता, बहुकालश्च गतः, कार्यमपि न साधितं तस्मात् सुग्रीवोऽस्मान् हनिष्यत्येवेति निश्चयं चक्रुरिति भावः । प्रायोपवेशाय निरशनव्रताय मतिं बुद्धिं दध्रुः हि धृतवन्त एव तथा यथा मनसि धृतं तथा चक्रुश्च ।।४७।।

**भारतश्री–** ऋते हनुमन्तं ऋते प्रायोपवेशाय मतिं दध्रुः । हनुमांस्तु एतेषां चरितं परमं भावि कार्यं जानन् रामं ध्यायमानः तत्रोवासेति ज्ञातव्यम् । अयं विशेषः ग्रन्थान्तरगतः अत्र हिशब्देन सूच्यते ।

**भावचन्द्रिका–** आसेदुः आसन्नाः । न च तदैव प्राप्ताः । पूर्वोदाहृतवाल्मीकिवाक्ये सम्पातिना [संवान्द्रप्राप्तिरूपविशेषार्थः] । सम्पातिः विन्ध्यस्थः । तद्वाल्मीकोक्तम्– 'निर्दग्धपक्षः पतितो विन्ध्येऽहं वानरोत्तमाः ।' ['अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः' इति इदानीन्तनपाठः] [कि.का.६१.१६] महेन्द्रश्च समुद्रतीरस्थः । 'क्रोशमात्रमितो गता दक्षिणस्योदधेर्गिरिः' । इति सम्पातिवचनात् । एतत्सर्वं सङ्ग्रहरामायणे विचारिते सति अवगम्यते ।।४७।।

**गूढवाक्यार्थ–** अपारमेयमिति पारं तीरं पारत्वेन मेयं न भवतीति अपारमेयमित्यर्थः । सहसा बलेन....* प्रायोपवेशाय अन्नं वर्जयित्वा उपवेष्टुं चक्रुश्चेति सम्बन्धः ।।४७।।

**प्रायोपविष्टाश्च कथां वदन्तो रामस्य संसारविमुक्तिदातुः ।**
**जटायुषः पातनमूचिरे तत्सम्पातिनाम्नः श्रवणं जगाम ।।४८।।**

**वरदराजीया–** प्रायोपविष्टाश्च कपयो संसारान्मोक्षदातुः रामस्य कथां परस्परं वदन्तः कथयन्तो जटायुषो गृध्रस्य पातनं पतनं मरणमूचिरे । तज्जटायुषपातः सम्पातिनाम्नः तद्भ्रातुः श्रवणं श्रवणेन्द्रियं जगाम तच्छ्रवणेन्द्रियविषयोऽभूदित्यर्थः ।।४८।।

**जनार्दनीया–** प्रायोपविष्टाः निरशनव्रतस्थाः कपयः । संसारात् विमुक्तिं मोक्षं दातुः रामस्य कथां वदन्तः परस्परं कथयन्तः सन्तः । जटायुषः पातनं पतनं मरणमिति यावत् । ऊचिरे । तत् पातनं सम्पातिनः गृध्रस्य श्रवणं श्रोत्रेन्द्रियं जगाम । सम्पातिः जटायुषः मरणं शुश्रावेति भावः ।।४८।।

**अनन्तभट्टीया–** पातनं श्रवणं श्रुतम् ।।४८।।

**चट्टी–** प्रायोपविष्टाः निरशनव्रतस्थाः कपयः संसारात् विमुक्तिं मोक्षं दातुः रामस्य कथां वदन्तः परस्परं कथयन्तः सन्तः जटायुषः पातनं मरणमिति यावत्, ऊचिरे । तत्पतनं सम्पातिनाम्नः तद्भ्रातुः श्रवणं श्रोत्रेन्द्रियं जगाम । सम्पातिः जटायुषः मरणं शुश्रावेति भावः ।।४८।।

**गूढवाक्यार्थ–** पातनं पतनम् । श्रवणं श्रोत्रम् ।।४८।।

**भावचन्द्रिका–** प्रायोपविष्टा देवा विन्ध्यादित आरभ्य श्रुतां रामकथामूचुस्तदा यथाविक्रमं कृत्वा जटायुषा मरणं प्राप्तं तदप्यस्माकं नाभूदिति चिन्तयेयुरिति कथा । सीताहरणसमये स्वसुतेन सुपार्श्वश्वनामकेन दृष्ट्वोक्तां स्वयं वाचं अवोचत् । दूरदर्शित्वात् । 'तस्माद् वक्ष्याम्यहं वीराः दूरदर्शिस्वभावतः ।' इति सङ्ग्रहरामायणे [कि.का.८.३६] ।। दशेति ।। 'योजनानि दश प्रोचे गजः प्लवनमात्मनः । विंशद्गवाक्षस्त्रिंशत्तु शरभो योजनान्यथा ।। चत्वारिंशत् वृषभः पञ्चाशद् गन्धमादनः । मैन्दः षष्ठिं सप्ततिं च विविदो वदति स्मृतम् ।। सुषेणसूनुश्चाशीतिं... ।।' इति सङ्ग्रहरामायणे [कि.का.८.४८–५०] ।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां षष्ठोऽध्यायः ।।

**तस्याग्रजोऽसावरुणस्य सूनुः सूर्यस्य बिम्बं सह तेन यातः ।**
**जवं परीक्षन्नथ तं सुतप्तं गुप्त्वा पतत्रक्षयमाप्य चापतत् ॥४९॥**

**वेदाङ्गतीर्थीया–** तस्य जटायुषः ॥४९॥

**वरदराजीया–** सः क इत्यत आह– **तस्येति** ॥ असौ सम्पातिनामा तस्य जटायुषोऽग्रजः अरुणस्य सूर्यस्य सारथेः सूनुः पुत्रः जवं वेगं परीक्षन् परीक्षितुं तेन जटायुषा भ्रात्रा सह सूर्यस्य बिम्बं मण्डलं प्रति यातः । अथानन्तरं जटायुषं सुतप्तं रवितेजसा दह्यमानं गृध्रः स्वपक्षाभ्यां आच्छादनेन संरक्षन् स्वयं पतत्रक्षयं पक्षनाशं आप्य प्लवने शक्त्यभावादपतत् ॥४९॥

**जनार्दनीया–** सम्पातिस्वरूपमाह– **तस्येति** ॥ असौ सम्पातिस्तस्य जटायुषः अग्रजः अरुणः सूर्यसारथिः तस्य सूनुः पुत्रः । 'सूनुः पुत्रेऽनुजे रवौ' इति विश्वः । जवं गतिवेगं परीक्षन् तेन जटायुषा सह सूर्यस्य बिम्बं यातः गतः । अथ सूर्यमण्डलप्राप्त्यनन्तरम् । सुतरां तप्तं तं जटायुषं गुप्त्वा संरक्ष्य स्वयं जटायुषः उपरि भूत्वा स्वपक्षच्छायया गुप्त्वेति भावः । पतत्रक्षयं पक्षनाशं आप्य प्राप्य, अपतत् माहेन्द्रपर्वतस्थे वृक्ष इति शेषः ॥४९॥

**अनन्तभट्टीया–** तेन जटायुषा ॥४९–५१॥

**चट्टी–** स क इत्यत आह– **तस्येति** ॥ असौ सम्पाती तस्य जटायुषः अग्रजः । अरुणस्य सूर्यसारथेः सूनुः जवं गतिवेगं परीक्षन् तेन जटायुषा सह सूर्यस्य बिम्बं मण्डलं प्रति यातः गतः । अथ सूर्यमण्डलप्राप्त्यनन्तरं सुतरां तप्तं रवितेजसा दह्यमानं ते जटायुषं गुप्त्वा संरक्ष्य स्वयं जटायुषः उपरि स्थित्वा, स्वपक्षाभ्यामाच्छादनेन गुप्त्वेति भावः । पतत्रक्षयं पक्षनाशं आप्य प्लवने शक्त्यभावात् अपतन् च । माहेन्द्रपर्वतस्थे वृक्ष इति भावः ॥४९॥

**गूढवाक्यार्थ–** तेन जटायुषा जवं वेगं तं जटायुषं श्रुत्वा स्वपतत्राच्छादनेन संरक्ष्य पतत्रक्षयं आतपेन स्वपत्रनाशम् ॥४९॥

**स दग्धपक्षः सवितृप्रतापात् [१]श्रुत्वैव रामस्य कथां सपक्षः ।**
**भूत्वा पुनश्चाशु मृतिं जटायुषः शुश्राव पृष्ट्वा पुनरेव सम्यक् ॥५०॥**

---

१. 'रामवार्ताश्रवात्पक्षौ जातौ भूयोऽथ जानकीम्' इति अग्नि.पु.८.१५ । वाल्मीकीये तु राजर्षेः निशाकरस्य प्रसादादेव पतत्रोत्थितिः श्रूयते । 'निशाकरस्य राजर्षेः प्रसादादमितौजसः । आदित्यरश्मिनिर्दग्धौ पक्षौ पुनरुपस्थितौ ॥' इति ४.६३.१० ।

**वेदाङ्गतीर्थीया–** पुनश्च सपक्षो भूत्वा पृष्ट्वा पुनः सम्यगशेषं शुश्राव ।।५०।।

**वादिराजीया–** रामस्य कथाः श्रुत्वैवाशु सपक्षो भूत्वा पुनश्च पृष्ट्वा सम्यक् शुश्रावेति सम्बन्धः ।

**वरदराजीया–** स सम्पातिनामा सवितुः सूर्यस्य प्रतापादातपात् दग्धपक्षो रामस्य कथाः श्रुत्वा पुनः सपक्षः पक्षसहितो भूत्वा कपिसमीपमागत्य पुनः सम्यक्पृष्ट्वा जटायुषो मृतिं मरणमाशु शुश्राव अश्रुणोत् ।

**जनार्दनीया–** सवितुः सूर्यस्य प्रतापात् प्रकृष्टतेजसः दग्धपक्षः सम्पातिः श्रुत्वा, पुनः पक्षाभ्यां सहितो भूत्वा, कपीन् पृष्ट्वा आपृच्छ्य, सम्यगेव भक्त्यैवेत्यर्थः । पुनरपि पक्षप्राप्त्यनन्तरमपि जटायुषः मृतिं शुश्राव अशृणोत् । पक्षप्राप्त्यनन्तरं भक्त्या शुश्रावेति भावः ।।५०।।

**चट्टी–** सवितुः सूर्यस्य प्रतापात् प्रकृष्टतेजसः दग्धपक्षः सम्पाती रामस्य कथां श्रुत्वैव पुनः सपक्षः पक्षाभ्यां सहितो भूत्वा स्वयं कपिसामीप्यमागत्य कपीन् पृष्ट्वा आपृच्छ्य सम्यगेव भक्त्येत्यर्थः । पुनरपि पक्षप्राप्त्यनन्तरं मरणं जटायुषः मृतिं शुश्राव ।।५०।।

**गूढवाक्यार्थ–** पुनःसपक्षो भूत्वा पुनः शुश्राव ।।५०।।

**स रावणस्याथ गतिं सुतोक्तां निवेद्य दृष्ट्वा जनकात्मजाकृतिम् ।**
**स्वयं तथाऽशोकवने निषण्णामवोचदेभ्यो हरिपुङ्गवेभ्यः ।।५१।।**

**वेदाङ्गतीर्थीया–** सुतोक्तां सुतेन सुपार्श्वेनोक्ताम् । निवेद्य ज्ञापयित्वा ।।५१।।

**वादिराजीया–** सुतोक्तां रावणस्य गतिं निवेद्य ज्ञात्वा अशोकवने निषण्णां जनकात्मजाकृतिं स्वयं दृष्ट्वा एभ्यो हरिपुङ्गवेभ्योऽवोचदिति सम्बन्धः ।।५१।।

**मधुसूदनीया–** सुतोक्तां स्वात्मानं प्रति स्वसुतेन सुपार्श्वेनोक्तां रावणस्य गतिं निवेद्य स्वयं चाऽशोकवने निषण्णां जनकात्मजाकृतिं दृष्ट्वा अत्र स्थित्वैव दिव्यज्ञानचक्षुषा दृष्ट्वैवेत्यर्थः । तदुक्तम्– 'इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा । अस्माकमस्ति सौपर्णं दिव्यं चक्षुर्बलं तथा ।।' इत्यादि रामायणे । [४.५८.३१] दिव्यं चक्षुर्दूरदर्शनमित्यर्थः । 'सहस्रयोजनान्ते तु दूरदर्शनमिष्यत' इति तात्पर्यवचनात् [११.१५.६] । अनेन 'स्वयं गत्वेति शेष' इत्यनन्तभट्टीयव्याख्यानं[१] निरस्तम् । छायाग्रहादिबलवद्बाधकानां सत्वेन तत्र गमनायोगात् ।।५१।।

**वरदराजीया–** अथानन्तरं सः सम्पातिनामा सुतोक्तां स्वस्य सुतेन सुपार्श्वनाम्ना रावणगतिं सीतां गृहीत्वा गगने गमनं दृष्ट्वा स्वात्मानं प्रति उक्तां निवेद्य कपीन् प्रति विज्ञाप्य तथा जनकात्मजायाः

१. मधुटिप्पण्यामुद्धृतं अनन्तभट्टीयवाक्यं तन्मूलकोशेषु इदानीं न दृश्यते ।

सीतायाः आकृतिं प्रतिकृतिं शतयोजनव्यवहिते अशोकवने रावणस्य अशोकाख्यवने निषण्णामुपविष्टां स्वयं दूरात् दृष्ट्वा दूरदर्शित्वसिद्धिमत्वात् स्वस्येति भावः । एभ्यो हरिपुङ्गवेभ्यो वानरश्रेष्ठेभ्यो अवोचदित्यर्थः ।।५१।।

**जनार्दनीया–** अथ श्रीरामकथाश्रवणानन्तरं । स सम्पातिः । सुतेन स्वसुतेन सुपार्श्वेन उक्तां रावणस्य गतिं गमनं निवेद्य उक्त्वा, रावणः सीतां गृहीत्वा अनेन पथा गत इति सुतोक्तां रावणस्य गतिं निवेद्येति भावः । तथा स्वयं च निषण्णां उपविष्टां दृष्ट्वा, माहेन्द्रपर्वतादिति शेषः । एभ्यो हरिपुङ्गवेभ्यः अङ्गदादिभ्यः । इतः मयापि सीता दृश्यते इत्यवोचत् ।।५१।।

**ताम्रपर्णीया–** सुतोक्तां रावणस्य गतिं निवेद्य उक्त्वा । अथाशोकवने निषण्णां जनकात्मजाकृतिं स्वयमपि दृष्ट्वा अवोचदित्यर्थः । निवेद्य ज्ञात्वेति वा ।।५१।।

**चट्टी–** अथ अनन्तरं सः सम्पातिः सुतेन स्वसुतेन सुपार्श्वेन उक्तं रावणस्य गतिं गमनं निवेद्य उक्त्वा तथा स्वयं च अशोकवने निषण्णां उपविष्टां जनकात्मजाकृतिं दृष्ट्वा अत्र स्थित्वैव दिव्यज्ञानचक्षुषा दृष्ट्वेत्यर्थः । तदुक्तम्– 'इह...तथा ।।' इत्यादि रामायणे । एभ्यः हरिपुङ्गवेभ्यः वानरश्रेष्ठेभ्यः इतः मयापि सीता दृश्यते इत्यवोचत् ।।५१।।

**अतिविशद–** ।। **सुतोक्ताम्** ।। स्वत्मानं प्रति स्वसुतेन सुपार्श्वेनोक्तां रावणस्य गतिं निवेद्य स्वयं च अशोकवने निषण्णां जनकात्मजाकृतिं दृष्ट्वा अत्र स्थित्वैव ज्ञानलक्षणेनैव चक्षुषा दृष्ट्वैवावर्णयदित्यर्थः । तदुक्तम्– 'इह...तथा ।।' इत्यादि रामायणे । दिव्यं चक्षुर्दूरदर्शनमित्यर्थः । 'सहस्रयोजनान्तं तु दूरदर्शनमिष्यते' इति तात्पर्यवचनात् । अत्र 'स्वयं गत्वेति शेषः' इत्यपि वदन्ति । तन्निरस्तम् । किञ्च छायाग्रहादिबलवत्प्रतिबन्धकसत्वेन तत्र गमनायोगाच्च ।।५१।।

**प्रमाणसंग्रह–** ।। **दृष्ट्वा जनकात्मजाकृतिं स्वयमेवेति** ।। 'इह...तथा ।।' इत्यादि रामायणे ।

**गूढवाक्यार्थ–** सुतोक्तामात्मानं प्रति स्वसुतोक्तामित्यर्थः । स्वयं गत्वेति शेषः । निवेद्य उक्त्वा ।।

**ततस्तु ते ब्रह्मसुतेन पृष्टा न्यवेदयन्नात्मबलं पृथक्पृथक् ।**
**दशैव चारभ्य दशोत्तरस्य क्रमात्पथो योजनतोऽभियाने ।।५२।।**

**व्यासतीर्थीया–** योजनतो योजनानाम् ।।५२।।

---

१. 'अतियाने' इति वेदाङ्गतीर्थीयजनार्दनीयपाठः ।

**वेदाङ्गतीर्थीया–** ततः ब्रह्मसुतेन पृष्टास्ते योजनतः दशैव चारभ्य क्रमाद् दशोत्तरस्य दशयोजनोत्तरस्य पथः मार्गस्य अतियाने अतिक्रमणे क्षममात्मबलं पृथक्पृथक् न्यवेदयन्निति वाक्यभङ्गः ॥

**वादिराजीया–** योजनतो दशैवारभ्य क्रमाद्दशोत्तरस्य च पथोऽभियान उल्लङ्घन इति सम्बन्धः ॥

**मधुसूदनीया–** ॥ **दशैव चारभ्येति** ॥ योजनत इति सार्वविभक्तिकस्तसिः । दशयोजनतः दशयोजनादारभ्य क्रमात् दशोत्तरस्य दशसङ्ख्याधिकस्य पथोऽभियान इत्यर्थः । अत्र गजो दशयोजनान्याह, गवाक्षो विंशतियोजनान्याहेति विवेको द्रष्टव्यः । इत्यादिश्रुतिसिद्धम् । शतयोजनपर्यन्तं प्लवने स्वशक्तिमूचुरिति भावः । तथाचोक्तम्–

स्वं स्वं गतौ समुत्साहमूचुस्तत्र यथाक्रमम् । गजो गवाक्षो गवयो शरभो गन्धमादनः ॥
मैन्दश्च द्विविदश्चैव सुषेणो जाम्ववांस्तथा । आबभाषे गजस्तत्र प्लवेयं दशयोजनम् ॥
गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् । शरभो वानरस्तत्र वानरांस्तानुवाच ह ॥
त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः । ऋषभो वानरस्तत्र वानरांस्तानुवाच ह ॥
चत्वारिंशद्गमिष्यामि योजनानां प्लवङ्गमाः । वानरस्तु महातेजाः अब्रवीत् गन्धमादनः ॥
योजनानां गमिष्यामि पञ्चाशत्तु न संशयः । मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह ॥
योजनानां वरं षष्टिं अहं प्लवितुमुत्सहे । ततस्तत्र महातेजाः द्विविदः प्रत्यभाषत ॥
गमिष्यामि न सन्देहः सप्ततिं योजनान्यहम् । [१]सुषेणसूनुश्चाशीतिं प्रोक्तवान् कपिसत्तमान् ।
ततो वृद्धतमस्तत्र जाम्बवान्प्रत्यभाषत । पूर्वमस्माकमप्यासीत् कश्चिद्गतिपराक्रमः ।
साम्प्रतं कालभेदान्नो या गतिस्तन्निबोधत । नवतिं योजनानां तु गमिष्यामि न संशयः ॥
तांश्च सर्वान् हरिश्रेष्ठान् जाम्बवान्पुनरब्रवीत् । न खल्वेतावदेवासीद्गमने मे पराक्रमः ॥
मया महाबलेश्चैव यज्ञे विष्णुस्सनातनः । प्रदक्षणीकृतः पूर्वं क्रममाणं त्रिविक्रमम् ॥
स इदानीमहं वृद्धः प्लवने मन्दविक्रमः । प्लवने च तदासीन्मे बलमप्रतिमं पुरा ॥
संप्रत्येतावतीं शक्तिं प्लवने तर्कयाम्यहम् । नैतावता हि संसिद्धिः कार्यस्यास्य भविष्यति ॥
अथोत्तरमुदारार्थं अब्रवीदङ्गदस्तदा । अनुमान्य महाप्राज्ञो जाम्बवन्तं महाकपिः ॥
अहमेतद्गमिष्यामि योजनानां शतं महत् । निवर्तने न मे शक्तिः स्यान्न वेति विनिश्चिता ॥'
[४.६५.१-१९] इत्यादि रामायणे ॥५२-५४॥

---

१. सुषेणस्तु महातेजाः सत्ववान् कपिसत्तमः ॥ अशीतिं प्रतिजानेऽहं योजनानां पराक्रमे । तेषां कथयतां तत्र सर्वांस्ताननुमान्य च । इत्यर्वाचीनपाठः प्रामादिकः । सुषेणस्तु सुग्रीवाज्ञया सीतान्वेषणार्थं दिगन्तरं गतवान् । तत्सूनुः तारः अत्रागतः इति प्रसिद्धमेव । अत प्राचीनपाठ एव साधीयान् ।

**वरदराजीया–** ततस्तदनन्तरं ते वानराः ब्रह्मसुतेन जाम्बवता पृष्टा इतो लङ्कां प्रति प्लवने कस्य कियद्बलमस्तीति पृष्टाः पृथक्पृथक्प्रत्येकं प्रत्येकं आत्मबलं न्यवेदयन् । किं विषये कथं च न्यवेदयन्नित्यत आह– **दशेति** ।। योजनतो योजनानि दशारभ्य दशयोजनमारभ्येत्यर्थः । क्रमात् क्रमेण दशयोजनानि उत्तराणि अधिकानि यस्य स तथा तस्य पथः मार्गस्याभियाने प्लवने विषये आत्मबलं न्यवेदयन्निति पूर्वेणान्वयः ।।५२।।

**जनार्दनीया–** ततः सम्पातिवाक्यश्रवणानन्तरम् । ब्रह्मसुतेन ब्रह्मोद्भवेन जाम्बवता पृष्टाः । लङ्कां प्रति गमनविषये बलं पृष्टाः ते कपयः दशयोजनतः दशयोजनान्यारभ्य क्रमात् दशोत्तरस्य दश दश उत्तराणि अधिकानि यस्य स तथा तस्य । पथः मार्गस्य अतियाने अतिक्रम्य गमने । प्लवन इति यावत् । आत्मबलं स्वस्य बलं पृथक् पृथक् प्रत्येकं प्रत्येकं न्यवेदयन् ।।५२।।

**अनन्तभट्टीया–** योजनतो दशेति सम्बन्धः । अभियाने प्लवने । दशोत्तरस्य दश योजनानि उत्तराणि यस्येति विग्रहः । क्रमात् दश विंशतिः त्रिंशतिरित्येवं रूपादित्यर्थः ।।५२।।

**ताम्रपर्णीया–** योजनतो दशैवारभ्य दशोत्तरस्य पथः अभियाने विषये आत्मबलं पृथक् पृथक् न्यवेदयन्नित्यर्थः ।।५२-५३।।

**चट्टी–** ततस्तदनन्तरम् । ते वानराः ब्रह्मसुतेन ब्रह्मोद्भवेन जाम्बवता पृष्टाः लङ्कां प्रति गमनविषये कस्य कियद्बलमस्तीति पृष्टास्सन्तः । योजनत इति सार्वविभक्तिकस्तसिः । योजनतः योजनानां दशसङ्ख्यामारभ्य क्रमात् दशोत्तरस्य दश दशयोजनानि उत्तराणि अधिकानि यस्य स तथा तस्य पथः मार्गस्य अभियाने आक्रम्य गमने, प्लवन इति यावत् । आत्मबलं स्वस्य बलं पृथक् पृथक् प्रत्येकं न्यवेदयन् ।।५२।।

**अतिविशद–** ।। **दशैव चारभ्येति** ।। योजनत इति सार्वविभक्तिस्तसिः । दशयोजनतः दशयोजनान्याह गजः । गवाक्षो विंशतियोजनान्याह इति विवेको द्रष्टव्यः । तथाचोक्तम्– स्वगतौ... समाव्रजत् ।।' इति हरिवंशे ।

ननु तारस्य बृहस्पत्यवतारत्वेन तदपेक्षया नीचयोरङ्गदजाम्बवतोः चन्द्रयमावतारयोः शतषण्णवति-योजनप्लवनं तदपेक्षया उत्तमस्य तारस्य सप्ततियोजनप्लवनकथनं स्वरूपबलनीचोच्चत्ववैपरीत्याचेति चेत् सत्यम् । अङ्गदस्य चन्द्रावतारत्वेऽपि इन्द्रांशेन शतयोजनप्लवनोपपत्तिः । तदुक्तमाचार्यैः 'इन्द्रोऽङ्गदे चैव ततोऽङ्गदो हि' इति । तारस्य पितुः कपित्वात् जाम्बवतः पितुश्चतुर्मुखत्वात् तारस्य त्रेतायां जातत्वात् जाम्बवतस्तत्पूर्वं जातत्वात् कालपितृदोषेण गुणाभिभवसद्भावेन तारस्य बलाभिभवोपपत्तेः । तदुक्तमाचार्यैः– 'गुणास्तु कालात्पितृमातृदोषात्स्वकर्मतो वाभिभवं प्रयान्ति' इति । विविदस्य तु

इन्द्रावेशेन मैन्दबलाधिक्योपपत्तेः । तदुक्तमाचार्यैः– 'ब्रह्मोद्भवौ तौ पुनरेव सूर्याद्बभूवतुस्तत्र कनीयसस्तु । आवेश ऐन्द्रो वरदानतोऽभूत् ततो बलीयान् विविदो हि मैन्दात् ।।'

ननु तथाभूतसहदेवस्यापि दिग्जयकाले लङ्कागमनप्रतीतेः 'अहोभिः सप्तभिः' इति वाक्ये तेषां पाण्डवानां सप्तसमुद्रतरणं प्रतीयते । ते यथा बाहुभ्यां समुद्रतरणवन्तः तथा विविदादयोऽपि बाहुभ्यामेवाल्पतरणशक्तिमन्तो भूयासुरित्युक्ते किमुत्तरम् । किञ्च न गमनमात्रे जाम्बवता पृष्टास्तन्मात्रेऽस्माकं शक्तिर्नास्तीत्युक्तवन्तः । किं नाम प्लवन एव शक्तिः पृष्टा तत्रैव शक्तिर्नास्तीति तैरुक्तमिति ज्ञायते । अन्यथा 'पुरा त्वहं षण्णवतिप्लवोऽस्मि' 'शतं प्लवेयं न ततोऽभिजाने' इत्यादेरसङ्गतता स्यात् । अपि च प्रियव्रतरथचरणेन समुद्रोत्पत्तिर्भागवते श्रूयते । समुद्राणां पूर्वमुत्पन्नत्वेन कथमेतदित्यतः भाष्यकारैस्तद्विस्तार एव कृत इति सप्रमाणं व्याख्यातम् । तस्य समुद्रविस्तारकर्तुः विविदाद्यपेक्षया अतिनीचत्वं श्रूयते । तथा तत्पुत्राणां सप्तद्वीपपतित्वं श्रूयते च । तत्तु समुद्रतरणं विना अनुपपन्नम् । तेत्वतिनीचाः । अतस्तदपेक्षया अत्युत्तमानामेषां समुद्रतरणे शक्तिर्नास्तीति वदन् देवानां प्रिय एव । अतः अस्माकं शक्तिर्नास्तीति वदतामभिप्रायस्य शक्त्यभाव-प्रमाणगतिः छायाग्रहादिबहुविघ्नसद्भावः कल्प्यः । नान्य इति । अयं भावः । सप्तद्वीपगमनशक्तिमता-मप्येषां शतयोजनगमनशक्त्यभावे निमित्तम्, प्लवनशक्त्यभावः । प्रथमं पाण्डववत्प्लवनाभावेऽपि बाहुभिस्तरणं कुतो न कृतम् । राजसूयकाले सहदेवेन यथा प्लवनं विना लङ्कागमनं कृतं तथा कपिभिः कुतो न कृतम् । लङ्कावासिभिरन्यैर्वा यथा लङ्कागमनं क्रियते तथैभिरपि क्रियतामित्युक्ते मूकीभाव एव । अतः छायाग्रहादिमहाप्रतिबन्धस्तत्र कारणमिति ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ षष्ठोऽध्यायः ।।

**गूढवाक्यार्थ–** दश विंशति त्रिंशदिति आत्मबलं समुद्रलङ्घन इति भावः । योजनतः दशेति सम्बन्धः । अभियाने प्लवने दशोत्तरस्य दशयोजनानि उत्तराणि यस्येति विग्रहः । क्रमात् पृथक्पृथक् आत्मबलं दशयोजनमारभ्य दशोत्तरस्य पथः अभियानविषये स्वं स्वं बलं निवेद्य उक्त्वा क्रमान्यवेदयन्नित्यर्थः ।।

**सनीलमैन्दद्विविदाः सताराः सर्वेऽप्यशीत्याः परतो न शक्ताः ।**
**गन्तुं यदाथात्मबलं स जाम्बवाञ्जगाद तस्मात्पुनरष्टमांशम् ।।५३।।**

**वेदाङ्गतीर्थीया–** पुनरष्टमांशम् । अशीत्या अष्टमांशयुक्तम् । अयं भावः । अशीत्या अष्टमांशो दश । दशयुक्ताशीतिं नवतिमिति यावत् ।।५३-५४।।

**वादिराजीया–** तस्मादशीतिपर्यन्तबलादपि पुनरष्टमांशं अशीत्याः अष्टमोऽंशो दशसङ्ख्याको यस्य बलस्य तदष्टमांशम् । नवतिसङ्ख्याकयोजनोल्लङ्घनमिति यावत् ।।५३।।

**वरदराजीया–** एवं दशयोजनोत्तरमार्गप्लवने नीलमैन्दविविदैः सह वर्तमानाः तारेण च सह वर्तमानाः बलवन्तोऽपि अशीत्याः परतोऽशीतियोजनेभ्यः परतः गन्तुमशक्ता इत्यर्थः । दशोत्तरत्वं च अनेन क्रमेण गजो दशयोजनान्याह । गवाक्षो विंशद्योजनानि, शरभस्त्रिंशद्योजनानि, वृषभः चत्वारिंशद्योजनानि, पञ्चाशद्योजनानि गन्धमादनः, षष्टियोजनानि मैन्दः, सप्ततियोजनानि विविदः तारश्चाशीतियोजनानि गन्तुं बलमाहेति । यदा गजाद्यास्तारान्ताः अशीत्याः परतो गन्तुं न शक्तास्तदा जाम्बवान् तस्मात्पूर्वोक्तबलात् पुनरष्टमांशाधिकं जगाद । अशीत्याः अष्टमांशो दशयोजनानि अशीत्या स्वाष्टमांशयुक्तत्वे नवतियोजनानि सम्पन्नानि । नवतियोजनान्युत्प्लाव्य गन्तुं बलमस्तीति जाम्बवतोक्तमिति भावः ।।

**जनार्दनीया–** नीलाद्यैः सहिताः । तारेण सहिताः । सर्वे कपयोऽपि । अशीत्याः अशीतियोजनेभ्य इत्यर्थः । परतः उत्तरत्र । गन्तुं प्लवनार्थं यदा शक्ताः न बभूवुः । अथ तदा । सः पूर्वं यः बलं पृष्टवान् स जाम्ववान् तस्मादशीतियोजनपरिमाणात् पुनः उत्तरं अष्टमांशं दशयोजनाधिकं आत्मवलं जगाद । नवतियोजनगमनशक्तिं जगादेति भावः । 'साम्प्रतं प्लवने शक्तिं नवतिं प्रतितर्कये' इत्यार्षे ।।५३।।

**अनन्तभट्टीया–** गन्तुं... * योजनेभ्यः उपरि स्थितम् । ...केचन... ।।५३।।

**चट्टी–** एवं दशयोजनोत्तरमार्गप्लवने नीलाद्यैस्सहिताः तारेण च सहिताः सर्वे कपयोऽपि अशीत्याः अशीतियोजनेभ्य इत्यर्थः । परतः उत्तरत्र गन्तुं प्लवनार्थं यदा शक्ताः न बभूवुः । दशोत्तरत्वश्च अनेन क्रमेण । गजो दशयोजनान्याह । गवाक्षो विंशतियोजनानि, शरभः त्रिंशद्योजनानि, ऋषभः चत्वारिंशत्, गन्धमादनः पञ्चाशत् योजनम्, मैन्दः षष्टियोजनानि, विविदः सप्ततियोजनानि, तारश्च अशीतियोजनानि गन्तुं बलमाहेति । तदुक्तम्– 'आबभाषे गजस्तत्र प्लवेयं दश योजनम् । गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् ।।' इत्यादि । अथ तदा सः । जाम्बवान् तस्मात् अशीतियोजनपरिमाणात् पुनः उत्तरं अष्टमांशदशयोजनाधिकं आत्मबलं जगाद । नवतियोजनगमनशक्तिं जगादेति भावः । तदुक्तम्– 'ततो वृद्धतमस्तत्र जाम्बवान् प्रत्यभाषत । पूर्वमस्माकमप्यासीत् कश्चिद्गतिपराक्रमः ।।' इत्यादि रामायणे ।।५३।।

**गूढवाक्यार्थ–** तस्मादशीतियोजनेभ्यः अष्ट.... *दशेत्यर्थः ।।५३।।

**[१]बलेर्यदा विष्णुरवाप लोकांस्त्रिभिः क्रमैर्नन्दिरवं प्रकुर्वता ।**
**तदा मया भ्रान्तमिदं जगत्त्रयं सवेदनं जानु ममास मेरुतः ।।५४।।**

१. 'मया वैरोचने यज्ञे प्रभविष्णुः सनातनः । प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमम् ।।' इति वा.रा.४.६५.१५

**वादिराजीया–** नन्दिरवं नन्दः आनन्दो मूलकारणमस्तीति नन्दी स चासौ रवश्चेति विग्रहः । आनन्दपारवश्येन कृतं विजयघोषणमिति यावत् ।।५४।।

**वरदराजीया–** तथापि निसर्गत एतावदेव आसीदिति न मन्तव्यमित्याह– **बलेरिति** ।। यदा विष्णुर्वामनो भूत्वा बलेः सकाशात् त्रिभिः क्रमैः विक्रमणैः लोकानवाप आप्तवान् तदा नन्दिरवं उत्सवघोषं विष्णुना लोकत्रयं गृहीतमिति महोत्सवेनोच्चैः शब्दं कुर्वता मया इदं जगत्त्रयं भ्रान्तमित्यर्थः । तस्यां दशायां सम्भ्रमेण परिभ्रमतो मम मेरुशृङ्गाभिघातात् जानुमण्डलं सवेदनं वेदनासहितं आस बभूव ।।

**जनार्दनीया–** इदानीं मम पूर्वसंमितं बलं नास्तीति वक्तुं तत्कारणमाह– **यदेत्यादिना** ।। विष्णुर्वामनात्मा बलेः प्रह्लादपौत्रात् बलिनाम्नः । लोकान् भूरादिलोकान् । त्रिभिः क्रमैः पदविक्षेपैः यदा अवाप । तदा नन्दिरवं सन्तोषध्वनिं प्रकुर्वता मया इदं जगत्त्रयं भ्रान्तम् । इतस्ततः परिभ्रमणं कृतमित्यर्थः । मेरुतः मेरुपर्वतघातादित्यर्थः । मम जानु ऊरुपर्व सवेदनं व्यथासहितं आस यतः ।।

**ताम्रपर्णीया–** नन्दिरवं नन्दः आनन्दः सोऽस्यास्ति कारणमिति नन्दी स चासौ रवश्चेति विग्रहः । आनन्दपारवश्येन जातं रवमित्यर्थः ।।५४।।

**चट्टी–** पूर्वसम्मितं बलमिदानीं मम नास्तीति वक्तुं तत्कारणमाह– **बलेरिति** ।। विष्णुः वामनो भूत्वा प्रह्लादपौत्रात् बलिनाम्नः सकाशात् लोकान् भूरादिलोकान् त्रिभिः क्रमैः पादविक्षेपैः यदा अवाप । तदा नन्दिरवं नन्दिनं सर्वलोकसुखकरम्, 'नद हर्षे' इति धातोः । रवं भेरीरवं प्रकुर्वता मया इदं जगत्त्रयं भ्रान्तं इतस्ततः परिभ्रमणं कृतमित्यर्थः । मेरुतः मेरुपर्वतशृङ्गघातादित्यर्थः । मम जानु सवेदनं वेदनसहितं आस । तथा चोक्तं वामनेन जाम्ववन्तं प्रति– 'मच्छासनं.... समाश्रयत् ।।' इति हरिवंशे ।।

**गूढवाक्यार्थ–** नन्दिरवं आनन्दपारवश्येन जातं रवमित्यर्थः । उत्सवघोषम् ।।५५।।

**अतो जवो मे न हि पूर्वसम्मितः पुरा त्वहं षण्णवतिप्लवोऽस्मि ।**
**ततः कुमारोऽङ्गद आह चास्माच्छतं प्लवेयं न ततोऽभिजाने ।।५५।।**

**व्यासतीर्थीया–** अस्मात् स्थानात् ।।५५।।

**वेदाङ्गतीर्थीया–** अस्मात् पर्वतात् । ततः गमनानन्तरं नाभिजाने सीतामार्गणादिकार्याक्षमत्वादिति शेषः ।।५५-५६।।

**वादिराजीया–** अस्मान्महेन्द्रगिरेः शतं योजनशतं प्लवेयम् । ततः अनन्तरं नाभिजाने रावणदुर्गं प्रवेष्टुं राक्षसैः सह सङ्गरं कर्तुं परावृत्यागन्तुं चेति योग्यपदाध्याहरेण सम्बन्धः ।।५५-५८।।

**मधुसूदनीया–** ।। **अतो जव इति** ।। ननु षण्णवतियोजनप्लवनशक्तिमतो जाम्ववतः पूर्वं जगत्त्रयसंचारः कथमित्यतो वामनवरसद्भावात् इति प्रसिद्धमित्याह– **हीति** ।। तदुक्तम्– 'अभयं चामरत्वं च ददौ जाम्बवते हरिः' इत्यादि हरिवंशेषु । ननु तारस्य बृहस्पत्यवतारत्वेन तदपेक्षया नीचयोरङ्गद-जाम्बवतोश्चन्द्रयमावतारयोः शतषण्णवतियोजनप्लवनं तदपेक्षयोत्तमस्य तारस्य अशीतियोजनप्लवनमिति कथम् । तथा समानयोर्मैन्दद्विविदयोः मध्ये मैन्दस्य षष्टियोजनप्लवनं द्विविदस्य सप्ततियोजनप्लवनं कथं स्वरूपबले वैपरीत्यं नीचोच्चत्वश्चेति सत्यम् । अङ्गदस्य चन्द्रावतारत्वेऽपि इन्द्रावेशवत्वेन शतयोजनप्लवनोपपत्तिः । तदुक्तमाचार्यैः– 'इन्द्रोङ्गदे चैव ततोङ्गदो बली' इति । तारस्य पितुः कपित्वात् जाम्बवतः पितुः चतुर्मुखत्वात् । तारस्य त्रेतान्त्यजत्वात् जाम्बवतस्तत्पूर्वं जातत्वात् कालपितृदोषेण गुणाभिभवसद्भावेन तारस्य बलाभिभवोपपत्तेः । तदुक्तमाचार्यैः– 'गुणास्तु कालात् पितृमातृदोषात् स्वकर्मतो वाऽभिभवं प्रयान्ति' इति । विविदस्य तु इन्द्रावेशसद्भावेन मैन्दाद्बलाधिक्योपपत्तेः । तदुक्तमाचार्यैः– 'ब्रह्मोद्भवौ तौ पुनरेव सूर्याद्बभूवतुस्तत्र कनीयसस्तु । आवेश ऐन्द्रो वरदानतोऽभूत्ततो बलीयान् द्विविदो हि मैन्दात्' इति ।।५५-५६।।

**वरदराजीया–** अतः कारणान्मे जवो वेगः पूर्वसम्मितः पूर्वतनवेगसमानो नास्ति । तर्हि पूर्वं कियान्वेग आसीदित्यत आह– **पुरेति** ।। पुरा निसर्गतः षण्णवतिप्लवः षडधिकनवतियोजनानि प्लवने असौ तादृशोऽस्मि आसम् । इदानीं तु वेदनया क्षीणत्वात् नवतिप्लव एव जातोऽस्मीति भावः । ततस्तदनन्तरं कुमारो युवराजः अङ्गद आह । किमिति । अस्मात् स्थानात् शतं शतयोजनानि प्लवेयं ततः स्थानात् पुनरागन्तुं नाभिजाने । ततो गमनानन्तरं प्राप्तं कार्यं कर्तुं नाभिजाने इति वा इत्याहेति सम्बन्धः ।।५५।।

**जनार्दनीया–** अतः कारणात् । पूर्वसम्मितः पूर्वतनवेगसदृशो जवो न हि । अहं पुरा षण्णवतिप्लवः षड्भिरधिकनवतियोजनप्लवोऽस्मि । ततः जाम्बवदनन्तरम् । कुमारः युवराजः अङ्गद आह । किमिति । अहं अस्मात् माहेन्द्रपर्वतात् शतं शतयोजनानि प्लवेयम् । ततः उल्लङ्घनानन्तरं नाभिजाने सीतान्वेषणादि कृत्वा प्रत्यागन्तुं शक्तिर्भविष्यति न वेति न वेद्मि । तदुक्तं सङ्ग्रहे– 'योजनानां शतं गन्तुं शक्तिं मे निश्चिनोम्यहम् । न निश्चिनोमि विक्रम्य प्रत्यायातुं प्लवङ्गमाः ।।' इति [कि.का.८.५३] ।।५५।।

**ताम्रपर्णीया–** अस्मान्माहेन्द्रगिरेः ।।५५-५८।।

**चट्टी–** यतः मे जानु सवेदनं आस । अतः कारणात् पूर्वसम्मितः पूर्वतनवेगसदृशो जवः वेगः न हि । तर्हि पूर्वं कियान्वेग आसीदित्यत आह– **पुरेति** ।। पुरा तु अहं षण्णवतिप्लवः षड्भिरधिकनवतियोजन-प्लवः अस्मि । ततः तदनन्तरं कुमारः युवराजः अङ्गदः आह । किमिति । अहं अस्मान्माहेन्द्रपर्वतात् शतं

शतयोजनानि प्लवेयम् । ततः उत्प्लवानन्तरं सीतान्वेषणं कर्तुं पुनः आगन्तुं च नाभिजाने । न वेद्मि इत्याहेति सम्बन्धः । तदुक्तं सङ्ग्रहे– 'योजनानां शतं गन्तुं शक्तिं मे निश्चिनोम्यहम् । न निश्चिनोमि विक्रम्य प्रत्यायातुं प्लवङ्गमाः ।।' इति ।।५५।।

**प्रमाणसंग्रह–** ।। **नन्दिरवं प्रकुर्वता इति** ।। 'जाम्ववान् ऋक्षराजस्तु भेरीशब्दैर्मनोजवः । विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ।।' इति भागवते [८.२०.९] । तथा हरिवंशे जाम्ववन्तं प्रति वामनवाक्यम्– 'मच्छाशसनं...बहु ।।' इति हरिवंशे । 'अहमेतद्गमिष्यामि योजनानां शतं तथा । निवर्तने न मे शक्तिः..।।' इति रामायणे अङ्गदवचनम् ।।५५।।

**गूढवाक्यार्थ–** शतयोजनं शतयोजनेभ्यः परतःस्थितम् । अस्मात् माहेन्द्रात् ।।५५।।

**आपूरिते तैः सकलैः शतस्य गमागमे शत्रुबलं च वीक्ष्य ।**
**सुदुर्गमत्वं च निशाचरेशपुर्याः स धातुः सुत आबभाषे ।।५६।।**

**सत्याभिनवीया–** तत्रैव आपूरिते इति श्लोके आपूरिते तैः सकलैः शतस्य गमागमे इत्यस्य तैः सकलैः शतस्य गमनागमनसामर्थ्यमस्माकमस्तीत्युक्ते सतीति तात्पर्यार्थः । तेन शतयोजनगमनागमनाभावात् शतस्य गमागमे आपूरिते इति कथनमनुपपन्नमिति शङ्कानवकाशः । यद्यपि अङ्गदेनैव शतयोजनगमनसामर्थ्यमस्तीति कण्ठत उक्तम् । आगमनसामर्थ्यमर्थादुक्तम् । तथापि छत्रिन्यायेन तैः सकलैरित्युक्तम् ।।५६।।

**वरदराजीया–** एवं तैः सकलैः कपिभिः शतस्य शतयोजनानां गमनागमने आपूरिते ईषत्पूरिते सति वहूनां शतयोजनप्लवने शक्तिरेव नास्ति । कस्यचिद्गमने शक्तावपि पुनरागमने शक्तिर्नास्ति । एवं सर्वैः शतयोजनानां गमनागमने आपूरिते सतीति भावः । शत्रोः रावणस्य बलं समीक्ष्य निशाचरेशस्य रावणस्य पुर्याः लङ्कायाः सुदुर्गमत्वं अत्यन्तं गन्तुमशक्यत्वं च वीक्ष्य स धातुः ब्रह्मणः सुतो जाम्बवानाबभाषे ।।५६।।

**जनार्दनीया–** तैः शतस्य शतयोजनात्मकस्य । गमागमे गमसहित आगमः गमागमस्तस्मिन् । आपूरिते ईषत्पूरिते सति । अङ्गदेन शतस्य पूरितत्वादन्यैश्च न्यूनस्य पूरितत्वात् गमनागमनं च आपूरितमिति भावः । स धातुः सुतः जाम्ववान् शत्रुवलं रावणवलम् । चशब्दात् गमसहित आगमस्तस्मिन् गमनागमनयोः शत्रुवदन्तरभाविविघ्नं च ग्राह्यम् । 'प्लवनं कुर्वतोऽपि स्युरन्तरायाः किलान्तरे' इति [कि.का.८.५६] संग्रहात् । वीक्ष्य पुर्याः लङ्कायाः सुदुर्गमत्वमत्यगम्यत्वं च वीक्ष्य आबभाषे ।।५६।।

**चट्टी–** एवं तैः सकलैः कपिभिः शतस्य शतयोजनानां गमागमे गमनागमने गमसहितः आगमः गमागमः । तस्मिन् आपूरिते सति । बहूनां शतयोजनप्लवने शक्तिरेव नास्ति । कस्यचिच्छक्ति सत्यामपि पुनरागमने शक्तिर्नास्ति । एवं सर्वैः शतयोजनानां गमनागमने आपूरिते सतीति भावः । धातुः सुतः ब्रह्मपुत्रः जाम्बवान् शत्रुबलं रावणबलं च वीक्ष्य निरीक्ष्य निशाचरेशस्य पुर्याः लङ्कायाः सुदुर्गमत्वं अत्यगम्यत्वं च वीक्ष्य बभाषे । यद्वा गमागमे गमनागमनविषये शत्रुबलादन्तराभावि विघ्नं च तिष्ठति । तथा चोक्तं संग्रहे 'प्लवनं कुर्वतोऽपि स्युरन्तरायाः किलान्तरे' इति ।।५६।।

**भारतश्री–** धातुः विरिञ्चस्य ।।५६ ।।

**अयं हि गृध्रः शतयोजनं गिरिं त्रिकूटमाहेत उतात्र विघ्नाः ।**
**भवेयुरन्येऽपि ततो हनूमानेकः समर्थो न परोऽस्ति कश्चित् ।।५७।।**

**वेदाङ्गतीर्थीया–** अन्येऽपि सुदुर्गमत्वादेरन्येऽपि ।।५७।।

**सत्याभिनवीया–** तदनन्तरमेव अयं हि गृध्र इति श्लोकः । तस्यार्थः । अयं गृध्रः सम्पाती लङ्काप्राकाररूपं त्रिकूटं गिरिं इतः प्रदेशात् शतयोजनं शतयोजनप्रदेशस्थितं आह । अत्र गमनवेलायां उत गमनानन्तरं च अन्ये च अलौकिका विघ्ना भवेयुरित्यप्याह । ततः तेषां कपीनां मध्ये हनूमान् एकः शतयोजनगमने विघ्ननिवारणे च समर्थः । हनूमतः परः अन्यः कश्चित् समर्थो नास्तीति एतत् हि प्रसिद्धमिति । एतेन विघ्ना भवेयुरित्येतावता पूर्णत्वात् अन्ये इत्येतत् व्यर्थमिति दूषणं निराकृतम् । एतेषां विघ्नानां लोकप्रसिद्धविघ्नवैलक्षण्यं वक्तुं अन्ये इत्युक्तमित्यभ्युपगमात् । एतेनैव अयं गृध्र इत्याद्युक्तार्थस्य हनूमान् समर्थ इत्यत्र हेतुत्वाभावात् ततो हनूमान् समर्थ इत्येतदयुक्तमिति दूषणं निरस्तम् । तत इत्यनेन हनूमान् समर्थः इत्यत्र अयं हि गृध्र इत्याद्युक्तार्थस्य हेतुत्वमुच्यते इत्यनभ्युपगात् ।।५७।।

**मधुसूदनीया–** ।। **अयं हि गृध्र इति** ।। त्रिकूटं गिरिं लङ्काश्रयं त्रिकूटाख्यं गिरिं पर्वतं शतयोजन-दूरमाहेत्यन्वयः । तदुक्तम्– 'कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् । संपश्य लङ्कां वैदेहि निर्मितां विश्वकर्मणा ।।' इत्यादि रामायणे [६.१२३.३] ।।५७–५९।।

।। इति श्रीमद्विद्याधीशतीर्थपूज्यपादशिष्येण मधुसूदनभिक्षुणा विरचिते श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे षष्ठोऽध्यायः ।।

**वरदराजीया–** किमिति । अयं गृध्रः सम्पातिनामा इतः स्थानाच्छतयोजनव्यवहितदेशे स्थितं त्रिकूटं लङ्काप्राकाररूपं गिरिं आह । अत्र मार्गे विघ्नाः उतापि अन्येऽपि भवेयुः । तत्तस्माद्धनुमानेक एव समर्थः अपरः कश्चिन्नास्ति ।।५७।।

**जनार्दनीया–** किमिति ? अयं गृध्रः सम्पातिः । शतयोजनं शतयोजनव्यवधाने स्थितं त्रिकूटं गिरिं लङ्कायाः परिवेषतया स्थितं त्रिकूटं नाम गिरिं आह । उत अत्र गमने अन्येऽपि विघ्नाः भवेयुः यस्मात् तस्मात् ।।५७।।

**चट्टी–** किमिति । अयं गृध्रः सम्पाती इतस्स्थानात् त्रिकूटं गिरिं लङ्काश्रयं त्रिकूटाख्यं पर्वतं शतयोजनदूरगतं आहेत्यन्वयः । तदुक्तम्– 'कैलास...विश्वकर्मणा ।।' इति रामायणे ।। उत अत्र मार्गे अन्येऽपि विघ्नाः भवेयुः । यस्मात् तत् तस्मात् हनुमान् एक एव समर्थः । परः कश्चिदपि समर्थो नास्ति ।।

**प्रमाणसंग्रह–** ।। **अयं हि गृध्र इति** ।। गिरिं लङ्काश्रयं त्रिकूटाख्यं पर्वतं शतयोजनमाहेत्यन्वयः । तदुक्तम्– 'कैलैस...विश्वकर्मणा ।।' इति रामायणे ।। 'योजनानि...अशीतिं... ।। इत्यादि रामायणे ।।

**गूढवाक्यार्थ–** अन्ये विघ्नाः ।।५७।।

**उक्त्वा स इत्थं पुनराह सूनुं प्राणस्य निःसीमबलं प्रकाशयन् ।**
**त्वमेक एवात्र परं समर्थः कुरुष्व चैतत्परिपाहि वानरान् ।।५८।।**

**वेदाङ्गतीर्थीया–** प्राणस्य सूनुम् । निःशीमबलं हनूमतः । परं केवलम् । अत्र एतत्कार्यसाधने ।।

**सत्याभिनवीया–** तदनन्तरमेव उक्त्वा स इत्थं पुनराह.... इति श्लोकः तस्यार्थः । सः जाम्ववान् इत्थं सर्वान् प्रत्युक्त्वा प्राणस्य सूनोः निस्सीमबलं पुनः प्रकाशयन् त्वमेक एव अत्र लङ्कागमने विघ्ननिवारणे च परं अतिशयेन समर्थः । अत एव एतत्कार्यं कुरुष्व । वानरान् परिपाहि चेति प्राणस्य सूनुं हनूमन्तं प्रत्याहेति । एतेन पूर्वं प्राणस्य सूनुं प्रति अनुक्तत्वात् प्राणस्य सूनुं पुनराहेति कथनमनुपपन्नमिति दूषणस्यानवकाशः । पुनश्शब्दस्य प्रकाशयन् इत्यनेनैवान्वयः । न तु आहेत्यनेनान्वयः इत्युररीकरणात् । हनुमन्निस्सीमबलप्रकाशनस्य ततो 'हनुमान् एकः समर्थः न परोऽस्ति कश्चित्' इत्यनेन कृतत्वात् त्वमेक एवात्र परः समर्थः कुरुष्व चैतत्परिपाहि वानरान् इत्यत्रापि क्रियमाणत्वात् हनुमान्निस्सीमबलं पुनः प्रकाशयन् इत्युक्तमिति ।।५८।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां षष्ठोऽध्यायः ।।

**वरदराजीया–** स जाम्बवानित्थमुक्त्वा प्राणस्य वायोः सूनुं हनूमन्तं पुनराह । किं कुर्वन् । हनूमतः निस्सीमबलं अपरिमितं बलं प्रकाशयन्नित्यर्थः । किमित्याह । अत्र कार्ये त्वमेक एव परः समर्थः । अत एव तत्कार्यं कुरुष्व वानरांश्च परिपाहि इत्याहेति सम्बन्धः ।।५८।।

**जनार्दनीया–** स जाम्बवान् । इत्थं उक्त्वा, प्राणस्य वायोः निस्सीमबलं यस्य स तथा तम् । प्राणस्य सूनुं प्रकाशयन् यशसाऽभिपूरयन्नित्यर्थः । आह । अत्र सीतान्वेषणकार्ये परं समर्थः अतिसमर्थः । एतत् कार्यम् ।।५८।।

**चट्टी–** सः जाम्बवान् इत्थं उक्त्वा प्राणस्य वायोः सूनुं हनुमन्तं निर्गतः सीमा अवधिः यस्मात् निस्सीमं बलं यस्य स तथा । तं अपरिमितबलं प्रकाशयन्नित्यर्थः । पुनराह । किमिति । अत्र सीतान्वेषणकार्ये त्वमेक एव परं केवलं समर्थः । अत एव एतत्कार्यं कुरुष्व । वानरांश्च परिपाहीति ।।

**इतीरितोऽसौ हनुमान्निजेप्सितं तेषामशक्तिं प्रकटां विधाय ।**
**अवर्धताशु प्रविचिन्त्य रामं सुपूर्णशक्तिं चरितोस्तदाज्ञाम् ।।५९।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये श्रीरामचरिते समुद्रतरणनिश्चये षष्ठोऽध्यायः ।।

**व्यासतीर्थीया–** चरितोश्चरितुम् । तोसुन्प्रत्ययान्तोऽव्ययः ।।५९।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां षष्ठोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** निजेप्सितं स्वाभिलषितं इतीरितः असौ हनुमानवर्धत । तदाज्ञां चरितोः कर्तुमीश्वरः । 'ईश्वरे तोसुन्कसुनौ' [पा.३.४.१३] इति तोसुन् प्रत्ययः ।।५९।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां षष्ठोऽध्यायः ।।

**वादिराजीया–** निजेप्सितमीरित इति सम्बन्धः । तदाज्ञां रामस्याज्ञां चरितोः आचरितुम् । तुमर्थे तोसन्तं वैदिकं पदम् । चरितुं तदाज्ञामिति वक्तुं शक्यत्वेऽपि चरितोरिति वदन् ग्रन्थकारः स्वस्य वैदिकपदप्रयोगप्रचुरवचनरचनाप्रियत्वं स्पष्टयति ।।५९।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां षष्ठोऽध्यायः ।।

**वरदराजीया–** निजेप्सितं कार्यं प्रतीरितोऽसौ हनूमान् तेषां वानराणां अशक्तिं प्रकटां स्पष्टां विधाय सुपूर्णशक्तिं परिपूर्णशक्तिं रामं प्रविचिन्त्य ध्यात्वा, तस्य रामस्य आज्ञां चरितोः कर्तुम् । चरितोरिति तुमर्थे तोसुन् प्रत्ययान्तमव्ययम् । आशु वेगेनावर्ध्त्त समुद्रमुत्प्लाव्य गन्तुमिति शेषः ।।५९।।

श्रीमद्भारततात्पर्यनिर्णयाध्याय एव हि । षष्ठस्स्पष्टीकृतस्तावत् प्रीत्यै माधवमध्वयोः ।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुबोधिन्यां षष्ठोऽध्यायः ।।

**जनार्दनीया–** निजेप्सितं स्वाभिलषितं प्रति एतत्कुरुष्वेति इतीरितोऽसौ हनुमान् । तेषां कपीनाम् । रामं प्रविचिन्त्य, तस्य रामस्याज्ञां चरितोः कर्तुं अवर्धत ववृधे । चरितोरिति तुमर्थे तोसुन् प्रत्ययः ।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात् ।
पूर्तिं तस्य कृतौ सतां सुखकरोऽध्यायः सुषष्ठः शुभः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां षष्ठोऽध्यायः ।।

**अनन्तभट्टीया–** निजेप्सितं प्रतीति शेषः । चरितोः कर्तुम् ।।५९।।

।। इति श्रीमुष्णं अनन्तभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां तन्त्रमालायां(सत्तत्वमालायां) षष्ठोऽध्यायः ।।

**ताम्रपर्णीया–** निजेप्सितं प्रति ईरितमिति सम्वन्धः । चरितोश्चरितुम् । तोसुन्प्रत्ययान्तोऽयं शव्दः ।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) षष्ठोऽध्यायः ।।

**चट्टी–** निजेप्सितं स्वाभिलषितं प्रति ईरितः असौ हनुमान् तेषां कपीनामशक्तिं प्रकटां विधाय सम्पूर्णशक्तिं श्रीरामं प्रविचिन्त्य ध्यात्वा तस्य रामस्य आज्ञां सीतान्वेषणरूपां चरितोः कर्तुं आशु अवर्धत ववृधे । चरितोरिति तुमर्थे तोसुन्प्रत्ययान्तमव्ययम् । आशु वेगेन अवर्धत, समुद्रमुत्प्लाव्य गन्तुमिति शेषः ।।५९।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां षष्ठोऽध्यायः ।।

**भारतश्री–** चरितोः तोसुन्प्रत्ययान्तमव्ययम् ।।

।। इति श्रीडम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां षष्ठोऽध्यायः ।।

**प्रमाणसंग्रह– ।। तेषामशक्तिं प्रकटां विधाय इति ।।**

'विनतस्य सुपर्णस्य तथा शतवलेरपि । तथा तत्परिवाराणां कपीनां रामसेविनाम् ।।
अत्यायामसमुद्राणां तरणे शक्तिरूर्जिता । इच्छया रामदेवस्य तदासीत्करुणात्मनः ।
हनूमतश्च सामर्थ्यज्ञापनार्थं [प्राकट्याय]महात्मनः । अङ्गदादिकपीन्द्राणां लवणांबुधितारणे ।
नैवासीत् तादृशी शक्तिः रामस्यैवाज्ञया तदा । अतः सर्वकपीन्द्राणां लवणाम्बुधितारणे ।
असामर्थ्यज्ञापनार्थं रामस्सेतुं बबन्ध ह ।' इति स्कान्दे ।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे षष्ठोऽध्यायः ।।

**गूढवाक्यार्थ–** चरितोः चरितुं कर्तुम् ।।५९।।

।। इति विठ्ठलाचार्यतनूजेन नरसिंहाचार्येण रचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां गूढवाक्यार्थविवृतौ षष्ठोऽध्यायः ।।

**।। श्रीकृष्णार्पणमस्तु ।।**

★★★★★

# ।। सप्तमोऽध्यायः ।।

**रामाय शाश्वतसुविस्तृतषड्गुणाय सर्वेश्वराय बलवीर्यमहार्णवाय ।**
**नत्वा[१] लिलङ्घयिषुरर्णवमुत्पपात निष्पीड्य तं गिरिवरं पवनस्य सूनुः ।।१।।**

**व्यासतीर्थीया–** सुन्दरकाण्डकथामाह । प्रस्तुतकार्यानुसारेण रामं स्तुवन् प्रणमति– **रामायेति** ।। रामं नत्वेति । षड्गुणान् लेशतो दर्शयतोक्तम्– **सर्वेति** ।।१-४।।

**वादिराजीया–** ऐश्वर्यबलवीर्याणां षड्गुणेष्वन्तर्भावेऽपि प्रबलदैत्यपुरप्रवेशे सर्वेश्वरप्रसादाभिव्यक्त-स्वबलवीर्ययोरेवान्तरङ्गत्वात्सर्वेश्वराय बलवीर्यमहार्णवायेत्यैश्वर्यादित्रयस्य पृथगुक्तिरिति ज्ञेयम् ।।१-२।।

**सत्याभिनवीया–** रामाय शाश्वतसुविस्तृत... इति श्लोके सर्वेश्वराय बलवीर्यमहार्णवायेत्यस्य सर्वे हनुमदादिभक्ताः ईश्वराः यस्मात् भवन्ति, स सर्वेश्वरः तस्मै सर्वेश्वराय । हनुमदादिभक्ताः बलवीर्याभ्यां महार्णवा यस्मात् भवन्ति स बलवीर्यमहार्णवस्तस्मै इत्यर्थः । एतेन शाश्वतसुविस्तृतषड्गुणायेत्यत्र उक्तानां षड्गुणानां मध्ये ऐश्वर्यस्य वीर्यस्य प्रविष्टत्वात् सर्वेश्वरायेत्येतत् बलवीर्यमहार्णवायेत्यत्र वीर्यायेत्येतच्च पुनरुक्तमिति शङ्का परास्ता । सर्वेश्वरायेत्यनेन ऐश्वर्यप्रदत्वमेवोच्यते, न तु ऐश्वर्यवत्वम् । बलवीर्यमहार्णवायेत्यनेन बलवीर्यप्रदत्वमेवोच्यते, न बलवीर्यवत्वमुच्यते इत्यभ्युपगमात् ।।१।।

**मधुसूदनीया–** तं गिरिवरं माहेन्द्रम् ।।१-२।।

**वरदराजीया–** ।। **रामायेति** ।। पवनस्य वायोः सूनुः हनूमान् अर्णवं समुद्रं लिलङ्घयिषुर्लङ्घितु-मिच्छुः । शाश्वताः नित्या सुविस्तृता व्याप्ताः षड्गुणैश्वर्यादयो गुणा यस्य तस्मै सर्वेषां ब्रह्मादीनां ईश्वराय बलं शक्तिः वीर्यं पराक्रमः ताभ्यां महार्णव इव तस्मै रामाय नत्वा, तं माहेन्द्रगिरिश्रेष्ठं निष्पीड्य उत्प्लवनस्य समये पद्भ्यामिति शेषः । उत्पपात पुप्लुवे ।।१।।

---

१. नत्वा इत्युपलक्षणम् । पूर्वापरकलाविकलेऽपि काले स्मरन्, तन्नाम जपन्नित्यपि ग्राह्यम् । तथाहि नरसिंहपुराणे– 'कथमत्रागतो वीर त्वमुत्तीर्य महोदधिम्' इति जानक्या पृष्टो हनुमान् प्राह- 'मयोत्तीर्णं गोष्पदवत् समुद्रोऽयं वरानने । जपता राम रामेति सागरो गोष्पदायते' ।। इति नृसिंहपुराणे [५८.३८-३९] 'ततो रावणनीतायाः सीतायाः शत्रुकर्षनः । इयेष पदमन्वेष्टुं चरणाचरिते पथि ।। मध्ये सागरमुत्पन्ना अन्तरायाः पृथक् पृथक् । तानि सर्वाणि नष्टानि दानमश्रोत्रिये यथा ।। श्रीरामसेविनां नृणां न कदाचित् भयं प्रिये । श्रीरामस्मरणादेव तरन्ति भवसागरम् ।। रामाङ्कितकरो वार्धिं तीर्णवान् चित्रमेव हि ।।' इति स्कान्दे उमासंहितायां ११अध्याये ।

**जनार्दनीया–** सुन्दरकाण्डकथां निरूपयति– **रामायेति** ।। अर्णवं लिलङ्घयिषुः लङ्घितुमिच्छुः पवनस्य सूनुः । शाश्वताः शश्वदेकप्रकाराः सुविस्तृताः सर्वदेशकालेषु परिच्छेदशून्याः षड्गुणाः ऐश्वर्यादिविज्ञानान्ताः यस्य स तथा तस्मै । वीर्यं पराक्रमः । रामाय नत्वा, तं गिरिवरं महेन्द्रं निष्पीड्य, पादाभ्यामिति शेषः । उत्पपात पुप्लुवे ।।१।।

**ताम्रपर्णीया–** षड्गुणानेव लेशतो दर्शयति– **सर्वेश्वरायेत्यादिना** ।।१।।

**चट्टी–** सुन्दरकाण्डकथामाह । प्रस्तुतकार्यानुसारेण रामं स्तुवन् प्रणमति– **रामायेति** ।। पवनस्य वायोः सूनुः हनुमान् अर्णवं समुद्रं लिलङ्घयिषुः लङ्घितुमिच्छुः । शाश्वताः शश्वदेकप्रकाराः नित्या इत्यर्थः । सुविस्तृताः सर्वदेशकालेषु परिच्छेदशून्याः व्याप्ता इत्यर्थः । षड्गुणाः ऐश्वर्यादयः यस्य स तथा तस्मै सर्वेषां ब्रह्मादीनां ईश्वराय । बलं शक्तिः वीर्यं पराक्रमः ताभ्यां महार्णवः इव तस्मै । रामाय रामं नत्वा तं गिरिवरं माहेन्द्रं निष्पीड्य उत्प्लवनसमये पद्भ्यामिति शेषः । उत्पपात पुप्लुवे ।।१।।

**भारतश्री–** सुविस्तृतषड्गुणाय सन्ध्यादिषड्गुणा सुविस्तृता येन स तथा तस्मै रामाय । रामं 'व्यत्ययो अतिशये' इति सूत्रात् । अत एव सुग्रीवसमाश्रयणादिकं न कृतवान् । बलवीर्ये तूपलक्षणम् । तयोरेवात्रापेक्षितत्वात् तद्ग्रहणम् ।।१-२।।

**भावचन्द्रिका–** क्रतौ दीक्षणीये इष्ट्यादौ पुण्याहवाचनवत् रामनमनमाचरति– **रामायेति** ।। 'क्रतुमिव हरितुष्ट्यै विक्रमं कर्तुकामः प्लुतिमथ स करिष्यन् दीक्षणीयामिवेष्टिम् । रघुकुलतिलकं श्रीकान्तमेकान्तभक्तः समनमदसमानं राममेकाभिरामम् ।।' इति संग्रहरामायणे । [कि.का.८.७४] कर्तव्यं ज्ञात्वा फलाकाङ्क्षां विना ईश्वरं नत्वा तस्य यशसे अयोध्याप्राप्त्यै श्रिये च वीर्यं कर्तुकाम इति षड्गुणोपयोगः । अस्य समुद्रस्य वाक्यलक्षणाद्धेतोः ।।१।।

**अतिविशद–** रामाय शाश्वसुविस्तृतषड्गुणाय इत्यत्र रामं नत्वेति वक्तव्यम् । रामाय नत्वेति कथमिति चेत् । 'नत्वा' इत्येतत् 'रामाय' इत्यनेन नान्वेति किन्तु 'रामं' इत्यनेनैव । नन्वत्र 'रामं' इति पदं कथम् । [ननु] अनन्यगत्या अध्याहृतेनान्वयोपपत्तेः । ननु अध्याहृतेनान्वयादर्शनात् कथमेतदिति चेन्न । 'अधीतवान् द्वापरादौ' इत्यत्र 'द्वापरे कृष्णावतारापेक्षया आदौ' इति भाष्यकारैस्तथा व्याख्यातत्वात् । तद्वदत्रेति ग्रहणम् । तर्हि 'रामाय' इत्यादेः कथमन्वयः इति चेत् रामाय अर्णवं लिलङ्घयिषुः इत्युपपत्तेः । ततश्चैवं वाक्ययोजना । पवमानसूनुः रामाय अर्णवं लिलङ्घयिषुः गिरिवरं निष्पीड्योत्पपातेति । कथंभूताय रामाय इत्युक्ते 'शाश्वतसुविस्तृतषड्गुणाय' इत्यादीनि द्रष्टव्यानि । ननु 'षड्गुणाय' इत्यनेनैव वीर्यस्यापि लाभात् पुनर्वीर्यग्रहणमयुक्तम् । अस्तु वा उपलक्षणतया षड्गुणपदोक्तविवरणार्थम् । ऐश्वर्यग्रहणं बलग्रहणं अयुक्तमेवेति चेन्न । 'नित्यपूर्णसुखज्ञप्तिस्वरूपोऽसौ

यतो विभुः । अतोऽस्य राम इत्याख्या...।।' इति सुखज्ञप्तिस्वरूपत्वमेव रामशब्दार्थ इति प्रतीयते तन्मात्रं मा विज्ञायि किन्तु षाड्गुण्यपरिपूर्णत्वमेव रामशब्दार्थ इति वक्तुं तेषां गुणानां शश्वदेकप्रकारत्वं दर्शयन् षड्गुणप्रतिपादक 'ऐश्वर्यस्य समग्रस्य' इति पद्यस्य समग्रपदं विवृण्वन्नेव रामशब्दार्थमाह शाश्वतेत्यादिनेति ज्ञातव्यम् । अन्यथा 'रामाय नत्वा' इत्यनेनैव पूर्तेः स्तुत्यर्थत्वेनान्यविशेषणनेनैव उपपत्तेरिति भावः । यद्वा शाश्वतसुविस्तृतषड्गुणाय रामाय नम इत्यनेन प्रकारेण रामं नत्वा अर्णवमुत्पपातेति ।।१-११।।

**गूढकर्तृक–** ननु रामाय शाश्वतसुविस्तृतषड्गुणायेत्यत्र षड्गुणायेत्यनेनैव वीर्यस्यापि लाभात् पुनः वीर्यग्रहणं अयुक्तम् । अस्तु वा उपलक्षणतया षड्गुणपदोक्तविवरणार्थं ऐश्वर्यग्रहणम् । बलग्रहण-मयुक्तमेवेति चेन्न । ऐश्वर्यादिः समस्तबलप्रभेदत्वज्ञापनार्थमिति वदामः । अत एव लोकाः वदन्ति । अस्य पुरुषस्य ज्ञानबलमस्ति वीर्यबलं नास्तीति इत्यादि । अथवा षड्गुणेषु सर्वगुणानामन्तर्भाव इति विवक्षा यदा तदा बलप्रभेदत्वं सर्वेषाम् । यदा तु न विवक्षा तदा उपलक्षणतया बलज्ञानग्रहणं आनन्दादीनां ग्रहणार्थमिति ।

।। इति गूढकर्तृके सप्तमोऽध्यायः ।।

**गूढवाक्यार्थ–** स्थितषड्गुणानेव लेशेन दर्शयति– **सर्वेश्वरायेत्यादिना** ।। निष्पीड्य पादाभिघातेनेति शेषः ।।१।।

**चुक्षोभ वारिधिरनुप्रययौ च शीघ्रं यादोगणैः सह तदीयबलाभिकृष्टः ।**
**वृक्षाश्च पर्वतगताः पवनेन पूर्वं क्षिप्तोऽर्णवे गिरिरुदागमदस्य हेतोः ।।२।।**

**वेदाङ्गतीर्थीया–** ।।१।। तदीयबलाभिकृष्टः तत्सम्बन्धिवेगजनितपवनबलाभिकृष्टः । वृक्षाश्चानुप्रययुः । उदागमत् उद्गतोऽभूत् ।।२-३।।

**वरदराजीया–** उत्प्लवनसमये वारिधिः समुद्रः चुक्षोभ क्षोभं प्राप्तवान् । न केवलमेतावत् तदीयेन तत्सम्बन्धिना बलेन अभिकृष्टः आकृष्टो वारिधिः यादोगणैः यादसां जलचराणां समूहैः सह शीघ्रं अनुप्रययौ । हनूमन्तं अनु सञ्चचाल । पर्वतगता महेन्द्रपर्वते वर्तमाना वृक्षाश्चानुययुरित्यर्थः । पूर्वं पुरा पवनेन वायुनार्णवे समुद्रे क्षिप्तो गिरिर्मैनाको अस्य हनूमतो हेतोः तद्विश्रमणार्थं उदागमत् समुद्रजलादुदतिष्ठत् ।।२।।

**जनार्दनीया–** तदीयबलेन हनुमत्सम्बन्धिबलेन अभिकृष्टः आकृष्टो वारिधिः समुद्रः चुक्षोभ क्षोभं प्राप । हनुमदुल्लङ्घनवेगेन समुद्रजलमितस्ततोऽभूदिति भावः । यादसां गणैः जलचरसमूहैः सह अनु

हनुमदनु प्रययौ । पर्वते माहेन्द्रे गताः स्थिताः वृक्षाश्च अनुययुरित्यर्थः । पुनरपि हनुमत्प्रभावं वर्णयति– **पवनेति** ।। गिरिः मैनाकपर्वतः अस्य हनुमतः हेतोः श्रमपरिहारहेतोः । यद्वा 'षष्ठी हेतुप्रयोगे' इति षष्ठी पञ्चम्यर्थे । अस्य हेतोः हनुमदर्थम् । उदागमत् जलादुपरि गतोऽभूत् ।।२।।

**अनन्तभट्टीया–** ...* ।।१।। बलाभिकृष्टः उत्प्लवनजवात् [निकृष्ट] इत्यर्थः । गतः पतनस्थानात् । वृक्षाश्चानुययुः । पवनेन मुख्यप्राणेन ।।२।।

**ताम्रपर्णीया–** अस्य हेतोः अस्य विश्रमणहेतोः ।।२-३।।

**चट्टी–** वारिधिः समुद्रः हनुमदुत्प्लवनसमये चुक्षोभ क्षोभं प्राप । हनुमत्प्लवनवेगेन समुद्रजलमितस्ततोऽभूदिति भावः । तदीयस्य बलेन हनुमत्सम्बन्धिबलेन अभिकृष्टः आकृष्टस्सन् यादोगणैः यादसां जलचराणां गणैः समूहैः सह शीघ्रं अनुप्रययौ च । पर्वते माहेन्द्रे गताः स्थिताः वृक्षाश्च अनुययुरित्यर्थः । पूर्वं पुरा पवनेन वायुना अर्णवे समुद्रे क्षिप्तो मैनाकपर्वतः अस्य हनुमतः हेतोः तद्विश्रमणार्थं उदागमत् समुद्रजलादुपरि गतोऽभूत् ।।२।।

**भावचन्द्रिका–** 'इति वारिनिधेर्वाक्यादुत्तस्थौ काञ्चनाचलः' इति संग्रहरामायणे[सु.का.२.३] ।।२।।

**प्रमाणसंग्रहे–** ।। **क्षिप्तोऽर्णव इति** ।। 'त्वमिहासुरसङ्घानां देवराज्ञो महात्मनाम् । पातालनिलयानां हि परिघः सन्निवेशित ।।' इति ।। गिरिरुदागमदस्य हेतोः ।। वरुणेन प्रेरित इति ज्ञेयम् । 'उत्तिष्ठ पर्वतश्रेष्ठ विश्रमार्थं हनूमतः । रामदेवस्य दूतोऽयं माननीयो हि मादृशैः ।।' इति रामायणे ।।२ ।।

**गूढवाक्यार्थ–** यादोगणैर्जलजन्तुभिः 'यादांसि जलजन्तवः' इत्यमरः । बलाभिकृष्टः उत्प्लवन-बलाभिकृष्ट इत्यर्थः ।।२।।

**श्यालो हरस्य [1]गिरिपक्षविनाशकाले क्षिप्तोऽर्णवे स मरुतोर्वरितात्मपक्षः ।**
**हैमो[2] गिरिः [3]पवनजस्य तु विश्रमार्थमुद्भिद्य[4] वारिधिमवर्धदनेकसानुः ।।३।।**

---

१. अत्र केचिदेवमाहुः 'पुरा इन्द्रेण गिरिपक्षच्छेदनकाले महात्मना वायुना क्षिप्तः अत्यूर्ध्वं प्रापितः ततः इन्द्रगमनानन्तरं अस्मिन् लवणतोये प्रक्षिप्तः मैनाकः' इत्यादि ।।

वराहावतारात् पूर्वं हिरण्याक्षमायया सञ्जातपक्षाः पर्वताः 'सुराः कनिष्ठा अपि अधिपतयो अभूवन्, ज्येष्ठा अपि यूयं अनीश्वरा' इति असुरान् उद्वेजयामासुः । उद्विग्ना असुरा लोकक्षयाय प्रवृत्ताः । तदा ते सुरैः साकं युद्धोद्योगं चक्रुः । तत्र युद्धे हिरण्याक्षेण देवेन्द्रो स्तम्भितः । इन्द्रे निष्प्रयत्ने नारायणो वराहात्मना अवततार । ततः हिरण्याक्षं निजघान । इन्द्रादीन् लोकपालान् पुनः तेषामाधिपत्ये न्ययोजयत् । प्राप्ताधिपत्यो इन्द्रः आगस्कृतान् गिरीन् धरण्याः स्थैर्यार्थं स्वेषु स्थानेषु स्थापनाय वज्रेण पर्वतपक्षान् चिच्छेद । मैनाकस्तु द्वारनिरोधकार्गलवत् ...

**वादिराजीया–** श्यालः भार्यासहोदरः ।।३।।

**मधुसूदनीया– हैमः स्वर्णमयः हैमः हिमवत्पर्वतः तस्यापत्यमिति वा । उर्वरितात्मपक्षः पूर्वं पर्वतेषु पक्षाभ्यां तत्तद्ग्रामोपरि पततसु सत्सु इन्द्रः सर्वेषां पर्वतानां पक्षाँश्चिच्छेद । तत्काले मैनाकः वायुं शरणं जगाम । तेन कारणेन मरुता मुख्यवायुना उर्वरितः स्वात्मपक्ष इत्यर्थः । तदुक्तम्– 'चिच्छेद भगवान् पक्षान् वज्रेण शतपर्वणा । एकस्सपक्षो मैनाकः.... ।।' इत्यादि हरिवंशे [३.३१.१९–२०] ।**

---

... पातालस्थितराक्षसनिरोधार्थं सपक्षः संस्थापितः । तथाहि हरिवंशे ३.३८. कदाचित्तु सपक्षास्ते पर्वता धरणीधराः । प्रस्थिता धरणीं त्यक्त्वा नूनं तस्यैव मायया ।।१।। तदासुराणां निलयं हिरण्याक्षेण पालितम् । दिशं प्रतीचीमागत्य ह्रदेऽमज्जन् यथा गजाः ।।२।। ३.४०. स्थैर्यहेतोर्धरण्यास्तु ज्ञात्वा चागस्कृतान् गिरीन् । स्वेषु स्थानेषु संस्थाप्य पर्वतानां पुरन्दरः ।। चिच्छेद भगवान् पक्षान् वज्रेण शतपर्वणा ।।१९।। सर्वेषामेव पक्षा वै छिन्नाः शक्रेण धीमता ।।एकः सपक्षो मैनाकः सुरैस्तत्समयः कृतः ।।२०।।

वायुपुराणे तु द्वादशपर्वता लवणोदधिं प्रविष्टा इत्युच्यते । तथाहि- ऋषभो दुन्दुभिश्चैव धूम्रश्चैव महागिरिः । पूर्वाद्यन्ता महाभागा निम्नगा लवणाम्भसि ।। चन्द्रकङ्कस्तथा प्राणो महानग्निः शिलोच्चयः । उदग्याता उदीच्यान्ता अवगाढा महोदधिम् ।। सोमकश्च वराहश्च नारदश्च महीधरः । प्रतीचीमायतास्ते वै प्रविष्टा लवणोदधिम् ।। चक्रो बलाहकश्चैव मैनाकश्चैव पर्वतः । आयतास्ते महाशैला समुद्रं दक्षिणं प्रति ।। चन्द्रमैनाकयोर्मध्ये विदिशं दक्षिणां प्रति । तत्र संवर्तको नाम सोग्निः पिबति तज्जलम् ।। नाम्ना समुद्रपः श्रीमान् और्वः स वडवामुखः । द्वादशैते प्रविष्टा हि पर्वता लवणोदधिम् ।। महेन्द्रभयवित्रस्ताः पक्षच्छेदभयात्तदा । यदेतत् दृश्यते चन्द्रे श्वेते कृष्णशशाकृतिः ।। [पू.४७.७२-७७]

२. 'उपसङ्गम्य तं दिव्यं काञ्चनं नगमुत्तमम्' इति वा.रा. [५.५८.१०] हिरण्यनाभं मैनाकं उवाच गिरिसत्तमम् ।। इति वा.रा. [५.१.८९]

३. स्वस्य इन्द्रेण अभयप्राप्त्यर्थं इति विशेषो तुशब्दार्थः । महत्सेवा ऐहिकामुष्मिकफलप्रसवायालमिति जानात्येव स पर्वतः । अत एव महतोमहीयान् श्रीरामः मैनाकेन महितः । अतः तत्फलमप्याप । तथाहि वाल्मीकिः- तथाहि रामायणे– हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम् । अभयं ते प्रयच्छामि गच्छ सौम्य यथासुखम् ।। साह्यं कृतं ते सुमहद्विक्रान्तस्य हनूमतः । क्रमतो योजनशतं निर्भयस्य भये सति ।। इति ५.१.१३२-१३३ सङ्ग्रहेऽपि- इन्द्रो गिरीन्द्रमाचष्ट तोषितस्तेन कर्मणा । अभयं ते मया दत्तं रामशुश्रूषणादिति ।। इति ५.२.१३ । अत एव भारते वनपर्वणि तीर्थयात्रासमये युधिष्ठिरः हिमवत्पर्वतसमीपे मैनाकं ददर्श इत्याद्युक्तं युज्यते । तथाहि भारते- आलोकयन्तो मैनाकं नानाद्विजगणायुतम् । हिरण्यशिखरं चैव मध्ये बिन्दुसरःशिवम् ।।१४७.४५

४. मैनाकः स्वस्य सानून्येव अवर्धयत् । नतु स्वमूलं उत्पाट्योत्थितः । 'तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम्' इति वा.रा. [५.१.९२] 'स सागरजलं भित्वा बभूवात्युच्छ्रितस्तदा' इति वा.रा. [५.१.९५]

*. हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ।। सु.का.१.९० हिरण्यनाभं नाम्ना । मैनाकं हिमवत्पर्वतभार्या तत्पुत्रम् । इति सत्यधर्मतीर्थाः ।।

ननु मैनाको हनूमन्तं कथं ज्ञातवान् येन तद्विश्रमार्थं अयमागतः स्यादित्यतो वरुणेन तदा बोधित इति सूचयति– **तु इति** ।। तु विशेषार्थः । तदुक्तम्– 'उत्तिष्ठ... मादृशैः ।।' इत्यादि रामायणे । मरुतोर्वरितात्मपक्षस्सन् अर्णवे क्षिप्तः । ननु स्थलान्तरे गिरिप्रक्षेपं विहाय समुद्रे एव किमर्थं प्रक्षिप्तवान् इत्यतो मैनाकः यत्र प्रक्षिप्तः तत्स्थलस्य पाताललोकमार्गत्वेन तस्मात् असुरागमननिरोधाय तत्र मैनाकं प्रक्षिप्तवान् इत्यपि विशेषं सूचयति तुशब्देन । तदुक्तम्– 'त्वमिहासुरसङ्घानां देवराज्ञां महात्मनाम् । पातालनिलयानां च परिघस्सन्निवेशितः ।।' इति रामायणे [५.१.९२] ।।३-६।।

**वरदराजीया–** स गिरिः कः कस्माच्च समुद्रान्तरासीदित्यत आह– **श्यालेति** ।। श्यालः पार्वतीभ्रातृत्वात् स गिरिपक्षविनाशकाले इन्द्रेण पर्वतपक्षच्छेदनसमये वायुं शरणं गतत्वात् मरुता वायुना उर्वरितौ अवशेषितौ आत्मनः स्वस्य पक्षौ यस्य स तथा अत एवेन्द्रभीत्या अर्णवे क्षिप्त आसीदित्यर्थः । स च गिरिः हैमः स्वर्णमयः । अनेके सानवः शृङ्गाणि यस्य स एवंभूतः । अस्य हनूमतो विश्रमार्थं विश्रमणार्थं वारिधिमुद्भिद्य अवर्धत् अभिवृद्धोऽभूत् ।।३।।

**जनार्दनीया–** ननु पर्वतः किमर्थं समुद्रे क्षिप्तः ? क्षिप्तोऽपि हनुमद्विश्रमणार्थं कुतः उदागमद्? इत्यत आह– **श्याल इति** ।। हरस्य श्यालः । हिमाचलपुत्री पार्वती । तद्भ्रातृत्वादिति भावः । गिरिपक्षविनाशकाले इन्द्रकृतपर्वतपक्षच्छेदनकाले मरुता वायुना अर्णवे क्षिप्तः । अत एव उर्वरितौ इत्यर्थः । आत्मपक्षौ यस्य स तथा । अनेकाः सानवः शृङ्गाणि यस्य । हैमः हिमाचलपुत्रः सुवर्णमयो वा । गिरिः स मैनाकपर्वतः पवनजस्य वायुपुत्रस्य विश्रमणार्थं वारिधिं उद्भिद्य विदार्य, अवर्धत ववृधे । मरुता रक्षितपक्षः तत्पुत्रस्य उपाकर्तुं अवर्धतेति भावः ।।३।।

**अनन्तभट्टीया–** श्यालः पार्वतीभ्रातृत्वादिति भावः । इन्द्रेण पर्वतानां पक्षखण्डनकाले मरुता क्षिप्त इत्यन्वयः ।।३।।

**चट्टी–** ननु अयं गिरिः कः पवनेन किमर्थं समुद्रे प्रक्षिप्तः इदानीं कुत उदागमत् इत्यत आह– **श्याल इति** ।। हरस्य श्यालः हैमः हिमो हिमवत्पर्वतः तस्य अपत्यं हैम इत्यर्थः । न तु स्वर्णमयः । हेमविकारार्थत्वे हैम्न इति स्यात् । गिरिपक्षविनाशकाले मरुतोर्वरितात्मापक्षः पूर्वं पर्वतेषु पक्ष्याभ्यां तत्तद्ग्रामोपरि पतत्सु सत्सु इन्द्रः सर्वेषां पर्वतानां पक्षान् चिच्छेद । तत्काले मैनाको वायुं शरणं जगाम । तेन कारणेन मरुता मुख्यवायुना उर्वरितात्मपक्ष इत्यर्थः । तदुक्तम्– 'चिच्छेद.... मैनाकः... ।।' इत्यादि हरिवंशे । ननु मैनाको हनुमन्तं कथं ज्ञातवान् येन तद्विश्रामार्थं अयमागच्छत् इत्यत वरुणेन तथा बोधितत्वादिति विशेषं सूचयति तुशब्देन । तदुक्तम्– 'उत्तिष्ठ....मादृशैः ।।' इति रामायणे । मरुता उर्वरितात्मपक्षस्सन् अर्णवे क्षिप्तः । ननु स्थलान्तरे गिरिप्रक्षेपं विहाय समुद्र एव किमर्थं क्षिप्तवानित्यतो

मैनाको यत्र प्रक्षिप्तः तत्स्थलस्य पाताललोकमार्गत्वेन तन्मार्गादसुरागमननिरोधाय तत्र मैनाकं प्रक्षिप्तवानित्यपि विशेषं सूचयति तुशब्देन । तदुक्तम्– 'त्वं ...निवेशितः ।।' इति रामायणे । अनेकसानुः अनेके सानवः श्रृङ्गाणि यस्य सः गिरिः मैनाकपर्वतः । पवनजस्य वायुपुत्रस्य हनुमतः विश्रमार्थं वारिधिं उद्भिद्य विदार्य अवर्धत् ववृधे । मरुता रक्षितपक्षत्वात् तत्पुत्रस्य उपकर्तुं अवर्धतेति भावः ।।३।।

**भारतश्री–** गिरिः मैनाकः ।।३।।

**भावचन्द्रिका–** हिमाद्रेः सूनुर्मैनाको नाम पार्वतीसहोदरः अतः श्यालः ।।३।।

**प्रमाणसंग्रह–** ।। उर्वरितात्मपक्षः ।। 'चिच्छेद.... ।।' इति हरिवंशे ।।३।।

**गूढवाक्यार्थ–** अस्य विश्रमणहेतोः ।।३।।

**नैवात्र [१]विश्रमणमैच्छदविश्रमोऽसौ निस्सीमपौरुषबलस्य कुतः श्रमोऽस्य ।**
**आश्लिष्य पर्वतवरं स ददर्श गच्छन् देवैस्तु नागजननीं प्रहितां वरेण ।।४।।**

**वेदाङ्गतीर्थीया–** नागजननीं सुरसाख्याम् । वरेण प्रहितां वरं दत्वा प्रेषितामित्यर्थः ।।४।।

**वादिराजीया–** नागजननीं कद्रुम् ।।४।।

**सत्याभिनवीया–** तत्रैव नैवात्र विश्रमणमैच्छद... इति श्लोके स ददर्श गच्छन् देवैस्तु नागजननीं प्रहितां वरेणेत्यस्य हनुमान् लङ्कां गच्छन् देवैस्तु देवैरेव वरेण विशिष्टां कृत्वा प्रहितां प्रेषितां नागजननीं ददर्शेत्यन्वयः । एतेन वरेणेत्येतदनन्वितमिति दूषणं परास्तम् । विशिष्टां कृत्वेत्यध्याहृतेनान्वय इति स्वीकरणात् ।।४।।

**वरदराजीया–** असौ हनूमान् अत्र पर्वते विश्रमणं विश्रान्तिं नैच्छत् । यतो अविश्रमः श्रमरहित इत्यर्थः । तदेव कुत इत्यत उक्तम्– **निस्सीमेति** ।। निस्सीमे अपरिमिते पौरुषं पराक्रमो बलं च यस्य स तथा । अस्य हनूमतः श्रमः कुतः स्यान्न कुतोऽपीत्यर्थः । पर्वतवरं मैनाकं तदभिमानिनं [२]पुरुषाकारमाश्लिष्य पुरतो गच्छन् स हनूमान् देवैर्वरेण वरं दत्वा प्रहितां नागजननीं ददर्श ।।४।।

---

१. योजनानां शतं श्रीमान् तीर्त्वाप्युत्तमविक्रमः । अनिश्वसन् कपिस्तत्र न ग्लानिमधिगच्छति ।। शतान्यहं योजनानां क्रमेयं सुबहून्यपि । किं पुनः सागरस्यान्तं सङ्ख्यातं शतयोजनम् ।। इति वा.रा.[५.२.३-४]

२. मानुषं धारयन् रूपं आत्मनः शिखरे स्थितः । दुष्करं कृतवान् कर्म त्वमिदं वानरोत्तम । इति वाल्मीकिरामयण वचनात् [५.१.१११] मैनाकः मानुषेण वपुष्मता आगत इत्यवगम्यते । अतः वरदराजीयव्याख्यानं उपपन्नम् ।

**जनार्दनीया–** असौ हनुमान् । अत्र गिरौ नैच्छत् । यतः अविश्रमः श्रमरहितः अत इति सम्बन्धः । अविश्रमत्वे हेतुमाह– **निःसीमेति** ।। अस्य हनूमतः । स हनूमान् । देवैर्वरेण वरं दत्वेत्यर्थः । प्रहितां प्रेषितां नागजननीं सुरसाख्याम् ।।४।।

**अनन्तभट्टीया–** मध्ये अविश्रम्यैव गमिष्यामीति ज्ञापनमनुसर्तुं लीलार्थमपि विश्रमणं नैच्छदिति द्रष्टव्यम् ।।४।।

**ताम्रपर्णीया–** ।। **आश्लिष्येति** ।। पुरुषरूपिणं पर्वतमित्यर्थः ।।४।।

**चट्टी–** असौ हनुमान् यतः अविश्रमः श्रमरहितः अतः अत्र गिरौ विश्रमणं विश्रान्तिं नैवेच्छत् । अविश्रमत्वे हेतुमाह– **निःसीमेति** ।। निःसीमे अपरिमिते पौरुषं पराक्रमं बलं च यस्य स तथा । अस्य हनुमतः श्रमः कुतः स्यान्न कुतोऽपीत्यर्थः । पर्वतवरं तदभिमानिनं पुरुषाकारं मैनाकं आश्लिष्य पुरतः गच्छन् सः हनुमान् देवैर्वरेण वरं दत्वेत्यर्थः । प्रहितां प्रेषितां नागजननीं सुरसाख्यां ददर्श ।।४।।

**भावचन्द्रिका–** 'अविश्रमे प्रतिज्ञा मे कृता वानरसन्निधौ' इति संग्रहरामायणवचनात् [सु.का.२.६] प्रतिज्ञापालनेच्छया विश्रमं नैच्छदित्याह– **नैवात्रेति** ।। तत्कुत इत्यत आह– **अविश्रम इति** ।। **आश्लिष्येति** ।। 'परिरभ्य ययौ दोर्भ्यां अद्रिं पुरुषरूपिणम्' इति संग्रहरामायणे [सु.का.२.११] । नागजननी सुरसा नाम दाक्षायणी तां दृष्ट्वा मार्गं देहीति हनुमानुवाच । कोऽसाविति सोवाच । रामदूत इति सः । यो वा को वा भव आस्यं प्रविशेति सा । ततः स्थूलोऽभवत् ।.... सा । तत अङ्गुष्ठमात्र आस्यं प्रविश्य आशु आस्यादेव निर्गत इति संग्रहरामायणकथा ।।४-६।।

**गूढवाक्यार्थ–** आश्लिष्य पर्वतवरं पुरुषरूपिणं पर्वतमित्यर्थः ।।४।।

**[१]जिज्ञासुभिर्निजबलं तव भक्ष्यमेतु यद्यत्त्वमिच्छसि तदित्यमरोदितायाः ।**
**आस्यं प्रविश्य सपदि प्रविनिस्सृतोऽस्माद्देवाननन्दयदुत स्वृतमेषु रक्षन् ।।५।।**

१. ततो देवाः सगन्धर्वा सिद्धाश्च परमर्षयः । अब्रुवन् सूर्यसङ्काशां सुरसां नागमातरम् ।। ५.५.१३७ हनूमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर । [१३८] बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् । १४० 'बलं ज्ञानबलं उपायबलं च पराक्रमञ्च ज्ञातुमिच्छामहे' इति तिलकः ।

राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् । दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभःस्पृशम् ।। बलमिच्छामहे ... सु.का.१.१४१ इति रामायणे देवतानां वचनम् । राक्षसं रूपमास्थाय बलपरीक्षा कार्या न तु निजस्वरूपेण इति देवताभिप्रायः । तया च तथा अकारि । किञ्च वरप्रदेषु ब्रह्मापि अस्ति । 'वर एष मया दत्तो मम धात्रेति सत्वरा' इत्युपरि वक्ष्यमाणत्वात् । सु.का.१.१४६

**व्यासतीर्थीया–** इच्छसि अत्तुमिति शेषः ।।५।।

**वेदाङ्गतीर्थीया–** निजबलम् । निजशब्देन हनूमानभिप्रेतः । स्वृतम्, शोभनमृतं सत्यं वचनमिति शेषः । सत्यवचनरक्षणं नाम तदमोघकरणम् ।।५।।

**वादिराजीया–** निजवलं हनूमतो वलं जिज्ञासुभिर्देवैः । पूर्वश्लोकेन सम्वध्यते । इच्छसि अत्तुमिच्छसि ।।

**सत्याभिनवीया–** तदनन्तरमेव जिज्ञासुभिर्निजबलं... इति श्लोकः । तस्यार्थः । निजबलं निजस्य स्वकीयस्य हनूमतः बलं जिज्ञासुभिः दैवैरिति पूर्वेणान्वयः । एषु एषां देवानां वाक्यं स्वृतम् अतिशयेन सत्यं रक्षन् उत कुर्वन्नेव त्वं यत् यत् भक्षयितुमिच्छसि तत्तत् तव भक्षं भक्षणक्रियां एतु । भक्षणक्रियाविषयो भवतु इति अमरोदितायाः नागजनन्याः आस्यं प्रविश्य अस्मात् आस्यात् प्र विष्णुना रामेण रामप्रसादेन सपदि सद्यः विनिस्सृतः विशेषतो निस्सृतः क्षतादिरहितो निस्सृतः सन् देवान् अनन्दयदिति । एतेन एषां वाक्यं स्वृतं कुर्वन् इति वक्तव्यम् । एषु स्वृतं रक्षन् इति कथनमयुक्तमिति दूषणं परिहृतम् । एष्विति सप्तमी षष्ठ्यर्थे वाक्यं इति शेषः । रक्षन्नित्यस्य कुर्वन्नित्यर्थ इति च स्वीकृत्य एषां वाक्यं स्वृतं कुर्वन् इत्यर्थस्योक्तत्वात् । एतेन निस्सृत इत्यनेन पूर्णत्वात् प्रवीत्येतत् व्यर्थमिति दूषणं परास्तम् । निस्सृतत्वं रामप्रसादेनेति वक्तुं प्रेत्युक्तम् । प्रवेशनिर्गमप्रयुक्तक्षतादिकं नास्तीति वक्तुं वीत्युक्तमित्यभ्युपगमात् । प्रशब्दस्य विष्णुवाचकत्वम् 'अ–क–य–प्र–वि–सं–भूम–सख–हा विष्णु-वाचकाः' [बृ.भा.५.७.१] इति प्रमाणसिद्धम् ।।५।।

**वरदराजीया–** वरस्वरूपं विवृणोति– **जिज्ञासुभिरिति** ।। निजस्य स्वस्य हनुमतः बलं जिज्ञासुभिः देवैः इति सम्वन्धः । यद्यत्वमिच्छसि भक्षयितुमित्यर्थः । तत्ततव भक्षं भक्षणं एतु तव भक्ष्यं भवत्विति अमरैः देवैः उदितया नागजनन्या आस्यं मुखं प्रविश्य सपदि तत्क्षण एव मुखात्प्रविनिःसृतो निर्गत एषु देवेषु स्वृतं सत्यवचनं यद्यत् त्वमिच्छसीत्येवं रूपं रक्षन् सत्यं कुर्वन् देवाननन्दयत् सन्तोषयामास । तदा अस्य प्रवेशने नोऽस्माकं वरः सत्कृत इति देवानां सन्तोषोऽभूदिति भावः ।।५।।

**जनार्दनीया–** वरेण इत्युक्तं विवृणोति– **जिज्ञासुभिरिति** ।। निजबलं स्वबलं हनूमद्बलं इत्यर्थः । जिज्ञासुभिः ज्ञातुमिच्छुभिः । देवैर्यद्यत् त्वं इच्छसि । भक्षितुमिति शेषः । तत्तत् तव भक्ष्यं भक्ष्यते अनेनेति भक्ष्यमास्यम् । एतु प्रविशत्विति वरेण प्रहितां ददर्शेति सम्बन्धः । तदुक्तं संग्रहे 'यद्यदिच्छसि तत्तत् ते वक्त्रमेतु वरेण वः' [सु.का.२.१५] इति । यद्वा भक्ष्यते तद्भक्ष्यम् । अयं अद्यत्वमेतु प्राप्नोतु । तदुक्तमार्षे 'मम भक्ष्यः प्रदिष्टस्त्वं सेन्द्रैः सुरगणैः कपे' इति । उत दर्शनानन्तरम् । एषु देवेषु स्वृतं यद्यत्वमिच्छसि इत्येवं रूपवाक्यकरणेन सु सत्यं रक्षन् अमरैः देवैः उदितायाः दत्तवराया इत्यर्थः । नागजनन्याः आस्यं प्रविश्य, अस्मादास्यात् सपदि क्षणमात्रादेव प्रविनिःसृतः बहिर्निर्गतः सन् देवाननन्दयत् नन्दयामास ।।५।।

**अनन्तभट्टीया–** निजबलं वायुजस्येति शेषः । प्रहितां प्रेषिताम् । तव वरमित्यर्थः ।।५।।

**ताम्रपर्णीया–** निजबलं हनुमतो बलम् ।।५-६।।

**चट्टी–** वरेणेत्युक्तं विवृणोति– **जिज्ञासुभिरिति** ।। निजस्य स्वस्य बलं हनुमद्बलमित्यर्थः । जिज्ञासुभिः ज्ञातुमिच्छुभिः देवैः प्रहितां ददर्शेति पूर्वश्लोकेनान्वयः । उत दर्शनान्तरं यद्यत् त्वं इच्छसि भक्षितुमिति शेषः । तत्तत् तव भक्षं भक्षणार्थं भक्ष्यं भवत्विति अमरैः उदितायाः दत्तवराया इत्यर्थः । नागजनन्याः आस्यं मुखं प्रविश्य सपदि तत्क्षणमेव तन्मुखविनिस्सृतः बहिर्निर्गतस्सन् एषु देवेषु स्वृतं यद्यत् त्वं इच्छसीत्येवं रूपं सुसत्यं रक्षन् देवाननन्दयत् सन्तोषयामास । तदास्यप्रवेशात् अस्माकं वरः सत्यः कृतः इति देवाः तुतुषुरिति भावः ।।५।।

**भारतश्री–** स्वृतमेषु रक्षन्निति नागजनन्या योग्यनीचत्वात् । 'एकदेशेन सत्यं तु' इति वचनात् तद्युक्तमिति ज्ञेयम् ।।५-६।।

**दृष्ट्वा सुरप्रणयितां बलमस्य चोग्रं देवाः प्रतुष्टुवुरमुं सुमनोभिवृष्ट्या ।**
**तैरादृतः पुनरसौ वियतैव गच्छन् [1]छायाग्रहं प्रतिददर्श च सिंहिकाख्यम्।।६।।**

**व्यासतीर्थीया–** छायां गृह्णातीति छायाग्रहः ।।६।।

**वेदाङ्गतीर्थीया–** छायां गृह्णातीति छायाग्रहः ।।६।।

**सत्याभिनवीया–** तदनन्तरमेव दृष्ट्वा सुरप्रणयितां... इति श्लोके देवाः प्रतुष्टुवुरमुं सुमनोऽभिवृष्ट्या इत्यस्य देवाः अमुं हनूमन्तं सुमनोऽभिवृष्ट्या पूर्णं कृत्वा प्रतुष्टुवुः प्रकर्षेण स्तुतिं चक्रुरित्यर्थः । एतेन सुमनोऽभिवृष्ट्या इत्येतत् अनन्वितमिति दूषणं परास्तम् । पूर्णं कृत्वेत्यध्याहृतेनान्वय इति स्वीकरणात् ।।६।।

**वरदराजीया–** देवाः अस्य हनूमतः सुरेषु प्रणयितां स्नेहवत्तां तथा उग्रं उत्कृष्टं बलं च दृष्ट्वा सुमनोभिवृष्ट्या सुमनसां पुष्पाणां अभिवृष्ट्या तुष्टुवुः तोषयामासुः । तैर्देवैरादृतोऽसौ हनूमान् पुनः पुरतो वियतैव आकाशमार्गेणैव गच्छन् सिंहिकाख्यं सिंहिकानामकं छायां गृह्णातीति छायाग्रहः तम् । छायाग्रहरूपां सिंहिकानामराक्षसीं प्रतिददर्शेत्यर्थः ।।६।।

---

१. पूर्वं सुग्रीवः कपिप्रेषणकाले पूर्वदिशि विद्यमानान् नानाविधान् जन्तून् वर्णयन् सागरस्थितान् छायाग्राहिणो बहून् राक्षसानप्याह। तथाहि- 'तत्रासुरा महाकायाः च्छायां गृह्णन्ति नित्यशः । ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ।।' इति [वा.रा.४.४०.३७] तथाच तत्रत्येष्वन्यतमां सिंहिकां 'ब्रह्मणा समनुज्ञातां' प्राप्तब्रह्मवरां स्वपुरीं रिरक्षिषुः रावणः आनिनाय इति सम्भाव्यते ।

**जनार्दनीया—** देवाः अस्य श्रीहनुमतः सुरेषु प्रणयितां स्ववचनसत्यकरणरूपस्नेहवत्त्वं दृष्ट्वा, अस्य उग्रबलं दृष्ट्वेत्यर्थः । अमुं हनुमन्तम् । तैर्देवैरादृतः पूजितोऽसौ । वियता आकाशेन पुनर्गच्छन् । सिंहिकेति आख्या यस्य स तथा तम् । छायाग्रहं छायाया ग्रहणेन छायावन्तं पुरुषं गृह्णातीति छायाग्रहः तं तथा । ददर्श छायाग्रहां सिंहिकाख्यां राक्षसीं ददर्शेति भावः ।।६।।

**अनन्तभट्टीया—** सुरप्रणयितां तद्दत्तवरसत्यताकरणसूचितदेवस्नेहिताम् । वृष्ट्या इति सहयोगे तृतीया । वियता गमनेन छायाग्रहं छायाग्रहणेन तद्वन्तं गृह्णातीति छायाग्रहः तं... क्रमित्यर्थः ।।६।।

**चट्टी—** देवाः अस्य हनुमतः सुरेषु प्रणयितां स्ववचनसत्यकरणरूपस्नेहवत्त्वं तथा उग्रबलं च दृष्ट्वा अमुं हनुमन्तं सुमनसां पुष्पाणां अभिवृष्ट्या तुष्टुवुः तोषयामासुः । तैर्देवैरादृतोऽसौ हनुमान् पुनः वियता आकाशमार्गेणैव गच्छन् सिंहिकेति आख्या यस्य स तथा तं छायाग्रहं छायाग्रहणेन छायावन्तं पुरुषं गृह्णातीति छायाग्रहः तं तथा ददर्श । छायाग्रहरूपां सिंहिकाख्यां राक्षसीं ददर्शेति भावः ।।६।।

**लङ्कावनाय सकलस्य च निग्रहेऽस्याः सामर्थ्यमप्रतिहतं प्रददौ विधाता ।**
**छायामवाक्षिपदसौ पवनात्मजस्य सोऽस्याश्शरीरमनुविश्य बिभेद चाशु ।।७।।**

**व्यासतीर्थीया—** छायाग्रहणसामर्थ्यं अस्याः कुतो जातमित्यत आह— **लङ्केति** ।।७।।

**वेदाङ्गतीर्थीया— छायामवाक्षिपदिति** । छायाया अवक्षेपणेन सोऽस्या आस्येऽवक्षिप्तः ।।७।।

**वादिराजीया—** यद्यपि पवनात्मजस्य छायाया ग्रहणे सति हनुमानप्यागतस्तथापि ब्रह्मणो वरपालनायैवाऽगमनं न तु छायाग्रहणसत्त्वादिति सूचयितुं छायामवाक्षिपदसौ इत्येवोक्तम् ।।७।।

**मधुसूदनीया—** पवनात्मजस्य छायां 'दशयोजनविस्तीर्णा त्रिंशद्योजनमायता । छाया वानरसिंहस्य जले चारुतराऽभवत् ।। [५.१.७६] इति रामायणे ।।७।।

**वरदराजीया—** विधाता ब्रह्मा लङ्काया अवनाय रक्षणार्थं सकलस्य लङ्कापकारिणो निग्रहे पीडने अप्रतिहतं केनाप्यनाश्यसामर्थ्यं प्रददौ । असौ छायाग्रहः पवनात्मजस्य हनूमतः च्छायां अवाक्षिपत् जग्राह । छायाग्रहणे छायावतोऽपि ग्रहणं भवतीति भावः । स हनूमानास्याः सिंहिकानामकाया राक्षस्याः शरीरं देहमनुप्रविश्य आशु शीघ्रं बिभेद विदारयामासेत्यर्थः ।।७।।

**जनार्दनीया—** लङ्कापुर्याः अवनाय रक्षणार्थम् । सकलस्य सर्ववीरसमूहस्येत्यर्थः । निग्रहे निरोधविषये । अप्रतिहतं प्रतिहतिरहितं अविनाश्यं इति यावत् । अस्याः सिंहिकायाः । असौ सिंहिकाराक्षसी पवनात्मजस्य छायां अवाक्षिपत् जग्राह सञ्चकर्षेत्यर्थः । स हनुमानस्याः राक्षस्याः शरीरं

उदरमित्यर्थः । अनुविश्य बिभेद । विददार हृदयं नखैरिति शेषः । तदुक्तं सङ्ग्रहे । 'हृदयं निर्दयं तस्या बिभेद नखरैः खरैः' [सु.का.२.२६] इति । आर्षे च– 'ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः । उत्पपात... ।।' इति [५.१.१९६] ।।७।।

**अनन्तभट्टीया–** अवाक्षिपत् जग्राह । शरीरं बिभेदेत्यन्वयः ।।७।।

**ताम्रपर्णीया–** ।। **सामर्थ्यमिति** ।। सिंहिका यस्य छायां गृह्णात्यसौ तदुदरं प्रविशतु अवध्या च भवेत्येवं वरपूर्वकं सामर्थ्यमित्यर्थः । अवाक्षिपत् जग्राह ।।७।।

**चट्टी–** विधाता ब्रह्मा लङ्कापुर्याः अवनाय रक्षणार्थं सकलस्य लङ्कापकारिजनस्य निग्रहे निरोधनविषये अप्रतिहतं केनाप्यनाश्यं सामर्थ्यं प्रददौ । असौ राक्षसी पवनात्मजस्य हनुमतः छायां अवाक्षिपत् जग्राह चकर्षेत्यर्थः । छायाग्रहणेन छायावतोऽपि ग्रहणं भवतीति भावः । स हनूमान् अस्याः राक्षस्याः शरीरं अनुविश्य आशु बिभेद विददार । उदरमिति शेषः । तथा चोक्तम्– दश... अभवत् ।।' इति रामायणे ।।

**भारतश्री–** अस्याः सिहिंकायाः ।।७–१०।।

**भावचन्द्रिका–** ।। **स इति** ।। तां दृष्ट्वा हनुमानद्रिनिभो जातः । सा च ततो विवृतास्याभवत् ।।

**प्रमाणसंग्रहे–** ।। **छायामवाक्षिपदिति** ।। 'दश...अभवत् ।।' [सु.का.१.७६] इति च ।।७।।

**गूढवाक्यार्थ–** अवाक्षिपत् जग्राह । बिभेद शरीरमिति शेषः ।।७।।

**निस्सीममात्मबलमित्यनुदर्शयानो हत्वैव तामपि विधातृवराभिगुप्ताम् ।**
**लम्बे स लम्बशिखरे निपपात लङ्काप्राकाररूपकगिरावथ सञ्चुकोच ।।८।।**

**व्यासतीर्थीया–** धातुर्वरस्य उल्लङ्घ्यता कस्मादित्यत आह– **निस्सीमेति** ।।८–११।।

**वेदाङ्गतीर्थीया–** लम्बे लम्बनाम्नि लम्बशिखरे लम्बमानशिखरे । सञ्चुकोच सूक्ष्मरूपोऽभूदिति भावः ।।८।।

**वादिराजीया–** लम्बशिखरे 'पचाद्यचि' इति वचनात् लम्बत इति लम्बं लम्बमानं शिखरं यस्य स तथोक्तः । लङ्काप्राकाररूपकगिरौ । लम्बनाल्लम्बनाम्नि प्रदेशे निपपातेति सम्बन्धः । लम्बाख्यगिरिनिपतने सति शिखरिणो गिरेरपि भारादभिभवो जात इति सूचनाय गिरावित्युक्तम् । लम्बशिखरत्वाल्लम्बनाम्नि गिराविति वा ।।८।।

**मधुसूदनीया–** लम्बशिखरे उन्नतशिखरे । लम्बे लम्बनामके लङ्काप्राकाररूपकगिरौ सञ्चुकोचेत्यन्वयः । 'तुरगस्य शकृल्लम्बो लङ्काप्राकार एव च' इत्यभिधानम् । एतेन 'अतिदीर्घे लम्बे अतिदीर्घे लङ्काप्राकाररूपकगिरौ सञ्चुकोच' इति केषाञ्चित् व्याख्यानं अपास्तं वेदितव्यम् । 'लम्बशिखरे लम्बमानशिखर' इत्यपरे । तदप्यसत् । शिखराग्राणां पाषाणत्वेन लतादिवल्लम्बनायोगादिति द्रष्टव्यम् । वैरिपट्टणं द्वारप्रदेशेन न प्रवेष्टव्यमिति प्रदर्शनार्थं प्राकारादन्तः प्रविवेश । तदुक्तम्– 'अद्वारेण महाबाहुः प्राकारमभिपुप्लुव' [५.४.२] इत्यादि रामायणे ।।८।।

**वरदराजीया–** ननु धातृवरमुल्लङ्घ्य तां किमिति बिभेदेत्यत आह– **निस्सीममिति** ।। आत्मनः स्वस्य बलं निस्सीमं अपरिमितमिति लोकस्यानुदर्शयानो दर्शयत् सिंहिकां विधातृवरेणात्यन्तरक्षितामपि हत्वेत्यर्थः । हनूमान् लम्बानि दीर्घाणि शिखराणि यत्र तस्मिन् लंबे अतिदीर्घे प्राकाररूपकगिरौ लङ्कायाः प्राकाररूपविद्यमाने त्रिकूटपर्वते स्थित्वा सर्वां लङ्कां च अवलोक्याथानन्तरं सञ्चुकोच । उत्प्लवनसमये अभिवृद्धरूपं तत्र सङ्कोचयामासेत्यर्थः ।।८।।

**जनार्दनीया–** आत्मबलं निःसीमबलं अपरिमितमिति दर्शयानः । सगुप्तामपि हत्वा, लम्बानि दीर्घाणि शिखराणि यस्मिन् असौ तथा तस्मिन् । अत एव लम्बे लम्बनाम्नी । लङ्कायाः प्राकारस्य रूपमिव रूपं यस्य स तथा स्वार्थे कप्रत्ययः । स चासौ गिरिश्च तस्मिन् । त्रिकूटगिरावित्यर्थः । निपपात माहेन्द्रपर्वतात् त्रिकूटपर्वते उत्पपातेत्यर्थः । 'तुरङ्गस्य शकृल्लम्बं लङ्काप्राकार एव च' इत्यभिधानात् त्रिकूटस्य लम्बनामत्वं बोध्यम् । अथ त्रिकूटप्राप्त्यनन्तरं सञ्चुकोच सूक्ष्मरूपो बभूव । प्रवृद्धं रूपं सङ्कोचयामास इत्यर्थः ।।८।।

**अनन्तभट्टीया–** गुप्तामपीति सम्बन्धः । लम्बे लम्बनामके । सञ्चुकोच सूक्ष्मोऽभवदित्यर्थः ।।८।।

**ताम्रपर्णीया–** लम्बे उन्नते लम्बशिखरे उन्नतशृङ्गे । यद्वा लम्बशिखरे लम्बमानशिखरे । अत एव लम्बे लम्बनाम्नीत्यर्थः ।।८।।

**चट्टी–** ननु विधातृवरमुल्लङ्घ्य तां किमिति बिभेदेत्यत आह– **निस्सीमेति** ।। आत्मनस्स्वस्य बलं निस्सीमं अपरिमितं इति लोकस्य अनुदर्शयानः दर्शयन् विधातृवराभिगुप्तामपि तां सिंहिकां हत्वैव सः हनुमान् लम्बशिखरे उन्नतशिखरे लम्बे लम्बनामके लङ्काप्राकाररूपके गिरौ लङ्कायाः प्राकारस्य रूपमिव रूपं यस्य स तथा । स्वार्थे कप्रत्ययः । स चासौ गिरिश्च तस्मिन् त्रिकूटगिरावित्यर्थः । निपपात महेन्द्रपर्वतात् त्रिकूटपर्वते उत्पपातेत्यर्थः । 'तुरगस्य शकृल्लम्बो लङ्काप्राकार एव च' इत्यभिधानात् त्रिकूटस्य लम्बनामत्वं बोध्यम् । अथ त्रिकूटप्राप्त्यनन्तरं सञ्चुकोच सूक्ष्मरूपो बभूव । उत्प्लवनसमये अतिप्रवृद्धं रूपं सङ्कोचयामासेत्यर्थः ।।८।।

**भावचन्द्रिका–** लम्बमानशिखरत्वात् लम्बनामके चित्रकूटसमीपस्थे । तथोक्तं संग्रहे– 'आलम्बशिखरे लम्बे लङ्काप्राकाररूपके । निपपात कपिश्रेष्ठः स त्रिकूटोपशोभिते ।।' इति । [सु.का. २.३१] ।।८।।

**गूढवाक्यार्थ–** लम्बे उन्नते लम्बशिखरे उन्नतशिखरे लम्बे लम्बनाम्नीति वा ।।८।।

**भूत्वा बिडालसमितो निशि तां पुरीं च**
**प्राप्स्यन् ददर्श निजरूपवतीं स लङ्काम् ।**
**रुद्धोऽनयाऽश्वथ विजित्य च तां स्वमुष्टि-**
**पिष्टां [1]तयाऽनुमत एव [2]विवेश लङ्काम् ।।९।।**

**वेदाङ्गतीर्थीया–** निजरूपवतीं आविर्भूतनिजरूपां लङ्कां लङ्काभिमानिदेवताम् ।।९।।

**वादिराजीया–** निजरूपवतीं लङ्काभिमानिनीं दुर्गापरिवारभूतां काञ्चन देवताम् ।।९।।

**वरदराजीया–** बिडालसमितो मार्जालसमानपरिमाणो भूत्वा निशि रात्रौ तां लङ्कां पुरीं प्राप्स्यन् गन्तुं इच्छन् स हनूमान् निजस्वरूपवतीं निजस्वरूपां लङ्कां लङ्कानामधेयां तदभिमानिनीं ददर्श । तया लङ्काभिमानिन्या देव्या रुद्धो निरुद्धो कुत्र यास्यसीति प्रतिबद्धो हनूमान् स्वमुष्ठिघातेन पिष्टां पिष्टवत्कृतां तां आशु विजित्य तया देवतया गच्छेति अनुमत एव लङ्कां विवेशेत्यर्थः ।।९।।

**जनार्दनीया–** सः हनुमान् । बिडालस्य मार्जारस्य समितः परिमाणेन सदृशः भूत्वा, तां पुरीं लङ्कापुरीं प्राप्स्यन् प्राप्तुमिच्छन् । निजरूपवतीं स्वस्वरूपं प्राप्तां लङ्कां लङ्काभिमानित्वात् नाम्ना लङ्कां ददर्श । मूर्तिमतीं लङ्काभिमानिनीं ददर्शेति भावः । अनया लङ्कया रुद्धः मा गच्छेति निरुद्धः । अथ निरोधानन्तरं स्वमुष्टिभिः पिष्टां चूर्णवत्कृतां लङ्कां आशु विजित्य, तया लङ्कया अनुमत एव सम्मत एव लङ्कां लङ्कापुरीं विवेश ।।९।।

**अनन्तभट्टीया–** ।। निजेति ।। लङ्काभिमानिदेवतामित्यर्थः ।।९।।

---

१. 'अत्र रावणस्य दिग्विजयकाले रावणाधिक्षिप्ताभिः नन्दिकेश्वरादिभिः लङ्कायाः सद्यो विनाशशापे दत्ते सा ब्रह्माणं गत्वा विनाशो मे माभूदिति प्रार्थयामास । सच तस्यै वरमदात् । तव सद्यो विनाशो न भविष्यति । यदा तु वानरस्त्वामभिभविष्यति तदा तु विनाशो भविष्यतीति कथापि अत्रानुसन्धेया' इति रामायणटीकाकाराः । "इदं च तथ्यं श्रुणु मे ब्रुवन्त्या वै हरीश्वर । स्वयं स्वयम्भुवा दत्तं वरदानं यथा मम ।। यदा त्वां वानरः कश्चित् विक्रमात् वशमानयेत् । तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ।। स हि मे समयः सौम्य प्राप्तोऽद्य तव दर्शनात् । स्वयम्भूविहितः सत्यो न तस्यास्ति व्यतिक्रमः ।।' ५.३.४६–४८

२. अत्र हनूमान् सव्यपादेन तथा अद्वारेण लङ्कां प्रविवेशेति ज्ञातव्यम् । तथाहि– 'प्रयाणकाले स्वगृहप्रवेशे विवाहकालेऽपि च दक्षिणाङ्घ्रिम् । कृत्वाग्रतः शत्रुपुरप्रवेशे वामं विदध्याच्चरणं नृपालः ।।'

**ताम्रपर्णीया–** रुद्धस्ताडनादिनेति शेषः । तदुक्तं संग्रहरामायणे– 'ताडयामास तं चण्डी स्त्रीरूपा पुरदेवता' [सु.का २.४६] इति ॥९–१०॥

**चट्टी–** सः हनुमान् बिडालस्य मार्जारस्य सम्मितः परिमाणेन सदृशः भूत्वा निशि रात्रौ तां पुरीं प्राप्स्यन् प्राप्तुमिच्छन् निजरूपवर्ती स्वस्वरूपं प्राप्तां लङ्कां लङ्काभिमानित्वात् लङ्कानाम्नीं ददर्श । मूर्तिमतीं लङ्काभिमानिनीं ददर्शेति भावः । अनया लङ्काभिमानिन्या देवतया निरुद्धः कुत्र यासीति प्रतिरुद्धः हनुमान् स्वमुष्टिघातेन पिष्टवत्कृतां तां आसुरीं विजित्य तया देवतया गच्छेति अनुमत एव लङ्कां विवेश । वैरिपट्टणं द्वारप्रदेशेन न प्रवेष्टव्यं इति नीतिप्रदर्शनार्थं प्राकारादन्तः प्रविवेश इति भावः । तदुक्तम्– 'अद्वारेण महाबाहुः प्राकारमभिपुप्लुवे ।' इत्यादि रामायणे ॥९॥

**भावचन्द्रिका–** रुद्धस्ताडितः । वाममुष्टिपिष्टाम् । 'कस्त्वं पुरप्रवेशीति भर्त्सयन्ती नदन्त्युत । ताडयामास तं चण्डी स्त्रीरूपा पुरदेवता ॥ अचिकीर्षुः कपिवरः स्त्रीवधं सञ्जुगुप्सितम् । वामे वामकराग्रेण तां मनाक् प्रत्यताडयत् ॥' इति संग्रहरामायणे । [सु.का.२. ४६–४७] ॥ **विवेशेति** ॥ 'अद्वारेण बलोदारः प्रविवेश रिपोः पुरीम् ।' इति । [सं.रा.सु.का. २.५१] 'मत्तप्रमत्तस्त्रीपुंस्कं पुरं शुद्धिविवर्जितम् । अभिचार इव क्रूरः प्रदोषे प्राप्तवान् कपिः ॥' [सं.रा.सु.का. २.४२] ॥९॥

**गूढवाक्यार्थ–** निजरूपवर्ती लङ्काभिमानिनीं देवताम् । रुद्धः ताडनपूर्वकमिति शेषः । 'ताडयामास तं चण्डी स्त्रीरूपा पुरदेवता' इति संग्रहे ॥१२॥

**मार्गमाणो बहिश्चान्तः सोऽशोकवनिकातले[१] ।**
**ददर्श शिंशुपावृक्षमूलस्थितरमाकृतिम् ॥१०॥**

**वेदाङ्गतीर्थीया–** बहिश्चान्तः लङ्कापुरस्येति शेषः ॥१०॥

**वादिराजीया–** अन्तः पट्टणान्तः । बहिरुपवनादौ । अशोकवनिका अशोकवृक्षाणां वनं तस्यास्तले । कण्टकयुक्ताशोकविशेषः शिंशुपेत्युच्यते ॥१०॥

**वरदराजीया–** स हनूमान् बहिरन्तश्च मार्गमाणः सीतां प्रतिकृतिमन्वेषमाणो अशोकवनिकातले अशोकाख्यवनस्थाने शिंशुपावृक्षस्य मूले स्थितां रमाकृतिं ददर्शेत्यर्थः ॥१०॥

**जनार्दनीया–** वहिश्चान्तः लङ्काया इति शेषः । मार्गमाणः सीताप्रतिकृतिमिति शेषः । स हनुमान् । अशोकवनिकातले अशोकवनस्थले शिंशुपावृक्षस्य शिंशुपाख्यवृक्षविशेषस्य मूले अधःस्थितां उपविष्टां रमायाः सीतायाः आकृतिं प्रतिमां ददर्श ॥१०॥

१. 'क्रीडा यत्र वने स्त्रीभिरशोकवनिका तु सा' इति वंशीधरकृते नवमस्कन्धभागवतव्याख्याने ।

**अनन्तभट्टीया–** मार्गमाणो बहिश्चान्त इत्यत्र अन्तः पट्टणान्तः । कण्टकयुक्ताशोकवृक्षविशेषः शिंशुपेत्युच्यते ।।१०–११।।

**चट्टी–** स हनुमान् लङ्कायाः बहिः उपवनादौ अन्तः पट्टणान्तश्च मार्गमाणः सीताप्रकृतिमन्वेषमाणो अशोकवनिकातले अशोकाख्यवनस्थाने शिंशुपावृक्षस्य पनसवृक्षस्य ['शिंशुपाख्यवृक्षविशेषस्य' इति खपुस्तके] मूले स्थितां रमाकृतिं ददर्शेत्यर्थः ।।१०।।

**भावचन्द्रिका–** अशोकवृक्षप्राचुर्यात् अशोकवनम् । 'अशोकशोचिषा शोणं वनमैक्षत वानरः । पद्मरागैरिवाकीर्णं हरितोपलपर्वतम् ।।' इति संग्रहरामायणे । [सु.का.३.३६] शिंशुपामूलस्य विहारस्थानत्वात् तत्र स्थापयामास । 'शिंशुपां काञ्चनमयीं मेघे सौदामिनीमिव । तत्र प्रवालसोपानं चैत्ये प्रासादमद्भुतम् ।। सहस्रस्तम्भमैक्षिष्ट श्रीमत्कनकवेदिकम् ।। इति च । [सं.रा.सु.का.३.४१-४२] तत्र स्थापनं कुतः । बलाद्धर्षणं कस्मान्न कृतमिति चेन्न ब्रह्मशापात् । 'पितामहो लोकहितं तदा शापं ददौ हि सः । बलाच्चेद्भोक्ष्यसे काञ्चित् शिरश्शीर्येत ते तदा ।।' इति च । नलकूबरशापेन रक्षिता ह्यसि जानकी [नन्दिनी] । शप्तो ह्येव पुरा पापः वधूं रम्भां परामृशन् ।।' इति भारते [वनपर्व २८१.६०] ।।१०–१५।।

**कण्ठकोद्धार–** शिंशुपावृक्षमूलेति शिंशिपावृक्षः पनसवृक्ष इत्याहुः ।

।। इति चक्रपाणिश्रीनिवासाचार्यविरचिते कण्ठकोद्धारे सप्तमोध्यायः ।।

**गूढवाक्यार्थ–** अन्तः पट्टणान्तः । कण्टकयुक्तो अशोकवृक्षः शिंशुपेत्युच्यते ।।१०।।

**नरलोकविडम्बस्य जानन् रामस्य हृद्गतम् ।**
**तस्य चेष्टानुसारेण कृत्वा चेष्टाश्च [१]संविदम् ।।११।।**

**वेदाङ्गतीर्थीया–** संविदः कथाः ।।११।।

**वादिराजीया–** नरलोकानां विडम्बोऽनुकरणं यस्य तस्य रामस्य हृद्गतं सर्वज्ञत्वेन सम्पातिवचनेन चोपवने तिष्ठतीति जानताऽपि त्वयाऽन्यनरवदन्तर्बहिः सीतान्वेषणं कर्तव्यम्, निरपेक्षेणापि मयोक्तं प्रियवचनं च वक्तव्यम्, मुद्रिका च देया, तद्दत्तचूडामणिश्चानेया इत्यादिकं हृद्गतं जानन् तस्य चेष्टानुसारेण चेष्टा अन्वेषणादिचेष्टा संविदं इष्टां गोष्ठीं च कृत्वेति सम्बन्धः ।।११।।

**वरदराजीया–** नरलोकं विडम्बयतीति तथा तस्य रामस्य हृद्गतमभिप्रायं जानन् तस्य रामस्य चेष्टानुसारेण दैत्यमोहकविडम्बनानुसारेण चेष्टा विडम्बनानि कृत्वा तया सीतया साकं संविदः सत्कथाः कृत्वा ।।११।।

---

१. 'संविदम्' इति जनार्दनभट्टभारतश्रीनिवासाचार्यसम्मतपाठः । 'संविद' इति इतरेषां पाठः ।

**जनार्दनीया–** नरलोकं विडम्बयतीति नरलोकविडम्बः तस्य रामस्य हृद्गतं मनोभिप्रायं जानन् । हनुमान् तस्य रामस्य असुरमोहनरूपचेष्टानुसारेण चेष्टा विडम्बकर्माणि कृत्वा, संविदं विचारं कृत्वा, ततः तादृक्चेष्टाभिः रामचेष्टासदृशचेष्टाभिः समेतायै युक्तायै अङ्गुलीयमुद्रिकां अदात् ।।११।।

**ताम्रपर्णीया–** नरलोकानां विडम्बो अनुकरणं यस्य तस्य रामस्य हृद्गतं सर्वज्ञेनापि त्वया सीता मार्गणं कार्यम्, अदर्शननिमित्तकशोकः प्रदर्शनीयः, इत्यादिकं हृद्गतं जानन्नित्यर्थः । संविदः नाहं राक्षस इत्यादिशपथवचनानि ।।११।।

**चट्टी–** नरलोकं विडम्बयतीति तथा । तस्य रामस्य हृद्गतमभिप्रायं जानन् तस्य रामस्य चेष्टानुसारेण दैत्यमोहकविडम्बनानुसारेण चेष्टाः विडम्बनकर्माणि कृत्वा तथा सीतया साकं संविदः इष्टगोष्ठीः सङ्कथाः ताश्च कृत्वा ।।११।।

**भारतश्री–** तस्य चेष्टानुसारेण संविदं संविदमुद्दिश्य रामसम्बन्ध्ययमिति ज्ञापनमुद्दिश्येत्यर्थः ।।

**गूढवाक्यार्थ–** नरलोकानां विडम्बः अनुकरणं यस्य तस्य । रामस्य हृद्गतं सर्वज्ञत्वेन शिंशुपामूले तिष्ठतीति जानतापि त्वया सीतामार्गणादिकं कर्तव्यम्, अदर्शननिमित्तकशोकोऽपि प्रदर्शनीय इत्यादि रामस्य हृद्गतं ज्ञानमित्यर्थः । संविदः सम्यग्वेदयति अभिष्टं ददातीति संविदः नाहं रावण इत्यादि शपथवचनानि ।।११।।

**तादृक्चेष्टासमेताया अङ्गुलीयमदात्ततः ।**
**सीताया यानि चैवासन्नाकृतेस्तानि सर्वशः ।।१२।।**

**व्यासतीर्थीया–** नाऽहं राक्षस इत्यादिरूपां संविदं शपथं कृत्वा अङ्गुलीयमदादित्यनन्तरं अथ चूडामणिमिति योज्यम् । ननु नायं चूडामणिप्रत्यायकः सीताचूडामण्यन्यत्वात् इति शङ्कां परिहरन्नाह– **सीताया इति** ।। सीताया यानि भूषणान्यासन् आकृतेः तान्यासन्नेव ।।१२।।

**वेदाङ्गतीर्थीया–** तादृक्चेष्टासमेतायै लोकविडम्बकरामचेष्टासदृशचेष्टायुक्तायै । अथ चूडामणिमिति चूडामणिदानं वक्ष्यते । सीताचूडामणिस्तदाकृतेः कथमासीदित्यस्तद् घटयति– **सीताया इति** ।। यानि भूषणानि कटकादीन्यासन् तानि सर्वशः आकृतेः सीताकृतेरासन् । कथमेतदित्यत आह– **द्विधेत्यादि** ।। तान्येव सीताभूषणान्येव तथैव तत्प्रकारेणैव द्विधा भूत्वा आसन्निति योजना । अथ अङ्गुलीयप्रदानानन्तरम् । नरलोकविडम्बस्येत्यादिना रामविडम्बनानुसारेण सीताकृतेः हनुमति विडम्ब उक्तः ।।१२-१३।।

**वादिराजीया–** मूलरूपसीताया यानि भूषणानि तान्येवाकृतेश्च कथमासन्नित्यत उक्तम्– **द्विधा भूत्वेति** ।। तान्येव मूलरूपसीताया भूषणान्येव सीतासामर्थ्यात् द्विधा भूत्वा । तथैव मूलरूपाभरणवदेव । मूलरूपाभरणादीषदपि वैलक्षण्यं नेत्यर्थः । आसन्निति योजना ।।१२-१३।।

**मधुसूदनीया–** अङ्गुलीयकं रामनामाङ्कितमिति बोध्यम् । अदात् ददावित्यर्थः । तदुक्तम्– 'वानरोऽहं महाभागे दूतो रामस्य धीमतः । रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ।।' [सु.का.३६.२] इति रामायणे । अत्र हनूमदागमनसमये सीताया रावणाहरणाऽनन्तरं दशमासा गता इति शेषः । प्रसङ्गादुक्त इति ज्ञेयम् ।।१२।।

**वरदराजीया–** तादृक्चेष्टासमेतायै दैत्यमोहकरामचेष्टासदृशचेष्टायुक्तायै सीतायै ततो अनन्तरं अङ्गुलीयं रामेण दत्तं प्रत्ययार्थं विश्वासार्थं अदादित्यर्थः । 'अथ चूडामणिम्' इति वक्ष्यति । तत्र सीतायाः चूडामणिः सीताप्रतिकृतेः कथमागतः इत्याशंक्य तां परिहरति– **सीताया इति** ।। सीताया यानि वलयादीनि भूषणानि आसन् तान्येव सर्वशः सर्वाण्यपि आकृतेरासन्निति सम्बन्धः ।।१२।।

**जनार्दनीया–** ननु रामस्य विश्वासार्थं आकृतिः सीतायाः चूडामणिं ददाविति वक्ष्यते तर्हि आकृतेः सीताभूषणप्राप्तिः कथमित्यत आह– **सीताया इति** ।। सीतायाः यानि भूषणानि आसन् । सर्वशः सर्वाणि तानि चूडामण्यादिभूषणानि आकृतेरासन् ।।१२।।

**अनन्तभट्टीया–** यानि सीतायास्तानि आकृतेश्चासन्निति सम्बन्धः । प्रतिनिधित्वशङ्कापरिहाराय आह– **द्विधेति** ।। तान्येव मूलरूपसीताया सीतासामर्थ्यात् द्विधा भूत्वा तथैव मूलरूपाभरणवदेव मूलरूपाभरणादीषद्वैलक्षण्यमपि विनेत्यर्थः । आसन्निति योजना । रामाय दातुमित्यन्वयः ।।१२-१३।।

**ताम्रपर्णीया–** ।। **सीताया इति** ।। तानि तानीति द्विश्रवणात् यानि यानीत्यवर्तनीयः । तथा च सीताया यानि यानि भूषणान्यासन् तानि तानि सर्वशो भूषणानि द्विधा भूत्वा तथैव पलपरिमाणव्यत्ययं विना आकृतेश्चासन्नित्यर्थः । यद्वा सीताया यानि कटकादीनि भूषणान्यासन् तानि तानि सर्वशोपि तान्येव कटकादीन्येव तथैव तत्पलपरिमाणवैशिष्ट्येनैव द्विधा भूत्वा आकृतेरप्यासन् । कटकस्य कटकमुकुटादिभेदेन न द्विधाभावः । किन्तु कटकत्वेनैव नापि पलपरिमाणव्यत्ययेनेति भावः । यद्वा सीताया यानि भूषणान्यासन् तान्येवाकृतेरप्यासन्नित्येकं वाक्यम् । कथमासन्नित्यत आह– **द्विधेति** ।। तान्येव भूषणानि द्विधा भूत्वा तथैवासन्नित्यपरं वाक्यं इति द्रष्टव्यम् । अथ तस्मात् सीताभरणस्याकृतौ स्थितत्वादेव ।।१२-१६।।[१]

---

१. ।। सीताया इति ।। सीतायाः यानि भूषणानि आसन् तानि आकृतेश्चाप्यासन् । विशकलितत्वेनासन् किं नेत्याह– **सर्वश इति** ।। अन्तिमश्चशब्दः अत्र सम्बन्ध्यते । सर्वशोऽपीत्यर्थः । सर्वेऽपि ब्राह्मणा इति यथा किं ...

**चट्टी–** ततः तादृक्चेष्टासमेतायै दैत्यमोहकरामचेष्टासदृशचेष्टायुक्तायै अङ्गुलीयं रामनामाङ्कितं अदात् ददौ । तदुक्तम्– 'वानरोहं... अङ्गुलीयकम् ।।' इति रामायणे । ततो सीतया साकं संविदनन्तरं अङ्गुलीयं रामेण दत्ते प्रत्ययार्थं विश्वासार्थं अदादित्यर्थः । ननु रामस्य विश्वासार्थं सीताकृतिः चूडामणिं ददौ इति वक्ष्यते । तर्हि सीताप्रतिकृतेः सीताभूषणप्राप्तिः कथं इत्यत आह– **सीताया इति** ।। सीताया यानि वलयादिभूषणानि आसन् तान्येव सर्वशः सर्वाण्यपि आकृतेः प्रतिकृतेः आसन्निति सम्बन्धः ।।१२।।

**भावविवृति–** ।।१-११।। सीताया यानि चैवासन्नाकृतेस्तानि सर्वशः इत्यत्र सीताया यानि भूषणानि यथा यादृशानि आसन् तानि भूषणानि आकृतेरपि तथैव तादृशान्येवासन् पुनः कथमासन्नित्यत आह– **द्विधा भूत्वेति** ।। आकृतेर्यानि भूषणान्यासन् तानि सर्वशः आकृतेरपि द्विधा भूत्वा आसन्नित्यर्थः ।।१२-५०।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूज रामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ सप्तमोऽध्यायः ।।

**अतिविशद–** सीताया यानि चैवासन्नाकृतेस्तानि सर्वश इत्यत्र तानि तानि इति पदद्वयमस्ति तत्रैकेनैव चरितार्थत्वात् अन्यद्व्यर्थमिति चेन्न । सर्वोपसंहारेण व्याप्तिप्रदर्शनार्थं पुनस्तानीत्यस्य सार्थक्योपपत्तेः । ततश्चैवं वाक्ययोजना । सीताया यानि भूषणान्यासन् तानि तान्येव द्विधा भूत्वा आकृतेस्तथैवासन्निति । अत्र यद्यपि यानीत्येकं पदमस्ति तथापि अव्ययात् सर्वश इत्यस्य तदर्थत्वेनोपपत्तेरिति भावः । यानि सर्वश इति वा । [तदुशब्दस्य] वीप्साभावपक्षे तु अनन्यगत्या सर्वनामप्रसिद्धार्थमिति तानीत्येकपदस्य प्रसिद्धार्थत्वोपपत्तेः । ननु सर्वोपसंहारेण व्याप्तिः प्रदर्शिता इति साहसम् । तथास्मिन्ग्रन्थे क्वाप्यदर्शनादिति चेन्न । 'उक्तक्रमात्पूर्वभवस्तु यो यः श्रेष्ठः स स ह्यासुरकानृते'

---

... किरीटवदत्रासन्नेत्याह– **द्विधा भूत्वेति** ।। न किरीटवदित्यर्थः । द्विधा भूत्वेत्युक्त्या प्राप्तामाकारान्तरत्वाशङ्कामपाकरोति– **तान्येवेति** ।। तान्येव कटकादीन्येव । न त्वाकारान्तरविशिष्टान्यासन्नित्यर्थः । एकस्यैव द्विधाभावे पलपरिमाणादिव्यत्ययः स्यादित्यत आह– **तथैवेति** ।। चमसवदीश्वराचिन्त्यशक्त्या आभरणनामपि पलपरिमाणादिव्यत्ययं विना आकारान्तरतापत्तिं विना सर्वेषामपि द्विधाभूतत्वं युक्तमेवेति । ततश्चैवं योजना । सीतायाः यानि भूषणानि आसन् तानि सर्वशोऽपि द्विधाभूत्वैव तथैव तान्येव कटकादीन्येव आकृतेरप्यासन्निति रहस्यम् । केचित् पादत्रयमेवं व्याख्याय चतुर्थमेवं व्याचक्षते 'ननु सीताकृतेरग्निप्रवेशानन्तरं तान्याभरणानि किं विनष्टानीत्याह– **तान्येवेति** ।। तानि सीताकृतिगतानि तथैव पूर्ववदासन्नित्यर्थः । यद्वा यानि लक्ष्म्यां विद्यमानानि आभरणानि पलादिव्यत्ययं विना द्विधाभूत्वा सीताया आसन् । सीतायाः यान्यासन् तानि तथैव द्विधाभूत्वा आकृतेरप्यासन्नित्यर्थः । ननु सीतायाः मूलरूपसंश्लेषाभरणानि किमासन्नित्यत आह– **तान्येवेति** ।। मूलरूपैः किमासन्नित्यर्थः' इति वदन्ति ।।१२-२६।। इति हो पुस्तके अधिकः पाठः ।

इति तृतीयाध्याये दर्शनात् । अथवा भिन्नमेव वाक्यद्वयमेतत् । आसन् आसन्निति क्रियाभेदात् कर्तृभेदोपपत्तेरिति । अक्षरयोजना तु सीतायाः यानि सर्वशः भूषणानि तानि आकृतेश्चासन्निति एकम् । ननु सीतायाः यदि सर्वभूषणानि आकृतेः तर्हि सीतायाः न स्युरित्यतः द्वितीयम् । तद्योजना तु तान्येव सीताभूषणान्येव द्विधा भूत्वा तथैवासन्निति द्विधाभूत्वेत्यादिभूषणानि उभयत्र तत्सदृशत्वतद्व्यत्यास-निरासार्थम् ।।१२-१९।।

**प्रमाणसंग्रहे–** ।। **अङ्गुलीयमदादिति** ।। 'वानरो... अङ्गुलीयकम् ।।' इति च [सु.का.३६.२] ।।१२।।

**गूढवाक्यार्थ–** अङ्गुलीयकमदादित्यनन्तरं अथ चूडामणिं ददाविति योज्यम् । अयं चूडामणिः सीता चूडामणितः अन्य एवेति शङ्कां वारयन्नाह– **सीताया इति** ।। तानि तानीति द्विवारं श्रवणात् यानि यानीति अवर्तनीयम् । तथा च सीताया यानि यानि कटकताटङ्कचूडामण्यादीनि भूषणान्यासन् तानि तान्येव सर्वशो भूषणानि तथैव तत्पलपरिमाणादिनैवेति यावत् । द्विधा भूत्वा आकृतेरप्यासन्नेव । तथाच तस्मात् सा सीताकृतिर्दिव्यं चूडामणिं रामाय दातुं ददाविति योजना ।।१२-१३।।

**भूषणानि द्विधा भूत्वा तान्येवासन् तथैव च ।**
**अथ चूडामणिं [1]दिव्यं [2]दातुं रामाय सा ददौ ।।१३।।**

---

१. चूडामण्यागतिक्रमः उक्तः रामायणे । तथाहि– 'मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले यथा दत्तमधिकं मूर्ध्नि शोभते ।। अयं हि जलसम्भूतो मणिः प्रवरपूजितः । यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ।।' इति । ५.६६.४-५।।

२. सा सीता रामप्रत्ययाय अभिज्ञानत्रयं ददौ । चूडामणिः प्रथममभिज्ञानम्,काककथा द्वितीयं अभिज्ञानम्, मनःशिलातिलकनिर्माणं तृतीयमभिज्ञानम् । अभिज्ञानञ्च रामस्य दद्या हरिगुणोत्तम । क्षिप्तामिषीकां काकस्य कोपादेकाक्षिशातिनीम् ।। मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः । त्वया प्रणष्टे तिलके तं किल स्मर्तुमर्हसि ।। इति वाल्मीकिरामायणे । ५.४०.५ तत्र मनःशिलातिलकोनाम गण्डपार्श्वस्थतिलके नष्टे मनःशिलया मनःशब्दवाच्यया शिलया (नेपालदेशोद्भवः रक्तवर्णधातुविशेषः) तिलकनिर्माणम् । 'मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका । नैपाली कुनटी गोला....।। इत्यमरः २.१०.१०८ । 'सुवर्णरौप्यताम्राश्महरितालमनःशिलाः । गैरिकाञ्जनकांस्यादिलोहसीसाः सहिङ्गुलाः ।। गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः ।।' इत्यन्यत्र । 'अयं चास्मै प्रदातव्यो यत्नात्सुपरिरक्षितः । ब्रुवता वचनान्येवं सुग्रीवस्योपश्रुण्वतः ।। एष चूडामणिः श्रीमान् मया ते यत्नरक्षितः । मनःशिलायास्तिलकं तत्स्मरस्वेति चाब्रवीत् ।। इति चान्यत्र ५.६६.२२-२३ । 'कान्तायास्तिलकविधिं मनःशिलायाः काकाक्षिक्षतिमपि चित्रकूट ऊचे । तं चूडामणिमपि दत्तवान् हनूमान् सोऽभिज्ञा इति विदधेऽखिलज्ञपार्श्वे ।। इति सङ्ग्रहेऽपि ५.६.६७ ।...

**व्यासतीर्थीया–** तत्प्रतिनिधिभूतान्यासन् किं इत्यत आह– **द्विधेति** ।। तान्येव भूषणानि द्विधा भूत्वा तथैव आसन् तेनैव प्रकारेणैव आसन्निति ।।१३।।

**वरदराजीया–** तर्हि सीताया इदानीं न सन्तीति प्राप्तमत उक्तम्– **द्विधेति** ।। भूषणानां रूपद्वयसत्वात् सीताया अपि वर्तन्त एवेत्यर्थः । नैतावता भूषणेषु वैलक्षण्यं मंतव्यमित्याह– **तथैवेति** ।। तेनैव प्रकारेण आसन्नित्यर्थः । अथ तस्मात् सा प्रतिकृतिः दिव्यं श्रेष्ठं चूडामणिं शिरोभूषणं रामाय प्रत्ययार्थं दातुं ददौ ।।१३।।

**जनार्दनीया–** ननु सीतायाः किं न सन्तीत्यत आह– **द्विधेति** ।। तान्येव भूषणानि सीताभूषणानि । तथैव एकप्रकारेणैव । द्विधा भूत्वा आकृतेरासन्नित्यन्वयः । अथ संविदनन्तरम् ।।१३।।

**चट्टी–** तर्हि सीताया इदानीं तानि आभरणानि न सन्तीति प्राप्तमित्यत उक्तम्– **द्विधेति** ।। तान्येव मूलरूपसीताया भूषणान्येव सीतासामर्थ्यात् द्विधा भूत्वा तथैव मूलरूपाभरणवदेव मूलरूपाभरणात् ईषद्वैलक्षण्यमपि विनेत्यर्थः । आकृतेरासन्नित्यन्वयः । अथ अनन्तरं सा प्रतिकृतिः दिव्यं श्रेष्ठं चूडामणिं शिरोभूषणं रामाय प्रत्ययार्थं दातुं ददौ ।।१३।।

**भारतश्री–** तान्येवासन्नीशाचिन्त्यमहिम्ना ।।१३।।

**यद्यप्येतन्न पश्यन्ति निशाचरगणास्तु ते ।**
**द्युलोकचारिणः सर्वे पश्यन्त्यृषय एव च ।।१४।।**

**व्यासतीर्थीया–** ननु तादृक्चेष्टासमेताया इति यद्विडम्बनं कृतं तद्विडम्बनं व्यर्थम् । केषाञ्चित्सुप्तत्वात् केषाञ्चिद्विप्रकृष्टत्वादित्यत आह– **यद्यपीति** ।। पश्यन्त्येव ।।१४-१८।।

**वेदाङ्गतीर्थीया–** उपांशु क्रियमाणत्वेन द्रष्टभावात् व्यर्थोऽयमित्याशङ्क्य द्रष्टुक्त्या तस्य सार्थक्यमुपपादयति– **यद्यपीत्यादिना** ।। एतद् विडम्बनम् । ते सीतापरिरक्षणे विनियुक्ता न पश्यन्ति । सुप्तत्वादिति भावः । द्युलोकचारिण ऋषयश्च पश्यन्त्येव ।।१४।।

**वादिराजीया–** एतत् हनूमत्प्रियवचनादिकं सीताप्रलापादिकं च ते निशाचरगणा लङ्कायामुत्पन्न-निशाचरगणास्तु मद्यामिषभक्षणादिना सुप्तत्वाख्यविशेषेण न पश्यन्ति तथाऽपि द्युलोकचारिणो देवाः ऋषयश्च पश्यन्ति तेषां निद्राभावात् । कलिपूर्वका दैत्याश्च पापादिप्रेरकतयाऽनिद्रिता एव सर्वत्र सन्ति तेऽपि पश्यन्ति ।।१४।।

**वरदराजीया–** नन्वेतादृशं विडम्बनं हनूमता प्रतिकृत्या च किमर्थं कृतं राक्षसानां मोहनार्थमिति चेन्न तेषां सुप्तत्वात् । न हि स्वरूपसद्विडम्बनं तेषां मोहयेत् अतो व्यर्थमेव रहसि विडम्बनमित्यत आह– **यद्यपीति** ।। ते निशाचराणां राक्षसानां गणाः एतद्विम्बनं न पश्यंति । तथापि न व्यर्थम् । यतो द्युलोकचारिणः सर्वे पश्यन्ति तेषां अनिमिषत्वात् ऋषयश्च पश्यन्त्येव ।।१४।।

**जनार्दनीया–** रात्रौ रामविडम्बानुसारेण सीताकृतिहनुमत्कृतविडम्बनं व्यर्थम् । राक्षसैरदृष्टत्वा-दित्याशङ्क्य सार्थक्यमुपपादयति– **यद्यपीति** ।। ते निशाचरगणाः यद्यपि एतद्विडम्बनं न पश्यन्ति सुप्तत्वादिति शेषः । तथापि द्युलोकः अन्तरिक्षलोकः । ऋषयो ज्ञानिनो देवाद्याः । 'ऋष ज्ञाने' इति धातुः ।।

**चट्टी–** नन्वेतादृशं विडम्बनं हनुमता प्रतिकृत्या च किमर्थं कृतम् । राक्षसानां मोहनार्थमिति चेन्न तेषां सुप्तत्वात् । न हि स्वरूपसद्विडम्बनं तेषां मोहहेतुरतो व्यर्थमेव रहसि विडम्बनमित्यत आह– **यद्यपीति** ।। ते निशाचराणां राक्षसानां गणाः एतद्विडम्बनं न पश्यन्ति । तथापि न व्यर्थं यतो द्युलोकचारिणः सर्वे पश्यन्ति तेषां अनिमिषत्वात् । ऋषयश्च पश्यन्त्येव ।।१४।।

**भारतश्री–** ते निशाचरगणाः लङ्कास्थाः ।।१४।।

**तेषां विडम्बनायैव दैत्यानां वञ्चनाय च ।**
**पश्यतां कलिमुख्यानां विडम्बोऽयं कृतो भवेत् ।।१५।।**

**व्यासतीर्थीया–** विडम्बो विनोदः ।।१५-१८ ।।

**वेदाङ्गतीर्थीया–** कृतः अयं विडम्बः तेषां पश्यतां द्युलोकचार्यादीनां विडम्बनायैव भवेत् । वञ्चनञ्च 'न विडम्बनमेतत् किन्तु सत्यमेव' इत्यज्ञानोत्पादम् ।।१५।।

**वादिराजीया–** तत्र तेषां देवर्ष्यादीनां विडम्बनायैव । अस्मदनुकरणमात्रं करोति न त्वज्ञानादिनेति तत्त्वज्ञानोत्पादनायैव नतु वञ्चनायेति एवशब्दः । अनुकरणमात्रस्य दैत्येष्वपि साम्यात् विडम्बनपदेन विडम्बनविषयकं तत्वज्ञानमुपलक्षणीयमिति भावः । अन्यथा विडम्बनाय विडम्बः कृत इत्यात्माश्रयः स्यात् । पश्यतां कलिमुख्यानां दैत्यानां वञ्चनाय च वञ्चनायैव । तु वाक्यालङ्काराय तुशब्दोऽध्याहार्यः । सीतावियोगतो रामः हनुमन्तं प्रेषितवान् । स च सीतामपश्यन्नन्तर्बहिरन्वेषणं कुरुते । अयं रामदूतो मायावी दैत्यो वेति सीतायाः संशयपरिहाराय मुद्रिकां दिशति । सीतां दृष्टवान् वा तूष्णीं वदति वेति राममनस्संशयपरिहाराय सीता स्वचूडामणिं दत्ते । रामवियोगात् सीता रोदतीत्यादिमिथ्याज्ञानजननायैव नतु देववत्तत्त्वज्ञानोत्पादनायेति भावः ।।१५-१९।।

**वरदराजीया–** अतस्तेषां विडम्बनाय विनोदमात्रमेतदिति बुद्ध्युत्पादनाय तथा पश्यतां कलिप्रभृतीनां तेषां सर्वत्र विद्यमानत्वात् तेषां वञ्चनाय सत्यमेवैतदिति मिथ्याज्ञानोत्पादनायोपायं रहसि कृतोपि विडम्बो भवेत् । अतो न वैय्यर्थ्यमिति भावः ।।१५।।

**जनार्दनीया–** कुतोऽयं विडम्बः ? तेषां ऋषीणाम् । विडम्बनाय इदं विडम्बनमेवेति ज्ञानायेत्यर्थः । पश्यतां कलिमुख्यनां दैत्यानां वञ्चनाय असत्ये सत्यमिति ज्ञानार्थम् । मिथ्याज्ञानार्थमिति यावत् ।।१५।।

**अनन्तभट्टीया–** रात्रौ केषाञ्चित् सुप्तत्वात् किमिति सीतावायुजाभ्यां विडम्बनं कृतमित्यत आह– **यद्यपीति** ।। एतद्विडम्बनं कलिमुख्यानां दैत्यानामित्यन्वयः ।।१५-१६।।

**चट्टी–** अतस्तेषां विडम्बनाय विनोदमात्रमेतदिति बुद्ध्युत्पादनाय तथा पश्यतां कलिप्रभृतीनां तेषां सर्वत्र विद्यमानत्वात् । तेषां वञ्चनाय सत्यमेवैतदिति मिथ्याज्ञानोत्पादनाय अयं रहसि कृतोऽपि विडम्बो भवेत् । अतो न वैयर्थ्यमिति भावः ।।१५।।

**भारतश्री–** विडम्बनाय आश्चर्यदर्शनाय । विडम्बो विचित्रव्यापारः । 'दृष्ट्वा यं प्रहसिष्यन्ति व्यापारःस विडम्बकः' इति हलः ।।१५-१७।।

**गूढवाक्यार्थ–** तेषामृष्यादीनां विडम्बनायैव अस्मदनुकरणं करोतीति ज्ञानोत्पादनायैव न तु वञ्चनायैवेत्येवशब्दः । विडम्बः अनुकरणलक्षणः विनोदः ।।१५।।

**कृत्वा कार्यमिदं सर्वं विशङ्कः पवनात्मजः ।**
**आत्माविष्करणे चित्तं चक्रे मतिमतां वरः ।।१६।।**

**वरदराजीया–** इदं सर्वं कार्यं सीताकृतिदर्शनं अङ्गुलीयदानं ततश्चूडामणिग्रहणमित्यादि सर्वं कार्यं कृत्वा विशङ्को भयशङ्कारहितः मतिमतां बुद्धिमतां श्रेष्ठः पवनात्मजो हनूमान् आत्मनः स्वस्य आविष्करणे प्रत्यक्षीकरणे राक्षसान् प्रति स्वात्मानं प्रदर्शयितुं चित्तं चक्रे । तथा निश्चितवानित्यर्थः ।।

**जनार्दनीया–** मतिमतां बुद्धिमतां मध्ये वरः । विशङ्कः राक्षसबाधाशङ्कारहितः । इदं लङ्कायां कृतं सर्वं कार्यं मुद्रिकादानादिकर्म कृत्वा, आत्मनः स्वस्याविष्करणे प्रकटीकरणविषये चित्तं बुद्धिं चक्रे ।।

**चट्टी–** इदं सर्वं कार्यं सीताकृतिदर्शनं अङ्गुलीप्रदानं ततश्चूडमणिग्रहणमित्यादिसर्वकार्यं कृत्वा विशङ्कः भयरहितः मतिमतां श्रेष्ठः पवनात्मजो हनुमान् आत्मनः स्वस्याविष्करणे राक्षसान् स्वात्मानं दर्शयितुं चित्तं चक्रे । तथा निश्चितवानित्यर्थः ।।१६।।

**भावचन्द्रिका–** ।। **आत्मेति** ।। रामदूतस्य विलीनत्वं यशस्करं नेति भावः ।।१६–१७।।

**अथ वनमखिलं तद्रावणस्यावलुम्प्य क्षितिरुहमिममेकं [१]वर्जयित्वाऽऽशु वीरः ।**
**रजनिचरविनाशं काङ्क्षमाणोऽतिवेलं मुहुरतिरवनादी तोरणं चारुरोह ।।१७।।**

**वेदाङ्गतीर्थीया–** इमं शिंशुपाख्यम् । अतिवेलमत्यर्थम् ।।१७।।

**मधुसूदनीया–** तोरणं अशोकवनस्य बहिर्द्वारम् । 'तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम्' इत्यभिधानम् ।।१७।।

**वरदराजीया–** आत्माविष्कारप्रकारं दर्शयति– **अथेति** ।। अथानन्तरं इमं क्षितिरुहं यत्र सीताप्रतिकृतिरस्ति तं शिंशुपाख्यं वृक्षं एकं वर्जयित्वा शेषयित्वा वीरो हनूमान् अखिलं सर्वं तदशोकाख्यं रावणस्य वनं अवलुम्प्य नाशयित्वा आशु रजनीचराणां राक्षसानां विनाशं कांक्ष्यमाणो अतिवेलं भृशं मुहुः अतिरवमतिशब्दं यथा भवति तथा सिंहनादं कृत्वा तोरणं महाद्वारमारुरोह ।।१७।।

**जनार्दनीया–** अथ वीरः । अत एव रजनीचरणानां विनाशं काङ्क्षमाणः हनूमान् इमं एकं क्षितिरुहं सीताकृत्याश्रितमेकं शिंशुपावृक्षं वर्जयित्वा, रावणस्य अखिलं संपूर्णं तद्वनं अशोकवनं अवलुम्प्य च्छित्वा उत्पाट्येत्यर्थः । अतिवेलं अत्यर्थं । मुहुः पुनः पुनरित्यर्थः । अतिरवं उत्कृष्टशब्दं यथा स्यात्तथा । नदतीति नादी सिंहनादी । तोरणं गृहप्राकारद्वारं आरुरोह ।।१७।।

**अनन्तभट्टीया–** अतिवेलं भृशम् । अतिशयितं रवं यथा भवति तथा नदतीत्यतिरवनादी इति विग्रहः ।।१७।।

**ताम्रपर्णीया–** अतिरवनादी अतिवेगनादी । अतिरवः सिंहः तद्वन्नादो यस्येति वा । अतिध्वनियुक्तशब्दवानिति वा ।।१७–२६।।

**चट्टी–** स्वात्माविष्करणप्रकारं दर्शयति– **अथेति** ।। अथानन्तरं इमं क्षितिरुहं यत्र सीताप्रतिकृतिरस्ति तं शिंशुपाख्यं वृक्षमेकं वर्जयित्वा शेषयित्वा वीरो हनुमान् अखिलं सर्वं तदशोकाख्यं रावणस्य वनं विलुम्प्य नाशयित्वा आशु रजनीचराणां राक्षसानां विनाशं काङ्क्षमाणो अपेक्षमाणो अतिवेलं भृशं मुहुः वारं वारं अतिरवं अतिशब्दं यथा भवति तथा नदतीति तथा सिंहनादं कृत्वा तोरणं बहिर्द्वारम् । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । आरुरोह ।।१७।।

---

१. न तत्र कश्चिदुद्देशो यस्तेन न विनाशितः । यत्र सा जानकी सीता स तेन न विनाशितः ।। जानकीरक्षणार्थं वा श्रमाद्वा नोपलक्ष्यते । अथवा कः श्रमस्तस्य सैव तेनाभिरक्षिता ।। चारुपल्लवपुष्पाढ्यं यं सीता स्वयमास्थिता । प्रवृद्धः शिंशुपावृक्षः स च तेनाभिरक्षितः ।। सु.का. ४२.१७-१९

**गूढवाक्यार्थ–** अतिरवनादी अतिध्वनियुक्तशब्दवान् अतिशयितं यथा भवति तथा नदतीति अतिरवनादीति विग्रहः ।।१७।।

**अथाशृणोद्दशाननः कपीन्द्रचेष्टितं परम् ।**
**दिदेश किङ्करान् बहून् कपिर्निगृह्यतामिति ।।१८।।**

**वेदाङ्गतीर्थीया–** निगृह्यतां वध्यताम् ।।१८–१९।।

**मधुसूदनीया–** बहून् बहुसङ्ख्याकान् किङ्करनामकराक्षसानित्यर्थः । तदुक्तम्– 'आत्मनः सदृशान् क्रूरान् किङ्करान् नाम राक्षसान् [५.४२.२४] इत्यादि रामायणे ।।१८।।

**वरदराजीया–** यदर्थमेवं कृतं तज्जातमित्याह– **अथेति** ।। अथानन्तरं दशाननो रावणः परं कपीन्द्रस्य हनूमतश्चेष्टितं स्ववननाशादिकर्माश्रुणोत् । कपिर्निगृह्यतां वध्यतां इत्युक्त्वा बहून् किङ्करान् दिदेश प्रेषयामासेत्यर्थः ।।१८।।

**जनार्दनीया–** परं विरूपचेष्टितं अशोकवनविलुम्पानादिकर्म । निगृह्यतां बध्यताम् ।।१८।।

**अनन्तभट्टीया–** चेष्टितं उद्याननाशादि ।।१८–१९।।

**चट्टी–** यदर्थमेवं कृतं तज्जातमित्याह– **अथेति** ।। अथ अनन्तरं दशाननो रावणः परं विलक्षणं कपीन्द्रस्य हनुमतः चेष्टितं स्ववननाशनादिकार्यमशृणोत् । कपिर्निगृह्यतां बध्यतामित्युक्त्वा बहून् किङ्करान् दिदेश प्रेषयामासेत्यर्थः ।।१८।।

**भारतश्री–** परं पश्चाच अपि ।।१८–२६।।

**भावचन्द्रिका–** किङ्करान्नाम राक्षसान् '...रावणोऽथ समादिशत् । अवध्यान् शङ्करवरात् किङ्करान्नाम राक्षसान् ।।' इति च [सं.रा.सु.का.५.५३] ।।१८–२१।।

**प्रमाणसंग्रहे–** ।। **दिदेश किङ्करानिति** ।। 'आत्मनः सदृशान् क्रूरान् किङ्करान् नाम राक्षसान्' इति च [सु.का.४२.२४] ।।१८।।

**समस्तशो विमृत्यवो वराद्धरस्य किङ्कराः ।**
**समासदन् महाबलं सुरान्तरात्मनोऽङ्गजम् ।।१९।।**

**व्यासतीर्थीया–** अशीतयश्च ताः कोटयश्च अशीतिकोटयः । अशीतिकोटयो यूथपाः यस्मिंस्तत् तथोक्तम् ।।१९–२७।।

**वरदराजीया–** ते प्रेरिताः किङ्कराः समस्तशः सर्वे हरस्य वरात् विमृत्यवो मृत्युरहिताः समासदन् प्रापुरित्यर्थः । आगत्य किं कृतवन्त इत्यत आह– **महाबलमिति** ।।१९।।

**जनार्दनीया–** समस्तशः सर्वे । सुराणां देवानां अन्तरात्मनः अन्तर्यामिणो वायोः । अङ्गजं पुत्रम् । अत एव महाबलं समासदन् आपुः ।।१९।।

**चट्टी–** ते प्रेरिताः किङ्कराः समस्तशः सर्वे हरस्य वरात् विमृत्यवो मृत्युरहिताः समासदन् प्रापुरित्यर्थः । आगत्य किं कृतवन्त इत्यत आह– **महाबलमिति** ।। बलं सेना ।।१९।।

**अशीतिकोटियूथपं पुरस्सराष्टकायुतम् ।**
**अनेकहेतिसङ्कुलं कपीन्द्रमावृणोद्बलम् ।।२०।।**

**वेदाङ्गतीर्थीया–** पुरः सराष्टकायुतं पुरःसराष्टकायुतम् ।।२०–२२।।

**वादिराजीया–** पुरस्सरमष्टकं अष्टसङ्ख्याकमयुतं दशसहस्रं यस्मिन् तत्तथोक्तम् । अशीतिसहस्राग्रेसरभटसहितमित्यर्थः । बलं बहुसङ्ख्याकं चतुरङ्गबलम् ।।२०।।

**वरदराजीया–** बलं सेना । कीदृशम् । आशीतिकोटिसङ्ख्याका यूथपाः यत्र तत्तथा । पुरःसराणां अग्रेसराणां अष्टकायुतं अयुताष्टकं यत्र तत्तथा । अशीतिसहस्राधिकाशीतिकोटिसङ्ख्याकराक्षसयुक्तं बलमित्युक्तं भवति । तथानेकहेतिभिः विचित्रायुधैः सङ्कुलं सान्द्रं एतादृशं बलं यस्य स तथा तम् । सुराणां देवानां अन्तरात्मा सूत्रात्मा मुख्यवायुस्तस्याङ्गजं पुत्रं हनूमन्तं आवृणोत् परितः आवृणोदित्यर्थः ।।२०।।

**जनार्दनीया–** अशीतिश्च ताः कोटयश्च अशीतिकोटयः । अशीतिकोटयो यूथपाः सेनापतयो यस्मिन् तथोक्तम् । अयुतानामष्टकमित्यष्टकायुतम् । पुरःसराणां अग्रेसराणां अष्टकायुतं यस्मिन् तथोक्तम् । अष्टकं च तत् आयुतं चेति वा विग्रहः । अशीतिसहस्रसङ्ख्याकैः पुरःसरैर्युक्तमित्यर्थः । अनेकाश्च ताः हेतयश्च नानाप्रकारायुधानि । ताभिः सङ्कुलं सान्द्रं बलं कपीन्द्रं अवृणोत् स्वकोष्टे चकारेति भावः ।।२०।।

**अनन्तभट्टीया–** ।। **पुरेति** ।। वायोः । पुरस्सराः प्रधानभूताः । हेतयः आयुधानि ।।२०।।

**चट्टी–** कीदृशं अशीतिकोटियूथपं अशीतिकोटिसङ्ख्याका यूथपा यत्र तत् तथा । पुरस्सराणां अग्रेसराणां अष्टकायुतं अयुताष्टकं यत्र तत्तथा । तथाच अशीतिसहस्राधिकाशीतिकोटिसङ्ख्याकराक्षसयुक्तं बलमित्युक्तं भवति । तथा अनेकहेतिभिः विचित्रायुधैः सङ्कुलं सान्द्रं एतादृशं बलं महाबलं महद् बलं यस्य स तथा तं सुराणां देवानां अन्तरात्मा सूत्रात्मा मुख्यवायुः तस्याङ्गजं पुत्रं हनूमन्तं आवृणोत् । परितः समावृणोदित्यर्थः ।।२०।।

**अतिविशद–** पुरःसराष्टकायुतमित्यस्यायमर्थः पुरःसराणामष्टकानि पुरःसराष्टकानि पुरःसराष्टकानामयुतं यस्मिन् तथोक्तम् । अशीतिसहस्रसङ्ख्याकैः पुरःसरैः युक्तमिति समुदायार्थः । 'तेषां अशीतिसाहस्रं किङ्कराणां तरस्विनाम्' [पुरःसराः]' इत्यार्षे [५.४२.२५] । अनेकहेतिसङ्कुलं अनेकाश्च ताः हेतयश्च अनेकहेतयः । अनेके च ते हेतयश्चेति वा ताभिः तैश्च सङ्कुलम् । 'हेतिः शस्त्रे तु न स्त्रियोः' इति केशवः ।।

**गूढवाक्यार्थ–** पुरस्सरं अष्टकं अष्टकसङ्ख्याकं अयुतं दशसहस्रं यस्मिन् तत् तथोक्तमस्तीति सहस्राग्रेसरभटसहितमित्यर्थः ।।२०।।

**समावृतस्तथाऽयुधैस्स ताडितश्च तैर्भृशम् ।**
**चकार तान् समस्तशस्तलप्रहारचूर्णितान् ।।२१।।**

**वादिराजीया–** तैर्भृशं यावत्स्वशक्ति ताडितः । हनुमतो मालाताडितमत्तगजवत् लोमाग्रच्छेदोऽपि न जायत इति ज्ञेयम् । भृशं तलप्रहारचूर्णितांश्चकारेत्युत्तरेण वाऽन्वयः ।।२१।।

**वरदराजीया–** एवं समावृतस्तथायुधैस्तैः राक्षसैः कर्तृभिर्भृशं ताडितः स हनूमान् समस्तशः सर्वांस्तान् तलप्रहारेण करतलताडनेन चूर्णितान् चूर्णीभूतान् चकार ।।२१।।

**जनार्दनीया–** तैः किङ्करैः समावृतः तथा भृशं आयुधैः ताडितः स हनुमान् । समस्तशः सर्वान् तान् तलः हस्ततलः तस्य प्रहारेण आघातेन चूर्णितान् चकार ।।२१।।

**अनन्तभट्टीया–** तलं हस्ततलम् ।।२१।।

**चट्टी–** तैः राक्षसैः समावृतः तथा आयुधैः भृशं ताडितः सः हनूमान् समस्तशः सर्वान् तलप्रहारेण करतलताडनेन चूर्णितान् चकार ।।२१।।

**पुनश्च मन्त्रिपुत्रकान् स रावणप्रचोदितान् ।**
**ममर्द सप्तपर्वतप्रभान् वराभिरक्षितान् ।।२२।।**

**वादिराजीया–** वराभिरक्षितान् ब्रह्मवराभिरक्षितान् ।।२२-२३।।

**सत्याभिनवीया–** तत्रैव पुनश्च मन्त्रिपुत्रकान्... इति श्लोकः । तस्यार्थः । स हनूमान् पर्वतप्रभान् वराभिरक्षितान् रावणप्रचोदितान् सप्तमन्त्रिपुत्रकान् पुनः पुनः ममर्द चेति । एतेन पुनरित्येतत् व्यर्थमिति दूषणं परास्तम् । पुनरित्यस्याऽऽवृत्त्या क्लेशातिशयार्थे पुनः पुनः ममर्देत्यर्थं वक्तुं पुनरित्युक्तं इत्यङ्गीकारात् । एतेनैव चकारो व्यर्थ इति दूषणं निरस्तम् । पूर्वश्लोकोक्तचकारेति क्रियासमुच्चयार्थः ममर्द चेति चशब्द इत्यभ्युपगमात् ।।२२।।

**वरदराजीया–** ते प्रेरिताः किङ्कराः समस्तशः सर्वे हरस्य वरात् विमृत्यवो मृत्युरहिताः समासदन् प्रापुरित्यर्थः । आगत्य किं कृतवन्त इत्यत आह– **महाबलमिति** ।।१९।।

**जनार्दनीया–** समस्तशः सर्वे । सुराणां देवानां अन्तरात्मनः अन्तर्यामिणो वायोः । अङ्गजं पुत्रम् । अत एव महाबलं समासदन् आपुः ।।१९।।

**चट्टी–** ते प्रेरिताः किङ्कराः समस्तशः सर्वे हरस्य वरात् विमृत्यवो मृत्युरहिताः समासदन् प्रापुरित्यर्थः । आगत्य किं कृतवन्त इत्यत आह– **महाबलमिति** ।। बलं सेना ।।१९।।

**अशीतिकोटियूथपं पुरस्सराष्टकायुतम् ।**
**अनेकहेतिसङ्कुलं कपीन्द्रमावृणोद्बलम्** ।।२०।।

**वेदाङ्गतीर्थीया–** पुरः सराष्टकायुतं पुरःसराष्टकायुतम् ।।२०–२२।।

**वादिराजीया–** पुरस्सरमष्टकं अष्टसङ्ख्याकमयुतं दशसहस्रं यस्मिन् तत्तथोक्तम् । अशीतिसहस्राग्रेसर-भटसहितमित्यर्थः । बलं बहुसङ्ख्याकं चतुरङ्गबलम् ।।२०।।

**वरदराजीया–** बलं सेना । कीदृशम् । आशीतिकोटिसङ्ख्याका यूथपाः यत्र तत्तथा । पुरःसराणां अग्रेसराणां अष्टकायुतं अयुताष्टकं यत्र तत्तथा । अशीतिसहस्राधिकाशीतिकोटिसङ्ख्याकराक्षसयुक्तं बलमित्युक्तं भवति । तथानेकहेतिभिः विचित्रायुधैः सङ्कुलं सान्द्रं एतादृशं बलं यस्य स तथा तम् । सुराणां देवानां अन्तरात्मा सूत्रात्मा मुख्यवायुस्तस्याङ्गजं पुत्रं हनूमन्तं आवृणोत् परितः आवृणोदित्यर्थः ।।२०।।

**जनार्दनीया–** अशीतिश्च ताः कोटयश्च अशीतिकोटयः । अशीतिकोटयो यूथपाः सेनापतयो यस्मिन् तथोक्तम् । अयुतानामष्टकमित्यष्टकायुतम् । पुरःसराणां अग्रेसराणां अष्टकायुतं यस्मिन् तथोक्तम् । अष्टकं च तत् आयुतं चेति वा विग्रहः । अशीतिसहस्रसङ्ख्याकैः पुरःसरैर्युक्तमित्यर्थः । अनेकाश्च ताः हेतयश्च नानाप्रकारायुधानि । ताभिः सङ्कुलं सान्द्रं बलं कपीन्द्रं अवृणोत् स्वकोष्टे चकारेति भावः ।।२०।।

**अनन्तभट्टीया–** ।। **पुरेति** ।। वायोः । पुरस्सराः प्रधानभूताः । हेतयः आयुधानि ।।२०।।

**चट्टी–** कीदृशं अशीतिकोटियूथपं अशीतिकोटिसङ्ख्याका यूथपा यत्र तत् तथा । पुरस्सराणां अग्रेसराणां अष्टकायुतं अयुताष्टकं यत्र तत्तथा । तथाच अशीतिसहस्राधिकाशीतिकोटिसङ्ख्याकराक्षसयुक्तं बलमित्युक्तं भवति । तथा अनेकहेतिभिः विचित्रायुधैः सङ्कुलं सान्द्रं एतादृशं बलं महाबलं महद् बलं यस्य स तथा तं सुराणां देवानां अन्तरात्मा सूत्रात्मा मुख्यवायुः तस्याङ्गजं पुत्रं हनूमन्तं आवृणोत् । परितः समावृणोदित्यर्थः ।।२०।।

**अतिविशद—** पुरःसराष्टकायुतमित्यस्यायमर्थः पुरःसराणामष्टकानि पुरःसराष्टकानि पुरःसराष्टकानामयुतं यस्मिन् तथोक्तम् । अशीतिसहस्रसङ्ख्याकैः पुरःसरैः युक्तमिति समुदायार्थः । 'तेषां अशीतिसाहस्रं किङ्कराणां तरस्विनाम्' [पुरःसराः]' इत्यार्षे [५.४२.२५] । अनेकहेतिसङ्कुलं अनेकाश्च ताः हेतयश्च अनेकहेतयः । अनेके च ते हेतयश्चेति वा ताभिः तैश्च सङ्कुलम् । 'हेतिः शस्त्रे तु न स्त्रियोः' इति केशवः ।।

**गूढवाक्यार्थ—** पुरस्सरं अष्टकं अष्टकसङ्ख्याकं अयुतं दशसहस्रं यस्मिन् तत् तथोक्तमस्तीति सहस्राग्रेसरभटसहितमित्यर्थः ।।२०।।

**समावृतस्तथाऽयुधैस्स ताडितश्च तैर्भृशम् ।**
**चकार तान् समस्तशस्तलप्रहारचूर्णितान् ।।२१।।**

**वादिराजीया—** तैर्भृशं यावत्स्वशक्ति ताडितः । हनुमतो मालाताडितमत्तगजवत् लोमाग्रच्छेदोऽपि न जायत इति ज्ञेयम् । भृशं तलप्रहारचूर्णितांश्चकारेत्युत्तरेण वाऽन्वयः ।।२१।।

**वरदराजीया—** एवं समावृतस्तथायुधैस्तैः राक्षसैः कर्तृभिर्भृशं ताडितः स हनूमान् समस्तशः सर्वांस्तान् तलप्रहारेण करतलताडनेन चूर्णितान् चूर्णीभूतान् चकार ।।२१।।

**जनार्दनीया—** तैः किङ्करैः समावृतः तथा भृशं आयुधैः ताडितः स हनुमान् । समस्तशः सर्वान् तान् तलः हस्ततलः तस्य प्रहारेण आघातेन चूर्णितान् चकार ।।२१।।

**अनन्तभट्टीया—** तलं हस्ततलम् ।।२१।।

**चट्टी—** तैः राक्षसैः समावृतः तथा आयुधैः भृशं ताडितः सः हनूमान् समस्तशः सर्वान् तलप्रहारेण करतलताडनेन चूर्णितान् चकार ।।२१।।

**पुनश्च मन्त्रिपुत्रकान् स रावणप्रचोदितान् ।**
**ममर्द सप्तपर्वतप्रभान् वराभिरक्षितान् ।।२२।।**

**वादिराजीया—** वराभिरक्षितान् ब्रह्मवराभिरक्षितान् ।।२२-२३।।

**सत्याभिनवीया—** तत्रैव पुनश्च मन्त्रिपुत्रकान्... इति श्लोकः । तस्यार्थः । स हनूमान् पर्वतप्रभान् वराभिरक्षितान् रावणप्रचोदितान् सप्तमन्त्रिपुत्रकान् पुनः पुनः ममर्द चेतिं । एतेन पुनरित्येतत् व्यर्थमिति दूषणं परास्तम् । पुनरित्यस्याऽऽवृत्त्या क्लेशातिशयार्थे पुनः पुनः ममर्देत्यर्थं वक्तुं पुनरित्युक्तं इत्यङ्गीकारात् । एतेनैव चकारो व्यर्थ इति दूषणं निरस्तम् । पूर्वश्लोकोक्तचकारेति क्रियासमुच्चयार्थः ममर्द चेति चशब्द इत्यभ्युपगमात् ।।२२।।

**वरदराजीया–** पुनश्च पुनरपि स हनूमान् रावणेन प्रचोदितान् प्रेरितान् मन्त्रिणां प्रहस्तादीनां पुत्रकान् सप्तसङ्ख्यकान् पर्वतप्रभान् पर्वतोपमान् वरेण शिववरेणातिगर्वितान् अतिगर्वेण युक्तान् ममर्द पादतलेन मर्दयामास ।।२२।।

**जनार्दनीया–** पर्वतप्रभान् पर्वतसदृशान् । वरेण रुद्रवरेण अभिरक्षितान् ।।२२।।

**अनन्तभट्टीया–** मन्त्रिपुत्रकान्...* वरेति ।। शर्ववराभिरक्षितान् ।।२२।।

**चट्टी–** सः हनुमान् पुनश्च रावणेन चोदितान् प्रेरितान् मन्त्रिणां प्रहस्तादीनां पुत्रान् पर्वतप्रभान् पर्वतप्रकाशिकान् वरेण शिववरेण अभिरक्षितान् ।।२२।।

**भावचन्द्रिका–** ममर्द परिघेण ।।२२।।

**अतिविशद–** ममर्द सप्तपर्वतप्रभानित्यत्र हस्तताडनादिनेति शेषः । तदुक्तम्– 'तलेन कांश्चिच्चरणेन कांश्चित् अन्यान्नखैः कांश्चन नादमात्रात्' इति ।।२२-२६।।

**बलाग्रगामिनस्तथा स शर्ववाक्सुगर्वितान् ।**
**निहत्य सर्वरक्षसां तृतीयभागमक्षिणोत् ।।२३।।**

**वेदाङ्गतीर्थीया–** तृतीयभागं रावणसेनाया इति शेषः ।।२३-२६।।

**वरदराजीया–** तथा बलाग्रगामिनः सेनानायकान् शर्ववाक्सुगर्वितान् समीचीनया रुद्रवरातिगर्वितान् दुर्धर्षयूपाक्षविरूपाक्षसुकर्णप्रधाननामकान् पंच निहत्य सर्वराक्षसां रावणसेनयाः तृतीयभागमक्षिणोत् जघान ।।२३।।

**जनार्दनीया–** बलस्य रावणबलस्य अग्रगामिनः अग्रेसरान् । तथा शर्ववाचा रुद्रवरेणेत्यर्थः । सुगर्वितानतिगर्वितान् सप्त सप्तसङ्ख्याकान् मन्त्रिपुत्रकान् निहत्य, ममर्द पादतलेनेति शेषः । सर्वरक्षसां बलं लङ्कास्थितसर्वराक्षसानां तृतीयभागं अक्षिणोत् व्यनाशयदित्यर्थः ।।२३।।

**अनन्तभट्टीया–** सर्वरक्षसां समस्तरावणसेनाया इत्यर्थः ।।२३।।

**चट्टी–** सः हनुमान् बलाग्रगामिनः बलस्य रावणबलस्य अग्रगामिनः अग्रेसरान् । शर्ववाक् रुद्रवरेणेत्यर्थः सुगर्वितान् पञ्चसङ्ख्याकान् निहत्य ममर्द । तदुक्तम्– 'सञ्चिन्त्य किञ्चित् स निशाचरेशो दुर्धर्षयूपाक्षविरूपपूर्वान् । सभासकर्णप्रघसानुवाच सेनाग्रनेतॄनिति पञ्चवीरान् ।।' इति संग्रहे [सु.६.९] । सर्वरक्षसां लङ्कास्थितसर्वरक्षसां तृतीयभागं अक्षिणोत् जघानेत्यर्थः ।।२३।।

**भावचन्द्रिका**— ।। बलेति ।। सेनाग्रनेतृन् पञ्च । 'सञ्चिन्त्य... पञ्चवीरान् ।।' इति च । 'वनपालान् किङ्करांश्च पञ्चसेनाप्रणायकान् । सप्तमन्त्रिसुतांस्तत्र रावणस्यात्मजं तथा ।।' इति पाद्मे [उ.खं.२४२.२८७] ।।२३।।

**अनौपमं हरेर्बलं निशम्य राक्षसाधिपः ।**
**कुमारमक्षमात्मनस्समं सुतं न्ययोजयत् ।।२४।।**

**वादिराजीया**— सहस्रमेव साहस्रमितिवत् । उपमैवोपमा स्वस्य स्वयमेवोपमा नान्यदिति सूचनाय स्वार्थिको अणिति भावः । अक्षं कुमारं अक्षनामकं कुमारम् ।।२४-२५।।

**सत्याभिनवीया**— तत्रैव कुमारमक्षमात्मनः.... इत्यस्ति । तस्यार्थः । अक्षं अक्षशब्दवन्तं कुमारं कुमारशब्दवन्तं अक्षकुमारनामकं आत्मनः समं सुतं न्ययोजयदिति । एतेन अक्षकुमारनामवत्वलाभार्थं अक्षकुमारमिति वक्तव्यं अक्षं कुमारमिति कथनमयुक्तमिति दूषणं परिहृतम् । अक्षकुमारशब्दयोः अर्श आद्यजन्तत्वात् अक्षकुमारशब्दवत्वं पदार्थः । अक्षकुमारनामवत्वं तात्पर्यार्थ इत्यभ्युपगमात् ।।२४।।

**वरदराजीया**— राक्षसानां अधिपो रावणः हरेः कपेः हनूमतः अनौपमं असदृशं बलं निशम्य आत्मनः स्वस्य बलेन समं अक्षनामकं कुमारं न्ययोजयत् । युद्धाय प्रेरयामास ।।२४।।

**जनार्दनीया**— अनौपमं अतुलं हरेः कपेः बलं निशम्य श्रुत्वा, आत्मनः स्वस्य समम् । बलेनेति शेषः । सुतं स्वपुत्रं अक्षकुमारं न्ययोजयत् । योद्धुमिति शेषः ।।२४।।

**अनन्तभट्टीया**— हरेः कपेः । आत्मनः समम् ।।२४।।

**चट्टी**— राक्षसानां अधिपो रावणः हरेः कपेः अनौपमं अतुल्यं बलं निशम्य श्रुत्वा आत्मनः स्वस्य समम्, बलेनेति शेषः । अक्षकुमारं अक्षकुमाराख्यं सुतं न्ययोजयत् । योद्धुमिति शेषः ।।२४।।

**भावचन्द्रिका**— न क्षीयत इति अक्षम् । अवध्यम् ।।२४-२५।।

**स सर्वलोकसाक्षिणस्सुतं शरैर्ववर्ष ह ।**
**शितैर्वरास्त्रमन्त्रितैर्न चैनमभ्यचालयत् ।।२५।।**

**वरदराजीया**— सो अक्षः सर्वलोकसाक्षिणः वायोः सुतं हनूमन्तं वरैरस्त्रमन्त्रितैः अभिमन्त्रितैः निशितैः तीक्ष्णैः शरैः ववर्ष । तथापि एनं हनूमन्तं नाभ्यचालयत् ।।२५।।

**जनार्दनीया—** सः अक्षः । सर्वलोकानां अन्तर्यामित्वेन साक्षिणः वायोः सुतं शितैः तीक्ष्णैः वरास्त्रैः उत्तमास्त्रमन्त्रैः मन्त्रितैः अभिमन्त्रितैः । एनं हनूमन्तम् ॥२५॥

**अनन्तभट्टीया—** सर्वेति वायोरित्यर्थः ॥२५॥

**चट्टी—** साक्षिणश्च सर्वलोकानामन्तर्यामित्वेन साक्षिण वायोः सुतं शितैः तीक्ष्णैः वरास्त्रैः उत्तमास्त्रैः मन्त्रैश्च मन्त्रितैः शरैः ववर्ष । एनं हनुमन्तं नाभ्यचालयत् । चालयितुं शक्तो नाभूदित्यर्थः ॥२५॥

**स [१]मण्डमध्यकासुतं समीक्ष्य रावणोपमम् ।**
**तृतीय एष चांशको बलस्य हीत्यचिन्तयत् ॥२६॥**

**वादिराजीया—** मण्डमध्यगा मण्डोदरी तस्याः सुतं मण्डमध्यगासुतम् । अक्षकुमारमित्यर्थः । एषो बलस्य रावणबलस्य तृतीयांशः । रावणो बलस्यैकोंऽश, इन्द्रजिद् द्वितीयांशः अक्षकुमारस्तृतीयांशः । वरबलस्यास्त्रबलस्य निजबलस्य च त्रिष्वपि साम्यप्रसिद्धिं सूचयितुं हिशब्दः । इति हेतोरचिन्तयत् वक्ष्यमाणप्रकारेणालोचनमकरोत् ॥२६॥

**सत्याभिनवीया—** तत्रैव स मण्डमध्यका... इति श्लोके मण्डमध्यकासुतमित्यस्य मण्डं पिपीलिकामध्यं 'मण्डं पिपीलिकामध्यं' इत्यभिधानात् । तद्वत् मध्यं कटिप्रदेशः यस्याः सा मण्डमध्यका मण्डोदरीति यावत् । तस्याः सुतमिति यावत् । मण्डोदरीति वक्तव्ये मण्डमध्यकेति कथनं मण्डोदरीतिनाम्नः उदरशब्दस्य कटिप्रदेशलक्षकत्वमङ्गीकृत्य पिपीलिकाकटिप्रदेशसमानकटिप्रदेशवत्त्वमर्थ इति सूचनार्थम् । यद्यपि मण्डोदर्याः पिपीलिकाकटिप्रदेशसमानकटिप्रदेशवत्त्वं बाधितम् । तथापि मण्डोदरीकटिप्रदेशस्य अतिसूक्ष्मत्व एव तात्पर्यमित्यभ्युपगमान्न दोषः ॥२५॥

॥ इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां सप्तमोऽध्यायः ॥

**मधुसूदनीया—** मण्डमध्यकासुतम् 'मण्डं पिपीलिकामध्यम्' इत्यभिधानात् मण्डशब्दार्थोऽवगन्तव्यः ॥

**वरदराजीया—** स हनूमान् मण्डमध्यकासुतं मण्डमध्यकायाः मण्डोदर्याः सुतं रावणोपमं रावणसदृशं समीक्ष्य एष च एषोऽपि रावणस्य बलस्य तृतीयोंऽशकः भागो हीत्यचिन्तयत् ॥२६॥

---

१. 'मण्डोदरी मण्डनभृतोदरी । 'मडि भूषायाम्' इत्यस्माद्धातोः पचाद्यच् । मन्दोदरी वा । दडयोरभेदः । दम्भो दाडिममित्यादिवत् । यद्वा मन्दत्वञ्च अल्पत्वं 'मूढाल्पापटुनिर्भाग्या मन्दा' इत्यमरः । सूक्ष्मोदरीत्यर्थः । मन्दा स्थूलपिपीलिका इत्याचक्षते । तस्य इव कृशमस्या उदरमित्यर्थः ।' इति गोविन्दराजः ।

**जनार्दनीया–** स हनूमान् । मण्डमध्यकायाः मण्डोदर्याः सुतं रावणोपमम् । बलेन इति शेषः । समीक्ष्य, एषोऽक्षः बलस्य रावणबलस्य तृतीयांशको हि तृतीयभाग एवेत्यचिन्तयत् ।।२६।।

**अनन्तभट्टीया–** मण्डमध्यकासुतं मण्डोदरीसुतम् । बलस्य रावणस्य एषः[तृतीयचांशकः इति स्यात्] ।।

**चट्टी–** सः हनुमान् मण्डमध्यकायाः मण्डोदर्याः सुतम् । 'मण्डं पिपीलिकामध्यम्' इत्यभिधानात् मण्डशब्दार्थोऽवगन्तव्यः । रावणोपमं रावणसदृशं समीक्ष्य एषो अक्षः बलस्य रावणबलस्य तृतीयः तृतीयभाग एव इत्यचिन्तयत् । रावणः एकोंऽशः, इन्द्रजित् द्वितीयोंऽशः, अक्षकुमारः तृतीयोंऽशः इत्यचिन्तयदिति भावः ।।२६।।

**भावचन्द्रिका–** मण्डं सूक्ष्मम् ।।२६–३६।।

**प्रमाणसंग्रहे–** ।। **समण्डमध्यगासुतमित्यत्र** ।। 'मण्डं पिपीलिकामध्यम्' इत्यभिधानम् ।।२६।।

**निधार्य एव रावणस्स राघवाय नान्यथा ।**
**यदीन्द्रजिन्मया हतो न चास्य शक्तिरीक्ष्यते ।।२७।।**

**वेदाङ्गतीर्थीया–** निधार्यः निक्षेप्तव्यः । मया न हन्तव्य इति भावः ।।२७–२८।।

**वादिराजीया–** निधार्यः स्थापनीयः ।।२७–३०।।

**वरदराजीया–** रावणः निधार्यः स्थापनीयः न तु मया मारणीयः । कुतः स रावणो राघवस्य भागो नान्यस्य भाग इत्यर्थः । यदि इदानीं इन्द्रजिन्मया हतः स्यात् तर्हि अस्येन्द्रजितः शक्तिः सर्वैः कपिभिः नेक्षते न दृष्टा स्यात् ।।२७।।

**जनार्दनीया–** निधार्य एव स्थापनीयः । यदि हतश्चेत् तर्हि अस्येन्द्रजितः शक्तिः शस्त्रास्त्रशरीरबलं नेक्ष्यते न द्रक्ष्यते । अस्मदीयैरिति शेषः ।।२७।।

**अनन्तभट्टीया–** राघवाय राघवार्थम् । निधार्यः स्थापनीयः । अस्य इन्द्रजितः निशाचरेशस्य समीपमित्यन्वयः ।।२७–३६।।

**ताम्रपर्णीया–** ।। **यदीन्द्रजिदिति** ।। यद्यप्यक्षकुमारोऽपि इन्द्रजित्समः तथापीन्द्रजयादिना अतिबलिष्ठत्वाभिमानादेवमुक्तिः ।।२७–३३।।[१]

---

१. ।। यदीन्द्रजिदिति ।। नन्विदं अक्षहननेऽपि समम् । अन्यथा 'अतस्तयोः समो मया' इति स्ववाक्य-विरोधापत्तेरिति चेत् सत्यम् । तस्येन्द्रजित्समत्वेऽपि तस्येन्द्रजयादिना बलिष्ठत्वख्यातेस्तदनुसारेणाभिप्रेतश्च तदपेक्षया इयमुक्तिः ।।२७–४९।। इति हो पुस्तके अधिकः पाठः ।

**चट्टी–** तर्हि रावण एव हन्यतामित्यत आह– **निधार्य इति** ।। रावणः राघवस्य भागत्वेन निधार्य स्थापनीय एव । अन्यथा न अन्यस्य भागो न भवतीत्यर्थः । यदि इदानीं इन्द्रजित् मया हतश्चेत् तर्हि अन्यैः इन्द्रजितः शक्तिः शस्त्रास्त्रशारीरबलम्, कपिभिरिति शेषः । नेक्ष्यते न दृष्टा स्यात् ।।२७।।

**भारतश्री–** इन्द्रजिदपि यदि मया हतः स्यात् तदा अस्य रावणस्य शक्तिः नेक्ष्यते इति योजना ।।

।। इति श्रीडम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां सप्तमोऽध्यायः ।।

**अतिविशद–** यदीन्द्रजिन्मया हतो न चास्य शक्तिरीक्ष्यते इत्यत्र इन्द्रजिद्धतश्चेत् इन्द्रजितः शक्तिर्नेक्ष्यते इति वदन्ति । तच्छक्तिदर्शनेन किमित्युक्ते मूकेनैव शरणम् । अस्येदमर्थः । यदि मया इदानीं इन्द्रजिद्धतः तदा अस्य रामस्य शक्तिर्नेक्ष्यते । इन्द्रजिदर्थं पूर्वं रामेण गरुडाय वरदानात्, गिरेरानयनार्थं हनुमत्प्रेषणात्, विज्ञानमोचनाच्च । यद्वा अस्य रामस्य अस्य इन्द्रजितश्च शक्तिर्नेक्ष्यते । पूर्वोक्तहेतोरेवेति चशब्दसार्थक्यादेवमप्यर्थ इति ।।२७–३२।।

**गूढवाक्यार्थ–** निधार्यः स्थापनीयः । **इन्द्रजिदिति** ।। यद्यप्यक्षकुमारोऽपि इन्द्रजित्समः तथापि इन्द्रजयादिना अतिबलिष्ठत्वप्रसिद्धेरेवमुक्तम् । ईक्ष्यते रामादिभिरिति शेषः ।।२७–३३।।

**अतस्तयोस्समो मया तृतीय एष हन्यते ।**
**विचार्य चैवमाशु तं पदोः प्रगृह्य पुप्लुवे ।।२८।।**

**वरदराजीया–** अतः कारणात् तयोः रावणेन्द्रजितोः समः तृतीयः एषोऽक्षः मया इदानीं हन्यत इत्येवं विचार्य आशु तं पादयोः प्रगृह्य पुप्लुवे उत्पपात ।।२८।।

**जनार्दनीया–** तयोः रावणेन्द्रजितोः । तमक्षं पदोः पादयोः प्रगृह्य पुप्लुवे ।।२८।।

**चट्टी–** अतः कारणात् तयोः रावणेन्द्रजितोः समः तृतीयः एषोऽक्षो मया इदानीं हन्यते । इत्येवं विचार्य आशु तं पदोः प्रगृह्य पुप्लुवे उत्पपात ।।२८।।

**स चक्रवद्भ्रमातुरं विधाय रावणात्मजम् ।**
**अपोथयद्धरातले क्षणेन मारुतीतनुः ।।२९।।**

**व्यासतीर्थीया–** चक्रवत् भ्रमच्चक्रेण तुल्यं विधाय 'तेन तुल्यं क्रियाचेद्वतिः' इति क्रियार्थे वतिः । तं भ्रामयित्वेत्यर्थः । भ्रमातुरं अपोथयदिति योजना ।।२९–३६।।

**वेदाङ्गतीर्थीया–** मारुती मरुत्सम्बन्धिनी तनुः स्वरूपम् । हनूमानिति यावत् ।।२९–३०।।

**वरदराजीया–** हनूमान् चक्रवत् भ्रमणेनातुरं मृतमयं रावणात्मजं अक्षं मारुतीतनुः मरुत्सम्बन्धिनी तनुः इति विग्रहः । मरुत्स्वरूप इत्यर्थः । धरातले भूपृष्ठे अपोथयत् पोथयामास ।।२९।।

**जनार्दनीया–** मारुतीतनुः मरुत्सम्बन्धिनी तनुः स्वरूपं यस्य स तथा । 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' [सि.कौ.८४०] इति पुंवद्भावनिषेधः । स हनूमान् चक्रवत् कुलालचक्रवत् इत्यर्थः । भ्रमातुरं भ्रमणेन व्याकुलं विधाय अपोथयत् ।।२९।।

**चट्टी–** स हनुमान् चक्रवद्भ्रमणेनातुरं मृतप्रायं रावणात्मजमक्षं मारुतीतनुः मरुत्सम्बन्धिनी तनुः इति विग्रहः । मरुत्स्वरूप इत्यर्थः । धरातले भूपृष्ठे अपोथयत् पोथयामास ।।२९।।

**विचूर्णिते धरातले निजे सुते स रावणः ।**
**निशम्य शोकतापितस्तदग्रजं समादिशत् ।।३०।।**

**वरदराजीया–** निजे सुते स्वसुते धरातले विचूर्णिते सति सः रावणो निशम्य शोकतापितः शोकेन ज्वलन् तस्याक्षस्याग्रजं ज्येष्ठं इन्द्रजितं समादिशत् प्रेषयामास ।।३०।।

**जनार्दनीया–** शोकेन पुत्रशोकेन । तापितः तापं प्रापितः । रावणः तस्याक्षस्य । अग्रजं इन्द्रजितम् ।।

**चट्टी–** निजे सुते धरातले विचूर्णिते सति स रावणो निशम्य शोकतापितः शोकेन ज्वलनेनास्य अक्षस्य अग्रजं ज्येष्ठं इन्द्रजितं समादिशत् प्रेषयामास ।।३०।।

**अथेन्द्रजिन्महाशरैर्वरास्त्रसम्प्रयोजितैः ।**
**ततक्ष वानरोत्तमं न चाशकद्विचालने ।।३१।।**

**वेदाङ्गतीर्थीया–** हन्मीति बुद्ध्या ततक्षेति भावः ।।३१।।

**वादिराजीया–** 'तक्ष तनूकरणे' इति धातोस्ततक्ष हस्तादिच्छेदं कृत्वा तदङ्गाल्पीकरणेच्छया शरप्रयोगमकरोत् । विचालने चेति चशब्दसम्बन्धः ।।३१-३२।।

**वरदराजीया–** अथानन्तरं इन्द्रजित् वरास्त्रमन्त्रितैः सम्प्रयोजितैः त्यक्तैः शरैः वानरोत्तमं ततक्ष ताडितवान् । परं तु चालने हनूमतो चालने नाशकत् न शशाक ।।३१।।

**जनार्दनीया–** वरास्त्रैः दिव्यमन्त्रैः सम्प्रयोजितैः अभिमन्त्रितैः । अत एव महाशरैः । ततक्ष तताड । विचालने नाशकत् न शशाक । वानरोत्तममित्युभयत्र सम्बध्यते ।।३१।।

**चट्टी—** अथानन्तरं इन्द्रजित् वैरस्त्रैः मन्त्रैः सम्प्रयोजितैः अभिमन्त्र्य त्यक्तैः शरैर्वानरोत्तमं ततक्ष ताडितवान् । परन्तु विचालने हनुमतो विचालने नाशकत् न शशाक ।।३१।।

**अथास्त्रमुत्तमं विधेर्युयोज सर्वदुस्सहम् ।**
**स तेन ताडितो हरिर्व्यचिन्तयन्निराकुलः ।।३२।।**

**वेदाङ्गतीर्थीया—** अच्छेद्यत्वाद्धनुमतः ताडितः आवृतः ।।३२-३३।।

**वरदराजीया—** अथानन्तरं सर्वदुःसहं सर्वैः सोढुमशक्यं विधेः ब्रह्मणः उत्तममस्त्रमिति यावत् । युयोज मुमोच । सः हरिः कपिः तेन ताडितोऽपि निराकुलः अव्याकुलो व्यचिन्तयत् तर्कयामास ।।

**जनार्दनीया—** सर्वैः शिवाद्यैः दुःसहं सोढुं अशक्यं विधेरस्त्रं ब्रह्मास्त्रं युयोज अमुचत् । तेन ब्रह्मास्त्रेण निराकुलः निर्मोहः स हरिः हनुमान् व्यचिन्तयत् ।।३२।।

**चट्टी—** अथानन्तरं सर्वदुःसहं सर्वैः सोढुमशक्यं विधेः ब्रह्मणः उत्तममस्त्रं ब्रह्मास्त्रं इति यावत् । युयोज मुमोच । स हरिः कपिस्तेन ताडितोऽपि निराकुलः अव्याकुलः व्यचिन्तयत् तर्कयामास ।।३२।।

**मया वरा विलङ्घिता ह्यनेकशः स्वयम्भुवः ।**
**स माननीय एव मे ततोऽत्र मानयाम्यहम् ।।३३।।**

**वादिराजीया—** लङ्कायां निहतस्याक्षकुमारस्य वरानुक्तेर्ब्रह्मवरादेव शक्तिः । मन्त्रिपुत्राणामपि वराभिरक्षितानिति सामान्येनैव वरोक्तेः ब्रह्मवरादेव शक्तिः । अब्धिमध्ये निहतायाः सिंहिकाया 'सामर्थ्यमप्रतिहतं प्रददौ विधाता' इति स्पष्टोक्तेर्ब्रह्मवरादेव शक्तिरिति भावेन स्वयम्भुवो वरा अनेकशो मया विलङ्घिता इत्युक्तम् । अत एवास्माभिः 'वराभिरक्षितान्' इति सामान्यपदस्य 'ब्रह्मवराभिरक्षितान्' इत्यर्थ उक्तः ।।३३।।

**मधुसूदनीया—** ततः माननीयत्वात् अत्र इन्द्रजिद्विषये तमिति शेषः । मानयामीत्यन्वयः ।।३३।।

**वरदराजीया—** किमिति हि यस्मात्कारणात् स्वयम्भुवो ब्रह्मणोऽनेकशो बहवो वराः विलङ्घिताः तद्दत्तवरराक्षसवधेन । स ब्रह्मा मे मया माननीय एव । ततः कारणात् अत्र समये अहं मानयामि ।।

**जनार्दनीया—** किमिति ? मया स्वयंभुवः ब्रह्मणः अनेकशः बहवो वराः विलङ्घिताः विनाशिताः । अवध्यान् राक्षसान् हत्वेति शेषः । मे मया स ब्रह्मा माननीयो हि यस्मात्ततः कारणात् अहं अत्र इन्द्रजिन्मुक्तब्रह्मास्त्रे । मानयामि ब्रह्माणम् ।।३३।।

**चट्टी–** हि यस्मात् कारणात् स्वयम्भुवो ब्रह्मणोऽनेकशो अनेके बहवो वरा विलङ्घिता, यतः स ब्रह्मा माननीय एव ततः कारणाद् अत्र समये अहं मानयामि ।।३३।।

**अतिविशद–** मया वरा विलङ्घिता ह्यनेकशः स्वयम्भुव इत्यत्र हनूमता ब्रह्मणोऽनेकवरविलङ्घनं प्रतीयते । तदसमञ्जसमिवाभाति छायाग्रहविनाशनेन एकश एव विलङ्घनात् कथमेतदिति चेन्न । अक्षकुमारनाशनेन अनेकशो विलङ्घनात् । नच अक्षकुमारस्य ब्रह्मवराभाव इति वाच्यम् । अर्थापत्त्यैव तत्सिद्धेः । तथाहि– 'आत्मनः समं सुतं' इत्यादौ, 'स मण्डमध्यगासुतं समीक्ष्य रावणोपमम्' इति मध्ये, 'अतस्तयोस्समो मया तृतीय एष हन्यते' इत्यन्ते रावणेन्द्रजित्समता उच्यते । अक्षकुमारस्य वरादिना समताभावे समता केन निर्वाह्या स्यात् न केनापि । न वयसा । न रावणपुत्रत्वात् इन्द्रजिदनुजत्वात् । नापि परिमाणेन । तस्य वृक्षादिसाधारणत्वेन अतिप्रसक्तत्वात् । तस्मादनुपपद्यमाना समता ब्रह्मणो वरादिकमपेक्षत इति । तस्मात् 'मया वरा विलङ्घिता ह्यनेकशः स्वयम्भुवः' इति साधूक्तम् । नन्वथापि 'वरा' इति बहुवचनमनुपपन्नमेवेति चेन्न । हिरण्यकशिपोर्यथा अनेकशो वरास्तथाऽस्य अनेकवरापेक्षया बहुवचनोपपत्तेः । यद्वा नागकन्यालङ्काविलङ्घनेन अनेकशो विलङ्घनं इति वरा इति बहुवचनमुपपन्नम् । तथोक्तं आर्षे– 'तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् । बलं जिज्ञासमाना वै नागमाता हनूमतः ।। प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम । वर एष पुरा दत्तो मम धात्रेति सद्वर ।।' इति [५.१.१५७–१५८] । तथा लङ्कावचनं तत्रैव– 'इदं तु तथ्यं शृणु वै ब्रुवत्या मे हरीश्वर । स्वयम्भुवा यथा दत्तं वरदानं तथा मम ।। यदा त्वां वानरः कश्चित् विक्रमाद्वशमानयेत् । तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ।।' इति [५.३.४६–४७] । अनेनैव 'देवैस्तु नागजननीं प्रहितां वरेण' इत्यत्र ब्रह्मादिदेवैर्वरेण प्रहितामित्यर्थ उक्तो भवति ।।३३-३६।।

**प्रमाणसंग्रहे–** ।। **स माननीय इति** ।। 'ततः...कपिवरात्मज ।।' इति स्कान्दे ।।३३।।

**इमे च कुर्युरत्र किं प्रहृष्टरक्षसां गणाः ।**
**इतीह[१] लक्ष्यमेव मे स रावणश्च दृश्यते ।।३४।।**

**वेदाङ्गतीर्थीया–** मे इह अस्त्रेण बद्धवदवस्थाने इति च लक्ष्यं उद्देश्यं प्रयोजनमिति यावत् । उद्देश्यान्तरञ्चाह– **स रावणश्च दृश्यत इति** ।।३४ ।।

**वादिराजीया–** अत्र बन्धनाख्ये कार्ये सति प्रहृष्टरक्षसां गणा मे किं कुर्युरिति लक्ष्यं द्रष्टव्यम् । अत्र बन्धने सति स रावणश्च दृश्यते । अतो बद्धवत् स्थास्यामीति पूर्वेणान्वयः ।।३४।।

---

१. स रोचयामास परैश्च बन्धं प्रसह्य वीरैरभिगर्हणञ्च । कौतूहलान्मां यदि राक्षसेन्द्रो द्रष्टुं व्यवस्येदिति निश्चितार्थः ।। इति वा.रा.५.४८.४७

**वरदराजीया–** अन्यच्च प्रयोजनमित्याह– **इम इति** ।। प्रहृष्टरक्षसां गणाः मद्धारणेन प्रहृष्टानां राक्षसानां गणाः मां नीत्वा किं कुर्युः किं करिष्यन्ति । इदमेव लक्ष्यमेव द्रष्टव्यम् । एवमपि गते सति रावणोऽपि मया दृश्यते अवलोक्यते ।।३४।।

**जनार्दनीया–** अत्र अस्त्रे सन्मानकरणे प्रहृष्टानां हर्षयुक्तानां रक्षसां राक्षसानां इमे गणा । इह मे किं कुर्युः? इति लक्ष्यं द्रष्टव्यम् । अन्यदपि प्रयोजनमाह– **स इति** ।। दृश्यते अवलोक्यते ।।३४।।

**ताम्रपर्णीया–** ।। **इमे इति** ।। अत्र बन्धनाख्यकार्ये सति । अत्र पुरेति वा । प्रहृष्टरक्षसां गणाः मे किं कुर्युरिति इहैव लक्ष्यं द्रष्टव्यमित्यर्थः ।।३४-३७।।

**चट्टी–** अन्यच्च प्रयोजनमित्याह– **इम इति** ।। प्रहृष्टरक्षसां गणाः । यद्वा रणेन प्रहृष्टानां राक्षसानां गणाः मां नीत्वा किं कुर्युः किं करिष्यन्तीति इह मे लक्ष्यमेव द्रष्टव्यम् । एवमपि गते सति रावणोऽपि मया दृश्यते अवलोक्यते ।।३४।।

**गूढवाक्यार्थ–** ।। **इमे च कुर्युरिति** ।। अत्र बन्धनाख्यकार्ये सति इमे मया किं कुर्युरिति इहैव लक्ष्यं द्रष्टव्यमित्यर्थः ।।३४।।

**इदं समीक्ष्य [1]बद्धवत् स्थितं कपीन्द्रमाशु ते ।**
**बबन्धुरन्यपाशकैर्जगाम चास्त्रमस्य तत् ।।३५।।**

---

१. रावणस्य सुतेनाथ निगृहीतो यदृच्छया । दृष्ट्वा च राक्षसेन्द्रं तु सम्भाषित्वा तथैव च ।। इति पाद्मे, तथा 'हत्वाक्षं राक्षसांश्चान्यान् बन्धनं स्वयमागतः' इति गारुडे(आचार.का.१४.३५) च 'यदृच्छया' 'बन्धनं स्वयमागतः' इति वाक्यबलात् स्वेच्छयैव बद्धवत्स्थितः न तु बद्ध । तथाच पुराणवाक्यात् बन्धाभाव एव प्रतीयते । अतः 'हनूमांश्चिन्तयामास वरदानं पितामहात्' ४८.४०,'पितामहादेष वरो ममापि हि समागतः । राजानं द्रष्टुकामेन मयास्त्रमनुवर्तितम् ।।५०.१७' इत्यादि वाल्मीक्युक्तं वचनजातं मोहायैवेति वदेत् । यदपि महेश्वरतीर्थादयः– 'ग्रहणं समुपागमत् । अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् । मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान्यदृच्छया ।।' इत्यादिरामायणवचानानुसारेण 'यत् अस्त्रस्यामोघतया बन्धनमात्रम् । पञ्चघटिकानन्तरं तन्मोक्षश्च भवतीति ब्रह्मणा हनूमतो वरो दत्तः । अतः पञ्चघटिकानन्तरमेव ब्रह्मास्त्रेणोन्मुक्तं आत्मानं ज्ञात्वा' इत्यादि बभणुः । तच्चिन्त्यम् । उपर्युदाहृतपाद्मगरुडादिषु टिप्पण्युदाहृतस्कन्दपुराणादिषु बन्धनाभावस्यैवोक्तत्वात् । तथाहि– 'ततः पैतामहं वीरः शस्त्रमस्त्रविदां वरः । सन्दधे सुमहातेजाः तं कपिप्रवरं प्रति ।। अवध्यं सर्वभूतानां तदस्त्रं न बबन्ध तम् । अस्त्रं तद्वितथं दृष्ट्वा संजगर्ज पितामहः ।। अथागत्य ततो ब्रह्मा मरुतात्मजमब्रवीत् । नानृतं मद्वचः कार्षीः ग्रहणं गच्छ वानर ।।' इति । किञ्च यथा ब्रह्मास्त्रं अमोघं तथा ब्रह्मवरोऽपि अमोघः । तथाच अमोघब्रह्मवरावध्या अपि त्रिशिरदेवान्तकादयः यथा लीलया हनुमता निहताः तथैव अमोघब्रह्मास्त्रस्य हनूमता मोघीकरणे न काचिदनौचिती । अतः 'पैतामहाद्वरात्' इत्यस्य स्कान्दवचनानुसारेण अन्यार्थ कल्प्यः ।

**वेदाङ्गतीर्थीया–** इदं समीक्ष्य कार्यमेतद् विचार्य ।।३५-३६।।

**वादिराजीया–** अन्यपाशकैरिन्द्रजित्प्रयुक्तनागपाशातिरिक्तलौकिकपाशकैः । तदस्त्रं जगाम हनुमद्विषये निष्फलमभूत् । अत एव उपरि सर्वान् कपीन् नागपाशैर्बध्नन्नपि इन्द्रजित् हनुमतो बन्धनाय न शशाकेति वदिष्यति ।।३५-४०।।

**मधुसूदनीया–** इमे चेति अहमिति शेषः । लक्ष्यमित्येतदावृत्त्या अन्वेतव्यम् । तथाचेत्थं योजना– इति हेतोः अहमिह ब्रह्मास्त्रस्य लक्ष्यं विषयः स्यां तदनन्तरमिमे तत्रत्याः प्रहृष्टराक्षसां गणाः अयं वानरो अस्मद्वशंगतः इति सन्तुष्टाः ये राक्षसाः तेषां गणाः । अत्र रणे किं कुर्युः लक्ष्यं द्रष्टव्यम् । एतैः किं क्रियते तत् पश्यामीति भावः । 'लक्ष दर्शनाङ्कनयोः' इति धातोः । प्रयोजनान्तरं चास्तीत्याह– **स रावणश्चेति** ।। आलोच्यते मया दृश्यते । एतद्दर्शनं चापरं प्रयोजनमस्तीति बद्धः स्यामिति व्यचिन्तयदिति भावः । इदं ब्रह्मणो माननीयत्वं प्रहृष्टेन्द्रजिदादिक्रियमाणकार्यदर्शनं रावणदर्शनं चेति प्रयोजनत्रयं समीक्ष्य आलोच्य बद्धवत्स्थितं कपीन्द्रं हनूमन्तं अन्यपाशकैः बबन्धुरित्यन्वयः । नन्विदं समीक्ष्य बद्धवत्स्थितं इति किमुच्यते अशक्तत्वाद्धनूमान्ब्रह्मास्त्रेण बद्ध एवाभूत् इति किं न स्यादित्यत आह– **चेति** ।।

'ततः पैतामहं वीरः शस्त्रमस्त्रविदां वरः । सन्दधे सुमहातेजाः तं कपिप्रवरं प्रति ।।
अवध्यं सर्वभूतानां तदस्त्रं न बबन्ध तम् । अस्त्रं तद्वितथं दृष्ट्वा संजगर्ज पितामहः ।।
अथागत्य ततो ब्रह्मा मरुतात्मजमब्रवीत् । नानृतं मद्वचः कार्षीः ग्रहणं गच्छ वानर ।।
एवमुक्तस्तथेत्युक्त्वा बद्धः कपिवरात्मजः ।।'

इत्यादि स्कान्दवचनादिदं समीक्ष्य बद्धवदित्यादि युज्यत इति चशब्देन सूचयति । अस्येन्द्रजितः सम्बन्धि तदस्त्रं ब्रह्मास्त्रं जगाम गतमभूत् उत्तरत्र कार्यसाधकं नाभूदित्यर्थः ।।३५।।

**वरदराजीया–** इतीदं प्रयोजनद्वयं च समीक्ष्य बद्धवत् स्थितं कपीन्द्रं हनूमन्तं ते राक्षसाः अन्यपाशकैः ब्रह्मास्त्रातिरिक्तैः पाशैराशु बबन्धुः । अस्येन्द्रजितः तत् ब्रह्मास्त्रं अगमत् वीर्यरहितमभवदित्यर्थः ।।३५।।

**जनार्दनीया–** इदं कार्यद्वयं समीक्ष्य विचार्य । अन्यैः ब्रह्मास्त्रादन्यैः पाशकैः । अस्य इन्द्रजितः तदस्त्रं ब्रह्मास्त्रं ब्रह्मलोकं प्रति जगाम ।।३५।।

**चट्टी–** 'ततः...* वरात्मजः ।।' इत्यादिस्कान्दवचनादिदं बद्धवदित्यायुज्यत इति चशब्देन सूचयति । अस्य इन्द्रजितः सम्बन्धि तदस्त्रं ब्रह्मास्त्रं जगाम गतमभूत् । उत्तरत्र कार्यसाधकं नाभूदिति भावः ।।

**गूढवाक्यार्थ–** अस्य इन्द्रजितः ।।३५।।

**अथ प्रगृह्य तं कपिं समीपमानयंश्च ते ।**
**निशाचरेश्वरस्य तं स पृष्टवांश्च रावणः ॥३६॥**

**वरदराजीया–** अथानन्तरं ते राक्षसाः तं कपिं हनूमन्तं निशाचरेश्वरस्य रावणस्य समीपमानयन् आनीतवन्तः । स रावणश्च तं हनूमन्तं पृष्टवान् अपृच्छत् ॥३६॥

**जनार्दनीया–** तं हनूमन्तं । पृष्टवान् पप्रच्छ ॥३६॥

**चट्टी–** अथ अनन्तरं ते राक्षसाः तं कपिं हनुमन्तं आगृह्य निशाचरेशस्य रावणस्य समीपं आनयन् आनीतवन्तश्च । रावणश्च तं हनूमन्तं पृष्टवान् अपृच्छत् ॥३६॥

**कपे कुतोऽसि कस्य वा किमर्थमीदृशं कृतम् ।**
**इतीरितस्स चावदत्प्रणम्य राममीश्वरम् ॥३७॥**

**वेदाङ्गतीर्थीया–** कुतः समागतः कस्य वा दूत इति शेषः ॥३७–३९॥

**वरदराजीया–** किमिति । हे कपे कुतो आगतोऽसि कस्य वा दूतोऽसि किमर्थं च ईदृशं कार्यं वनभङ्गरूपं कृतं इतीरितः इति पृष्टः स च हनूमान् ईश्वरं स्वामिनं रामं प्रणम्यावदत् ॥३७॥

**जनार्दनीया–** किमिति ? हे कपे त्वं कुतः ? कस्मात् द्वीपात् आगतोऽसि ? कस्य वा दूतोऽसि ? ईदृशं वनभङ्गराक्षसनाशरूपं कर्म किमर्थं कृतम् ? इतीरितः स हनूमान् अवदत् ॥३७॥

**अनन्तभट्टीया–** कुतोऽसि कुत्रागतोऽसि । कस्य, सम्बन्धी इति शेषः ॥३७॥

**चट्टी–** किमिति । हे कपे त्वं कुतः कस्मात् स्थानादागतो कुतः कस्माज्जातोऽसि । कस्य वा दूतोऽसि ईदृशं वनराक्षसनाशरूपं कर्म किमर्थं कृतम् । तदुक्तं सङ्ग्रहे– 'कस्त्वं कपे त्वं कुत आगतोऽसि कस्यासि दूतोपकृतं किमर्थम् ।' इति ईरितः पृष्टः स च हनुमान् ईश्वरं स्वामिनं रामं प्रणम्य अवदत् ॥३७॥

**भावचन्द्रिका–** ॥ **कप इति** ॥ 'कस्त्वं कपे त्वं कुत आगतोऽसि कस्यासि दूतोऽपकृतः किमर्थम् ।' इति च । [सं.रा.सु.का.६.३३] ॥३७–४४॥

**अतिविशद–** कपे कुतोऽसि कस्य वा किमर्थमीदृशं कृतम् इत्यत्र कुतेत्यस्य कस्मात्प्रसूतेत्यर्थः । कस्य वा इत्यस्य कस्य दूत इत्यर्थः । नच कुत इत्यस्य कस्मादागत इत्यर्थः किं न स्यादिति वाच्यम् । तथा सति निरुत्तरत्वापत्तेः । केनापि पदेन तदलाभात् । नास्मत्पक्षे तथा । प्रश्नानुसारेण उत्तरलाभात् । तथाहि । कस्य पुत्रः कस्य दूतः किमर्थमेतत्कृतमिति प्रश्नत्रयम् । अत्र 'अवैहि दूतमागतं

दुरन्तविक्रमस्य माम्' इत्येतत् कस्य दूत इत्यस्य उत्तरम् । प्रश्नप्राधान्यात् । 'मारुतिं कुलक्षये तवेश्वरम्' इति उत्तरद्वयं अवशिष्टद्वयस्य इत्युत्तरविनियोगो लिङ्गादिति । ननु केनापि तदलाभात् असत् । आगतमित्येतावदस्ति वचनम् । रघूत्तमस्यत्येनदपि सकाशादिध्याहारेण रघूत्तमस्य सकाशात् आगतमिति अवैहीति प्रश्नोत्तरलाभादिति चेन्न । अस्मदुक्तप्रकारेणोपपत्तौ अध्याहारस्यागतिकगतिकत्वादिति भावः । अथवा सङ्ग्रहरीत्या 'कस्त्वम्' इत्यादिप्रश्नचतुष्टयं परिकल्प्य समाधातव्यम् । 'कस्त्वं कपे त्वं कुत आगतोऽसि कस्यासि दूतोपकृतं किमर्थम्' इत्युक्तत्वात् मारुतिमित्यस्य त्वं कुत इत्यस्योत्तरत्वं द्रष्टव्यमिति ।।३७–५१।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ सप्तमोऽध्यायः ।।

**गूढवाक्यार्थ–** कुतोऽसि कुतो देशादागतोऽसि । कस्य पुत्रः । कस्य दूतः ।।३७।।

**अवैहि[१] दूतमागतं दुरन्तविक्रमस्य माम् ।**
**रघूत्तमस्य मारुतिं कुलक्षये तवेश्वरम् ।।३८।।**

**व्यासतीर्थीया–** कुत आगतोऽसि कस्य वा दूतोऽसि ईदृशं वनभङ्गादिकर्म किमर्थं कृतमिति त्रयाणामपि प्रश्नानामुत्तरमाह– **अवैहीति** ।।३७–५०।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां सप्तमोऽध्यायः ।।

**मधुसूदनीया–** ।। **अवैहि दूतमिति** ।। 'कुलीनश्शीलसंपन्नो वाग्मी दक्षः प्रियंवदः । यथोक्तवादी स्मृतिमान् दूतः स्यात्सप्तभिर्गुणैः ।।' इति शान्तिपर्वोक्तरीत्या [८५.२८]दूतलक्षणं ज्ञेयम् ।।३८।।

**वरदराजीया–** दुरन्तविक्रमस्य अपरिमितपराक्रमस्य रघूत्तमस्य रामस्य दूतं मारुतिं तव कुलक्षये ईश्वरं समर्थं आगतं प्राप्तं अवैहि जानीहि ।।३८।।

**जनार्दनीया– अवैहीति** ।। दुरन्तः अवधिरहितः विक्रमः पराक्रमो यस्य स तथा तस्य । दूतं आगतं मारुतिं तव कुलक्षये ईश्वरं समर्थं मां अवैहि जानीहि ।।३८।।

**अनन्तभट्टीया–** ईश्वरं समर्थम् ।।३८।।

---

१. दूतोऽहमिति विज्ञाय राघवस्यामितौजसः । श्रूयतामेव वचनं मम पथ्यमिदं प्रभो ।। इति वाल्मीकिरामायणे ५.५०.१९।

**चट्टी–** किमिति । आगतं मां दुरन्तः अवधिरहितः विक्रमः पराक्रमो यस्य स तथा । तस्य रघूत्तमस्य दूतं तव कुलक्षये ईश्वरं समर्थं मारुतिं मरुत्पुत्रं अवैहि जानीहि । रघूत्तमस्य दूतमित्यनेन तत्सकाशादागतः तस्य सम्बन्धीति कुलक्षये तवेश्वरमित्यनेन तव नाशार्थं आगत इति चतृसृणामपि प्रश्नानां उत्तरं जातमिति ज्ञातव्यम् ।।३८।।

**गूढवाक्यार्थ–** कुत आगतोऽसीत्यस्य रामस्य सकाशादित्युत्तरम् । कस्य दूतोऽसीत्यस्य रामस्येति । कस्य पुत्र इत्यस्य मारुतिमिति । किमर्थमित्यस्य तव कुलक्षयार्थमिति ।।३८।।

**न चेत्प्रदास्यसि त्वरन् रघूत्तमप्रियां तदा ।**
**सपुत्रमित्रबान्धवो[1] विनाशमाशु यास्यसि ।।३९।।**

**वरदराजीया–** रघूत्तमस्य रामस्य प्रियां त्वरन् वेगं कुर्वन् न प्रदास्यसि चेत् तदा पुत्रमित्रबान्धवैः सहितस्त्वं आशु विनाशं यास्यसि ।।३९।।

**जनार्दनीया–** प्रियां दयितां सीतां त्वरन्नविचारयन् यदि न प्रदास्यसि चेत्तदा तर्हि । पुत्राद्यैः सहितस्त्वम् ।।३९।।

**अनन्तभट्टीया–** तदा तर्हि ।।३९।।

**ताम्रपर्णीया–** कुतोऽसि कस्मादागतोऽसि कस्य दूतः कस्य वा पुत्रः कुतो देशादागत इत्यस्य रामसकाशादित्युत्तरम् । कस्य दूत इत्यस्य रामस्येत्युत्तरम् । कस्य पुत्र इत्यस्य मारुतिं मरुतः पुत्रमित्युत्तरम् । किमर्थमित्यस्य कुलस्य क्षयार्थमित्युत्तरम् । पूर्वरङ्गं कर्तुमिति भावेन न चेत्प्रदास्यसीत्यादि ।।४०–४३।।।३९।।

**चट्टी–** रघूत्तमस्य रामस्य दयितां प्रियां सीतां त्वरन् अविचारयन् यदि न प्रदास्यसि चेत् तर्हि पुत्राद्यैः सहितस्त्वं आशु विनाशं यास्यसि ।।३९।।

**न रामबाणधारणे क्षमास्सुरेश्वरा अपि ।**
**विरिञ्चिशर्वपूर्वकाः[2] किमु त्वमल्पसारकः ।।४०।।**

---

१. सीतायास्तेजसा दग्धां रामकोपप्रदीपिताम् । दह्यमानां इमां पश्य पुरीं साट्टप्रतोलिकाम् ।। स्वानि मित्राणि मन्त्रींश्च ज्ञातीन् भ्रातॄन् सुतान् हितान् । भोगान् दारांश्च लङ्कांश्च मा विनाशमुपानय ।। इति वाल्मीकिरामायणे ५.५१.३६-३७ ।

२. ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्रस्त्रिनेत्रः त्रिपुरान्तको वा । इन्द्रो महेन्द्रः सुरनायको वा स्थातुं न शक्ता युधि राघवस्य ।। इति वा.रा.५.५१.४४ ।

**वेदाङ्गतीर्थीया–** अल्पसारकः अल्पवीर्यः ।।४०–४३।।

**वरदराजीया–** रामबाणधारणे रामबाणं सोढुं विरिञ्चिशर्वपूर्वकाः ब्रह्मरुद्रप्रभृतयः सुरेश्वराः देवश्रेष्ठा अपि न क्षमाः न शक्ताः । अल्पसारको अल्पबलः त्वं न क्षम इति किमु वक्तव्यमित्यर्थः ।।४०।।

**जनार्दनीया–** न क्षमाः न समर्था । अल्पसारकः अल्पवीर्यस्त्वं किमु ? ।।४०।।

**अनन्तभट्टीया–** रामबाण....*[धारणे] तत्सहने क्षमाः शक्ताः ।।४०–४१।।

**चट्टी–** विरिञ्चशर्वपूर्वका सुरेश्वराः देवोत्तमा अपि रामबाणधारणे रामबाणं सोढुं क्षमाः समर्था न भवन्ति । अल्पसारकः अल्पबलः त्वं न समर्थः इति किमु वक्तव्यम् ।।४०।।

**प्रकोपितस्य[१] तस्य कः पुरः स्थितौ क्षमो भवेत् ।**
**सुरासुरोरगादिके जगत्यचिन्त्यकर्मणः ।।४१।।**

**वादिराजीया–** प्रकोपितस्येति वदताऽल्पमपराधं दयालुत्वात् सहते केनचित्प्रबलापराधे कृते सत्यपराधानुसारेण संहरेणाच्छानुरूपमेव कोपं तस्मिन् करोति न तु स्वभावतः कोपोऽस्तीति सूचितम् । अन्यथा कुपितस्येत्यवक्ष्यत् ।।४१-४३।।

**वरदराजीया–** अचिन्त्यं अतर्क्यं कर्म चेष्टितं यस्य तस्य प्रकोपितस्य क्रुद्धस्य पुरः पुरतः स्थितौ अवस्थातुं सुरासुरोरगादिरूपे जगति कः क्षमः शक्तो भवेत् ।।४१।।

**जनार्दनीया–** प्रकोपितस्य कोपयुक्तस्य । अचिन्त्यमतर्क्यं कर्म यस्य स तथा । तस्य रामस्य पुरः अग्रे स्थितौ स्थातुम् । सुराश्चासुराश्च उरगाः सर्पाश्च एते आदयो यस्य स तथा तस्मिन् । आदिशब्देन प्रमथसिंहाद्याः । जगति कः क्षमो भवेत् ? न कोऽपीत्यर्थः ।।४१।।

**चट्टी–** अचिन्त्यं अतर्क्यं कर्म यस्य तस्य । प्रकोपितस्य कोपयुक्तस्य तस्य रामस्य पुरतः अग्रे स्थितौ स्थातुं सुराश्च असुराश्च उरगाः सर्पाश्च एते आदयो यस्य तत्तथा तस्मिन् जगति कः समर्थः भवेत् । न कोऽपीत्यर्थः ।।४१।।

---

१. देवासुरनरेन्द्रेषु यक्षरक्षोरगेषु च । विद्याधरेषु नागेषु गन्धर्वेषु मृगेषु च ।। सिद्धेषु किन्नरेन्द्रेषु पतत्रिषु च सर्वतः । सर्वत्र सर्वभूतेषु सर्वकालेषु नास्ति सः ।। यो रामं प्रतियुद्ध्येत विष्णुतुल्यपराक्रमम् । सर्वलोकेश्वरस्येह कृत्वा विप्रियमीदृशम् ।। इति वा.रा.५.५१.४०-४२ ।

**इतीरिते वधोद्यतं न्यवारयद्विभीषणः ।**
**स पुच्छदाहकर्मणि न्ययोजयन्निशाचरान् ॥४२॥**

**मधुसूदनीया–** ॥ **न्यवारयद्विभीषण इति** ॥ 'न तु हन्यान्नृपो जातु दूतं कस्यचिदापदि । दूतस्य हन्ता निरयं आविशेत्सचिवैस्सह । यथोक्तवचनं दूतं क्षत्रधर्मरतो नृपः । यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥' इति शान्तिपर्वणि [८५.२६–२७]दूतहनने बहुप्रत्यवायोक्तेरिति भावः । 'उवाच वाक्यं परमार्थतत्वं विभीषणो बुद्धिमतां वरिष्ठः ।' [५.५२.१२] 'न दूतवध्यं प्रवदन्ति विप्राः दूतस्य दृष्टा बहवो हि दण्डाः ॥' [५.५२.१४] इत्यादि रामायणे । स विभीषण इत्यन्ये । स रावणः ॥४२॥

॥ इति श्रीमद्विद्याधीशतीर्थपूज्यपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे सप्तमोऽध्यायः ॥

**वरदराजीया–** इति हनूमता ईरिते सति वधोद्यतं हनूमतो वधे उद्युक्तं रावणं विभीषणो न्यवारयत् निवारयामास । अथानन्तरं स रावणो हनूमता पुच्छदाहकर्मणि निशाचरान् न्ययोजयत् ॥४२॥

**जनार्दनीया–** वधाय हनुमद्वधाय । उद्यतं उद्युक्तं रावणम् । सः रावणः । पुच्छस्य वालस्य । दाहकर्मणि भस्मीकरणकर्मणि न्ययोजयत् आज्ञापयामास ॥४२॥

**अनन्तभट्टीया–** सः विभीषणः ॥४२-४३॥

**चट्टी–** इति ईरिते सति हनुमतेति शेषः । वधोद्यतं वधाय हनुमद्वधाय उद्यतं उद्युक्तं रावणं विभीषणं न्यवारयत् । वारयामास । तदुक्तम्– 'उवाच...दण्डा ॥' इत्यादि रामायणे । अथ सः रावणः पुच्छस्य वालस्य दाहकर्मणि भस्मीकरणकर्मणि निशाचरान् राक्षसान् न्ययोजयत् आज्ञापयामास ॥४२॥

प्रमाणसंग्रहे– ॥ **स पुच्छदाहकर्मणीति** ॥ 'उवाच...दण्डा ॥' इति ॥४२॥

॥ इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे सप्तमोऽध्यायः ॥

**अथास्य वस्त्रसञ्चयैः पिधाय पुच्छमग्नये ।**
**[१]ददुर्ददाह नास्य तन्मरुत्सखो हुताशनः ॥४३॥**

१. सीतायाश्चानृशंस्येन तेजसा राघवस्य च । पितुश्च मम सख्येन न मां दहति पावकः ॥ इति आर्षे ५.५३.३३।

**वरदराजीया–** ते निशाचराः अस्य हनूमतः पुच्छं वस्त्रैः पिधाय वेष्टयित्वा अग्नये प्रददुः । अस्य हनूमतः तत्पुच्छवह्निः न ददाह । यतो हुताशनो वह्निः मरुत्सखो मरुतः वायोः सखा अतो न ददाहेत्यर्थः ।।

**जनार्दनीया–** अस्य हनुमतः पुच्छम् । सञ्चयैः समूहैः । पिधायाच्छाद्य वेष्टयित्वा इत्यर्थः । अस्य तत्पुच्छं न ददाह । कुतः ? यत इति शेषः । हुताशनोऽग्निः मरुत्सखः वायोः सखा अत इति सम्बन्धः ।।

**चट्टी–** ते निशाचराः अस्य हनुमतः पुच्छं वस्त्राणां सञ्चयैः समूहैः पिधाय आच्छाद्य वेष्टयित्वेत्यर्थः अग्नये प्रददुः अस्य हनुमतः तत्पुच्छं वह्निः न ददाह । कुतः यत इति शेषः । हुताशनो अग्निः मरुतः वायोः सखा अतः न ददाहेति सम्बन्धः ।।४३।।

**ममर्ष सर्वचेष्टितं स राक्षसां निरामयः ।**
**बलोद्धतश्च कौतुकात् प्रदग्धुमेव तां पुरीम् ।।४४।।**

**वेदाङ्गतीर्थीया–** ममर्ष सेहे ।।४४-४९।।

**वादिराजीया–** प्रदग्धुं कौतुकादेव ममर्ष न त्वशक्त्या । बलोद्धतत्वादिति भावेन बलोद्धत इत्युक्तम् ।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां सप्तमोऽध्यायः ।।

**वरदराजीया–** निरामयो निर्व्यथो बलेनोद्धतश्च कौतुकात् कुतूहलात् तां लङ्कां पुरीं प्रदग्धुमेव आरभत् । राक्षसां सर्वचेष्टितं वस्त्रैः पुच्छवेष्टनादिरूपं कर्म ममर्ष सेहे वै । पुच्छभ्रमणेन सर्वां पुरीं भस्मीकरिष्यामीति बुद्ध्या तूष्णीं स्थित इति भावः ।।४४।।

**जनार्दनीया–** बलेन उद्धतः उत्कृष्टः । अत एव निरामयः छेदभेदादिदुःखरहितः । स हनुमान् कौतुकात् सन्तोषात् । तां पुरीं लङ्कां प्रदग्धुं एव रक्षसां सर्वचेष्टितं ताडनपुच्छवेष्टनादिकं ममर्ष प्रसेहे ।।

**अनन्तभट्टीया–** दग्धुम् । ममर्ष सेहे । निरामयः निर्व्य.... ।।४४।।

**ताम्रपर्णीया–** प्रदग्धुं कौतुकादौत्कण्ठ्यादेव ममर्षेत्यन्वयः ।।४४-४८।।

**चट्टी–** बलेन उद्धतः उत्कृष्टः अत एव निरामयः छेदभेदादिदुःखरहितः सः हनुमान् कौतुकात् सन्तोषात् तां पुरीं लङ्कापुरीं प्रदग्धुमेव रक्षसां सर्वचेष्टितं ताडनपुच्छवेष्टनादिरूपं कर्म ममर्ष सेहे । पुच्छगेन वह्निना सर्वां पुरीं भस्मीकरिष्यामीति बुध्वा तूष्णीं स्थित इति भावः ।।४४।।

**गूढवाक्यार्थ–** दग्धुं कौतुकादेव औत्कण्ठ्यादेव ममर्षेत्यन्वयः । मृष सहने ।।४४।।

**ददाह चाखिलां पुरीं स्वपुच्छगेन वह्निना ।**
**कृतिस्तु विश्वकर्मणोऽप्यदह्यतास्य तेजसा ॥४५॥**

**वरदराजीया–** स पुच्छगेन वह्निना अखिलां पुरीं ददाह भस्मीचकार । न केवलमिदमग्नेरेव सामर्थ्यमित्याह– **कृतिरिति** ॥ विश्वकर्मणः कृतिरपि लङ्का अस्य हनूमतस्तेजसा अदह्यत ॥४५॥

**जनार्दनीया–** विश्वकर्मणः देववर्धकिविश्वकर्मनाम्नः कृतिरपि निर्माणमपि अस्य हनूमतः तेजसा अदह्यत । न तु अग्निप्रभावेनेत्यर्थः ॥४५॥

**अनन्तभट्टीया–** विश्वकर्मणः कृतिरपि निर्मितापीत्यर्थः ॥४५-४६॥

**चट्टी–** हनुमान् स्वपुच्छगेन वह्निना अखिलां पुरीं लङ्कां ददाह । न केवलमग्नेः सामर्थ्यमिदमित्याह– **कृतिरिति** ॥ विश्वकर्मणः कृतिरपि लङ्का अस्य हनुमतः तेजसा अदह्यत न तु अग्नेः प्रतापेनेत्यर्थः ॥

**भावचन्द्रिका–** 'ददाह विश्वरूपस्सन् हनूमान्', 'सर्वत्र चैकक्षण एव दृष्टः स विश्वरूपत्वमवाप नूनम् ।' इति च [सं.रा.सु.का. ६.४४]नूनं तर्कितमित्यङ्गीकारे । विश्वरूप इवेत्यर्थः ॥४५॥

**सुवर्णरत्नकारितां स राक्षसोत्तमैस्सह ।**
**प्रदह्य सर्वशः पुरीं मुदान्वितो जगर्ज च ॥४६॥**

**वरदराजीया–** सुवर्णैः रत्नैश्च कारितां सर्वशः सर्वां पुरीं राक्षसोत्तमैः सह प्रदह्य दग्ध्वा मुदा सन्तोषेणान्वितः सन् जगर्ज गर्जितवान् ॥४६॥

**जनार्दनीया–** जगर्ज सिंहनादं चकार ॥४६॥

**चट्टी–** सः हनुमान् सुवर्णेन रत्नैश्च कारितां सर्वशः सर्वां पुरीं राक्षसोत्तमैः राक्षसश्रेष्ठैः सह प्रदह्य दग्ध्वा मुदा सन्तोषेण अन्वितस्सन् जगर्ज सिंहनादं चकार ॥४६॥

**स रावणं सपुत्रकं तृणोपमं विधाय च ।**
**तयोः प्रपश्यतोः पुरीं विधाय भस्मसाद्ययौ ॥४७॥**

**वरदराजीया–** हनूमच्चरितं निगमयति– **स इति** ॥ स हनूमान् सपुत्रकं इन्द्रजिता सहितं रावणं तृणोपमं विधाय । तयोः रावणेन्द्रजितोः सतोः पुरीं लङ्कां भस्मसाद्विधाय ययावित्यर्थः ॥४७॥

**जनार्दनीया–** तयोः रावणेन्द्रजितोः प्रपश्यतोः सतोः । भस्मसात् भस्माधीनम् ॥४७॥

**अनन्तभट्टीया–** तयोः रावणतत्पुत्रयोः ॥४७॥

**चट्टी–** हनुमच्चरितं निगमयति– **स इति** ।। सः हनुमान् सपुत्रकं इन्द्रजिता सहितं रावणं तृणोपमं विधाय, तयोः रावणेन्द्रजितोः प्रपश्यतोः सतोः पुरीं लङ्कां भस्मसात् भस्माधीनं विधाय ययौ च ।।४७।।

**विलङ्घ्य चार्णवं पुनः स्वजातिभिः प्रपूजितः ।**
**प्रभक्ष्य[१] वानरेशितुर्मधु प्रभुं समेयिवान् ।।४८।।**

**वरदराजीया–** पुनरर्णवं विलङ्घ्य स्वजातिभिः कपिभिरङ्गदाद्यैः पूजितोऽभूदित्यर्थः । किष्किन्धामागत्य वानरेशितुः वानरराजस्य सुग्रीवस्य मधुवनं प्रविश्य दिव्यं मधु प्रभक्षयित्वा पीत्वेत्यर्थः । प्रभुं समर्थं रामं प्रति समेयिवान् प्राप्तोऽभूत् ।।४८।।

**जनार्दनीया–** अर्णवं पुनः विलङ्घ्य स्वजातिभिः कपिभिः प्रपूजितः सन् वानरेशितुः सुग्रीवस्य । मधु मधुवनं प्रभक्ष्य, प्रभुं श्रीरामं समेयिवान् प्राप ।।४८।।

**अनन्तभट्टीया–** स्वजातिभिः इत्युपलक्षणम् । ...*

।। इति श्रीमुष्णं अनन्तभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
तन्त्रमालायां(सत्तत्त्वमालायां) सप्तमोऽध्यायः ।।

**चट्टी–** सः हनुमान् पुनश्च अर्णवं विलङ्घ्य स्वजातिभिः कपिभिः अङ्गदाद्यैः प्रपूजितः सन् वानरेशितुः वानरराजस्य सुग्रीवस्य मधु प्रभक्ष्य प्रभुं समर्थं श्रीरामं समेयिवान् ।।४८।।

**भावचन्द्रिका–** मधु मधुवनस्थं मधु ।।४८।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां सप्तमोऽध्यायः ।।

**गूढवाक्यार्थ–** मधुवनस्थं मधु...* ।।४८।।

**रामं सुरेश्वरमगण्यगुणाभिरामं सम्प्राप्य सर्वकपिवीरवरैस्समेतः ।**
**चूडामणिं पवनजः पदयोर्निधाय सर्वाङ्गकैः प्रणतिमस्य चकार भक्त्या ।।४९।।**

---

१. पूर्वं वालिनः पश्चात् सुग्रीवस्य तत् मधुवनं प्रविश्य तत्र विद्यमानं मधु भक्षितम् । तथाहि वनपर्वणि- रक्षितं वालिना यत्तत्स्फीतं मधुवनं महत् । त्वया च प्लवगश्रेष्ठ तद्भुक्तं पवनात्मजः ।। इति २८३.२७ । यत् तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् । अधृष्यं सर्वभूतानां सर्वभूतमनोरमम् ।। यद् रक्षति महावीरः सदा दधिमुखः कपिः । मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ।। इति वाल्मीकिरामायणे ५.६१.८-९।

**वरदराजीया–** सुराणां ब्रह्मादीनां ईश्वरं अगण्यैरनन्तैर्गुणैरभिरामं मनोहरं रामं प्रति सर्वैः कपिवीरश्रेष्ठैः समेतैः पवनजः हनूमान् चूडामणिं सीताप्रतिकृतिदत्तां पादयोः निधाय अस्य रामस्य भक्त्या सर्वाङ्गकैः सर्वाङ्गावयवैः प्रणतिं प्रणामं चकार ।।४९।।

**जनार्दनीया–** अस्य रामस्य पादयोश्चूडामणिं कचभूषणं निधाय, भक्त्या सर्वाङ्गकैः 'उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ।।' इति स्मरणात् सर्वावयवैः प्रणतिं प्रणामं चकार ।।४९।।

**ताम्रपर्णीया–** सर्वाङ्गकैः 'उरसा शिरसा' इत्यादि सर्वाङ्गकैः हनुमद्वन्दनम् । अङ्गमध्ये 'उरसा शिरसा' इत्युक्ताङ्गाष्टकमल्पमिति सूचयितुं कुत्सनार्थः कप्रत्ययः । अत एव पुनः प्रणतिं इत्यत्र तत्प्रेत्युपसर्गः भक्त्या चेत्युक्तम् ।।४९।।

**चट्टी–** पवनजः वायुपुत्रो हनुमान् सर्वकपिवीरवरैः समेतस्सन् सुराणां ब्रह्मादीनां ईश्वरं अगण्यैः अनन्तैः गुणैः अभिरामं सम्प्राप्य अस्य पदयोः चूडामणिं सीताप्रतिकृतिदत्तं कचभूषणं निधाय भक्त्या सर्वाङ्गकैः सर्वावयवैः 'उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ।।' इति वचनात् प्रणतिं चकार ।।४९।।

**गूढवाक्यार्थ–** सर्वाङ्गकैः उरसा शिरसेत्यादिसर्वाङ्गैः ।।४९।।

**रामोऽपि नान्यदनुदातुममुष्य योग्यमत्यन्तभक्तिभरितस्य विलक्ष्य किञ्चित् ।**
**स्वात्मप्रदानमधिकं पवनात्मजस्य कुर्वन् समाश्लिषदमुं परमाभितुष्टः ।।५०।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये
रामचरिते हनुमत्प्रतियानं नाम सप्तमोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** अत्यन्तभक्तिभरितस्य अत्यन्तभक्त्या परिपूर्णस्य ।।५०।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
तात्पर्यदीपिकायां सप्तमोऽध्यायः ।।

**वरदराजीया–** रामोऽपि अत्यन्तभक्तिभरितस्य पूर्णस्य हनूमतो दातुं किञ्चित् अन्यत् योग्यं नेति विलक्ष्य विचार्य सर्वस्मादधिकः स्वात्मनः स्वस्य प्रदानं हनूमतः कुर्वन् परमाभितुष्टः अत्यन्ततुष्टो

---

'इदं तु मम दीनस्य मनो भूयः प्रकर्षति । यदिहास्य प्रियाख्यातुः न कुर्मि सदृशं प्रियम् ।। एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः । मया कालमिमं प्राप्य दत्तस्तस्य महात्मनः ।।' इत्यार्षे६.१.१२-१३ । 'ब्रह्माण्डपुराणादिषु च एवं परिष्वङ्गद्वारा ब्रह्मानन्दार्पणमेव हनूमते कृतमिति बोधितम्' इति तिलकः ।

रामोऽपि अत्यन्तममुं हनूमन्तं समाश्लिषत् आलिलिङ्गे । आलिङ्गनव्याजेन स्वात्मानमेव हनूमते प्रददाविति भावः । इत्यशेषमतिमङ्गलम् ।।५०।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुबोधिन्यां सप्तमोऽध्यायः ।।

**जनार्दनीया–** रामोऽपि अत्यन्तभक्त्या स्त्रीपुत्राद्यपेक्षया अधिकस्नेहेन भरितस्य पूर्णस्य । अमुष्य हनूमतः दातुं, अनु नमस्कारानन्तरम् । योग्यं किञ्चित् ईषदपि अन्यत् स्वात्मप्रदानात् अन्यद्वस्तु नेति विलक्ष्यावलोक्य, पवनात्मजस्य स्वात्मप्रदानं शरीरदानमालिङ्गनमिति यावत् । स्वात्मप्रदानमित्यनेन सायुज्यमपि लक्ष्यते । अधिकं सर्वास्मादिति शेषः । कुर्वन् अमुं हनुमन्तं समाश्लिषत् । कथम्भूतः ? परमाभितुष्टः मारुतिभक्त्येति शेषः ।।५०।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्प्रयुतात् ।
पूर्तिः तस्य कृतौ सतां सुखकरोऽध्यायस्सप्तमः शुभः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां सप्तमोऽध्यायः ।।

**ताम्रपर्णीया–** स्वात्मप्रदानं नाम पतित्वेन स्वप्रदानं विवक्षितम् । तथा च छन्दोगश्रुतिः 'आत्मरतिरात्मक्रीड' [छा.अ ७.ख३] इति । 'स्त्रीरूपो मिथुनीभवेत्' इति तद्भाष्यम् । अत एव तज्ज्ञापनाय समाश्लिषदित्युक्तम् । यद्वा परमैकान्तिनो हनुमतो भगवदपेक्षया प्रियतमस्यान्यस्याभावात् स्वस्वरूपमेव तज्ज्ञानभक्त्यादिविषयतया यथेष्टविनियोगार्हत्वात् प्रददावित्यर्थः । अत एवात्यन्तभक्तिभरितस्येत्युक्तम् । यद्वा मुक्तौ साक्षात्सर्वाङ्गसायुज्यार्थं स्वात्मप्रदानमित्यर्थः ।।५०।।[१]

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) सप्तमोऽध्यायः ।।

**चट्टी–** रामोऽपि अत्यन्तभक्तिभरितस्य अत्यन्तभक्त्या स्त्रीपुत्राद्यपेक्षया अधिकस्नेहेन भरितस्य अस्य हनुमतः दातुं अनु नमस्कारानन्तरं योऽन्यः किञ्चिदीषदपि अन्यत् स्वात्मप्रदानादन्यत् वस्तु न विलक्ष्य

१. स्वात्मप्रदानं नाम तस्य हनुमदिच्छानुसारित्वम् । पतित्वेन स्वात्मप्रदानमिव । तथा च छन्दोगश्रुतिः । 'आत्मक्रीड आत्मरतिः' इति ।।५०।। इति हो पुस्तके अधिकः पाठः ।

अनवलोक्य पवनात्मजस्य सर्वस्मादधिकं स्वात्मप्रदानं स्वशरीरप्रदानं आलिङ्गनमिति यावत् । कुर्वन् अमुं हनुमन्तं परमाभितुष्टः अत्यन्तं सन्तुष्टस्सन् समाश्लिषत् आलिलिङ्गे ।।५०।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां सप्तमोऽध्यायः ।।

**गूढवाक्यार्थ–** स्वात्मप्रदानं 'स्त्रीरूपो मिथुनी भवेत्' इत्युक्तत्वात् मुक्तौ सर्वाङ्गसायुज्यार्थं स्वात्मप्रदानमिति वा ।।५०।।

।। इति विठ्ठलाचार्यतनूजेन नरसिंहाचार्येण रचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां गूढवाक्यार्थविवृतौ सप्तमोऽध्यायः ।।

**।। श्रीकृष्णार्पणमस्तु ।।**

★★★★★

## ।। अथ अष्टमोऽध्यायः ।।

**श्रुत्वा हनूमदुदितं कृतमस्य सर्वं प्रीतः प्रयाणमभिरोचयते स रामः ।**
**आरुह्य[1] वायुसुतमङ्गदगेन युक्तः सौमित्रिणा सरविजः सह सेनयाऽगात् ।।१।।**

**व्यासतीर्थीया–** युद्धकाण्डकथामाह– **श्रुत्वेत्यादिना** ।। कृतं कर्म ।।१।।

**वेदाङ्गतीर्थीया–** अस्य हनूमतः सर्वं कृतं कर्म । प्रयाणमभिरोचयते । प्रयाणाभिरुचिं चकारेत्यर्थः ।।

**वरदराजीया–** ।। **श्रुत्वेति** ।। स रामो हनूमता उदितं विज्ञापितं सर्वं कार्यं समुद्रतरणादिरूपं श्रुत्वा अस्य हनूमतः प्रीतः प्रयाणं लङ्कां प्रति यानं अभिरोचयते । आकाङ्क्षितवान् प्रयाणाभिमुखो बभूवेत्यर्थः । स्वयं वायुसुतं हनूमन्तं आरुह्य अङ्गदगेन अङ्गदारूढेन सौमित्रिणा लक्ष्मणेन युक्तो रविजेन सुग्रीवेण सह वर्तमानो रामः सेनया कपिकटकेन सह अगात् ।।१।।

**जनार्दनीया–** युद्धकाण्डकथामारभते– **श्रुत्वेत्यादिना** ।। स रामः हनूमदुदितम् । अस्य हनूमतः कृतं वनविनाशनादिसर्वं कर्म श्रुत्वा, प्रीतः सन् प्रयाणं लङ्कायात्रामभिरोचयते । प्रयाणाभिरुचिं चकारेत्यर्थः । 'रुचि प्रीणने' इति धातुः । अङ्गदगेन अङ्गदस्कन्धमारूढेनेत्यर्थः ।।१।।

**अनन्तभट्टीया–** कृतं...* अस्य वायुजस्य प्रीतः । अङ्गदगेन आरूढाङ्गदेन ।।१।।

**ताम्रपर्णीया–** कृतं कर्म ।।१।।

**चट्टी–** युद्धकाण्डकथामाह– **श्रुत्वेत्यादिना** ।। सः रामः हनुमता उदितं उक्तं सर्वैः कृतं समुद्रतरणं वनविनाशादिसर्वं कर्म श्रुत्वा अस्य हनुमतः प्रीतस्सन् प्रयाणं लङ्कां प्रति यानं अभिरोचयते प्रयाणभिरुचिं चकारेत्यर्थः । स्वयं वायुसुतं हनुमन्तं आरुह्य अङ्गदगेन अङ्गदस्कन्धमारूढेन सौमित्रिणा लक्ष्मणेन युक्तः सरविजः ससुग्रीवः रामः सेनया कपिसेनया सह अगात् जगाम ।।१।।

---

१. अधिरुह्य हनूमन्तं ऐरावतमिवेश्वरः । अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः ।। वा.रा.६.४.१८-१९

**अतिविशद–** श्रुत्वा हनूमदुदितं कृतमस्य सर्वं प्रीतः प्रयाणमभिरोचयते स राम इत्यत्र हनूमदुदितं सर्वं कृतं कर्म श्रुत्वा अस्य हनूमतः प्रीतः प्रयाणमभिरोचयते प्रयाणाभिरुचिं चकारेत्यर्थः । 'रुचि प्रीणने' इति धातुः ।।१-८।।

**गूढवाक्यार्थ–** कृतं कर्म समुद्रतरणादिकम् । प्रयाणं लङ्कां प्रतीति शेषः । अभिरोचयते अपेक्षितवान् ।।

**सम्प्राप्य दक्षिणमपांनिधिमत्र देवः शिश्ये जगद्गुरुतमोऽप्यविषह्यशक्तिः[1] ।**
**अग्रे हि मार्दवमनुप्रथयन्स धर्मं पन्थानमर्थितुमपां पतितः प्रतीतः ।।२।।**

**व्यासतीर्थीया–** समुद्रं प्रार्थयन् शिश्य इत्युक्त्या वरुणादधमत्वशक्तिश्च प्राप्तेत्यत उक्तम्– **जगद्गुरुतमोऽप्यविषह्यशक्तिरिति** ।। अविषह्यशक्तिश्चेत्किमर्थं प्रार्थनमित्यत आह– **अग्रे हीति** ।।२-५।।

**वेदाङ्गतीर्थीया–** प्रतीतः ख्यातः ।।२-८।।

**वरदराजीया–** दक्षिणस्यां दिशि विद्यमानं अपां निधिं समुद्रं प्रति गत्वा देवः क्रीडागुणयुक्तो रामो अत्र समुद्रतीरे शिश्ये सुष्वाप । किं कर्तुं अविचिन्त्यशक्तिरपि जगतो गुरुतमः परमगुरुः धर्मोपदेष्टा असौ अग्रे पूर्वमार्दवं मृदुत्वं सामेत्यर्थः । धर्मं प्रथयन् ख्यापयन् प्रतीतः ख्यातो रामो धर्मिष्ठत्वेन प्रसिद्ध इत्यर्थः । अपां पतितः समुद्रात् पन्थानं मार्गं अर्थितुं शिश्य इति सम्बन्धः ।।२।।

**जनार्दनीया–** जगतां गुरुतमः मुख्यगुरुरिति प्रतीतः प्रसिद्धः । अविषह्या सोढुमशक्या शक्तिर्यस्येति विग्रहः । अविचिन्त्यशक्तिरिति वा पाठः । तादृशोऽपि स देवो रामः । दक्षिणं दक्षिणदिक्स्थम् । अपां निधिं जलनिधिं इत्यर्थः । समुद्रमिति यावत् । सम्प्राप्य, अत्र तीरे । अग्रे आदौ मार्दवं मृदुत्वं धर्मं अनुप्रथयन् ख्यापयन् सन् । अपां जलानां पतितः समुद्रात् । पन्थानं अर्थितुं, शिश्ये सुष्वाप । समर्थस्य आदौ मृदुधर्मप्रदर्शनं धर्म इति ख्यापयन् मार्गं याचितुं शिश्ये । न तु अशक्तत्वात् इति भावः ।।२।।

**अनन्तभट्टीया–** दक्षिणं दक्षिणदिक्स्थितम् । अग्रे आदौ मार्दवं धर्मं प्रथयन्नित्यन्वयः । *...इति सम्बन्धः । प्रतीतः प्रसिद्धः ।।२।।

**ताम्रपर्णीया–** जगद्गुरुतम इति हेतुगर्भं विशेषणम् । जगद्गुरुत्वात् अग्रे मार्दवं धर्ममनुप्रथयन् इत्यर्थः । स्वयं धर्मानुष्ठानेन कथं लोके धर्मप्रथा भवतीत्यत उक्तम्– **प्रतीत इति** ।। प्रसिद्ध इत्यर्थः । यद्वा प्रतीतः इति विभीषणविशेषणम् । भाविकार्याभिज्ञ इत्यर्थः । अत एव विनशिष्णु रक्षो विज्ञाय इति वक्ष्यति ।।

---

१. अविचिन्त्यशक्तिः इति जनार्दनीयवरदराजीयचट्टीटिप्पणीनां पाठः ।

**चट्टी–** ।। **सम्प्राप्येति** ।। जगतां गुरुतमः मुख्यगुरुः । प्रतीतः प्रसिद्धः । अविचिन्त्या शक्तिः यस्य सः तादृशो स देवः रामः दक्षिणां दक्षिणदिशि स्थितं अपां निधिं समुद्रं सम्प्राप्य अत्र तीरे अतिमार्दवं मृदुत्वं सामेत्यर्थः । धर्मं प्रदर्शयन् ख्यापयन् अपां पत्युः समुद्रात् पन्थानं मार्गं अर्थितुं शिश्ये सुष्वाप । न त्वशक्त्येति भावः ।।२।।

**भावचन्द्रिका–** स्वप्ने निमित्तं ज्ञात्वा कार्यं वक्ष्यामीति रामवचनस्यान्यत्रोक्त्या रामस्य ज्ञानसामर्थ्याप्राप्तेराह– **जगदिति** ।।२ ।।

**गूढवाक्यार्थ–** ।। **जगद्गुरुतम इति** ।। हेतुगर्भं विशेषणम् । अतिशयेन धर्मोपदेष्टेत्यर्थः । अविषह्यशक्तिरपि अग्रे मार्दवं धर्मं अनुप्रथयन्नित्यर्थः । प्रतीतः प्रसिद्धः । यद्वा प्रतीत इति विभीषणविशेषणम् । भाविकार्याभिज्ञ इत्यर्थः ।।२।।

**तत्राजगाम स विभीषणनामधेयो रक्षःपतेरवरजोऽप्यथ रावणेन ।**
**भक्तोऽधिकं [1]रघुपताविति धर्मनिष्ठस्त्यक्तो जगाम शरणं च रघूत्तमं तम् ।।३।।**

**वादिराजीया–** ।।१-२।। रघुपतावधिकं भक्तः धर्मनिष्ठश्चेति रावणेन त्यक्त इति सम्बन्धः । तत्र तस्मिन्समये ।।३।।

**वरदराजीया–** अथानन्तरं रक्षःपतेः रावणस्य अवरजोऽनुजो विभीषण इति नामधेयं यस्य सः तत्र रामसमीपमाजगाम । कुतः रघुपतौ रामे अधिकं यथा भवति तथा भक्तः तथा धर्मनिष्ठः धर्मशील इति हेतोः रावणेन त्यक्तः परित्यक्तो यतः तं रघूत्तमं शरणं जगामेत्यर्थः ।।३।।

**जनार्दनीया–** अथ स्वापानन्तरम् । रक्षःपतेः रावणस्य अवरजोऽपि रघुपतौ अधिकं यथा स्यात् तथा भक्तः । अतिधर्मनिष्ठश्चेति रावणेन त्यक्तः बहिष्कृतः ।।३।।

**अनन्तभट्टीया–** रावणेन त्यक्त इति सम्बन्धः ।।३।।

**ताम्रपर्णीया–** रघुपतौ अधिकभक्तो धर्मिष्ठ इति च रावणेनानुजोऽपि त्यक्तो इति सम्बन्धः । यद्वा राक्षसानुजो रघुपतौ भक्तत्वात् अतिधर्मनिष्ठत्वाच्च रामसमीपं आजगाम इत्यर्थः ।।३-५।।

**चट्टी–** अथ अनन्तरम् । रक्षःपतेः रावणस्य अवरजोऽपि रघुपतौ अधिकं यथा स्यात् तथा भक्तः । अतिधर्मनिष्ठश्चेति हेतोः रावणेन त्यक्तः बहिष्कृतः । विभीषण इति नामधेयं यस्य स । तत्र रामसमीपं आजगाम । तं रघूत्तमं श्रीरामं शरणं जगाम ।।३।।

---

१. रघुपतावतिधर्मनिष्ठः इति जनार्दनीयताम्रपर्णीयचट्टीटिप्पणीनां पाठः ।

**गूढवाक्यार्थ–** रघुपतौ अधिकं भक्तः धर्मनिष्ठ इति रावणेनावरजोऽपि त्यक्त इति सम्बन्धः । अथवा रक्षःपतेरवरजोऽपि रघूत्तमं शरणं जगामेत्यर्थः । तत्र हेतुः अधिकं भक्तः अतिधर्मनिष्ठ इति ।।३।।

**ब्रह्मात्मजेन रविजेन बलप्रणेत्रा नीलेन मैन्दविविदाङ्गदतारपूर्वैः ।**
**सर्वैश्च शत्रुसदनादुपयात एष भ्राताऽस्य न ग्रहणयोग्य इति स्थिरोक्तः ।।४।।**

**वरदराजीया–** ब्रह्मणः आत्मजेन पुत्रेण जाम्बवता रविजेन सुग्रीवेण बलप्रणेत्रा सेनापतिना नीलेन तथा मैन्दविविदाङ्गदताराः पूर्वे येषां सुषेणादीनां तैः सर्वैश्च कपिभिः स्थिरं दृढं उक्तोऽभूद्रामः । किमिति एषः विभीषणः शत्रोः वैरिणः सदनादुपयातः प्राप्तः । अस्य रावणस्य भ्राता अतो ग्रहणे योग्यः स्वीकारयोग्यो न भवतीति दृढतया उक्त इत्यर्थः ।।४।।

**जनार्दनीया–** ब्रह्मात्मजेन जाम्बवता । बलस्य कपिबलस्य प्रणेत्रा प्रेरकेण सेनापतिना नीलेन इत्यर्थः । शत्रुः अरिः । तस्य रावणस्य । सदनाद् गृहादुपयातः आगतः । एषो विभीषणः । अस्य रावणस्य भ्राता । अत एव ग्रहणाय अङ्गीकाराय योग्यो नेति स्थिरतया उक्तोऽभूदिति शेषः ।।४।।

**अनन्तभट्टीया–** बलप्रणेत्रा कपिसेनापतिना नीलेन । स्थिरोक्त दृढमुक्त इत्यर्थः ।।४।।

**चट्टी–** ब्रह्मणः आत्मजेन पुत्रेण जाम्बवता रविजेन सुग्रीवेन बलस्य कपिबलस्य प्रणेत्रा प्रेरकेण सेनापतिना नीलेन । तथा मैन्दविविदाङ्गदताराः पूर्वं येषां ते सुषेणादीनां तैः सर्वैश्च कपिभिः एषः विभीषणः शत्रोः रावणस्य सदनाद् गृहादुपयातः आगतः अस्य रावणस्य भ्राता अत एव ग्रहणयोग्यः स्वीकारयोग्यः न भवतीति दृढं उक्तोऽभूत् राम इति शेषः ।।४।।

**भावचन्द्रिका–** बलप्रणेत्रेति नीलविशेषणम् ।।४।।

**अत्राह रूपमपरं बलदेवताया ग्राह्यः [१]स एष नितरां शरणं प्रपन्नः ।**
**भक्तश्च रामपदयोर्विनशिष्णु रक्षो विज्ञाय राज्यमुपभोक्तुमिहाभियातः ।।५।।**

**वादिराजीया–** बलदेवतायाः वायोः अपरं रूपं अवताररूपं हनुमान् । रूपशब्दस्य नित्यनपुंसकत्वात् सम्बन्धः । बलाढ्यत्वात् भयं नास्तीति सूचनाय बलदेवताया रूपमित्युक्तम् । तत्र तस्मिन् । सः रामपदयोर्नितरां भक्तश्चेति सम्बन्धः ।।४-५।।

---

१. 'स एव'इति पाठान्तरम् ।

**वरदराजीया–** अत्रास्मिन्समये बलदेवतायाः वायोः अपरं रूपं अपरावतारो रूपान्तरं हनूमानिति यावत् आह । किमिति । स एषः विभीषणो नितरामवश्यं ग्राह्यः परिग्राह्यः । कुतः यतः शरणं प्रपन्नः शरणागतस्तथा रामपादयोर्भक्तश्च । विनशिष्णु आसन्नविनाशं रक्षः राक्षसं रावणं विज्ञाय तन्नाशानन्तरं स्वयं राज्यमुपभोक्तुं इहास्मत्समीपमागतः । तस्मात् ग्राह्य इति भावः ।।५।।

**जनार्दनीया–** बलदेवतायाः अपरं द्वितीयं रूपं हनुमान् इत्यर्थः । अत्र विभीषणविषये आह । स एषः विभीषणः । शरणं प्रपन्नः प्राप्तः । रामपदयोः नितरां अत्यन्तं भक्तश्च । विनशिष्णु आशुतरविनाशी । रक्षः रावणमित्यर्थः । विज्ञाय इह लङ्कायां राज्यं उपभोक्तुं पालनार्थं, साम्राज्यं कर्तुं इति भावः । इह रामसमीपम् । अभियातः अत एव ग्राह्यः स्वीकर्तुं योग्य इति आहेति सम्बन्धः ।।५।।

**अनन्तभट्टीया–** बलदेवतायाः वायोः । विनशिष्णुः आसन्नविनाशम् ।आसन् आस ।।५।।

**चट्टी–** अत्र अस्मिन् समये बलदेवतायाः अपरं द्वितीयं रूपं हनुमान् इत्यर्थः । आह । किमति । एषः विभीषणः शरणं प्रपन्नः प्राप्तः रामपदयोः भक्तश्च । रक्षः रावणं विनशिष्णु आसन्नविनाशं विज्ञाय स्वयं राज्यं उपभोक्तुं इह रामसमीपं आयातः । नितरां अत्यन्तं ग्राह्यः स्वीकर्तुं योग्य इत्याहेति सम्बन्धः ।।

**भावचन्द्रिका–** भीतिं विनाह– **बलेति** ।।५-६।।

**कण्ठकोद्धार–** अत्राह रूपमपरं बलदेवताया इति श्लोके अत्रेमाः कथाः कथयन्ति श्रीमुष्णमाहात्म्यानुसारेण कदाचित्काले ब्रह्मवाय्वादयः सर्वे देवाः यज्ञकरणाय प्रयागं प्रति याताः । तत्र यज्ञस्थले काण्वर्षिभिः अधःस्थले तपसे उपस्थितः । तमनु वायुमुख्याः सर्वे देवाः लाङ्गलाग्रेण विचकर्षणे कृते तेन मुनिदेहस्य छेदभेदो जातः । तदा देवा शापिताः यूयं वानरा भवत इति शापे दत्ते देवैः तस्यैव राक्षसो भवेति शापो दत्तः । अथ स मुनिः याचितवान् ..राक्षसजन्मनः सकाशात् त्वं विमोचयेति । अवश्यमित्युक्त्यनन्तरं स मुनिः विभीषणो जातः । सर्वे देवास्तु वानरा जाताः इति । तेषां वानरत्वे निमित्तमिति गुरुचरणा उपदिशन्ति ।।५।।

**इत्युक्तवत्यथ हनूमति देवदेवः [1]सङ्गृह्य तद्वचनमाह यथैव पूर्वम् ।**
**सुग्रीवहेतुत इमं स्थिरमाग्रहीष्ये पादप्रपन्नमिदमेव सदा व्रतं मे ।।६।।**

**व्यासतीर्थीया–** यथा पूर्वं सुग्रीवहेतुतः तद्वचनं सङ्गृह्याह– **तथैव** ।।६।।

---

१. परिगृह्य च तं रामो मरुतेर्वचनात्प्रभुः । तस्मै दत्वाऽभयं सौम्यं रक्षोराज्येऽभ्यषेचयत् । पद्म.२४२अ.२९४। वा.रा.यु.का.१७.५०–६८ ।

**वादिराजीया–** पूर्वं सुग्रीवहेतुतः यथा तथैव तद्वचनं सङ्गृह्येति सम्बन्धः । मे इदं सदा व्रतमेवेत्यन्वयः ।।

**वरदराजीया–** अथानन्तरं इत्युक्तरीत्या हनूमति उक्तवति वदति सति देवानां देवो रामः तस्य हनूमतो वचनं सङ्गृह्य स्वीकृत्य यथा पूर्वं सुग्रीवहेतुतः सुग्रीवनिमित्तं हनूमद्वचनमग्रहीत् तथैव हनूमता विभीषणस्य गृहीतत्वात् स्वयमपि तं परिगृहीतवानिति भावः । आह किमिति । पादप्रपन्नं पादयोः शरणागतं इमं विभीषणं स्थिरं दृढं आग्रहीष्यामि यतो मे इदं पादप्रपन्नं परिग्रहणं सदा व्रतं नियमेन कर्तव्यम् ।।६।।

**जनार्दनीया–** अथ हनुमद्वाक्यानन्तरम् । देवानां देवो रामः । यथा पूर्वं सुग्रीवहेतुतः सुग्रीवार्थम् । तस्य हनुमद्वचनम् । अग्रहीत् इति शेषः । तथैव तद्वदेव । तद्वचनं हनूमद्वचनम् । विभीषणपरिग्रहण-विषये सङ्गृह्य आह । तद्वचनं इति उभयत्र सम्बध्यते । किमिति ? पादयोः प्रपन्नं शरणं प्राप्तं इत्यर्थः । इमं विभीषणम् । स्थिरं निश्चयेन आग्रहिष्ये स्वीकरोमि । 'ग्रह उपादाने' इति धातुः । इदमेव शरणागतपरिग्रहणमेव मे व्रतमित्याहेति सम्बन्धः ।।६।।

**अनन्तभट्टीया–** हनुमति इत्युक्तवति...* । देवदेवः यथा पूर्वं सुग्रीवहेतुतः तद्वचनं अग्रहीदिति शेषः । तदेव सद्य इदानीमित्यर्थः । तद्वचनमित्यनुषङ्गः । सङ्गृह्य पादप्रणतं इमं विभीषणमित्यर्थः । स्थिरमाग्रहीष्य इत्याह । इदं शरणागतपरिग्रहणं मे सदा व्रतम् ।।६।।

**ताम्रपर्णीया–** पूर्वं सुग्रीवहेतुतो तथैव तद्वचनं सङ्गृह्य इति सम्बन्धः ।।६–८।।

**चट्टी–** इत्युक्तरीत्या हनुमति उक्तवति सति अथ अनन्तरं देवानां देवो रामः पूर्वं सुग्रीवहेतुतः सुग्रीवार्थं यथा तद्वचनं अग्रहीत् तथैव तद्वचनं हनूमद्वचनं सङ्गृह्य स्वीकृत्य पादप्रपन्नं आह । तद्वचनं इति उभयत्र सम्बध्यते । किमिति । पादयोः शरणागतं इमं विभीषणं स्थिरं दृढं आग्रहिष्ये स्वीकरोमि । 'ग्रह उपादान' इति धातुः । इदमेव शरणागतपरिग्रहणमेव मे सदा व्रतं नियमेन कर्तव्यम् ।।६।।

**गूढवाक्यार्थ–** पूर्वं सुग्रीवहेतुको यथा तथैव तद्वचनं संगृह्येति सम्बन्धः ।।६।।

**सब्रह्मकाः[१] सुरगणाः सहदैत्यमर्त्याः सर्वे समेत्य च मदङ्गुलिचालनेऽपि ।**
**नेशा भयं न मम रात्रिचरादमुष्माच्छुद्धस्वभाव इति चैनमहं विजाने ।।७।।**

**व्यासतीर्थीया–** यद्ययं गृह्येत तर्हि ततो भयं स्यादित्यत आह– **सब्रह्मका इति** ।।७–१०।।

१. 'स दुष्टो वाप्यदुष्टो वा किमेष रजनीचरः । सूक्ष्ममप्यहितं कर्तुं मम शक्तः कथञ्चन ।। पिशाचान् दानवान् यक्षान् पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान् हन्मि इच्छन् हरिगणेश्वर ।।' इति वा.रा.यु.का.१८.२२-२३

**वरदराजीया**– शत्रुसदनादागत इति शङ्कां परिहरति– **सब्रह्मका इति** ।। ब्रह्मणा सहिताः सुरगणास्तथा दैत्याश्च मर्त्याश्च तैः सह वर्तमानाः सर्वेऽपि समेत्य मदङ्गुलिचालनार्थं नेशाः न समर्थाः । अतोऽमुष्माद्रात्रिंचराद्विभीषणात् मम भयं नास्ति । किञ्च अहमेनं विभीषणं शुद्धस्वभावः सात्त्विकस्वभाव इति विजाने जानामीत्यर्थः । इत्याहेति पूर्वेणान्वयः ।।७।।

**जनार्दनीया**– शत्रुसदनात् उपयातः इत्युक्तेरुत्तरं आह– **सेति** ।। दैत्यमर्त्यैः सहिता इति सहदैत्यमर्त्याः । सर्वे ब्रह्माद्याः समेत्य सम्भूय, मिलित्वेत्यर्थः । मम अङ्गुल्याः चालने चालनविषयेऽपि नेशाः नैव समर्थाः । यत इति शेषः । अतः अमुष्मात् रात्रिचरात् विभीषणात् मम भयं न । समर्थत्वात् । स्वभयं परिहृत्य, कपीनामपि भयशङ्कां परिहरन्नाह– **शुद्ध इति** ।। अयं शुद्धस्वभावः निष्कपटस्वभावः । इत्यनेन प्रकारेण विभीषणं विजाने इत्याहेति पूर्वेण सम्बन्धः । 'इतिशब्देनाभिहिते कर्मणि न कर्मविभक्तिः' [काव्यालङ्कारसूत्रं] इति वामनः । 'क्रमादमुं नारद इत्यबोधि' [शिशुपालवध.१.२] इति प्रयोगाच्च ।।७।।

**अनन्तभट्टीया**– समेत्य सम्भूय ।।७।।

**चट्टी**– यद्ययं गृह्येत तर्हि तत्सदनादागतादस्माद्भयं भविष्यतीत्यत आह– **सब्रह्मका इति** ।। ब्रह्मणा सुरगणा तथा दैत्याश्च मर्त्याश्च तैः सह वर्तमानाः सर्वे समेत्य सम्भूय मदङ्गुलिचालनविषये नेशाः नैव समर्थाः यत इति शेषः । अतः अमुष्मात् रात्रिचरात् विभीषणात् मम भयं नास्ति । समर्थत्वात्स्वभयशङ्कां परिहृत्य कपीनामपि भयशङ्का नास्तीत्याह– **शुद्ध इति** ।। अहं एनं विभीषणं शुद्धस्वभावः इति विजाने जानामीत्यर्थः ।।७।।

**भावचन्द्रिका**– चोरसाम्यमाह– **रात्रीति** ।।७।।

## इत्युक्तवाक्य उत तं स्वजनं विधाय राज्येऽभ्यषेचयदपारसुसत्त्वराशिः ।
## मत्वा तृणोपममशेषसदन्तकं तं रक्षःपतेस्त्ववरजस्य ददौ स लङ्काम् ।।८।।

**वादिराजीया**– अवरजस्य तु अग्रजादपि विशेषेण कल्पावसानपर्यन्तं भुंक्ष्वेति विशेषेणेत्यर्थः । लङ्कां ददौ ।।८–९।।

**अभिनव**– इत्युक्तवाक्य उत तं इति श्लोके स्वजनं विधायेत्यस्य स्वस्य जनो यस्य तं स्वजनं स्वसेवकजनान्तर्गतं विधायेत्यर्थः । एतेन स्वजनान्तर्गतं विधायेति वक्तव्यम् । स्वजनं विधायेति कथनमनुपपन्नमिति दूषणं पराकृतं । स्वजनमित्यत्र बहुव्रीहिमङ्गीकृत्य स्वजनान्तर्गतमिति तात्पर्यार्थस्योक्तत्वात् ।।८।।

**मधुसूदनीया–** ।।१-७।। **अपारसुसत्वराशिरिति** ।। 'महागुणोच्चपूर्णत्वं सत्त्वमित्युच्यते बुधैः' [भा.ता.३. २५.१०] इति वामनोक्तेः सत्वशब्दार्थोऽवगन्तव्यः ।।८–९।।

**वरदराजीया–** इत्युक्तं वाक्यं येन स तथा विभीषणं स्वजनं भृत्यं विधाय उतानन्तरं राज्ये लङ्काराज्ये अभ्यषेचयत् अभिषेकं कृतवान् । यतः सोऽपारसुतत्त्वराशिः अनन्तबलराशिः तस्मादशेषाणां सतां सज्जनानां अन्तकं मारकं तं रक्षःपतिं रावणं तृणोपमं तृणवदकिञ्चित्करं मत्वा निश्चित्य तु अवरजस्य रावणानुजस्य लङ्कां ददौ ।।८।।

**जनार्दनीया–** इति अनेन प्रकारेण उक्तं वाक्यं येन स तथा रामः । तं विभीषणं स्वजनं स्वसेवकं विधाय, उत अनन्तरम् । राज्ये साम्राज्ये । रावणस्य इति शेषः । अभ्यषेचयत् । ननु अग्रजे रावणे जीवति सति कथं अभ्यषेचयत् इत्यत आह– **अपारेति** ।। अपारं अपरिमितं स्वाभाविकबलमित्यर्थः, तस्य राशिः समूह । अत एव स रामः । अशेषसतां अन्तकं अरिं रावणं तृणोपमं मत्वा ज्ञात्वा, रक्षःपतेः रावणस्य अवरजस्य भ्रातुः ।।८।।

**अनन्तभट्टीया–** स्वजनं स्वकीये राज्ये रावणराज्ये ।।८।।

**चट्टी–** इति उक्तं वाक्यं येन स तथा रामः विभीषणं तं स्वजनं स्वभृत्यं विधाय उत अनन्तरं राज्ये साम्राज्ये रावणस्य इति शेषः अभ्यषेचयत् । अभिषेकं कृतवान् । रावणे जीवति सति कथं अभ्यषेचयत् इत्यत आह– **अपारेति** ।। अपारं अपरिमितं सुसत्त्वं समीचीनसत्वं स्वाभाविकबलमित्यर्थः । तस्य राशिः समूहः । अत एव स रामः अशेषाणां सतां सज्जनानां अन्तकं अरिं तं रक्षःपतिं रावणं तृणोपमं तृणवदकिञ्चित्करं मत्वा ज्ञात्वा अवरजस्य रावणानुजस्य लङ्कां ददौ ।।८।।

**भावचन्द्रिका–** स्वजनं मन्त्रिणम् । सर्वराक्षसराज्येऽप्यभिषिच्य विभीषणम् । 'चक्रे च मन्त्रिप्रवरं सुहृदं लक्ष्मणस्य ह ।' इति भारते [वन.२८४.४९] । रावणस्य जीवितत्वात् कथमभिषेक इत्यत आह– **अपारेति** ।। वैषम्यं कुत इत्यत आह– **सदिति** ।।८–१०।।

**भावविवृति–** ।।१-७।। स्वजनं विधाय मन्त्रिणं विधाय । 'सर्वराक्षसराज्ये चाभ्यषिञ्चत् विभीषणम् । चक्रे च मन्त्रिप्रवरं सुहृदं लक्ष्मणस्य च ।।' इति भारते ।।८।।

**कल्पान्तमस्य निशिचारपतित्वपूर्वमायुः प्रदाय निजलोकगतिं तदन्ते ।**
**रात्रित्रयेऽप्यनुपगामिनमीक्ष्य सोऽब्धिं चुक्रोध रक्तनयनान्तमयुङ्क्तदब्धौ ।।९।।**

**वेदाङ्गतीर्थीया–** नयनान्तः कटाक्षः । तेन हतः ।।९–१०।।

**सत्याभिनवीया–** तदनन्तरमेव कल्पान्तमस्य इति श्लोके कल्पान्तमस्य निशिचारपतित्वमायुः प्रदायेत्यस्य अस्य अस्मै विभीषणाय निशिचारपतित्वपूर्वं यस्यैश्वर्यादेः तत् निशिचारपतित्वं पूर्वं निशिचारिपतित्वैश्वर्यादिकं पुरुषार्थजातं कल्पान्तमायुश्च प्रदायेत्यर्थः । एतेन निशिचारिपतित्वे पूर्वत्वस्य आयुषि पश्चाद्भावित्वस्वभावात् निशिचारिपतित्वपूर्वमायुः प्रदायेति कथनमनुपपन्नमिति दूषणं परस्तम् । निशिचारिपतित्वपूर्वमित्येतत् अध्याहृतपुरुषार्थमित्यस्यैव विशेषणं न त्वायुरित्यस्येति स्वीकरणात् ।।९।।

**वरदराजीया–** अस्य विभीषणस्य निशिचारिपतित्वं राक्षसाधिपतित्वं अस्य मनुकल्पान्तं मनुकल्पपर्यन्तं आयुः आयुष्यं प्रदाय तदन्ते आयुषोऽन्ते निजलोकगतिं निजस्थानप्राप्तिं वा ददावित्यर्थः । स रामो रात्रित्रये अतीतेऽपि अनुपगामिनमनागतमब्धिं समुद्रमीक्ष्य चुक्रोध क्रोधं चकार । तथा रक्तभूतं नयनकटाक्षं अब्धौ अयुञ्जत् योजयामास । रक्तान्तलोचनाभ्यां अब्धिमवलोकयामासेति भावः ।।९।।

**जनार्दनीया–** अस्य विभीषणस्य निशिचारपतित्वं राक्षसस्वामित्वं, पूर्वं यथा स्यात्तथा । कल्पान्तं ब्रह्मदिनकल्पपर्यन्तं आयुः प्रदाय, तदन्ते आयुरन्ते । ब्रह्मप्रलयाव्यवहितपूर्वदिने विद्यमानविभीषणायुषोऽन्ते इति यावत् । निजलोकगतिं प्रदाय, रात्रित्रये गते सति अनुपगामिनं स्वसमीपं अनागतं अब्धिं चुक्रोध चुकोप । रक्तश्चासौ नयनान्तश्च स तथा तम् । अयुञ्जत् योजयामास । अत्र विभीषणः वैवस्वतमन्वन्तरे रावणानुजो भूत्वा रामप्रसादात् लङ्काधिपत्यं प्राप्य, ब्रह्मदिनान्ते पुनः ब्रह्मलोकं प्राप्स्यति । एवं महाकल्पपर्यन्तम् । ततो ब्रह्मणा सह मुक्तिमुपेष्यतीति ज्ञातव्यम् । प्रमाणं चात्र ब्रह्मपुराणस्थरङ्गमाहात्म्यवाक्यं तथाहि– 'आयुश्च परमं दत्तमैश्वर्यममलं भुवि । उपेष्यसि ब्रह्मलोकं पुनर्लङ्कां समेष्यसि ।। द्विपरार्धावसाने त्वं मया सह विभीषण । प्रयास्यसि परं लोकं सर्गप्रलयवर्जितम् ।।' इति । 'कल्पश्च प्रलये न्याये शास्त्रे ब्रह्मदिने स्मृते' इति वचनात् कल्पशब्दो ब्रह्मदिने ज्ञातव्यः ।।

**अनन्तभट्टीया–** कल्पान्तं चतुर्मुखस्य एकदिनपरिमितम् । नयनान्तं अपाङ्गः ।।९।।

**ताम्रपर्णीया–** कल्पान्तं दिनकल्पान्तम् । 'अश्वत्थामा बलिर्व्यासः हनुमांश्च विभीषण' इति दिनकल्पान्तस्थायिभिः सहपठनात् । 'मन्वन्तरायुषस्स्वर्ग्याः महर्लोकेषु काल्पिकाः' इत्यत्र [भा.ता२.२.२८] कल्पशब्दस्य दिनकल्पे प्रसिद्धत्वाच्च ।[१]

१. कल्पान्तं ब्रह्मदिनकल्पान्तम् । कल्पशब्दस्य तत्र मुख्यत्वात् । 'मन्वन्तरायुषः स्वर्ग्याः महर्लोके तु काल्पिकाः' इति मन्वन्तरे कल्पशब्दं विना दिनकल्पे एव तत्प्रयोगात् । 'अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च...' इति कल्पान्तस्थायिभिः सहपाठादिति । 'मुनेः शापेन कण्व त्वं रावणस्यानुजो भव । विभीषणाख्यया भूमौ भक्तिः स्यादनपायिनी ।। राक्षसानामाधिपत्यं दत्तमाचन्द्रतारकम् ।' इति वामनपुराणोक्तेश्च । मनुकल्पान्तमित्यर्थमाहुः ।।९–१२।। इति ह्ये पाठः ।

'मुनेः शापेन त्वं कण्व रावणस्यानुजो भव । विभीषणाख्यया भूमौ भक्तिः स्यादनपायिनी ।। राक्षसानामाधिपत्यं दत्तमाचन्द्रतारकम् ।।' इति वायुपुराणोक्तेश्च । केचित्तु 'मनुकल्पान्तम्' इति व्याचक्षते ।।९।।

**चट्टी–** अस्य विभीषणस्य निशिचारिपतित्वं राक्षसस्वामित्वं पूर्वं यथा स्यात्तथा कल्पान्तं ब्रह्मदिनकल्पपर्यन्तं आयुः आयुष्यं प्रदाय तदन्ते आयुषोऽन्ते निजलोकगतिं निजस्थानप्राप्तिं च ददाविति सम्बन्धः । सः रामः रात्रित्रयेऽपि गतेऽपि अनुपगामिनं स्वसमीपं अनागतं अब्धिं समुद्रं ईक्ष्य चुक्रोध चुकोप । रक्तश्चासौ नयनान्तश्च रक्तनयनान्तः तं कटाक्षं अब्धौ अयुञ्जत् योजयामास । रक्तान्तलोचनाभ्यां अब्धिमवलोकयामासेति भावः । अत्र विभीषणः वैवस्वतमन्वतरे रावणानुजो भूत्वा रामप्रसादात् लङ्काधिपत्यं प्राप्य ब्रह्मदिनान्ते ब्रह्मलोकं प्राप्स्यति । एवं महाकल्पपर्यन्तं ततो ब्रह्मणा सह मुक्तिमुपेष्यतीति ज्ञातव्यम् । तथा चोक्तम्– 'आयुश्च परमं दत्तमैश्वर्यममलं भुवि । उपेष्यसि ब्रह्मलोकं पुनर्लङ्कां समेष्यसि ।। द्विपरार्धावसाने त्वं मया सह विभीषण । प्रयास्यसि परं लोकं सर्गप्रलयवर्जितम् ।।' इति ब्रह्मपुराणस्थरङ्गमाहात्म्ये । 'कल्पश्च प्रलये साङ्ख्ये शास्त्रे ब्रह्मदिने स्मृतः' इति वचनात् कल्पशब्दो ब्रह्मदिने ज्ञातव्यः ।।९।।

**भारतश्री–** ...कल्पान्तं दिनकल्पान्तम् ।।९।।

**भावविवृति–** अस्य विभीषणस्य कल्पान्तं दिनकल्पपर्यन्तम् ।।९–११२।।

**अतिविशद–** कल्पान्तमस्य निशिचारिपतित्वपूर्वमायुः प्रदाय निजलोकगतिं तदन्ते इत्यत्र 'आयुश्च परमं दत्तमैश्वर्यममलं भुवि । उपेष्यसि ब्रह्मलोकं पुनर्लङ्कां समेष्यसि ।। द्विपरार्धावसाने त्वं मया सह विभीषण । प्रयास्यसि परं लोकं सर्गप्रलयवर्जितम् ।।' इत्येत्प्रमाणबलात् विभीषणः ब्रह्मणः प्रतिदिने लङ्काधिपत्यं प्राप्य द्विपरार्धावसाने ब्रह्मणा सह मुक्तिमेष्यतीत्याहुः ।।९।।

**गूढवाक्यार्थ–** कल्पान्तं दिनकल्पान्तम् । 'अश्वत्थामा बलिर्व्यासः हनुमांश्च विभीषणः' इति दिनकल्पस्थायिभिः सह पाठात् इति । 'मुनेः शापेन त्वं कण्व रावणस्यानुजो भव । विभीषणाख्यया भूमौ भक्तिः स्यादनपायिनी ।। राक्षसानामाधिपत्यं दत्तमाचन्द्रतारकम् ।।' इति वामनपुराणे उक्तत्वाच्च ।।

**[१]सक्रोधदीप्तनयनान्तहतः परस्य शोषं क्षणादुपगतो दनुजादिसत्त्वैः ।**
**सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ।।१०।।**

---

१. शार्ङ्गमादाय बाणौघैः शोषयामास वारिधिम् । ततस्तु सरितामीशः काकुत्स्थं करुणानिधिम् ।। प्रपद्य शरणं देवं अर्चयामास वारिधिः । पुनरापूर्यजलधिं वरुणास्त्रेण राघवः ।। इति [पाद्मे.उ.खं.२४२.२९६-२९८].....

**वेदाङ्गतीर्थीया–** दनुजादिसत्वैः सह ॥१०॥

**वादिराजीया–** भीत्या वेपमानस्य सिन्धोः शिरसि पूजाद्रव्यमपि कम्पत इति सूचनाय अर्‌हणमिति विश्लिष्टोक्तिः ॥१०॥

**मधुसूदनीया–** ॥ **शोषं क्षणादिति** ॥ तदनन्तरं पुनः समुद्रस्य जलपूर्णत्वं च रामवरादिति ज्ञेयम् । 'मया दत्तो वरः पूर्वं न शोषं यास्यसीति ह' इति समुद्रं प्रति कृष्णोक्तेः हरिवंशे [विष्णु.प.११३.१०] ॥

**वरदराजीया–** सिन्धुः समुद्रः परस्य रामस्य सक्रोधरक्तनयनान्तहतः क्रोधसंरक्तनयनकटाक्षहत इव दनुजादिसत्वैः दनुजरूपजलचरैः सह क्षणात् क्षणमात्रेण शोषं निर्जलत्वमुपगतोऽभूत् । रूपी मूलरूपः शिरसि मस्तके अर्हणं पूजासाधनं मालादिकं परिगृह्य स्थापयित्वा श्रीरामपादारविन्दमुपगम्य एतद्वक्ष्यमाणं बभाषे अवोचत् ॥१०॥

**जनार्दनीया–** परस्य रामस्य । क्रोधेन दीप्तश्चासौ नयनान्तः कटाक्षः, तेन हतः स सिन्धुः समुद्रः । दनुजाः दानवाः, त एवादीनि येषां तानि तथा, तानि च तानि सत्त्वानि जलचरादिप्राणिनः तैः सह शोषं निरार्द्रत्वम् । क्षणादुपगतः प्राप्तः सन् । रूपी रूपवान् वरुणरूपं प्राप्येत्यर्थः । शिरसि अर्हणं पूजासाधनम् । परिगृह्य धृत्वा, उपगम्य, राममिति शेषः ॥१०॥

**अनन्तभट्टीया–** दनुजादिसत्त्वैः स्वान्तस्थराजसजलचरादिभिः ॥१०॥

**चट्टी–** परस्य रामस्य क्रोधेन दीप्तश्चासौ नयनान्तश्च कटाक्षश्च तेन हतः स सिन्धुः समुद्रः दनुजाः दानवाः त आदीनि येषां तानि तथा । तानि च तानि सत्वानि जलचरादिप्राणिनः तैः सह शोषं निर्जलत्वं उपगतः प्राप्तः सन् रूपी रूपवान् वरुणरूपं प्राप्येत्यर्थः । शिरसि मस्तके अर्हणं पूजासाधनं रत्नादिकं परिगृह्य धृत्वा स्थापयित्वा श्रीरामपादारविन्दं उपगम्य प्राप्य एतद्वक्ष्यमाणं बभाषे । सिन्धुना पूजाकालस्य विक्षेपः कृत इति सूचनाय अर्‌हणमिति विश्लिष्योक्तिः ॥१०॥

**अतिविशद–** चुक्रोध रक्तनयनान्तममुञ्चदित्युक्तम् । न केवलमेतावत् । बाणं दधारेत्यपि ग्राह्यम् । 'तस्मै धृतं दितिसुतात्मसु चान्त्यजेषु' इत्युत्तरग्रन्थानुरोधात् । तन्मात्रग्रहणे तद्विरोधापत्तेः ॥१०–११॥

**गूढवाक्यार्थ–** दनुजादिसर्वैर्बलजन्तुभिः ॥१०॥

---

...तथा- 'निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् । महार्णवं क्षोभयिष्ये महादानवसङ्कुलम् ॥ एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः । बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन् ॥ सम्पीड्य च धनुर्घोरं कम्पयित्वा शनैर्जगत्। मुमोच विशिखानुग्रान् वज्रानिव शतक्रतुः ॥ ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः । प्रविशन्ति समुद्रस्य जलं वित्रस्तपन्नगम् ॥ ...व्यथिताः पन्नगाश्चासन् दीप्तास्या दीप्तलोचनाः । दानवाश्च महावीर्या पातालतलवासिनः ॥' २१.२४-३०. इति पुराणरामायणार्षरामायणगतकथां सङ्गृह्य कथयति– **सक्रोधेति** ।

**तं त्वा वयं जडधियो न विदाम भूमन् कूटस्थमादिपुरुषं जगतामधीशम् ।**
**त्वं सत्वतः सुरगणान् रजसो मनुष्यांस्तार्तीयतोऽसुरगणानभितस्तथास्राः ॥**

**व्यासतीर्थीया–** सत्वं सामर्थ्यम् । धीर्मनः । असज्ज्ञाने प्रायस्तामसत्वं कारणमिति भावेनाह– **त्वं सत्वत इति** ।। तार्तीयतः तमोगुणेन ।।११।।

**वेदाङ्गतीर्थीया–** तार्तीयतः तमोगुणतः । अभितः सर्वदेशकालेषु । अस्राः अस्राक्षीः ।।११।।

**वादिराजीया–** तृतीयसङ्ख्यासम्बन्धात् तार्तीयस्तमोगुणस्तस्मादित्यर्थः । सत्वगुणतः सृष्टेषु देवेषु तमोगुणकार्यमज्ञानं असुरावेशनिमित्तं नतु स्वाभाविकमिति सूचनाय त्वं सत्वत इत्यादिकमुक्तम् ।।

**मधुसूदनीया–** ।। **त्वं सत्वत इति** ।। त्वं सुरगणान् सुराणां अनाख्यातानां अतात्त्विकानां तात्त्विकानां च । अथ गरुडादित्रिकतत्त्वीणां तथा ब्रह्मवायुतत्त्वीणां गणान्सत्वतः यथाक्रमं सात्त्विकतामसेन सात्त्विकराजसेन सात्त्विकसात्त्विकेन च सात्त्विकसात्त्विकसात्त्विकसात्त्विकेन च अस्राः सृष्टवानित्यर्थः । मानुषान् केवलपापैककृतः पुण्यपापलक्षणमिश्रकर्मकृतश्च मिश्रकर्मकृन्मध्ये उत्तमांश्चेति त्रिविधान् रजसः राजसतामसात् राजसराजसात् राजससात्त्विकात् चास्राः इत्यन्वयः । असुरगणान् कल्यादिप्रधानासुरान् तत्प्रधानभृत्यान् अनाख्यातदैत्यांश्च तार्तीयत तामसतामसेन तामसराजसेन तामससात्त्विकेन चास्राः इत्यन्वयः । तच्चोक्तम्–

'तामसास्तामसा दैत्याः प्रधाना देवशत्रवः । तामसा राजसास्तेषां अनुगास्तेषु सात्त्विकाः ।।
अनाख्यातासुराः प्रोक्ताः मानुषा दुष्टचारिणः । राजसास्तामसाश्चैव मध्या राजसराजसाः ।।
राजसासात्त्विकास्तत्र मानुषेषूत्तमा गणाः । देवाः पृथगनाख्याताः स्मृतास्सात्त्विकतामसाः ।।
अतात्त्विकास्तथाख्याताः स्मृतास्सात्त्विकराजसाः ।
सात्त्विकास्सात्त्विकास्तत्र तात्त्विकाः परिकीर्तिताः ।।
तेषां च सात्त्विकाश्शेषगरुत्मद्रुद्रतत्स्त्रियः । तत्रापि देवी ब्रह्माणी ब्रह्मा चैव ततस्स्वयम् ।।'
इति स्कान्दे इति द्वितीयस्कन्धतात्पर्ये [१०.४१] ।।११-१४।।

**वरदराजीया–** हे भूमन् देशतः कालतः गुणतश्च परिपूर्ण तं प्रसिद्धं त्वां जडधियो मूर्खाः वयं न विदाम न जानीमः । कीदृशं त्वां कूटस्थं निर्विकारं आदिपूरुषं जगतां लोकानां मुख्यं स्वामिनं त्वं सत्वतः सत्वगुणात् सुरगणान् अभितः सर्वस्मिन् देशे काले च । तथाशब्दः समुच्चये अस्राक्षीः ।।११।।

**जनार्दनीया–** हे भूमन् देशादितः पूर्ण । जडधियः जडसदृशबुद्धयो वयं कूटस्थं निर्विकारं तं प्रसिद्धम् । त्वा त्वाम् । न विदाम न जानीम । प्रसिद्धत्वं दर्शयति– **त्वमिति** ।। त्वं सत्वतः सत्वगुणात्

सुरगणान् अस्राक्षीः । तथा रजसः रजोगुणात् मनुष्यान् । तार्तीयतः तृतीयगुणात् तमोगुणादित्यर्थः । असुरगणान् । अभितः सर्वकल्पेषु अस्रा इति सर्वत्रानुषङ्गः ॥११॥

**अनन्तभट्टीया–** कूटस्थं...[4] अमानं तप्तायःपिण्डाधारभूतायोमयम् । तद्वदविकारम् । तार्तीयतः तृतीयात् तमस इत्यर्थः । अस्राः अस्राक्षीः ॥११॥

**ताम्रपर्णीया–** जडधियः प्राकृतान्तःकरणविकारज्ञानाः । अतः त्वां कूटस्थत्वादिविशिष्टं आदिपुरुषं न विदाम । 'यत्किञ्चिद् व्यभिचारि स्यात् दर्शनं मानसं हि तत्'[अनु ३-४ उभयलिङ्गाधिकरण] इति वचनात् इति ज्ञेयम् । तार्तीयतः तृतीयसङ्ख्यावत् तार्तीयं तस्मात् तमोगुणात् इत्यर्थः । सात्विकेषु देवेषु तामसमज्ञानमसुरावेशनिमित्तं न स्वाभाविकमिति द्योतनाय त्वं सत्वत इत्यादिकमुक्तं ज्ञेयम् । अस्राः सृजसि ॥११-१२॥

**चट्टी–** हे भूमन् देशतः कालतः गुणतश्च परिपूर्ण । जडधियः जडसदृशबुद्धयो वयं कूटस्थं निर्विकारं आदिपुरुषं पुराणपुरुषं जगतां लोकानां अधीशं मुख्यस्वामिनं तं प्रसिद्धं त्वा त्वां न विदाम न जानीमः । प्रसिद्धत्वं दर्शयति– **त्वमिति** ॥ त्वं सत्वतः सत्वगुणात् सुरगणान् अस्राः अस्राक्षीः । तथा रजसः रजोगुणात् मनुष्यान्, तार्तीयतः तृतीयसङ्ख्यासम्बन्धि तार्तीयं तमोगुणः तस्मादित्यर्थः । असुरगणान् । अभितः सर्वस्मिन् देशकाले । अस्रा इति सर्वत्रानुषङ्गः । सत्वगुणतः सृष्टेषु तमोगुणकार्यमज्ञानं असुरावेशनिमित्तं न स्वाभाविकमिति सूचनाय त्वं सत्वत इत्यादिकमुक्तम् ॥११॥

**भावचन्द्रिका–** मदागमनेन तव प्रयोजनलाभो नेत्याह– **भूमन्निति** ॥ न हानिश्चेत्याह– **कूटस्थमिति** ॥ पित्रवज्ञारूपत्वात्स्वाम्यवज्ञारूपत्वाच्च अनागमनमपराध इत्याह– **आदीति** ॥

**गूढवाक्यार्थ–** जडधियः प्राकृतान्तःकरणविकारज्ञानाः । 'यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत्' [अनु.३.४.आधिकारिकाधिकरणम्] इति वचनात् । तार्तीयतः तृतीयसङ्ख्यासम्बन्धतः तार्तीयः तमोगुणः तस्मात् इत्यर्थः । सात्विकेषु देवेषु तमोगुणकार्यमज्ञानमसुरावेशनिमित्तं न स्वाभाविकमिति द्योतनाय त्वं सत्वतस्सुरगणानित्यादिकमुक्तमिति ज्ञेयम् । अस्राः अस्राक्षीः सृजसि ॥११॥

**कामं प्रयाहि जहि [1]विश्रवसोऽवमेहं[2] त्रैलोक्यरावणमवाप्नुहि [3]वीर पत्नीम् ।**
**बध्नीहि सेतुमिह ते यशसो वितत्यै गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥**

---

१. 'यस्य माद्वेदेतिहासैश्च सषडङ्गपदक्रमाः । विश्रान्ता ब्रह्मणा दत्ता नाम विश्रवसेति च ॥' इतिस्कान्दे.आवन्त्य. ३रेवा.१६८.८

३ 'वीरपत्नीम्' इति वरदराजीये ।

४. 'सिन्धुः शिरस्यर्हणं' इत्यारभ्य एतत् श्लोकपर्यन्तं भागवतश्लोका एव मध्ये किञ्चित् व्यत्यासेन पठिताः ।

**व्यासतीर्थीया–** अवमेहं अपत्यम् ।।१२-१३।।

**वेदाङ्गतीर्थीया–** अवमेहं अपत्यमिति यावत् । इह मयि ।।१२।।

**वादिराजीया–** त्रैलोक्यं रावयति ध्वनयति रोदयतीति त्रैलोक्यरावणम् । अत एव विश्रवसः विश्रवसनामकर्षेः अवमेहं अमेध्यस्थानीयं ऋषेरुदरादमेध्यमिवाधःपतितः न तु पुत्रत्वयोग्य इति भावः । तं रावणं जहि ।।१२।।

**वरदराजीया–** कामं यथा रोचते तथा प्रयाहि लङ्कां प्रतीति शेषः । विश्रवसोः ऋषेः अवमेहं रेतसः उत्पन्नं त्रैलोक्यरावणं त्रैलोक्याः शोककारकं जहि हन । वीरपत्नीं सीताप्रतिकृतिम् । वीरेति सम्बोधनं वा । इह समुद्रे सेतुं पद्भ्यां गन्तुं बध्नीहि । बन्धनं किमर्थं ते तव यशसः कीर्तेः वितत्यै विस्तृत्यै । तदेव स्पष्टमाह– **गायन्तीति** ।। यं सेतुमुपेत्य दिग्विजयिनो दिग्विजयार्थमागता भूपाः गायन्ति । वर्तमानसामीप्याद्वर्तमाननिर्देशः ।।१२।।

**जनार्दनीया–** कामं यथेष्टं प्रयाहि । लङ्कां प्रतीति शेषः । हे वीर! त्रैलोक्यं त्रिलोकीं, रावणं क्रोशकं रोदनकारकं इत्यर्थः । विश्रवसः तदाख्यऋषेः अवमेहं रेतोविकारं पुत्रं रावणमित्यर्थः । जहि हन । पत्नीं सीताकृतिम् । अवाप्नुहि । ते तव । यशसः वितत्यै विस्ताराय इह मदधिष्ठिते समुद्रे सेतुं बध्नीहि । यं सेतुं दिग्विजयिनो दिशां विजयशीलाः भूपा उपेत्य, गायन्ति सेतुकर्तुर्यश इति शेषः । इत्येतद् बभाषे इति पूर्वेणान्वयः ।।१२।।

**अनन्तभट्टीया–** अवमेहं रेतोविकारम्, सुतं रावणमित्यर्थः । त्रैलोक्यरावणं त्रिलोकाक्रोशकम् । गायन्ति गास्यन्ति त्वत्कीर्तिमित्यर्थः । यं सेतुम् ।।१२।।

**चट्टी–** कामं यथा रोचते तथा प्रयाहि लङ्कां पुरीमिति शेषः । त्रयो लोकाः त्रैलोक्यम् । स्वार्थे कप्रत्ययः इति त्रिलोकमित्यर्थः । त्रैलोक्यं रावयतीति क्रोशयतीति त्रैलोक्यरावणः तं त्रिलोकरोदनकरमित्यर्थः । अत एव विश्रवसः तदाख्यऋषेः अवमेहं अमेध्यस्थानीयं ऋषेरुदरात् अमेध्यमिव अधः पतितः न तु पुत्रत्वयोग्य इति भावः । एतादृशं रावणं जहि हन । हे वीर पत्नीं सीताकृतिं अवाप्नुहि । ते तव यशसः वितत्यै विस्ताराय इह मदधिष्ठिते समुद्रे सेतुं बध्नीहि । यं सेतुं दिग्विजयिनो दिशां विजयशीलाः भूपा उपेत्य गायन्ति गास्यन्ति । वर्तमानसामीप्याद् वर्तमाननिर्देशः । सेतुकर्तुर्यश इति शेषः । इत्येतद् बभाषे इति पूर्वेणान्वयः ।।१२।।

**अतिविशद–** जहि विश्रवसोऽवमेहं इत्यत्र अवमेहमित्यस्य रेतोभूतमेवेत्यर्थः । ननु विश्रवसःपुत्रमित्यनुक्त्वा अवमेहमिति किमर्थमुक्तमिति चेत् सत्यं यद्यपि विश्रवसः उत्पन्नत्वात् पुत्र इति वक्तव्यम् । तथापि नायं पुत्रशब्दवाच्य इति सूचनार्थमुक्तम् । तथाहि । पुत्रस्त्रिविधः

उत्तममध्यमनीचभेदात् । तत्र चिन्तितकारी उत्तमः । प्रोक्तकारी मध्यमः । अधमोऽश्रद्धया कर्ता इति पुत्रशब्दनिमित्तस्य रावणे अभावात् । तदुक्तं नवमभागवते– [१५.४४] 'उत्तमश्चिन्तितं कुर्यात् प्रोक्तकारी तु मध्यमः । अधमोऽश्रद्धया कुर्यात् अकर्तोच्चरितं पितुः ।।१२-१३।।

**प्रमाणसंग्रह–** ।। **बध्नीहि सेतुमिति** ।। 'अथ काष्ठं तृणं वापि शिला वा क्षिप्यते मयि । सर्वं तद्धारयिष्यामि तेन सेतुर्भविष्यति ।।' [२८४.४२] इत्यरण्यपर्वणि ।।१२।।

**इत्युक्तवन्तमगुमाश्वनुगृह्य बाणं तस्मै धृतं[१] दितिसुतात्मसु चान्त्यजेषु ।**
**शार्वाद्वराद्विगतमृत्युषु दुर्जयेषु निःसङ्ख्यकेष्वमुचदाशु ददाह सर्वान् ।।१३।।**

**वेदाङ्गतीर्थीया–** अनुगृह्य अभयं दत्वा ।।१३।।

**वादिराजीया–** 'व्यत्ययो बहुलम्' इति वचनादमुचत् अमुञ्चदित्यर्थः ।।१३।।

**वरदराजीया–** इत्युक्तवन्तं अमुं समुद्रं आशु शीघ्रं अनुगृह्य अनुग्रहेण स्वीकृत्य तस्मै समुद्राय धृतं धनुषि प्रतिसंहितं बाणं दितिसुतात्मसु दैत्यस्वरूपेषु अन्त्यजेषु आभीरेषु शार्वात् शर्वदत्तात् वरात् विगतमृत्युषु मरणरहितेषु अत एव दुर्जयेषु जेतुमशक्येषु निःसङ्ख्यकेषु अपरिमितेषु अमूमुचत् मोचयामास । आशु शीघ्रं सन् ददाह भस्मीचकारेत्यर्थः ।।१३।।

**जनार्दनीया–** अमुं समुद्रं अनुगृह्य, तस्मै समुद्राय समुद्रार्थम् । धृतं बाणम् । शार्वात् वरात् रुद्रसम्बन्धिवरात् विगतमृत्युषु दुर्जयेषु जेतुमशक्येषु निःसङ्ख्यकेषु अनेकेषु दितिसुतात्मसु दैत्येषु अन्त्यजेषु चाण्डालेषु अमुचत् । सर्वानन्त्यजान् ।।१३।।

**अनन्तभट्टीया–** दितिसुतात्मसु दैत्यात्मकेषु अन्त्यजेषु अभीराख्यचाण्डालेषु । सर्वान् ददाह ।।

**ताम्रपर्णीया–** तस्मै धृतमिति तद्विभीषणाय धृतं इत्यर्थः ।।१३।।

**चट्टी–** इत्युक्तवन्तं अमुं समुद्रं आशु शीघ्रं अनुगृह्य अनुग्रहेण स्वीकृत्य तस्मै समुद्राय समुद्रार्थं धृतं सन्धितं बाणं शर्ववरात् रुद्रवरात् विगतमृत्युषु दुर्जयेषु जेतुमशक्येषु निःसङ्ख्यकेषु अपरिमितेषु दितिसुतात्मसु दैत्यस्वरूपेषु अन्त्यजेषु चाण्डालेषु अमुचत् मुमोच । आशु शीघ्रं सर्वान् ददाह ।।१३।।

**गूढवाक्यार्थ–** तस्मै धृतम् । तद्भीषणाय धृतं दितिसुतात्मसु दैत्यात्मकेषु आभीराख्यचण्डालेषु ।।

---

१. 'सनागदैत्यबाणैकव्याकुलीकृतसागरः । सम्लेच्छकोटिबाणैकशुष्कनिर्दग्धसागरः ।।' इति पद्म.उ.खं.७१.२२५ । अत्राह तिलकः– यद्यपि सगरसम्बन्धादेव हनूमते मैनाकद्वारा कृतोपचारः सागरः । तथापि रामे एतावद्विलम्बकरणं रामेण क्रोधाद्धनुःसन्धानं कारयित्वा स्वरिपुनाशनायेति बोध्यम् ।'

**कृत्वेरणं[१] तदथ मूलफलानि चात्र सम्यग्विधाय भवशत्रुरमोघचेष्टः ।**
**बद्धुं दिदेश सुरवर्धकिनोऽवतारं तज्जं[२] नलं हरिवरानपरांश्च सेतुम् ॥१४॥**

**व्यासतीर्थीया–** तदीरणं कृत्वा स्थित्वा सम्यग्विधाय । असमीचीनं कथं सम्यक् कृतमित्यत उक्तम्– **भवेत्यादि** ॥१४-१५॥

**वेदाङ्गतीर्थीया–** तदीरिणं ऊषरस्थलं सम्यक् कृत्वा सुभूमिं कृत्वा ॥१४-१९॥

**वादिराजीया–** ईरणं मरुभूमिं सम्यक् समीचीनभूमिं विधाय अत्र भूमौ मूलफलानि कृत्वेत्यर्थः । अत्र दक्षिणसमुद्रतीरे तत् प्रसिद्धं ईरणं कण्टकतृणं 'कृती च्छेदने' इति धातोः कृत्वा छित्वा सम्यक् फलमूलानि विधाय चेति वा ॥१४॥

**वरदराजीया–** अथानन्तरं तत् प्रसिद्धं ईरणं ऊषरात्मकं मरुकान्तारनामकं वनं सम्यक् विधाय सुभूमिं कृत्वा, तत्र भूमौ मूलानि फलानि च यथा सम्यक् भवन्ति तथा विधाय च । एतत्किमर्थं चकारेत्यत उक्तम्– **भवेति** ॥ भवस्य संसारस्य शत्रुः नाशको यतो अतोऽमोघचेष्टः । आद्यर्थे तादृशकर्मा एतादृशं चरित्रश्रवणेनाधिकारिणां संसारच्छेदः स्यादित्यभिप्रायेणैतानि कर्माणि चकारेति भावः । सुरवर्धकिनो देवानां तक्षणो विश्वकर्मणोऽवतारं तज्जं तस्माद्विश्वकर्मणो जातं नलं नलनामानं कपिं अपरानन्यांश्च हरिवरान् कपिश्रेष्ठान् सेतुं बद्धुं दिदेश आज्ञापितवान् ॥१४॥

**जनार्दनीया–** भवशत्रुः स्वकृतकर्मश्रवणादिना भक्तसंसारनाशको रामः तदीरणं प्रसिद्धमूषरस्थलं सम्यक्कृत्वा, सुभूमिं कृत्वा, अत्र भुवि मूलानि विधाय, आरोपणं कृत्वा, अत एव अमोघचेष्टः अव्यर्थकर्मा । ऊषरस्थले मूलफलारोपणादमोघचेष्ट इति भावः । सुराणां वर्धकिनः तक्षणः विश्वकर्मणः अवतारम् । तस्माद्विश्वकर्मणः जातं नलं नलाख्यकपिं अपरान् हरिवरान् सेतुं बद्धुं दिदेश ॥१४॥

**अनन्तभट्टीया–** ईरणं मरुकान्तारनामकमित्यर्थः । सम्यक् कृत्वा । अत्र फलमूलानि विधाय प्रादुष्कृत्य । अथवा ईरणं कृत्वा छित्वा सम्यग्विधायेति योजना । तज्जं तस्मात् भौवनात् जातम् । सेतुं बद्धुं इति सम्बन्धः ॥१४॥

---

१. ईरिणमिति वेदाङ्गतीर्थीये तथा भावचन्द्रिकायां पठ्यते ।

२. 'पित्रा दत्तवरश्चाहं सामर्थ्ये चापि तत्समः । मातुर्मम वरो दत्तो मन्दरे विश्वकर्मणा ॥ शिल्पकर्मणि मत्तुल्यो भविता ते सुतस्त्विति ॥' इति स्कन्दे [ब्राह्म.सेतुमाहात्म्य.२अ.९२]तथा वामनपुराणेऽपि३९.१५४ द्रष्टव्यम् । यथा नलस्य सेतुबन्धने रामायणादिषु विश्वकर्मवरः श्रूयते । तथा अगस्त्यवरोऽप्यस्तीति संग्रहरामायणादवगम्यते । तथाहि– 'उक्तोऽहं मुनिना पूर्वं नलस्य कपिकर्मतः । पीतेन मां कुम्भजेन भविष्यत्कार्यवेदिना ॥ नलविक्षिपितं सर्वं न गलेरिति शेभन । तेन कार्यमिदं सेतुबन्धनं भवदाज्ञया ॥ अगस्त्यस्य वरादेव नलो मत्सेतुबन्धकः ॥' इति यु.का.२.४६–४७]

**ताम्रपर्णीया–** ।। कृत्वेति ।। ईरणं मरुभूमिं सम्यक् समीचीनभूमिं विधाय अत्र मूलफलानि च कृत्वा इत्यर्थः । यद्वा अत्र समुद्रतीरे तत्प्रसिद्धं ईरणं कण्टकतृणं 'कृती छेदन' इति धातोः कृत्वा छित्वा, सम्यक् फलमूलानि विधाय इत्यर्थः ।।१४।।

**चट्टी–** भवशत्रुः स्वकृतकर्मश्रवणादिना भक्तसंसारनाशको अमोघचेष्टः सफलव्यापारः रामः तत् प्रसिद्धं ईरणं ऊषरस्थलं सम्यक्कृत्वा सुभूमिं कृत्वा अत्र भूमौ मूलाः फलानि च विधाय तत्र नानावृक्षारोपणं कृत्वा यथा फलानि स्युः तथा कृत्वेत्यर्थः । सुरवर्धकिनः सुराणां देवानां वर्धकिनः तक्ष्णः विश्वकर्मणः अवतारं तज्जं तस्माद्विश्वकर्मणः जातं नलं नलाख्यकपिं अपरान् हरिवरान् कपिश्रेष्ठान् सेतुं बद्धुं दिदेश आज्ञापितवान् ।।१४।।

**भारतश्री–** कृत्वा तत्स्थलं ईरणं ऊषरं कृत्वा छित्वा परिहृत्येत्यर्थः । 'भवेदीरणमूषरम्' इति हलः । यद्वा ईरणं परिहृत्य तत्र मूलफलानि कृत्वेत्यर्थः ।।१४-१६।।

**भावचन्द्रिका–** ईरिणं मरुदेशम् । अन्त्यजाच्च भूतं तत्प्रसिद्धम् । मरुकान्तरनामकम् । वनं कृत्वा विधाय । अत्र वने मूलफलानि च सम्यग्विधायेत्यर्थः । '....मरुदेशे महासुरान् । निषूदयेदयं देव शर... ।।' इत्युक्त्वा 'सीताकान्तप्रसादेन मरुकान्तारनामकम् । वनं तदभवत्पुण्यं फलमूलाम्बुपुष्कलम् ।।' इति संग्रहरामायणे ।। [यु.का.२.४९–५१] ।।१४-५५।।

**अतिविशद–** कृत्वेरणं तदथमूलफलानि च इत्यत्र ईरणं सम्यग्विधाय । अत्र ईरणे फलानि कृत्वेति योज्यम् ।।१४।।

**गूढवाक्यार्थ–** अत्र दक्षिणसमुद्रतीरे तत् प्रसिद्धम् । ईरणं कण्टकतृणं कृत्वा छित्वा । कृति छेदन इति धातोः । सम्यक् फलमूलानि विधायेति सम्बन्धः । ईरणं मरुभूमिं सम्यक् समीचीनभूमिं विधायेति वा ।।

**बध्वोदधौ रघुपतिर्विविधाद्रिकूटैः[1] सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः ।**
**सुग्रीवनीलहनुमत्प्रमुखैरनेकैर्लङ्कां[2] विभीषणदृशाऽविशदाशु [3]दग्धाम् ।।१५।।**

१. अत्र 'विविधाद्रिकूटैः' इति भागवते सूचितं किञ्चिदिव विवृतं नारायणपण्डिताचार्यैः । तथाहि– 'कैलासमङ्गदो गत्वा गृहीत्वा तत्र शूलिना । मानितो रामदासोऽस्मीत्युपपर्वतमाहरत् ।। हिमवन्तं मैन्द एत्य गृहीत्वा तत्र तेन सः । मानितो रामदासोऽस्मीत्युपपर्वतमाहरत् ।। मेरुमुन्मूलयन् देवो हनूमान् ब्रह्मणा ततः । सम्भावितः स्ववीर्येण ह्युपपर्वतमाहरत् ।। सर्वैः स्वस्थानसंस्थैश्च मानिताः सर्ववानराः । देवर्षिभिः परान् आहरन्नमितविक्रमाः ।।' इत्यादि । यु.५५-५९। 'कदाचिद्धनुषा सेतुः कदाचित् विशिखेन च । दार्वादिना कदाचिच्च कल्पे कल्पे व्यवस्थितिः ।।' इति स्कान्दे उमासंहिता.१२अ ।

**वादिराजीया–** कपीन्द्रकरकम्पितभूरुहाः अङ्गेषु स्वावयवस्थानीयेषु प्रदेशेषु येषां तैः । विविधाद्रिकूटैरिति सम्बन्धः । सुग्रीवनीलहनुमत्प्रमुखैस्सह विभीषणदृशा विभीषण एव दृगिव दृक् तद्दर्शितमार्गेणेत्यर्थः । क्रुद्धविभीषणदृशा दग्धां दग्धप्रायामिति वा । यद्वा वैरिभयङ्करचक्षुषा हनुमता दग्धां लङ्कामविशदिति योजना ।।१५-१६।।

**मधुसूदनीया–** ।। **बध्वोदधाविति** ।। सेतुं

'दशयोजनविस्तीर्णं शतयोजनमायतम् । ददृशुर्देवगन्धर्वाः नलसेतुं सुदुष्करम् । [६.२२.७६]
कृतानि प्रथमेनाह्ना योजनानि चतुर्दश । द्वितीयेन तथा चाह्ना योजनानि तु विंशति ।।
अह्ना तृतीयेन तथा योजनानि च तानि तु । त्वरमाणैर्महाकायैरेकविंशतिरेव च ।।
चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि वा । पञ्चमेन तथा चाह्ना प्लवङ्गैः क्षिप्रकारिभिः ।।
योजनानि त्रयोविंशत्सुवेलामधिकृत्य च । सवानरवरश्श्रीमान् विश्वकर्मात्मजो बली ।।
बबन्ध सागरे सेतुं... ।।' इत्यादि रामायणे [६.२२.६८–७३] ।

तत्सेतुरन्तस्समुद्रे वरुणेन धृतः । तदुक्तम्– 'अथ काष्ठतृणं वापि शिला वा क्षिप्यते मयि । सर्वं तद्धारयिष्यामि तेन सेतुर्भविष्यति ।।' इत्यारण्यपर्वणि [२८४.४२] ।।१५-१९।।

**वरदराजीया–** रघुपतिः श्रीरामः कपीन्द्रकरैः कम्पिताः चालिताः भूरुहाः येषु तैः । विविधाद्रिकूटैः विचित्रपर्वतशृङ्गैः उदधौ सेतुं बध्वा सुग्रीवनीलहनुमन्तः प्रमुखं येषां ते तथा तैरनेकैर्बहुभिः कपिभिः सह दग्धां हनूमतेति शेषः । लङ्कां विभीषणदृष्ट्या विभीषणदर्शितमार्गेणेत्यर्थः । आशु अविशत् विवेश । लङ्कासमीपं गतवानिति भावः ।।१५।।

**जनार्दनीया–** कपीन्द्रकरैः कम्पिताः भूरुहाः वृक्षाः । अङ्गेषु प्रदेशेषु इत्यर्थः येषां ते तथा तैः । विविधाश्च ते अद्रिकूटाश्च पर्वतशृङ्गाणि तैः । सेतुं बध्वा, सुग्रीवाद्यैः अनेकैः बहुविधैः कपिभिः सह । विभीषणस्य दृक्दृष्टिः तया । विभीषणदर्शितमार्गेणेत्यर्थः । 'दृक्स्त्री स्याद्दर्शने बुद्धौ नेत्रे द्रष्टरि च त्रिषु' इत्यभिधानात् । दग्धां हनूमतेति शेषः ।।१५।।

---

.. २. 'मृदङ्गाकृतिदुर्गं तु सततं कुलनाशनम् । यथा राक्षसराजस्य लङ्का दुर्गान्विता पुरा ।।' इति कालिका.पु.उ.८४.११५।

३. पूर्वं हनूमता दग्धां मयमाहूय पुनः सम्यक् कृतां लङ्कां ददर्श इत्यर्थः । तथा हि नारायणपण्डिताचार्याः– 'रावणो मयमाहूय गृहहर्म्याणि पूर्ववत् । कारयामास चित्राणि सभां प्राप सभापतिः ।।' इति । अयं च भागवतश्लोकः– ९.८.९८

**अनन्तभट्टीया–** कपीन्द्रकरकम्पितभूरुहाः अङ्गेषु स्वावयवस्थानेषु प्रदेशेषु येषां तैः । विविधाद्रिकूटैरिति सम्बन्धः । सुग्रीवनीलहनुमत्प्रमुखैः सह विभीषणदृशा विभीषण एव दृगिव दृक् तद्दर्शितमार्गेण इत्यर्थः । ...* । विभीषणदृशा दग्धशायामिति वा । यद्वा वैरिभयङ्करचक्षुषा हनुमता दग्धां लङ्कां अविशदिति योजना ।।१५।।

**ताम्रपर्णीया–** कपीन्द्रकरकम्पितभूरुहाङ्गेषु स्वावयवेषु येषां तैः । विविधाद्रिकूटै इत्यर्थः । सुग्रीवनीलहनुमत्प्रमुखैः सह विभीषणदृशा विभीषण एव दृगिव दृक्, तत्प्रदर्शितमार्गेण इति यावत् । लङ्काप्रवेशो नाम तद्बाह्यदेशप्रवेशो विवक्षित इत्यदोषः ।।१५।।

**चट्टी–** रघुपतिः रामः कपीन्द्रकरैः [वरैः] कम्पिताः चलिताः भूरुहाः वृक्षा अङ्गेषु स्वावयवस्थानेषु प्रदेशेषु एषां ते तथा तैः । विविधाश्च ते अद्रिकूटाश्च पर्वतशृङ्गाणि तैः । यद्वा कपीन्द्रकरैः कम्पितानि भूरुहाणां वृक्षाणां अङ्गानि शाखाः येषु तथा तैः । विविधाद्रिकूटैः उदधौ समुद्रे सेतुं बध्वा सुग्रीवनीलहनुमन्तः प्रमुखो येषां ते तथा तैः । अनेकैः बहुभिः सह विभीषणस्य दृक्दृष्टिः तया विभीषणदर्शितमार्गेणेत्यर्थः । दग्धां हनूमतेति शेषः । लङ्कां आशु अविशत् प्रविवेश । तदुक्तम्– 'दशयोजनविस्तीर्णं शतयोजनमायतम् । ददृशुर्देवगन्धर्वाः नलसेतुं सुदुष्करम् ।। [यु.का.२२.७६] कृतानि प्रथमेनाह्ना योजनानि चतुर्दश । द्वितीयेन तथा चाह्ना योजनानि तु विंशति ।। अह्ना तृतीयेन तथा योजनानि च तानि तु । त्वरमाणैर्महाकायैरेकविंशतिरेव च ।। चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि वा । पञ्चमेन तथा चाह्ना प्लवङ्गैः क्षिप्रकारिभिः ।। योजनानि त्रयोविंशत्सुवेलामधिकृत्य च । सवानरवरश्श्रीमान् विश्वकर्मात्मजो बली ।। बबन्ध सागरे सेतुं... ।।' इत्यादि रामायणे [६.२२.६८–७३] । इत्यादि रामायणे । तत्सेतुरन्तस्समुद्रे वरुणेन धृतः । तदुक्तम्– 'अथ काष्ठतृणं वापि शिला वा क्षिप्यते मयि । सर्वं तद्धारयिष्यामि तेन सेतुर्भविष्यति ।' इत्यारण्यपर्वणि [२८४.४२] ।।१५।।

**अतिविशद–** विभीषणदृशाऽविशदाशु दग्धां इत्यत्र विभीषणदर्शितमार्गेणेत्यर्थः । 'दृक् स्त्री स्याद्दर्शने बुद्धौ नेत्रे दृष्टेऽरिवत्कृषु' इत्यभिधानम् । यद्वा विभीषणदृशा भयङ्करदृष्ट्या इत्यर्थः ।।१५-१८।।

**प्रमाणसंग्रह–** ।। **बध्वोदधौ इत्यादि** ।। कृतानि प्रथमेनाह्ना योजनानि चतुर्दश । द्वितीयेन तथा चाह्ना योजनानि तु विंशति ।। अह्ना तृतीयेन तथा योजनानि च तानि तु । त्वरमाणैर्महाकायै-रेकविंशतिरेव च ।। चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि वा । पञ्चमेन तथा चाह्ना प्लवङ्गैः क्षिप्रकारिभिः ।। योजनानि त्रयोविंशत्सुवेलामधिकृत्य च । सवानरवरश्श्रीमान् विश्वकर्मात्मजो बली ।। बबन्ध सागरे सेतुं... ।।' इत्यादि रामायणे [६.२२.६८–७३] । 'दशयोजनविस्तीर्णं शतयोजनमायतम् । ददृशुर्देवगन्धर्वाः नलसेतुं सुदुष्करम् ।।' [यु.का.२२.७६] इत्यादि ।।१५।।

**गूढवाक्यार्थ–** कपीन्द्रकरकम्पितभूरुहाः अङ्गेषु स्वावयवेषु येषां तैः । विविधाद्रिकूटैरित्यर्थः । विभीषणदृशा विभीषण एव दृगिव दृक् तत्प्रदर्शनमार्गेणेत्यर्थः । यद्वा विभीषणदृशा वैरिभयङ्करचक्षुषा .... प्राविशदित्यर्थः । अत्र लङ्काप्रवेशो नाम लङ्काबाह्यप्रवेशो विवक्षितः ॥१५॥

**प्राप्तं निशम्य परमं भुवनैकसारं निःसीमपौरुषमनन्तमसौ दशास्यः ।**
**त्रासाद्विषण्णहृदयो[१] नितरां बभूव कर्तव्यकर्मविषये च विमूढचेताः ॥१६॥**

**व्यासतीर्थीया–** भुवनैकसारमिति भुवनैकसमर्थत्वेऽपि प्रयत्नाभावे कथं तस्मादास इत्यत उक्तम्– निःसीमपौरुषं निर्मर्यादप्रयत्नमिति ॥१६–१९॥

**वरदराजीया–** असौ दशास्यो रावणः पुरं उत्तमं मुख्यबलात्मकं निस्सीमपौरुषं अनन्तपराक्रमं अनन्तं देशतः गुणतश्च परिच्छेदशून्यं रामं प्राप्तमागतं श्रुत्वा त्रासात् भयात् नितरां विषण्णहृदयो बभूव । कर्तव्यकर्मविषयेषु विमूढं विवेकशून्यं चेतो यस्य स तथा । एतादृशोऽपि बभूवेत्यर्थः ॥१६॥

**जनार्दनीया–** भुवने एकसारं केवलं बलस्वरूपम् । निस्सीमं अवधिरहितं, पौरुषं तेजः, सेतुकर्म वा यस्य तम् । 'पौरुषं पुरुषस्योक्तौ भावे कर्मणि तेजसि' इत्यभिधानम् । अत एव परमं उत्तमम् । अत एव अनन्तम् । प्राप्तं स्वसमीपमागतं रामं निशम्य श्रुत्वा, त्रासाद्भयात् नितरां विषण्णं श्रान्तं हृदयं मनो यस्य स तथा बभूव । कर्तव्यानि कर्तुं योग्यानि, तानि च तानि कर्माणि, तेषां विषये । विमूढं स्मृतिरहितमित्यर्थः, चेतश्चित्तं यस्य तादृशोऽपि । चार्तो बभूव ॥१६॥

**अनन्तभट्टीया–** सारशब्देन बलमुच्यते । पौरुषशब्देन प्रयत्न इत्यदोषः ॥१६॥

**ताम्रपर्णीया–** परमं परा मा ज्ञानं यस्य सः परमः तं सर्वज्ञं इत्यर्थः । भुवनैकसारं भुवनेषु एकमेव श्रेष्ठम् । 'रसस्सारो वरश्चेति शब्दाः पर्यायवाचका' इत्यभिधानात् । यद्वा परमं उत्तमं भुवनैकसारं भुवनैकसुन्दरम् । त्रासात् भयात् विषण्णहृदयः । अवसन्नहृदयः दुःखितान्तःकरणः ॥१६–१९॥

**चट्टी–** अथ दशास्यो रावणः भुवनैकसारं केवलं बलस्वरूपं निस्सीमं अवधिरहितं पौरुषं पराक्रमो यस्य तम् । अत एव परमं उत्तमम् । अत एव अनन्तं देशतः कालतः गुणतश्च परिच्छेदशून्यं रामं प्राप्तं आगतं निशम्य श्रुत्वा त्रासाद्भयात् नितरां विषण्णं श्रान्तं हृदयं मनो यस्य स तथा बभूव । कर्तव्यानि कर्तुं योग्यानि च तानि कर्माणि च तेषां विषये विमूढं [स्मृति]मतिरहितमित्यर्थः । चेतश्चित्तं यस्य । 'चित्तं तु चेतो हृदयम्' इत्यभिधानात् तादृशश्च तादृशोऽपि बभूव अभवत् ॥१६॥

**गूढवाक्यार्थ–** भुवनैकसारं भुवनैकसुन्दरम् । त्रासात् भयात् विषण्णहृदयः दुःखितान्तःकरणः ॥

१. राघवस्य बलं ज्ञात्वा चारैस्तदनुजस्य च । वानराणाश्च भीतोऽपि निर्भीरिव दशाननः ॥ इति नृसिंहपुराणे ५२.३४।

**प्रस्थाप्य वालिसुतमेव च राजनीत्यै रामस्तदुक्तवचनेऽप्यमुनागृहीते ।
द्वारो रुरोध स च तत्र उदीर्णसैन्यो रक्षःपतेः पुर उदारगुणः परेशः ॥१७॥**

**वादिराजीया–** राजनीत्यैवेत्येवकारसम्बन्धः । सन्धिवचनं न शृणोतीति प्रागेव जानातीति भावः । वालिसुतं प्रस्थाप्य चेति चशब्दसम्बन्धः ॥१७–१८॥

**वरदराजीया–** रामश्च राजनीत्यर्थमेव वालिसुतमङ्गदं प्रस्थाप्य रावणं प्रतीति शेषः । तेनाङ्गदेनोक्तवचने अमुना रावणेनागृहीते अस्वीकृते सति उदीर्णसैन्यः उत्कृष्टसेनायुक्तो परेशो रामो रक्षःपतेः रावणस्य पुरः पुर्य्याः लङ्कायाः चतस्रो द्वारः चत्वारि द्वाराणि रुरोध आवृणोत् ॥१७॥

**जनार्दनीया–** उदीर्णसैन्यः उत्कृष्टसैन्यः रामः । राजनीत्यर्थमेव वालिसुतं अङ्गदं प्रस्थाप्य प्रेषयित्वा, अमुना रावणेन तेन अङ्गदेन उक्तवचने अगृहीते अनङ्गीकृते सति रक्षःपतेः पुरः पुर्याः चतस्रः द्वाराः चत्वारि द्वाराणि रुरोध रोधितवान् ॥१७॥

**अनन्तभट्टीया–** पुरश्चतस्रो द्वार इति सम्बन्धः ॥१७॥

**चट्टी–** उदीर्णसैन्यः उत्कृष्टसैन्यः उदारगुणः परेषां ब्रह्मादीनां ईशः सः रामः राजनीत्यै एव राजनीत्यर्थमेव न तु सन्धिवचनाय सन्धिवचनं न शृणोतीति प्रागेव जानातीति भावः । वालिसुतं अङ्गदं प्रस्थाप्य प्रेषयित्वा रावणं प्रतीति शेषः । तदुक्तवचने तेन अङ्गदेन उक्तवचने अमुना रावणेन अगृहीते अस्वीकृते सति रक्षःपतेः रावणस्य पुरः पुर्याः चतस्रः द्वाराः चत्वारि द्वाराणि रुरोध च रोधितवान् ॥१७॥

**भारतश्री–** ॥ **राजनीत्यै इति** ॥ अत एव पूर्वं 'सुविस्तृतषड्गुणाय' इत्युक्तम् ॥१७–१८॥

**द्वारां निरोधसमये स दिदेश पुत्रं [1]वारांपतेर्दिशि सुरेश्वरशत्रुमुग्रम् ।
प्राच्यां[2] प्रहस्तमदिशद्दिशि वज्रदंष्ट्रं प्रेताधिपस्य[3] शशिनः [4]स्वयमेव चागात् ॥**

**वरदराजीया–** स रावणो द्वाराणां निरोधसमये प्रतिरोधसमये वारांपतेः वरुणस्य दिशि पश्चिमदिशीत्यर्थः । उग्रं सुरेश्वरशत्रुं इन्द्रजितं पुत्रं दिदेश विनिर्मुक्तवान् । तथा प्राच्यां दिशि प्रहस्तमदिशत् तथा प्रेताधिपतस्य यमस्य दिशि दक्षिणस्यां दिशि वज्रदंष्ट्रमदिशत् । शशिनः चन्द्रस्य दिशि उत्तरदिशि च स्वयं रावण एव अगादित्यर्थः ॥१८॥

---

१. इन्द्रजित् पश्चिमं द्वारं राक्षसैर्बहुभिर्वृतः । नानाप्रहरणैः शूरैरावृतो रावणात्मजः ॥ २. पूर्वं प्रहस्तः सबलो द्वारमासाद्य तिष्ठति । ३. दक्षिणं च महावीर्यौ महापार्श्वमहोदरौ । ४. उत्तरं नगरद्वारं रावणः स्वयमास्थितः ॥ वा.रा ६.३७.११,१०,१३ ॥

**जनार्दनीया–** स रावणः । द्वारां पुरद्वाराणां निरोधसमये सुरेश्वरशत्रुं इन्द्रशत्रुम् । अत एव उग्रं सोढुमशक्यमित्यर्थः । पुत्रं इन्द्रजितं वारांपतेः जलपतेः वरुणस्य दिशि पश्चिमदिशीत्यर्थः, दिदेश । प्रहस्तं प्राच्यां पूर्वदिशि अदिशत् । प्रेतानां अधिपस्य यमस्य दिशि दक्षिणदिशि अदिशत् । शशिनः चन्द्रस्य दिशं प्रति स्वयमेव च अगात् ।।१८।।

**अनन्तभट्टीया–** वारां पतेः वरुणस्य । सुरेशशत्रुं इन्द्रजितम् । प्रेताधिपस्य यमस्य ।।१८–१९।।

**चट्टी–** स रावणः द्वारां पुरद्वाराणां निरोधसमये सुरेश्वरशत्रुं इन्द्रशत्रुम् । अत एव उग्रं सोढुमशक्यं पुत्रं इन्द्रजितं वारांपतेः जलपतेः वरुणस्य दिशि पश्चिमदिशीत्यर्थः । दिदेश । प्राच्यां प्रहस्तं पूर्वदिशि अदिशत् । प्रेतानां अधिपस्य यमस्य दिशि दक्षिणदिशि वज्रदंष्ट्रं च अदिशत् । शशिनः चन्द्रस्य दिशं उत्तरदिशं प्रति स्वयमेव च अगात् ।।१८।।

**विज्ञाय तत्स भगवान्हनुमन्तमेव[1] देवेन्द्रशत्रुविजयाय दिदेश [2]चाशु ।**
**नीलं[3] प्रहस्तनिधनाय च वज्रदंष्ट्रं हन्तुं [4]सुरेन्द्रसुतसूनुमथादिदेश ।।१९।।**

**वादिराजीया–** हनुमदग्रे इन्द्रजित् भीत्या पलायनमेव करोति नतु तस्य वधोऽस्तीति सूचनाय इन्द्रशत्रुविजयायेत्युक्तम् । [प्राच्यां] दक्षिणस्यां दिशि प्रहस्तस्य वज्रदंष्ट्रस्य च वध एव भवतीति भावेन प्रहस्तनिधनाय वज्रदंष्ट्रं हन्तुमिति चोक्तम् ।।१९–२२।।

**वरदराजीया–** स भगवान् रामः तद्रावणस्य कार्यं विज्ञायाशु देवेन्द्रशत्रोः इन्द्रजितो विजयाय हनूमन्तं दिदेश । प्रहस्तनिधनाय प्रहस्तं हन्तुं नीलं दिदेश । अथानन्तरं वज्रदंष्ट्रं हन्तुं सुरेन्द्रसुतस्य वालिनः सूनुमङ्गदं दिदेशेत्यर्थः ।।१९।।

**जनार्दनीया–** विजयाय च विजयार्थमेव । न तु हन्तुमित्यर्थः । सुराणां इन्द्रः पुरन्दरः, तस्य सुतो वाली, तस्य सूनुं पुत्रं अङ्गदम् ।।१९।।

---

१. हनूमान् पश्चिमद्वारं निष्पीड्य पवनात्मजः । प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः ।। ६.३७.२८ ।

२ 'अत्र राक्षसानां वानराणाश्च कामरूपित्वात् वानरैरपि मनुष्यरूपधारणे स्वपरपक्षौ न ज्ञायेते । अतः वानरैः मानुषाकृतिः आहवे नैव धार्या इति श्रीरामकृतः कश्चित्सङ्केतः रामायणादवगम्यते । तथाहि– 'न चैव मानुषं रूपं कार्यं हरिभिराहवे । एषा भवतु नः सञ्ज्ञा युद्धेऽस्मिन् वानरे बले ।। वानरा एव नश्चिह्नं स्वजनेऽस्मिन् भविष्यति । वयं तु मानुषेणैव सप्त योत्स्यामहे परान् ।। अहमेष सह भ्रात्रा लक्ष्मणेन महौजसा । आत्मना पञ्चमश्चायं सखा मम विभीषणः ।।' इति ६.३७.३३-३५

३. पूर्वद्वारं तु लङ्कया नीलो वानरपुङ्गवः । प्रहस्तं प्रतियोद्धा स्यात् वानरैर्बहुभिर्वृतः ।। ३७.२६

४. अङ्गदो वालिपुत्रस्तु बलेन महता वृतः । दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ।।३७.२७

**चट्टी–** सः भगवान् रामः रावणकृत्यं वीक्ष्य अथ देवेन्द्रशत्रोः इन्द्रजितः विजयाय च जेतुमेव न तु हन्तुमित्यर्थः । हनुमदग्रे इन्द्रजित् भीत्या पलायनमेव करोति । नतु तदानीं तस्य वधोऽस्तीति सूचनाय इन्द्रशत्रुविजयाय इत्युक्तम् । आशु हनुमन्तं दिदेश । प्रहस्तनिधनाय प्रहस्तं हन्तु नीलं च दिदेश । अथानन्तरं वज्रदंष्ट्रं हन्तुं सुराणां इन्द्रः पुरन्दरः तस्य सुतो वाली तस्य सूनुं पुत्रं अङ्गदं आदिदेशेत्यर्थः ।।

**भारतश्री–** नीलं प्रहस्तनिधनाय च इत्यत्र चशब्दात् विभीषणमपि आदिशदिति लभ्यते । 'नीलो विभीषण उभौ' इत्युत्तरत्रोक्तेः ।।१९–६०।

**अतिविशद–** नीलं प्रहस्तनिधनाय चेत्यत्र विभीषणेन साकमिति शेषः । अन्यथा 'नीलस्य नैव वशमेति स इत्यमोघशक्त्या विभीषण इमं प्रजहार साकं' इत्यनेन विरोधापत्तेः । 'नीलस्य नैव वशमेति' इति विभीषणोक्त्यैव भगवतः अज्ञानित्वप्राप्तेश्च । अत्रैवं योजना । प्रहस्तनिधनाय नीलं विभीषणं च दिदेशेति । निधनाय चेत्यत्रत्यचशब्द एव ज्ञापकः । नचायं समुच्चायकः । दिदेश चेत्यत्र समुच्चायकस्य विद्यमानत्वात् ।।१९–६५।।

**मध्ये हरीश्वरमधिज्य धनुर्नियुज्य यस्यां स राक्षसपतिस्स्वयमेव तां हि ।**
**उद्दिश्य संस्थित उपात्तशरः सखड्गो देदीप्यमानवपुरुत्तमपूरुषोऽसौ ।।२०।।**

**व्यासतीर्थीया–** ज्यामधिगतमधिज्यं आरोपितं धनु यस्य स तथोक्तः । प्रतिभटदर्शने वैवर्ण्यादिकं लोके दृष्टं तदत्र नास्तीति भावेनोक्तम्– **देदीप्यमानवपुरिति** ।।२०–५२।।

**वेदाङ्गतीर्थीया–** मध्ये सेनामध्ये ।।२०–२२।।

**मधुसूदनीया–** मध्ये रामरावणयोर्मध्ये । राजानं प्रति राज्ञैवाभिमुख्येन स्थातव्यमिति नीतिप्रदर्शनार्थं स्वस्य राज्याऽभिषेकाभावात् अराजत्वेन राक्षसं रावणं प्रत्याभिमुख्येन सुग्रीवं प्रतिक्षिप्य तद्रक्षकत्वेन सुग्रीवपृष्ठदेशे राम आसीदिति सम्बन्धः । यत्तु 'नीलाङ्गदयोर्मध्ये' इत्युभयेषां व्याख्यानं तन्न । नीलस्य प्राग्दिशि सत्वेन अङ्गदस्य दक्षिणदिशि सत्वेन सुग्रीवस्योत्तरदिशि सत्वेन नीलाङ्गदमध्यप्रक्षेपाभावात् । न च सुग्रीवस्योत्तरदिशि सत्वे मानाभावः । 'उत्तरं नगरद्वारमहं सौमित्रिणा सह । विभज्याहं प्रवेक्ष्यामि सबलो यत्र रावणः । वानरेन्द्रश्च बलवान् ऋक्षराजश्च जाम्बवान् । राक्षसेन्द्रानुजश्चैव गुल्मे भवतु मध्यमे ।।' इति रामायणवाक्यात् [५.३७.३१-३२] । 'मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत' [५.४१.४१] इति च । स लक्ष्मणोऽस्य रामस्य सुग्रीवः सह जाम्बवान् । अदूरात् मध्यमे गुल्मे तस्थौ बहुबलानुगः ।।' इति तत्रैव वाक्यान्तराच्च ।।२०–२८।।

**वरदराजीया–** मध्ये नीलाङ्गदयोर्मध्ये हरीश्वरं सुग्रीवं नियुज्य स्वयमधिज्यधनुः अधिज्यमारोपितं धनुः यस्यासौ तथोक्तः एवंभूतः सन् यस्यां दिशि स राक्षसाधिपतिः रावणः तामेव दिशमुद्दिश्य संस्थितोऽभूत् । कथंभूतः सन्धितः शरो येन स तथा । खड्गेन सहितः देदीप्यमानं प्रकाशमानं वपुर्देहो यस्य स तथा उत्तमपूरुषः पुरुषोत्तमोऽसौ रामोऽवस्थित इति भावः ।।२०।।

**जनार्दनीया–** अधिज्यधनुः ज्यां अधिरोपितं अधिज्यं, तादृशं धनुर्यस्य स तथा । उपात्तः तूणाद् गृहीतः शरो येन स तथा । असौ रामः । हरीश्वरं सुग्रीवं मध्ये पूर्वदक्षिणयोर्मध्ये आग्नेयदिशीत्यर्थः । नियुज्य स्वसैन्यमध्ये संस्थाप्येति वा । यस्यां दिशि उत्तरदिशि स रावणः तिष्ठति तां दिशं उद्दिश्य संस्थितः अतिष्ठत् ।।२०।।

**अनन्तभट्टीया–** मध्ये नीलाङ्गदयोरिति शेषः ।।२०–२४।।

**ताम्रपर्णीया–** ।। **मध्ये हरीश्वरमिति** ।। उत्तरदिगवस्थितबहुसेनामध्य इत्यर्थः । तदुक्तं सङ्ग्रहरामायणे– 'कोट्योऽथ षट्त्रिंशदतिप्रसिद्धाः यूथादिनाथा निजयूथयुक्ताः । सुग्रीवमारात् परिवार्य तस्थुः काकुत्स्थयोः पश्चिमतो निषण्णम् ।।' इति [यु.का.४.२२] पश्चिमतः पृष्ठत इत्यर्थः । टीकाकारास्तु नीलाङ्गदयोर्मध्य इत्यर्थमाहुः ।।२०–२२।।

**चट्टी–** अधिगता ज्या यस्य तत् अधिज्यं धनुः यस्य स अधिज्यधनुः । उपात्तशरः उपात्तः तूणाद्गृहीतः शरो येन स तथा । खड्गेन सहितः देदीप्यमानं प्रकाशमानं वपुः देहो यस्य स तथा । उत्तमपौरुषः असौ रामः मध्ये रामरावणयोर्मध्ये राजानं प्रतीक्ष्यैव आभिमुख्येन स्थातव्यमिति प्रदर्शनार्थं स्वस्य राज्याभिषेकाभावात् अराजत्वेन राक्षसराजं रावणं प्रत्याभिमुख्येन सुग्रीवं प्रक्षिप्य, तद्रक्षकत्वेन सुग्रीवपृष्ठदेशे राम आसीदिति भावः । 'नीलाङ्गदयोः मध्ये आग्नेयदिशि सुग्रीवं नियुज्य' इति केचिदाहुः । तद्व्याख्यानं सुग्रीवस्य उत्तरदिक्स्थितत्वकथनरामायणवाक्यविरुद्धम् । तथाहि– 'उत्तरं नगरद्वारमहं सौमित्रिणा सह । विभज्याहं प्रवेक्ष्यामि सबलो यत्र रावणः । वानरेन्द्रश्च बलवान् ऋक्षराजश्च जाम्बवान् । राक्षसेन्द्रानुजश्चैव गुल्मे भवतु मध्यमे ।।' इति रामायणवाक्यात् । 'मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत्' [यु.का.४१.४१] इति च । स लक्ष्मणोऽस्य रामस्य सुग्रीवः सह जाम्बवान् । अदूरात् मध्यमे गुल्मे तस्थौ बहुबलानुगः ।।' इति च । तत्रैव रामरावणयोर्मध्ये हरीश्वरं सुग्रीवं नियुज्य यस्यां दिशि स राक्षसपतिः रावणः तिष्ठति तामेवोत्तरां दिशं उद्दिश्य संस्थितः अतिष्ठत् ।।२०।।

**प्रमाणसंग्रह–** ।। **मध्ये हरीश्वरमिति** ।। सेना मध्ये । 'उत्तरं नगरद्वारमहं सौमित्रिणा सह । विभज्याहं प्रवेक्ष्यामि सबलो यत्र रावणः । वानरेन्द्रश्च बलवान् ऋक्षराजश्च जाम्बवान् । राक्षसेन्द्रानुजश्चैव गुल्मे भवतु मध्यमे ।।' इति रामायणवाक्यात् । 'मध्यमे च स्वयं गुल्मे सुग्रीवः

समतिष्ठत ।।' [यु.का.४१.४१] इति च । स लक्ष्मणोऽस्य रामस्य सुग्रीवः सह जाम्बवान् । अदूरात् मध्यमे गुल्मे तस्थौ बहुबलानुगः ।।' इत्यादि च ।।२०।।

**गूढवाक्यार्थ–** ।। **मध्ये हरिश्वरमिति** ।। काकुस्थयोः पृष्ठभागे उत्तरस्यां...त्यर्थः । उक्तश्चैतत् संग्रहे– 'कोट्योऽथ षट्त्रिंशदतिप्रसिद्धाः यूथादिनाथा निजयूथयुक्ताः । सुग्रीवमारात् परिवार्य तस्थुः काकुस्थयोः पश्चिमतो निषण्णम् ।।' इति । पश्चिमतः पृष्ठतः इत्यर्थः । अधिज्यधनुः अधि अध्यारोपिता ज्या यस्य तदधिज्यं अधिज्यं धनुर्यस्य स अधिज्यधनुः रामः ।।२०।।

**विद्रावितो [१]हनुमतेन्द्रजिदाशु हस्तं तस्य प्रपन्न इव वीर्यममुष्य जानन् ।**
**नीलो विभीषण उभौ शिलया च शक्त्या सश्चक्रतुर्यमवशं गमितं प्रहस्तम् ।।**

**वरदराजीया–** अमुष्य हनुमतो वीर्यं पराक्रमं जानन् इन्द्रजित् तस्य हनूमतो हस्तं प्रपन्न इव प्राप्त इव हनुमता आशु विद्रावितोऽभूत् । नीलो विभीषणश्चोभौ यथाक्रमं शिलया शक्त्या आयुधेन च प्रहस्तं यमस्य मृत्योः वशगतं प्राप्तं सश्चक्रतुः । प्रहस्तो नीलस्यैव वशं नैतीति नीलेन साकं विभीषणोऽपि एनं प्रहस्तं शक्त्या प्रजहार तताडेति भावः ।।२१।।

**जनार्दनीया–** हनूमता । अमुष्य हनुमतः वीर्यं जानन् । लङ्कादाहसमय इति द्रष्टव्यम् । तस्य हनूमतः हस्तं प्रपन्न इव प्राप्त इव भूत्वा, इन्द्रजित् आशु विद्रावितः पलायितोऽभूदित्यर्थः । नीलः शिलया । विभीषणः शक्त्या । गमितं प्राप्तम् ।।२१।।

---

१. अत्र रामायणे चतुश्चत्वारिंशे सर्गे यदङ्गद एव रावणिं युद्धात् विद्रावयामास । नतु हनूमान् इति श्रूयते । तदेतत् पुंव्यत्यासेनेति भाव्यम् । भवितव्यमपि तेन तथैव । अन्यथा पूर्वापरकथायाः अन्वयानुपपत्तेः । पूर्वत्र रामरावणौ प्रतिद्वारं कपिराक्षसौ न्ययुञ्जाताम् । तत्र रावणः पूर्वादिदिक्षु क्रमात् प्रहस्त-महोदरमहापार्श्व-इन्द्रजितः नियोज्य उदीच्यां स्वयमास्थितः । ततः श्रीरामः पूर्वादिषु नीलं-अङ्गदं-हनूमन्तं क्रमात् प्रहस्त-वज्रदंष्ट्र-इन्द्रजिदादीन् प्रतियोधनाय न्ययोजयत् । उदीच्यां रावणपुरतः स्वयमतिष्ठत् । तथाच पूर्वोक्तप्रकारेण द्वन्द्वयुद्धे रामायणानुसारेणैव इन्द्रजिता साकं हनूमानेव युद्ध्येत् । नतु अङ्गदः । वज्रदंष्ट्ररोधनाय दक्षिणदिशि स्थितः अङ्गदः कथं प्रतीच्यां वर्तमानं इन्द्रजितं द्वन्द्वयुद्धे विद्रावयति? अतः वाल्मीकिः पुमांसं व्यत्यस्य कथयति इत्येवमिह निर्णेतव्यम् । अत्र प्रहस्तः रावणप्रथममातुलः । यथाहुरार्षे- [७.५] सुमालिनोऽपि भार्यासीत् पूर्णचन्द्रनिभानना । नाम्ना केतुमती राम प्राणेभ्योऽपि गरीयसी ।।३८।। प्रहस्तोऽकम्पनश्चैव विकटः कालिकामुखः । धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महाबलः ।।४०।। संह्रादिः प्रघसश्चैव भासकर्णश्च राक्षसः । राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता ।।४१।। कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः ।।४२।।

**चट्टी–** अमुष्य हनुमतः वीर्यं जानन् लङ्कादहनसमय इति द्रष्टव्यम् । इन्द्रजित् तस्य हनूमतः हस्तप्रपन्न इव प्राप्त इव भूत्वा । आशु हनुमता विद्रावितः पलायितोऽभूदित्यर्थः । नीलविभीषणश्चेत्युभौ यथाक्रमं शिलया शक्त्याख्यायुधेन च प्रहस्तं यमस्य वशं गमितं प्राप्तं सञ्चक्रतुः ।।२१।।

**नीलस्य[१] नैव वशमेति स इत्यमोघशक्त्या[२] विभीषण इमं प्रजहार साकम् ।**
**तस्मिन् हतेऽङ्गद उपेत्य जघान वज्रदंष्ट्रं निपात्य भुवि [३]शीर्षममुष्य मृद्नन् ।।**

**वरदराजीया–** तस्मिन् प्रहस्ते हते सति अङ्गदो वज्रदंष्ट्रं जघान हतवान् । किं कुर्वन् भुवि विनिपात्य पातयित्वा अमुष्य वज्रदंष्ट्रस्य शीर्ष्णं शिरो मृद्नन् मर्दयन् ।।२२।।

**जनार्दनीया–** विभीषणः प्रहस्तः नीलस्य वशं नैति प्राप्नोतीत्यभिप्रायेण साकं नीलेन सह अमोघशक्त्या इमं प्रहस्तं प्रजहार ताडितवानित्यर्थः । तस्मिन् प्रहस्ते हते सति । अङ्गदः वज्रदंष्ट्रं उपेत्य, भुवि विनिपात्य, अमुष्य वज्रदंष्ट्रस्य शीर्षं मृद्नन् मर्दयन् जघान ।।२२।।

**चट्टी–** सः प्रहस्तः नीलस्यैव वशं नैतीति विभीषणः नैतीति नीलेन साकं इमं प्रहस्तं अमोघशक्त्या प्रजहार तताड । तस्मिन् प्रहस्ते हते सति अङ्गदः वज्रदंष्ट्रं उपेत्य भुवि निपात्य पातयित्वा अमुष्य वज्रदंष्ट्रस्य शीर्षं मृद्नन् मर्दयन् जघान ।।२२।।

---

१. प्रहस्तो हि रुद्रवरदर्पितः । तथाहि रामायणे- 'वरप्रदानादपि गर्विता भृशं क्रतुक्रियाणां प्रशमंकरा सदा' । अतः अग्न्यवतारो नीलः कथं तं हन्तुं प्रभवति । विभीषणस्तु प्राप्तब्रह्मवरः अतो नीलादपि बलीयान् । यथाहुः रामायणे- [७.१०]'अशिक्षितश्च ब्रह्मास्त्रं भगवन् प्रतिभातु मे ।'३१,'नाधर्मे जायते बुद्धिः अमरत्वं ददामि ते' इत्यादि ३५ । राम सेनापतिस्तस्य प्रहस्तो यदि ते श्रुतः । कैलासे येन समरे मणिभद्रः पराजितः ।। इति[६.१९.११] प्रहस्तस्य सामर्थ्यं श्रूयते ।

२. तदिदं शक्त्यायुधस्वरूपं प्राचीनाः पठन्ति- शक्तिर्हस्तद्वयोत्सेधा तिर्यग्गतिरनाकुला । तीक्ष्णजिह्वाग्रनखरा घण्टानादभयङ्करी ।। व्यादितास्यातिनीला च शत्रुशोणितरञ्जिता । आन्त्रमालापरिक्षिप्ता सिंहास्या घोरदर्शना ।। बृहत्सरुर्दूरगमा पर्वतेन्द्रविदारिणी । भुजद्वयप्रेरणीया युद्धे जयविधायिनी ।। तत्प्रयोगप्रकारस्तु- तोलनं भ्रामणं चैव वल्गनं नामनं तथा । मोचनं भेदनश्चेति षण्मार्गाः शक्तिसंश्रिताः ।।

३. निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः । जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः ।।[६.५४.३४]इत्यार्षे । निर्णये सङ्ग्रहे च - पदा शिरसः मर्दनं कृत्वा जघानेत्युच्यते । 'निपात्य भुवि शीर्षममुष्य मृद्नन्' इति 'यमक्षयं निनायास्य शिरोमर्दननिश्चयः' इति । स्कान्दे तु [ब्रा.खं.से.मा.४४.३४]'वज्रदंष्ट्रं समवधीत् विश्वकर्मसुतो नलः' इति व्यत्यासेनोच्यते ।

**सर्वेषु[1] तेषु निहतेषु दिदेश [2]धूम्रनेत्रं स राक्षसपतिः स च पश्चिमेन ।**
**द्वारेण मारुतसुतं [3]समुपेत्य दग्धो गुप्तोऽपि शूलिवचनेन दुरन्तशक्तिम् ।।२३।।**

**वेदाङ्गतीर्थीया–** तेष्विति बहुवचनं प्रहस्तवज्रदंष्ट्रतदनुगापेक्षया ।।२३-२५।।

**वादिराजीया–** यद्यपि प्रहस्तवज्रदंष्ट्रयोरुभयोर्वधः प्राक् निरूपितः तथाऽपि तयोस्सहायेन आगतबहुसैन्यवधं च अनुवादव्याजेन सूचयितुं सर्वेषु तेषु निहतेष्वित्युक्तम् । दग्ध इति वदता पुरदाहाय आनीतोल्मुकेन ताडने सति दाहं प्राप्य मृत इति सूचितम् ।।२३-२५।।

**वरदराजीया–** तेषु सर्वेषु राक्षसेषु निहतेषु सः राक्षसपतिः रावणो धूम्रनेत्रं दिदेश । स च धूम्रनेत्रः पश्चिमेन द्वारेण मारुतिसुतं हनूमन्तं उपेत्य शूलिवचनेन रुद्रवचनेन वररूपेण गुप्तो रक्षितोऽपि दग्धो भस्मीभूतोऽभूत् ।।२३।।

**जनार्दनीया–** स च धूम्रनेत्रः । पश्चिमेन द्वारेण शूलिनः रुद्रस्य । वचनेन गुप्तोऽपि रक्षितोऽपि । दग्धः भस्मीबभूव ।।२३।।

**ताम्रपर्णीया–** ।। **सर्वेषु तेष्विति** ।। यद्यपि प्रहस्तवज्रजंष्ट्रयोरुभयोरेव वधो प्राङ् निरूपितः । तथापि तयोः सहायत्वेनागतबहुसैन्यवधमनुवादव्याजेन दर्शयितुं सर्वेषु इत्युक्तं ज्ञेयम् ।।२३-२५।।

**चट्टी–** यद्यपि प्रहस्तवज्रदंष्ट्रयोः उभयोरेव वधः प्राङ्निरूपितः तथापि तयोः सहायेनागतबहुसैन्यवधं चानुवादव्याजेन सूचयितुं सर्वेषु तेषु निहतेष्वित्युक्तम् । तेषु सर्वेषु राक्षसेषु निहतेषु स राक्षसपतिः रावणः धूम्रनेत्रं दिदेश । स च धूम्रनेत्रः पश्चिमेन द्वारेण दुरन्तशक्तिं मारुतसुतं हनुमन्तं उपेत्य शूलिवचनेन रुद्रवचनेन वररूपेण गुप्तो रक्षितोऽपि दग्धः भस्मीबभूव ।।२३।।

---

१. प्रजङ्घजम्बुमालिप्रतपनतापनमित्रघविरूपाक्षप्रहस्तवज्रमुष्टिनिकुम्भसालविद्युन्मालीत्येतेषु सर्वेषु क्रमात् सम्पाति-हनूमान्नलगजविभीषणलक्ष्मणसुग्रीवमैन्दनीलविविदसुषेणैः निहतेषु इत्यर्थो सङ्ग्रहरामायणादवगन्तव्यः । [६.५.६-१३] उपरिष्टादुक्तः धूम्रनेत्रः रावणस्य पञ्चममातुलः । प्रमाणं तूक्तं पुरस्तात् २१ श्लोकव्याख्याने ।

२. अत्र उपर्युक्तः धूम्रनेत्रः रावणमातुलः । तस्य रुद्रवरसद्भावे सम्मतिः स्कन्दपुराणे दृश्यते । तथाहि– 'एवं शिवार्चनरताः सर्वे ते दैत्यदानवाः । राक्षसा एव ते सर्वे शिवपूजान्वितास्सदा ।। हेतिः प्रहेतिः संयातिः विघसः प्रघसस्तथा । विद्युज्जिह्वस्तीक्ष्णदंष्ट्रो धूम्राक्षो भीमविक्रमः ।। माली चैव सुमाली च माल्यवानतिभीषणः । विद्युत्केशस्तडिज्जिह्वः रावणश्च महाबलः ।। कुम्भकर्णो दुराधर्षो वेगदर्शी प्रतापवान् । एते हि राक्षसा श्रेष्ठाः शिवार्चनरतास्सदा ।। लिङ्गमभ्यर्च्य च सदा सिद्धिं प्राप्ताः पुरा तु ते । ...वरान्प्रायच्छत तदा सर्वेषामपि दुर्लभान् ।।' इति । स्कन्द.माहे.८.२८–३४।

३. हसन् वै पश्चिमद्वारात् हनूमान् यत्र तिष्ठति । रथप्रवरमास्थाय खरयुक्तं खरस्वनम् ।। इत्यार्षे [६.५१.३०]

**गूढवाक्यार्थ–** ।। **सर्वेषु तेष्विति** ।। यद्यपि प्रहस्तवज्रदंष्ट्रयोरुभयोरेव प्राक् निरूपितः । तथापि तयोः सहायत्वेन आगतबहुसैन्यवधमनुवादव्याजेन दर्शयितुं सर्वेष्वित्युक्तमित्यवगन्तव्यम् ।।२३।।

**अकम्पनोऽपि[१] राक्षसो निशाचरेशचोदितः ।**
**उमापतेर्वरोद्धतः क्षणाद्धतो हनूमता ।।२४।।**

**वरदराजीया–** निशाचरेशेन रावणेन चोदितो युद्धार्थं गच्छेति चोदितः उमापतेः रुद्रस्य वरेणोद्धतो गर्वितो अकम्पनो राक्षसोऽपि क्षणात् क्षणमात्रेण हनूमता हतोऽभूत् ।।२४।।

**जनार्दनीया–** चोदितः प्रेरितः ।।२४।।

**चट्टी–** उमापतेः रुद्रस्य वरेणोद्धतो गर्वितः निशाचरेण रावणेन चोदितः युद्धार्थं गच्छेति प्रेरितः अकम्पनः तन्नामकः राक्षसोऽपि क्षणात् क्षणमात्रेण हनुमता हतः ।।२४।।

**अथास्त्रसम्प्रदीपितैः समस्तशो महोल्मुकैः ।**
**रघुप्रवीरचोदिताः[२] पुरं निशि स्वदाहयन् ।।२५।।**

**वरदराजीया–** अथानन्तरं समस्तशः सर्वे वानराः रघुवीरेण चोदिताः आशु वेगेन अस्त्रसम्प्रदीपितैः सम्यक् प्रज्वलितैः महद्भिः उल्मुकैः अलातैः निशि रात्रौ पुरीं लङ्कां स्वदाहयन् निश्शेषतया ददहुः ।।२५।।

**जनार्दनीया–** रात्रौ प्रवृत्तां कथां आह– **अथेति** ।। **अस्त्रेण** अग्न्यास्त्रेण सम्प्रदीपितैः प्रज्वलितैः महद्भिः स्थूलैः उल्मुखैः अलातैः । समस्तशः सर्वे हरयः पुरं लङ्कां स्वदाहयन् अदहन् ।।२५।।

**अनन्तभट्टीया–** अस्त्रदीपितैः आग्नेयास्त्रजातज्वालैः ।।२५।।

---

१. अयमकम्पनः रावणस्य द्वितीयमातुलः । तत्र ज्ञापकं तु २१श्लोकव्याख्याने द्रष्टव्यम् । नहि कम्पयितुं शक्यः सुरैरपि महामृधे । अकम्पनस्ततस्तेषां आदित्य इव तेजसा ।। इति वा.रा.५५.८ 'अकम्पनश्च न्यहनत् कुमुदो वानरर्षभः' इति [ब्रा.खं.१से.मा.४४.३४]स्कान्दवचनम्, अकम्पनं प्रहस्तश्च युद्धयन्तं नील आवधीत्' इत्याग्नेयवचनञ्च[१०.८] पुंव्यत्यासकथनपरम् । द्वादश्यामाञ्जनेयेन धूम्राक्षस्य वधः कृतः । त्रयोदश्यां तु तेनैव निहतोऽकम्पनो रणे ।। इति तत्रैव उत्तरत्र[ब्रा.खं.२ध.मा.५८-५९]तथा आर्षेऽपि 'स वृक्षेण हतस्तेन सक्रोधेन महात्मना । राक्षसो वानरेन्द्रेण पपात च ममार च ।।'६.५६.३० इति बहुवाक्यात् अयं पुंव्यत्यासो ज्ञातव्यः । 'व्यत्यासास्त्वेवमाद्याश्च'...'दृश्यन्ते भारताद्येषु'...'ज्ञायन्ते बहुभिर्वाक्यैः'[म.भा.ता.नि.९.१३५-१३६]इति निर्णयवाक्येषु अयं प्रकारः प्रकटितः ।

२. रामायणे [७५.१-२०] सुग्रीवप्रेरितो हनूमान्, नारसिंहे[५२.७२-७४] जाम्बवत्प्रेरितः हनूमान् पुरं दाहयामास इत्युच्यते । तत्तु व्यत्यासपरं इति भाव्यम् ।

**चट्टी–** अथ अनन्तरम् । समस्तशः सर्वे वानराः रघुप्रवीरेण श्रीरामेण चोदिताः प्रेरितास्सन्तः आग्नेयास्त्रेण सम्प्रदीपितैः महद्भिः स्थूलैः उल्मुखैः अलातैः निशि रात्रौ पुरीं लङ्कां स्वदाहयन् निश्शेषतया अदहन् ।।२५।।

**गूढवाक्यार्थ–** उल्मुकैरलातैः ।।२५।।

**ततस्तौ [1]निकुम्भोऽथ कुम्भश्च कोपात् प्रदिष्टौ दशास्येन कुम्भश्रुतेर्हि ।**
**सुतौ सुप्रहृष्टौ रणायाभियातौ कपींस्तान् बहिः सर्वशो [2]यापयित्वा ।।२६।।**

**वेदाङ्गतीर्थीया–** कुम्भश्रुतेः कुम्भकर्णस्य ।।२६–३५।।

**वादिराजीया–** ततः अकम्पनवधानन्तरं निकुम्भः अथ तदनन्तरमुत्पन्नः कुम्भश्चेति द्वौ प्रसिद्धौ कुम्भश्रुतेः कुम्भकर्णस्य सुताविति योग्यपदाध्याहारेण योजना ।।२६।।

**वरदराजीया–** ततस्तदनन्तरं तौ प्रसिद्धौ निकुम्भोऽथ कुम्भश्चोभौ कुम्भश्रुतेः कुम्भकर्णस्य सुतौ कोपाद्दशास्येन रावणेन प्रदिष्टौ युद्धाय प्रेषितौ प्रहृष्टौ हर्षं प्राप्तौ बहुकालं युद्धस्यापेक्षितत्वात् रणायाभियातौ प्राप्तौ । किं कृत्वा सर्वशः सर्वान् कपीन् बहिर्यापयित्वा विद्राव्य ।।२६।।

**जनार्दनीया–** ततः दशास्येन कोपात् पुरदाहजकोपनिमित्तात् प्रदिष्टौ आज्ञापितौ कुम्भश्रुतेः कुम्भकर्णस्य सुतौ सुप्रहृष्टौ युद्धं प्राप्तमिति अतिहर्षितौ । निकुम्भः अथ कुम्भश्चेति तौ प्रसिद्धौ सर्वशः सर्वान् तान् कपीन् बहिः प्रकारात् बहिः यापयित्वा निःसार्य बहिःकृत्वेत्यर्थः । रणाय अभियातौ अभिप्राप्तौ ।।२६।।

**अनन्तभट्टीया–** यातयित्वा विद्राव्य ।।२६–३०।।

**ताम्रपर्णीया–** ।। **तत इति** ।। अकम्पनवधानन्तरम् । निकुम्भः अथ तदनन्तरं उत्पन्नः कुम्भश्चेति प्रसिद्धो । कुम्भश्रुतेः कुम्भकर्णस्य सुतौ इति योजना ।।२६–२८।।

---

१. 'जगामाभिमुखी सा तु कुम्भकर्णात्मजो यतः । आपतन्तीं च वेगेन कुम्भस्तां सान्त्वयच्चमूम् ।।'६.७६.३७ ।। 'न रावणो नातिबलास्त्रवीर्यो न कुम्भकर्णस्य सुतो निकुम्भः' इति रामायणे [६.१४.१५] इत्यार्षवाक्यात् कुम्भनिकुम्भौ कुम्भकर्णसुतौ इति ज्ञायते । तत्र कुम्भः अग्रजः निकुम्भः अनुजः । यदाहुः सङ्ग्रहे- 'मारुतेर्मुष्टिपिष्टोऽथ मूर्च्छितः कुम्भसोदरः' इति ।

२. 'यातयित्वा' इति अनन्तभट्टपाठः ।

**चट्टी—** ततः पुरदाहानन्तरं दशाननेन रावणेन कोपात् प्रदिष्टौ युद्धाय प्रेषितौ निकुम्भः कुम्भश्चेति तौ प्रसिद्धौ कुम्भकर्णस्य सुतौ सुप्रहृष्टौ युद्धं प्राप्तमिति अतिहर्षितौ सर्वशः सर्वान् तान् कपीन् बहिः प्राकारात् बहिः यापयित्वा निःसार्य बहिःकृत्वेत्यर्थः । रणाय अभियातौ अभिप्राप्तौ ।।२६।।

**गूढवाक्यार्थ—** ततः अकम्पनवधानन्तरम् ।।२६।।

**स कुम्भो विधातुः सुतं तारनीलौ नळं चाश्विपुत्रौ जिगायाङ्गदं च ।**
**सुयुद्धं च कृत्वा दिनेशात्मजेन [1]प्रणीतो यमस्याऽशु लोकं सुपापः ।।२७।।**

**वादिराजीया—** अश्विपुत्रौ मैन्दविविदौ ।।२७–२८।।

**वरदराजीया—** तयोर्मध्ये स कुम्भः विधातुः सुतं जाम्बवन्तं तारनीलौ अश्विपुत्रौ मैन्दविविदौ अङ्गदश्चैतान् सर्वान् जिगाय । दिनेशस्य सूर्यात्मजेन सुग्रीवेण सह सुयुद्धं अतियुद्धं च कृत्वा तेनैव सुपापो अत्यन्तपापस्वरूपो यमस्य लोकमाशु प्रणीतः प्रापितः ।।२७।।

**जनार्दनीया—** विधातुः सुतं जाम्बवन्तम् । दिनेशस्य सूर्यस्य आत्मजेन सुग्रीवेण सुयुद्धं कृत्वा, दिनेशात्मजेन आशु यमस्य लोकं प्रणीतः प्रापितः ।।२७।।

**चट्टी—** तयोः मध्ये सः कुम्भो विधातुः सुतं जाम्बवन्तं तारनीलौ अश्विपुत्रौ विविदमैन्दौ अङ्गदश्च इत्येतान् सर्वान् जिगाय । दिनेशस्य सूर्यस्य आत्मजेन सुग्रीवेण सुयुद्धं च कृत्वा तेनैव अत्यन्तपापस्वरूपः आशु यमस्य लोकं प्रणीतः प्रापितः ।।२७।।

**ततो निकुम्भोऽद्रिवरप्रदारणं महान्तमुग्रं [2]परिघं प्रगृह्य ।**
**ससार सूर्यात्मजमाशु भीतः स पुप्लुवे पश्चिमतो धनुःशतम् ।।२८।।**

**वरदराजीया—** ततः कुम्भमरणानन्तरं निकुम्भो महान्तं स्थूलं उग्रं तीक्ष्णं अद्रिवरान् पर्वतश्रेष्ठान् प्रदारयतीति तथा एतादृशं परिघं प्रगृह्य सूर्यात्मजं प्रति ससार प्राप्तवान् । स सुग्रीवो भीतः सन् पश्चिमतः पृष्ठतः धनुःशतं गणनया धनुःशतपर्याप्तदेशं पुप्लुवे उत्पपात ।।२८।।

---

१. स मुष्टिं पातयामास कुम्भस्योरसि वीर्यवान् । स तु तेन प्रहारेण विह्वलो भृशपीडितः ।। निपपात तदा कुम्भो गतार्चिरिव पावकः ।। ६.७६.९०-९१

२. परिघः लोहबद्धलगुडविशेषः इति शब्दकल्पद्रुमे ।

**जनार्दनीया–** अद्रिवरान् पर्वतश्रेष्ठान् प्रदारयति विदारयतीति तथा तम् । महान्तं स्थूलम् । उग्रं दारुणम् । परिघं मुसलाकारं लोहबन्धरहितम् परिघाख्यायुधं प्रगृह्य, सूर्यात्मजं ससार प्राप । सुग्रीवः भीतः सन् पश्चिमतः पृष्ठतः धनुःशतं शतधनुःपरिमितदेशं पुप्लुवे । 'चतुर्हस्तैस्तु दण्डकः । धनुर्द्वादशहस्तैस्तु' इत्यभिधानम् ।।२८।।

**ताम्रपर्णीया–** पश्चिमतः पृष्ठभागतः ।।२८–४३।।

**चट्टी–** ततः कुम्भमरणानन्तरं निकुम्भो महान्तं स्थूलं उग्रं तीक्ष्णं अद्रिवरान् पर्वतश्रेष्ठान् प्रदारयति विदारयतीति तथा तं परिघं प्रगृह्य सूर्यात्मजं ससार प्राप । सः सुग्रीवः भीतः सन् पश्चिमतः पृष्ठतः धनुःशतं शतधनुःपरिमितदेशं पुप्लुवे उत्पपात ।।२८।।

**गूढवाक्यार्थ–** धनुःशतं धनुःशतपर्याप्तदेशम् ।।२८।।

**तं[१] भ्रामयत्याशु भुजेन वीरे भ्रान्ता दिशो द्यौश्च [२]सचन्द्रसूर्याः ।**
**सुराश्च तस्योरुबलं वरं च शर्वोद्भवं वीक्ष्य विषेदुरीषत् ।।२९।।**

**वादिराजीया–** दिशः दिगभिमानिन्यो देव्यश्च द्यौः दिवोभिमानिनी देवी भ्रान्ताः इतस्ततः भ्रमणं चक्रुः ।।२९–३०।।

**मधुसूदनीया–** सचन्द्रसूर्यादिशः द्यौश्च भ्रान्ता इव इत्यर्थः । तदुक्तम्– 'सह चैवामरावत्या सर्वैश्च भवनैस्सह । सताराग्रहनक्षत्रं सचन्द्रं सनवग्रहम् । निकुम्भपरिघात्तूर्णं भ्रमतीव नभस्थलम् ।।' [६.७७.८] इति रामायणे ।।२९–३०।।

**वरदराजीया–** आशु वेगेन वीरे तं परिघं भुजेन भ्रामयति सति दिशो दशदिशो द्यौश्चेति सर्वे चन्द्रसूर्यसहिता भ्रान्ताः परिभ्रमणं प्राप्ताः । 'सचन्द्रसूर्या' इति क्वचित्पाठः । तत्र सचन्द्रसूर्या द्यौः दिशश्च भ्रान्ता इत्यर्थः । सुरा देवाश्च तस्य निकुम्भस्य उरु उत्कृष्टं बलं तथा शर्वोद्भवं रुद्रप्राप्तं वरं च वीक्ष्य ईषत् किञ्चित् विषेदुः विषादं प्राप्तवन्तः । चिन्तां प्रापुरिति भावः ।।२९।।

**जनार्दनीया–** वीरे निकुम्भे । तं परिघं भ्रामयति सति । चन्द्रसूर्याभ्यां सहिताः दिशः । द्यौश्च अन्तरिक्षं भ्रान्ताः । सुराः तस्य निकुम्भस्य उरुबलं शर्वोद्भवं रुद्रसम्भवं वरं च वीक्ष्य, ईषत् विषेदुः विषादं प्रापुरित्यर्थः ।।२९।।

---

१. परिघाग्रेण पुस्फोट वातग्रन्थिर्महात्मनः । प्रजज्वाल सघोषश्च विधूम इव पावकः ।। वा.रा.६.७७.७ ।

२. 'सचन्द्रसूर्या' इति पाठान्तरं वरदराजीये ।

**ताम्रपर्णीया–** ।। भ्रान्ताः दिश इति ।। ननु द्युलोकस्य चन्द्रसूर्ययोः भ्रमणसम्भवेऽपि अव्याकृतात्मानां दिशां कथं भ्रमणं इति चेत् । अत्र केचित् 'दिक्शब्देन तदभिमानिदेवताः विवक्षिताः । द्युशब्देनापि अभिमानिन्यो विवक्षिता' इत्याहुः । अन्ये तु 'दिक्शब्देन दिक्षु गताः ग्रामपुरपर्वतवनादयो विवक्षिताः' इत्याहुः ।।२९–४३।।

**चट्टी–** वीरे निकुम्भे तं परिघं आशु वेगेन भुजेन भ्रामयति सति चन्द्रसूर्याभ्यां सहिताः दिशः द्यौश्च अन्तरिक्षं भ्रान्ताः इव परिभ्रमणं प्रापिता इव । तदुक्तम्– 'सह चैवामरावत्या सर्वैश्च भवनैस्सह । सतारग्रहनक्षत्रं सचन्द्रं सनवग्रहम् । निकुम्भपरिघात्तूर्णं भ्रमतीव नभस्थलम् ।।' इति रामायणे । सुराः देवाश्च तस्य निकुम्भस्य उरु उत्कृष्टं बलं शर्वोद्भवं रुद्रादाप्तं वरं च वीक्ष्य ईषत् किञ्चित् विषेदुः विषादं प्राप्तवन्तः चिन्तां प्रापुरिति भावः ।।२९।।

**प्रमाणसंग्रह–** ।। **भ्रान्ता दिशो द्यौश्च सचन्द्रतारेति** ।। भ्रान्ता इवेत्यर्थः । 'सह चैवामरावत्या सर्वैश्च भवनैस्सह । सतारग्रहनक्षत्रं सचन्द्रं सनवग्रहम् । निकुम्भपरिघात्तूर्णं भ्रमतीव नभस्थलम् ।।' इत्यादि रामायणे ।।२९।।

**गूढवाक्यार्थ–** भ्रान्ताः दिशाः । ननु द्युलोकस्य चन्द्रसूर्ययोर्भ्रमणसम्भवेऽपि अव्याकृताकाश-स्वरूपाणां दिशां कथं भ्रमणमिति चेत् दिक्शब्देन तदभिमानिन्यो देवता वा । दिक्षु गताः ग्रामपुरपर्वतवनादयो वा विवक्षिताःइत्याहुः ।।२९।।

**अनन्यसाध्यं[१] तमथो निरीक्ष्य समुत्पपाताशु पुरोऽस्य मारुतिः ।**
**प्रकाश्य बाह्वन्तरं आह चैनं किमेभिरत्र प्रहराऽयुधं ते ।।३०।।**

**वरदराजीया–** अथानन्तरं अनन्यसाध्यं अन्येन हन्तुं साध्यो न भवतीत्यनन्यसाध्यः तन्निरीक्ष्य दृष्ट्वा मारुतिः हनूमान् अस्य निकुम्भस्य पुरः पुरतः उत्पपात उत्पत्यागतः । सः बाह्वन्तरं हृदयप्रदेशं प्रकाश्य प्रदर्शयित्वा एनं निकुम्भमाह । किमिति । एभिः कपिभिः किं तव कार्यं अत्र मद्धृदयदेशे ते आयुधं प्रहर विसर्जयेत्यर्थः ।।३०।।

**जनार्दनीया–** मारुतिः स्वस्मादन्येन हन्तुमसाध्यं तं निकुम्भं निरीक्ष्य, अस्य निकुम्भस्य पुरः समुत्पपात । बाह्वोः अन्तरं मध्यं हृदयं प्रकाश्य प्रदर्श्य, एनं निकुम्भं प्रत्याह । किमिति ? ते तव । एभिः कपिभिः किम् ? किं प्रयोजनं इत्यर्थः । अत्र मम हृदि ते आयुधं प्रहर विसर्जय ।।३०।।

---

१. दुरासदश्च सञ्जज्ञे परिघाभरणप्रभः । राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात् ।। हनुमांस्तु विवृत्योरस्तस्थौ प्रमुखतो बली । वा.रा.६.७७.९-१०

**चट्टी–** अथो अनन्तरं मारुतिः स्वस्मादन्येन हन्तुमसाध्यं तं निकुम्भं निरीक्ष्य, अस्य निकुम्भस्य पुरः पुरतः आशु समुत्पपात । उत्पत्यागतः सः हनुमान् बाह्वन्तरं बाहुमध्यं हृदयदेशं प्रकाश्य प्रदर्श्य एभिः कपिभिः ते तव किं प्रयोजनम् । अत्र मध्यदेशे आयुधं प्रहर विसर्जय इति निकुम्भं आह ।।३०।।

**इतीरितस्तेन स राक्षसोत्तमो वरादमोघं प्रजहार वक्षसि ।**
**विचूर्णितोऽसौ[१] तदुरस्यभेद्ये यथैव वज्रो विपतौ वृथाऽभवत् ।।३१।।**

**वादिराजीया–** वीनां पक्षिणां पतिर्गरुडः तस्मिन्विपतौ 'विः पक्षिपरमात्मनोः' इत्यभिधानम् ।।

**मधुसूदनीया–** ।। **यथैव वज्रो विपतौ वृथेति** ।। ननु वज्रस्य ब्रह्मवरेण कुत्रापि वैय्यर्थ्याभावेन विपतौ गरुडे कथं वैय्यर्थ्यमिति चेदुच्यते । तेन तद्वरसार्थक्यायैव पक्षैकदेशस्य छिन्नत्वात् । तत्रापेक्षितकार्यस्य करणाद्वरसार्थक्यवैय्यर्थ्ययोश्चोपपत्तेरेवमुक्तम् । तदुक्तम्– 'वृत्रहन्नेष वज्रस्ते वरो लब्धः पितामाहात् । ततस्तं मानमाकांक्षी मुश्चाम्येनं तनूरुहम् ।।' इति अनुशासने [२८.१६] ।।

**वरदराजीया–** इतीरिते तेन हनूमता ईरितः स राक्षसोत्तमो राक्षसश्रेष्ठो वरात् शिववरात् अमोघं अव्यर्थं परिघं वक्षसि हनूमतो वक्षस्थले प्रजहार चिक्षेपेत्यर्थः । अभेद्ये अच्छेद्ये तस्य हनूमतः उरसि असौ परिघो विचूर्णितोऽभूत् । विपतौ गरुडे वज्रो निपातितो यथा वृथा व्यर्थः एवाभूत् तथेत्यर्थः ।।

**जनार्दनीया–** अमोघं अव्यर्थम् । परिघं वक्षसि हनूमद्हृदये प्रजहार प्राक्षिपत् । असौ परिघः । अभेद्ये तस्य उरसि । तत्र दृष्टान्तमाह– यथेति ।। विपतौ गरुडे ।।३१।।

**अनन्तभट्टीया–** विपतौ गरुडे ।।३०–३५।।

**चट्टी–** इति हनुमता ईरितः सः राक्षसोत्तमः वरात् अमोघं परिघं वक्ष्यसि हनूमद्हृदये प्रजहार चिक्षेप । असौ परिघः अभेद्ये तस्य उरसि विचूर्णितः । तत्र दृष्टान्तमाह– **यथेति** ।। वीनां पक्षिणां पतिः गरुडः तस्मिन् विपतौ । 'विः पक्षिपरमात्मनोः' इत्यभिधानम् । वज्रः निपातितो यथा वृथा व्यर्थ एवाभवत् तथा परिघोऽपि व्यर्थं अभवदित्यर्थः । ननु वज्रस्य ब्रह्मवरेण कुत्रापि वैयर्थ्याभावेन विपतौ गरुडे कथं वैयर्थ्यमिति चेदुच्यते । तेन तद्वरसार्थक्यायैव पक्षैकदेशस्य छिन्नत्वात् । तत्रापेक्षितकार्यस्य करणाद्वरसार्थक्यवैय्यर्थ्ययोश्चोपपत्तेरेवमुक्तम् । तदुक्तम्– 'वृत्रहन्नेष वज्रस्ते वरो लब्धः पितामाहात् । ततस्तं मानमाकांक्षी मुश्चाम्येनं तनूरुहम् ।।' इत्यनुशासने [२८.१६] ।।३१।।

---

१. स्थिरे तस्योरसि व्यूढे परिघः शतधा कृतः । विकीर्यमाणः सहसा उल्काशतमिवाम्बरे ।। स तु तेन प्रहारेण न चचाल महाकपिः । परिघेण समाधूतो यथा भूमिचलेऽचलः ।। वा.रा.७७.१२-१३

**प्रमाणसंग्रह–** ।। **वज्रो विपतौ वृथा भवेदिति** ।। 'वृत्रहन्नेष वज्रस्ते वरो लब्धः पितामाहात् । ततस्तं मानमाकांक्षी मुञ्चाम्येनं तनूरुहम् ।।' इत्याद्यनुशासनपर्वणि ।।३१।।

**विचूर्णिते निजायुधे निकुम्भ एत्य मारुतिम् ।**
**प्रगृह्य[1] चात्मनोंऽसके निधाय जग्मिवान् द्रुतम् ।।३२।।**

**वरदराजीया–** निजायुधे परिघे विचूर्णिते निकुम्भो मारुतिं हनूमन्तं एत्यागत्य तं प्रगृह्य आत्मनः स्वस्यांसके स्कन्धे निधाय द्रुतं वेगेन जग्मिवान् जगाम ।।३२।।

**जनार्दनीया–** आत्मनः अंसके स्कन्दे निधाय, मारुतिमिति त्रिषु सम्बध्यते । जग्मिवान् लङ्कां प्रति जगाम ।।३२।।

**चट्टी–** निजायुधे परिघे विचूर्णिते सति निकुम्भः मारुतिं हनुमन्तं एत्य तं प्रगृह्य आत्मनः स्वस्य अंसके स्कन्धे निधाय, मारुतिमिति त्रिषु सम्बध्यते । द्रुतं वेगेन जग्मिवान् लङ्कां प्रति जगाम ।।३२।।

**प्रगृह्य कण्ठमस्य स प्रधानमारुतात्मजः ।**
**स्वमाशु मोचयंस्ततो न्यपातयद् धरातले ।।३३।।**

**वरदराजीया–** स हनूमान् तस्य निकुम्भस्य कण्ठं ग्रीवां संगृह्य स्वयमात्मानमाशु वेगेन मोचयित्वा मोचयितुं प्रधानमारुतस्य मुख्यवायोरात्मजो हनूमान् धरातले भूतले न्यपातयत् पातयामास ।।३३।।

**जनार्दनीया–** अस्य निकुम्भस्य । ततः तस्मात् निकुम्भात् । स्वं मोचयन् न्यपातयत् ।।३३।।

**चट्टी–** प्रधानमारुतस्य मुख्यवायोः आत्मजः सः हनुमान् अस्य निकुम्भस्य गलं ग्रीवां प्रगृह्य ततः निकुम्भात् स्वं आत्मानं आशु वेगेन मोचयन् धरातले, तमिति शेषः । न्यपातयत् पातयामास ।।३३।।

**चकार[2] तं रणात्मके मखे रमेशदैवते ।**
**पशुं प्रभञ्जनात्मजो विनेदुरत्र देवताः ।।३४।।**

---

१. स्वस्थश्चापि निजग्राह हनूमन्तं महाबलम् । चुक्रुशुश्च तदा सङ्घे भीमं लङ्कानिवासिनः ।। स तथा ह्रियमाणोऽपि हनूमांस्तेन रक्षसा । आजघानानिलसुतो वज्रकल्पेन मुष्टिना ।। [७७.१७-१८]

२. निक्षिप्य परमायत्तो निकुम्भं निष्पिपेष च । उत्पत्य चास्य वेगेन पपातोरसि वेगवान् ।। परिगृह्य च बाहुभ्यां परिवृत्य शिरोधरम् । उत्पाटयामास शिरो भैरवं नदतो महत् ।। [७७.२०-२१]

**वरदराजीया–** प्रभञ्जनात्मजो हनूमान् रणात्मके युद्धरूपे यज्ञे कथंभूते रमेशो लक्ष्मीपतिर्दैवतं यत्र तस्मिन् पशुं चकार । अत्र युद्धाख्ये यज्ञे देवताः देवाः विनेदुः तुतुषुः ।।३४।।

**जनार्दनीया–** तं निकुम्भम् । पशुं अत्र रणमखे । देवताः आकाशस्थदेवाः विनेदुः । 'आश्रावय' इत्यादि मन्त्रध्वनिं चक्रुः । उद्गात्रादिकर्म देवाश्चक्रुरिति भावः ।।३४।।

**चट्टी–** प्रभञ्जनस्य वायोरात्मजः हनुमान् रमेशः दैवतं यस्मिन् तस्मिन् रणात्मके युद्धरूपे मखे यज्ञे तं निकुम्भं पशुं चकार । अत्र यज्ञे देवताः विनेदुः तुष्टुवुः ।।३४।।

**सुप्तघ्नो[१] यज्ञकोपश्च शकुनिर्देवतापनः ।**
**विद्युज्जिह्वः प्रमाथी च शुकसारणसंयुताः ।।३५।।**

**जनार्दनीया–** शुकसारणाभ्यां संयुताः सुप्तघ्नादिषट् ।।३५।।

**चट्टी–** शुकसारणाभ्यां संयुताः सुप्तघ्नादयः रावणप्रेरिताः सन्तः सर्वे अवध्याः राक्षसाः कपिकुञ्जरान् कपिश्रेष्ठान् मथ्नन्तः विलोडयन्तः ब्रह्मवरतः अवध्या अपि रामसायकैः रामबाणैः निहताः ।।३५-३६।।

**रावणप्रेरिताः सर्वान् [२]मथ्नन्तः कपिकुञ्जरान् ।**
**अवध्या[३] ब्रह्मवरतो निहता रामसायकैः ।।३६।।**

**वेदाङ्गतीर्थीया–** मथन्तः मथ्नन्तः विलोळयन्तः ।।३६–४४।।

**वरदराजीया–** सुप्तघ्नादयो अष्टौ रावणेन प्रेरिताः कपिकुञ्जरान् कपिश्रेष्ठान् प्रमथ्नन्तः विलोडयन्तः ब्रह्मवरादवध्या अपि रामसायकैः रामबाणैः निहताः ।।३५-३६।।

---

१. अत्र सुप्तघ्नयज्ञकोपौ रावणमातुः मालिनामकपितृव्यस्य पुत्रौ । प्रमाथी दूषणानुजः । तथाहि आर्षे-[७.५.] ततो माल्यवतो भार्या सुन्दरी नाम सुन्दरी । स तस्यां जनयामास यदपत्यं निबोध तत् ।।३५ वज्रमुष्टिर्विरूपाक्षो दुर्मुखश्चैव राक्षसः । सुप्तघ्नो यज्ञकोपश्च...।।३७ असौ प्रमाथी दूषणानुजः । दूषणावरजौ चैव वज्रवेगप्रमाथिनौ । तौ त्वां बलेन महता सहितावनुयास्यतः ।। इति भारते वनपर्वणि । २८७.२७ । भारते नीलः प्रमाथिं जघानेति तु व्यत्यासेनोच्यते । दण्डकारण्ये खरदूषणयुद्धकाले निहतो प्रमाथी तु अन्य एव । शुकसारणौ तु रावणसचिवौ । तथाहि आर्षे-७.१४.१-३ ततः स सचिवैस्सार्धं षड्भिर्नित्यबलोद्धतः । महोदरप्रहस्ताभ्यां मारीचशुकसारणैः ।। धूम्राक्षेण च वीरेण ....।। इति

२. 'मथन्तः' इति वेदाङ्गतीर्थीयपाठः ।

३. जगद्भ्रमन्तोऽनिलवद्दुरासदा रणेषु मृत्युप्रतिमानतेजसः । वरप्रदानादपि गर्विता भृशं क्रतुक्रियाणां प्रशमङ्कराः सदा ।। इति रामायणे ७.५.४७

**जनार्दनीया—** कपिकुञ्जरान् कपिश्रेष्ठान् मथ्नन्तः विलोडयन्तः । व्याकुलं कुर्वन्त इत्यर्थः । सायकैः बाणैः निहताः ।।३६।।

**अनन्तभट्टीया—** कपिकुञ्जरान् कपिश्रेष्ठान् ।।३६–३७।।

**युद्धोन्मत्तश्च[१] मत्तश्च देवान्तकनरान्तकौ ।**
**त्रिशिरा अतिकायश्च निर्ययू रावणाज्ञया ।।३७।।**

**वरदराजीया—** युद्धोन्मत्तादयः षट् रावणाज्ञया युद्धाय निर्ययुः ।।३७।।

**जनार्दनीया—** युद्धोन्मत्तादयः षट् निर्ययुः । निर्गताः योद्धुमिति शेषः ।।३७।।

**चट्टी—** युद्धोन्मत्तादयः रावणाज्ञया निर्ययुः । निर्गताः योद्धुमिति शेषः ।।३७।।

**नरान्तको रावणजो [२]हयवर्योपरि स्थितः ।**
**अभीः ससार समरे [३]प्रासोद्यतकरो हरीन् ।।३८।।**

---

१. अत्र युद्धोन्मत्तमत्तौ रावणस्य भ्रातरौ [रावणमातुः माल्यवान्नामकपितृव्यस्य पुत्रौ]। ततो माल्यवतो भार्या सुन्दरी नाम सुन्दरी । स तस्यां जनयामास यदपत्यं निबोध तत् ।। मत्तोन्मत्तौ तथैव च...।। इति रामायणे७.५.३७ । एतावेव महोदरमहापार्श्वनाम्नाप्याहूतौ । तथाहि- 'युद्धोन्मत्तश्च मत्तश्च भ्रातरौ चापि रावणः । रक्षणार्थं कुमाराणां प्रेषयामास संयुगे ।।'१६ इत्येकोनसप्ततितमे सर्गे स्वकुमाराणां त्रिशिरादीनामाहवे रक्षणार्थं प्रेषणकाले युद्धोन्मत्तमत्तनाम्नाकारितौ एतौ तत्रैव 'त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ । महोदरमहापार्श्वौ निर्जग्मुः कालचोदिताः।।'१९ इति महोदरमहापार्श्वनामान्तरेण निर्दिष्टौ । सङ्ग्रहे तु- 'यमशत्रुश्च दुर्धर्षो महापार्श्वो महोदरः । वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ ।। ससैन्या रावणादिष्टा हता रामेण लीलया' इति महापार्श्वमहोदरौ पृथगुक्त्वा, पश्चात् 'त्रिशिरा अतिकायश्च देवान्तकनरान्तकौ । ते मत्तयुद्धोन्मत्ताभ्यां पितृव्याभ्यां समाययुः ।। इति मत्तयुद्धोन्मत्तौ पृथक् निर्दिष्टौ । अथ पुनः त्रयोदशस्सर्गे रावणकर्तृकान्ति-मयुद्धकाले 'विरूपाक्षश्च यूपाक्षो महापार्श्वमहोदरौ । दंशिता रथमारुह्य रावणं पर्यवारयन् ।।' इति । अत्रेदं बोध्यम् । अक्षकुमारेन्द्रजिदतिकायत्रिशिरदेवान्तकनरान्तकाः इत्येवं सम्भूय रावणस्य षट्पुत्राः । तत्र इन्द्रजिदब्जजोमेशयोः वरादवध्यः । त्रिशिरोऽतिकायदेवान्तकाः ब्रह्मवरावध्याः । अक्षकुमारनरान्तकयोः वरप्राप्तिः न कुत्रापि श्रुतप्राया ।

२. 'हयमुच्चैःश्रवःप्रख्यं श्वेतं कनकभूषणम् । मनोजवं महाकायं आरुरोह नरान्तकः ।।' इति वा.रा.६.२९

३. 'प्रासश्चतुर्हस्तदण्डबुध्नः क्षुराननः' इति शुक्रनीतिः । [४.७.२१५] 'चतर्हस्तदण्डबुध्नः तुरीयहस्तदण्डप्रमाणः । क्षुराननः क्षुर इव आननम् ।' इति तट्टीका । यथा च– प्रासस्तु सप्तहस्तः स्यादौन्नत्येन तु वैणवः । लौहशीर्षस्तीक्ष्णपादः कौशेयस्तवकाञ्चितः ।। 'ऋज्वायतविशालश्च तिर्यङ्नमितमेव च । पञ्चकर्म विनिर्दिष्टं व्यस्त्रे प्रासं महात्मभिः ।।' इति विष्णुधर्मोत्तरे । २खं.१८२.५ ।

**वरदराजीया—** नरान्तको रावणाज्जातो हयवर्यस्य तुरगश्रेष्ठस्योपरि स्थितः आरूढः समरे युद्धे अभीः न विद्यते भीः भीतिः यस्य स तथा । प्रासेनायुधेनोद्यतौ करौ यस्य स तथा । हरीन् वानरान् प्रतिससार प्राप्तवान् ॥३८॥

**जनार्दनीया—** रावणाज्जातः । हयवर्यस्य उत्तमाश्वस्येत्यर्थः । उपरि स्थितः उपविष्टः । समरे संग्रामे । अभीः भयरहितः । प्रासेन प्रासाख्यायुधविशेषेण उद्यतः उद्युक्तः, करो यस्य स नरान्तकः । हरीन् ससार प्राप ॥३८॥

**अनन्तभट्टीया—** अभीः निर्भयः ॥३८–४०॥

**चट्टी—** रावणाज्जातः नरान्तकः हयवर्यस्य अश्वश्रेष्ठस्य उपरि स्थितः आरूढः समरे युद्धे अभीः न विद्यते भीः यस्य सः भयरहितः । प्रासेन प्रासाख्यायुधविशेषेण उद्यतः उद्युक्तः करो यस्य स तथा विधस्सन् हरीन् कपीन् प्रति ससार प्राप्तवान् ॥३८॥

**तं दहन्तमनीकानि युवराजोऽङ्गदो बली ।**
**उत्पपात निरीक्ष्याऽशु समदर्शयदप्युरः ॥३९॥**

**वरदराजीया—** अनीकानि सैन्यानि तं दहन्तं प्रति बली बलवान् युवराजोऽङ्गदो उत्पपात । तं निरीक्ष्य प्रहस्य उरः हृदयं समदर्शयच्च ॥३९॥

**जनार्दनीया—** अनीकानि स्वसैन्यानि । दहन्तं नरान्तकम् । निरीक्ष्य, तं नरान्तकं प्रति उत्पपात । उरोऽपि वक्षस्थलमपि नरान्तकस्य समदर्शयत् ॥३९॥

**चट्टी—** अनीकानि सैन्यानि नरान्तकं निरीक्ष्य बली बलवान् युवराजः अङ्गदः तं नरान्तकं प्रति आशु उत्पपात । अथ वक्षस्थलमपि नरान्तकस्य समदर्शयत् ॥३९॥

**तस्योरसि[१] प्रासवरं प्रजहार स राक्षसः ।**
**द्विधा समभवत् तत्तु वालिपुत्रस्य तेजसा ॥४०॥**

**वरदराजीया—** स राक्षसो नरान्तको तस्याङ्गदस्योरसि प्रासवरमायुधं प्रजहार तताड । वायुपुत्रस्याङ्गदस्य तेजसा सामर्थ्येन तत्प्रासवरं द्विधा समभवत् शकली बभूवेत्यर्थः ॥४०॥

---

१. स प्रासमाविध्य तदाङ्गदाय समुज्ज्वलन्तं सहसोत्ससर्ज । स वालिपुत्रोरसि वज्रकल्पे बभूव भग्नो न्यपतच्च भूमौ ॥ इति रामायणे[७.६९.८८]।

**जनार्दनीया–** तस्य अङ्गदस्य उरसि । प्रासवरं प्रासश्रेष्ठम् । 'दैवात् वृते वरश्रेष्ठे त्रिषु क्लीवं मनाक्प्रिये' इत्यभिधानम् । प्रजहार प्रास्यत् । तत्तु प्रासवरं वालिपुत्रस्य तेजसा सामर्थ्येन द्विधा द्विप्रकारं शकलीभूतं समभवत् ।।४०।।

**चट्टी–** राक्षसो नरान्तकः तस्य अङ्गदस्य उरसि प्रासवरं प्रजहार तताड । वालिपुत्रस्य तेजसा सामर्थ्येन तत् प्रासवरं द्विधा समभवत् मध्ये भग्नमभवत् ।।४०।।

**अथास्य[१] हयमाश्वेव निजघान मुखे कपिः ।**
**पेततुश्चाक्षिणी तस्य स पपात ममार च ।।४१।।**

**वरदराजीया–** अथानन्तरं अस्य नरान्तकस्य हयमुखप्रदेशे कपिरङ्गदो मुष्टिना जघानेत्यर्थः । तस्याश्वस्याक्षिणी नेत्रे पेततुः । सोऽश्वो ममार मृतश्चेत्यर्थः ।।४१।।

**जनार्दनीया–** अस्य नरान्तकस्य । हयं मुखे कपोले निजघान । तस्य हयस्य अक्षिणी पेततुः । स हयः पपात ममार च ।।४१।।

**अनन्तभट्टीया–** स अश्वः ।।४१।।

**चट्टी–** अथ अनन्तरं कपिः अङ्गदः अस्य नरान्तकस्य हयमुखे निजघान । तस्य अश्वस्य अक्षिणी नेत्रे पेततुः । स हयः पपात ममार च ।।४१।।

**स खड्गवरमादाय प्रससार रणे कपिम् ।**
**आच्छिद्य खड्गमस्यैव निहतो वालिसूनुना ।।४२।।**

**वरदराजीया–** स नरान्तकः खड्गवरं उत्तमं खड्गमादाय रणे युद्धे कपिमङ्गदं ससार । अस्य नरान्तकस्य खड्गमाच्छिद्य अपहृत्य तेनैव खड्गेन वालिसूनुनाङ्गदेन निहतः ।।४२।।

**जनार्दनीया–** स नरहन्तकः । वालिसूनुना अस्य नरान्तकस्य । तं खड्गम् । आच्छिद्य आकृष्य गृहित्वा, निहतः ।।४२।।

**अनन्तभट्टीया–** अस्य नरान्तकस्य । आच्छिद्य अपहृत्य । [तेन]खड्गेन हत इति तात्पर्यम् ।।

---

१. निमग्नपादः स्फुटिताक्षितारो निष्क्रान्तजिह्वोऽचलसन्निकाशः । स तस्य वाजी निपपात भूमौ तलप्रहारेण विकीर्णमूर्धा ।। इति वाल्मीकीये । [७.६९.९०]

**चट्टी—** स नरान्तकः खड्गवरं खड्गश्रेष्ठं आदाय रणे अङ्गदं ससार । अस्य नरान्तकस्य खड्गं आशु आच्छिद्य अपहृत्य तेन खड्गेन वालिसूनुना अङ्गदेन नरान्तको हतः ।।४२।।

**गूढवाक्यार्थ—** आच्छिद्य स्वीकृत्य स्थितेनेति शेषः ।।४२।।

**गन्धर्वकन्यकासूते निहते रावणात्मजे ।**
**आजगामाग्रजस्तस्य सोदर्यो देवतान्तकः ।।४३।।**

**वरदराजीया—** गन्धर्वकन्यकायां प्रसूते रावणात्मजे निहते सति तस्य नरान्तकस्य सोदर्यो सोदरः गन्धर्वकन्यकायामेव रावणाज्जात इत्यर्थः । अग्रजो ज्येष्ठो देवतान्तको नाम आजगाम ।।४३।।

**जनार्दनीया—** गन्धर्वकन्यकायां सूते प्रसूते । रावणात्मजे रावणाद्गन्धर्वकन्यकायां जातः इत्यर्थः । नरान्तके निहते सति । तस्य नरान्तकस्य । सोदर्यः समानोदरः एकमातृकः । तत्रापि अग्रजः श्रेष्ठः देवतान्तकः देवान्तकाख्यः आजगाम ।।४३।।

**चट्टी—** गन्धर्वकन्यकायां सूते प्रसूते रावणात्मजे नरान्तके निहते सति तस्य सौदर्यं समानोदर्यः । उभयोः जननी एकैवेत्यर्थः । अग्रजः श्रेष्ठः देवतान्तकः देवान्तकाख्यः आजगाम ।।४३।।

**तस्याऽपतत एवाऽशु शरवर्षप्रतापिताः ।**
**प्रदुद्रुवुर्भयात् सर्वे कपयो जाम्बवन्मुखाः ।।४४।।**

**मधुसूदनीया—** जाम्बवन्मुखाः जाम्बवान्मुखे अग्रदेशे स्थितो येषां ते जाम्बवन्मुखा इत्यर्थः । न तु जाम्बवत्प्रमुखा इत्यर्थः । जाम्बवतो ऋक्षत्वेन कपित्वाभावादिति बोध्यम् । यद्वा जाम्बवन्मुखा इत्यतद्गुणसंविज्ञानबहुव्रीहिरिति बोध्यम् ।।४४-६५।।

**वरदराजीया—** तस्य देवान्तकस्यापतत अगच्छत एव शरवर्षेण शरवृष्ट्या प्रतापिताः पीडिताः सर्वे जाम्बवन्मुखाः कपयः भयात् दुद्रुवुः ।।४४।।

**जनार्दनीया—** आपततः आगच्छतः । तस्य देवान्तकस्य । शरवर्षेण प्रतापितः सन्तापं प्रापितः ।।

**चट्टी—** तस्य देवान्तकस्य आपततः आगच्छतः अत एव तस्य शरक्षेपेण बाणवर्षेण प्रतापिताः सन्तापं प्रापिताः सर्वे जाम्बवन्मुखाः जाम्बवान् मुखे अग्रदेशे येषां ते जाम्वन्मुखा इत्यर्थः । न तु जाम्बवत्प्रभृतय इत्यर्थः । जाम्बवतो ऋक्षत्वेन कपित्वाभावादिति बोध्यम् । कपयः आशु भयात् प्रदुद्रुवुः ।।४४।।

**ताम्रपर्णीया–** प्रदुद्रुवुर्भयात् सर्वे कपयो जाम्बवन्मुखा इति तत्रातद्गुणसंविज्ञानो बहुव्रीहिः । छत्रिन्यायेन वा अनुसरणीयः । अतो न 'प्रसेनमृक्षपातितम्' इति सप्तदशाध्यायविरोध इति ज्ञेयम् । अत एव रामायणे 'दृष्टा हि हरयश्शीघ्राः मया विपुलविक्रमाः । वाली च स च सुग्रीवो जाम्बवांश्च महाबलः । नीलस्सेनापतिश्च...' इति छत्रिन्यायमनुसृत्य [कपिजाम्बवदुक्तं] इति ज्ञेयम् ।।४४-४९।।[1]

**गूढवाक्यार्थ–** कपयो जाम्बवन्मुखा इति जाम्बवतः कपित्वोक्तिरनुपपन्ना । प्रसेनमृक्षपातितमित्यत्र तस्य ऋक्षत्वोक्तिरिति चेन्न । छत्रिन्यायेनोपपत्तेः । अत एव रामायणे– 'दृष्टा हि हरयश्शीघ्राः मया विपुलविक्रमाः । वाली च स च सुग्रीवो जाम्बवांश्च महाबलः । नीलस्सेनापतिश्च...' इति छत्रिन्यायमनुसृत्य कपित्वं जाम्बवत उक्तं ज्ञेयम् । जाम्बवन्मुखा इत्यत्र अतद्गुणसंविज्ञानो बहुव्रीहिर्वा ।।४४।।

**स शरं तरसाऽऽदाय रविपुत्रायुधोपमम् ।**
**अङ्गदं प्रजहारोरस्यपतत् स मुमोह च ।।४५।।**

**वेदाङ्गतीर्थीया–** रविपुत्रायुधोपमं यमदण्डोपमम् ।।४५-४८।।

**वादिराजीया–** रविपुत्रायुधोपममित्यत्र रविपुत्रो यमः तस्यायुधं दण्डः ।।४५-४९।।

**वरदराजीया–** स देवान्तकः तरसा वेगेन रविपुत्रस्य यमस्यायुधोपमं यमदण्डसदृशमित्यर्थः । अङ्गदे उरसि हृदयप्रदेशे प्रजहार निक्षिप्तवान् । सोऽङ्गदो अपतत् मुमोह च मोहं च प्राप्तवान् ।।४५।।

**जनार्दनीया–** स देवान्तकः । तरसा जवेन । रविपुत्रायुधोपमं यमदण्डेन तुल्यं शरमादाय अङ्गदं उरसि प्रजहार तताड । सोऽङ्गदः अपतत् मुमोह च मूर्च्छां प्राप ।।४५।।

**अनन्तभट्टीया–** रविपुत्रायुधोपमं यमदण्डोपमम् ।।४५-४७।।

**चट्टी–** देवान्तकः तरसा वेगेन रविपुत्रायुधोपमं यमदण्डतुल्यं शरं आदाय उरसि हृदयदेशे प्रजहार । सोऽङ्गदः अपतत् मोहं मूर्च्छां च प्राप । अथ अनन्तरम् ।।४५।।

**अथ तिग्मांशुतनयः शैलं प्रचलपादपम् ।**
**अभिदुद्राव सङ्गृह्य चिक्षेप च निशाचरे ।।४६।।**

---

१. प्रदुद्रुवुर्भयात् सर्वे कपयो जाम्बवन्मुखाः इत्यत्र अतद्गुणसंविज्ञानो बहुव्रीहिः । अतोऽत्र कपित्वोक्तेः 'प्रसेनमृक्षपातितम्' इति सप्तदशाध्यायविरोधः इति निरस्तम् । 'दृष्टा हि हरयः... नीलः सेनापतिश्च' इति रामायणवचनं तच्छत्रिन्यायेनोपपन्नं ज्ञेयम् ।। ४४-११२।। इति हो पुस्तके रीत्यन्तरेण व्याख्यातः ।

**वरदराजीया–** अथानन्तरं तिग्मांशोस्सूर्यस्य तनयः सुग्रीवः प्रचलाः चञ्चला पादपा वृक्षाः यस्मिंस्तं शैलं पर्वतं सङ्गृह्य धृत्वा अभिदुद्राव अभिमुखं प्राप्तवान् । निशाचरे राक्षसे देवान्तके चिक्षेप क्षिप्तवान् ।।

**जनार्दनीया–** तिग्मांशोः उग्रकिरणस्य सूर्यस्य तनयः पुत्रः सुग्रीवः । प्रचलाः पादपाः वृक्षाः यस्मिन् असौ तथा तं शैलं सङ्गृह्य, अभिदुद्राव अभिययौ ।।४६।।

**चट्टी–** तिग्मांशोः तीक्ष्णकिरणस्य सूर्यस्य तनयः पुत्रः सुग्रीवः प्रचलाः चञ्चलाः पादपाः वृक्षाः यस्मिन् तं शैलं सङ्गृह्य अभिदुद्राव अभिययौ । निशाचरे राक्षसे देवान्तके चिक्षेप च ।।४६।।

**तमापतन्तमालक्ष्य दूराच्छरविदारितम् ।**
**सुरान्तकश्चकाराऽशु दधार च परं शरम् ।।४७।।**

**वरदराजीया–** सुरान्तको देवान्तकः तं पर्वतं आपतन्तं स्वस्योपरि पतमानं आलक्ष्य दृष्ट्वा दूरादेव शरेण विदारितं चूर्णीभूतं आशु चकार । परं च अन्यं च शरं बाणं दधार धृतवान् ।।४७।।

**जनार्दनीया–** सुरान्तकः देवान्तकः । आपतन्तं स्वं हन्तुं आगच्छन्तं तं शैलं आलक्ष्य अवलोक्य, दूरात् शरेण विदारितं चकार । परं अन्यं शरं दधार ।।४७।।

**चट्टी–** सुरान्तकः देवान्तकः आपतन्तं आत्मानं हन्तुं आगच्छन्तं तं शैलं आलक्ष्य दृष्ट्वा दूरात् शरेण विदारितं चूर्णीकृतं आशु चकार । परं अन्यं शरं च दधार ।।४७।।

**स तमाकर्णमाकृष्य यदमण्डोपमं शरम् ।**
**अविद्ध्यद्धृदये राज्ञः कपीनां स पपात ह ।।४८।।**

**वरदराजीया–** स देवान्तको यमदण्डोपमं शरं आकर्णं कर्णपर्यन्तं आकृष्य सङ्गृह्य कपीनां राज्ञः सुग्रीवस्य हृदये अविध्यत् तताडेत्यर्थः । स सुग्रीवः पपात ह अपतत् हि ।।४८।।

**जनार्दनीया–** स देवान्तकः । तं शरं आकृष्य अविध्यत् विव्याध । स सुग्रीवः ।।४८।।

**अनन्तभट्टीया–** कपीनां राज्ञ इत्यन्वयः ।।४८–५०।।

**चट्टी–** स देवान्तकः यमदण्डोपमं तं शरं आकर्णं कर्णपर्यन्तं आकृष्य कपीनां राज्ञः सुग्रीवस्य हृदये अविध्यत् तताड । स सुग्रीवः पपात ह अपतद्धि ।।४८।।

**बलमप्रतिमं वीक्ष्य सुरशत्रोस्तु मारुतिः ।**
**आह्वयामास युद्धाय केशवः कैटभं यथा ॥४९॥**

**वेदाङ्गतीर्थीया–** सुरशत्रोः देवतान्तकस्य ॥४९॥

**वरदराजीया–** मारुतिः हनूमान् सुरशत्रोः देवान्तकस्य अप्रतिमं असदृशं बलं वीक्ष्य दृष्ट्वा केशवः कैटभं यथा युद्धाय युद्धार्थं आह्वयामास आहूतवान् ॥४९॥

**जनार्दनीया–** अप्रतिमं असदृशम् ॥४९॥

**चट्टी–** मारुतिः हनुमान् केशवः कैटभं यथा तथा युद्धाय आह्वयामास ॥४९॥

**तमापतन्तमालोक्य रथं सहयसारथिम् ।**
**चूर्णयित्वा धनुश्चास्य समाच्छिद्य बभञ्ज ह ॥५०॥**

**वेदाङ्गतीर्थीया–** समाच्छिद्य हस्तादाकृष्य ॥५०–५२॥

**वादिराजीया–** समाच्छिद्य बलादादायेत्यर्थः ॥५०–५२॥

**सत्याभिनवीया–** तत्रैव तमापतन्तमालोक्य रथं इति श्लोके धनुश्चास्य समाच्छिद्य बभञ्ज हेत्यस्य मारुतिः अस्य देवान्तकस्य धनुः धनुर्गुणं आच्छिद्य सम्यक् छिन्नं कृत्वा धनुश्च सम्वभञ्ज सम्यक् बभञ्ज इत्येतत् ह प्रसिद्धमित्यर्थः । एतेन धनुषः छेदायोगात् धनुराच्छिद्येति कथनमनुपपन्नमिति दूषणं निरस्तम् । धनुश्शब्देन धनुर्गुणस्य लक्षणया ग्रहणं कृत्वा आच्छिद्येत्यनेन तस्यैव छेद उच्यते इत्युररीकरणात् । एतेनैव आच्छिद्येत्यत्र आङा छेदे सम्यक्त्वस्योक्तत्वात् समित्येतत् व्यर्थमिति दूषणं परिहृतम् । समित्यस्य आच्छिद्येत्यनेनान्वयमनङ्गीकृत्य बभञ्जेत्यनेनान्वय इति स्वीकरणात् ॥५०॥

**वरदराजीया–** तं देवान्तकं आपतन्तं आगच्छन्तं युद्धार्थं इति शेषः । आलोक्य दृष्ट्वा सहयसारथिं हयसारथिभिः सह वर्तमानं रथं चूर्णयित्वा अस्य देवान्तकस्य धनुश्चाच्छिद्याहृत्य बभञ्ज भग्नमकरोद्धि ॥

**जनार्दनीया–** मारुतिः तं देवान्तकं आलोक्य दृष्ट्वा, तस्य देवान्तकस्य । हयैः अश्वैः सारथिना सहितं रथं चूर्णयित्वा, धनुः हस्तस्थं धनुः समाच्छिद्य आहृत्य बभञ्ज ह ॥५०॥

**ताम्रपर्णीया–** आच्छिद्य स्वीकृत्य ॥५०–५२॥

**चट्टी–** तं देवान्तकं आपतन्तं युद्धार्थमागच्छमानं आलोक्य दृष्ट्वा हयैः अश्वैः सारथिना सहितं अस्य रथं चूर्णयित्वा, अस्य देवान्तकस्य धनुश्च समाच्छिद्य आहृत्य बभञ्ज भग्नमकरोत् ॥५०॥

अथ खड्गं समादाय पुर आपततो रिपोः ।
हरिः प्रगृह्य केशेषु पातयित्वैनमाहवे ।
शिरो[१] ममर्द तरसा पवमानात्मजः पदा ॥५१॥

**वरदराजीया—** अथ धनुर्भङ्गानन्तरं खड्गं कृपाणं समादाय पुरः पुरतः आपतत आगच्छत रिपोः शत्रोः देवान्तकस्य केशेषु केशान् गृहीत्वा हरिः पवनात्मजो हनूमान् आहवे युद्धे एनं देवान्तकं पातयित्वा तरसा वेगेन पदा पादेन शिरो ममर्द मर्दयामास ॥५१॥

**जनार्दनीया—** पवनात्मजो हरिः हनुमान् । पुरः आपततो रिपोः केशेषु केशान् प्रगृह्य आहवे रणे एनं देवान्तकं पातयित्वा, पदा शिरो ममर्द ॥५१॥

**अनन्तभट्टीया—** केशेषु केशानित्यर्थः ॥५१-५२॥

**चट्टी—** अथ अनन्तरं हरिः कपिः पवनात्मजो हनुमान् खड्गं कृपाणं समादाय पुरः स्वपुरः आपततो आगच्छतः रिपोः शत्रोः देवान्तकस्य केशेषु केशान् प्रगृह्य गृहीत्वा आहवे रणे पातयित्वा तरसा बलेन पदा शिरो ममर्द मर्दयामास ॥५१॥

वरदानादवध्यं[२] तं निहत्य पवनात्मजः ।
समीडितः सुरवरैः प्लवगैर्वीक्षितो मुदा ॥५२॥

**वरदराजीया—** पवनात्मजो हनूमान् वरदानाद्वरस्य वरस्य दाननिमित्तादवध्यं तं देवान्तकं निहत्य सुरवरैः समीडितः स्तुतः प्लवङ्गैः वानरैः मुदा वीक्षितो अवलोकितश्च बभूवेत्यर्थः ॥५२॥

**जनार्दनीया—** तमीशानवरावध्यमिति क्वचित्पाठः । वरदानादवध्यं तमिति क्वचित्पाठः । तं देवान्तकं निहत्य, सुरवरैः समीडितः स्तुतः । प्लवङ्गैः कपिभिः मुदा वीक्षितः ॥५२॥

**चट्टी—** 'वरदानादवध्यं तम्' इति क्वचित्पाठः । 'तमीशानवरावध्यम्' इति क्वचित्पाठः । पवनात्मजः हनुमान् ईशानवरात् रुद्रवरात् अवध्यं तं देवान्तकं निहत्य सुरगणैः [वरैः] समीडितः स्तुतः प्लवङ्गैः वानरैः मुदा वीक्षितः अवलोकितश्च बभूव ॥५२॥

---

१. स मुष्टिनिष्पिष्टविभिन्नमूर्धा निर्वान्तदन्ताक्षिविलम्बिजिह्वः । देवान्तको राक्षसराजसूनुर्गतासुरूर्व्यां सहसा पपात ॥ ६.७०.२६ इति रामायणे तु व्यत्यासेन हननमुच्यते ।

२. 'तमीशानवरावध्यं' इति जनार्दनीयचट्टीटिप्पण्योः पाठान्तरम् ।

**विद्राविताखिलकपिं वरात् [1]त्रिशिरसं विभोः ।**
**भङ्क्त्वा रथं धनुः खड्गमाच्छिद्याशिरसं[2] व्यधात् ॥५३॥**

**व्यासतीर्थीया–** त्रिशिरसं अशिरसं व्यधादिति सम्बन्धः ॥५३-५४॥

**वेदाङ्गतीर्थीया–** रथं तत्रस्थं धनुः खड्गं चाच्छिद्य ॥५३॥

**वादिराजीया–** विभोः ब्रह्मणः ॥५३-५६॥

**वरदराजीया–** विभोः ब्रह्मणो वरात् त्रिशिरसं शिरस्त्रयवन्तं तन्नामकं राक्षसम् । विद्राविता अखिलकपयो येन तं अशिरसं शिरोरहितं चकार । किं कृत्वा रथं धनुश्च भङ्क्त्वा प्रभज्य खड्गमाच्छिद्यापहृत्य तेनाशिरसं व्यधादिति सम्बन्धः ॥५३॥

**जनार्दनीया–** पवनात्मजः विभोः ब्रह्मणो वरात् विद्राविताः अखिलकपयो येन स तथा तम् । त्रीणि शिरांसि यस्यासौ त्रिशिराः तं तथा । अत एव नामतोऽपि त्रिशिराः तम् । अशिरसं शिरो हीनं व्यधात् । किं कृत्वा ? रथं त्रिशिरसो रथं धनुश्च भङ्क्त्वा, खड्गं आच्छिद्य, धनुः खड्गमिति द्वन्द्वैकवद्भावः । आच्छिद्य इत्यनेन सम्बन्ध्यते ॥५३॥

**अनन्तभट्टीया–** विभोः वरात् ब्रह्मणो वरात् रथं भङ्क्त्वा । धनुश्च खड्गं द्वन्द्वैकवद्भावः । आच्छिद्य ॥

**ताम्रपर्णीया–** ॥ **वरात् त्रिशिरसं विभोरिति** ॥ विभोः ब्रह्मणो वरात् इत्यर्थः ॥५३-५५॥

**चट्टी–** विभोः ब्रह्मणो वरात् विद्राविताः अखिलकपयो येन स तथा तम् । त्रीणि शिरांसि यस्यासौ त्रिशिराः तं तथा । अत एव नामतोऽपि त्रिशिराः । तं अशिरसं शिरो हीनं व्यधात् चकार । किं कृत्वा । रथं त्रिशिरसो रथं धनुश्च भङ्क्त्वा प्रभज्य खड्गं आच्छिद्य अपहृत्य तेन अशिरसं व्यधादिति पूर्वेणान्वयः ॥

**गूढवाक्यार्थ–** ॥ **वरात् त्रिशिरसं विभोरिति** ॥ विभोः ब्रह्मण इत्यर्थः ॥५३॥

---

१. 'हयोत्तमसमायुक्तं सर्वायुधसमाकुलम् । आरुरोह रथश्रेष्ठं त्रिशिरा रावणात्मजः ॥ त्रिभिः किरीटैस्त्रिशिरा शुशुभे स रथोत्तमे ॥' इति वा.रा.६.६९.२२-२४। अत्र द्वौ त्रिशिरसौ ज्ञेयौ । एकः दण्डकारण्ये खरदूषणयुद्धसमये रामेण निहतः । अपरः रावणतनूजः हनूमता युद्धे निपातितः ।

२. स तस्य शीर्षाण्यसिना शितेन किरीटजुष्टानि सकुण्डलानि । क्रुद्धः प्रचिच्छेद सुतोऽनिलस्य त्वष्टुः सुतस्येव शिरांसि शक्रः ॥ इति रामायणे । ६.७०.४७

**युद्धोन्मत्तश्च मत्तश्च पार्वतीवरदर्पितौ ।**
**प्रमथ्नन्तौ कपीन् सर्वान् [1]हतौ मारुतिमुष्टिना ।।५४।।**

**वेदाङ्गतीर्थीया–** प्रमथ्नन्तौ विलोलयन्तौ ।।५४-५५।।

**वरदराजीया–** युद्धोन्मत्तश्च मत्तश्चोभौ भ्रातरौ पार्वत्या उमायाः वरेण दर्पितौ दर्पं प्राप्तौ सर्वान् कपीन् प्रमथ्नन्तौ विलोडयन्तौ मारुतिमुष्टिना हनूमन्मुष्टिप्रहारेण हतावित्यर्थः ।।५४।।

**जनार्दनीया–** मारुतेः हनुमतः मुष्टिना । पार्वत्याः वरेण दर्पितौ दृप्तौ । कपीन् प्रमथ्नन्तौ व्यथयन्तौ । युद्धोन्मत्तः मत्तश्चेति उभौ हतौ ।।५४।।

**चट्टी–** युद्धोन्मत्तः मत्तश्चेति उभौ भ्रातरौ पार्वत्याः वरेण दर्पितौ दृप्तौ सर्वान् कपीन् प्रमथ्नन्तौ व्यथयन्तौ सन्तौ मारुतेः हनुमतः मुष्टिना हतौ ।।५४।।

**ततोऽ[2]तिकायोऽतिरथो रथेन स्वयम्भुदत्तेन हरीन् प्रमृद्नन् ।**
**चचार कालानलसन्निकाशो गन्धर्विकायां जनितो दशास्यात् ।।५५।।**

**वरदराजीया–** एवं षण्णां मध्ये पञ्चानां विनाशमुक्त्वा अवशिष्टस्य अतिकायस्यापि विनाशं वक्तुमारभते– **तत इति** ।। ततस्तदनन्तरं अतिरथोऽतिकायः स्वयम्भुवा ब्रह्मणो दत्तेन रथेन हरीन् वानरान् प्रमृत्नन् कालानलः प्रलयानलः तद्वत्प्रकाशमानो गन्धर्विकायां गन्धर्वकन्यायां दशास्यात् रावणाज्जातः उत्पन्नः एवं भूतोऽतिकायो युद्धमण्डले चचारेत्यर्थः ।।५५।।

**जनार्दनीया–** ततः युद्धोन्मत्तादिपञ्चानां मृतेरनन्तरम् । गन्धर्विकायां गन्धर्वसम्बन्धिकन्यकायाम् । दशास्याज्जनितः उत्पन्नः । कालानलेन प्रलयकालग्निना सन्निकाशः सदृशः । अतिरथः अतिकायः स्थूलदेहत्वाददतिकायनामा हरीन् प्रमृद्नन् मर्दयन् स्वयम्भुदत्तेन रथेन कपिसैन्यमध्ये चचार ।।५५।।

---

१. दृष्ट्वा तानागतांश्चैव युद्ध्यमानान् रणे रिपून् । अनयल्लक्ष्मणः षड्भिः शरैस्तीक्ष्णैर्यमालयम् ।। इति नरसिंहपुराणे त्रिशिरातिकायमहाकायदेवान्तकनरान्तकयुद्धोन्मत्तमत्तान् लक्ष्मणो जघानेत्युच्यते । तत्तु सङ्क्षेपशास्त्रम् । लक्ष्मणः खलु तत्रत्येष्वन्यतमं अतिकायमेव जघान । नतु अन्यान् । अतः विस्तारे यदुक्तं तदनुसृत्य एतेषां युद्धकथां निबबन्धुः आचार्यवर्याः । अतः सङ्क्षेपशास्त्रोक्तं अर्थान्तरपरमिति बोध्यम् । 'विस्तारे भीमनिहताः संक्षेपेऽर्जुनपातिताः । उच्यन्ते' इत्यादि निर्णयवाक्येषु अयं प्रकारः प्रकटितः ।

२. 'तनयं धन्यमालिन्या अतिकायमिमं विदुः । एतेनाराधितो ब्रह्मा तपसा भावितात्मना ।। अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः । सुरासुरैरवध्यत्वं दत्तमस्मै स्वयम्भुवा ।। एतच्च कवचं दिव्यं रथश्च रविभास्वरः । स रावणसुतो धीमान् देवदानवदर्पहा ।।' इत्यादि रामायणे । ६.७१.३०–३२

**चट्टी–** एवं युद्धोन्मत्तादिषण्णां मध्ये पञ्चानां विनाशमुक्त्वा अवशिष्टस्यातिकायस्य विनाशं वक्तुं आरभते– **तत इति** ।। अतः अनन्तरं गन्धर्विकायां गन्धर्वकन्यकायां दशास्यात् रावणात् जनितः उत्पादितः कालानलेन प्रलयकालग्निना सन्निकाशः सदृशः अतिरथः अतिकायः स्थूलदेहत्वात् तन्नाम स्वयम्भुवा ब्रह्मणा दत्तेन रथेन हरीन् कपीन् प्रमृद्नन् विलोडयन् कपिसेनामध्ये चचार ।।५५।।

**बृहत्तनुः कुम्भवदेव कर्णावस्येत्यतो नाम च कुम्भकर्णः ।**
**इत्यस्य सोऽर्कात्मजपूर्वकान् कपीन् जिगाय रामं सहसाऽभ्यधावत् ।।५६।।**

**व्यासतीर्थीया–** बृहत्तनुरतोऽस्यातिकाय इति नाम । अस्य कर्णौ कुम्भवदतोऽस्य कुम्भकर्ण इति च नाम । एतेन यद्भारते कुम्भकर्णस्य युद्धं तत्पतनं चोक्त्वा पश्चात् कुम्भकर्णोद्बोधनादिकमुक्तं तद्विरोधः परिहृतोऽपि भवतीति भावः ।।५६–५७।।

**वेदाङ्गतीर्थीया–** ग्रन्थान्तरे अतिकायोऽपि कुम्भकर्ण इत्युक्तः । अतः अतिकायः कुम्भकर्ण इति नामद्वयं तस्मिन् निरुक्त्या घटयति– **बृहत्तनुरित्यादिना** ।।५६।।

**वादिराजीया–** यो बृहत्तनुः अस्यातिकायस्य कर्णावेव कुम्भवद्भवत इत्यतो हेतोः अस्य कुम्भकर्ण इति नाम चास्ति । स इत्युत्तरेण सम्बन्धः । बृहत्तनुरिति वदता अतिकायशब्दार्थोऽपि सूचितः । मूलरामायणे अतिकायस्यैव कुम्भकर्णनाम्नापि निरूपणं कृतम् । अत इदं तात्पर्यमुक्तम् ।।५७–६१।।

**सत्याभिनवीया–** तत्रैव बृहत्तनुः कुम्भवदेव कर्णावस्ये ...इति श्लोकः । तस्यार्थः यस्य बृहत्तनुः बृहती तनुरस्येत्यतो हेतोः बृहत्तनुरिति नाम, अतिकाय इति नाम । कुम्भवत् कर्णौ अस्येति हेतोः कुम्भकर्ण इति च नाम बभूव । स एव अर्कात्मजपूर्वकान् कपीन् जिगाय । रामं सहसा अभ्यधावदिति । एतेन यत्तदोर्नित्यसम्बन्धात् स इति तच्छब्दश्रवणात् यच्छब्दाभावात् न्यूनतेति शङ्का परिहृता । यस्येत्यध्याहार इति स्वीकरणात् । एतेनैव बृहत्तनुरभूदिति हेतोः अतिकाय इति नामेति वक्तव्यम् । अतिकाय इति नामेति नास्तीति न्यूनतेति शङ्का परास्ता । बृहत्तनुरिति नामेति पदानामावृत्तिं स्वीकृत्य बृहत्तनुरिति नामेत्यस्य अतिकाय इति नामेति तात्पर्यार्थस्वीकरणात् । एतेनैव एवशब्दो व्यर्थमिति दूषणं परास्तम् । अतिकाय एक एव जिगायेति वक्तुं एवेत्यस्य स इत्यनेनान्वय इत्यभ्युपगमात् ।।५६।।

**वरदराजीया–** ग्रन्थान्तरे अतिकायस्य कुम्भकर्ण इति सञ्ज्ञास्ति तां घटयति– **बृहत्तनुरिति** ।। अस्यातिकायस्य बृहत्तनुः बृहती स्थूला तनुः अस्ति कर्णौ च कुम्भवदेव वर्ततः अतो अस्यातिकायस्य कुम्भकर्ण इति च नामेत्यर्थः । सोऽतिकायः अर्कात्मजपूर्वकान् कपीन् वानरान् जिगाय जितवान् सहसा बलेन रामं च अभ्यधावत् ।।५६।।

**जनार्दनीया–** 'लक्ष्मणेन कुम्भकर्णो हतः' इति ग्रन्थान्तरवाक्यविरोधं अतिकायस्य निरुक्तिपूर्वकं नामद्वयकथनेन परिहरन्नाह– **बृहत्तनुरिति** ।। यतोऽस्य बृहत्तनुः स्थूलदेहः अतः अतिकाय इति नामप्रसिद्धिरित्यर्थः । यतोऽस्य कर्णौ कुम्भवत् कुम्भाविव वर्तेते अतोऽस्यैव कुम्भकर्ण इति नाम प्रसिद्धिश्च । तस्मादिति नामद्वयवान् रावणपुत्रो लक्ष्मणेन हतः न तु रावणानुजो कुम्भकर्ण इति ग्रन्थन्तरवाक्यानि आचार्योक्त्या अनुकूलेन योज्यानीत्यर्थः । सोऽतिकायः अर्कात्मजः सूर्यजः सुग्रीवः । तदादिकपीन् जिगाय जितवान् । स एव रामं च रामं प्रति सहसा बलेन अभ्यधावत् अभिययौ ।।५६।।

**अनन्तभट्टीया–** कुम्भकर्ण इति नामेति सम्बन्धः ।।५६।।

**ताम्रपर्णीया–** ग्रन्थान्तरे अतिकायस्यैव कुम्भकर्णनाम्ना वर्णनं कृतं तत्तात्पात्पर्यमाह– **बृहत्तनुरिति** ।। अस्य तनुः बृहत्, कर्णौ च कुम्भवदेव इत्यतो अस्य कुम्भकर्ण इति नाम इत्यर्थः । यद्वा यो वृहत्तनु अतिकायो अस्य कुम्भवदेव कर्णौ इत्यतो अस्य कुम्भकर्ण इति नाम । सो अर्कात्मज इत्युत्तरेण सम्बन्धः ।।५६।।

**चट्टी–** लक्ष्मणेन कुम्भकर्णो हत इति ग्रन्थान्तरवाक्यविरोधं अतिकायस्य निरुक्तिपूर्वकं नामद्वयकथनेन परिहरन्नाह– **बृहत्तनुरिति** ।। यतोऽस्य बृहती तनुः अस्ति अतः अतिकाय इति नाम । यतोऽतिकायस्यैव कर्णौ कुम्भवत् अतो हेतोः अस्यैव कुम्भकर्ण इति नाम अस्ति । तेन ग्रन्थान्तरे कुम्भकर्णस्य युद्धं लक्ष्मणेन तद्धननं चोक्त्वा पश्चात् कुम्भकर्णोद्बोधनादिकमुक्तं तद्विरोधः परिहृत इति भावः । सः रावणपुत्रोऽतिकायः अर्कात्मजपूर्वकान् सुग्रीवपूर्वकान् कपीन् जिगाय जितवान् । स एव सहसा बलेन रामं च अभ्यधावत् अभिययौ ।।५६।।

**भावचन्द्रिका–** 'कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः । अभिदुद्राव सौमित्रं उद्यम्य महतीं शिलाम् ।।' [वनपर्व.२८८.१६] इत्युक्त्वा 'स बभूवातिकायश्च बहुपादशिरोभुजः । तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिवरोपमम् ।।' इत्युच्यते [वनपर्व.२८८.१९] तत्र लक्ष्मणहतस्यातिकायस्य कथं कुम्भकर्णत्वमित्यत आह– **बृहदिति** ।।५६–७९।।

**गूढवाक्यार्थ–** ग्रन्थान्तरे अतिकायस्य कुम्भकर्ण इति सञ्ज्ञास्ति तद्घटयति– **बृहत्तनुरिति** ।। यो बृहत्तनुरतिकायः अस्य कुम्भवदेव कर्णौ इत्यतोऽस्य कुम्भकर्ण इति च नाम । सोऽर्कात्मजेत्युत्तरेण अन्वयः ।।५६।।

**तमापतन्तं शरवर्षधारं महाघनाभं स्तनयित्नुघोषम् ।**
**निवारयामास यथा समीरः सौमित्रिरात्तेष्वसनः शरौघैः ।।५७।।**

**वेदाङ्गतीर्थीया–** समीरः यथा मेघमिति शेषः ।।५७–५९।।

**वरदराजीया–** तमतिकायमापतन्तं अभिद्रवन्तं शरवर्षस्य शरवृष्टेः धारा यस्य सः तं महाघनवत् मेघवत् आभातीति तथा तम् । स्तनयित्नुघोषं ..घोषो यस्य स तथा मेघध्वनिमित्यर्थः । एतादृशमतिकायं आत्तेष्वसनः आत्तशरासनः सौमित्रिः लक्ष्मणः समीरो वायुः मेघं यथा तथा निवारयामास ।।५७।।

**जनार्दनीया–** आत्तं गृहीतं इष्वसनं धनुः येन स तथा । सौमित्रिः लक्ष्मणः । शरवर्षस्य बाणवृष्टेः, सन्ततिः धाराः यस्मादसौ तथा तम् । 'धारास्त्वाग्रेऽम्बुसन्तत्यां सैन्याग्रेऽश्वगतिष्वपि' इत्यभिधानम् । महाघनस्य महामेघस्य आभेवाभा यस्य स तथा तम् । कृष्णवर्णमित्यर्थः । स्तनयित्नुवत् गर्जितमेघवत् घोषः शब्दो यस्य सः तथा तम् । आपतन्तं आयान्तं तं अतिकायं शरौघैः निवारयामास । तत्र दृष्टान्तमाह– **यथेति** ।। समीरो वायुः । मेघं यथा तथेत्यर्थः ।।५७।।

**अनन्तभट्टीया–** शरवर्षधारा यस्मिन् सः शरवर्षधारः । इष्वसनं धनुः ।।५७–५९।।

**ताम्रपर्णीया–** ।। **यथा समीर इति** ।। यथा प्रतिकूलो वायुः वर्षन्तं मेघं निवारयति तथा इत्यर्थः ।।५७–६०।।

**चट्टी–** आपतन्तं अभिद्रवन्तम् । शरवर्षस्य बाणवृष्टेः धारा यस्य स तम् । महाघनस्य महामेघस्य आभेवाभा यस्य तं कृष्णवर्णमित्यर्थः । स्तनयित्नोः मेघस्य घोषः इव घोषो यस्य सः तथा तं अतिकायम् । आत्तं गृहीतं इष्वसनं धनुः येन स तथा सौमित्रिः लक्ष्मणः शरोघैः बाणसमूहैः समीरो वायुः मेघमिति शेषः । यथा तथेत्यर्थः । निवारयामास ।।५७।।

**गूढवाक्यार्थ–** ।। **यथा समीर इति** ।। यथा प्रतिकूलो वायुः वर्षन्तं मेघं निवारयति तथेत्यर्थः ।।५७।।

**ववर्षतुस्तावतिमात्रवीर्यौ शरान् सुरेशाशनितुल्यवेगान् ।**
**तमोमयं चक्रतुरन्तरिक्षं [१]स्वशिक्षया क्षिप्रतरास्त्रबाणैः ।।५८।।**

**व्यासतीर्थीया–** मात्रां इयत्तामतिक्रान्तं वीर्यं ययोस्तौ अतिमात्रवीर्यौ ।।५८–६६।।

**वरदराजीया–** तौ लक्ष्मणातिकायौ अतिमात्रं अधिकं वीर्यं पराक्रमो ययोस्तौ तथा सुरेशस्य इन्द्रस्याशनिर्वज्रः तत्समौ वेगात् शरान् ववर्षतुः । क्षिप्रतरैरतिवेगवद्भिरस्त्रमन्त्रितैः बाणैः स्वशिक्षया स्वस्थाभ्यासेनान्तरिक्षं गगनं तमोमयं अन्धकारपूर्णं चक्रतुः ।।५८।।

---

१. 'सुशिक्षया' इति जनार्दनीयचट्टीटिप्पण्योः पाठान्तरम् ।

**जनार्दनीया—** अतिमात्रं अतिक्रान्तं परिमाणं वीर्यं पराक्रमो ययोः तौ तथा । अन्यवीर-वीर्यादप्यधिकवीर्यावित्यर्थः । तौ लक्ष्मणातिकायौ । सुरेशस्य अशनिर्वज्रः, तेन तुल्यः वेगो येषां ते तथा, तान् शरान् ववर्षतुः । अस्त्राणि च बाणाश्चास्त्रबाणाः । अस्त्रेणाभिमन्त्रितबाणा अस्त्रबाणा वा । क्षिप्रतराः अतिवेगवन्तः ते च ते अस्त्रबाणाश्च तैः । सुशिक्षया च तमोमयं अन्धकारव्याप्तं अन्तरिक्षं चक्रतुः ।।५८।।

**चट्टी—** अतिमात्रं अतिक्रान्तं परिमाणं वीर्यं पराक्रमो ययोः तौ तथा तौ लक्ष्मणातिकायौ सुरेशस्य इन्द्रस्य अशनिर्वज्रः तेन तुल्यः सदृशः वेगो एषां ते तथा तान् शरान् ववर्षतुः । क्षिप्रतरैः अतिवेगवद्भिः अस्त्रैः बाणैश्च सुशिक्षया च अन्तरिक्षं गगनं तमोमयं अन्धकारव्याप्तं चक्रतुः ।।५८।।

**शरैः शरानस्य निवार्य वीरः सौमित्रिरस्त्राणि महास्त्रजालैः ।**
**चिच्छेद बाहू शिरसा सहैव [1]चतुर्भुजोऽभूत् स पुनर्द्विशीर्षः ।।५९।।**

**वरदराजीया—** वीरः सौमित्रिः शरैरस्यातिकायस्य शरान्निवार्य तथा महद्भिरस्त्रजालैरस्त्राणि च निवार्य बाहू बाहुद्वयं शिरसा सह चिच्छेद सोऽतिकायः पुनः छेदनानन्तरं चतुर्भुजो द्विशीर्षश्चाभूत् ।।५९।।

**जनार्दनीया—** अस्यातिकायस्य शरान् शरैः निवार्य, महास्त्रजालैः दिव्यास्त्रसमूहैः तस्यास्त्राणि निवार्य, शिरसा सहैव बाहू चिच्छेद । सोऽतिकायः । पुनः बाह्वोः शिरसश्छेदनानन्तरम् ।।५९।।

**चट्टी—** वीरः सौमित्रिः अस्यातिकायस्य शरान् शरैः निवार्य महास्त्रजालैः दिव्यास्त्रसमूहैः तस्यास्त्राणि निवार्य शिरसा सहैव बाहू चिच्छेद । सोऽतिकायः पुनः छेदनानन्तरं द्विशीर्षः चतुर्भुजश्चाभूत् ।।५९।।

**छिन्नेषु तेषु द्विगुणास्यबाहुः पुनः पुनः सोऽथ बभूव वीरः ।**
**उवाच सौमित्रिमथान्तरात्मा समस्तलोकस्य [2]मरुद् विषण्णम् ।।६०।।**

**वेदाङ्गतीर्थीया—** पुनः पुनः छिन्नेषु पुनः पुनः द्विगुणास्यबाहुः । विषण्णं विगतच्छविम् ।।

---

१. तस्याभिपततस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ । चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः ।। तानप्यस्य भुजान् सर्वान् प्रगृहीतशिलायुधान् । क्षुरैश्चिच्छेद लघ्वस्त्रं सौमित्रिः प्रतिदर्शयन् ।। स बभूवातिकायश्च बहुपादशिरोभुजः ।। [वन.२८८.१७-१९] इति भारतीं कथां सङ्गृह्णाति-चतुर्भुजोऽभूदित्यादिना ।।

२. 'अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह । ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः ।। ब्राह्मेणास्त्रेण भिन्ध्येनं एष वध्यो हि नान्यथा । अवध्य एष ह्यन्येषां अस्त्राणां कवची बली ।। इति रामायणे । [६.७१.१०२-१०३]

**वरदराजीया–** तेषु छिन्नेषु पुनः द्विगुणास्यबाहुः तद्विगुणमुखबाहुरष्टभुजश्चतुःशीर्षश्चाभूदित्यर्थः । तेष्वपि छिन्नेषु तद्विगुणशिरोबाहुयुक्तो बभूवेत्याह– **पुनरिति** ।। अथानन्तरं विषण्णं श्रमवन्तं सौमित्रिं लक्ष्मणं समस्तस्य लोकस्यान्तरात्मा अन्तर्यामी मरुत् वायुरुवाच ।।६०।।

**जनार्दनीया–** तेषु चतुर्भुजशिरस्सु छिन्नेषु सत्सु । अथ सोऽपि वीरोऽतिकायः पुनः पुनः आस्यानि च बाहवश्च छिन्नेभ्यः द्विगुणिताः आस्यबाहवो यस्य स तथा तादृशो बभूव । बहुशीर्षबाहुको बभूवेति भावः । अथ शीर्षबाहुच्छेदनानन्तरम् । समस्तलोकस्य सर्वजगतः, अन्तरात्मा अन्तर्नियामकः । मरुत् मुख्यप्राणः । विषण्णं छेदनक्रियया श्रान्तं सौमित्रिं लक्ष्मणमुवाच ।।६०।।

**चट्टी–** तेषु चतुर्भुजेषु शिरसोश्च छिन्नेषु सत्सु अथ सोऽपि वीरोऽतिकायः पुनः पुनः उक्तन्यायेन द्विगुणास्यबाहुः बभूव । बहुशीर्षबाहुको बभूवेति भावः । अथ अनन्तरं विषण्णं भेदनक्रियया श्रान्तं सौमित्रिं समस्तलोकस्य सर्वजगतः अन्तरात्मा अन्तर्नियामकः मरुत् वायुः उवाच ।।६०।।

**अनन्तभट्टीया–** द्विगुणास्यबाहुः पूर्ववद् द्विगुणास्यबाहुकः । मरुत् मुख्यप्राणः ।।६०।।

**ब्रह्मास्त्रतोऽन्येन न वध्य एष वराद् विधातुः सुमुखेत्यदृश्यः ।**
**रक्षःसुतस्याश्रवणीयमित्थमुक्त्वा समीरोऽरुहदन्तरिक्षम् ।।६१।।**

**वादिराजीया–** सुमुखेति लक्ष्मणं प्रति सम्बुद्धिः । रक्षस्सुतस्याश्रवणीयमित्यत्र अश्रवणीयं यथा भवति तथेति क्रियाविशेषणम् ।।६२-६९।।

**सत्याभिनवीया–** तत्रैव रक्षस्सुतस्याश्रवणीयमित्थं ..इत्यस्ति । तस्यार्थः । समीरः यथा रक्षस्सुतस्य अतिकायस्य श्रवणीयं यथा न भवति तथा इत्थं पूर्वोक्तप्रकारेण वाक्यमुक्त्वा अन्तरिक्षमरुहदिति । एतेन वायुसामर्थ्येन रक्षस्सुतस्य वाक्यश्रवणं न जातमिति वक्तुं यथा रक्षस्सुतस्य श्रवणीयं न भवति तथा वाक्यमुक्त्वेति वक्तव्यम् । अश्रवणीयमिति वाक्यस्याश्रवणीयत्वकथनमनुपपन्नमिति दूषणं पराकृतम् । अश्रवणीयमित्यत्र पदद्वयम् । 'अ–मा–नो–नाः प्रतिषेधे' इत्युक्तत्वात् अकारस्य नञर्थत्वं यथेत्यादेः शेषं चाङ्गीकृत्य यथा रक्षस्सुतस्य श्रवणीयं न भवति, तथा वक्तव्यमुक्त्वेत्यर्थस्योक्तत्वात् ।।६१।।

**वरदराजीया–** किमिति हे लक्ष्मण विधातुः ब्रह्मणो वरात् ब्रह्मास्त्रतो ब्रह्मास्त्रादन्येनास्त्रेण एषोऽतिकायो न वध्य इत्युवाचेति पूर्वेणान्वयः । रक्षसो रावणस्य सुतोऽतिकायः तस्यादृश्यः समीरः इत्थं तस्याश्रवणीयं श्रोतुमयोग्यं वचनं उक्त्वा अन्तरिक्षमारुहत् गतवान् ।।६१।।

**जनार्दनीया–** उवाचेत्युक्तं विवृणोति– **ब्रह्मेति** ।। अदृश्यः लक्ष्मणादन्येषां दृष्ट्यगोचरः । समीरो वायुः । रक्षसः रावणस्य सुतस्यातिकायस्य अश्रवणीयं श्रवणेन्द्रियगोचरं यथा न भवति तथा । हे सुमुख लक्ष्मण । एषोऽतिकायः । विधातुर्वरात् अवध्यत्वेवरनिमित्तात् । ब्रह्मास्त्रतः ब्रह्मास्त्रं विनेत्यर्थः । अन्येन वध्यो न वधार्हो न । इत्थं अनेन प्रकारेण उक्त्वा, अन्तरिक्षं आरुहत् आरुरोह ।।६१।।

**अनन्तभट्टीया–** श्रवणीयं श्रवणगोचरं यथा तथेत्यर्थः ।।६१-६४।।

**ताम्रपर्णीया–** अश्रवणीयं वचनमिति शेषः । यथा भवति तथा इति क्रियाविशेषणं वा ।।६१-६२।।

**चट्टी–** किमित्युवाचेत्यत आह– **ब्रह्मेति** ।। लक्ष्मणादन्येषां दृष्ट्यगोचरः समीरो वायुः रक्षस्सुतस्य रावणसुतस्यातिकायस्य अश्रवणीयं श्रवणेन्द्रियागोचरं यथा भवति तथा । हे सुमुख लक्ष्मण एषोऽतिकायः विधातुः ब्रह्मणः वरात् अवध्यत्ववरनिमित्तात् ब्रह्मास्त्रतः ब्रह्मास्त्रादन्येन अस्त्रेण वध्यो न । इत्थं अनेन प्रकारेण उक्त्वा अन्तरिक्षं आरुहत् आरुरोह ।।६१।।

**भारतश्री–** ।। **रक्षःसुतस्याश्रवणीयमिति** ।। तेन श्रुतं चेद् युद्धं विहाय अपयातीति तस्याश्रवणीयत्वमुक्तः । जगामेति ज्ञातव्यम् ।।६१-७१।।

**गूढवाक्यार्थ–** अश्रवणीयं यथा भवति तथेति क्रियाविशेषणम् । उक्त्वा वचनमिति शेषः ।।६१।।

**अथानुजो[१] देवतमस्य सोऽस्त्रं ब्राह्मं तनूजे दशकन्धरस्य ।**
**मुमोच दग्धः सरथाश्वसूतस्तेनातिकायः प्रवरोऽस्त्रवित्सु ।।६२।।**

---

१. अत्राहुस्तिलककृतः'ब्राह्मेणास्त्रेण सौमित्रिर्ददाराद्रिवरोपमम्' इति महाभारतोक्त्या लक्ष्मणतः कुम्भकर्णवधः प्रतीयते । तथापि न विरोधः । रामलक्ष्मणाभ्यां मिलित्वा तद्वधकरणात् । अत पूर्वं 'लक्ष्मणानुचर' इत्यत्र लक्ष्मणसहित इति व्याख्यातम् । प्राधान्यात्तु अत्र रामस्यैव तद्धन्तृत्वोक्तिः । लक्ष्मणसाहित्येन हननात्तु व्यासो लक्ष्मणस्य हन्तृत्वमुक्तवान् ।' इति । सत्यधर्मश्रीचरणास्तु तिलकोक्तविरोधपरिहारप्रकारं प्रत्याचख्युः । तथाहि– 'भारते वनपर्वणि मार्कण्डेयोपाख्याने लक्ष्मणात् कुम्भकर्णवध उक्तो अत्र तु रामात् अतो विरोध इति चेत् । सत्यम् । सुमित्राया अपत्यं हि सौमित्रिः । तस्याश्च लक्ष्मणादपि प्रेमपदं राम इति तदपत्यत्वेनोक्तो व्यासेन दाशरथिरिति वा भाषात्रयेणोक्तेर्भारत इव अन्यत्राभावात् गुह्यभाषया राममाबोधयदिति वा । पुंव्यत्यासोऽपि 'शतं दुर्योधनादींस्ते धनञ्जयशरैर्हतान् । दर्शयिष्यामि' इति कृष्णेन कृष्णां प्रत्युदीरिते वचसि 'भीमसेनशरैर्हतान्' इति वक्तव्ये धनञ्जयेत्युक्तिवद्वा ज्ञेयः । 'मयैव वध्यौ भवतां त्रिजन्मसु' इति भागवतोक्तत्वात् हिरण्याक्ष-हिरण्यकशिप्वोः शिशुपालदन्तवक्त्रयोश्च नृसिंहयदुसिंहाभ्यां हतत्वदर्शनाच्च 'रामलक्ष्मणाभ्यां मिलित्वा तद्वधकरणात्' इत्यादिना नागोजीभट्टविरोधसमाधिकथनं कथमिति चिन्त्यम् ।' इति ।

**वरदराजीया–** तेषु छिन्नेषु पुनः द्विगुणास्यबाहुः तद्विगुणमुखबाहुरष्टभुजश्चतुःशीर्षश्चाभूदित्यर्थः । तेष्वपि छिन्नेषु तद्विगुणशिरोबाहुयुक्तो बभूवेत्याह– **पुनरिति** ।। अथानन्तरं विषण्णं श्रमवन्तं सौमित्रिं लक्ष्मणं समस्तस्य लोकस्यान्तरात्मा अन्तर्यामी मरुत् वायुरुवाच ।।६०।।

**जनार्दनीया–** तेषु चतुर्भुजशिरस्सु छिन्नेषु सत्सु । अथ सोऽपि वीरोऽतिकायः पुनः पुनः आस्यानि च बाहवश्च छिन्नेभ्यः द्विगुणिताः आस्यबाहवो यस्य स तथा तादृशो बभूव । बहुशीर्षबाहुको बभूवेति भावः । अथ शीर्षबाहुच्छेदनानन्तरम् । समस्तलोकस्य सर्वजगतः, अन्तरात्मा अन्तर्नियामकः । मरुत् मुख्यप्राणः । विषण्णं छेदनक्रियया श्रान्तं सौमित्रिं लक्ष्मणमुवाच ।।६०।।

**चट्टी–** तेषु चतुर्भुजेषु शिरसोश्च छिन्नेषु सत्सु अथ सोऽपि वीरोऽतिकायः पुनः पुनः उक्तन्यायेन द्विगुणास्यबाहुः बभूव । बहुशीर्षबाहुको बभूवेति भावः । अथ अनन्तरं विषण्णं भेदनक्रियया श्रान्तं सौमित्रिं समस्तलोकस्य सर्वजगतः अन्तरात्मा अन्तर्नियामकः मरुत् वायुः उवाच ।।६०।।

**अनन्तभट्टीया–** द्विगुणास्यबाहुः पूर्ववद् द्विगुणास्यबाहुकः । मरुत् मुख्यप्राणः ।।६०।।

**ब्रह्मास्त्रतोऽन्येन न वध्य एष वराद् विधातुः सुमुखेत्यदृश्यः ।**
**रक्षःसुतस्याश्रवणीयमित्थमुक्त्वा समीरोऽरुहदन्तरिक्षम् ।।६१।।**

**वादिराजीया–** सुमुखेति लक्ष्मणं प्रति सम्बुद्धिः । रक्षस्सुतस्याश्रवणीयमित्यत्र अश्रवणीयं यथा भवति तथेति क्रियाविशेषणम् ।।६२-६९।।

**सत्याभिनवीया–** तत्रैव रक्षस्सुतस्याश्रवणीयमित्थं ..इत्यस्ति । तस्यार्थः । समीरः यथा रक्षस्सुतस्य अतिकायस्य श्रवणीयं यथा न भवति तथा इत्थं पूर्वोक्तप्रकारेण वाक्यमुक्त्वा अन्तरिक्षमरुहदिति । एतेन वायुसामर्थ्येन रक्षस्सुतस्य वाक्यश्रवणं न जातमिति वक्तुं यथा रक्षस्सुतस्य श्रवणीयं न भवति तथा वाक्यमुक्त्वेति वक्तव्यम् । अश्रवणीयमिति वाक्यस्याश्रवणीयत्वकथनमनुपपन्नमिति दूषणं पराकृतम् । अश्रवणीयमित्यत्र पदद्वयम् । 'अ–मा–नो–नाः प्रतिषेधे' इत्युक्तत्वात् अकारस्य नञर्थत्वं यथेत्यादेः शेषं चाङ्गीकृत्य यथा रक्षस्सुतस्य श्रवणीयं न भवति, तथा वक्तव्यमुक्त्वेत्यर्थस्योक्तत्वात् ।।६१।।

**वरदराजीया–** किमिति हे लक्ष्मण विधातुः ब्रह्मणो वरात् ब्रह्मास्त्रतो ब्रह्मास्त्रादन्येनास्त्रेण एषोऽतिकायो न वध्य इत्युवाचेति पूर्वेणान्वयः । रक्षसो रावणस्य सुतोऽतिकायः तस्यादृश्यः समीरः इत्थं तस्याश्रवणीयं श्रोतुमयोग्यं वचनं उक्त्वा अन्तरिक्षमारुहत् गतवान् ।।६१।।

**जनार्दनीया–** उवाचेत्युक्तं विवृणोति– **ब्रह्मेति** ।। अदृश्यः लक्ष्मणादन्येषां दृष्ट्यगोचरः । समीरो वायुः । रक्षसः रावणस्य सुतस्यातिकायस्य अश्रवणीयं श्रवणेन्द्रियगोचरं यथा न भवति तथा । हे सुमुख लक्ष्मण । एषोऽतिकायः । विधातुर्वरात् अवध्यत्वैवरनिमित्तात् । ब्रह्मास्त्रतः ब्रह्मास्त्रं विनेत्यर्थः । अन्येन वध्यो न वधार्हो न । इत्थं अनेन प्रकारेण उक्त्वा, अन्तरिक्षं आरुहत् आरुरोह ।।६१।।

**अनन्तभट्टीया–** श्रवणीयं श्रवणगोचरं यथा तथेत्यर्थः ।।६१-६४।।

**ताम्रपर्णीया–** अश्रवणीयं वचनमिति शेषः । यथा भवति तथा इति क्रियाविशेषणं वा ।।६१-६२।।

**चट्टी–** किमित्युवाचेत्यत आह– **ब्रह्मेति** ।। लक्ष्मणादन्येषां दृष्ट्यगोचरः समीरो वायुः रक्षस्सुतस्य रावणसुतस्यातिकायस्य अश्रवणीयं श्रवणेन्द्रियागोचरं यथा भवति तथा । हे सुमुख लक्ष्मण एषोऽतिकायः विधातुः ब्रह्मणः वरात् अवध्यत्ववरनिमित्तात् ब्रह्मास्त्रतः ब्रह्मास्त्रादन्येन अस्त्रेण वध्यो न । इत्थं अनेन प्रकारेण उक्त्वा अन्तरिक्षं आरुहत् आरुरोह ।।६१।।

**भारतश्री–** ।। **रक्षःसुतस्याश्रवणीयमिति** ।। तेन श्रुतं चेद् युद्धं विहाय अपयातीति तस्याश्रवणीयत्वमुक्तः । जगामेति ज्ञातव्यम् ।।६१-७१।।

**गूढवाक्यार्थ–** अश्रवणीयं यथा भवति तथेति क्रियाविशेषणम् । उक्त्वा वचनमिति शेषः ।।६१।।

**अथानुजो[१] देवतमस्य सोऽस्त्रं ब्राह्मं तनूजे दशकन्धरस्य ।**
**मुमोच दग्धः सरथाश्वसूतस्तेनातिकायः प्रवरोऽस्त्रवित्सु ।।६२।।**

---

१. अत्राहुस्तिलककृतः'ब्राह्मेणास्त्रेण सौमित्रिर्ददाराद्रिवरोपमम्' इति महाभारतोक्त्या लक्ष्मणतः कुम्भकर्णवधः प्रतीयते । तथापि न विरोधः । रामलक्ष्मणाभ्यां मिलित्वा तद्वधकरणात् । अत पूर्वं 'लक्ष्मणानुचर' इत्यत्र लक्ष्मणसहित इति व्याख्यातम् । प्राधान्यात्तु अत्र रामस्यैव तद्धन्तृत्वोक्तिः । लक्ष्मणसाहित्येन हननात्तु व्यासो लक्ष्मणस्य हन्तृत्वमुक्तवान् ।' इति । सत्यधर्मश्रीचरणास्तु तिलकोक्तविरोधपरिहारप्रकारं प्रत्याचख्युः । तथाहि– 'भारते वनपर्वणि मार्कण्डेयोपाख्याने लक्ष्मणात् कुम्भकर्णवध उक्तो अत्र तु रामात् अतो विरोध इति चेत् । सत्यम् । सुमित्राया अपत्यं हि सौमित्रिः । तस्याश्च लक्ष्मणादपि प्रेमपदं राम इति तदपत्यत्वेनोक्तो व्यासेन दाशरथिरिति वा भाषात्रयेणोक्तेर्भारत इव अन्यत्राभावात् गुह्यभाषया राममाबोधयदिति वा । पुंव्यत्यासोऽपि 'शतं दुर्योधनादींस्ते धनञ्जयशरैर्हतान् । दर्शयिष्यामि' इति कृष्णेन कृष्णां प्रत्युदीरिते वचसि 'भीमसेनशरैर्हतान्' इति वक्तव्ये धनञ्जयेत्युक्तिवद्वा ज्ञेयः । 'मयैव वध्यौ भवतां त्रिजन्मसु' इति भागवतोक्तत्वात् हिरण्याक्ष-हिरण्यकशिप्वोः शिशुपालदन्तवक्रयोश्च नृसिंहयदुसिंहाभ्यां हतत्वदर्शनाच्च 'रामलक्ष्मणाभ्यां मिलित्वा तद्वधकरणात्' इत्यादिना नागोजीभट्टविरोधसमाधिकथनं कथमिति चिन्त्यम् ।' इति ।

**वरदराजीया–** अथानन्तरं देवतमस्य श्रीरामस्यानुजो लक्ष्मणो ब्राह्ममस्त्रं दशकन्धरस्य तनूजे अतिकाये मुमोच । तेन ब्रह्मास्त्रेणास्त्रवित्सु अस्त्रज्ञेषु प्रवरः श्रेष्ठोऽतिकायः रथाश्वसूतैः सह वर्तमानो दग्धोऽभूत् ।।६२।।

**जनार्दनीया–** अथ वायोर्वचनान्तरम् । देवतमस्य देवश्रेष्ठस्य रामस्य सोऽनुजो लक्ष्मणः ब्राह्मं ब्रह्मदैवतं अस्त्रं । दशकन्धरस्य दशग्रीवस्य तनुजेऽतिकाये मुमोच । अस्त्रवित्सु अस्त्रज्ञेषु प्रवरोऽतिकायः । तेनास्त्रेण रथाश्वसूतैः सह वर्तमानः सन् दग्धः भस्मसाद्बभूवेत्यर्थः ।।६२।।

**चट्टी–** अथ अनन्तरं देवतमस्य देवोत्तमस्य श्रीरामस्य अनुजो सः लक्ष्मणः ब्राह्मं ब्रह्मदैवतं अस्त्रं दशकन्धरस्य दशग्रीवस्य तनुजे पुत्रेऽतिकाये मुमोच । तेनास्त्रेण अस्त्रवित्सु अस्त्रज्ञेषु प्रवरो श्रेष्ठोऽतिकायः रथाश्वसूतैः सहितस्सन् दग्धः अभवत् ।।६२।।

**हतेषु पुत्रेषु स राक्षसेशः स्वयं प्रयाणं समरार्थमैच्छत् ।**
**सज्जीभवत्येव निशाचरेशे खरात्मजः प्राह धनुर्धरोत्तमः ।।६३।।**

**वरदराजीया–** एवं पुत्रेषु हतेषु सत्सु राक्षसेश्वरो रावणः स्वयं समरार्थे युद्धार्थं प्रयाणं गमनं ऐच्छत् । निशाचरेशे रावणे सज्जीभवति उद्योगं कुर्वति सति धनुर्धरेषूत्तमः खरात्मजो जनस्थानहतखरनामकराक्षसपुत्रो मकराक्षनामा प्राह ।।६३।।

**जनार्दनीया–** समरार्थं युद्धार्थम् । सज्जीभवति सति उद्योगं कुर्वति सति । खरस्यात्मजः मकराक्षः प्राह ।।

**ताम्रपर्णीया–** सज्जीभवति कवचसन्नहनादिना सन्नद्धो भवति इत्यर्थः ।।६३-६९।।

**चट्टी–** एवं पुत्रेषु हतेषु सः राक्षसेश्वरः रावणः स्वयं समरार्थं युद्धार्थं प्रयाणं गमनं ऐच्छत् । निशाचरेशे रावणे सज्जीभवति सति उद्योगं कुर्वति सति धनुर्धरोत्तमः खरस्यात्मजः मकराक्षनामा प्राह ।।

**गूढवाक्यार्थ–** सज्जीभवति कवचसम्बन्धादिना सन्नद्धीभवति सति ।।६३।।

**नियुंक्ष्व मां मे पितुरन्तकस्य वधाय राजन् सहलक्ष्मणं तम् ।**
**कपिप्रवीरांश्च निहत्य सर्वान् प्रतोषये त्वामहमद्य सुष्ठु ।।६४।।**

**वरदराजीया–** किमिति हे राजन् मे मम पितुः खरस्यान्तकस्य मृत्योः रामस्य वधाय मां नियुंक्ष्व नियोजय । लक्ष्मणेन सह वर्तमानं तं रामं तथा सर्वान् कपिप्रवीरांश्च हत्वा अहं त्वामद्य सुष्ठु यथा भवति तथा प्रतोषयिष्ये सन्तोषयिष्यामि ।।६४।।

**जनार्दनीया—** किमिति ? हे राजन् । मे पितुः खरस्य अन्तकस्य मृत्युभूतस्य रामस्य वधाय मां नियुक्ष्व आज्ञापय । अहं निहत्य, त्वां प्रतोषये तोषयामि ।।६४।।

**चट्टी—** किमिति । हे राजन् । मे पितुः खरस्य अन्तकस्य मृत्युभूतस्य रामस्य वधाय मां नियुक्ष्व नियोजय । अहं लक्ष्मणेन सह वर्तमानं तं रामं तथा सर्वान् कपिप्रवीरांश्च हत्वा अद्य त्वां सुष्ठु यथा भवति तथा प्रतोषये तोषयामि ।।६४।।

**इतीरिते तेन नियोजितः स जगाम वीरो मकराक्षनामा ।**
**विधूय सर्वांश्च हरिप्रवीरान् सहाङ्गदान् सूर्यसुतेन साकम् ।।६५।।**

**वरदराजीया—** इति तेन खरात्मजेनेरिते सति तेन रावणेन नियोजितो मकराक्षनामा स वीरो जगाम । सर्वान् सहाङ्गदान् अङ्गदेन सह वर्तमानान् कपिप्रवीरान् सूर्यसुतेन सुग्रीवेण साकं विधूय विद्राव्य लक्ष्मणमुक्तान् बाणसमूहान् अवज्ञया अचिन्तयन् अथ रणे राममाह्वयत् आहूतवान् ।।६५।।

**जनार्दनीया—** इति ईरिते उक्ते सति । तेन रावणेन नियोजितः आज्ञापितः । वीरः स मकराक्षनामा । सूर्यसुतेन साकं सह । सर्वान् विधूय विद्राव्य ।।६५।।

**अनन्तभट्टीया—** साकं विधूयेति सम्बन्धः ।।६५।।

**चट्टी—** इति तेन खरात्मजेन ईरिते सति तेन रावणेन नियोजितः आज्ञापितः वीरः स मकराक्षनामा तथा सहाङ्गदान् अङ्गदेन सह वर्तमानान् ।।६५।।

**गूढवाक्यार्थ—** साकं सह स्थितानिति योग्यपदाध्याहारः ।।६५।।

**अचिन्तयन् लक्ष्मणबाणसङ्घानवज्ञया राममथाऽह्वयद् रणे ।**
**उवाच रामं रजनीचरोऽसौ हतो जनस्थानगतः पिता त्वया ।।६६।।**

**सत्याभिनवीया—** तत्रैव विधूय सर्वांश्च हरिप्रवीरान्सह इति श्लोके अवज्ञयेत्यस्य अवज्ञया युक्तं कुर्वन् इत्यर्थः । एतेन आह्वानं प्रति अवज्ञायाः करणत्वाभावात् राममवज्ञया आह्वयदिति कथनमयुक्तमिति दूषणं निरस्तम् । अवज्ञयेत्यस्य आह्वयदित्यनेन अन्वयमनङ्गीकृत्य अध्याहृतेन युक्तं कुर्वन् इत्यनेनान्वयस्योक्तत्वात् । रामस्य अवज्ञां कुर्वन्निति वक्तव्ये राममवज्ञया युक्तं कुर्वन् इत्युक्त्या अवज्ञाया अतिशयितत्वं सूचयति ।।६६।।

**मधुसूदनीया–** जनस्थानगतः जनस्थाने नासिकाक्षेत्रे गतः । 'कृते तु पद्मनगरं त्रेतायां तु त्रिकण्टकम् । द्वापरे तु जनस्थानं कलौ नासिकमुच्यते ॥' इति च वचनात् ॥६६–६७॥

**जनार्दनीया–** लक्ष्मणेन मुक्तबाणसङ्घान् अवज्ञया तिरस्कारेण अचिन्तयन् अगणयन् सन् । रामं रणे रणाय युद्धार्थमित्यर्थः । आह्वयत् । असौ रामं प्रति उवाच । किमिति ? धनुर्धराणां मध्ये वरः श्रेष्ठः । जनस्थानं दण्डकारण्यं गतः प्राप्तः पिता मत्पिता खरः केनाप्युपायेन मन्त्रौषधछद्माद्युपायवलेनैव । न तु वीर्येणेत्यर्थः । त्वया हतः । तस्य वधस्य फलं अद्य ते ददामीत्युवाचेति सम्बन्धः । इति पूर्वोक्तप्रकारेण ब्रुवाणः । सरोजं पद्मं योनिः कारणं यस्य स तथा तस्य ब्रह्मणः वरादवध्यः स मकराक्षः अस्त्रसङ्घान् अमुचत् ॥६६–६७॥

**अनन्तभट्टीया–** अवज्ञां विशदयति– **उवाचेति** ॥ वः पितेति सम्बन्धः । जनस्थानगतः दण्डकारण्यस्थितः ॥६६–६८॥

**चट्टी–** सूर्यसुतेन सुग्रीवेन साकं सह वर्तमानान् सर्वान् कपिप्रवीरान् विधूय विद्राव्य लक्ष्मणेन मुक्तबाणसङ्घान् अवज्ञया तिरस्कारेण अचिन्तयन् अगणयन् अथ रामं रणे रणाय आह्वयत् आहूतवान् ॥

**अतिविशद–** जनस्थानगतः नासिकां गतः । 'कृते तु पद्मनगरं त्रेतायां तु त्रिकण्टकम् । द्वापरे तु जनस्थानं कलौ नासिकमुच्यते ॥' इति वचनात् ॥६६–८७॥

**प्रमाणसंग्रह–** ॥ **जनस्थानगतेति** ॥ 'कृते तु पद्मनगरं त्रेतायां तु त्रिकण्टकम् । द्वापरे तु जनस्थानं कलौ नासिकमुच्यते ॥' ॥६७ ॥

**केनाप्युपायेन धनुर्धराणां वरः फलं तस्य ददामि तेऽद्य ।**
**इति ब्रुवाणः स सरोजयोनेर्वरादवध्योऽमुचदस्त्रसङ्घान् ॥६७॥**

**व्यासतीर्थीया–** केनापि छद्मना ॥६७–७१॥

**वेदाङ्गतीर्थीया–** केनाप्युपायेन हतः । न तु वीर्येणेति भावः ॥६७–६८॥

**वरदराजीया–** असौ रजनीचरो मकराक्षो राममुवाच किमिति जनस्थानगतो दण्डकारण्याश्रम-विशेषस्थितो धनुर्धराणां उत्तमः पिता केनाप्युपायेन छद्मना हतो न पराक्रमेण तस्य फलं अद्य ते ददामि इत्युवाचेति पूर्वेणान्वयः । इत्युक्तरीत्या ब्रुवाणो वदन् सरोजयोनेः ब्रह्मणो वरात् अवध्यो अस्त्रसङ्घानमुचत् ॥६६–६७॥

**चट्टी–** असौ रजनीचरः मकराक्षः रामं उवाच । किमिति । धनुर्धराणां मध्ये वरः श्रेष्ठः जनस्थानगतः जनस्थानं नासिकाक्षेत्रं गतः प्राप्तः । 'कृते पद्मपुरं नाम त्रेतायां तु त्रिकण्टकम् । द्वापरे तु जनस्थानं कलौ नासिकमुच्यते ।।' इति वचनात् । मे पिता खरः केनाप्युपायेन मन्त्रौषधादिछद्मना न तु वीर्येणेत्यर्थः । त्वया हतः तस्य वधस्य फलं अद्य ददामीत्युवाचेति पूर्वेणान्वयः । इति उक्तरीत्या ब्रुवाणः वदन् सरोजं पद्मं योनिः कारणं यस्य स तथा तस्य ब्रह्मणः वरादवध्यः स मकराक्षः अस्त्रसङ्घान् अमुचत् ।।६७।।

**प्रहस्य रामोऽस्य निवार्य चास्त्रैरस्त्राण्यमेयोऽशनिसन्निभेन ।**
**शिरः [१]शरेणोत्तमकुण्डलोज्ज्वलं खरात्मजस्याथ समुन्ममाथ ।।६८।।**

**मधुसूदनीया–** ।। **प्रहस्य राम इति** ।। 'कथ्यसे किं महारक्षो बहून्यसदृशानि तु । न रणे शक्यते जेतुं विना युद्धेन वाग्बलात् ।।' इति रामायणोक्तप्रकारेण [६.७९.१८] परिहासं कृत्वेत्यर्थः ।।६८–७०।।

**वरदराजीया–** अमेयो अप्रमेयो रामः प्रहस्य हसित्वा अस्य मकराक्षस्यास्त्राणि अस्त्रैर्निवार्य अशनिसन्निभेन वज्रसदृशेन शरेण उत्तमकुण्डलाभ्यां उज्ज्वलप्रकाशमानं खरात्मजस्य शिरः उन्ममाथ मथितवान् ।।६८।।

**जनार्दनीया–** अमेयः न मातुं सर्वप्रकारैः ज्ञातुं योग्यः । रामः प्रहस्य, अस्य मकराक्षस्य । निवार्य, अशनिना सन्निभेन सदृशेन शरेण खरात्मजस्य शिरः समुन्माथ चिच्छेदेत्यर्थः ।।६८।।

**चट्टी–** अमेयः अप्रमेयः रामः प्रहस्य अस्य मकराक्षस्य अस्त्राणि अस्त्रवरैः निवार्य, अथ अशनिना वज्रेण सन्निभेन सदृशेन शरेण उत्तमकुण्डलाभ्यां ज्वलत् प्रकाशमानं खरात्मजस्य शिरः समुन्माथ चिच्छेदेत्यर्थः ।।६८।।

**प्रमाणसंग्रह–** ।। **प्रहस्य राम इति** ।। अपहस्येत्यर्थः । 'कथ्यसे किं महारक्षो बहून्यसदृशानि तु । न रणे शक्यते जेतुं विना युद्धेन वाग्बलात् ।।' इत्यादि रामायणे ।।६८।।

**प्रदुद्रुवुस्तस्य तु येऽनुयायिनः कपिप्रवीरैर्निहतावशेषिताः ।**
**यथैव धूम्राक्षमुखेषु पूर्वं हतेषु पृथ्वीरुहशैलधारिभिः ।।६९।।**

**वेदाङ्गतीर्थीया–** पृथ्वीरुहशैलधारिभिः कपिप्रवीरैरिति सम्बन्धः ।।६९–७१।।

---

१. पावकास्त्रं ततो रामः सन्दधे तु शरासने । तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे ।। वा.रा.६.७९.३८

**वादिराजीया–** जनस्थानाधिपतित्वेन तस्य पृथक् सेनाऽस्तीति विशेषद्योतनाय तस्य तु येऽनुयायिन इत्युक्तम् । रावणपुत्राणां वधसमये सहागतसेनावधस्य प्रागनिरूपणात् दृष्टान्तमुखेन तदपि सूचयितुं यथैव धूम्राक्षमुखेष्वित्युक्तम् ।।६९।।

**वरदराजीया–** तस्य मकराक्षस्यानु पापिनो ये सहागतास्ते पृथ्वीरुहशैलधारिभिः कपिप्रवीरैर्निहताः । निहतेषु अवशेषिताः प्रदुद्रुवुः । [यथा पूर्वं धूम्राक्षमुखेषु हतेषु पृथ्वीरुहशैलधारिभिः वृक्षपर्वतधारिभिः वानरैः निहतावशेषिताः प्रदुद्रुवुः] तथैवेत्यर्थः ।।६९।।

**जनार्दनीया–** पृथ्वीरुहाः वृक्षाः, शैलाः पर्वताः, तान् धरन्ति ते तथा तैः । कपिप्रवीरैः निहतेभ्यः अवशेषिताः । तस्य मकराक्षस्य ये अनुयायिनः अनुचराः ते तथा प्रदुद्रुवुः । तथा कथं ? पूर्वं हतेषु सत्सु यथैव तथैवेत्यर्थः ।।६९।।

**अनन्तभट्टीया–** निहतावशेषिताः निहतेभ्यः अवशेषिताः ।।६९।।

**चट्टी–** पृथ्वीरुहाः वृक्षाः शैलाः पर्वताः तान् धरन्ति तथा तैः कपिप्रवीरैः निहतेभ्यः अवशेषिताः तस्य मकराक्षस्य ये अनुयायिनः भृत्याः ते पूर्वं धूम्राक्षमुखेषु निहतेषु हतावशिष्टाः तद्भृत्याः प्रदुद्रुवुः । रावणपुत्राणां वधसमये सहागतसेनावधस्य प्रागनिरूपणात् दृष्टान्तमुखेन तदपि सूचयितुं यथैव धूम्राक्षमुखेष्वित्युक्तम् ।।६९।।

**ततः [१]स सज्जीकृतमात्तधन्वा रथं समास्थाय निशाचरेश्वरः ।**
**वृतः सहस्रायुतकोट्यनीकपैर्निशाचरैराशु ययौ रणाय ।।७०।।**

**वादिराजीया–** सज्जीकृतः अनुचरैः कवचबन्धादिना सन्नद्धीकृत इत्यर्थः । सहस्रायुतकोट्यनीकपैः सहस्रवारं अयुतसङ्ख्याकाः येषु तैः । कोटिवारं कोटिसङ्ख्याकानीकपयुक्तैरिति यावत् ।।७०–७१।।

**वरदराजीया–** ततः निशाचरो रावणः आत्तधन्वा अधिज्यधन्वा सज्जीकृतः सपरिकारो भूत्वा सहस्रायुतकोट्यनीकपैः अयुताधिकसहस्रकोटिसङ्ख्याकैः अनीकैः वीरैः निशाचरैः राक्षसैः वृतः आशु रणाय युद्धार्थं ययौ ।।७०।।

**जनार्दनीया–** ततः तदनन्तरम् । सज्जीकृतः युद्धसामग्र्युपेत इत्यर्थः । आत्तं गृहीतं धनुः येनासौ तथा । सहस्रसङ्ख्याकानि च तान्ययुतानि च तथा, तेषां कोटिसङ्ख्या येषां ते तथा । ते च ते

१. इतःपरं आअष्टनवतितमश्लोकं निबद्धां कथां वाल्मीकिः पूर्वमेव [प्रहस्तवधानन्तरम्] अकथयत् । 'पूर्वां कथां परं ब्रूयुः पराः पूर्वं तथैव च । मोहनार्थाय दुष्टानां सर्वं व्यत्यासयिष्यते ।।' इति भागवततात्पर्ये [१०.८०.१५] उक्तत्वात् न विरोधः शङ्कनीयः ।

अनीकपाश्च सेनापतयः तैः । तादृशैः निशाचरैर्वृतः आवृतः । सः निशाचरेश्वरो रावणः रथं समास्थाय आरुह्य, आशु जवेन रणाय ययौ ॥७०॥

**अनन्तभट्टीया–** सहस्रायुतकोट्यनीकपैः सहस्रायुतसङ्ख्याकाः अनीकपाः सेनानायकाः येषु तैः कोटिवारं कोटिसङ्ख्याकानीकपायुक्तैरिति यावत् ॥७०–७१॥

**ताम्रपर्णीया–** ॥ **सहस्रायुतकोट्यनीकपैरिति** ॥ सहस्रवारं अयुतसङ्ख्याकाः कोट्यः अनीकपाः सेनानायकाः येषु तैः । कोटिवारं कोटिसङ्ख्याकानीकपयुक्तैरिति यावत् । यद्वा निशाचराणां व्यूहभेदेन केषाञ्चित् सहस्रानीकपयुक्तत्वं अन्येषां कोट्यनीकपवत्त्वं इति दृष्टव्यम् ॥७०–७१॥

**चट्टी–** ततः सः निशाचरेश्वरो रावणः । आत्तं गृहीतं धनुः येन स आत्तधन्वा सन् सज्जीकृतः सपरिवारो भूत्वा सहस्रायुतकोट्यनीकपैः सहस्रसङ्ख्याकानि च तान्ययुतानि च तथा तेषां कोटिसङ्ख्या येषां ते तथा । ते च ते अनीकपाश्च सेनापतयश्चः तैः तादृशैः निशाचरैर्वृतः सन् रथं समारुह्य आशु वेगेन रणाय ययौ ॥७०॥

**गूढवाक्यार्थ–** ॥ **सहस्रायुतकोट्यनीकपैरिति** ॥ सहस्रवारमयुतसङ्ख्याकाः कोट्यः । अनीकपाः सेनानायका येषु तैः कोटिवारं गणितकोटिसङ्ख्यानीकपयुक्तैरिति यावत् ॥७०॥

**बलैस्तु तस्याथ बलं कपीनां नैकप्रकारायुधपूगभग्नम् ।**
**दिशः प्रदुद्राव हरीन्द्रमुख्याः [१]समर्दयन्नाशु निशाचरांस्तदा ॥७१॥**

**मधुसूदनीया–** ॥ **बलैस्तु तस्याथ बलं कपीनामिति** ॥ कपीनां बलं वक्ष्यमाणसङ्ख्या-विशेषयुक्तम् । तदुक्तम्–

'प्राहुर्लक्षशतं कोटिं तल्लक्षं शङ्कुनामकम् । शङ्कुलक्षे महाशङ्कु तल्लक्षं वृन्दमुत्तमाः ॥
वृन्दलक्षं महावृन्दं तल्लक्षं पद्ममप्युत । पद्मलक्षं महापद्मं तल्लक्षं खर्वमभ्यधुः ॥
खर्वलक्षं महाखर्वं तल्लक्षं धूलिमप्युत । धूलिलक्षं महाधूलिः तल्लक्षं तु समुद्रकम् ॥
समुद्रलक्षं कवयो महौघं कीर्तयन्ति हि । पश्य सङ्ख्यामिमां राजन् स्वामिन् वानरमण्डले ॥'
इत्यादि स्कान्दपुराणे सङ्ग्रहरामायणे च [६.३.१९–२२] ॥७१-९७॥

**वरदराजीया–** अथानन्तरं तस्य रावणस्य बलैः कपीनां बलं सैन्यं नैकप्रकारायुधपूगभग्नं अनेकप्रकाराणां आयुधानां पूगेन समूहेन भग्नं भङ्गं प्राप्तं सत् दिशो दशदिशः प्रदुद्राव । हरीन्द्रेषु कपीश्वरेषु मुख्याः सुग्रीवाङ्गदादयस्तदाशु निशाचरान् समर्दयन् ॥७१॥

---

१. समासदन् इति जनार्दनीयचट्टीटिप्पण्योः पाठान्तरम् ।

**जनार्दनीया–** तस्य रावणस्य बलैः । न एकप्रकाराणि नैकप्रकाराणि बहुविधानीत्यर्थः । तानि च तान्यायुधानि च, तेषां पूगेन समूहेन भग्नं पराभवं प्राप्तम् । कपीनां बलं दिशः प्रदुद्राव । तदा तस्मिन् समये । हरीन्द्रमुख्याः कपिश्रेष्ठाः निशाचरान् समर्दयन् अर्दयामासुः । 'समासदन्' इति वा पाठः ।।

**चट्टी–** अथ अनन्तरं तस्य रावणस्य बलं कपीनां बलं सैन्यं न एकप्रकाराणि नैकप्रकाराणि बहुविधानीत्यर्थः । तानि च तान्यायुधानि च तेषां पूगेन समूहेन भग्नं भङ्गं प्राप्तं सत् दिशः प्रदुद्राव । तदा तस्मिन् समये हरीन्द्रेषु कपिश्रेष्ठेषु मुख्याः प्रधानाः सुग्रीवादयः आशु निशाचरान् समर्दयन् अर्दयामासुः । 'समासदन्' इति वा पाठः ।।७१।।

**प्रमाणसंग्रह–** ।। **बलैस्तु तस्याथ बलं कपीनामिति** ।। रावणबलान्यसङ्ख्यानि । स्कन्दपुराणोक्त-प्रकारेण कपिबलं सङ्ख्याविशेषयुक्तम् । 'प्राहुर्लक्षशतं कोटिं तल्लक्षं शङ्कुनामकम् । शङ्कुलक्षे महाशङ्कु तल्लक्षं वृन्दमुत्तमाः ।। वृन्दलक्षं महावृन्दं तल्लक्षं पद्ममप्युत । पद्मलक्षं महापद्मं तल्लक्षं खर्वमभ्यधुः ।। खर्वलक्षं महाखर्वं तल्लक्षं धूलिमप्युत । धूलिलक्षं महाधूलिः तल्लक्षं तु समुद्रकम् ।। समुद्रलक्षं कवयो महौघं कीर्तयन्ति हि । पश्य सङ्ख्यामिमां राजन् स्वामिन् वानरमण्डले ।।' इत्यादि सङ्ग्रहरामायणे च ।।७१-९७।।

**गजो[१] गवाक्षो गवयो वृषश्च सगन्धमादा धनदेन जाताः ।**
**प्राणादयः पञ्च मरुत्प्रवीराः स कत्थनो वित्तपतिश्च जघ्नुः ।।७२।।**

**व्यासतीर्थीया–** कत्थनोपि जघान । धनदेन जाताः गजादयः पूर्वं केत्याह– **प्राणादय इति** ।। पूर्वं सः कत्थनो वित्तपतिरिति योज्यम् ।।७२-७३।।

**वेदाङ्गतीर्थीया–** धनदेन जाता गजादयः पञ्च । कत्थनश्च जघ्नुरिति योजना । गजादयः पूर्वं कत्थनश्च क इत्यत आह– **प्राणादय इति** ।। प्राणादयः पञ्च मरुत्प्रवीरा पूर्वमिति शेषः । कत्थनः पूर्वं वित्तपतिः । सः गजादिजनकत्वेन प्रकृतः कुबेरः ।।७२-७३।।

**वादिराजीया–** धनदेन कत्थनाख्येन वानररूपिणा धनदेन । कत्थनः कत्थनरूपी वित्तपतिश्चेति सम्बन्धः ।।७२-७३।।

---

१. अत्र पठिताः गजवृषगन्धमादाः रामायणे ऋषभज्योतिमुखनल इति पर्यायनाम्ना पठ्यन्ते । ततो गवाक्षो गवयः सुदंष्ट्रस्तथर्षभो ज्योतिमुखो नलश्च । शैलान् समुत्पाट्य विवृद्धकायाः प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रम् ।। [६.५९.४२]। 'ऋषभेण गवाक्षेण गजेन गवयेन च' इति पूर्वत्र 'गवाक्षो भीमविक्रमः' 'गवयो नाम यूथपः' 'गजश्च बलवान् वीरः'। 'हरिभिर्गन्धमादनः' इति निर्णयपठितनाम्नैव व्यवहारदर्शनात् ।

**वरदराजीया–** सगन्धमादाः गन्धमादेन सह वर्तमानाः । गजादयः पञ्च पूर्वं प्राणादयः प्राणापानव्यानोदानसमानाः पञ्च मरुत्सु एकोनपञ्चाशन्मरुत्सु श्रेष्ठाः धनदेन कुबेरेण जाता इत्यर्थः । तत्किं मूलरूपेण कुबेरेणोत्पादिताः नेत्याह– **स इति** ।। स एतत्पञ्चनां जनको वित्तपतिः कुबेरः कत्थनो जातः । कुबेरावतारात् कत्थनात् वानरादेते गजादयो वानरा जाता इति भावः । एते गजादयः कत्थनेन पित्रा सहिता रावणबलं जघ्नुरित्यर्थः ।।७२।।

**जनार्दनीया–** पूर्वं मरुत्सु एकोनपञ्चाशन्मरुत्सु प्रवीराः श्रेष्ठाः प्राणादयः प्राणादिसमानान्ताः पञ्च इदानीं धनदेन जाताः । हेतुत्वमात्रे तृतीया । न तेन 'जनिकर्तुः' इति पञ्चमी । रामावतारे कुबेरपुत्रा इत्यर्थः । गन्धमादेन सहिताः । गजः गवाक्षः गवयः वृषश्च । कुबेरपुत्रत्वे गजादिनामवन्त इत्यर्थः । सः प्रसिद्धः गजादीनां पिता वित्तपतिः कुबेरः कत्थनः कत्थननामा वानरः । कुबेरावतारः कत्थनः, प्राणादीनामवतारभूताः गजादयः पञ्च, एवं षट् कपिप्रवीराः । सेनां रावणं च जघ्नुरिति योजना ।।७२।।

**अनन्तभट्टीया–** सगन्धमादा इति अध्याहृतेनेत्यस्य विशेषणम् । धनदेन धनदात् । स वित्तपतिश्च कत्थनो जातः...*इति शेषः । मुख्यप्राण...*भूताः गजगवाक्षगवयवृषगन्धमादाः...*कुबेराज्जाताः । कत्थनस्तु कुबेरपुत्र कुबेर एव । ...*जघ्नुरित्यर्थः ।।७२-७७।।

**ताम्रपर्णीया–** ।। **धनदेनेति** ।। मूलरूपिकुबेरेण इत्यर्थः । कत्थनश्च जघान इति सम्बन्धः । स च वित्तपतिरिति योजना । वादिराजतीर्थीये तु 'धनदेन कत्थनाख्यवानररूपिणा धनदेन । कत्थनः कत्थनरूपी स वित्तपतिश्च इति सम्बन्धः' इति व्याख्यातम् ।।७२-७३।।

**चट्टी–** पूर्वं मरुत्सु एकोनपञ्चाशन्मरुत्सु प्रवीराः श्रेष्ठाः प्राणादयः प्राणापानव्यानोदानसमानाः पञ्च इदानीं धनदेन धनदावतारेण कत्थनेन गजादयः सन्तः जाताः । सः प्रसिद्धः गजादीनां पिता कत्थनः पूर्वं वित्तपतिः कुबेरावतारः । कत्थनः एकः प्राणादीनामवतारभूताः सगन्धमादाः गजादयः पञ्च । एवं षट् कपिप्रवीराः सेनां रावणं च जघ्नुरिति योजना । यद्वा सः प्रसिद्धः वित्तपतिः कुबेरः कत्थनो जातः । प्राणादयः पञ्च मरुत्प्रवीराः पञ्च सगन्धमादाः गजः गवाक्षः गवयः वृषश्च धनदेन धनदात्मककत्थनेन जाताः एवं च एषां पिता कत्थनः एकः । अस्य पुत्राः गजादयः पञ्चेति षट्कपिप्रवीराः सेनां रावणं च जघ्नुरित्यर्थः ।।७२।।

**भारतश्री–** सः वित्तपतिः कत्थनो जात इति व्यत्ययेन वर्तते । एते षट् कत्थनान्ताः गजाद्याः जघ्नुः । निशाचरमिति वर्तते ।।७२-७७।।

**गूढवाक्यार्थ–** ।। **धनदेनेति** ।। मूलरूपिकुबेरेणेत्यर्थः । कत्थनश्च जघानेति सम्बन्धः । स कथम्भूतः पूर्वं वित्तपतिरिति योज्यम् ।।७२।।

**शरैस्तु तान् षड्भिरमोघवेगैर्निपातयामास दशाननो द्राक् ।**
**अथाश्विपुत्रौ सहजाम्बवन्तौ प्रजह्रतुः शैलवरैस्त्रिभिस्तम् ॥७३॥**

**वरदराजीया–** दशाननो रावणो तान् षट्कपीन् अमोघवेगैः अव्यर्थवेगैः शरैः द्राक् क्षणमात्रेण निपातयामास । अथानन्तरं अश्विपुत्रौ विविदमैन्दौ जाम्बवता सह वर्तमानौ त्रिभिः शैलवरैः पर्वतश्रेष्ठैः प्रजह्रतुः ताडयामासुः ॥७३॥

**जनार्दनीया–** तान् गजादीन् षट् । द्राक् आशु । जाम्बवता सहितौ । तं रावणं प्रजह्रतुः ततक्षतुः ॥

**चट्टी–** दशाननो रावणः तान् गजादीन् षट्कपीन् अमोघवेगैः षट्सङ्ख्याकैः शरैः द्राक् आशु निपातयामास । अथ अनन्तरं अश्विपुत्रौ विविदमैन्दौ जाम्बवता सहितौ सन्तौ त्रिभिः शैलवरैः तं रावणं प्रजह्रतुः ताडयामासतुः ॥७३॥

**गिरीन् विदार्याऽशु शरैरथान्याञ्छरान् दशास्योऽमुचदाशु तेषु ।**
**एकैकमेभिर्विनिपातितास्ते ससार तं शक्रसुतात्मजोऽथ ॥७४॥**

**व्यासतीर्थीया–** एकैकमिति क्रियाविशेषणम् ॥७४-७५॥

**वेदाङ्गतीर्थीया–** एकैकममुचत् । विनिपातिता बभूवुः ॥७४-७८॥

**वादिराजीया–** एकैकं यथा भवति तथेति क्रियाविशेषणम् ॥७४-७६॥

**वरदराजीया–** अथानन्तरं दशास्यो रावणः त्रिभिः शरैः गिरीन् तान् त्रीन् पर्वतान् विदार्य चूर्णयित्वा तेषु विदारितेषु अन्यान् त्रीन् शरान् अमुचत् । एकैकं एकैकस्मिन् अमुचत् एभिः शरैः विविदादयो निपातिताः मूर्च्छां प्रापिताः । अथानन्तरं शक्रसुतस्य वालिनः आत्मजो अङ्गदः तं रावणं ससार प्राप्तवान् ॥

**जनार्दनीया–** शरैः गिरीन् विदार्य, अथ अन्यान् त्रीन् शरानादायेति शेषः । तेषु मैन्दादित्रिषु । एकैकं एकमेकं शरमित्यर्थः । अमुचत् । एभिः रावणमुक्तत्रिशरैः ते मैन्दादित्रयो विनिपातिताः । अथ तं रावणम् ॥७४॥

**ताम्रपर्णीया–** एकैकं यथा भवति तथा इति क्रियाविशेषणम् ॥७४-७९॥

**चट्टी–** दशास्यो रावणः शरैः गिरीन् विदार्य अथ अन्यान् त्रीन् शरानादायेति शेषः । तेषु विविदादिषु एकैकं यथाभवति तथा आशु अमुचत् । एभिः रावणमुक्तत्रिशरैः ते विविदादित्रयो विनिपातिताः मूर्च्छां प्रापिताः । अथ शक्रसुतस्य वालिनः आत्मजो अङ्गदः तं रावणं ससार ॥७४॥

**गूढवाक्यार्थ–** एकैकं यथा भवति तथेति क्रियाविशेषणम् ।।७४।।

**शिलां समादाय तमापतन्तं बिभेद रक्षो हृदये शरेण ।**
**दृढाहतः सोऽप्यगमद् धरातळं रवेः सुतोऽथैनमभिप्रजग्मिवान् ।।७५।।**

**वरदराजीया–** शिलां पाषाणं समादाय गृहीत्वा आपतन्तं अभिद्रवन्तं अङ्गदं रक्षो रावणो हृदये शरेण बिभेद अविध्यत् । सोऽङ्गदोऽपि दृढमाहतो विद्धो धरातलमगमत् अपतदित्यर्थः । अथानंतरं रवेः सुतः सुग्रीवः एनं रावणं अभिप्रजग्मिवान् गतवान् ।।७५।।

**जनार्दनीया–** रक्षः रावणः । तं अङ्गदम् । दृढं आहतः । सोऽङ्गदः धरातलं अगमत् भुवि पपातेति भावः । एनं रावणं अभिप्रजग्मिवान् अभ्याययौ ।।७५।।

**चट्टी–** शिलां पाषाणं समादाय गृहीत्वा समापतन्तं अङ्गदं रक्षः रावणः हृदये शरेण बिभेद । सोऽङ्गदोऽपि दृढं आहतः विद्धः धरातलं भूतलं अगमत् । भुवि पपातेति भावः । अथ अनन्तरं रवेः सुतः सुग्रीवः एनं रावणं अभिप्रजग्मिवान् अभ्याययौ ।।७५।।

**तद्धस्तगं भूरुहमाशु बाणैर्दशाननः खण्डश एव कृत्वा ।**
**ग्रीवाप्रदेशेऽस्य मुमोच बाणं भृशाहतः सोऽपि पपात भूमौ ।।७६।।**

**व्यासतीर्थीया–** खण्डशः खण्डान् ।।७६–९१।।

**वरदराजीया–** दशाननो रावणः तस्य सुग्रीवस्य हस्तगं हस्ते स्थितं भूरुहं वृक्षं बाणैः खण्डशः चूर्णयित्वा अस्य सुग्रीवस्य ग्रीवाप्रदेशे कण्ठप्रदेशे बाणं मुमोच । भृशं आहतस्ताडितः सोऽपि सुग्रीवोऽपि भूमौ पपात ।।७६।।

**जनार्दनीया–** तस्य सुग्रीवस्य । हस्तगं करे विद्यमानं भूरुहं वृक्षम् । खण्डश एव खण्डानीति खण्डशः कृत्वा, वृक्षस्य सूक्ष्मभागान् कृत्वेत्यर्थः । अस्य सुग्रीवस्य ग्रीवाप्रदेशे कण्ठमूले मुमोच । भृशं आहतः विद्धः । सोऽपि सुग्रीवः ।।७६।।

**चट्टी–** दशाननो रावणः तस्य सुग्रीवस्य हस्तगं हस्ते निहितं भूरुहं वृक्षं आशु बाणैः खण्डश खण्डानि कृत्वा चूर्णयित्वेत्यर्थः । अस्य सुग्रीवस्य ग्रीवाप्रदेशे कण्ठमूले बाणं मुमोच । सः सुग्रीवोऽपि भृशं आहतः विद्धः भूमौ पपात ।।७६।।

**अथो [१]हनूमानुरगेन्द्रभोगसमं स्वबाहुं भृशमुन्नमय्य ।**
**तताड वक्षस्यधिपं तु रक्षसां मुखैः स रक्तं प्रवमन् पपात ।।७७।।**

**वादिराजीया–** तु रामेणैव रावणो हन्तव्य इति कार्यविशेषेण । शिशुं भीषयन् पितेव हस्तोन्नमनं सम्यक् कृत्वाऽपि यथा रावणो न मरिष्यति तथा लघुतया तताडेति भावः । अत एव 'अत्यल्पमेतत्' इति स्वयमेव वदिष्यति । उक्तं च महानाटके 'भर्तुः कर्मभटस्य नोचितमिति त्यक्तो मया रावण' इति ।।

**सत्याभिनवीया–** तत्रैव अथो हनूमानुरगेन्द्रभोग इति श्लोके हनुमद्बाहोः उरगेन्द्रभोगसममिति उरगेन्द्रभोग-समत्वोक्त्या पुष्टिं ज्ञापयति । एतेन हनुमद्बाहोः ताडनसामर्थ्यं ज्ञापयितुं तदुपयुक्तं विशेषणं वक्तव्यम् । उरगेन्द्रभोगसममिति उरगेन्द्रभोगसाम्यकथनमसङ्गतमिति चोद्यं प्रत्युक्तम् । ताडनसामर्थ्य-ज्ञापकपुष्टिः उरगेन्द्रभोगसममित्यनेनोच्यत इति स्वीकरणात् ।।७७।।

**वरदराजीया–** अथानन्तरं हनूमानुरगेन्द्रस्य शेषस्य भोगेन शरीरेण समानं स्वस्य बाहुं उन्नमय्य रक्षसाधिपतिं रावणं वक्षसि भृशं तताड ताडितवान् । स रावणो मुखैर्दशभिर्मुखैः रक्तं वमन् उद्गिरन् पपात ।।

**जनार्दनीया–** अथ हनूमान् । उरसा वक्षसा गच्छन्तीति उरगाः सर्पाः, तेषां इन्द्र ईशः शेषः, तस्य भोगो देहः, तेन समः तुल्यः, तम् । स्वबाहुं उन्नमय्य उद्धृत्य, रक्षसां अधिपं रावणं वक्षसि हृदि भृशं तताड । स रावणः मुखैः सर्वमुखैः रक्तं प्रकर्षेण वमन् सन् पपात ।।७७।।

**चट्टी–** अथ अनन्तरं हनूमान् उरसा वक्षसा गच्छन्तीति उरगाः सर्पाः तेषां इन्द्रः शेषः तस्य भोगो देहः तेन समः तुल्यः तं स्वबाहुं उन्नमय्य उद्धृत्य रक्षसां अधिपं वक्षसि भृशं तताड । स रावणः मुखैः दशभिः रक्तं प्रकर्षेण वमन् सन् पपात ।।७७।।

**स लब्धसञ्ज्ञः प्रशशंस मारुतिं त्वया समो नास्ति पुमान् हि कश्चित् ।**
**कः प्रापयेदन्य इमां दशां मामितीरितो मारुतिराह तं पुनः ।।७८।।**

**वरदराजीया–** स रावणो लब्ध्वा सञ्ज्ञा ज्ञानं यस्य स तथा अपगतमूर्च्छ इत्यर्थः । मारुतिं हनूमन्तं प्रशशंस । किमिति त्वया समः पुमान् कश्चिद्देशे काले वा नास्ति अतः अन्यः कः पुमान् मे इमां दशां

१. आजघान च सङ्क्रुद्धस्तलेनैवामरद्विषम् । ततः स तेनाभिहतो वानरेण महात्मना ।। दशग्रीवः समाधूतो यथा भूमितलेऽचलः । सङ्ग्रामे तं तथा दृष्ट्वा रावणं तलताडितम् ।। ऋषयो वानराः सिद्धाः नेदुर्देवाः सहामरैः । अथाश्वास्य महातेजा रावणो वाक्यमब्रवीत् ।। साधु वानर वीर्येण श्लाघनीयोऽसि मे रिपुः । रावणेनैवमुक्तस्तु मारुतिर्वाक्यमब्रवीत् ।। ततस्त्वां मामको मुष्टिः नयिष्यति यमक्षयम् ।। इति [६.५९.६२-६७]

प्रापयेत् न कोऽपीत्यर्थः । त्वं तु प्रापितवानसि तस्मात् त्वत्समो नास्तीति भावः । इतीरितः स्तुतो मारुतिः हनूमान् पुनरावृत्य तं रावणमाह ॥७८॥

**जनार्दनीया–** लब्धसञ्ज्ञः प्राप्तसञ्ज्ञः स रावणः मारुतिं प्रशशंस तुष्टाव । किमिति ? त्वया समः कश्चित्पुमान् नास्ति । हि यतः अन्यः त्वदन्यः कः पुमान् इमां दशां मूर्च्छावस्थां प्रापयेत् ? कोऽपि न प्रापयेदित्यर्थः । अतस्त्वत्समो नास्तीत्यर्थः । रावणेनेतीरितो मारुतिः । पुनः रावणोक्त्यनन्तरं तं रावणं प्रत्याह ॥७८॥

**अनन्तभट्टीया–** पुमान् वीरः ॥७८–८२॥

**चट्टी–** सः रावणः लब्धा आप्ता सञ्ज्ञा येन स तथाभूतस्सन् मारुतिं हनुमन्तं प्रशशंस । किमिति । त्वया समः कश्चित्पुमान् नास्ति । यतः त्वदन्यः कः पुमान् मां इमां दशां अवस्थां प्रापयेत् न कोऽपि प्रापयेदित्यर्थः । अतस्त्वत्समो नास्तीत्यर्थः । रावणेनेतीरितो सः मारुतिः पुनः तं रावणं प्रत्याह ॥

**भारतश्री–** त्वया समो नास्ति पुमान् हि कश्चिदिति ॥ पुमानपि त्वया समो कश्चित् नास्ति किमु वानरादि इत्यर्थः । यद्यपि भवान् वानरः तथापि त्वत्सदृशाः पुरुषा अपि न सन्ति इति भावः । विशेष...* अर्थः सूच्यते ॥७८॥

**अत्यल्पमेतद् यदुपात्तजीवितः पुनस्त्वमित्युक्त उवाच रावणः ।**
**गृहाण मत्तोऽपि समुद्यतं त्वं मुष्टिप्रहारं त्विति तं पुपोथ ॥७९॥**

**वेदाङ्गतीर्थीया–** पुपोथ सम्प्राहरत् ॥७९–८४॥

**वादिराजीया–** यत् यस्मात् पुनः मदीयताडनान्तरं त्वमुपात्तजीवितोऽसि तस्मादेतत् मया कृतं ताडनं अत्यल्पं इत्युक्तो रावण उवाचेति योजना । तं हनुमन्तं तु स्वशक्तिविशेषो यावान् तावता पुपोथ ॥

**वरदराजीया–** किमिति एतद्बलं अत्यल्पमेव प्रदर्शितं यद्यस्मात्पुनरुपात्तं प्राप्तं जीवितं जीवयन्तं स तथा पुनरुज्जीवितोऽसीत्यर्थः । समग्रे बले प्रयोजिते पुनरुज्जीवनमेव तव दुर्लभं स्यादिति भावः । इत्युक्तो रावणः उवाच । किमिति । मत्तोऽपि मत्तः सकाशादपि त्वं समुद्यतं मुष्टिप्रहारं गृहाणेति तं हनूमन्तं पुपोथ तताड ॥७९॥

**जनार्दनीया–** किमिति ? हे रावण एतत् त्वयि प्रयोजितबलम् । अत्यल्पं मया अल्पं बलं प्रयोजनमिति भावः । कुतः ? यद्यस्मात् त्वं । उपात्तं प्राप्तं जीवितं जीवनं येन स तथा । असीति शेषः । तस्मादेतदल्पमित्यर्थः । इत्युक्तो रावणः पुनरुवाच । किमिति ? मत्तोऽपि मत्सकाशादपि । समुद्यतं उद्युक्तं मुष्टेः प्रहारं गृहाण स्वीकुर्वित्युक्त्वा, तं हनूमन्तं पुपोथ ॥७९॥

**चट्टी–** किमिति । हे रावण त्वयि प्रयोजितं एतद्बलं अत्यल्पम् । कुतः यद्यस्मात् त्वं पुनः उपात्तं प्राप्तं जीवनं यस्य स तथा असि इति शेषः । तस्मादेतदल्पमित्यर्थः । इत्युक्तो रावणः पुनरुवाच । किमिति । मत्तोऽपि मत्सकाशादपि त्वं समुद्यतं उद्युक्तं मुष्टिप्रहारं गृहाण स्वीकुर्वित्युक्त्वा तं हनूमन्तं पुपोथ तताड ।।७९।।

**गूढवाक्यार्थ–** यदुपात्तजीवित इति यत् यस्मात् उपात्तजीवितः । अपि तु विशेषाकारेण ।।७९।।

**किञ्चित् प्रहारेण तु विह्वलाङ्गवत् स्थिते हि तस्मिन्निदमन्तरं मम ।**
**इत्यग्निसूनुं प्रययौ स रावणो निवारितो मारुतिनाऽपि वाचा ।।८०।।**

**वादिराजीया–** तु शक्तिविशेषात् प्रहारेणापि यावच्छक्तिप्रहारेणेत्यर्थः । किञ्चिद्विह्वलाङ्गवत्स्थिते सतीति सम्बन्धः । हीत्यनेन हनुमतो बलाधिक्यं सुप्रसिद्धमिति सूचयति ।।८०–८७।।

**वरदराजीया–** प्रहारेण मुष्टिप्रहारेण किञ्चित् ईषत् विह्वलाङ्गवत् चञ्चलीभूतपुरुषवत् स्थिते स्वस्य विह्वलाङ्गत्वं प्रदर्श्य स्थिते सतीत्यर्थः । मम इदं अन्तरं अयमेवावकाश इत्यभिप्रायेण रावणो अग्निसूनुं नीलं प्रति ययौ । मारुतिना हनूमता मा गच्छेति वाचा निवारितोऽपीत्यर्थः ।।८०।।

**जनार्दनीया–** तस्मिन् हनूमति । प्रहारेण ताडनेन किञ्चित् अत्यन्तमीषत् विह्वलाङ्गवत् भ्रान्त इव स्थिते सति । इदं हनुमदवस्थानं मम अन्तरं गन्तुमवकाशः इति विचार्य, स रावणः मारुतिना वाचा पुनः युद्धं कुरु मा गच्छेत्येवं रूपवाक्येन निवारितोऽपि अग्निसूनुं नीलं प्रति ययौ ।।८०।।

**ताम्रपर्णीया–** किञ्चिद्विह्वलाङ्गवत् स्थिते सति इति सम्बन्धः ।।८०–९२।।

**चट्टी–** तस्मिन् हनूमति प्रहारेण किञ्चित् ईषत् विह्वलाङ्गवत् भ्रान्त इव स्थिते सति इदं हनुमदवस्थानं मम अन्तरं गन्तुमवकाशः इत्यभिप्रायेण स रावणः मारुतिना वाचा मा गच्छेत्येवंरूपया वाचा निवारितोऽपि अग्निसूनुं नीलं प्रति ययौ ।।८०।।

**भारतश्री–** विह्वलवदवस्थिते । तस्य युद्धाशाजननार्थमिति विशेषः तुशब्दसूचितः । हि एव इदमित्यनेन सम्बन्धः ।।८०–८७।।

**भावचन्द्रिका–** ।। **किञ्चिदिति** ।। 'ब्रह्मणोऽप्यल्पदुःखं स्यात्तदप्यनभिमानतः । नास्त्यात्मसम्बद्धतया भोगाभावात्कथञ्चन ।।' इति वचनात् । [बृ.भा.३.५] 'नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते ।' इति [सू.भा.३.१.] वचनादत्रार्थोऽवगन्तव्यः ।।८०–८५।।

**गूढवाक्यार्थ–** रावणस्य ...*वच्छक्तिप्रहारेणेत्यर्थः । किञ्चित् विह्वलाङ्गवत् स्थिते सतीति सम्बन्धः ।।

**तमापतन्तं प्रसमीक्ष्य नीलो धनुर्ध्वजाग्राश्वरथेषु तस्य ।**
**चचार मूर्धस्वपि चञ्चलोऽलं जडीकृतस्तेन स रावणोऽपि ॥८१॥**

**वरदराजीया–** आपतन्तं अभिद्रवन्तं रावणं नीलः प्रसमीक्ष्य धनुषि ध्वजाग्रे अश्वेषु रथे च मूर्धसु शिरःस्वप्यलमत्यन्तं चञ्चलः सन् चचार । एवं तेन नीलेन स तादृशसामर्थ्योपेतो रावणोऽपि जडीकृतः कर्तव्यमूढः कृत इत्यर्थः ॥८१॥

**जनार्दनीया–** नीलः तं रावणं प्रसमीक्ष्य दृष्ट्वा, चञ्चलः सन् एकत्रास्थिरः सन्नित्यर्थः । तस्य रावणस्य । धनुश्च ध्वजाग्रं चाश्वाश्च रथश्च तथा तेषु । मूर्धस्वपि रावणमस्तकेष्वपि चचार । नीलः धनुरादिषु चचार परंतु एकत्र स्थिरो न बभूवेत्यर्थः । स रावणोऽपि युद्धशौण्डोऽपीत्यर्थः । तेन नीलेन अलं जडीकृतः कर्तव्यकर्मणि विवेकशून्यः कृतः ॥८१॥

**चट्टी–** नीलः आपतन्तं अभिद्रवन्तं तं रावणं प्रसमीक्ष्य दृष्ट्वा तस्य रावणस्य धनुश्च ध्वजाग्रं चाश्वाश्च तथा तेषु मूर्धसु रावणमस्तकेष्वपि अलमत्यन्तं चञ्चलस्सन् एकत्र अस्थिरस्सन् चचार । एवं तेन नीलेन तादृशसामर्थ्योपेतो रावणः जडीकृतः कर्तव्यकर्मणि विवेकशून्यः कृतः ॥८१॥

**गूढवाक्यार्थ–** जडीकृतः कर्तव्यमूढः कृतः ॥८१॥

**स क्षिप्रमादाय [1]हुताशनास्त्रं मुमोच नीले रजनीचरेशः ।**
**स तेन भूमौ पतितो न चैनं ददाह [2]वह्निः स्वतनुर्यतोऽसौ ॥८२॥**

**वरदराजीया–** सः रजनीचरेशो रावणः क्षिप्रं वेगेन हुताशनास्त्रं आग्नेयास्त्रं आदाय नीले मुमोच । स नीलः तेन हुताशनास्त्रमन्त्रितेन बाणेन भूमौ पतितः परन्तु मन्त्रदेवता वह्निः एनं नीलं नैव ददाह । कुतः यतः कारणात् असौ नीलः स्वतनुः स्वस्यावतार इत्यर्थः ॥८२॥

**जनार्दनीया–** हुताशनास्त्रं आग्नेयास्त्रम् । क्षिप्रं शीघ्रम् । तेनास्त्रेण स नीलः । वह्निः यतोऽसौ नीलः स्वतनुः स्वावतारः अत एनं नीलं न ददाह ॥८२॥

**चट्टी–** सः रजनीचरेशो रावणः क्षिप्रं वेगेन हुताशनस्य अग्नेः अस्त्रं आग्नेयास्त्रं आदाय प्रमुमोच । स नीलः तेन हुताशनास्त्रेण भूमौ पातितः । परन्तु मन्त्रदेवता वह्निः यतोऽसौ नीलः स्वतनुः स्वावतारः अत एनं नीलं न ददाह ॥८२॥

---

१. रावणोऽपि महातेजा कपिलाघवविस्मितः । अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुतम् ॥६.५९.८२

२. सोऽस्त्रमुक्तेन बाणेन नीलो वक्षसि ताडितः । निर्दह्यमानः सहसा स पपात महीतले ॥ पितृमाहात्म्यसंयोगात् आत्मनश्चापि तेजसा । जानुभ्यामपतत् भूमौ न तु प्राणैर्वियुज्यत् ॥ ६.५९.९०-९१

**चट्टी–** किमिति । हे रावण त्वयि प्रयोजितं एतद्बलं अत्यल्पम् । कुतः यद्यस्मात् त्वं पुनः उपात्तं प्राप्तं जीवनं यस्य स तथा असि इति शेषः । तस्मादेतदल्पमित्यर्थः । इत्युक्तो रावणः पुनरुवाच । किमिति । मत्तोऽपि मत्सकाशादपि त्वं समुद्यतं उद्युक्तं मुष्टिप्रहारं गृहाण स्वीकुर्वित्युक्त्वा तं हनूमन्तं पुपोथ तताड ।।७९।।

**गूढवाक्यार्थ–** यदुपात्तजीवित इति यत् यस्मात् उपात्तजीवितः । अपि तु विशेषाकारेण ।।७९।।

**किञ्चित् प्रहारेण तु विह्वलाङ्गवत् स्थिते हि तस्मिन्निदमन्तरं मम ।**
**इत्यग्निसूनुं प्रययौ स रावणो निवारितो मारुतिनाऽपि वाचा ।।८०।।**

**वादिराजीया–** तु शक्तिविशेषात् प्रहारेणापि यावच्छक्तिप्रहारेणेत्यर्थः । किञ्चिद्विह्वलाङ्गवत्स्थिते सतीति सम्बन्धः । हीत्यनेन हनुमतो बलाधिक्यं सुप्रसिद्धमिति सूचयति ।।८०–८७।।

**वरदराजीया–** प्रहारेण मुष्टिप्रहारेण किञ्चित् ईषत् विह्वलाङ्गवत् चञ्चलीभूतपुरुषवत् स्थिते स्वस्य विह्वलाङ्गत्वं प्रदर्श्य स्थिते सतीत्यर्थः । मम इदं अन्तरं अयमेवावकाश इत्यभिप्रायेण रावणो अग्निसूनुं नीलं प्रति ययौ । मारुतिना हनूमता मा गच्छेति वाचा निवारितोऽपीत्यर्थः ।।८०।।

**जनार्दनीया–** तस्मिन् हनूमति । प्रहारेण ताडनेन किञ्चित् अत्यन्तमीषत् विह्वलाङ्गवत् भ्रान्त इव स्थिते सति । इदं हनुमदवस्थानं मम अन्तरं गन्तुमवकाशः इति विचार्य, स रावणः मारुतिना वाचा पुनः युद्धं कुरु मा गच्छेत्येवं रूपवाक्येन निवारितोऽपि अग्निसूनुं नीलं प्रति ययौ ।।८०।।

**ताम्रपर्णीया–** किञ्चिद्विह्वलाङ्गवत् स्थिते सति इति सम्बन्धः ।।८०–९२।।

**चट्टी–** तस्मिन् हनूमति प्रहारेण किञ्चित् ईषत् विह्वलाङ्गवत् भ्रान्त इव स्थिते सति इदं हनुमदवस्थानं मम अन्तरं गन्तुमवकाशः इत्यभिप्रायेण स रावणः मारुतिना वाचा मा गच्छेत्येवंरूपया वाचा निवारितोऽपि अग्निसूनुं नीलं प्रति ययौ ।।८०।।

**भारतश्री–** विह्वलवदवस्थिते । तस्य युद्धाशाजननार्थमिति विशेषः तुशब्दसूचितः । हि एव इदमित्यनेन सम्बन्धः ।।८०–८७।।

**भावचन्द्रिका–** ।। **किञ्चिदिति** ।। 'ब्रह्मणोऽप्यल्पदुःखं स्यात्तदप्यनभिमानतः । नास्त्यात्मसम्बद्धतया भोगाभावात्कथञ्चन ।।' इति वचनात् । [बृ.भा.३.५] 'नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते ।' इति [सू.भा.३.१.] वचनादत्रार्थोऽवगन्तव्यः ।।८०–८५।।

**गूढवाक्यार्थ–** रावणस्य ...*वच्छक्तिप्रहारेणेत्यर्थः । किञ्चित् विह्वलाङ्गवत् स्थिते सतीति सम्बन्धः ।।

**तमापतन्तं प्रसमीक्ष्य नीलो धनुर्ध्वजाग्राश्वरथेषु तस्य ।**
**चचार मूर्धस्वपि चञ्चलोऽलं जडीकृतस्तेन स रावणोऽपि ॥८१॥**

**वरदराजीया–** आपतन्तं अभिद्रवन्तं रावणं नीलः प्रसमीक्ष्य धनुषि ध्वजाग्रे अश्वेषु रथे च मूर्धसु शिरःस्वप्यलमत्यन्तं चञ्चलः सन् चचार । एवं तेन नीलेन स तादृशसामर्थ्योपेतो रावणोऽपि जडीकृतः कर्तव्यमूढः कृत इत्यर्थः ॥८१॥

**जनार्दनीया–** नीलः तं रावणं प्रसमीक्ष्य दृष्ट्वा, चञ्चलः सन् एकत्रास्थिरः सन्नित्यर्थः । तस्य रावणस्य । धनुश्च ध्वजाग्रं चाश्वाश्च रथश्च तथा तेषु । मूर्धस्वपि रावणमस्तकेष्वपि चचार । नीलः धनुरादिषु चचार परंतु एकत्र स्थिरो न बभूवेत्यर्थः । स रावणोऽपि युद्धशौण्डोऽपीत्यर्थः । तेन नीलेन अलं जडीकृतः कर्तव्यकर्मणि विवेकशून्यः कृतः ॥८१॥

**चट्टी–** नीलः आपतन्तं अभिद्रवन्तं तं रावणं प्रसमीक्ष्य दृष्ट्वा तस्य रावणस्य धनुश्च ध्वजाग्रं चाश्वाश्च तथा तेषु मूर्धसु रावणमस्तकेष्वपि अलमत्यन्तं चञ्चलस्सन् एकत्र अस्थिरस्सन् चचार । एवं तेन नीलेन तादृशसामर्थ्योपेतो रावणः जडीकृतः कर्तव्यकर्मणि विवेकशून्यः कृतः ॥८१॥

**गूढवाक्यार्थ–** जडीकृतः कर्तव्यमूढः कृतः ॥८१॥

**स क्षिप्रमादाय [1]हुताशनास्त्रं मुमोच नीले रजनीचरेशः ।**
**स तेन भूमौ पतितो न चैनं ददाह [2]वह्निः स्वतनुर्यतोऽसौ ॥८२॥**

**वरदराजीया–** सः रजनीचरेशो रावणः क्षिप्रं वेगेन हुताशनास्त्रं आग्नेयास्त्रं आदाय नीले मुमोच । स नीलः तेन हुताशनास्त्रमन्त्रितेन बाणेन भूमौ पतितः परन्तु मन्त्रदेवता वह्निः एनं नीलं नैव ददाह । कुतः यतः कारणात् असौ नीलः स्वतनुः स्वस्यावतार इत्यर्थः ॥८२॥

**जनार्दनीया–** हुताशनास्त्रं आग्नेयास्त्रम् । क्षिप्रं शीघ्रम् । तेनास्त्रेण स नीलः । वह्निः यतोऽसौ नीलः स्वतनुः स्वावतारः अत एनं नीलं न ददाह ॥८२॥

**चट्टी–** सः रजनीचरेशो रावणः क्षिप्रं वेगेन हुताशनस्य अग्नेः अस्त्रं आग्नेयास्त्रं आदाय प्रमुमोच । स नीलः तेन हुताशनास्त्रेण भूमौ पातितः । परन्तु मन्त्रदेवता वह्निः यतोऽसौ नीलः स्वतनुः स्वावतारः अत एनं नीलं न ददाह ॥८२॥

---

१. रावणोऽपि महातेजा कपिलाघवविस्मितः । अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुतम् ॥६.५९.८२

२. सोऽस्त्रमुक्तेन बाणेन नीलो वक्षसि ताडितः । निर्दह्यमानः सहसा स पपात महीतले ॥ पितृमाहात्म्यसंयोगात् आत्मनश्चापि तेजसा । जानुभ्यामपतत् भूमौ न तु प्राणैर्वियुज्यत् ॥ ६.५९.९०-९१

**ततो ययौ राघवमेव रावणो निवारयामास तमाशु लक्ष्मणः ।**
**ततक्षतुस्तावधिकौ धनुर्भृतां शरैः शरीरावरणावदारणैः ॥८३॥**

**वरदराजीया—** ततस्तदनन्तरं रावणो राघवमेव ययौ लक्ष्मणः तं रावणं आशु निवारयामास मा गच्छेति निवारितवान् । धनुर्भृतां धनुर्धराणां मध्ये अधिकौ उत्तमौ तौ लक्ष्मणरावणौ शरीरावरणानि चर्माणि अवदारयन्तीति तथा तैः परस्परं ततक्षतुः ताडयामासतुः ॥८३॥

**जनार्दनीया—** तं रावणम् । धनुर्भृतां मध्ये अधिकौ श्रेष्ठौ लक्ष्मणरावणौ । शरीरस्य आवरणं कवचं अवदारयन्ति भेदयन्तीति तथा तैः शरैः ततक्षतुः परस्परं ताडयामासतुः ॥८३॥

**अनन्तभट्टीया—** शरीरावरणं वर्म ॥८३-८५॥

**चट्टी—** ततः तदनन्तरं रावणः राघवमेव ययौ । लक्ष्मणः तं रावणं आशु निवारयामास । मा गच्छेति निवारितवान् । धनुर्भृतां धनुर्धराणां मध्ये अधिकौ श्रेष्ठौ तौ लक्ष्मणरावणौ शरीरस्य आवरणं कवचं अवदारयन्तीति तथा तैः शरैः परस्परं ततक्षतुः ताडयामासतुः ॥८३॥

**निवारितस्तेन स रावणो भृशं रुषाऽन्वितो [1]बाणममोघमुग्रम् ।**
**स्वयम्भुदत्तं प्रविकृष्य चाऽशु ललाटमध्ये प्रमुमोच तस्य ॥८४॥**

**वरदराजीया—** तेन लक्ष्मणेन निवारित इति हेतुः भृशमत्यन्तं रुषान्वितः कोपेन युक्तः सन् अमोघं अव्यर्थं उग्रं प्राणापहारकं स्वयंभुवा ब्रह्मणा स्वस्य दत्तं बाणं आशु विकृष्य कर्णांतं नीत्वा अस्य लक्ष्मणस्य ललाटमध्ये प्रमुमोच अमुञ्चत् ॥८४॥

**जनार्दनीया—** तेन लक्ष्मणेन भृशं निवारितः निराकृतो दशाननः रुषा क्रोधेनान्वितः सन् स्वयम्भुवा ब्रह्मणा । दत्तं अत एवामोघम् । अत एवोग्रम् । क्रूरमसह्यमित्यर्थः । बाणमाकृष्य, तस्य लक्ष्मणस्य ललाटमध्ये प्रमुमोच ॥८४॥

---

१. स तान् प्रचिच्छेद हि राक्षसेन्द्रः शितान् शरान् लक्ष्मणमाजघान । शरेण कालाग्निसमप्रभेण स्वयम्भुदत्तेन ललाटदेशे ॥ ६.५९.१०२ 'स्वयम्भुवा दत्तममोघमुग्रं स रावणो बाणवरं मुमोच । स लक्ष्मणस्यादलयल्ललाटं पपात सौमित्रिरवाप्तमोहः ॥ इति सङ्ग्रहे ६.८.२४ । रामायणे इतःपरं १०३-१०८ श्लोकेषु श्रूयमाणा लक्ष्मणकर्तृकरावणचापच्छेद-रावणमुक्तशक्त्यायुधेन लक्ष्मणमोहनादिरूपा कथा प्रक्षिप्ता वा प्रक्षिप्तत्वाभावेपि कल्पविशेषमाश्रित्य प्रवृत्तेति वा सम्भाव्यते ।

**चट्टी–** दशाननो रावणः तेन लक्ष्मणेन निवारितस्सन् भृशं अत्यन्तं रुषा कोपेन अन्वितः युक्तस्सन् स्वयम्भुवा ब्रह्मणा दत्तं अत एवामोघं अव्यर्थः । अत एवोग्रं क्रूरमसह्यमित्यर्थः । बाणमाकृष्य तस्य लक्ष्मणस्य ललाटमध्ये प्रमुमोच ॥८४॥

**भृशाहतस्तेन मुमोह लक्ष्मणो रथादवप्लुत्य दशाननोऽपि ।**
**क्षणादभिद्रुत्य बलात् प्रगृह्य स्वबाहुभिर्नेतुमिमं समैच्छत् ॥८५॥**

**वेदाङ्गतीर्थीया–** प्रगृह्य बलान्ने[तुं स]मैच्छत् ॥८५-८६॥

**वरदराजीया–** स लक्ष्मणः तेन बाणेन भृशं दृढं आहतस्ताडितः मुमोह मूर्च्छां प्राप्तवान् । दशाननो स्वरथादवप्लुत्य क्षणात् क्षणेन लक्ष्मणं प्रत्यभिद्रुत्य बलात् स्वबाहुभिः प्रगृह्य नेतुं समैच्छत् इयेष ॥

**जनार्दनीया–** तेन बाणेन भृशं गाढं आहतः विद्धः लक्ष्मणः मुमोह मूर्च्छामवाप । अथ दशाननोऽपि क्षणात् रथादवप्लुत्य अवरुह्य अभिद्रुत्येमं लक्ष्मणं स्वबाहुभिः स्वस्य विद्यमानविंशतिबाहुभिः । बलात् प्रगृह्य, नेतु स्वगृहं प्रति नेतुमैच्छत् ॥८५॥

**चट्टी–** लक्ष्मणः तेन बाणेन भृशं दृढं आहतः विद्धः सन् मुमोह मूर्च्छामवाप । दशाननोऽपि रथादवप्लुत्यावरुह्याभिद्रुत्य लक्ष्मणं अभ्यागत्य इमं लक्ष्मणं स्वबाहुभिः स्वस्य विद्यमानविंशतिबाहुभिः बलात् गृहीत्वा प्रगृह्य तं नेतुं स्वगृहं प्रति नेतुमैच्छत् ॥८५॥

**सम्प्राप्य सञ्ज्ञां स सुविह्वलोऽपि [1]सस्मार रूपं निजमेव लक्ष्मणः ।**
**शेषं हरेरंशयुतं न चास्य स चालनायापि शशाक रावणः ॥८६॥**

**वरदराजीया–** स तु लक्ष्मणः सञ्ज्ञां ज्ञानं प्राप्य निवृत्तमोहो भूत्वेत्यर्थः । विह्वलोऽपि प्रचलद्गात्रोऽपि लक्ष्मणो निजं स्वकीयं रूपं शेषं हरेरंशयुतं सस्मार स्मृतवान् । तस्यां दशायां रावणोऽस्य लक्ष्मणस्य कर्मणि षष्ठीयम् । सञ्चालनायापि चालयितुमपि न शशाक न शक्तोऽभूत् ॥८६॥

---

१.'अत्राहुर्भूषणकाराः । 'यत्तु स्वकीयांशस्मरणेन हेतुना लक्ष्मणेन स्वशरीरस्य गरीयस्त्वं सम्पादितमित्यनेनोक्तमिति । तन्न अपदार्थत्वात् अवाक्यार्थत्वाच्च । स्वरूपस्मरणस्य गरीयस्त्वं प्रति कारणताग्राहकप्रमाणाभावाच्चइति ।' तच्चिन्त्यम् । अभिप्रायानवगमात् । 'स्मरणेन हेतुना शरीरस्य गरीयस्त्वं सम्पादितमित्यस्य' स्मरणं गरीयस्त्वं प्रति कारणमिति नाभिप्रेयते । शेषस्वरूपे विद्यमानस्य गरीयस्त्वं मानुषान्नादिभोगतः आवृतम्, तस्य स्वीयांशस्मरणं अभिव्यञ्जकमिति तत्र विवक्ष्यते । यदपि प्रमाणाभावादित्युक्तम् । तदपि– 'संस्मारितस्तु कृष्णेन रौहिणेयः पुरातनम् । बलेनापूर्यत तदा त्रैलोक्यान्तरचारिणा ॥' इत्यादि हरिवंशाद्यज्ञानमूलकम् । जरासन्धवधेऽपि कृष्णोपदेशेन भीमेन स्वमूलस्मरणपूर्वकं बलाहरणं भारते दृश्यते । अतः सुष्ठूक्तमाचार्यैः ।

**जनार्दनीया–** सुविह्वलोऽपि अतिमूर्च्छितोऽपि सञ्ज्ञां सम्प्राप्य, हरेः श्रीसङ्कर्षणस्यांशयुतं निजं स्वरूपं स्वमूलरूपं शेषं सस्मार । स रावणः । अस्य शेषस्य चावतारं लक्ष्मणमित्यर्थः । चालनायापि चालयितुमपि । कर्मणि षष्ठी । 'तुमर्थाच्च भाववचनात्' [कौ.५८२] इति चतुर्थी । न शशाक शक्तो नाभूत् ।।८६।।

**अनन्तभट्टीया–** अस्य लक्ष्मणस्य । कर्मणि षष्ठीयम् ।।८६–८७।।

**चट्टी–** स तु लक्ष्मणः विह्वलोऽपि मूर्च्छितोऽपि सञ्ज्ञां ज्ञानं सम्प्राप्य निवृत्तमोहो भूत्वेत्यर्थः । हरेः अंशयुतं शेषं शेषावतारं निजं स्वकीयं रूपं मूलरूपमेव सस्मार स्मृतवान् । रावणः अस्येति कर्मणि षष्ठी । इमं लक्ष्मणं सञ्चालनाय चालयितुमपि न शशाक शक्तो नाभूत् ।।८६।।

**भावचन्द्रिका–** ।। **सस्मारेति** ।। 'इच्छाव्यक्तिः प्रायशो मारुतस्य तदन्येषां व्यक्तता कारणेन' इति वक्ष्यमाणत्वात् । रामाज्ञया मूलरूपस्मरणे जाते बलाभिवृद्धिरिति भावः । मूलरूपे सङ्कर्षणावेशाच्च बलमित्याह– **हरेरिति** ।।८६–८८।।

**गूढवाक्यार्थ–** विह्वलो....* ।।८६।।

**बलात् स्वदोर्भिः प्रतिगृह्य चाखिलैर्यदा स वीरं प्रचकर्ष रावणः ।**
**चचाल पृथ्वी सहमेरुमन्दरा ससागरा [१]नैव चचाल लक्ष्मणः ।।८७।।**

**वेदाङ्गतीर्थीया–** बलात् प्रचकर्ष ।।८७–९०।।

**वरदराजीया–** स रावणो निखिलैर्विंशतिसङ्ख्याकैः दोर्भिः बाहुभिः बलाद्यदा वीरं प्रचकर्ष तदा मेरुमन्दराभ्यां सह कृता सागरैः सह कृता च पृथ्वी भूमिः चचाल । लक्ष्मणस्तु नैव चचाल ।।८७।।

**जनार्दनीया–** स रावणः । लक्ष्मणं बलात् प्रचकर्ष यदा तदा । मेरुमन्दरपर्वताभ्यां सहिता सहमेरुमन्दरा । सागरैः सहिता पृथ्वी चचाल । लक्ष्मणो नैव चचाल ।।८७।।

**चट्टी–** स रावणः अखिलैः विंशतिसङ्ख्याकैः स्वस्वदोर्भिः बाहुभिः वीरं लक्ष्मणं प्रतिगृह्य यदा बलात् प्रचकर्ष तदा मेरुमन्दरपर्वताभ्यां सहिता समेरुमन्दरा सागरैः सहिता ससागरा पृथ्वी भूमिः चचाल । लक्ष्मणो नैव चचाल ।।८७।।

---

१. हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न शक्यो भरतानुजः ।। ६.५९.१११

**सहस्रमूर्ध्नोऽस्य[१] बतैकमूर्ध्नि ससप्तपाताळगिरीन्द्रसागरा ।**
**धराऽखिलेयं ननु सर्षपायति प्रसह्य को नाम हरेत् तमेनम् ॥८८॥**

**वादिराजीया–** सर्षपायति ननु सर्षपवदाचरति ननु । 'न वेद सिद्धार्थमिव क्वचित् स्थितं भूमण्डलं मूर्धसहस्रधामसु' [भाग.५.१७.२०] इति प्रमाणप्रसिद्धिद्योतनाय ननु शब्दः । बत आश्चर्यम् ॥८८–९१॥

**वरदराजीया–** सहस्रमूर्ध्नः सहस्रशिरसोऽस्य शेषात्मकस्य लक्ष्मणस्य एकस्मिन् मूर्ध्नि शिरसि पातालोपलक्षितसप्तलोकैः गिरीन्द्रैः सागरैश्च सह वर्तमाना इयं अखिला धरा ननु निश्चयेन सर्षपायति सर्षपवदाचरति सर्षपवल्लघुतया तिष्ठति । बताश्चर्यम् । तमेवं लक्ष्मणं प्रसह्य बलात् को नाम हरेत् न कोऽपीत्यर्थः ॥८८॥

**जनार्दनीया–** सहस्रसङ्ख्याकाः मूर्धानो शिरांसि यस्य स तथा तस्य । तथास्य शेषस्यैकमूर्ध्नि एकफणे । सप्तपातालैः पातालादिसप्तलोकैः, गिरीन्द्रैर्मेर्वादिपर्वतैः, सागरैः सह वर्तमाना । अखिला समग्रा पञ्चाशत्कोटिविस्तीर्णेति यावत् । इयं धरा भूः सर्षपायति सर्षपवदाचरति । बताश्चर्यम् । को नाम कः पुरुषः तं शेषात्मकं एनं लक्ष्मणं प्रसह्य बलात्कारेण हरेत् अपहरेत्? कोऽपि न हरेदित्यर्थः । तु विशेषेण बलेनेत्यर्थः ॥८८॥

**अनन्तभट्टीया–** सर्षपायति सर्षपवदाचरति ॥८८॥

**चट्टी–** सहस्रसङ्ख्याकाः मूर्धानो शिरांसि यस्य स तथा तस्य । अस्य शेषस्यैकमूर्ध्नि एकस्मिन् शिरसि सप्तपातालैः पातालादिसप्तलोकैः गिरीन्द्रैर्मेर्वादिपर्वतैः सागरैः सह वर्तमाना अखिला समग्रा पञ्चाशत्कोटिविस्तीर्णेति यावत् । इयं धरा भूः सर्षपायति सर्षपवदाचरति । ननु बताश्चर्यम् । तं शेषात्मकं एनं लक्ष्मणं प्रसह्य बलात्कारेण को नाम कः पुरुषः हरेत् अपहरेत् न कोऽपीत्यर्थः ॥८८॥

**भारतश्री–** ॥ **प्रसह्य को नाम हरेत् तमेनमिति** ॥ तस्यापि ...स्य ब्रह्मणा दत्तवरत्वात् तद्वरयुक्तत्वाच्च पपात । पूर्वं मूलरूपस्मरणाभावाद्वा पपातेति । तदाविष्टः सङ्कर्षणः विरिञ्चवरं मानयानः तूष्णीं बभूवेति ज्ञातव्यम् ॥८८–८९॥

**अतिविशद–** सहस्रमूर्ध्नोऽस्य बतैकमूर्ध्नि इत्यत्र शेषस्य भूम्याधारत्वमुच्यते । तेन तस्य स्वातन्त्र्यमपि प्रतीयते । तस्याधारादेरनुक्तत्वात् इत्याशङ्का 'बिभर्त्यण्डं हरिः कूर्मः अण्डे चाप्युदकं महत् ।

---

१. 'मूर्धन्यर्पितमणुवत् सहस्रमूर्ध्नो भूगोलं सगिरिसरित्समुद्रसत्त्वम् । आनन्त्यादविदितविक्रमस्य भूम्नः को वीर्याण्यपि गणयेत् सहस्रजिह्वः ॥' [भाग.५.२४.४४] 'यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति यं चेकितानमनु वृत्तय उच्चकन्ति । भूमण्डलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥'[भाग.६.१६.४८]

**जनार्दनीया–** सुविह्वलोऽपि अतिमूर्च्छितोऽपि सञ्ज्ञां सम्प्राप्य, हरेः श्रीसङ्कर्षणस्यांशयुतं निजं स्वरूपं स्वमूलरूपं शेषं सस्मार । स रावणः । अस्य शेषस्य चावतारं लक्ष्मणमित्यर्थः । चालनायापि चालयितुमपि । कर्मणि षष्ठी । 'तुमर्थाच्च भाववचनात्' [कौ.५८२] इति चतुर्थी । न शशाक शक्तो नाभूत् ।।८६।।

**अनन्तभट्टीया–** अस्य लक्ष्मणस्य । कर्मणि षष्ठीयम् ।।८६–८७।।

**चट्टी–** स तु लक्ष्मणः विह्वलोऽपि मूर्च्छितोऽपि सञ्ज्ञां ज्ञानं सम्प्राप्य निवृत्तमोहो भूत्वेत्यर्थः । हरेः अंशयुतं शेषं शेषावतारं निजं स्वकीयं रूपं मूलरूपमेव सस्मार स्मृतवान् । रावणः अस्येति कर्मणि षष्ठी । इमं लक्ष्मणं सञ्चालनाय चालयितुमपि न शशाक शक्तो नाभूत् ।।८६।।

**भावचन्द्रिका–** ।। **सस्मारेति** ।। 'इच्छाव्यक्तिः प्रायशो मारुतस्य तदन्येषां व्यक्तता कारणेन' इति वक्ष्यमाणत्वात् । रामाज्ञया मूलरूपस्मरणे जाते बलाभिवृद्धिरिति भावः । मूलरूपे सङ्कर्षणावेशाच्च बलमित्याह– **हरेरिति** ।।८६–८८।।

**गूढवाक्यार्थ–** विह्वलो....* ।।८६।।

**बलात् स्वदोर्भिः प्रतिगृह्य चाखिलैर्यदा स वीरं प्रचकर्ष रावणः ।**
**चचाल पृथ्वी सहमेरुमन्दरा ससागरा [१]नैव चचाल लक्ष्मणः ।।८७।।**

**वेदाङ्गतीर्थीया–** बलात् प्रचकर्ष ।।८७–९०।।

**वरदराजीया–** स रावणो निखिलैर्विंशतिसङ्ख्याकैः दोर्भिः बाहुभिः बलाद्यदा वीरं प्रचकर्ष तदा मेरुमन्दराभ्यां सह कृता सागरैः सह कृता च पृथ्वी भूमिः चचाल । लक्ष्मणस्तु नैव चचाल ।।८७।।

**जनार्दनीया–** स रावणः । लक्ष्मणं बलात् प्रचकर्ष यदा तदा । मेरुमन्दरपर्वताभ्यां सहिता सहमेरुमन्दरा । सागरैः सहिता पृथ्वी चचाल । लक्ष्मणो नैव चचाल ।।८७।।

**चट्टी–** स रावणः अखिलैः विंशतिसङ्ख्याकैः स्वस्वदोर्भिः बाहुभिः वीरं लक्ष्मणं प्रतिगृह्य यदा बलात् प्रचकर्ष तदा मेरुमन्दरपर्वताभ्यां सहिता समेरुमन्दरा सागरैः सहिता ससागरा पृथ्वी भूमिः चचाल । लक्ष्मणो नैव चचाल ।।८७।।

---

१. हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न शक्यो भरतानुजः ।। ६.५९.१११

**सहस्रमूर्ध्नोऽस्य[१] बतैकमूर्ध्नि ससप्तपाताळगिरीन्द्रसागरा ।**
**धराऽखिलेयं ननु सर्षपायति प्रसह्य को नाम हरेत् तमेनम् ॥८८॥**

**वादिराजीया–** सर्षपायति ननु सर्षपवदाचरति ननु । 'न वेद सिद्धार्थमिव क्वचित् स्थितं भूमण्डलं मूर्धसहस्रधामसु' [भाग.५.१७.२०] इति प्रमाणप्रसिद्धिद्योतनाय ननु शब्दः । बत आश्चर्यम् ॥८८–९१॥

**वरदराजीया–** सहस्रमूर्ध्नः सहस्रशिरसोऽस्य शेषात्मकस्य लक्ष्मणस्य एकस्मिन् मूर्ध्नि शिरसि पातालोपलक्षितसप्तलोकैः गिरीन्द्रैः सागरैश्च सह वर्तमाना इयं अखिला धरा ननु निश्चयेन सर्षपायति सर्षपवदाचरति सर्षपवल्लघुतया तिष्ठति । बताश्चर्यम् । तमेवं लक्ष्मणं प्रसह्य बलात् को नाम हरेत् न कोऽपीत्यर्थः ॥८८॥

**जनार्दनीया–** सहस्रसङ्ख्याकाः मूर्धानो शिरांसि यस्य स तथा तस्य । तथास्य शेषस्यैकमूर्ध्नि एकफणे । सप्तपातालैः पातालादिसप्तलोकैः, गिरीन्द्रैर्मेर्वादिपर्वतैः, सागरैः सह वर्तमाना । अखिला समग्रा पञ्चाशत्कोटिविस्तीर्णेति यावत् । इयं धरा भूः सर्षपायति सर्षपवदाचरति । बताश्चर्यम् । को नाम कः पुरुषः तं शेषात्मकं एनं लक्ष्मणं प्रसह्य बलात्कारेण हरेत् अपहरेत्? कोऽपि न हरेदित्यर्थः । तु विशेषेण बलेनेत्यर्थः ॥८८॥

**अनन्तभट्टीया–** सर्षपायति सर्षपवदाचरति ॥८८॥

**चट्टी–** सहस्रसङ्ख्याकाः मूर्धानो शिरांसि यस्य स तथा तस्य । अस्य शेषस्यैकमूर्ध्नि एकस्मिन् शिरसि सप्तपातालैः पातालादिसप्तलोकैः गिरीन्द्रैर्मेर्वादिपर्वतैः सागरैः सह वर्तमाना अखिला समग्रा पञ्चाशत्कोटिविस्तीर्णेति यावत् । इयं धरा भूः सर्षपायति सर्षपवदाचरति । ननु बताश्चर्यम् । तं शेषात्मकं एनं लक्ष्मणं प्रसह्य बलात्कारेण को नाम कः पुरुषः हरेत् अपहरेत् न कोऽपीत्यर्थः ॥८८॥

**भारतश्री–** ॥ **प्रसह्य को नाम हरेत् तमेनमिति** ॥ तस्यापि ...स्य ब्रह्मणा दत्तवरत्वात् तद्वरयुक्तत्वाच्च पपात । पूर्वं मूलरूपस्मरणाभावाद्वा पपातेति । तदाविष्टः सङ्कर्षणः विरिञ्चवरं मानयानः तूष्णीं बभूवेति ज्ञातव्यम् ॥८८–८९॥

**अतिविशद–** सहस्रमूर्ध्नोऽस्य बतैकमूर्ध्नि इत्यत्र शेषस्य भूम्याधारत्वमुच्यते । तेन तस्य स्वातन्त्र्यमपि प्रतीयते । तस्याधारादेरनुक्तत्वात् इत्याशङ्क्य 'बिभर्त्यण्डं हरिः कूर्मः अण्डे चाप्युदकं महत् ।

---

१. 'मूर्धन्यर्पितमणुवत् सहस्रमूर्ध्नो भूगोलं सगिरिसरित्समुद्रसत्वम् । आनन्त्यादविदितविक्रमस्य भूम्नः को वीर्याण्यपि गणयेत् सहस्रजिह्वः ॥' [भाग.५.२४.४४] 'यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति यं चेकितानमनु वृत्तय उच्चकन्ति । भूमण्डलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥'[भाग.६.१६.४८]

**जनार्दनीया–** सुविह्वलोऽपि अतिमूर्च्छितोऽपि सञ्ज्ञां सम्प्राप्य, हरेः श्रीसङ्कर्षणस्यांशयुतं निजं स्वरूपं स्वमूलरूपं शेषं सस्मार । स रावणः । अस्य शेषस्य चावतारं लक्ष्मणमित्यर्थः । चालनायापि चालयितुमपि । कर्मणि षष्ठी । 'तुमर्थाच्च भाववचनात्' [कौ.५८२] इति चतुर्थी । न शशाक शक्तो नाभूत् ।।८६।।

**अनन्तभट्टीया–** अस्य लक्ष्मणस्य । कर्मणि षष्ठीयम् ।।८६–८७।।

**चट्टी–** स तु लक्ष्मणः विह्वलोऽपि मूर्च्छितोऽपि सञ्ज्ञां ज्ञानं सम्प्राप्य निवृत्तमोहो भूत्वेत्यर्थः । हरेः अंशयुतं शेषं शेषावतारं निजं स्वकीयं रूपं मूलरूपमेव सस्मार स्मृतवान् । रावणः अस्येति कर्मणि षष्ठी । इमं लक्ष्मणं सञ्चालनाय चालयितुमपि न शशाक शक्तो नाभूत् ।।८६।।

**भावचन्द्रिका–** ।। **सस्मारेति** ।। 'इच्छाव्यक्तिः प्रायशो मारुतस्य तदन्येषां व्यक्तता कारणेन' इति वक्ष्यमाणत्वात् । रामाज्ञया मूलरूपस्मरणे जाते बलाभिवृद्धिरिति भावः । मूलरूपे सङ्कर्षणावेशाच्च बलमित्याह– हरेरिति ।।८६–८८।।

**गूढवाक्यार्थ–** विह्वलो....* ।।८६।।

**बलात् स्वदोर्भिः प्रतिगृह्य चाखिलैर्यदा स वीरं प्रचकर्ष रावणः ।**
**चचाल पृथ्वी सहमेरुमन्दरा ससागरा [१]नैव चचाल लक्ष्मणः ।।८७।।**

**वेदाङ्गतीर्थीया–** बलात् प्रचकर्ष ।।८७–९०।।

**वरदराजीया–** स रावणो निखिलैर्विंशतिसङ्ख्याकैः दोर्भिः बाहुभिः बलाद्यदा वीरं प्रचकर्ष तदा मेरुमन्दराभ्यां सह कृता सागरैः सह कृता च पृथ्वी भूमिः चचाल । लक्ष्मणस्तु नैव चचाल ।।८७।।

**जनार्दनीया–** स रावणः । लक्ष्मणं बलात् प्रचकर्ष यदा तदा । मेरुमन्दरपर्वताभ्यां सहिता सहमेरुमन्दरा । सागरैः सहिता पृथ्वी चचाल । लक्ष्मणो नैव चचाल ।।८७।।

**चट्टी–** स रावणः अखिलैः विंशतिसङ्ख्याकैः स्वस्वदोर्भिः बाहुभिः वीरं लक्ष्मणं प्रतिगृह्य यदा बलात् प्रचकर्ष तदा मेरुमन्दरपर्वताभ्यां सहिता समेरुमन्दरा सागरैः सहिता ससागरा पृथ्वी भूमिः चचाल । लक्ष्मणो नैव चचाल ।।८७।।

---

१. हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न शक्यो भरतानुजः ।। ६.५९.१११

**सहस्रमूर्ध्नोऽस्य[1] बतैकमूर्ध्नि ससप्तपाताळगिरीन्द्रसागरा ।**
**धराऽखिलेयं ननु सर्षपायति प्रसह्य को नाम हरेत् तमेनम् ॥८८॥**

**वादिराजीया–** सर्षपायति ननु सर्षपवदाचरति ननु । 'न वेद सिद्धार्थमिव क्वचित् स्थितं भूमण्डलं मूर्धसहस्रधामसु' [भाग.५.१७.२०] इति प्रमाणप्रसिद्धिद्योतनाय ननु शब्दः । बत आश्चर्यम् ॥८८–९१॥

**वरदराजीया–** सहस्रमूर्ध्नः सहस्रशिरसोऽस्य शेषात्मकस्य लक्ष्मणस्य एकस्मिन् मूर्ध्नि शिरसि पातालोपलक्षितसप्तलोकैः गिरीन्द्रैः सागरैश्च सह वर्तमाना इयं अखिला धरा ननु निश्चयेन सर्षपायति सर्षपवदाचरति सर्षपवल्लघुतया तिष्ठति । बताश्चर्यम् । तमेवं लक्ष्मणं प्रसह्य बलात् को नाम हरेत् न कोऽपीत्यर्थः ॥८८॥

**जनार्दनीया–** सहस्रसङ्ख्याकाः मूर्धानो शिरांसि यस्य स तथा तस्य । तथास्य शेषस्यैकमूर्ध्नि एकफणे । सप्तपातालैः पातालादिसप्तलोकैः, गिरीन्द्रैर्मेर्वादिपर्वतैः, सागरैः सह वर्तमाना । अखिला समग्रा पञ्चाशत्कोटिविस्तीर्णेति यावत् । इयं धरा भूः सर्षपायति सर्षपवदाचरति । बताश्चर्यम् । को नाम कः पुरुषः तं शेषात्मकं एनं लक्ष्मणं प्रसह्य बलात्कारेण हरेत् अपहरेत्? कोऽपि न हरेदित्यर्थः । तु विशेषेण बलेनेत्यर्थः ॥८८॥

**अनन्तभट्टीया–** सर्षपायति सर्षपवदाचरति ॥८८॥

**चट्टी–** सहस्रसङ्ख्याकाः मूर्धानो शिरांसि यस्य स तथा तस्य । अस्य शेषस्यैकमूर्ध्नि एकस्मिन् शिरसि सप्तपातालैः पातालादिसप्तलोकैः गिरीन्द्रैर्मेर्वादिपर्वतैः सागरैः सह वर्तमाना अखिला समग्रा पञ्चाशत्कोटिविस्तीर्णेति यावत् । इयं धरा भूः सर्षपायति सर्षपवदाचरति । ननु बताश्चर्यम् । तं शेषात्मकं एनं लक्ष्मणं प्रसह्य बलात्कारेण को नाम कः पुरुषः हरेत् अपहरेत् न कोऽपीत्यर्थः ॥८८॥

**भारतश्री–** ॥ **प्रसह्य को नाम हरेत् तमेनमिति** ॥ तस्यापि ...स्य ब्रह्मणा दत्तवरत्वात् तद्वरयुक्तत्वाच्च पपात । पूर्वं मूलरूपस्मरणाभावाद्वा पपातेति । तदाविष्टः सङ्कर्षणः विरिञ्चवरं मानयानः तूष्णीं बभूवेति ज्ञातव्यम् ॥८८–८९॥

**अतिविशद–** सहस्रमूर्ध्नोऽस्य बतैकमूर्ध्नि इत्यत्र शेषस्य भूम्याधारत्वमुच्यते । तेन तस्य स्वातन्त्र्यमपि प्रतीयते । तस्याधारादेरनुक्तत्वात् इत्याशङ्का 'बिभर्त्यण्डं हरिः कूर्मः अण्डे चाप्युदकं महत् ।

---

१. 'मूर्धन्यर्पितमणुवत् सहस्रमूर्ध्नो भूगोलं सगिरिसरित्समुद्रसत्त्वम् । आनन्त्यादविदितविक्रमस्य भूम्नः को वीर्याण्यपि गणयेत् सहस्रजिह्वः ॥' [भाग.५.२४.४४] 'यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति यं चेकितानमनु वृत्तय उच्चकन्ति । भूमण्डलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥'[भाग.६.१६.४८]

उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः ।। वायोः पुच्छं समाश्रित्य शेषस्तु पृथ्वीमिमाम् । बिभर्ति तस्यां च जगदिदं सर्वं प्रतिष्ठितम् ।।' इति वैभववचनेन परिहर्तव्या ।। [बृ.भा.३.१] ।।८८–१११।।

**प्रकर्षति त्वेव निशाचरेश्वरे तथैव रामावरजं त्वरान्वितः ।**
**समस्तजीवाधिपतेः परा तनुः समुत्पपाताशु पुरो हनूमान् ।।८९।।**

**वरदराजीया–** निशाचरेश्वरे तु रामावरजं लक्ष्मणं तथैव पूर्ववदेव प्रकर्षति सति त्वरया वेगेनान्वितः समस्तजीवाधिपतेः वायोः परा तनुः परावतारो हनूमानस्य रावणस्य पुरः पुरतः समुत्पपात ।।८९।।

**जनार्दनीया–** रामावरजं प्रकर्षति सति । तथैव पूर्ववदेव त्वरान्वितः वेगयुक्तः । समस्तजीवानामधिपतेः स्वामिनः वायोः । परा द्वितीया तनुः स्वरूपम् । वायोर्द्वितीयरूपमित्यर्थः । हनूमानस्य रावणस्य पुरः अग्रे समुत्पपात ।।८९।।

**अनन्तभट्टीया–** परा अन्या ।।८९–९०।।

**चट्टी–** निशाचरेश्वरे रावणे । तु विशेषबलेनेत्यर्थः । रामावरजं लक्ष्मणं प्रकर्षति सति तथैव पूर्ववदेव त्वरान्वितः वेगयुक्तः समस्तजीवानामधिपतेः स्वामिनः वायोः परा द्वितीया तनुः स्वरूपं वायोर्द्वितीयं रूपमित्यर्थः । हनूमानस्य रावणस्य पुरतः अग्रे समुत्पपात ।।८९।।

**भावचन्द्रिका–** तत्सङ्ग्रहणं कुत इत्यत आह– **जीवेति** ।।८९–९०।।

**स[1] मुष्टिमावृत्य च वज्रकल्पं जघान तेनैव स रावणं रुषा ।**
**प्रसार्य बाहूनखिलैर्मुखैर्वमन् स रक्तमुष्णं व्यसुवत् पपात ।।९०।।**

**वरदराजीया–** वज्रकल्पं वज्रसमानं मुष्टिमावृत्य बध्वा रुषा तेनैव मुष्टिना रावणं जघान । स रावणो बाहून् प्रसार्य विसृत्य अखिलैः दशभिः मुखैः रक्तं वमन् उद्गिरन् व्यसुवत् मृतवत् पपात ।।९०।।

**जनार्दनीया–** स हनूमान् । वज्रेण कुलिशेन कल्पं सदृशं मुष्टिमावृत्य परिभ्राम्य, रुषा कोपेन तेन मुष्टिना रावणं जघान । स रावणः । बाहून् प्रसार्य विस्तार्य, अखिलैर्मुखैरुष्णं रक्तं वमन्, व्यसुवत् विगतप्राण इव शववदिति यावत् । पपात ।।९०।।

---

१. ततः क्रुद्धो वायुसुतो रावणं समभिद्रवत् । आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ।। तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः । जानुभ्यामपतद् भूमौ चचाल च पपात च ।। आस्यैश्च नेत्रैः श्रवणैः पपात रुधिरं बहु । विघूर्णनेत्रो निश्चेष्टो रथोपस्थ उपाविशत् ।। विसंज्ञो मूर्च्छितश्चासीत् न च स्थानं समालभत् । विसञ्ज्ञं रावणं दृष्ट्वा समरे भीमविक्रमम् ।। ऋषयो वानराश्चैव नेदुर्देवाश्च सासुराः । हनूमानथ तेजस्वी लक्ष्मणं रावणार्दितम् ।। आनयद् राघवाभ्याशं बाहुभ्यां परिगृह्य तम् ।। इति वाल्मीकीये [६.५९.११४-११८]।

**चट्टी–** स हनूमान् वज्रेण कुलिशेन कल्पं सदृशं मुष्टिमावृत्य परिभ्राम्य च रुषा कोपेन तेनैव मुष्टिना रावणं जघान च । मुष्टिशब्दः पुल्लिङ्गोऽप्यस्ति । 'अक्लीबौ मुष्टिमस्तु द्वौ' इत्यभिधानात् । स रावणः बाहून् प्रसार्य विस्तार्य अखिलैः दशभिः मुखैरुष्णं रक्तं वमन् व्यसुवत् विगतप्राणवत् शववदिति यावत् । पपात ।।

**भारतश्री–** स मुष्टिमावृत्येत्यत्र एकचशब्दस्य तच्छब्देन सम्बन्धः । अन्यः रामकीर्त्यर्थं हनुमता रावणवधो न कृत इत्यर्थसूचकः ।।९०–९३।।

**निपात्य रक्षोधिपतिं स मारुतिः प्रगृह्य सौमित्रिमुरङ्गशायिनः ।**
**जगाम रामाख्यतनोः समीपं सौमित्रिमुद्धर्तुमलं ह्यसौ कपिः ।।९१।।**

**वेदाङ्गतीर्थीया–** अलं समर्थः ।।९१।।

**वादिराजीया–** अलं ह्यसौ कपिरित्यत्र हिशब्देन घनोदके कूर्मस्वरूपस्य वायोः स्वपृष्ठे अनन्तोद्धारकत्वं प्रसिद्धमिति सूचयति ।।९१-९९।।

**वरदराजीया–** स मारुतिर्हनूमान् रक्षोऽधिपतिं रावणं निपात्य सौमित्रिं लक्ष्मणं प्रगृह्य उरङ्गशायिनो हरेः रामाख्यतनोः रामनामकावतारस्य समीपं जगाम । असौ कपिः हनूमान् सौमित्रिमुद्धर्तुं अलं समर्थो हीत्यर्थः ।।९१।।

**जनार्दनीया–** उरङ्गशायिनः हरेः रामाख्यतनोः रामाह्वयस्वरूपस्य समीपं जगाम । असौ कपिः हनुमान् । सौमित्रिं लक्ष्मणम् । उद्धर्तुमलं समर्थो हि ।।९१।।

**अनन्तभट्टीया–** उरङ्गशायिनः शेषशायिनः समीपम् ।।९१।।

**चट्टी–** सः मारुतिः हनुमान् रक्षोधिपतिं रावणं निपात्य सौमित्रिं लक्ष्मणं प्रगृह्य उरङ्गशायिनः शेषशायिनः हरेः समीपं जगाम । असौ कपिः हनुमान् सौमित्रिं लक्ष्मणं उद्धर्तुमलं समर्थो हि ।।९१।।

**भावचन्द्रिका–** शेषशायिन एव रामत्वात् शेषस्य लक्ष्मणत्वाच्छय्यायां प्रीतिरस्तीत्याह– **उरङ्गेति** ।। रावणानुद्धार्यस्य लक्ष्मणस्योद्धरणे हनूमतस्सामर्थ्यमाह– **सौमित्रिरिति** ।। वायुकूर्माधारत्वाच्छेषस्येत्याह– **हीति** ।।९१-१०५।।

**गूढवाक्यार्थ–** समर्थः...* ।।९१।।

**स रामसंस्पर्शनिवारितक्लमः समुत्थितस्तेन समुद्धृते शरे ।**
**बभौ यथा राहुमुखात् प्रमुक्तः शशी सुपूर्णो विकचस्वरश्मिभिः ।।९२।।**

**व्यासतीर्थीया–** विकचो निर्मलः ।।९२-९३।।

**वेदाङ्गतीर्थीया–** [विकचः] निष्कलः निर्मलः ।।९२-९३।।

**वरदराजीया–** स लक्ष्मणो रामसंस्पर्शेन निवारितः क्लमो यस्य तथा तेन श्रीरामेण शरे ललाटमध्यात्समुद्धृते उत्पाटिते सति समुत्थितोऽभूत् । राहुमुखात्प्रमुक्तो विकचद्भिः प्रकाशमानैः स्वकिरणैः सुपूर्णः शशी यथा तथा बभौ शुशुभे ।।९२।।

**जनार्दनीया–** रामस्य संस्पर्शेन प्रीतिपूर्वकहस्तस्पर्शेन निवारितः परिहृतः क्लमः ग्लानिर्यस्य स तथा । स लक्ष्मणः । तेन रामेण शरे समुद्धृते उत्पाटिते सति समुत्थितः सन् बभौ शुशुभे । तत्र दृष्टान्तमाह– **यथेति** ।। विचकद्भिः दीप्यमानैः, स्वरश्मिभिः स्वांशुभिः । सुपूर्णः कलाभिः पूर्णः ।।९२।।

**अनन्तभट्टीया–** तेन रामेण । विकचत्स्वरश्मिभिः प्रकाशमानस्वकिरणैः ।।९२-९५।।

**चट्टी–** सः लक्ष्मणः रामस्य संस्पर्शेन प्रीतिपूर्वकहस्तस्पर्शेन निवारितः क्लमः ग्लानिर्यस्य तथाभूतस्सन् । तेन रामेण शरे ललाटमध्यात् उद्धृते उत्पाटिते सति समुत्थितः सन् राहुमुखात् प्रमुक्तः विकचद्भिः दीप्यमानैः स्वरश्मिभिः स्वरश्मिभिः सुपूर्णः कलाभिः पूर्णः शशिः यथा तथा बभौ शुशुभे ।।

**स शेषभोगाभमथो जनार्दनः प्रगृह्य चापं सशरं पुनश्च ।**
**सुलब्धसञ्ज्ञं रचनीचरेशं जगाद सज्जीभव रावणेति ।।९३।।**

**वरदराजीया–** अथानन्तरं स जनार्दनो रामः शेषभोगाभं सशरं शरेण सहितं चापं शार्ङ्गं प्रगृह्य पुनश्च सुलब्धा सञ्ज्ञा येन तं रजनीचरेशं रावणं जगाद । किमिति हे रावण सज्जीभव त्वं सपरिकारो भवेति ।।

**जनार्दनीया–** शरैः सहितं शेषस्य भोगेन देहेनाभं सदृशं चापं धनुः प्रगृह्य, पुनश्च सुलब्धा सम्प्राप्ता सञ्ज्ञा ज्ञानं येन तम् । प्रति हे रावण सज्जीभव युद्धोपस्कारवान् भवेति जगाद ।।९३।।

**ताम्रपर्णीया–** सज्जीभव ज्यासहितं धनुः सज्जम् । तदस्य अस्ति इति सज्जी । सो भव इत्यर्थः । सन्नद्धो भव इति यावत् ।।९३-१०३।।

**चट्टी–** अथ अनन्तरं सः जनार्दनः रामः शेषभोगस्य शेषशरीरस्य सदृशं सशरं शरेण सहितं चापं शार्ङ्गं धनुः प्रगृह्य पुनश्च । सुलब्धा सञ्ज्ञा ज्ञानं येन तं रजनीचरेशं प्रति हे रावण त्वं सज्जीभव । युद्धोपस्करवान् भवेति जगाद ।।९३।।

**गूढवाक्यार्थ–** स...* युक्तो भव ।।९३।।

**रथं समारुह्य पुनः सकार्मुकः समार्गणो रावण आशु रामम् ।**
**अभ्येत्य सर्वाश्च दिशश्चकार शरान्धकारः परमास्त्रवेत्ता ॥९४॥**

**व्यासतीर्थीया–** शराणामन्धकारो यासु ताः शरान्धकाराः ॥९४-९५॥

**वेदाङ्गतीर्थीया–** समार्गणः सशरः ॥९४-९५॥

**वरदराजीया–** रावणः पुनः स्वरथं समारुह्य सकार्मुकः सचापः समार्गणो भूत्वा आशु रामं अभ्येत्य च सर्वाः दिशः शरान्धकाराः शरैरन्धकारयुक्ताः चकार । यतः परमास्त्रवेत्तेत्यर्थः ॥९४॥

**जनार्दनीया–** सकार्मुकः सधनुः समार्गणः सशरः शरैः कृतः अन्धकारो यासु ताः तथा । तादृशः दिशः चकार । अतः परमास्त्रवेत्ता दिव्यास्त्रज्ञः ॥९४॥

**चट्टी–** रावणः सकार्मुकः सधनुः समार्गणः सशरः सन् पुनः रथं स्वरथं समारुह्य आशु रामं अभ्येत्य च सर्वा दिशः शरैः अन्धकारो यासु ताः तथा चकार । अतः परमास्त्रवेत्ता दिव्यास्त्रज्ञः ॥९४॥

**भारतश्री–** सकार्मुकः कार्मुकसहितः । उत्तरत्र 'धनूंषि संच्छिद्य' इति बहुवचनात् ॥९४॥

**गूढवाक्यार्थ–** समार्गणः बाणसहितः 'कलम्बमार्गणशराः' इत्यमरः ॥९४॥

**रथे स्थितेऽस्मिन् रजनीचरेशे न मे पतिर्भूमितळे स्थितः स्यात् ।**
**इति स्म पुत्रः [1]पवनस्य रामं स्कन्धं समारोप्य ययौ च राक्षसम् ॥९५॥**

**वरदराजीया–** स पवनस्य पुत्रो हनुमान् अस्मिन् रजनीचरेशे रावणे रथे स्थिते सति मे पतिः स्वामी श्रीरामो भूमितले स्थितो न स्यात् मा भूदित्यभिप्रायेण रामं स्कन्धे समारोप्य स्थापयित्वा राक्षसं रावणं ययौ ॥९५॥

**जनार्दनीया–** अस्मिन् रावणे रथे स्थिते उपविष्टे सति । मे पतिः स्वामी । भूमितले स्थितो न स्यादिति स्म । इत्याभिप्रायेण पवनस्य पुत्रः ॥९५॥

**चट्टी–** अस्मिन् रजनीचरेशे रावणे रथे स्थिते सति उपविष्टे सति मे पतिः स्वामी भूमितले स्थितो न स्यात् पादचारी न स्यादिति स्म । इत्यभिप्रायेण पवनस्य पुत्रः हनुमान् रामं स्कन्धे समारोप्य राक्षसं रावणं ययौ ॥९५॥

**भारतश्री–** ययौ च राक्षसमित्यत्र चशब्दः राममित्यनेन सम्बध्यते ॥९५॥

---

१. अथैनमनुसङ्क्रम्य हनूमान् वाक्यमब्रवीत् । मम पृष्ठं समारुह्य राक्षसं शास्तुमर्हसि ॥ वा.रा.६.५९.१२४

**प्रहस्य रामोऽस्य [1]हयान् निहत्य सूतं च कृत्वा तिलशो ध्वजं रथम् ।**
**धनूंषि खड्गं सकलायुधानि च्छत्रं च सञ्छिद्य चकर्त मौलिम् ॥९६॥**

**व्यासतीर्थीया–** तिलशः तिलनिभान् ॥९६–१२०॥

**वेदाङ्गतीर्थीया–** सूतं च निहत्य ध्वजं रथं च तिलशः कृत्वा ॥९६॥

**वरदराजीया–** रामः प्रहस्य हनुमद्भक्त्यतिशयं दृष्ट्वा हसित्वेत्यर्थः । अस्य हयानश्वान् सूतं सारथिं च हत्वा ध्वजं च रथं च तिलशः कृत्वा तिलवच्चूर्णयित्वा धनूंषि खड्गं सकलायुधानि शक्तितोमरादीनि सञ्छिद्य छित्वा मौलिं मुकुटं चकर्त अकृन्तत् ॥९६॥

**जनार्दनीया–** अस्य रावणस्य हयान् सूतं च निहत्य, ध्वजाद्यायुधानि तिलशः तिलसम्मितानि कृत्वा, चूर्णं कृत्वेत्यर्थः । छत्रं च सञ्छिद्य छित्वा, मौलिं किरीटं चकर्त चिच्छेद ॥९६॥

**अनन्तभट्टीया–** मौलिं मुकुटम् ॥९६॥

**चट्टी–** रामः प्रहस्य हनुमद्भक्त्यतिशयं दृष्ट्वा हसित्वेत्यर्थः । अस्य रावणस्य हयान् अश्वान् सूतं सारथिं च निहत्य ध्वजं रथं च धनूंषि खड्गं सकलायुधानि शक्तितोमरादीनि तिलशः तिलसम्मितानि कृत्वा चूर्णयित्वा, छत्रं च सञ्छिद्य छित्वा, मौलिं किरीटं चकर्त चिच्छेद ॥९६॥

**भारतश्री–** मौलिमिति समुदायैकवचनम् ॥९६॥

**कर्तव्यमूढं तमवेक्ष्य रामः पुनर्जगादाऽशु गृहं प्रयाहि ।**
**समस्तभोगाननुभूय शीघ्रं प्रतोष्य बन्धून् पुनरेहि मर्तुम् ॥९७॥**

**वेदाङ्गतीर्थीया–** रथात् द्रुतं धावने परं कर्तव्ये मूढम् ॥९७–९८॥

**वरदराजीया–** रामः तं रावणं कर्तव्यमूढं विवेकशून्यं अवेक्ष्य पुनर्जगाद । किमिति । आशु गृहं प्रयाहि समस्तान् सर्वान् भोगान् विषयान् अनुभूय भुक्त्वा बन्धून् सुहृदः प्रतोष्य शीघ्रं मर्तुं पुनरेव एहि आगच्छेति जगादेति पूर्वेणान्वयः ॥९७॥

**जनार्दनीया–** कर्तव्यमूढं कर्तव्यकर्मविषये विवेकरहितम् । मर्तुं मरणार्थम् ॥९७॥

---

१. शरेण सारथिं हत्वा दशभिश्च महाहयान् । रावणस्य धनुश्छित्वा भल्लेनैकेन राघवः ॥ मुकुटं पञ्चदशभिश्छित्वा तन्मस्तकं पुनः। सुवर्णपुङ्खैर्दशभिः शरैर्विव्याध वीर्यवान् ॥ इति नृसिंहपुराणोक्तां कथां सङ्गृह्णाति ।

**अनन्तभट्टीया–** भोगान् विषयान् [अबोधयदित्यन्वयः] ॥९७–१०२॥

**चट्टी–** रामः कर्तव्यमूढं कर्तव्यकर्मविषये विवेकरहितं रावणं अवेक्ष्य पुनः जगाद । किमिति । आशु पुनः गृहं प्रयाहि । समस्तान् सर्वान् भोगान् विषयान् अनुभूय भुक्त्वा बन्धून् सुहृदः प्रतोष्य शीघ्रं मर्तुं एहि आगच्छ इति । जगादेति पूर्वेणान्वयः ॥९७॥

**भारतश्री–** कर्तव्यमूढं तमवेक्ष्येति अवेक्ष्य दृष्ट्वा पुनः अवेक्ष्येत्यावर्तते अवेक्ष्य अलोच्य कुम्भकर्णोपि हन्तव्यः । स इदानीं नागतः अयं गत्वा तमद्यानयतीति अवेक्ष्य गृहं प्रयाहीति जगादेत्यर्थः । अयं हतश्चेत् स नायातीति भावः ॥९७–१०२॥

**इतीरितोऽवाग्वदनो ययौ गृहं विचार्य कार्यं सह मन्त्रिभिः स्वकैः ।**
**हतावशेषैरथ कुम्भकर्णप्रबोधनायाशु मतिं चकार ॥९८॥**

**मधुसूदनीया–** ॥ **कुम्भकर्णप्रबोधनायेति** ॥ प्रसङ्गाच्छयनगृहप्रमाणं लिख्यते । 'विस्तीर्णं योजनं शुद्धं ततो द्विगुणमायतम्'[६.१३.३] इत्यादि । एवं निद्रायां किन्निमित्तमिति शङ्का 'एतेन [बालेन] जातमात्रेण क्षुधा तेन महात्मना । भक्षितानि सहस्राणि सत्वानां सुबहून्यपि ॥ तस्मात्त्वमद्य प्रभृति मृतकल्पश्शयिष्यसे । शयिता ह्येष षण्मासं एकाहं जागरिष्यति ॥' [वा.रा.६.६१.१३,२४,२८] इति ब्रह्मवाक्येन परिहर्तव्या । नन्वेवं निद्रां किमर्थं ययाच इति चेत् । तदा सरस्वत्या मोहितत्वात् । तदुक्तम्– 'प्रजापतिश्च तां प्राप्तां प्राह देवीं सरस्वतीम् । वाणी त्वं राक्षसेन्द्रस्य भव वाग्देवतेप्सिता ॥ तथेत्युक्ता प्रहृष्टा सा प्रजापतिरथाब्रवीत् । कुम्भकर्णमहाबाहो वरं वरय यो मतः ॥ कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् । स्वप्तुं वर्षाण्यनेकानि देव देव ममेप्सितम् ॥ एवमस्त्विति तं चोद्य प्रायाद् ब्रह्मा सुरैस्सह । देवी सरस्वती चैव राक्षसं तं जहौ पुनः ॥'[७.१०.४२-४६] इत्यादि रामायणे ॥

**वरदराजीया–** इतीरितो रावणो अवाग्वदनो अधःकृतवदनो गृहं ययौ । हतेभ्योऽवशेषैरवशिष्टैः स्वकैर्मन्त्रिभिः अमात्यैः सह कार्यं विचार्य कर्तव्यकार्यं निश्चित्येत्यर्थः । अथानन्तरं आशु शीघ्रं सुप्तस्य कुम्भकर्णस्य प्रबोधनाय मतिं बुद्धिं चकार ॥९८॥

**जनार्दनीया–** अवाग्वदनः नतमुखो । रावणो हतेभ्योऽवशिष्टैरुर्वरितैः मन्त्रिभिः सह कार्यं उत्तरकर्तव्यं विचार्य, अथ कुम्भकर्णस्य प्रबोधनाय मतिं बुद्धिं चकार ॥९८॥

**चट्टी–** इतीरितः रावणः अवाग्वदनः नतमुखस्सन् गृहं ययौ । हतेभ्योऽवशिष्टैः उर्वरितैः स्वकैः मन्त्रिभिः सह कार्यं कर्तव्यं विचार्य अथ अनन्तरं आशु कुम्भकर्णप्रबोधनाय सुप्तस्य कुम्भकर्णस्य प्रबोधनार्थं बुद्धिं चकार । कुम्भकर्णस्य निद्रायां किन्निमित्तमिति शङ्का 'एतेन [बालेन] जातमात्रेण क्षुधा

तेन महात्मना । भक्षितानि सहस्राणि सत्वानां सुबहून्यपि ।। तस्मात्त्वमद्य प्रभृति मृतकल्पश्शयिष्यसे । शयिता ह्येष षण्मासं एकाहं जागरिष्यति ।।' इति ब्रह्मवाक्येन परिहर्तव्या । ननु कुम्भकर्णः प्रसन्नात् ब्रह्मणः सकाशात् निद्रामेव किमर्थं ययाच इति चेत् । तदा सरस्वत्या मोहितत्वात् । तदुक्तम्– 'प्रजापतिश्च तां प्राप्तां प्राह देवीं सरस्वतीम् । वाणी त्वं राक्षसेन्द्रस्य भव वाग्देवतेप्सिता ।। तथेत्युक्ता प्रहृष्टा सा प्रजापतिरथाब्रवीत् । कुम्भकर्णमहाबाहो वरं वरय यो मतः ।। कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् । स्वप्तुं वर्षाण्यनेकानि देव देव ममेप्सितम् ।। एवमस्त्विति तं चोद्य प्रायाद् ब्रह्मा सुरैस्सह । देवी सरस्वती चैव राक्षसं तं जहौ पुनः ।।' इत्यादि रामायणे ।।९८।।

**प्रमाणसंग्रह–** ।। कुम्भकर्णप्रबोधनायेति प्रसङ्गाल्लिख्यते शयनगृहप्रमाणं 'विस्तीर्णं योजन शुद्धं ततो द्विगुणमायतम्' इत्यादि । निद्रयागतदिवसाः 'मन्त्रं कृत्वा प्रसुप्तोऽयं इतस्तु नवमेऽहनि' इत्यादि । निद्रानिमित्तं– 'एतेन [बालेन] जातमात्रेण क्षुधा तेन महात्मना । भक्षितानि सहस्राणि सत्वानां सुबहून्यपि ।। तस्मात्त्वमद्य प्रभृति मृतकल्पश्शयिष्यसे । शयिता ह्येष षण्मासं एकाहं जागरिष्यति ।।' इत्यादि ब्रह्मवाक्यम् । 'प्रजापतिश्च तां प्राप्तां प्राह देवीं सरस्वतीम् । वाणी त्वं राक्षसेन्द्रस्य भव वाग्देवतेप्सिता ।। तथेत्युक्ता प्रहृष्टा सा प्रजापतिरथाब्रवीत् । कुम्भकर्णमहाबाहो वरं वरय यो मतः ।। कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् । स्वप्तुं वर्षाण्यनेकानि देव देव ममेप्सितम् ।। एवमस्त्विति तं चोद्य प्रायाद् ब्रह्मा सुरैस्सह । देवी सरस्वती चैव राक्षसं तं जहौ पुनः ।।' इत्यादि रामायणे ।।९८।।

**सशैलशृङ्गासिपरश्वधायुधैर्निशाचराणामयुतैरनेकैः ।**
**तच्छ्वासवेगाभिहतैः कथञ्चिद् गतैः समीपं कथमप्यबोधयत् ।।९९।।**

**वेदाङ्गतीर्थीया–** स रावणः शैलशृङ्गाद्यायुधवद्भिः कथञ्चित् समीपं गतैः राक्षसैः कथमपि कथञ्चिदबोधयत् ।।९९।।

**वादिराजीया–** कुम्भकर्णस्य वज्रकायत्वात् शैलशृङ्गादिघातोऽपि अङ्के ताडनवत्प्रबोधमेव करोति नतु शरीरविदारणं तथा सति पुनर्युद्धकरणासम्भवात् । ईदृशदैत्यशरीरं विदारयतो रामस्य प्रतापातिशयं किं वर्णयाम इति भावेनोक्तम्– **सशैलशृङ्गेत्यादि** ।।९९–१०२।।

**वरदराजीया–** स रावणः शैलशृङ्गैः पर्वतशिखरैः असिभिः खड्गोपरश्वधैः कुठारैः इतरैरायुधैश्च निशाचराणां राक्षसानां अनेकैः अयुतैर्दशसहस्रैः तस्य कुम्भकर्णस्य वेगेनाभिहतैः कथञ्चित् केनाप्युपायेन समीपं गतैः कथमपि महता प्रयत्नेनाबोधयत् बोधयामास । सुप्तमुत्थापयामासेत्यर्थः ।।९९।।

**जनार्दनीया—** स रावणः । शैलानां पर्वतानां, शृङ्गाणि शिखराणि, असयः खड्गाः, परश्वधाः कुठाराः, एते आयुधानि येषां तानि तथा तैः । तस्य कुम्भकर्णस्य श्वासास्तेषां वेगः, तेनाभिहतैः ताडितैः । कथञ्चित् महता प्रयासेन । समीपं कुम्भकर्णस्य समीपं गतैः प्राप्तैः अनेकैः बहुविधैः निशाचराणामयुतैः दशसहस्रैः अनेकैः अयुतसमूहैः इत्यर्थः । कथमपि प्रयासेन अबोधयत् बोधयामास ।।९९।।

**चट्टी—** स रावणः शैलानां पर्वतानां शृङ्गाणि शिखराणि असयः खड्गाः परश्वधाः कुठाराः एते आयुधानि येषां तानि तथा तैः । तस्य कुम्भकर्णस्य श्वासास्तेषां वेगः तेनाभिहतैः ताडितैः कथञ्चिन्महता प्रयासेन समीपं कुम्भकर्णस्य समीपं गतैः प्राप्तैः अनेकैः बहुभिः निशाचराणामयुतैः दशसहस्रैः करणैः अयुतसमूहै इत्यर्थः । कथमपि अतिप्रयासेन अबोधयत् बोधयामास सुप्तमुत्थापयामासेत्यर्थः । कुम्भकर्णस्य वज्रकायत्वात् शैलशृङ्गैः ताडितोऽपि अङ्के ताडनवत् प्रबोधनमेव करोति न तु शरीरं विशीर्यते । तथा सति पुनर्युद्धकरणासम्भवाच्च । ईदृशदैत्यशरीरं विदारयतो रामस्य प्रतापातिशयं किं वर्णयामः इति भावेनोक्तम्— **सशैलशृङ्गेत्यादिना** ।।९९।।

**शैलोपमानस्य च मांसराशीन् विधाय भक्ष्यानपि शोणितह्रदान् ।**
**सुतृप्तमेनं परमादरेण समाह्वयामास सभातलाय ।।१००।।**

**वेदाङ्गतीर्थीया—** सुतृप्तम् [तान् भक्षयित्वा] ।।१००–१०५।।

**वरदराजीया—** अस्य कुम्भकर्णस्यार्थे शैलोपमान् पर्वताकारान् मांसानां राशीन् भक्ष्यान् विधाय पानार्थानां च शोणितानां रक्तानां ह्रदांश्च विधायेति सम्बन्धः । सुतृप्तमेनं कुम्भकर्णं परमादरेण उत्तमादरपूर्वकं सभातलाय सभातलं प्रति समाह्वयामास समाह्वयत् ।।१००।।

**जनार्दनीया—** किं कृत्वा ? अस्य कुम्भकर्णस्यार्थ इति शेषः । भक्ष्यान् शैलोपमान् शैलनिभान् मांसराशीन् निधाय, शोणितानां रक्तानां ह्रदानपि विधायेत्यर्थः । मांसादिना सुतृप्तं एनं कुम्भकर्णम् । परमादरेण सम्मानेन ।।१००।।

**चट्टी—** किं कृत्वा अस्य कुम्भकर्णस्यार्थे भक्ष्यान् शैलोपमान् पर्वतसदृशान् मांसराशीन् निधाय पानार्थं शोणितानां ह्रदानपि विधायेत्यर्थः । मांसादिना सुतृप्तं पूर्णोदरं एनं कुम्भकर्णं परमादरेण अतिसम्मानेन सभातलाय समाह्वयामास ।।१००।।

**उवाच चैनं रजनीचरेन्द्रः पराजितोऽस्म्यद्य हि जीवति त्वयि ।**
**रणे नरेणैव च रामनाम्ना कुरुष्व मे प्रीतिममुं निहत्य ।।१०१।।**

**मधुसूदनीया–** ।। **रणे नरेणैव हि चेति** ।। चशब्देन 'अप्सु प्लवन्ति पाषाणाः मानुषाः घ्नन्ति राक्षसान् । कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः ।।' इतीदमपि वाक्यं कुम्भकर्णं प्रत्युक्तमिति सूचयति ।।१०१-१११।।

**वरदराजीया–** रजनीचरेन्द्रो रावणः एनं कुम्भकर्णं प्रत्युवाच । किमिति । त्वयि जीवमाने सति अद्य रामनाम्ना नरेण मनुष्येणैव पराजितोऽस्मि । अमुं रामं निहत्य मे प्रीतिं कुरुष्व ।।१०१।।

**जनार्दनीया–** एनं कुम्भकर्णं प्रत्युवाच । किमिति ? नरेण मनुष्येण पराजितोऽस्मि । अमुं रामम् ।।

**चट्टी–** रजनीचरेन्द्रः रावणः एनं कुम्भकर्णं प्रत्युवाच । किमिति । त्वयि जीवति सति जीवमाने सति अद्य रामनाम्ना नरेण मनुष्येणैव पराजितोऽस्मि । अमुं रामं निहत्य मे प्रीतिं कुरुष्व । 'अप्सु प्लवन्ति पाषाणाः मानुषाः घ्नन्ति राक्षसान् । कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः ।।' इदमपि वाक्यं कुम्भकर्णं प्रत्युक्तमिति सूचयति ।।१०१।।

**प्रमाणसंग्रह–** ।। **नरेणेति** ।। 'अप्सु प्लवन्ति पाषाणाः मानुषाः घ्नन्ति राक्षसान् । कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः ।।' इति ।।१०१।।

**इतीरितः कारणमप्यशेषं श्रुत्वा जगर्हाग्रजमेव वीरः ।**
**अमोघवीर्येण हि राघवेण त्वया विरोधश्चरितो बताद्य ।।१०२।।**

**वरदराजीया–** इतीरितो वीरः कुम्भकर्णः अशेषकारणं रामेण साकं विरोधकारणं सीतानयनादिरूपं श्रुत्वा अग्रजं रावणमेव जगर्ह गर्हयामास । निन्दितवान् इत्यर्थः । गर्हाप्रकारं दर्शयति– **अमोघेति** ।। अमोघमव्यर्थं वीर्यं पराक्रमो यस्य तेन राघवेण त्वया विरोधो कलहः चरितः आचरितः । बत खेदः ।।

**जनार्दनीया–** कारणं वैरकारणं श्रुत्वा, अग्रजमपि रावणमपि जगर्ह अभर्त्सयन् । जगर्हेत्युक्तं विशदयति– **अमोघेति** ।। चरितः कृतः । बत कष्टम् ।।१०२।।

**चट्टी–** इतीरितः वीरः कुम्भकर्णः अशेषं कारणं रामेण साकं विरोधे कारणं सीतानयनादिरूपं श्रुत्वा अग्रजं रावणमेव जगर्ह अभर्त्सयन् । जगर्हेत्युक्तम् विशदयति– **अमोघेति** ।। अमोघं वीर्यं पराक्रमो यस्य तेन राघवेण अद्य त्वया विरोधः कलहः चरितः कृतः बत कष्टम् ।।१०२।।

**प्रशस्यते नो बलिभिर्विरोधः कथञ्चिदेषोऽतिबलो मतो मम ।**
**इतीरितो रावण आह दुर्नयोऽप्यहं त्वयाऽव्यो हि किमन्यथा त्वया ।।१०३।।**

**वादिराजीया–** कथञ्चिदेषोऽतिबलो मतो ममेत्यत्र कथञ्चित् न प्रशस्यत इति पूर्वेणान्वयः ।।

**वरदराजीया–** बलिभिः बलाधिकैः विरोधः कथञ्चित् केनापि प्रकारेण नो प्रशस्यते न प्रशस्तः । एषः रामोऽतिबलः मम मतः सम्मत इतीरितो रावणो आह । किमिति । दुष्टो नयो नीतिर्यस्यासौ अहमपि त्वया अव्यः रक्षणीयो हि । अन्यथा अरक्षणे त्वया किं प्रयोजनमित्यर्थः ।।१०३।।

**जनार्दनीया–** कुतः ? बलिभिः साकं विरोधः वैरं कथञ्चित् कदापि नो प्रशस्यते न प्रशस्तं, नैव युक्त इत्यर्थः । एषः रामोऽतिबलः समर्थः इति मम मतः सम्मतः । आह । किमिति ? अहमपि यद्यपि दुर्नयः दुष्टनीतिः । तथाऽपि त्वया अव्यः रक्ष्यः । अन्यथा रक्षणाभावे किं किं फलम्? ।।१०३।।

**अनन्तभट्टीया–** कथञ्चित् केनापि प्रकारेण न प्रशस्यते । रावणेऽपीति सम्बन्धः ।।१०३।।

**चट्टी–** बलिभिः बलाधिकैः साकं विरोधः वैरं कथञ्चित् केनापि प्रकारेण नो प्रशस्यते न प्रशस्तं नैव युक्तमित्यर्थः । एषः रामोऽतिबलः इति मम मतः सम्मतः । इतीरितो रावणः आह । किमिति । अपि यद्यपि अहं दुष्टः नयो नीतिः यस्य सः तथापि त्वया अव्यः रक्ष्यः । अन्यथा रक्षणाभावे त्वया किं फलम् ।।

**भारतश्री–** कथञ्चिन्न प्रशस्यते । सर्वथा न प्रशस्यते । अधिकं अकार्यकार्यपि । अन्यथा एतत्कार्यं विना त्वया किं प्रयोजनम् । ममेति शेषः ।।१०३-१११।।

**चरन्ति राजान उताक्रमं क्वचित् त्वयोपमान् बन्धुजनान् बलाधिकान् ।**
**समीक्ष्य हीत्थं गदितोऽग्रजेन स[१] कुम्भकर्णः प्रययौ रणाय ।।१०४।।**

**वादिराजीया–** त्वयोपमा येषां ते त्वयोपमा इत्यलुक्सामसः । उपमीयन्त इत्युपमा इति वा ।।

**सत्याभिनवीया–** तत्रैव चरन्ति राजान उताक्रमं इति श्लोके त्वयोपमं बलाधिकं बन्धुं समीक्ष्येत्येवोक्ते सर्वराज्ञां बन्धुरेक एवेति प्रतीयते । तच्च बाधितम् । तत्तद्राजबन्धूनां भिन्नत्वात् । त्वयोपमान् बलाधिकान् समीक्ष्येत्येवोक्ते तत्तद्राजैः अनुजरूप एव बन्धुः ईक्षणीय इति प्रतीयते । तदपि बाधितम् । अग्रजादिबन्धूनामपि ईक्षणदर्शनात् । अतः त्वयोपमान् बन्धुजनान् बलाधिकान् समीक्ष्येत्युक्तम् । एतेन रावणेन कुम्भकर्णमेकमेव समीक्ष्य अक्रमस्य कृतत्वात् राजानः त्वयोपमान् बलाधिकान् बन्धुजनान् समीक्ष्य अकर्म कुर्वन्तीति कथनमयुक्तमिति दूषणं परास्तम् । अक्रमकर्तारः सर्वे राजानः प्रत्येकं त्वयोपमान् बलाधिकान् बन्धुजनान् समीक्ष्य अक्रमं [अकर्म] कुर्वन्तीत्युच्यते इत्यनङ्गीकारात् । अक्रमं कर्तॄणां राज्ञां मध्ये केनचित् राज्ञा अनुजरूपं बन्धुं समीक्ष्य अक्रमः क्रियते । केनचित् राज्ञा अग्रजरूपं

---

१. अथान्यद्धनुरादाय दारुणं घोरदर्शनम् । निष्पपात महातेजाः कुम्भकर्णो महाबलः ।। इति वाल्मीकीये ६.६५.४०

बन्धुं समीक्ष्य अक्रमः क्रियते । केनचित् राज्ञा मातुलरूपं बन्धुं निरीक्ष्य अक्रमः क्रियत इत्याद्युच्यत इत्यङ्गीकारात् ।।१०४।।

**वरदराजीया–** तदेव दर्शयति– **चरन्तीति** ।। राजानो अक्रममन्यायं चरन्ति किं कृत्वा त्वयोपमान् त्वत्सदृशान् बलेनाधिकान् बन्धुजनान् सुहृज्जनान् समीक्ष्य चरन्तीत्यर्थः । स कुम्भकर्णो अग्रजेन रावणेन इत्थं गदितः उक्तः रणाय युद्धार्थं प्रययौ ।।१०४।।

**जनार्दनीया–** स्वरक्षणमेवोपपादयति– **चरन्तीति** ।। राजानस्त्वया उपमान् सदृशान् बलाधिकान् बन्धुजनान् समीक्ष्य, वैरिभयं त्यक्त्वा, क्वचिदक्रममुतानीतिमपि चरन्ति कुर्वन्ति हि । अग्रजेन रावणेन इत्थं पूर्वोक्तप्रकारेण गदित उक्तः ।।१०४।।

**अनन्तभट्टीया–** समीक्ष्य बलवद्बन्धुयुक्तानां अस्माकं अन्ये किं करिष्यन्तीति विचार्येत्यर्थः ।।

**ताम्रपर्णीया–** त्वया उपमा येषां ते त्वयोपमा इत्यलुक्समासः । उपमीयन्ते इत्युपमेति वा ।।

**चट्टी–** स्वरक्षणमेवोपपादयति– **चरन्तीति** ।। राजानस्त्वया उपमा येषां ते तथा त्वयोपमाः । अलुक्समासः । उपमीयन्त इति उपमा इति वा । बलाधिकान् बन्धुजनान् समीक्ष्य क्वचिदक्रममुतानीतिमपि च चरन्ति कुर्वन्ति । कुम्भकर्णः अग्रजेन रावणेन इत्थं पूर्वोक्तप्रकारेण गदित उक्तः सन् रणाय युद्धार्थं प्रययौ ।।१०४।।

**गूढवाक्यार्थ–** त्वयोपमानान् त्वं उपमा एषां ते त्वयोपमा इत्यलुक्समासः । त्वत्सदृशानित्यर्थः ।।

**प्राकारमुल्लङ्घ्य[१] स पञ्चयोजनं यदा ययौ शूलवरायुधो रणम् ।**
**कपिप्रवीरा अखिलाः प्रदुद्रुवुर्भयादतीत्यैव च [२]सेतुमाशु ।।१०५।।**

**वरदराजीया–** शूलवरं आयुधं यस्य स कुम्भकर्णः पञ्चयोजनं पञ्चयोजनोन्नतं प्राकारं लङ्कायाः प्रकारभूतं त्रिकूटमुल्लङ्घ्य रणं रणमण्डलं यदा ययौ । तदाखिलाः कपिप्रवीराः भयात् सेतुमतीत्य अतिक्रम्य आशु प्रदुद्रुवुः ।।१०५।।

**जनार्दनीया–** शूलवरमेव आयुधं यस्य स कुम्भकर्णः । पञ्चयोजनं पञ्चयोजनप्रमाणप्राकारम् । पुर्याः प्राकाररूपकं त्रिकूटगिरिं आलङ्घ्य उल्लङ्घ्य, रणं रणस्थानं प्रति । यदा ययौ । तदा सेतुमतीत्य ।।

१. 'प्राकारमालङ्घ्य' इति जनार्दनीयचट्टीपाठः ।

२. वध्यमानास्तु ते वीरा राक्षसेन च लीलया । सागरं येन ते तीर्णाः पथा तेनैव दुद्रुवुः ।। वा.रा.६.६६.१५

**चट्टी–** शूलवरं आयुधं यस्य स कुम्भकर्णः । पञ्चयोजनं पञ्चयोजनोन्नतं प्राकारं लङ्कायाः प्राकारभूतं त्रिकूटगिरिं उल्लङ्घ्य रणं रणस्थानं प्रति यदा ययौ तदा अखिलाः कपिवीराः भयात् सेतुमतीत्य अतिक्रम्यैव आशु प्रदुद्रुवुः ।।१०५।।

**शतबलिपनसाख्यौ तत्र वस्वंशभूतौ**
**पवनगणवरांशौ श्वेतसम्पातिनौ च ।**
**निरृऋतितनुमथोग्रं दुर्मुखं केसरीति**
**प्रवरमथ मरुत्सु प्रास्यदेतान् मुखे सः ।।१०६।।**

**वेदाङ्गतीर्थीया–** तत्र तावशिष्टान् एतान् शतबल्यादीन् मुखे प्रास्यदित्यन्वयः । केसरीति प्रसिद्धमित्यन्वयः ।।१०६–१०८।।

**अभिनव–** तत्रैव शतबलिपनसाख्यौ तत्र इति श्लोकः । तस्यार्थः । सः कुम्भकर्णः एतान् मुखे प्रास्यत् । स एतान् मुखे प्रास्यदित्युक्तम् विवृणोति– **शतबलिपनसाख्याविति** ।। सः कुम्भकर्णः तत्र तेषु कपिषु मध्ये वस्वंशभूतौ शतबलिपनसाख्यौ कपी, पवनगणवरांशौ श्वेतसम्पातिनौ श्वेतसम्पातिनामकौ कपी च । अथशब्दौ समुच्चये । निरृऋतितनुं उग्रं दुर्मुखं दुर्मुखनामकं कपिमथ कपिं च मरुत्सु प्रवरं केसरीति नामकं कपिमथ कपिं च मुखे प्रास्यदिति । एतेन शतबलिपनसाख्यावित्यादीनां द्वितीयाद्विवचनैकवचनान्तानाम् एतानिति द्वितीयाबहुवचनान्तेनानन्वय इति दूषणं निरस्तम् । 'सङ्क्षेपविस्तराभ्यां तु प्रवदन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलवाहुल्यकारणात् ।।' इति वचनानुसारेण फलबाहुल्यसिद्ध्यर्थं स एतान् मुखे प्रास्यदिति सङ्क्षेपेणोक्त्वा स इत्यादेः आवृत्तिं स्वीकृत्य शतबलिपनसाख्यावित्यादिना विस्तारेणोच्यत इत्यभ्युपगमात् ।।१०६।।

**वरदराजीया–** तेषां वानरश्रेष्ठानां मध्ये वस्वंशभूतौ वसुषु वसुद्वयस्वरूपांशभूतौ शतबलिपनसाख्यौ शतबलिपनसनामवानरौ तथा पवनगणे एकोनपञ्चाशन्मरुद्गणे वरयोः श्रेष्ठयोः अंशभूतौ स्वरूपांशावतारौ श्वेतसम्पातिनामानौ वानरौ तथा अनन्तरं निरृऋतितनुः कोणाधिपतिनिरृऋतिमुग्रं पराक्रमं दुर्मुखनामानं वानरं तथा मरुत्सु एकोनपञ्चाशन्मरुत्सु प्रवरं श्रेष्ठं केसरीति नामानं वानरं इत्येतान् स कुम्भकर्णो मुखे प्रास्यत् निक्षिप्तवान् ।।१०६।।

**जनार्दनीया–** तत्र तेषु कपिषु मध्ये वस्वोः अंशभूतौ अवतारभूतौ । अष्टवसुमध्ये द्वाविति भावः । शतबलिश्च पनसश्चेति आख्या नामा ययोस्तौ तथा । पवनगणे मरुद्गणे वरयोः श्रेष्ठयोः मरुतोः अंशौ अवतारौ । कपित्वे श्वेतसम्पातिनौ च । तदाख्यौ । निरृऋतेः कोणाधिपतिनिरृऋतेस्तनुं स्वस्वरूपभूत-

बन्धुं समीक्ष्य अक्रमः क्रियते । केनचित् राज्ञा मातुलरूपं बन्धुं निरीक्ष्य अक्रमः क्रियत इत्याद्युच्यत इत्यङ्गीकारात् ।।१०४।।

**वरदराजीया–** तदेव दर्शयति– **चरन्तीति** ।। राजानो अक्रममन्यायं चरन्ति किं कृत्वा त्वयोपमान् त्वत्सदृशान् बलेनाधिकान् बन्धुजनान् सुहृज्जनान् समीक्ष्य चरन्तीत्यर्थः । स कुम्भकर्णो अग्रजेन रावणेन इत्थं गदितः उक्तः रणाय युद्धार्थं प्रययौ ।।१०४।।

**जनार्दनीया–** स्वरक्षणमेवोपपादयति– **चरन्तीति** ।। राजानस्त्वया उपमान् सदृशान् बलाधिकान् बन्धुजनान् समीक्ष्य, वैरिभयं त्यक्त्वा, कचिदक्रममुतानीतिमपि चरन्ति कुर्वन्ति हि । अग्रजेन रावणेन इत्थं पूर्वोक्तप्रकारेण गदित उक्तः ।।१०४।।

**अनन्तभट्टीया–** समीक्ष्य बलवद्बन्धुयुक्तानां अस्माकं अन्ये किं करिष्यन्तीति विचार्येत्यर्थः ।।

**ताम्रपर्णीया–** त्वया उपमा येषां ते त्वयोपमा इत्यलुक्समासः । उपमीयन्ते इत्युपमेति वा ।।

**चट्टी–** स्वरक्षणमेवोपपादयति– **चरन्तीति** ।। राजानस्त्वया उपमा येषां ते तथा त्वयोपमाः । अलुक्समासः । उपमीयन्त इति उपमा इति वा । बलाधिकान् बन्धुजनान् समीक्ष्य कचिदक्रममुतानीतिमपि च चरन्ति कुर्वन्ति । कुम्भकर्णः अग्रजेन रावणेन इत्थं पूर्वोक्तप्रकारेण गदित उक्तः सन् रणाय युद्धार्थं प्रययौ ।।१०४।।

**गूढवाक्यार्थ–** त्वयोपमानान् त्वं उपमा एषां ते त्वयोपमा इत्यलुक्समासः । त्वत्सदृशानित्यर्थः ।।

**प्राकारमुल्लङ्घ्य[१] स पञ्चयोजनं यदा ययौ शूलवरायुधो रणम् ।**
**कपिप्रवीरा अखिलाः प्रदुद्रुवुर्भयादतीत्यैव च [२]सेतुमाशु ।।१०५।।**

**वरदराजीया–** शूलवरं आयुधं यस्य स कुम्भकर्णः पञ्चयोजनं पञ्चयोजनोन्नतं प्राकारं लङ्कायाः प्रकारभूतं त्रिकूटमुल्लङ्घ्य रणं रणमण्डलं यदा ययौ । तदाखिलाः कपिप्रवीराः भयात् सेतुमतीत्य अतिक्रम्य आशु प्रदुद्रुवुः ।।१०५।।

**जनार्दनीया–** शूलवरमेव आयुधं यस्य स कुम्भकर्णः । पञ्चयोजनं पञ्चयोजनप्रमाणप्राकारम् । पुर्याः प्राकाररूपकं त्रिकूटगिरिं आलङ्घ्य उल्लङ्घ्य, रणं रणस्थानं प्रति । यदा ययौ । तदा सेतुमतीत्य ।।

---

१. 'प्राकारमालङ्घ्य' इति जनार्दनीयचट्टीपाठः ।

२. वध्यमानास्तु ते वीरा राक्षसेन च लीलया । सागरं येन ते तीर्णाः पथा तेनैव दुद्रुवुः ।। वा.रा.६.६६.१५

**चट्टी–** शूलवरं आयुधं यस्य स कुम्भकर्णः । पञ्चयोजनं पञ्चयोजनोन्नतं प्राकारं लङ्कायाः प्राकारभूतं त्रिकूटगिरिं उल्लङ्घ्य रणं रणस्थानं प्रति यदा ययौ तदा अखिलाः कपिवीराः भयात् सेतुमतीत्य अतिक्रम्यैव आशु प्रदुद्रुवुः ।।१०५।।

**शतबलिपनसाख्यौ तत्र वस्वंशभूतौ**
**पवनगणवरांशौ श्वेतसम्पातिनौ च ।**
**निरृतितनुमथोग्रं दुर्मुखं केसरीति**
**प्रवरमथ मरुत्सु प्रास्यदेतान् मुखे सः ।।१०६।।**

**वेदाङ्गतीर्थीया–** तत्र तावशिष्टान् एतान् शतबल्यादीन् मुखे प्रास्यदित्यन्वयः । केसरीति प्रसिद्धमित्यन्वयः ।।१०६–१०८।।

**अभिनव–** तत्रैव शतबलिपनसाख्यौ तत्र इति श्लोकः । तस्यार्थः । सः कुम्भकर्णः एतान् मुखे प्रास्यत् । स एतान् मुखे प्रास्यदित्युक्तम् विवृणोति– **शतबलिपनसाख्याविति** ।। सः कुम्भकर्णः तत्र तेषु कपिषु मध्ये वस्वंशभूतौ शतबलिपनसाख्यौ कपी, पवनगणवरांशौ श्वेतसम्पातिनौ श्वेतसम्पातिनामकौ कपी च । अथशब्दौ समुच्चये । निरृतितनुं उग्रं दुर्मुखं दुर्मुखनामकं कपिमथ कपिं च मरुत्सु प्रवरं केसरीति नामकं कपिमथ कपिं च मुखे प्रास्यदिति । एतेन शतबलिपनसाख्यावित्यादीनां द्वितीयाद्विवचनैकवचनान्तानाम् एतानिति द्वितीयाबहुवचनान्तेनानन्वय इति दूषणं निरस्तम् । 'सङ्क्षेपविस्तराभ्यां तु प्रवदन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात् ।।' इति वचनानुसारेण फलबाहुल्यसिद्ध्यर्थं स एतान् मुखे प्रास्यदिति सङ्क्षेपेणोक्त्वा स इत्यादेः आवृत्तिं स्वीकृत्य शतवलिपनसाख्यावित्यादिना विस्तारेणोच्यत इत्यभ्युपगमात् ।।१०६।।

**वरदराजीया–** तेषां वानरश्रेष्ठानां मध्ये वस्वंशभूतौ वसुषु वसुद्वयस्वरूपांशभूतौ शतबलिपनसाख्यौ शतवलिपनसनामवानरौ तथा पवनगणे एकोनपञ्चाशन्मरुद्गणे वरयोः श्रेष्ठयोः अंशभूतौ स्वरूपांशावतारौ श्वेतसम्पातिनामानौ वानरौ तथा अनन्तरं निरृतितनुः कोणाधिपतिनिरृतिमुग्रं पराक्रमं दुर्मुखनामानं वानरं तथा मरुत्सु एकोनपञ्चाशन्मरुत्सु प्रवरं श्रेष्ठं केसरीति नामानं वानरं इत्येतान् स कुम्भकर्णो मुखे प्रास्यत् निक्षिप्तवान् ।।१०६।।

**जनार्दनीया–** तत्र तेषु कपिषु मध्ये वस्वोः अंशभूतौ अवतारभूतौ । अष्टवसुमध्ये द्वाविति भावः । शतवलिश्च पनसश्चेति आख्या नामा ययोस्तौ तथा । पवनगणे मरुद्गणे वरयोः श्रेष्ठयोः मरुतोः अंशौ अवतारौ । कपित्वे श्वेतसम्पातिनौ च । तदाख्यौ । निरृतेः कोणाधिपतिनिरृतेस्तनुं स्वस्वरूपभूत-

मवतारभूतमित्यर्थः । उग्रमसह्यं दुर्मुखं दुर्मुखाख्यं मरुत्सु मध्ये प्रवरम् । कपित्वे केसरीति यः प्रसिद्धः । तं केसरिणम् । स कुम्भकर्णः । एतान् पूर्वोक्तान् शतबल्यादिषट् मुखे प्रास्यत् प्राक्षिपत् ।।१०६।।

**अनन्तभट्टीया–** उग्रमित्येतत् दुर्मुखस्य विशेषणम् ।।१०६–१०७।।

**चट्टी–** तत्र तेषु कपिषु मध्ये वस्वोः अंशभूतौ अवतारौ । अष्टवसुमध्ये द्वाविति भावः । शतबलिश्च पनसश्चेति आख्या नाम ययोस्तौ तथा वानरौ । तथा पवनगणे एकोनपञ्चाशन्मरुद्गणे वरयोः श्रेष्ठयोः मरुतोः अंशौ अवतारभूतौ कपित्वे श्वेतसम्पातिनौ च निरृऋतेः कोणाधिपतेः तनुं स्वस्वरूपभूत-मवतारमित्यर्थः । उग्रमसह्यं दुर्मुखं दुर्मुखाख्यं मरुत्सु प्रवरं श्रेष्ठं कपित्वे यः केसरीति प्रसिद्धः तं केसरिणं चेत्येतान् स कुम्भकर्णः मुखे प्रास्यत् प्राक्षिपत् ।।१०६।।

**भावचन्द्रिका–** 'वस्वंशभूतौ अष्टवस्वंशभूतौ द्वौ देवौ ताभ्यां जातावेतौ' इति केचित् । 'वसुषु वसुद्वयांशौ' इति केचिदिति सङ्ग्रहरामायणे टीकायां विद्याभूषणतीर्थश्रीपादैरुक्तम् । उग्रत्वाद्दुर्मुखम् ।। प्रवरमिति ।। ननु 'पञ्चमरुत्सु प्रवीरा' इति 'पवनगणवरांशौ' इति च पूर्वत्र मरुत्सु वीरमित्युच्यते । एवञ्च सर्वेषामेकप्रकारत्वात् प्रवरत्वानुपपत्तौ वैवक्षिकं तदिति वाच्यं तत्कथमिति चेदुच्यते । मरुतामुत्पत्तौ दितिगर्भं प्रविश्य इन्द्रेण गर्भः सप्तधा दलितः । पुनश्चैकैकः सप्तधा दलितः । ते सप्तस्कन्धसञ्ज्ञाः सप्तमरुद्गणाः बभूवुः । एवञ्च सर्वमरुदपेक्षया मुख्यवायोः प्रवरत्वम् । ततः प्राणप्रवहयोः प्रवरत्वम् । ततः स्वस्वगणापेक्षया ज्येष्ठत्वेन किञ्चिदुत्तमत्वेन आवेशादिना वा प्रवरत्वं केषाञ्चिदिति ज्ञेयम् । 'उक्तशेषाः शतस्थाः देवाश्च' इति प्राणे प्रवहेतरेषां साम्योक्तिरिति । 'सप्तस्कन्धगतो लोकान् यो बिभर्ति महाबलः' इत्यस्य सप्तस्कन्धान् गतः प्राप्तः तेषु विद्यमान इति यावत् । अनेन मुख्यप्राणस्योत्तमत्वं ज्ञायते । दशमे श्रुतिगीतापूर्वभागे तात्पर्ये चतुर्थे नवतितमाध्याये च 'मरुतश्च समास्सर्वे सप्त तेषु प्रधानकाः' इति वचनात् स्वस्वगणप्रवरत्वं ज्ञायते । प्राणप्रवहयोस्तु तारतम्यस्तोत्रात् ज्ञायते । ब्रह्मवैवर्ते च–

'तं गर्भं सप्तधा भित्वा एकैकं सप्तधा पुनः ।' इति इन्द्रं प्रति दितिः ।
'सप्तस्कन्धा इमे सप्त चरन्तु मम पुत्रकाः । मरुतश्चेति विख्याताः गणास्ते सप्तसप्तकाः ।।
पृथिव्यां प्रथमस्कन्धः द्वितीयश्चापि भास्करे । सोमे तृतीयो विज्ञेयश्चतुर्थो ज्योतिषां गणे ।।
ऋक्षेभ्यश्च ततश्चोर्ध्वं वायुमार्गश्च पञ्चमः । सप्तर्षिभ्यस्तथैवोर्ध्वं वातस्कन्धस्ततः परः ।।
पृथिव्यां प्रथमस्कन्धो मेघेभ्यश्च य आहवः । द्वितीयश्चापि मेघेभ्यः आसूर्यात्प्रावहस्तु सः ।।
सूर्यादूर्ध्वं ततः सोमात् उद्वहो वै तथा स्मृतः । सोमादूर्ध्वं तथार्क्षेभ्यश्चतुर्थः संवहस्तु यः ।।
ऋक्षेभ्यश्च तथैवोर्ध्वं अङ्गजः प्रथमस्तु सः । ऊर्ध्वगणस्तथर्षिभ्यः षष्ठश्चैव परावहः ।।
सप्तर्षिभ्यस्तथैवोर्ध्वं आध्रुवाः सप्तसप्तयः । वातस्कन्धाः परीवाहास्तत्र तिष्ठन्तु मे सुताः ।।' इति

रजनिचरवरोऽसौ कुम्भकर्णः प्रतापी
कुमुदमपि जयन्तं पाणिना सम्पिपेष ।
नळमथ च गजादीन् पञ्च नीलं सतारं
गिरिवरतरुहस्तान् मुष्टिनाऽपातयच्च ॥१०७॥

**वरदराजीया–** अथ प्रतापी प्रतापवान् रजनीचराणां ईशः श्रेष्ठः कुम्भकर्णः कुमुदं जयन्तश्चेति वानरद्वयं पाणिना सम्पिपेष पिष्टीचकार । नलं गजादीन् पूर्वोक्तान् पञ्च तारेण सह वर्तमानं नीलं इत्येतान् गिरिवराः तरवश्च हस्तेषु येषां ते तथा तान् मुष्टिना मुष्टिप्रहारेण अपातयदित्यर्थः ॥१०७॥

**जनार्दनीया–** प्रतापी पराक्रमी । कुमुदं वानरं पाणिना सम्पिपेष ममर्देत्यर्थः । जयन्तमपि जयन्ताख्यवानरमपि सम्पिपेषेत्यर्थः । 'जयन्तकुमुदावुभौ' इति सङ्ग्रहात् । नलं, गजादीन् पञ्च, सतारं नीलं चेति । गिरवरतरुहस्तान् पर्वतस्थूलवृक्षहस्तान् नलादीन् मुष्टिनाऽपातयत् ॥१०७॥

**चट्टी–** अथ प्रतापी पराक्रमी रजनीचराणां वरः श्रेष्ठः असौ कुम्भकर्णः कुमुदं जयन्तं चेति वानरद्वयं पाणिना सम्पिपेष पेषीचकार । अथ नलं गजादीन् पूर्वोक्तान् पञ्च सतारं नीलं चेति । गिरवरतरवः हस्तेषु येषां ते तथा । एतान् नलादीन् मुष्टिनाऽपातयत् ॥१०७॥

अथाङ्गदश्च जाम्बवानिनात्मजश्च वानरैः ।
निजघ्निरे निशाचरं सवृक्षशैलसानुभिः ॥१०८॥

**वरदराजीया–** अधानन्तरं अङ्गदः जाम्बवान् इनात्मजः सुग्रीवश्चेति त्रयः वानरैः सह वृक्षैः सह वर्तमानैः शैलसानुभिः, पर्वतशृङ्गैः सवृक्षशैलसानुभिः वानरैरिति वान्वयः निजघ्निरे ॥१०८॥

**जनार्दनीया–** इनः सूर्यस्तदात्मजो । वानरैः सह वृक्षसहितैः शैलैः, सानुभिः पर्वतशिखरैः । निशाचरं निजघ्निरे जघ्नुः ॥१०८॥

**अनन्तभट्टीया–** सवृक्षशैलसानुभिः वानरैरित्यन्वयः ॥१०८–१११॥

**चट्टी–** अथ अनन्तरं अङ्गदश्च जाम्बवांश्च इनः सूर्यस्तदात्मजो सुग्रीवश्चेति त्रयः अन्यैः वानरैः सह वृक्षसहितैः शैलसानुभिः पर्वतशिखरैः सवृक्षशैलसानुभिः वानरैरिति वा अन्वंयः । निजघ्निरे जघ्नुः ॥

विचूर्णिताश्च पर्वतास्तनौ निशाचरस्य ते ।
बभूव काचन व्यथा न चास्य बाहुशालिनः ॥१०९॥

**वेदाङ्गतीर्थीया–** बाहुशालिनः बाहुबलवतः ।।१०९–११६।।

**वरदराजीया–** ते पर्वताः निशाचरस्य कुम्भकर्णस्य तनौ देहे विचूर्णिताः । बाहुशालिनः बाहुबलवतोऽस्य कुम्भकर्णस्य काचन कापि व्यथा न बभूवेत्यर्थः ।।१०९।।

**जनार्दनीया–** बाहुभ्यां शालते असौ तथा । तस्य बाहुबलवत इत्यर्थः । अस्य कुम्भकर्णस्य । काचन किञ्चिदपि ।।१०९।।

**चट्टी–** निशाचरस्य कुम्भकर्णस्य तनौ देहे विचूर्णिताः । बाहुभ्यां शालते इति बाहुशाली तस्य । सः बाहुबलं एत्य इत्यर्थः । अस्य कुम्भकर्णस्य काचनव्यथा किञ्चिदपि व्यथा न बभूव ।।१०९।।

**अथापरं महाचलं प्रगृह्य भास्करात्मजः ।**
**मुमोच राक्षसेऽथ तं प्रगृह्य तं जघान सः ।।११०।।**

**वरदराजीया–** अथानन्तरं भास्करात्मजः सुग्रीवो अपरमन्यं महान्तमचलं गिरिं प्रगृह्य राक्षसे कुम्भकर्णे मुमोच । अथानन्तरं स कुम्भकर्णः तं पर्वतं प्रगृह्य तं सुग्रीवं जघान तताड ।।११०।।

**जनार्दनीया–** अपरमन्यं महाचलं पर्वतं प्रगृह्य, राक्षसे मुमोच चिक्षेप । अथ स कुम्भकर्णस्तं पर्वतं प्रगृह्य, तं सुग्रीवं जघान ।।११०।।

**चट्टी–** अथ अनन्तरं भास्करात्मजः सुग्रीवः अपरमन्यं महाचलं पर्वतं प्रगृह्य राक्षसे कुम्भकर्णे मुमोच । अथ कुम्भकर्णस्तं पर्वतं प्रगृह्य सुग्रीवं जघान ।।११०।।

**गूढवाक्यार्थ–** तं पर्वतम् । तं सुग्रीवम् ।।११०।।

**तदा पपात सूर्यजस्तताड चाङ्गदं रुषा ।**
**स जाम्बवन्तमाशु तौ निपेततुस्तलाहतौ ।।१११।।**

**वरदराजीया–** सूर्यजः सुग्रीवः पपात । स जाम्बववता सहितं अङ्गदं रुषा कोपेन तताड ताडितवान् । तलेनेति शेषः । तलाहतौ करतलेनाहतौ ताडितौ तौ आशु निपेततुः ।।१११।।

**जनार्दनीया–** स जाम्बवन्तं अङ्गदं च । तलेन हस्ततलेन । आहतावङ्गदजाम्बवन्तौ निपेततुः ।।

**चट्टी–** तदा सूर्यजः सुग्रीवः पपात । स जाम्बवन्तं जाम्बवता सविवरं अङ्गदं रूषा कोपेन तताड ताडितवान् । तलेन हस्ततलेन आहतौ तौ अङ्गदजाम्बवन्तौ आशु निपेततुः ।।१११।।

**अथ प्रगृह्य भास्करिं ययौ स राक्षसो बली ।**
**जगाम चानु मारुतिः सुसूक्ष्ममक्षिकोपमः ॥११२॥**

**वरदराजीया–** अथानन्तरं बली स राक्षसः कुम्भकर्णो भास्करिं सुग्रीवं प्रगृह्य ययौ । सुसूक्ष्ममक्षिकासदृशो भूत्वा मारुतिः हनूमान् तं अनु कुम्भकर्णं जगाम ॥११२॥

**जनार्दनीया–** भास्करिं सुग्रीवं प्रगृह्य ययौ । सूक्ष्ममक्षिकारूपप्रमाणेन उपमः सदृशो । मारुतिरनु सुग्रीवमनु जगाम ॥११२॥

**अनन्तभट्टीया–** भास्करिं अनु पृष्ठतः ॥११२॥

**चट्टी–** अथ अनन्तरं बली राक्षसः कुम्भकर्णः भास्करिं सुग्रीवं प्रगृह्य ययौ । सूक्ष्ममक्षिकारूपप्रमाणेन उपमः सदृशो मारुतिः हनुमान् अनु सुग्रीवमनु जगाम च ॥११२॥

**भारतश्री–** भास्करिं प्रगृह्य ययौ अपि राजत्वात् तस्य ततश्च एनं न हन्मीति सम्बन्धः ॥

**यदैनमेष बाधते तदा विमोचयाम्यहम् ।**
**यदि स्म शक्यतेऽस्य तु स्वमोचनाय तद् वरम् ॥११३॥**

**सत्याभिनवीया–** तत्रैव यदैनमेष बाधते तदा इति श्लोकः । अत्रैवं योजना । एषः कुम्भकर्णः यदा एनं सुग्रीवं शूलेन बाधते शूलप्रयुक्तमरणं प्रसक्तं भविष्यतीति यावत् । तदा अहम् एनं मोचयामि । इदानीमेव मोचनं कुतो न क्रियते इत्यत आह– **यदि स्मेति** ॥ यदि यस्मात् अस्य अनेन सुग्रीवेण शूलप्रक्षेपात् पूर्वं तु स्वमोचनाय स्वमोचनं कर्तुं शक्यते । अयं स्वमोचनं कर्तुं शक्त इति यावत् । उपलक्षणमेतत् । तत्पीडाकरणे समर्थश्च, तत्स्वमोचनादिकं वरं समीचीनम् इत्येतत् स्म प्रसिद्धम् । ततः इदानीं न मोचयामि । किन्तु शूलप्रक्षेपकाल एव मोचयामीति विचार्य मक्षिकोपमः सन् हनुमान् जगामेति पूर्वेणान्वयः । एतेन कुम्भकर्णेन सुग्रीवं गृहीत्वा गतत्वेन बाधस्य विद्यमानत्वात् यदा बाधते तदा मोचयामीति विचारोऽनुपपन्नः इति दूषणं परास्तम् । शूलेनेति शेषपूरणेन यदा शूलेन बाधते तदा मोचयामीत्यर्थस्योक्तत्वात् । एतेनैव यदि स्मेत्यनेन हनूमतः अज्ञानमुच्यते । तत् प्रमाणविरुद्धमिति चोद्यस्यानवकाशः । यदीति शब्दः यस्मादित्यर्थे वर्तते इति स्वीकृत्य शूलप्रक्षेपात् पूर्वमित्यादेः अध्याहारं कृत्वा अर्थान्तरस्योक्तत्वात् ॥११३॥

**मधुसूदनीया–** ॥ **यदि स्म शक्यतेऽस्य त्विति** ॥ ननु तदानीमेव हनूमान्सुग्रीवं किमिति न मोचयामासेत्यतः स्वेनैव तन्मोक्षणे कृते सुग्रीवस्य प्रीतिकीर्तिनाशौ स्यातामित्याशयेन न

मोचयामासेति विशेषं सूचयति तुशब्देन । तदुक्तम्– 'अयं मुहूर्तात् सुग्रीवो लब्धसञ्ज्ञो महाहवे । आत्मनो वानराणां च यत्पथ्यं तत्करिष्यति ।। मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः । अप्रीतिश्च भवेत्कष्टो कीर्तिनाशश्च शाश्वतः ।। तस्मान्मुहूर्तं काङ्क्षिष्ये विक्रमं पार्थिवस्य तु ।।'[६.६७.७८–८०] इत्यादि रामायणे ।।११३-१२८।।

**वरदराजीया–** केनाभिप्रायेणेत्यत आह– **यदेति** ।। यदा एषः कुम्भकर्णः एनं सुग्रीवं बाधते पीडयिष्यति तदा अहं विमोचयामि मोचयिष्यामि यदि च अस्य सुग्रीवस्य स्वमोचनाय शक्यते स्वमोचयितुं शक्तिः स्यादित्यर्थः । तदा वरं समीचीनमेवेत्यर्थः ।।११३।।

**जनार्दनीया–** सुग्रीवमनुगच्छतो मारुतेरभिप्रायमाह– **यदेति** ।। यदा एषः कुम्भकर्णः । एनं सुग्रीवं बाधते बाधिष्यते तदा, यदि अस्य सुग्रीवस्य स्वमोचनाय शक्यते स्म शक्तिश्चेत्तर्हि वरं समीचीनम् । नो चेत् अहं मोचयामीत्यर्थः ।।११३।।

**अनन्तभट्टीया–** बाधते बाधिष्यते । अस्य शक्यते । अनेन मोचनं कर्तुं शक्यते चेदित्यर्थः ।।

**ताम्रपर्णीया–** ।। **यदैनमिति** ।। यदा नासिकाच्छेदानन्तरं एषः कुम्भकर्णः सुग्रीवं शूलप्रक्षेपेण बाधते । तदाहं शूलप्रहाराद्विमोचयामि । अस्य सुग्रीवस्य तु तुहिनसलिलमाल्यादिस्पर्शानन्तरं स्वमोचनाय शक्य इति यदि यत् तद्वरं उत्तमं अनुमतं इत्यर्थः । अहं शूलबाधपरिहारार्थमेव सह गच्छामि न तु कुम्भकर्णाद्विमोचनाय । तस्य स्वत एव सिद्धे इत्यभिप्रेत्य व्रजति इत्यर्थः । 'पञ्चरात्रनिषेधार्थं एतान् व्याचक्षते यदि'[२.२.उत्पत्त्यधिकरण] इत्यत्र सुधायां [४०८०] 'यदित्यस्यार्थे यदिशब्दः' इति व्याख्यातम् । यद्वा यद्येनमेष बाधते तर्हि मोचयामि । यदि स्वमोचनाय अस्य शक्यते तर्हि तद्विमोचनं वरं इति यथा प्रतीतैव योजना । 'बाध्यते चेदयं राजा मेचयेयं बलादिमम् । स्वयं चेन्मोचयेच्छ्रेयः इत्थं हनुमता गतम् ।।' [हनुमतो मनः] इति सङ्ग्रहरामायणे [यु.का.९.५३-५४] यद्यर्थकचेच्छब्दप्रयोगेन यदातदाशब्दयोः यदि तर्हि इति व्याख्येयत्वात् । न च संशयदोषः । यद्यपि हनुमान् भाविकार्यं निश्चित्यैव स्वीयस्य परैरपहारे प्रच्छन्नवेषिभिरपरैः तन्मोचनोद्योगिभिः सहैव गन्तव्यमिति नीतिं प्रदर्शयितुमेव सह गतः । तथापि पश्यतां कलिमुख्यानां मोहनाय आहितसंशयं प्रदर्शयन् । यद्वा यथा निश्चयरूपमपि साक्षिज्ञानं सदोषं निर्दोषं वा प्रमाणं अप्रमाणं वा इति मानससंशयं प्राप्तयोः सदोषत्वाप्रमाणत्वकोट्योः निर्दोषत्वप्रमाणत्वकोट्योश्च तादर्थ्यमात्रं 'सदोषं चेत् अप्रमाणं अदोषं चेत् प्रमाणमिति गृह्णाति' इति सुधायामुक्तम् [प्रकृत्यधिकरण २२०५] । तथा एनं एष बाधते न वा हनूमान् मोचयिष्यति न वा स्वमोचनाय शक्यते न वा इति लोकसंशयप्राप्तबाधविमोचनादिकोटीनां तादर्थ्यं विषयीकुर्वज्ज्ञानं 'यदैनमेष बाधते' इत्याद्यनूद्यते इति । केचित्तु 'अनालोचनदशायां अयं संशयः' इत्याहुः ।।११३-१२०।।

**चट्टी–** सुग्रीवमनुगच्छतो हनुमतो अभिप्रायमाह– **यदेति** ।। यदा एषः कुम्भकर्णः सुग्रीवं बाधते पीडयिष्यति तदा यदि अस्य सुग्रीवस्य स्वमोचनाय शक्यते स्म शक्तिश्चेत्तर्हि वरं समीचीनं नो चेत् अहं मोचयामीत्यर्थः ।।११३।।

**भावविवृति–** यदैनमेष बाधते इत्यत्र एषः कुम्भकर्णः एनं सुग्रीवं यदा बाधते तदा अहं एनं विमोचयामि । यदि यदा सुग्रीवः स्वमोचनाय स्वात्मविमोक्षणाय शक्यते तदा तत् स्वेनैव स्वात्मविमोक्षणं अस्य सुग्रीवस्य वरं उत्तमम् । तु खल्वित्यर्थः । एवं सति हनूमतः संशयरूपप्रतीतिरेव नास्ति । 'न संशयं कदाप्येषः धर्मे ज्ञानेऽपि चाकरोत्' इत्युक्त्या तन्निषेधात् ।।११३-१५४।।

**अतिविशद–** यदैनमेष बाधते इत्यत्र हनूमतः अज्ञानं प्रतीयते तदनुपपन्नम् । तस्य सर्वज्ञत्वादित्यतः 'लोकानुकरणम्' इति केचित् । अपरे तु 'यदा तदेति हेत्वर्थे कालार्थे चापि भण्यते' इति वचनात् यदातदेति शब्दौ हेत्वर्थौ' इति प्राहुः । ततश्चैवमक्षरयोजना । दृष्टः कुम्भकर्णः यदा यस्मात् बाधते तदा तस्मात् अहं विमोचयामि इति पूर्वार्धस्य यदिस्म यस्मात् अस्य स्वमोचनाय शक्यते तत् तस्मात् स्वमोचनं वरं श्रेष्ठं इत्यभिप्रायेण मरुत्सुते व्रजति सति निशाचरः कुम्भकर्णः पुरं विवेशेति सपादोत्तरार्धस्येति ।।११३-१२८।।

**प्रमाणसंग्रह–** ।। **यदैनमेष बाधते इत्यादि** ।। 'अयं मुहूर्तात् सुग्रीवो लब्धसञ्ज्ञो महाहवे । आत्मनो वानराणां च यत्पथ्यं तत्करिष्यति ।। मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः । अप्रीतिश्च भवेत्कष्टो कीर्तिनाशश्च शाश्वतः ।। तस्मान्मुहूर्तं काङ्क्षिष्ये विक्रमं पार्थिवस्य तु ।।' इति रामायणे ।।

**गूढवाक्यार्थ–** ।। **यदेनमिति** ।। यदा नासिकच्छेदानन्तरं एष कुम्भकर्णः एनं सुग्रीवं शूलप्रहारेण बाधते तदा अहं शूलप्रहारात् विमोचयामि । अस्य सुग्रीवस्य तुहिनसलिलमाल्यादिस्पर्शनेन गतश्रमस्य स्म मोचनाय शक्यत इति यत् वरमुत्तमं समीचीनमिति यावत् । तद्विमोचनाय मया न यतितव्यमिति भावः ।।११३।।

**इति व्रजत्यनु स्म तं मरुत्सुते निशाचरः ।**
**पुरं विवेश चार्चितः स्वबन्धुभिः समस्तशः ।।११४।।**

**वरदराजीया–** इत्यनेनाभिप्रायेण मरुत्सुते हनुमति तमनुव्रजति सति निशाचरः कुम्भकर्णः पुरं लङ्कापुरं विवेश । तत्र समस्तशः सर्वैः बन्धुभिः रावणाद्यैः सुहृद्भिरर्चितो पूजितोऽभूदित्यर्थः ।।११४।।

**जनार्दनीया–** इत्याभिप्रायेण मरुत्सुतः । तं सुग्रीवमनुव्रजति अनुगच्छति सति । समस्तशः समस्तैः । अर्चितः पूजितः ।।११४।।

**चट्टी–** इत्याभिप्रायेण मरुत्सुते हनुमति तं सुग्रीवमनुव्रजति अनुव्रजति सति निशाचरः कुम्भकर्णः पुरं लङ्कां विवेश । तत्र समस्तशः समस्तैः स्वबन्धुभिः रावणाद्यैः सुहृद्भिः अर्चितः पूजितः । ननु हनुमान् तदानीमेव सुग्रीवं किमिति न मोचयामासेत्यतः स्वेनैव तन्मोक्षणे कृते सुग्रीवस्य प्रीतिकीर्तिनाशौ स्यातामित्याशयेन न मोचयामासेति विशेषं सूचयति । तदुक्तम्– 'अयं मुहूर्तात् सुग्रीवो लब्धसञ्ज्ञो महाहवे । आत्मनो वानराणां च यत्पथ्यं तत्करिष्यति ।। मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः । अप्रीतिश्च भवेत्कष्टो कीर्तिनाशश्च शाश्वतः ।। तस्मान्मुहूर्तं काङ्क्षिष्ये विक्रमं पार्थिवस्य तु ।।' [यु.का.६७.७८–८०] इत्यादि रामायणे ।।११४।।

**गूढवाक्यार्थ–** इति व्रजतीति । अहं शूलप्रहारपरिहार्थमेव सह गच्छामि । न तु कुम्भकर्णाद्विमोचनाय तस्य स्वत एव सिद्धेरित्यभिप्रेत्य अनुव्रजति सतीत्यर्थः । 'पञ्चरात्रनिषेधार्थमेतान् व्याचक्षते । यदि' इत्यनुव्याखयानसुधायां [४०८०] यदित्यस्यार्थे यदिशब्दः' इति व्याख्यातमिति नानुपपत्तिः । एवं योजनया हनुमतः संशयशङ्कापरिहृतेति ज्ञेयम् ।।११४।।

**तुहिनसलिलमाल्यैः[१] सर्वतोऽभिप्रवृष्टे रजनिचरवरेऽस्मिंस्तेन सिक्तः कपीशः ।**
**विगतसकलयुद्धग्लानिरावञ्चयित्वा रजनिचरवरं तं तस्य नासां ददंश ।।**

**वरदराजीया–** तुहिनैः शीतलसलिलैः तथा माल्यैः पुष्पैश्च अस्मिन् रजनिचरवरे कुम्भकर्णे सर्वतः सर्वाङ्गेषु अभिप्रवृष्टे अभिवर्षति सति तेन वर्षणेन सिक्तः अभिषिक्तः कपीशः सुग्रीवो विगता अपगता सकलयुद्धग्लानिर्यस्मात्स तथा तादृशो भूत्वा रजनिचरवरं कुम्भकर्णं आ समन्ताद्वञ्चयित्वा तस्य कुम्भकर्णस्य नासां ददंश दष्टवान् ।।११५।।

**जनार्दनीया–** अस्मिन् कुम्भकर्णे । तुहिनसलिलैः शैत्योदकैः, माल्यैः पुष्पैः । सर्वतः सर्वावयवेषु । अभिप्रवृष्टे अभिषिक्ते सति । तेन पूजाद्रव्येण सिक्तः प्रोक्षितः कपीशः सुग्रीवः । विगता परिहृता, सकला समग्रा, युद्धग्लानिः युद्धजन्यश्रमो यस्य स तथा सन् । तं कुम्भकर्णं आवञ्चयित्वा स्तोभयित्वा, तस्य कुम्भकर्णस्य नासां नासिकां ददंश दष्टवान् ।।११५।।

**चट्टी–** अस्मिन् रजनिचरे कुम्भकर्णे तुहिनसलिलैः शैत्योदकैः माल्यैः पुष्पैः सर्वतः सर्वावयवेषु सर्वाङ्गेषु अभिप्रवृष्टे अभिषिक्ते सति । तेन अभिषेकेण सिक्तः अभिषिक्तः कपीशः सुग्रीवः विगता अपगताः सकला समग्रा युद्धग्लानिः युद्धजन्यश्रमो यस्य स तथा सन् तं रजनीचरवरं कुम्भकर्णं आ सम्यक् वञ्चयित्वा तस्य कुम्भकर्णस्य नासां नासिकां ददंश दष्टवान् ।।११५।।

---

१. लाजगन्धोदवर्षैस्तु सेच्यमानः शनैः शनैः । राजवीथ्यास्तु शीतत्वात् सञ्ज्ञां प्राप महाबलः ।।६.६७.८३

**कराभ्यामस्य[1] कर्णौ च नासिकां दशनैरपि ।**
**सञ्छिद्य क्षिप्रमेवासावुत्पपात हरीश्वरः ॥११६॥**

**वरदराजीया–** दशनप्रकारमेवाह– **कराभ्यामिति** ।। कराभ्यां तस्य कुम्भकर्णस्य कर्णौ सञ्छिद्य दशनैः दन्तैः नासिकामप्याच्छिद्य असौ हरीश्वरः सुग्रीवः क्षिप्रमेवोत्पपात पुप्लुवे ।।११६।।

**जनार्दनीया–** अस्य कुम्भकर्णस्य । दशनैर्दन्तैः ।।११६।।

**चट्टी–** तदेव विवृणोति– **कराभ्यामिति** ।। असौ हरीश्वरः सुग्रीवः कराभ्यां अस्य कुम्भकर्णस्य कर्णौ सञ्छिद्य दशनैर्दन्तैः नासिकामपि सञ्छिद्य क्षिप्रं शीघ्रमेव उत्पपात पुप्लुवे ।।११६।।

**तलेन[2] चैनं निजघान राक्षसः पिपेष भूमौ पतितं ततोऽपि ।**
**समुद्गतोऽसौ विवरेऽङ्गुलीनां जघान शूलेन पुनः स राक्षसः ॥११७॥**

**वेदाङ्गतीर्थीया–** ततोऽपि भुवोऽपि ।।११७–११८।।

**वरदराजीया–** राक्षसः कुम्भकर्णः एनं सुग्रीवं तलेन करतलेन निजघान । ततः करतलाघातात् भूमौ पतितं पिपेष करतलेन ममर्द । असौ सुग्रीवोऽङ्गुलीनां विवरे विवरात्समुद्गतोऽभूत् । करतलेन पेषणसमये अङ्गुलिछिद्रेणोद्गतोऽभूदिति भावः । पुनः स राक्षसः कुम्भकर्णः शूलेन जघान सुग्रीवमिति शेषः ।।११७।।

**जनार्दनीया–** एनं सुग्रीवम् । तलेन करतलेन । ततोऽपि तत्रापि भुव्यपि पिपेष पादतले ममर्द । असौ सुग्रीवः । अङ्गुलीनां पदाङ्गुलीनां विवरे रन्ध्रात् समुद्गतः वहिर्निर्सृतोऽभूत् । पुनः सुग्रीवं शूलेन जघान ।।११७।।

**चट्टी–** राक्षसः कुम्भकर्णः एनं सुग्रीवं करेण करतलेन निजघान । ततः करघातात् भूमौ पतितं पिपेष । पादतलेन ममर्द । असौ सुग्रीवः अङ्गुलीनां पदाङ्गुलीनां रन्ध्रात् समुद्गतः बहिर्निःसृतोऽभूत् । पुनः राक्षसः कुम्भकर्णः शूलेन जघान ।।११७।।

---

१. तं दृष्ट्वोत्पत्य सुग्रीवः शूलेनोरस्यताडयत् । कर्णद्वयं कराभ्यां तु छित्वा वक्त्रेण नासिकाम् ।। इति तथा 'ततः कराग्रैः सहसा समेत्य राजा हरीणाममरेन्द्रशत्रोः । खरैश्च कर्णौ दशनैश्च नासां ददंश पादैर्विददार पार्श्वौ ।।' वा.रा.६.६७.८६ । इति नृसिंहपुराणार्षरामायणवचनौ मिलित्वा व्याख्याति- **कराभ्यामस्येत्यादि** ।।

२. स भूतले भीमबलाभिपिष्टः सुरारिभिस्तैरभिहन्यमानः । जगाम खं कन्दुकवज्जवेन पुनश्च रामेण समाजगाम ।। वा.रा.६.६७.८८

**गूढवाक्यार्थ–** ततः तदन्तरम् । ततः करशूलात् । पिपेषापि पिपेष च । अङ्गुलीनां हस्ताङ्गुलीनां विवरे विवरात् ।।११७।।

**अमोघशूलं[1] [2]प्रपतन्तमीक्ष्य रवेः सुतस्योपरि मारुतात्मजः ।**
**प्रगृह्य जानौ प्रणिधाय शीघ्रं बभञ्ज तं प्रेक्ष्य ननाद चोच्चैः ।।११८।।**

**वरदराजीया–** मारुतात्मजो हनूमान् रवेः सुतस्य सुग्रीवस्योपरि प्रपात्यमानममोघं तं शूलमीक्ष्य दृष्ट्वा तत्प्रगृह्य जानौ प्रणिधाय शीघ्रं बभञ्ज । तं कुम्भकर्णं अवेक्ष्योच्चैः ननाद जगर्जेत्यर्थः ।।११८।।

**जनार्दनीया–** रवेः सुतस्य उपरि पतन्तं प्रसिद्धं अमोघशूलं ईक्ष्य प्रगृह्य, आहृत्य जानौ प्रणिधाय बभञ्ज । तं कुम्भकर्णं प्रेक्ष्य, तन्मुखं अवलोक्येत्यर्थः । उच्चैः ननाद सिंहनादं चकारेत्यर्थः ।।११८।।

**अनन्तभट्टीया–** ...*उपरि अपतदित्यन्वयः । तं कुम्भकर्णम् ।।११८–१२२।।

**चट्टी–** मरुतात्मजो हनुमान् रवेः सुतस्य उपरि पतन्तं पतमानं तत् प्रसिद्धं शूलं ईक्ष्य दृष्ट्वा तत्प्रतिगृह्य जानौ प्रणिधाय शीघ्रं बभञ्ज । तं कुम्भकर्णं अवेक्ष्य उच्चैः ननाद जगर्जेत्यर्थः ।।११८।।

**अथैनमावृत्य जघान मुष्टिना स राक्षसो वायुसुतं स्तनान्तरे ।**
**जगर्ज तेनाभिहतो हनूमानचिन्तयंस्तत् प्रजहार चैनम् ।।११९।।**

---

१. तत् कुम्भकर्णस्य भुजप्रणुन्नं शूलं शितं काञ्चनदामयष्टिम् । क्षिप्रं समुत्पत्य निगृह्य दोर्भ्यां बभञ्ज वेगेन सुतोऽनिलस्य ।। कृतं भारसहस्रस्य शूलं कालायसं महत् । बभञ्ज जानुमारोप्य तदा हृष्टः प्लवङ्गमः ।। शूलं भग्नं हनुमता दृष्ट्वा वानरवाहिनी । हृष्टा ननाद बहुशः सर्वतश्चापि दुद्रुवे ।। बभूवाथ परित्रस्तो राक्षसो विमुखोऽभवत् । सिंहनादं च ते चक्रुः प्रहृष्टा वनगोचराः ।। मारुतिं पूजयाञ्चक्रुः दृष्ट्वा शूलं तथागतम् ।। इत्यार्षे युद्धकाण्डे– ६७.६२-६५ । प्रसङ्गोऽयं रामायणादिषु कुम्भकर्णकर्तृकसुग्रीवापहारात्पूर्वमेव श्रूयते । अत्र रामायणव्याख्याने **सत्यधर्मतीर्थश्रीचरणाः** एवं समादधुः । 'बहुपुराणादिष्वियं कथा सुग्रीवतो ग्रहणानन्तरं कक्ष्यानिक्षिप्तकपिपतिः यदा लङ्कानिलयास्त्रीपुंसजनैः तुहिनसलिलमाल्यैः सेचितः तस्मान्मोचितः सुग्रीवः करोत्कृत्तगृहीतघोणाकर्णं उत्पपात तदा मक्षिकोपमः पाक्षिकनीतिं लौकिकीमनुसृत्यानुसृत्य च तं गतो हनूमांस्तदा तन्मुक्तं सुग्रीवाशक्यपरिहारं शूलं बभञ्जेति श्रूयते । अत्र व्यत्यस्य कथनं लेखकप्रमादतः । श्लोकाश्चैतेऽनन्तरं पठनीया इति वा, ''कुर्युः कचिच्च व्यत्यासम्'' इति कविकृत एवायं हनुत्पराक्रमवर्णनचित्ततया व्यत्यास इति वा ज्ञेयम् । ननु भारते वनपर्वणि ''हृत्वा कर्णोष्ठनासिकाम्'' इत्युक्तेरत्र कर्णनासिकोक्तिः कथमिति चेन्न । नासिकोत्कर्तनकाल एव ओष्ठद्वयस्य तया सहागमनं ज्ञातुं सुशकमित्यत्रानुक्तिः स्पष्टप्रतिपत्त्यर्थं तत्रोक्तिरिति सम्भवात् ।।' इति ।।

२. 'प्रपतत् तदीक्ष्य' इति वरदराजीये ।

**वेदाङ्गतीर्थीया–** तत् ताडनम् ।।११९-१२०।।

**वरदराजीया–** अथानन्तरं स राक्षसः कुम्भकर्णः एनं हनूमन्तं आवृत्य मुष्टिभिरित्यर्थः । मुष्टिना स्तनयोरन्तरे हृदये जघान तताड । तेन मुष्टिना अभिहतस्ताडितो हनूमान् तत्ताडनं अचिन्तयन् अविचारयन् एनं कुम्भकर्णं तलेन प्रजहार च ।।११९।।

**जनार्दनीया–** आवर्त्य मुष्टिं परिभ्राम्य, मुष्टिना एनं वायुसुतं स्तनयोः अन्तरे मध्ये जघान जगर्ज च । तेन कुम्भकर्णेन अभिहतो हनुमान् । तत् राक्षसताडनं अचिन्तयन् अगणयन् सन् एनं कुम्भकर्णमपि प्रजहार तताड ।।११९।।

**चट्टी–** अथ अनन्तरं राक्षसः कुम्भकर्णः मुष्टिं आवर्त्य परिभ्राम्य मुष्टिना वायुसुतं स्तनयोः अन्तरे मध्ये जघान जगर्ज च । तेन कुम्भकर्णेन अभिहतो हनुमान् तत् राक्षसताडनं अचिन्तयन् अगणयन् सन् एनं कुम्भकर्णमपि प्रजहार ।।११९।।

**तलेन वक्षस्यभिताडितो रुषा हनूमता मोहमवाप राक्षसः ।**
**पुनश्च सञ्ज्ञां समवाप्य शीघ्रं ययौ स यत्रैव रघुप्रवीरः ।।१२०।।**

**वरदराजीया–** हनूमता रुषा रोषेण तलेनाभिहतो राक्षसः कुम्भकर्णः मोहं मूर्च्छामवाप । पुनश्च सञ्ज्ञां ज्ञानं अवाप्य उत्थाय यत्र रघुप्रवीरो रामः तिष्ठति तत्रैव ययौ ।।१२०।।

**जनार्दनीया–** हनुमता रुषा कोपेन । तलेन करतलेन वक्षसि अभिताडितः, मोहं मूर्च्छाम् । स कुम्भकर्णः । यत्र रघुप्रवीरो रामः । तत्रैव ययौ ।।१२०।।

**चट्टी–** हनुमता रुषा रोषेन करेण करतलेन वक्षसि अभिताडितः राक्षसः कुम्भकर्णः समरे युद्धे मोहं मूर्च्छां अवाप । पुनश्च सञ्ज्ञां ज्ञानं समवाप्य स कुम्भकर्णः यत्र रघुप्रवीरो श्रीरामः आस्ते इति शेषः । तत्रैव ययौ ।।१२०।।

**विचिन्तयामास[१] ततो हनूमान् मयैव हन्तुं समरे हि शक्यः ।**
**असौ तथाऽप्येनमहं न हन्मि यशो हि रामस्य दृढं प्रकाशयन् ।।१२१।।**

---

१. 'मर्कटीडिम्भतुल्यां च लङ्कां पश्यामि सुव्रते । मूत्रतुल्यं समुद्रश्च शरावमिव भूतलम् ।। पिपीलिकासङ्घमिव ससैन्यं रावणं तथा । संहर्तुं च समर्थोऽहं मुहूर्तार्धेन लीलया ।। रामप्रतिज्ञारक्षार्थं न हनिष्यामि साम्प्रतम् ।।' इति ब्र.वै.पु.४.६२.७५-७७

**व्यासतीर्थीया–** मारुतेः रुन्धानं कुम्भकर्णं विसृज्यान्यत्र गमने निमित्तमाह– **विचिन्तयामासेत्यादिना** ।।१२१।।

**वेदाङ्गतीर्थीया–** रामस्य यशः कुम्भकर्णवध [जनितं] प्रकाशयन् हनूमान् इति विचिन्तयामास । प्रकाशयन्नहं एनं न हन्मीति विचिन्तयामासेति वा ।।१२१।।

**वरदराजीया–** ततस्तदनन्तरं हनूमान् विचिन्तयामास । किमिति । असौ कुम्भकर्णः मयैव यद्यपि हन्तुं शक्यः तथापि रामस्य यशः कीर्तिः दृढं यथा भवति तथा प्रकाशयन्नहं एनं कुम्भकर्णं न हन्मि न हनिष्ये ।।१२१।।

**जनार्दनीया–** रामस्य यशः दृढं निश्चयं यथा स्यात्तथा प्रकाशयन् । हनूमान् हि यस्मात्ततः तस्मात् । विचिन्तयामास । किमिति ? असौ कुम्भकर्णः । समरे युद्धे । मयैव हन्तुं शक्यः हि समर्थो हि यद्यपि । एनं कुम्भकर्णं न हन्मि ।।१२१।।

**ताम्रपर्णीया–** ।। **मयैवेति** ।। ननु हनुमता हन्तुं शक्यत्वेऽनन्यवध्यत्वं च कथम् । न च फलपर्यवसानाभावात् अनन्यवध्यत्वं इति वाच्यम् । बुद्धिपूर्वं रामस्य कीर्त्यर्थमेव राक्षसवधो न कृत इत्युक्तत्वेन शक्तः फलपर्यवसायितुल्यत्वात् । मैवं श्रीरामानुग्रहेण विशेषेणानन्यवध्योऽपि मया हन्तुं शक्यते इति विवक्षितत्वात् । अत एव 'ममैवैष यदप्यनुग्रहं वधेऽस्य कुर्यान्न तु मे स धर्म' इति वक्ष्यति । अस्य अनन्यवधस्यापि मयैव वध्यौ इति दत्तवरस्यापि वधे वधविषये शक्तिदानरूपं अनुग्रहं यद्यपि कुर्यात् । 'स्वनियममपहाय मत्प्रतिज्ञाम्'[भाग.१.९.४४] इत्यादेः मया वधे कृतेऽपि स्वसङ्कल्पविरोध्ययमिति भावमकृत्वानुग्रहं यद्यपि कुर्यात् । तथापि न तु मे स वधो धर्मः इत्यर्थः । अङ्गीकार्यं चैवं मयैव वध्यौ इति श्रीहरिवरसत्वेन वायोः शक्तिवैकल्यस्यावश्यं वक्तव्यत्वात् ।।१२१।।

**चट्टी–** ततः तदनन्तरं हनुमान् विचिन्तयामास । किमिति । असौ कुम्भकर्णः समरे युद्धे मयैव यद्यपि हन्तुं शक्यः तथापि श्रीरामस्य यशः कीर्तिः दृढं यथा स्यात्तथा प्रकाशयन् इह एनं कुम्भकर्णं न हन्मि न हनिष्ये ।।१२१।।

**गूढवाक्यार्थ–** शक्यः यद्यपीति शेषः । दृढं यथा भवति तथा ।।१२१।।

**अनन्यवध्यं तमिमं निहत्य स्वयं स रामो यश आहरेत ।**
**दत्तो वरो द्वारपयोः स्वयं च जनार्दनेनैव पुरातनश्च ।।१२२।।**

**व्यासतीर्थीया–** एतद्वधेन कथं रामस्य यशः स्यादित्यत उक्तम्– **अनन्येति** ।। अनन्यवध्यत्वे निमित्तमाह– **दत्त इति** ।।१२२।।

**वेदाङ्गतीर्थीया–** कथं यशःप्रकाश इत्यतस्तद् विवृणोति– **अनन्यवध्यमिति** ।। न हन्मीत्यत्र कारणान्तरं चाह– **दत्तो वर इत्यादिना** ।। ततश्च सोऽहं न हन्मीति सम्बन्धः ।।१२२।।

**वरदराजीया–** तस्मादनन्यवध्यं अन्येनावध्यं तमिमं कुम्भकर्णं स्वयं रामो निहत्य यशः आहरेत आदद्यात् । इतोऽपि न हन्मीत्याह– **दत्त इति** ।। जनार्दनेन हरिणैव द्वारपयोः द्वारपालकयोः पुरातनो वरो दत्तोऽस्ति ।।१२२।।

**जनार्दनीया–** कुत इत्यत आह– **अनन्येत्यादिना** ।। स्वयं रामः अनन्यवध्यं रामादन्यैरवध्यं इत्यर्थः । तमिमं कुम्भकर्णं निहत्य, यश आहरेत । ननु भीमस्य धर्मो यशश्च स्यादिति कृष्णेन जरासन्धो न हत इत्यग्रे वक्ष्यते । इदानीं हनुमान् प्राप्तं हरिपूजात्मकराक्षसवधं किमर्थं नैच्छतेत्याशङ्कायां तत्र कारणमाह– **दत्त इति** ।। स्वयं जनार्दनेन एव रामस्वरूपेण नारायणेन एव । पुरा द्वारपयोः द्वारपालकयोः जयविजययोः ।।१२२।।

**ताम्रपर्णीया–** ।। **दत्तो वर इति** ।। किमिति वरो दत्त इत्यत आह– **मयैवेति** ।। त्रिजन्मसु मयैव वध्यौ प्रवृद्धवीर्यौ च भवतां इति केशवेनोक्तमित्यर्थः ।।१२२-१२४।।

**चट्टी–** तस्माद् अनन्यवध्यं रामादन्यैरवध्यं इत्यर्थः । तमिमं कुम्भकर्णं सः श्रीरामः स्वयमेव निहत्य यश कीर्तिं आहरेत । ननु भीमस्य यशोधर्मौ स्यादिति कृष्णेन जरसन्धो न हत इत्यग्रे वक्ष्यते । इदानीं हनुमान् प्राप्तं हरिपूजात्मकराक्षसवधं किमर्थं नैच्छतेत्याशङ्कायां कारणमाह– **दत्त इति** ।। स्वयं जनार्दनेनैव श्रीरामस्वरूपेण नारायणेनैव पुरा द्वारपयोः द्वारपालकयोः जयविजययोः पुरातनो वरश्च दत्तोऽस्ति ।।१२२।।

**गूढवाक्यार्थ–** आहरेत आहरेत् । जितापि न हन्मीत्याह– **दत्तो वर इति** ।। दत्तः अस्तीति शेषः ।।

**मयैव वध्यौ भवतं त्रिजन्मसु प्रवृद्धवीर्याविति केशवेन ।**
**उक्तं ममैवैष यदप्यनुग्रहं वधेऽस्य कुर्यान्न तु मे स धर्मः ।।१२३।।**

**व्यासतीर्थीया–** वरप्रकारमाह– **मयैवेति** ।। रामवध्ये त्वया हते त्वयि तत्कोपः स्यादित आह– **ममेति** ।। एषः रामः ।।१२३-१२४।।

**वेदाङ्गतीर्थीया–** वरदानप्रकारमाह– **मयैवेति** ।। यदपि यद्यपि मयास्य वधे कृतेऽपीति शेषः । अनुग्रहमेव कुर्यात् । न क्रोधम्, तथापीति सम्बन्धः । मे स्वधर्मो नतु नैव ।।१२३-१२४।।

**वादिराजीया–** मयैव वध्यौ भवतमित्यत्र भवतमिति लोटि मध्यमपुरुषद्विवचनम् । अस्य कुम्भकर्णस्य वधे एषः रामः अनुग्रहं कुर्यादेव । तथापि सः कुम्भकर्णवधः भगवद्वचनोल्लङ्घनेन मे धर्मो नेति योजना ।।१२३-१२४।।

**सत्याभिनवीया–** तत्रैव उक्तं मयैवैष यदप्यनुग्रहात्... इत्यस्ति । तस्यार्थः । यत् यस्मात् केशवेन द्वारपौ प्रति मयैव वध्यौ भवतं इत्युक्तं तस्मात् तयोर्वधः मे धर्मः न तु नैव । यस्मात् तयोर्वधः मे धर्मो न भवति, तस्मात् मम मयि एषः अस्य कुम्भकर्णकस्य वधे सति अनुग्रहं नैव कुर्यात् वधत्यागे अनुग्रहं कुर्यात् अतोऽपि एनं न हन्मीति । एतेन द्वारपयोः वधः यतो धर्मो न भवति अतः अनुग्रहं न कुर्यादिति वक्तव्यम् । अनुग्रहमेव कुर्यादिति कथनमनुपपन्नमिति दूषणं परास्तम् । न त्विति नञः आवृत्तिमभ्युपेत्य अनुग्रहं न कुर्यादित्यर्थस्योक्तत्वात् । एतेनैव यदपीत्यपिशब्दो व्यर्थ इति दूषणं परिहृतम् । न केवलं कुम्भकर्णहननाभावे रामस्य यशःप्राप्तिः निमित्तं किन्तु मम रामानुग्रहप्राप्तिश्च निमित्तमिति वक्तुं यदपीत्यपिशब्दः प्रयुक्त इति स्वीकरणात् ।।१२३।।

**वरदराजीया–** तत्स्वरूपं दर्शयति– **मयेति** ।। त्रिजन्मसु जन्मत्रये प्रवृद्धं पूर्णवीर्यं ययोस्तौ । यदा मयैव वध्यौ हन्तव्यौ भवतं स्यातामिति केशवेन जयविजयौ प्रत्युक्तौ । अतो मे सः धर्मो न भवति । भगवत्प्रतीपाचरणात् न हन्मीत्यन्वयः । ननु रामस्य कोपभयात् न हंसीत्यत आह– **अस्येति** ।। अस्य कुम्भकर्णस्य वधे मया कृते सति एषः रामः ममानुग्रहं कुर्यादेव । तथापि स मे धर्मो न भवतीति भावः ।।

**जनार्दनीया–** त्रीणि च तानि जन्मानि च तथा तेषु । प्रवृद्धवीर्यौ एधितपराक्रमौ । युवां मयैव वध्यौ भवतं स्याताम् । इति वरो दत्तः यस्मात् । ततः तस्माद् निहत्य, यश आहरेत इति सम्बन्धः । यदपीति पूर्वोक्तप्रकारेण द्वारपौ प्रति केशवेन उक्तम् । तथापि अस्य वधे मया कृते सतीति शेषः । एषः रामः ममानुग्रहं कुर्यादेव । एवमपीति शेषः । स कुम्भकर्णवधः मे धर्मो न तु नैव ।।१२३।।

**अनन्तभट्टीया–** रामवध्ये त्वया हते त्वयि तत्कोपः स्यादित्य आह...* एषः रामः अस्य वधे मया कृते सतीति शेषः । यदपि यद्यपि ।।१२३-१२४।।

**चट्टी–** वरस्वरूपं दर्शयति । त्रीणि च तानि जन्मानि च त्रिजन्मानि । तेषु प्रवृद्धं वीर्यं ययोः तौ युवां मयैव वध्यौ भवतं स्याताम् । भवतमिति लोट् मध्यमपुरुषद्विवचनम् । इति केशवेन जयविजयौ प्रत्युक्तम् । अतः न हन्मीत्यर्थः । ननु रामरोषभयान्न हन्मीत्यत आह– **अस्येति** ।। अस्य कुम्भकर्णस्य वधे मया कृते सतीति शेषः । एषः रामः ममानुग्रहं कुर्यादेव तथापि सः भगवद्वचनोल्लङ्घनेन कुम्भकर्णवधः मे धर्मो न भवतीति योजना ।।१२३।।

**भारतश्री–** यदपि यद्यपि ।।१२३।।

**गूढवाक्यार्थ–** किमिति वरो दत्त इत्यत आह– **मयैवेति** ।। त्रिजन्मसु मयैव वध्यौ प्रवृद्धवीर्यौ च भविष्यत इति केशवेनोक्तमित्यर्थः । ननु हनूमता हन्तुं शक्यत्वे अनन्यवध्यत्वं हर्येकवध्यत्वञ्च कथमिति चेत् ? मैवम् श्रीरामानुग्रहविशेषेण अनन्यवध्यत्वेऽपि मया हन्तुं शक्यत इति विवक्षितत्वात् । अस्य अनन्यवध्यस्यापि मयैव वध्याविति दत्तवरस्यापि । वधे च वधविषये शक्ति...*रूपमनुग्रहं यद्यपि कुर्यात् । 'स्वनियमममपहाय मत्प्रतिज्ञाम्' इत्यादेः । तथा च मया वधे कृते सति स्वसङ्कल्प-विरोध्ययमिति कोपमकृत्वा अनुग्रहं यद्यपि कुर्यात् तथापि न तु मेऽद्य वध्योऽयमित्यर्थः ।।१२३।।

**इति स्म सञ्चिन्त्य कपीशयुक्तो जगाम यत्रैव कपिप्रवीराः ।**
**स कुम्भकर्णोऽखिलवानरांस्तु प्रभक्षयन् राममुपाजगाम ।।१२४।।**

**वरदराजीया–** इति सञ्चिन्त्य कपीशयुक्तो सुग्रीवेण युक्तो यत्र कपिप्रवीरास्तिष्ठन्ति तत्र ययौ । स हनुमता मुक्तः कुम्भकर्णो अखिलान् सर्वान् वानरान् प्रभक्षयन् ग्रसन्नेव राममुपाजगाम रामसमीपं प्राप ।।

**जनार्दनीया–** इति स्म उक्तरित्या सञ्चिन्त्य विचार्य । उपाजगाम समीपं प्राप ।।१२४।।

**चट्टी–** हनुमानिति सञ्चिन्त्य कपीशेन सुग्रीवेण युक्तो यत्र कपिप्रवरास्तिष्ठन्ति तत्र ययौ । सः हनुमता मुक्तः कुम्भकर्णः अखिलान् समस्तान् सर्वान् प्रभक्षयन् ग्रसन्नेव श्रीरामं उपाजगाम रामसमीपं प्राप ।।१२४।।

**ते भक्षितास्तेन कपिप्रवीराः सर्वे विनिर्जग्मुरमुष्य देहात् ।**
**स्रोतोभिरेवाथ[1] च रोमकूपैः केचित् तमेवाऽरुरुहुर्यथा गिरिम् ।।१२५।।**

**व्यासतीर्थीया–** स्रोतोभिरिन्द्रियैः ।।१२५।।

**वेदाङ्गतीर्थीया–** नवस्रोतोभिः नवद्वारैः । करणे तृतीया ।।१२५।।

**वादिराजीया–** स्रवत्येभिः मलमूत्रादिकमिति स्रोतांसि नवद्वाराणि । स्रोतोभिः केचित् अथ रोमकूपैः केचित् देहाद्विनिर्जग्मुः ।।१२५-१२७।।

**वरदराजीया–** तेन कुम्भकर्णेन भक्षिताः सर्वे कपिप्रवीराः अमुष्य कुम्भकर्णस्य देहात् स्रोतोभिः इन्द्रियछिद्रैः विनिर्जग्मुः बहिर्निर्गताः । अथ केचिद्रोमकूपैः विनिर्गता इत्यर्थः । एवं निर्गतास्ते गिरिः यथा तथा तमेवारुरुहुः ।।१२६।।

---

१. प्रक्षिप्ता कुम्भकर्णेन वक्त्रे पातालसन्निभे । नासापुटाभ्यां सञ्जग्मुः कर्णाभ्याञ्चैव वानराः ।। स वानरसहस्रैस्तु विचितः पर्वतोपमः । रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ।। वा.रा.[३३]६.६७.३५ ।

**वादिराजीया–** मयैव वध्यौ भवतमित्यत्र भवतमिति लोटि मध्यमपुरुषद्विवचनम् । अस्य कुम्भकर्णस्य वधे एषः रामः अनुग्रहं कुर्यादेव । तथापि सः कुम्भकर्णवधः भगवद्वचनोल्लङ्घनेन मे धर्मो नेति योजना ।।१२३-१२४।।

**सत्याभिनवीया–** तत्रैव उक्तं मयैवैष यदप्यनुग्रहात्... इत्यस्ति । तस्यार्थः । यत् यस्मात् केशवेन द्वारपौ प्रति मयैव वध्यौ भवतं इत्युक्तं तस्मात् तयोर्वधः मे धर्मः न तु नैव । यस्मात् तयोर्वधः मे धर्मो न भवति, तस्मात् मम मयि एषः अस्य कुम्भकर्णकस्य वधे सति अनुग्रहं नैव कुर्यात् वधत्यागे अनुग्रहं कुर्यात् अतोऽपि एनं न हन्मीति । एतेन द्वारपयोः वधः यतो धर्मो न भवति अतः अनुग्रहं न कुर्यादिति वक्तव्यम् । अनुग्रहमेव कुर्यादिति कथनमनुपपन्नमिति दूषणं परास्तम् । न त्विति नञः आवृत्तिमभ्युपेत्य अनुग्रहं न कुर्यादित्यर्थस्योक्तत्वात् । एतेनैव यदपीत्यपिशब्दो व्यर्थ इति दूषणं परिहृतम् । न केवलं कुम्भकर्णहननाभावे रामस्य यशःप्राप्तिः निमित्तं किन्तु मम रामानुग्रहप्राप्तिश्च निमित्तमिति वक्तुं यदपीत्यपिशब्दः प्रयुक्त इति स्वीकरणात् ।।१२३।।

**वरदराजीया–** तत्स्वरूपं दर्शयति– **मयेति** ।। त्रिजन्मसु जन्मत्रये प्रवृद्धं पूर्णवीर्यं ययोस्तौ । यदा मयैव वध्यौ हन्तव्यौ भवतं स्यातामिति केशवेन जयविजयौ प्रत्युक्तौ । अतो मे सः धर्मो न भवति । भगवत्प्रतीपाचरणात् न हन्मीत्यन्वयः । ननु रामस्य कोपभयात् न हंसीत्यत आह– **अस्येति** ।। अस्य कुम्भकर्णस्य वधे मया कृते सति एषः रामः ममानुग्रहं कुर्यादेव । तथापि स मे धर्मो न भवतीति भावः ।।

**जनार्दनीया–** त्रीणि च तानि जन्मानि च तथा तेषु । प्रवृद्धवीर्यौ एधितपराक्रमौ । युवां मयैव वध्यौ भवतं स्याताम् । इति वरो दत्तः यस्मात् । ततः तस्माद् निहत्य, यश आहरेत इति सम्बन्धः । यदपीति पूर्वोक्तप्रकारेण द्वारपौ प्रति केशवेन उक्तम् । तथापि अस्य वधे मया कृते सतीति शेषः । एषः रामः ममानुग्रहं कुर्यादेव । एवमपीति शेषः । स कुम्भकर्णवधः मे धर्मो न तु नैव ।।१२३।।

**अनन्तभट्टीया–** रामवध्ये त्वया हते त्वयि तत्कोपः स्यादित्य आह...* एषः रामः अस्य वधे मया कृते सतीति शेषः । यदपि यद्यपि ।।१२३-१२४।।

**चट्टी–** वरस्वरूपं दर्शयति । त्रीणि च तानि जन्मानि च त्रिजन्मानि । तेषु प्रवृद्धं वीर्यं ययोः तौ युवां मयैव वध्यौ भवतं स्याताम् । भवतमिति लोट् मध्यमपुरुषद्विवचनम् । इति केशवेन जयविजयौ प्रत्युक्तम् । अतः न हन्मीत्यर्थः । ननु रामरोषभयान्न हन्मीत्यत आह– **अस्येति** ।। अस्य कुम्भकर्णस्य वधे मया कृते सतीति शेषः । एषः रामः ममानुग्रहं कुर्यादेव तथापि सः भगवद्वचनोल्लङ्घनेन कुम्भकर्णवधः मे धर्मो न भवतीति योजना ।।१२३।।

**भारतश्री–** यदपि यद्यपि ।।१२३।।

**गूढवाक्यार्थ–** किमिति वरो दत्त इत्यत आह– **मयैवेति** ।। त्रिजन्मसु मयैव वध्यौ प्रवृद्धवीर्यौ च भविष्यत इति केशवेनोक्तमित्यर्थः । ननु हनूमता हन्तुं शक्यत्वे अनन्यवध्यत्वं हर्येकवध्यत्वञ्च कथमिति चेत् ? मैवम् श्रीरामानुग्रहविशेषेण अनन्यवध्यत्वेऽपि मया हन्तुं शक्यत इति विवक्षितत्वात् । अस्य अनन्यवध्यस्यापि मयैव वध्याविति दत्तवरस्यापि । वधे च वधविषये शक्ति... रूपमनुग्रहं यद्यपि कुर्यात् । 'स्वनियमममपहाय मत्प्रतिज्ञाम्' इत्यादेः । तथा च मया वधे कृते सति स्वसङ्कल्प-विरोध्ययमिति कोपमकृत्वा अनुग्रहं यद्यपि कुर्यात् तथापि न तु मेऽद्य वध्योऽयमित्यर्थः ।।१२३।।

**इति स्म सञ्चिन्त्य कपीशयुक्तो जगाम यत्रैव कपिप्रवीराः ।**
**स कुम्भकर्णोऽखिलवानरांस्तु प्रभक्षयन् राममुपाजगाम ।।१२४।।**

**वरदराजीया–** इति सञ्चिन्त्य कपीशयुक्तो सुग्रीवेण युक्तो यत्र कपिप्रवीरास्तिष्ठन्ति तत्र ययौ । स हनुमता मुक्तः कुम्भकर्णो अखिलान् सर्वान् वानरान् प्रभक्षयन् ग्रसन्नेव राममुपाजगाम रामसमीपं प्राप ।।

**जनार्दनीया–** इति स्म उक्तरित्या सञ्चिन्त्य विचार्य । उपाजगाम समीपं प्राप ।।१२४।।

**चट्टी–** हनुमानिति सञ्चिन्त्य कपीशेन सुग्रीवेण युक्तो यत्र कपिप्रवरास्तिष्ठन्ति तत्र ययौ । सः हनुमता मुक्तः कुम्भकर्णः अखिलान् समस्तान् सर्वान् प्रभक्षयन् ग्रसन्नेव श्रीरामं उपाजगाम रामसमीपं प्राप ।।१२४।।

**ते भक्षितास्तेन कपिप्रवीराः सर्वे विनिर्जग्मुरमुष्य देहात् ।**
**स्रोतोभिरेवाथ[1] च रोमकूपैः केचित् तमेवाऽरुरुहुर्यथा गिरिम् ।।१२५।।**

**व्यासतीर्थीया–** स्रोतोभिरिन्द्रियैः ।।१२५।।

**वेदाङ्गतीर्थीया–** नवस्रोतोभिः नवद्वारैः । करणे तृतीया ।।१२५।।

**वादिराजीया–** स्रवत्येभिः मलमूत्रादिकमिति स्रोतांसि नवद्वाराणि । स्रोतोभिः केचित् अथ रोमकूपैः केचित् देहाद्विनिर्जग्मुः ।।१२५-१२७।।

**वरदराजीया–** तेन कुम्भकर्णेन भक्षिताः सर्वे कपिप्रवीराः अमुष्य कुम्भकर्णस्य देहात् स्रोतोभिः इन्द्रियछिद्रैः विनिर्जग्मुः बहिर्निर्गताः । अथ केचिद्रोमकूपैः विनिर्गता इत्यर्थः । एवं निर्गतास्ते गिरिः यथा तथा तमेवारुरुहुः ।।१२६।।

---

१. प्रक्षिप्ता कुम्भकर्णेन वक्त्रे पातालसन्निभे । नासापुटाभ्यां सञ्जग्मुः कर्णाभ्याञ्चैव वानराः ।। स वानरसहस्रैस्तु विचितः पर्वतोपमः । रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ।। वा.रा.[३३]६.६७.३५ ।

**जनार्दनीया–** अमुष्य कुम्भकर्णस्य देहाद्बहिरित्यर्थः । स्रोतोभिः नवेन्द्रियद्वारैः । 'स्रोतोम्बुनिर्गमद्वार इन्द्रियेषु जलस्सृतौ' इत्यमरः । रोमकूपैश्च विनिर्जग्मुः विनिस्सृताः । अथ निर्गमनानन्तरम् । यथागिरिं तथा केचित् कपयः तमेव कुम्भकर्णमेव आरुरुहुः ।।१२५।।

**अनन्तभट्टीया–** स्रोतोभिः इन्द्रियद्वारैः । यथा मक्षिका इति शेषः ।।१२५-१३२।।

**ताम्रपर्णीया–** स्रोतोभिः स्रवन्ति एभिः मलमूत्रादीनीति स्रोतांसि नवद्वाराणि ।।१२५-१२८।।

**चट्टी–** तेन कुम्भकर्णेन भक्षितास्ते सर्वे कपिप्रवीराः अमुष्य कुम्भकर्णस्य देहाद्बहिरित्यर्थः । स्रवन्ति एभिः मलमूत्रादीति स्रोतांसि नवद्वाराणि तैः स्रोतोभिः रोमकूपैश्च विनिर्जग्मुः विनिस्सृताः । अथ निर्गमनानन्तरं केचित् कपयः गिरिं यथा तथा तमेव कुम्भकर्णं आरुरुहुः ।।१२५।।

**भारतश्री–** सर्वे इदानीं भक्षिताः पूर्वं भक्षिताः शतबल्याद्याश्च ।।१२५।।

**गूढवाक्यार्थ–** स्रोतोभिः स्रवन्ति एभिः मलमूत्रादीनीति स्रोतांसि नवद्वाराणि ।।१२५।।

**स तान् विधूयाऽशु यथा महागजो जगाम रामं समरार्थमेकः ।**
**प्रभक्षयन् स्वानपरांश्च सर्वशो मत्तः समाघ्राय च शोणितं पिबन् ।।१२६।।**

**व्यासतीर्थीया–** महागज इत्यादिना मक्षिकान् गजो यथा ।।१२६–१३१।।

**वेदाङ्गतीर्थीया–** एकः असहायः ।।१२६।।

**वरदराजीया–** स कुम्भकर्णः तान् कपीन् आशु विधूय निवार्य क गज इव मक्षिका इति शेषः । एकः असहायः समरार्थं युद्धाय रामं प्रति जगाम । स्वान् स्वकीयान् राक्षसान् अपरान् सर्वशः सर्वान् प्रभक्षयन् ग्रसन् यतः उद्धतः समाघ्राय शोणितं पिबन् जगामेति सम्बन्धः ।।१२६।।

**जनार्दनीया–** सः कुम्भकर्णः । महागजः कर्णताडनेन मक्षिका यथा विधुनोति तथा तान् स्वरूढान् कपीन् विधूय, देहकम्पनेन दूरीकृत्येत्यर्थः । सर्वशः सर्वान् । स्वान् राक्षसान् । अपरांश्च कपींश्च । प्रभक्षयन् समाघ्रय, शोणितं रक्तं पिबन् सन्, एकः सहायरहितः । समरार्थं युद्धार्थं प्रति जगाम । अत एव मत्तः उन्मत्तः ।।१२६।।

**चट्टी–** एको असहायः सः कुम्भकर्णः महागजः मत्तगजः कर्णताडनेन मक्षिका यथा विधुनोति तथा तान् आरुढान् कपीन् आशु विधूय देहकम्पनेन दूरीकृत्येत्यर्थः । सर्वशः सर्वान् स्वान् राक्षसान् अपरान् कपींश्च प्रभक्षयन् मत्तस्सन् समाघ्राय शोणितं रक्तं पिबन् सन् समरार्थं श्रीरामं प्रति जगाम ।।१२६।।

**न्यवारयत् तं शरवर्षधारया स लक्ष्मणो [1]नैनमचिन्तयत् सः ।**
**जगाम रामं गिरिशृङ्गधारी समाह्वयत् तं समराय चाऽऽशु ॥१२७॥**

**वेदाङ्गतीर्थीया–** नाचिन्तयत् न गणयामास ॥१२७॥

**वरदराजीया–** सः लक्ष्मणः कुम्भकर्णं शरवर्षधारया शरवृष्टिधारेण न्यवारयत् निवारयामास । कुम्भकर्णः एनं नाचिन्तयत् नागणयत् । गिरिशृङ्गधारी कुम्भकर्णः रामं जगाम । तं रामं समराय रणायाशु समाह्वयच्च ॥१२८॥

**जनार्दनीया–** सः कुम्भकर्णः । एनं लक्ष्मणम् । नाचिन्तयत् नागणयत् । तं रामम् । समराय युद्धाय ॥

**चट्टी–** सः लक्ष्मणः शरवर्षधारः सन् तं कुम्भकर्णं न्यवारयत् निवारयामास । कुम्भकर्णः गिरिशृङ्गधारी सन् एनं लक्ष्मणं न अचिन्तयत् अगणयन् रामं जगाम आशु तं श्रीरामं समराय रणाय समाह्वयच्च ॥१२७॥

**भारतश्री–** अचिन्तयत् न चिन्तयत् ॥१२७॥

**अथो समादाय धनुः सुघोरं शरांश्च सुरेशाशनितुल्यवेगान् ।**
**प्रवेशयामास निशाचरे प्रभुः स राघवः पूर्वहतेषु यद्वत् ॥१२८॥**

**वादिराजीया–** पूर्वहतेषु खरपुत्रखरदूषणादिषु ॥१२८–१२९॥

**वरदराजीया–** अथानन्तरं सुघोरं भयानकं धनुः समादाय सुरेशस्येन्द्रस्य अशनिर्वज्रस्तत्समानवेगान् शरान् प्रभुः समर्थो राघवः निशाचरेशे कुम्भकर्णे प्रवेशयामास । पूर्वहतेषु खरादिषु यद्वत् यथा प्रवेशितवान् ॥१२८॥

**जनार्दनीया–** सुघोरं अनन्यधार्यत्वात् सुघोरम् । सुरेशाशनितुल्यः इन्द्रवज्रसदृशः वेगो येषां ते तथा तान् । पूर्वं हतेषु राक्षसेषु । यद्वत् यथा शरान् अमुञ्चत्, तथा प्रभुः सः राघवः निशाचरे कुम्भकर्णे प्रवेशयामास ॥१२८॥

**चट्टी–** अथ अनन्तरं प्रभुः समर्थः स राघवः सुघोरं अनन्यधार्यत्वात् भयङ्करं धनुः समादाय सुरेशस्येन्द्रस्य अशनिः वज्रः तत्समानवेगान् शरान् पूर्वं हतेषु राक्षसेषु यद्वत् यथा शरान् अमुञ्चत् तथा निशाचरे कुम्भकर्णे प्रवेशयामास ॥१२८॥

---

१. एष दाशरथी रामस्तिष्ठत्यद्रिरिवाचलः । इति श्रुत्वा ह्यनादृत्य लक्ष्मणं स निशाचरः ॥ इति वाल्मीकीये ६.६७.११४ ।

**यावद्बलेन न्यहनत् खरादिकान् न तावतैव न्यपतत् स राक्षसः ।**
**अथ प्रहस्याऽऽत्मबलैकदेशं प्रदर्शयन् बाणवरान् मुमोच ।।१२९।।**

**वेदाङ्गतीर्थीया–** राक्षसः तावता बलेनैव न न्यपतदिति सम्बन्धः । अथ प्रहस्यात्मबलैकदेशं प्रकाशयन्निति । भगवतो बलस्य प्रकाशनं च शक्ततव्यक्त[ता]रूपविशेषबलाद् घटते ।।१२९–१३५।।

**सत्याभिनवीया–** तत्रैव यावद्बलेन न्यहनत् खरादिकान्... इति श्लोकः । तस्यार्थः । रामः यावद्बलेन खरादिकान् न्यहनत् तावता बलेन सः राक्षसः कुम्भकर्णः इच्छाभावात् नैव न्यपतत् । अथ अनन्तरं प्रहस्य आत्मबलैकदेशं खरादिहननोपयुक्तं आत्मबलैकदेशं प्रदर्शयन् व्यक्तीकुर्वन् बाणवरान् मुमोचेति । एतेन यावता बलेन खरादिकान् न्यहनत् तावता बलेन स राक्षसो नैव न्यपतदिति खरादिहननोपयुक्त-बलस्य मोघत्वं प्रतीयते । तच्च प्रमाणविरुद्धमिति दूषणं परास्तम् । इच्छाभावादिति शेषपूरणेन यावता बलेन खरादिकान् न्यहनत् तावता बलेन स राक्षसः रामचन्द्रस्य कुम्भकर्णपतनेच्छाभावात् न न्यपतदित्यर्थस्योक्तत्वात् । एतेनैव खरादिहननोपयुक्तबलस्य अमोघत्वात् अधिकात्मबलैकदेशग्रहणं व्यर्थमिति दूषणं निरस्तम् । आत्मबलैकदेशं प्रदर्शयन्नित्यस्य खरादिहननोपयुक्तबलापेक्षया अधिकात्म-बलैकदेशं प्रदर्शयन्नित्यर्थमनङ्गीकृत्य खरादिहननोपयुक्तबलापेक्षया न्यूनात्मबलैकदेशं प्रदर्शयन्नित्यर्थ इत्यङ्गीकारात् । खराद्यपेक्षया कुम्भकर्णः अधिकबल इति ज्ञापनार्थमादौ खरादिहननोपयुक्तबलाभिव्यक्ति-मात्रं कृतम् । कुम्भकर्णः न न्यपतत् । अनन्तरं स्वकीयबलमात्रस्य अमोघत्वज्ञापनार्थं खरादिहननोप-युक्तबलापेक्षया न्यूनबलस्याभिव्यक्तिः कुम्भकर्णपतनेच्छा च कृता । अतः कुम्भकर्णः न्यपतदिति भावः ।।

**मधुसूदनीया–** ।। **यावद्बलेनेति** ।। खरादिकान् यावद्बलेन न्यहनत् तावतैव बलेन स राक्षसः कुम्भकर्णः न न्यपतत् । किन्तु ततोऽप्यधिकबलं कुम्भकर्णे प्रकटितवानित्यर्थः । नन्वधिकबलं प्रकटितवांश्चेत् स्वस्य यावत्स्वरूपबलं तावद्बलं कुम्भकर्णे प्रकटितवान् किमित्यतो नेत्याह– **आत्मबलैकदेशमिति** ।। प्रदर्शयन् व्यक्तीकुर्वन्नित्यर्थः ।। **बाणवरानिति** ।। 'यैः सायकैः सालवरा निकृत्ता वाली हतो वानरपुङ्गवश्च । ते कुम्भकर्णस्य तदा शरीरं वज्रोपमं न व्यथयांप्रचक्रुः ।। इति [६.६७.१५२] रामायणवाक्येन वाल्यादीन् यैर्यावद्भिर्बाणैर्हतवान् न तैः तावद्भिरेव कुम्भकर्णः पपातेति सूचनाय बाणवरानित्युक्तम् । 'नाहं विराधो विज्ञेयो न कबन्धः खरो न च । न वाली न च मारीचः कुम्भकर्णोऽहमागतः । विकर्णनास इति मां नावज्ञातुं त्वमर्हसि ।।' इति रामायणे [६.६७.१४७] तदुक्तेरधिकबलेन पपातेति बोध्यम् ।।१२९–१३०।।

**वरदराजीया–** रामो यावता अभिव्यक्तेन बलेन खरादिकान् न्यहनत् तावतैवाभिव्यक्तेन बलेन तावतैव बलेन राक्षसो न न्यपतत् । अथानन्तरं आत्मबलस्य शक्तिरूपेणावस्थितस्य प्रकाशयन् व्यक्तं कुर्वन् प्रहस्य बाणवरान् मुमोच । अत्र नित्यस्यापि बलस्य विशेषबलाच्छक्तिव्यक्तिरूपतोपपादनीया ।।

**जनार्दनीया–** खरादिकान् यावद्बलेन अभिव्यक्तेन यावता बलेन न्यहनत्, स राक्षसः कूम्भकर्णः तावतैव तावदभिव्यक्तेन बलेन न न्यपतत् । अथ प्रहस्य आत्मबलस्य स्वरूपबलस्य एकदेशं एकांशं प्रदर्शयन् प्रकटयन्, बाणवरान् मुमोच इति शेषः । हरेः बलप्रदर्शनं नाम रूपविशेषव्यक्तिरिति ज्ञातव्यम् । अनेन कुम्भकर्णस्य सर्वेभ्यो बलाधिक्यमुक्तमिति भावः ।।१२९।।

**ताम्रपर्णीया–** ।। **यावद्बलेनेति** ।। ननु खरहन्तृबलस्य कुम्भकर्णहननसामर्थ्यमस्ति न वा । आद्ये न न्यपतदिति न युक्तम् । द्वितीये अनीश्वरत्वं इति चेत् । अत्रेदं रहस्यम् । ईश्वरे तावत् सर्वस्य सर्वात्मकत्वेऽपि तदचिन्त्यशक्तिघटितविशेषबलेन द्रव्यं गुणा इति गुणश्च आनन्दो ज्ञानं बलमिति । ज्ञाने चाल्पज्ञानं महाज्ञानं सामान्यज्ञानं विशेषज्ञानमितिवच्च अल्पकार्यकारि अल्पबलं महाकार्यकारि महाबलमिति विभागोऽङ्गीकार्यः । 'अभेदमपि तद् ब्रह्म बहुरूपं विशेषतः । करोति न करोतीति व्यवहार्यं स्वशक्तितः ।।' इति माण्डूक्यभाषे [अ.१खं.२] रूपविषये तथोक्तत्वात् । 'सर्वकालगतस्याल्पकालेऽपि स्यादवस्थितिः । महागुणस्याल्पोऽपि गुणस्स्यादिति चेद्भवेत् । तावत्त्वमेव नैव स्यात्... ।।' [वैशेषिकाधिकरण] इत्यनुव्याख्यानोक्तेः । ततश्च खरहननोपयोगिबलस्याल्पकार्यकारित्वेन महाकार्यकारित्वसामर्थ्ये सत्यप्युक्तव्यवस्थया कुम्भकर्णो अतः कारणेन न न्यपतत् इत्युक्तिसम्भवात् । खरादितोऽपि अयमतिबलिष्ठः । तद्धननोपयोगिबलेनाहतत्वात् इति दर्शयितुं प्रथमत एव महाबलप्रयोगे कार्ये अल्पबलप्रयोग इति ज्ञेयम् । युद्धे प्रसक्ते प्रथमतो एव यावद्बलप्रयोगो वा अल्पबलप्रयोगो वा न कार्य इति तच्छिरोपरि ब्रह्मास्त्रं प्रयुञ्जानस्येव समुद्रशोषणाय उल्मुकान् नेतुरिव उन्मत्तत्वप्रसङ्गात् । किन्तु प्रतियोद्धृपरीक्षा कार्या । परीक्षा च क्रमिकबलवत्प्रयोगे सति स्यात् इति नीतिं दर्शयितुं खरहननोपयोगिबलं प्रयुज्यते । न च बुद्धिपूर्वं तत्सारमकृत्वा किञ्चिदधिकबलेन कृतवान् इत्यदोषः । अल्पबलान्तरस्वीकारे सत्यपि खरविराधादिहननोपायोपयोगि बलस्वीकारे कारणं तु उक्तम्– **प्रदर्शयन्निति** ।। तदनुगुणप्रयत्नादिना नित्यव्यक्तमपि बलं जनप्रत्यक्षगोचरवच्चकार इत्यर्थः ।।[1]

**चट्टी–** श्रीरामः खरादिकान् यावद्बलेन यावता अभिव्यक्तेन बलेन न्यहनत् स राक्षसः कुम्भकर्णः तावतैव तावदभिव्यक्तेन बलेन न न्यपतत् किन्तु ततोऽप्यधिकबलं कुम्भकर्णे प्रकटीकृतवान् इत्यर्थः । नन्वधिकबलं प्रकटितवांश्चेत् स्वस्य यावत्स्वरूपबलं तावद्बलं कुम्भकर्णे प्रकटितवान् किमित्यतो नेत्याह– **अथ प्रहस्यात्मबलैकदेशमिति** ।। अथ प्रहस्य आत्मबलस्य शक्तिरूपेण स्थितस्य स्वरूपबलस्य एकदेशं प्रकाशं व्यक्तीकुर्वन् बाणवरान् मुमोच । राम इति शेषः । बाणवरानित्युक्तिः वाल्यादीन् यैर्यावद्भिर्बाणैर्हतवान् न तैः तावद्भिरेव कुम्भकर्णः पपातेति सूचनाय बाणवरानित्युक्तम् ।

१. केचित् 'बलस्य शक्तिव्यक्त्या इयमुक्तिः' इत्याहुः । तच्चिन्त्यम् । 'नित्यव्यक्ता हरेर्गुणा' इति वचनविरोधात् ।।१२९।। इति हो पुस्तके अधिकः पाठः ।

तदुक्तं रामायणे– 'यैः सायकैः सालवरा निकृत्ता वाली हतो वानरपुङ्गवश्च । ते कुम्भकर्णस्य तदा शरीरं वज्रोपमं न व्यथयांप्रचक्रुः ।। इति। 'नाहं विराधो विज्ञेयो न कबन्धः खरो न च । न वाली न च मारीचः कुम्भकर्णोऽहमागतः । विकर्णनास इति मां नावज्ञातुं त्वमर्हसि ।।' इति च रामायणे । अनेन कुम्भकर्णस्य सर्वेभ्यो बलाधिक्यमुक्तमिति भावः ।।१२९।।

**भारतश्री–** यावद् बलेन न्यहनत् खरादिकानिति ईश्वरे हि बलस्यानेके अंशाः । सर्वत्र कृतिमत्त्वेऽपि शक्तिमत्त्वेऽपि एतेनैतत्कार्यं करिष्यामीति । नापि तत् तेन कृता । अस्मादादिबलैकदेशस्थूलसूक्ष्म-स्वरूपाः सन्ति । तेन तेन बलैकदेशेन क्लृप्तं कार्यं करोति ईशः । तथा च खरादिकान् यावद् बलेन यावद् बलैकदेशेन । तत्र क्लृप्तेन न्यहनत् तावतैव तेनैव बलेन सः राक्षसः न न्यपतत् । एतत्पातने अन्यस्य बलस्य क्लृप्तत्वात् । अथ तत्र क्लृप्तं बलैकदेशं प्रदर्शयन् बाणवरान् मुमोचेति । प्रहस्येत्यादिकं क्रीडा ।।

**भावचन्द्रिका–** यावता तावता प्रकाशेन । बलं स्वरूपसत् कारणं न किन्तु चेष्टादिद्वारा । वेगादेश्च । अत एव लोके व्यापारेण बलप्रकाशं करोतीति व्यवहरन्ति । ईश्वरक्रियायाः शक्त्यात्मना नित्यत्वेऽपि व्यक्त्यात्मनाऽगन्तुकत्वात् अल्पस्पन्दो बहुस्पन्द इति वक्तुं शक्यम् । तदनुसाराद्वेगेऽपि वैचित्र्यमस्ति । अतः स्वस्य सर्वदा सम्पूर्णसामर्थ्येऽपि चेष्टाद्वारा वेगवत्प्रकाशादिलक्षणबलप्रकाशः शराद्यपेक्षया कुम्भकर्णेऽधिको मत इकि बोध्यम् । अत एव पूर्वहतेषु खरादिषु यथा तथा प्रवेशयामास इत्युक्त्या प्रदर्शयति । बलस्य शक्तिव्यक्तिरिति केचित् । तन्न । 'नैवाशक्तिः क्वचिदस्तीह विष्णोः प्रादुर्भावेष्वपि सुव्यक्तशक्तेः' इत्युत्तरत्र हनुमद्भीमप्रसङ्गे उक्तत्वात् ।।१२९–१३६।।

**अतिविशद–** यावद्बलेन न्यहनत् खरादिकानित्यत्र रामबलस्य परिच्छेदः प्रतीयते तत्तु अयुक्तम् । तद्बलस्यापरिच्छिन्नत्वात् । नच रामस्य भगवदवतारत्वेन परिच्छेदो युक्त इति वाच्यम् । 'मूलरूपश्च यो विष्णुः प्रादुर्भावादिकश्च यः । गुणतो रूपतश्चैव विशेषं योऽत्र पश्यति ।। अत्यल्पमपि यो मत्वा तमोन्धं यात्यसंशयम् ।।' इत्यादिना मूलरूपावताररूपयोः विशेषद्रष्टुरनर्थश्रवणेन अपरिच्छिन्नत्वात् तद्बलस्येति कथमित्याशङ्का 'परिच्छेदस्तथा व्याप्तिः एकरूपेऽपि विद्यते' इति वचनात् परिहर्तव्या । अयं भावः । नवनीतचौर्यसमये कृष्णबन्धनार्थं प्रवृत्तया यशोदया हि एकस्मिन्नेव कृष्णे पाशबन्धनाबन्धनाभ्यां परिच्छिन्नत्वमपरिच्छिन्नत्वमपि ज्ञातं तथा तद्बलस्य तदत्यन्ताभिन्नस्य तत्तत्कार्येण खरादिहन्तृबलस्य कुम्भकर्णहननसमर्थस्यापि तदकरणात्परिच्छेदः । एवमेकरूपेण सर्वकरणसमर्थस्यापि अनन्तरूपेण तत्तत्कार्यकरणात् अनन्तरूपापरिच्छेदः । तथा बलस्य ब्रह्मरूपत्वं 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणः तस्मात् ब्रह्मेत्याक्षते' इति श्रुतिसिद्धं 'विष्णुरेव बलं विष्णुरेव वशो विष्णुरेवानन्द' इति दर्शनात् चतुर्वेदशिखायां इति बलस्य विष्णुरूपत्वं सिद्धम् ।।१२९–१५३।।

**प्रमाणसंग्रह–** ।। **यावद्बलेनेति** ।। 'यैः सायकैः सालवरा निकृत्ता वाली हतो वानरपुङ्गवश्च । ते कुम्भकर्णस्य तदा शरीरं वज्रोपमं न व्यथयांप्रचक्रुः ।। इति इति रामायणे । 'नाहं विराधो विज्ञेयो न कबन्धः खरो न च । न वाली न च मारीचः कुम्भकर्णोऽहमागतः । विकर्णनास इति मां नावज्ञातुं त्वमर्हसि ।।' इति च ।।१२९।।

**गूढवाक्यार्थ–** ।। **यावद्बलेनेति** ।। ननु खरहन्तृबलस्य कुम्भकर्णहननसामर्थ्यमस्ति न वा ? आद्ये तावता न न्यपतदित्ययुक्तम् । द्वितीये अनीश्वरत्वप्रसङ्गः । 'अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि । तावदेवेश्वरः...।।' इत्युक्तेः । अत्र सन्मार्गस्मृतिरहस्यमुच्यते...* सर्वस्य सर्वात्मत्वेऽपि तदचिन्त्य-घटितविशेषवशेन द्रव्यं गुण इति । गुणे चानन्दो ज्ञानमिति । ज्ञाने च अल्पज्ञानं महाज्ञानमिति सामान्यज्ञानं विशेषज्ञानमितिवच्च अल्पकार्यकार्यल्पबलं महाकार्यकारि महाबलमिति विभागोऽङ्गीकार्यः । 'अभेदमपि तद् ब्रह्म बहुरूपं विशेषतः । करोति न करोतीति व्यवहार्यं स्वशक्तितः ।।' इति रूपविषये तथोक्तत्वात् । सर्वकालगतस्याल्पकालेऽपि स्यादवस्थितिः । महागुणस्य चाल्पोऽपि गुणः स्यादिति चेद् भवेत् ।। तावत्त्वमेव नैव स्यात्' इत्यनुव्याख्यानोक्तेः । त...* पयोगिबलस्य अल्पकार्यकारित्वेन महाकार्यकारित्वसाध्ये[?] सत्यपि उक्तव्यवस्थया कुम्भकर्णे तदकरणेन न न्यपतदित्युक्तिसम्भवात् । स्वभक्तानां स्वगुणेषूक्तावान्तरविशेषज्ञापनाय अयोग्यानां बलभेदस्याज्ञानस्य प्रदर्शनेन मोहनाय खरादितोऽप्ययमतिबलिष्ठः तद्धननोपयोगिबलेनाहतत्वादिति दर्शयितुं च प्रथमत एव महाबलप्रयोगे कार्ये अल्पबलप्रयोग इति ज्ञेयम् ।। **प्रदर्शयन्निति** ।। तदनुगुणप्रयत्नादिना नित्यव्यक्तमपि बलं जनप्रत्यक्ष-गोचरवच्चकारेत्यर्थः ।।१२९।।

**द्वाभ्यां[१] स बाहू निचकर्त तस्य पदद्वयं चैव तथा शराभ्याम् ।**
**अथापरेणास्य शिरो निकृत्य [२]सम्प्राक्षिपत् सागरतोय आशु ।।१३०।।**

**वादिराजीया–** यद्यपि लवणसमुद्रः अस्मात् द्वीपात् द्वीपान्तरपर्यन्तं लक्षयोजनविस्तृत एव तथाऽपि परितो बहुलक्षणयोजनविस्तृतत्वात् रामशरेणेतस्ततः प्रक्षिप्तानां त्रिलक्षयोजनप्रमाणस्यापि कुम्भकर्णदेहस्य खण्डानां तत्र तत्रावकाशोऽभूदिति ज्ञेयम् ।।१३०–१३८।।

---

१. वायव्याग्नैन्द्रास्त्राभ्यां बाहू, द्वाभ्यामर्धचन्द्राभ्यां पादौ चिच्छेद । अथ पुनरिन्द्रदेवताकेन अस्त्रेण तस्य शिरः चिच्छेदेति रामायणे । तथाहि-'वायव्यमादाय ततोऽपरास्त्रं रामः प्रचिक्षेप निशाचराय १५५, 'ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन'१५९, । 'द्वावर्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य' १६१, 'अरिष्टमैन्द्रं निशितं सुपुङ्खं रामः शरं मारुततुल्यवेगम्'१६५ इति ६.६७. ।

२. 'तच्चातिकायं हिमवत्प्रकाशं रक्षस्तदा तोयनिधौ पपात' इति रामायणे । अनेन पपातेत्यस्य पातयामास इत्यर्थः सूचितो भवति ।

**वरदराजीया–** स रामो द्वाभ्यां शराभ्यां बाहुद्वयं निचकर्त अकृन्तत् । तस्य कुम्भकर्णस्य पादद्वयं शराभ्यां बाणद्वयेन निचकर्त । अथानन्तरं शरेण एकेन बाणेनास्य कुम्भकर्णस्य शिरो निकृत्य छित्वा आशु सागरतोये समुद्रजले सम्प्राक्षिपत् चिक्षेप ।।१३०।।

**जनार्दनीया–** स रामः । तस्य कुम्भकर्णस्य बाहू द्वाभ्यां बाणाभ्यां निचकर्त चिच्छेद । तथा शराभ्यां पदद्वयं पादयुग्मं च न्यकृन्तत । अथ अपरेण अन्येन बाणेन अस्य शिरो निकृत्य छित्वा, सागरस्य समुद्रस्य तोये जले आशु सम्प्राक्षिपत् प्रास्यत् ।।१३०।।

**ताम्रपर्णीया–** ।। **सम्प्राक्षिपदिति** ।। देहं खण्डशः छित्वा जम्बूद्वीपस्य परितः समुद्रे प्राक्षिपदिति भावः ।।

**चट्टी–** सः श्रीरामः द्वाभ्यां तस्य कुम्भकर्णस्य बाहू निचकर्त चिच्छेद । तथा शराभ्यां पदद्वयं पादयुग्मं च निचकर्त । अथ अपरेण अन्येन बाणेन अस्य शिरो निकृत्य छित्वा सागरस्य समुद्रस्य तोये जले आशु सम्प्राक्षिपत् चिक्षेप ।।१३०।।

**गूढवाक्यार्थ–** ।। **सम्प्राक्षिपदिति** ।। देहं खण्डशः कृत्वा जम्बूद्वीपस्य परितः समुद्रे प्राक्षिपदिति भावः । समुद्रस्य लक्षयोजनविस्तृतत्वेव परितो बहुयोजनविस्तृत्वात् । रामशरवेगेन इतस्ततः प्रक्षिप्तानां त्रिलक्षयोजनकुम्भकर्णदेहस्य खण्डानामवकाशो भवेदिति नानुपपत्तिरिति भावः ।।१३०।।

**अवर्धताब्धिः पतितेऽस्य काये महाचलाभे क्षणदाचरस्य ।**
**सुराश्च[१] सर्वे ववृषुः प्रसूनैर्मुदा स्तुवन्तो रघुवर्यमूर्ध्नि ।।१३१।।**

**मधुसूदनीया–** ।। **अवर्धताब्धिः पतितेऽस्य काय इति** ।। 'कोट्यो दशप्लवङ्गानां कायेन विनिपातयन् । बभञ्ज पुर्याः गृहगोपुराणि प्राकारमुच्चं समपातयच्च ।। [६.६७.१७०] 'कायेनाथ प्रविष्टेन समुद्रं भीमदर्शनम्' [६.६८.३] इत्यादि रामायणे ।।१३१।।

**वरदराजीया–** अस्य क्षणदाचरस्य रात्रिचरस्य कुम्भकर्णस्य महाचलाभे स्थूलपर्वतसदृशे काये शरीरे पतिते सति अब्धिः समुद्रो वर्धित उद्रिक्तोऽभूत् । सर्वे सुराः देवाश्च मुदा सन्तोषेण स्तुवन्तः स्तुतिं कुर्वन्तः रघुवर्यस्य श्रीरामस्य मूर्ध्नि प्रसूनैः पुष्पैः ववृषुः ।।१३१।।

**जनार्दनीया–** क्षणदा रात्रिः तस्यां चरतीति तथा तस्य । राक्षसस्य महाचलाभे महाशैलनिभे काये देहे पातिते सति अब्धिरवर्धत अभिवृद्धोऽभूत् । समुद्रस्य मर्यादातिक्रमणमभूदिति भावः । रघुर्वर्यस्य मूर्ध्नि शिरसि । प्रसूनैः पुष्पैः ववृषु ।।१३१।।

---

१. 'ततस्तु देवर्षिमहर्षिपन्नगाः सुराश्च भूतानि सुपर्णगुह्यकाः । सयक्षगन्धर्वगणा नभोगताः प्रहर्षिता रामपराक्रमेण ।।' वा.रा.६.६७.१७३ ।

**चट्टी–** क्षणदायां रात्र्यां चरतीति क्षणदाचरस्तस्य राक्षसस्य महाचलाभे शैलनिभे काये देहे पातिते सति अब्धिरवर्धत अभिवृद्धोऽभूत् । सर्वे सुराः देवाः मुदा सन्तोषेण स्तुवन्तः स्तुतिं कुर्वन्तः रघुवर्यस्य श्रीरामस्य मूर्ध्नि शिरसि प्रसूनैः पुष्पैः ववृषुः ।।१३०।।

**भारतश्री–** तेनास्मिन् पतिते त्वब्धिरिति कुम्भकर्णस्य त्रिलक्षयोजनोच्छ्रितत्वेऽपि समुद्रस्य परितः अनेकलक्षयोजनत्वात् अविरोधः ।।१२९–१४१।।

**प्रमाणसंग्रह–** ।। **अवर्धताब्धिः पतितेऽस्य काये** ।। 'कोट्यो दशप्लवङ्गानां कायेन विनिपातयन् । बभञ्ज पुर्या ग्रहगोपुराणि प्राकारमुच्चं समपातयच्च ।। कायेनाथ प्रविष्टेन समुद्रं भीमदर्शनम् ।।' इत्यादि ।।

**गूढवाक्यार्थ–** क्षणदाचरस्य रात्रिचरस्य ।।१३१।।

**योजनानां त्रिलक्षं हि कुम्भकर्णोऽभ्यवर्धत ।**
**पूर्वं पश्चात् सञ्चुकोच लङ्कायामुषितुं स्वयम् ।।१३२।।**

**व्यासतीर्थीया–** कुम्भकर्णकायपतने समुद्रवृद्धेः कारणमाह– **योजनेति** ।।१३२-१३५।।

**मधुसूदनीया–** ।। **लङ्कायामुषितमिति** ।। लङ्कायां त्रिंशद्योजनविस्तीर्णायां शतयोजनमायातायाम् । तदुक्तम्– 'त्रिंशद्योजनविस्तीर्णा शतयोजनमायता । हेमप्राकारसंवीता हेमतोरणमण्डिता ।।' इति रामायणे [६.५.२६] ।।१३२-१३५।।

**वरदराजीया–** ननु तद्देहपाते किमर्थं अवर्धतेत्यत आह– **योजनानामिति** ।। कुम्भकर्णो बाल्यमारभ्य योजनानां त्रिलक्षत्रये योजनपरिमाणो यथा भवति तत्पूर्वमभ्यवर्धत अभिवृद्धोऽभूत् । पश्चात् लङ्कायामुषितुं स्थातुं स्वयं सञ्चुकोच अल्पपरिमाणोऽभूत् ।।१३२।।

**जनार्दनीया–** **समुद्रस्याभिवृद्धौ कारणमाह– योजनानामिति** ।। **पूर्वं** लङ्कावस्थानात् पूर्वं बाल्यावस्थायामित्यर्थः । पश्चादनन्तरं लङ्कायां उशितुं अवस्थातुं, स्वयमेव सञ्चुकोच सङ्कोचं प्राप ।।

**चट्टी– ननु कुम्भकर्णस्य देहे पतिते सति अब्धिः समुद्रः किमित्यवर्धतेत्यत आह– योजनानामिति** ।। कुम्भकर्णः बाल्यावस्थामारभ्य योजनानां त्रिलक्षं लक्षत्रययोजनपरिमाणं यथा भवति तथा पूर्वं लङ्कायामवस्थानात् पूर्वमभ्यवर्धत अभिवृद्धोऽभूत् । पश्चात् अनन्तरं लङ्कायां त्रिंशद्योजनविस्तीर्णायां शतयोजनमायातायाम् । तदुक्तम्– 'त्रिंशद्योजनविस्तीर्णा शतयोजनमायता । हेमप्राकारसंवीता हेमतोरणमण्डिता ।।' इति रामायणे । एतादृशायां लङ्कायामुषितुमवस्थातुं स्वयमेव सञ्चुकोच सङ्कोचं प्राप ।।१३२।।

**प्रमाणसंग्रह–** ।। **लङ्कायामुषितुमिति** ।। 'त्रिंशद्योजनविस्तीर्णा शतयोजनमायता । हेमप्राकार-संवीता हेमतोरणमण्डिता ।।' इति च ।।१३२।।

**स तु [१]स्वभावमापन्नो म्रियमाणोऽभ्यवर्धत ।**
**तेनास्मिन् पतिते त्वब्धिरवर्धदधिकं तदा ।।१३३।।**

**वरदराजीया–** स कुम्भकर्णः स्वभावं आपन्नः प्राप्तः पूर्ववदेवाभ्यवर्धत तेन कारणेनास्मिन् कुम्भकर्णदेहे पतितो तदाब्धिरधिकं यथा भवति अवर्धतेत्यर्थः ।।१३३।।

**जनार्दनीया–** म्रियमाणः स तु स एव । कुम्भकर्णः स्वाभावं त्रिलक्षाभिवृद्धिरूपम् । आपन्नः प्राप्तः । तेन पूर्ववदभिवृद्धिकारणेन अस्मिन् कुम्भकर्णे देहे । अभ्यवर्धत । अधिकमिति क्रियाविशेषणम् ।।

**अनन्तभट्टीया–** म्रियमाणः स तु स्वभावमापन्न इति सम्बन्धः । अस्मिन् कुम्भकर्णदेहे । ...* प्रतिपादयितुं तदेत्युक्तम् । अन्यदा जलचरैस्तदग्रहणादिति भावः ।।१३३-१३६।।

**चट्टी–** म्रियमाणः स तु कुम्भकर्णः स्वभावं पूर्ववदभिवृद्धिस्वभावमापन्नः सन् अभ्यवर्धत । तेन पूर्ववदभिवृद्धिकरणेन अस्मिन् कुम्भकर्णे देहे पतिते तथा अब्धिः अधिकं यथा भवति तथा अवर्धत ववृधे । तदुक्तम्– 'कोट्यो दशप्लवङ्गानां कायेन विनिपातयन् । बभञ्ज पुर्याः गृहगोपुराणि प्राकारमुच्चं समपातयच्च ।। [यु.का.६७.१७०] कायेनाथ प्रविष्टेन समुद्रं भीमदर्शनम् ।'[यु.का.६८.३]इति रामायणे ।।१३३।।

**अथापरे ये रजनीचरास्तदा कपिप्रवीरैर्निहताश्च सर्वशः ।**
**हतावशिष्टास्त्वरिताः प्रदुद्रुवुर्भ्रातुर्वधं चोचुरुपेत्य रावणम् ।।१३४।।**

**वरदराजीया–** अथानन्तरं तदा तस्मिन् हते सतीत्यर्थः । अपरे अन्ये ये रजनीचरास्ते समस्तशः सर्वे च कपिप्रवीरैर्निहताः हतेभ्योऽवशिष्टाश्च त्वरिताः वेगयुक्ताः प्रदुद्रुवुः । रावणमुपेत्य भ्रातुर्वधं ऊचुश्च ।।

**जनार्दनीया–** अपरे कुम्भकर्णपृष्ठतः स्थिताः । ये रजनीचराः । त्वरिताः वेगवन्तः सन्तः ।।१३४।।

**चट्टी–** अथ अनन्तरं अपरे अन्ये कुम्भकर्णपृष्टतः स्थिताः ये रजनीचराः सर्वशः सर्वे च ते तदा कपिप्रवीरैः निहताः हतेभ्योऽवशिष्टाः त्वरिताः वेगवन्तः सन्तः दुद्रुवुः । रावणमुपेत्य भ्रातुः कुम्भकर्णस्य वधं चाहुः ।।१३४।।

१. 'स्वरूपं प्रतिपद्यन्ते गूहन्तो यक्षराक्षसाः । सुप्ताः म्रियन्तः क्रुद्धाश्च भीतास्ते हर्षितास्तथा ।।' ब्रह्माण्ड.पु. उपो.पा.७.११२

**स दुःखतप्तो निपपात मूर्च्छितो निराशकश्चाभवदात्मजीविते ।**
**तमाह पुत्रस्त्रिदशेशशत्रुर्नियुङ्क्ष्व मां शत्रुवधाय मा चिरम् ॥१३५॥**

**वरदराजीया–** स रावणो दुःखेन तप्तो ज्वलितो मूर्च्छितो मूर्च्छां प्राप्तः अपतत् । आत्मनः स्वस्य जीविते जीवने निराशकः आशारहितश्चाभवत् । त्रिदशेशशत्रुः इन्द्रजित् तं रावणमाह । किमिति । शत्रोः रामस्य वधाय शीघ्रं मां नियुङ्क्ष्व नियोजय ॥१३५॥

**जनार्दनीया–** स रावणः आत्मजीविते स्वजीवनविषये निराशकश्चाशारहितश्चाभवत् । त्रिदशानां देवानां, ईशस्य इन्द्रस्य शत्रुः । पुत्रः रावणपुत्रः । इन्द्रजित् शत्रुवधाय मां नियुङ्क्ष्व आज्ञापय । चिरं विलम्बं मा कुर्विति रावणं प्रत्याह ॥१३५॥

**चट्टी–** स रावणः दुःखेन तप्तो ज्वलितः मूर्च्छितः मूर्च्छां प्राप्तस्सन्निपपात । आत्मनः स्वस्य जीवनविषये निराशकः आशारहितश्चाभवत् । पुत्रः त्रिदशेशशत्रुः इन्द्रजित् तं रावणमाह । किमिति । शत्रोः रामस्य वधाय मां मा चिरं शीघ्रं नियुङ्क्ष्व नियोजय ॥१३५॥

**मया गृहीतस्त्रिदशेश्वरः पुरा विषीदसे किं नरराजपुत्रतः ।**
**स एवमुक्त्वा प्रजुहाव पावकं शिवं समभ्यर्च्य समारुहद् रथम् ॥१३६॥**

**व्यासतीर्थीया–** किं किमर्थम् ॥१३६॥

**वेदाङ्गतीर्थीया–** विषीदसे किं किमर्थम् । शिवं समभ्यर्च्य पावक इति शेषः ॥१३६–१३७॥

**मधुसूदनीया–** ॥ **मया गृहीतः त्रिदशेश्वरः इति** ॥ ननु इन्द्रो रावणपुत्रवशं कथमायातः इत्येतत् चोद्यं 'यस्मात् मे धर्षिता पत्नी त्वया वासव निर्भयात् । तस्मात् त्वं समरे राजन् शत्रुहस्तं गमिष्यसि ॥' इति [६.३०.३२] रामायणोक्तगौतमवचनेन परिहर्तव्यम् । इन्द्रजितः इन्द्रग्रहणादेवेन्द्रजिदिति नामाभूदिति बोध्यम् । तदुक्तम्– 'अयं च पुत्रोऽतिबलस्तव रावण रावणिः । स इन्द्रजिदिति ख्यातो जगत्येष भविष्यति । तन्मुच्यतां महाबाहो महेन्द्रः पाकशासनः ॥' इति रामायणे [७.३०.५-७] ॥

**वरदराजीया–** पुरा मया त्रिदशेश्वरः इन्द्रः गृहीतः अतो नरराजपुत्रतो रामात् किं किमर्थं विषीदसे विपदं प्राप्नोषि । स इन्द्रजित् एवमुक्त्वा पावकं प्रजुहाव अजुहोत् । शिवं श्रीरुद्रं समर्च्य पूजयित्वा रथं समारुहत् ॥१३६॥

**जनार्दनीया–** त्रिदशेश्वरः इन्द्रः । पुरा गृहीतः । त्वं नरराजस्य पुत्रतः मनुष्याद्रामादित्यर्थः । किमिति विषीदसि खिद्यसि ? स इन्द्रजित् । एवमुक्त्वा पावकं अग्निं जुहाव ॥१३६॥

**चट्टी–** पुरा मया त्रिदशेश्वरः देवेन्द्रः गृहितः । त्वं नरराजपुत्रतः मनुष्यराजपुत्रात् रामादित्यर्थः । किं किमिति विषीदसे खिद्यसि । स इन्द्रजित् एवं उक्त्वा पावकं अग्निं प्रजुहाव अजुहोत् । शिवं रुद्रं समभ्यर्च्य पूजयित्वा रथं समारुहत् । ननु इन्द्रो रावणपुत्रवशं कथमायातः इत्येतत् चोद्यम्– 'यस्मात् मे धर्षिता पत्नी त्वया वासव निर्भयात् । तस्मात् त्वं समरे राजन् शत्रुहस्तं गमिष्यसि ।।' इति [उ.का.३०.३२] रामायणोक्तगौतमवचनेन परिहर्तव्यम् । इन्द्रग्रहणादेव अस्य इन्द्रजिदिति नामाभूदिति बोध्यम् ।।१३६।।

**भावचन्द्रिका–** ।। **स इति** ।। अभिचारेष्टिं कृत्वा । एवमुत्तरत्रापि । 'चकार रुद्रदैवत्यं अभिचारं महेन्द्रजित्' इति सङ्क्षेपरामायणे [यु.का.१०–६] ।।१३६–१४०।।

**प्रमाणसंग्रह–** ।। **मया गृहीता इति** ।। 'यस्मात् मे धर्षिता पत्नी त्वया वासव निर्भयात् । तस्मात् त्वं समरे राजन् शत्रुहस्तं गमिष्यसि ।।' इति रामायणे । 'अयं च पुत्रोऽतिबलस्तव रावण रावणिः । स इन्द्रजिदिति ख्यातो जगत्येष भविष्यति । तन्मुच्यतां महाबाहो महेन्द्रः पाकशासनः ।।' इति [उ.का.३०.५,७] ।।१३६।।

**स आत्तधन्वा सशरो रथेन वियत् समारुह्य ययावदर्शनम् ।**
**स नागपाशैर्वरतः[1] शिवस्य बबन्ध[2] सर्वान् कपिवीरसङ्घान् ।।१३७।।**

**व्यासतीर्थीया–** शिवस्य वरतो लब्धैः ।।१३७।।

---

१. 'यज्ञास्ते सप्तपुत्रेण प्राप्तास्ते बहुविस्तराः । अग्निष्टोमोऽश्वमेधश्च यज्ञो बहुसुवर्णकः ।। राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा । माहेश्वरे प्रवृत्ते तु यज्ञे पुंसि सुदुर्लभे ।। वरांस्ते लब्धवान् पुत्रः साक्षात्पशुपतेरिह । कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम् ।। मायाश्च तामसीं नाम यया सम्पद्यते तमः । एतया किल संग्रामे मायया राक्षसेश्वर ।। प्रयुक्तया गतिः शक्या न हि ज्ञातुं सुरासुरैः । अक्षयाविषुधी बाणश्चापं चापि सुदुर्जयम् ।। अस्त्रं च बलवद्राजन् शत्रुविध्वंसनं रणे । एतान् सर्वान् वरान् लब्ध्वा पुत्रस्तेऽयं जनार्दन ।।' इत्यादि रामायणे । ६.२५.७–१३ ।

२. अत्र निर्णये 'स नागपाशैर्वरतः शिवस्य बबन्ध सर्वान् कपिवीरसङ्घान्'१३७, इति 'पुनश्च तस्यास्त्रनिपीडितास्ते निपेतुरुर्व्यां कपयः सलक्ष्मणाः'१४७, इति 'पुनर्महास्त्रैः स बबन्ध तान् कपीन्'१६२ इत्येवं इन्द्रजित् त्रिवारं सुग्रीवादीन् बबन्धेत्यवगम्यते । तत्रापि प्रथमं नागपाशैर्बन्धनमुक्त्वा द्वितीयतृतीयवारं अस्त्रेण बन्धनमात्रमुच्यते । न तु अस्त्रादिनाम पृथक् निर्दिश्यते । पाद्मे तु [२४२.३००]'बबन्ध नागपाशैश्च तावुभौ रामलक्ष्मणौ' इति प्रथमतो नागपाशैर्बन्धनमुक्त्वा पश्चात् 'ब्रह्मास्त्रेणेन्द्रजित्क्रुद्धः पातयामास वानरान्' इति ब्रह्मास्त्रेण बन्ध उच्यते । वाल्मीकीयेऽपि 'रामश्च लक्ष्मणं चैव घोरैर्नागमयैः शरैः ।...बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ।।'[४४.३५] 'तस्मै तु दत्तं परमास्त्रमेतत् स्वयम्भुवा ब्राह्ममभोघवीर्यम् । तन्मानयन्तौ युधि राजपुत्रौ निपातितौ कोऽत्र विषादकालः ।।' [७४.४] इति पाद्मवदेवोच्यते । नारायणपण्डिताचार्यास्तु[६.१०]'बध्वाशीविषपाशैस्तान् कपीन् सर्वान्....

**वरदराजीया–** स इन्द्रजित् आत्तधन्वा अधिज्यधनुः शरेण सह वर्तमानो रथेन सह वियदाकाश-समारुह्यादर्शनं अप्रत्यक्षतां ययौ । स इन्द्रजित् शिवस्य वरतो वरात् सर्वान् कपिप्रवीरसङ्घान् नागपाशैः सर्पमयैः पाशैः बबन्ध ॥१३७॥

**जनार्दनीया–** स इन्द्रजित् । वियत् आकाशम् । समारुह्य, अदर्शनं अन्येषां दृष्ट्यगोचरत्वं ययौ प्राप । स इन्द्रजित् नागपाशैर्बबन्ध ॥१३७॥

**अनन्तभट्टीया–** अदर्शनं... । सुग्रीवादिबन्धने निमित्तमाह– **शिवस्य वरत इति** ॥१३७–१५३॥

**ताम्रपर्णीया–** कपिवीरसङ्घानित्युपलक्षणम् । लक्ष्मणं च इत्यपि द्रष्टव्यम् । बन्धेऽपि वैलक्षण्य-सूचनाय मुखतो अनुपादानम् । 'अतो निबध्याशु हरीन् सलक्ष्मणान्' इति वक्ष्यमाणत्वात् ॥

**चट्टी–** स इन्द्रजित् आत्तधन्वा अधिज्यधनुः शरैः सह वर्तमानः रथेन सह वियत् आकाशं समारुह्य अदर्शनं अन्येषां अप्रत्यक्षतां ययौ । अदर्शनं अप्रत्यक्षं यथा भवति तथा ययौ । श्रीरामं प्रतीति शेषः इति वा । स इन्द्रजित् शिवस्य वरतः वरात् सर्वान् कपिवीरसङ्घान् नागपाशैः सर्पमयैः पाशैः बबन्ध ॥

**गूढवाक्यार्थ–** बबन्ध लक्ष्मणं चेत्यपि द्रष्टव्यम् । मुखतोऽनुक्तिस्तु बन्धवैलक्षण्यसूचनाय । 'अथो निबध्याशु हरीन् सलक्ष्मणान्' इति वक्ष्यमाणत्वात् ॥१३७॥

**पुराऽवताराय यदा स विष्णुर्दिदेश सर्वांस्त्रिदशांस्तदैव ।**
**ममापि सेवा भवता प्रयोज्येत्येवं गरुत्मानवदद् वृषाकपिम् ॥१३८॥**

**व्यासतीर्थीया–** रामः कस्मान्नागबन्धनं न मुमोचेत्यत आह– **पुरेति** ॥१३८॥

**वेदाङ्गतीर्थीया–** गरुडागमनं वक्तुं कारणतयेतिहासमाह– **पुरेति** ॥ वृषाकपिं वृषाकाणामिन्द्रियाणां पतिम् ॥१३८॥

**वरदराजीया–** पुरा पूर्वं विष्णुः यदा अवताराय भूमावतारार्थं त्रिदशान् देवान् दिदेश आज्ञापितवान् । तदा गरुत्मान् गरुडो वृषाकपिं विष्णुं अवदत् । किमिति । भवता त्वया ममापि सेवा अत्रावसरे योज्या नियोजनीयेति ॥१३८॥

---

... सलक्ष्मणान्' इति 'स शम्भुवरतो गर्वात् पूर्ववत्सर्ववानरान् । नागभोगैर्दृढं बध्वा रावणं रावणिर्ययौ ॥' इति, तथा ६.११ 'शर्वशम्भुवराद्गर्वी पूर्ववत्सर्ववानरान् । बबन्ध नागैरिन्द्रारिस्तं न सेहेऽथ लक्ष्मणः ॥' इति त्रिवारमपि नागपाशैरेव बन्धनमाहुः । तत्र ज्ञापकं तु गवेषणीयम् ।

सोऽन्तर्धानगतः पापो रावणी रणकर्शितः । ब्रह्मदत्तवरो वीरो रावणिः क्रोधमूर्च्छितः ॥३४॥ अदृश्यः सर्वभूतानां कूटयोधी निशाचरः । बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ॥३७॥ इति वाल्मीकिरामायणे ६.४४ ।

**जनार्दनीया–** पुरा रामावतारार्थं ब्रह्मादीनां प्रार्थनकाले । यदा सः विष्णुः अवताराय अवतारं कर्तुं, त्रिदशान् देवान् दिदेश आदिशत् । तदैव गरुत्मान् गरुडः ममापि सेवा भवता त्वया प्रयोज्या आज्ञापनीया । इति वृषाकपिं अभीष्टवर्षणात् वृतषड्गुणत्वाच्च वृषः, अकं दुःखं पेषयतीति अकपिः, वृषश्चासौ अकपिश्चेति विग्रहः । तं प्रत्यवदत् ।।१३८।।

**चट्टी–** गरुडागमनं वक्तुं तत्कारणतया इतिहासमाह– **पुरेति** ।। पुरा अवतारार्थं ब्रह्मादीनां प्रार्थनकाले यदा सः विष्णुः अवताराय भूमाववतर्तुं त्रिदशान् देवान्दिदेश आज्ञापितवान् । तदैव गरुत्मान् गरुडः ममापि सेवा भवता प्रयोज्या आज्ञापनीया इत्येवं वृषाकपिं अभीष्टवर्षणात् वृतषड्गुणत्वाच्च वृषः । अकं दुःखं पेषयतीति अकपिः । वृषश्चासौ अकपिश्चेति विग्रहः तं प्रत्यवदत् ।।१३८।।

**तमाह विष्णुर्न भुवि प्रजातिमुपैहि सेवां तव चान्यथाऽहम् ।**
**आदास्य एवात्र यथा यशः स्याद् धर्मश्च कर्तव्यकृदेव च स्याः ।।१३९।।**

**वेदाङ्गतीर्थीया–** अन्यथा भुव्यवतारं विनापि । अत्र भुवि । कर्तव्य एव [कर्तव्यकृदेव] स्व [स्वस्याः] मत्सेवा भवेदेव [मत्सेवाकृदेव] ।।१३९।।

**वादिराजीया–** ।। **सेवां तव चान्यथाऽहमादास्य एवेति** ।। येषां तथा तव च सेवामन्यथैवादास्य इति चैवशब्दयोः सम्बन्धः ।।१३९।।

**वरदराजीया–** विष्णुस्तमाह । किमिति । भुवि प्रजातिं जननं न उपेहि नाप्नुहि । अहं सेवां अन्यथा अन्येन प्रकारेण आदास्ये गृहिष्य एव । अत्र सेवाकरणे तव यशः कीर्तिः स्यात् । धर्मश्च यथा स्यात् कर्तव्यकृत् विहितानुष्ठिता च यथा स्याः भविष्यसि तथा आदास्येति सम्बन्धः ।।१३९।।

**जनार्दनीया–** विष्णुः तं गरुडमाह । किमिति ? त्वं भुवि प्रजातिं उत्पत्तिं नोपैहि न प्राप्नुहि । अन्यथा भुव्युत्पत्तिं विना अहं अत्र रामावतारे यथा ते यशः धर्मश्च स्यात् । कर्तव्यं करोतीति तथा । स्वविहितकर्मकर्ता च त्वं यथा स्याः भविष्यसि । तथा तव सेवां आदास्य एव स्वीकरिष्ये ।।१३९।।

**चट्टी–** विष्णुः तं गरुडं आह । किमिति । त्वं भुवि प्रजातिं उत्पत्तिं नोपैहि न प्राप्नुहि । अन्यथा भुव्युत्पत्तिं विना अत्र रामावतारे यथा ते यशः धर्मश्च स्यात् । कर्तव्यं करोतीति कर्तव्यकृत् । स्वहित कर्मकर्ता त्वं यथा स्याः भविष्यसि तथा तव सेवां आदास्य एव स्वीकरिष्ये ।।१३९।।

**गूढवाक्यार्थ–** प्रजातिं जननम् ।।१३९।।

**वरेण शर्वस्य हि रावणात्मजो यदा निबध्नाति कपीन् सलक्ष्मणान् ।**
**उरङ्गपाशेन तदा त्वमेव समेत्य सर्वानपि मोचयस्व ॥१४०॥**

**वेदाङ्गतीर्थीया–** का सेवेत्यत आह– **वरेणेत्यादिना** ॥१४०॥

**वादिराजीया–** गरुडस्य शिवसमानत्वेन शैववरोल्लङ्घने शक्तिरस्तीति भावेनोक्तम्– **वरेण हीति** ॥

**वरदराजीया–** तामेव सेवां दर्शयति– **वरेणेति** ॥ यदा रावणात्मजः इन्द्रजित् शर्वस्य रुद्रस्य वरेण लक्ष्मणेन सहितान् कपीन् उरङ्गपाशेन बध्नाति बध्नातीति यावत् । तदैव त्वं समेत्य प्राप्य सर्वान् कपीन् मोचयस्व ॥१४०॥

**जनार्दनीया–** सेवां विवृण्वन्नाहेत्याह– **वरेणेत्यदिना** ॥ उरङ्गपाशेन सर्पात्मकपाशेन । यदा निबध्नाति बध्नीयात् ॥१४०॥

**चट्टी–** तामेव सेवां दर्शयति– **वरेणेत्यदिना** ॥ यदा रावणात्मजः इन्द्रजित् शर्वस्य सलक्ष्मणान् कपीन् उरङ्गपाशेन नागपाशेन बध्नाति बध्नीयात् तदैव त्वं समेत्य प्राप्य सर्वानपि कपीन् मोचयस्व ॥

**अहं समर्थोऽपि [१]स लक्ष्मणश्च तथा हनूमान् न विमोचयामः ।**
**तव प्रियार्थं गरुडैष एव कृतस्तवाऽदेश इमं कुरुष्व ॥१४१॥**

**व्यासतीर्थीया–** युष्माकं समर्थत्वादीषन्मम विलम्बे यदि नागपाशबन्धो विमुच्येत तदा मम कर्तव्यमकृतं स्यादित्यत आह– **अहमिति** ॥१४१॥

**वेदाङ्गतीर्थीया–** समर्थोऽहमपि शस्त्र[मोचन] समर्थः । लक्ष्मणश्च तथा समर्थः सन् । हनूमानपि एते वयं न विमोचयामः । आदेश आज्ञा ॥१४१॥

**वादिराजीया–** अहं समर्थोऽपि स लक्ष्मणश्चेत्यत्र लक्ष्मणस्य नागाधिराजत्वत् वरदातृशर्वरूपत्वाच्च नागपाशविमोचने शक्तिरिति ज्ञेयम् ॥१४१॥

**वरदराजीया–** अहं मोचने समर्थश्च शक्त एव स लक्ष्मणश्च समर्थः 'सलक्ष्मणोऽहम्' इति वा । तथा हनूमानपि समर्थ एव । तथापि तव प्रियार्थं न विमोचयामः । हे गरुड तवैषः आदेश इमं कुरुष्व इति विष्णुराहेति पूर्वेणान्वयः ॥१४१॥

---

१. 'सलक्ष्मणोऽहं' इति वरदराजीयगूढकर्तृकयोः पाठान्तरम् । अस्मिन्पाठे 'समर्थोऽपि सलक्ष्मणोऽहं' इति श्लोकारम्भः स्यात् ॥

**जनार्दनीया–** पुरा रामावतारार्थं ब्रह्मादीनां प्रार्थनकाले । यदा सः विष्णुः अवताराय अवतारं कर्तुं, त्रिदशान् देवान् दिदेश आदिशत् । तदैव गरुत्मान् गरुडः ममापि सेवा भवता त्वया प्रयोज्या आज्ञापनीया । इति वृषाकपिं अभीष्टवर्षणात् वृतषड्गुणत्वाच्च वृषः, अकं दुःखं पेषयतीति अकपिः, वृषश्चासौ अकपिश्चेति विग्रहः । तं प्रत्यवदत् ।।१३८।।

**चट्टी–** गरुडागमनं वक्तुं तत्कारणतया इतिहासमाह– **पुरेति** ।। पुरा अवतारार्थं ब्रह्मादीनां प्रार्थनकाले यदा सः विष्णुः अवताराय भूमाववतर्तुं त्रिदशान् देवान्दिदेश आज्ञापितवान् । तदैव गरुत्मान् गरुडः ममापि सेवा भवता प्रयोज्या आज्ञापनीया इत्येवं वृषाकपिं अभीष्टवर्षणात् वृतषड्गुणत्वाच्च वृषः । अकं दुःखं पेषयतीति अकपिः । वृषश्चासौ अकपिश्चेति विग्रहः तं प्रत्यवदत् ।।१३८।।

**तमाह विष्णुर्न भुवि प्रजातिमुपैहि सेवां तव चान्यथाऽहम् ।**
**आदास्य एवात्र यथा यशः स्याद् धर्मश्च कर्तव्यकृदेव च स्याः ।।१३९।।**

**वेदाङ्गतीर्थीया–** अन्यथा भुव्यवतारं विनापि । अत्र भुवि । कर्तव्य एव [कर्तव्यकृदेव] स्व [स्वस्याः] मत्सेवा भवेदेव [मत्सेवाकृदेव] ।।१३९।।

**वादिराजीया–** ।। **सेवां तव चान्यथाऽहमादास्य एवेति** ।। येषां तथा तव च सेवामन्यथैवादास्य इति चैवशब्दयोः सम्बन्धः ।।१३९।।

**वरदराजीया–** विष्णुस्तमाह । किमिति । भुवि प्रजातिं जननं न उपेहि नाप्नुहि । अहं सेवां अन्यथा अन्येन प्रकारेण आदास्ये गृहिष्य एव । अत्र सेवाकरणे तव यशः कीर्तिः स्यात् । धर्मश्च यथा स्यात् कर्तव्यकृत् विहितानुष्ठिता च यथा स्याः भविष्यसि तथा आदास्येति सम्बन्धः ।।१३९।।

**जनार्दनीया–** विष्णुः तं गरुडमाह । किमिति ? त्वं भुवि प्रजातिं उत्पत्तिं नोपैहि न प्राप्नुहि । अन्यथा भुव्युत्पत्तिं विना अहं अत्र रामावतारे यथा ते यशः धर्मश्च स्यात् । कर्तव्यं करोतीति तथा । स्वविहितकर्मकर्ता च त्वं यथा स्याः भविष्यसि । तथा तव सेवां आदास्य एव स्वीकरिष्ये ।।१३९।।

**चट्टी–** विष्णुः तं गरुडं आह । किमिति । त्वं भुवि प्रजातिं उत्पत्तिं नोपैहि न प्राप्नुहि । अन्यथा भुव्युत्पत्तिं विना अत्र रामावतारे यथा ते यशः धर्मश्च स्यात् । कर्तव्यं करोतीति कर्तव्यकृत् । स्वहित कर्मकर्ता त्वं यथा स्याः भविष्यसि तथा तव सेवां आदास्य एव स्वीकरिष्ये ।।१३९।।

**गूढवाक्यार्थ–** प्रजातिं जननम् ।।१३९।।

**वरेण शर्वस्य हि रावणात्मजो यदा निबध्नाति कपीन् सलक्ष्मणान् ।**
**उरङ्गपाशेन तदा त्वमेव समेत्य सर्वानपि मोचयस्व ॥१४०॥**

**वेदाङ्गतीर्थीया–** का सेवेत्यत आह– **वरेणेत्यादिना** ॥१४०॥

**वादिराजीया–** गरुडस्य शिवसमानत्वेन शैववरोल्लङ्घने शक्तिरस्तीति भावेनोक्तम्– **वरेण हीति** ॥

**वरदराजीया–** तामेव सेवां दर्शयति– **वरेणेति** ॥ यदा रावणात्मजः इन्द्रजित् शर्वस्य रुद्रस्य वरेण लक्ष्मणेन सहितान् कपीन् उरङ्गपाशेन बध्नाति बध्नातीति यावत् । तदैव त्वं समेत्य प्राप्य सर्वान् कपीन् मोचयस्व ॥१४०॥

**जनार्दनीया–** सेवां विवृण्वन्नाहेत्याह– **वरेणेत्यदिना** ॥ उरङ्गपाशेन सर्पात्मकपाशेन । यदा निबध्नाति बध्नीयात् ॥१४०॥

**चट्टी–** तामेव सेवां दर्शयति– **वरेणेत्यदिना** ॥ यदा रावणात्मजः इन्द्रजित् शर्वस्य सलक्ष्मणान् कपीन् उरङ्गपाशेन नागपाशेन बध्नाति बध्नीयात् तदैव त्वं समेत्य प्राप्य सर्वानपि कपीन् मोचयस्व ॥

**अहं समर्थोऽपि [१]स लक्ष्मणश्च तथा हनूमान् न विमोचयामः ।**
**तव प्रियार्थं गरुडैष एव कृतस्तवाऽऽदेश इमं कुरुष्व ॥१४१॥**

**व्यासतीर्थीया–** युष्माकं समर्थत्वादीषन्मम विलम्वे यदि नागपाशवन्धो विमुच्येत तदा मम कर्तव्यमकृतं स्यादित्यत आह– **अहमिति** ॥१४१॥

**वेदाङ्गतीर्थीया–** समर्थोऽहमपि शस्त्र[मोचन] समर्थः । लक्ष्मणश्च तथा समर्थः सन् । हनूमानपि एते वयं न विमोचयामः । आदेश आज्ञा ॥१४१॥

**वादिराजीया–** अहं समर्थोऽपि स लक्ष्मणश्चेत्यत्र लक्ष्मणस्य नागाधिराजत्वत् वरदातृशर्वरूपत्वाच्च नागपाशविमोचने शक्तिरिति ज्ञेयम् ॥१४१॥

**वरदराजीया–** अहं मोचने समर्थश्च शक्त एव स लक्ष्मणश्च समर्थः 'सलक्ष्मणोऽहम्' इति वा । तथा हनूमानपि समर्थ एव । तथापि तव प्रियार्थं न विमोचयामः । हे गरुड तवैषः आदेश इमं कुरुष्व इति विष्णुराहेति पूर्वेणान्वयः ॥१४१॥

---

१. 'सलक्ष्मणोऽहं' इति वरदराजीयगूढकर्तृकयोः पाठान्तरम् । अस्मिन्पाठे 'समर्थोऽपि सलक्ष्मणोऽहं' इति श्लोकारम्भः स्यात् ॥

**जनार्दनीया–** तदा अहं समर्थः नागपाशान्मोचने शक्तः । सोऽपि नागपाशेन बद्धोऽपि लक्ष्मणश्च समर्थः । तथा हनुमान् समर्थः । हे गरुड समर्थोऽपि वयं त्रय इत्याध्यहारः । तव प्रियार्थं न विमोचयामः । एष एव अयमेव आदेशः आज्ञा तव कृतः आज्ञापितः । इमं आदेशं कुरुष्वेत्याहेति पूर्वेण सम्वन्धः ॥

**चट्टी–** तदा अहं समर्थः नागपाशान् मोचने शक्तः । सोऽपि नागपाशेन बद्धोऽपि लक्ष्मणश्च समर्थः । तथा हनुमानपि समर्थः । न विमोचयामः । एष एव अयमेव आदेशः आज्ञा तव कृतः आज्ञापितः । इमं आदेशं कुरुष्वेत्याहेति पूर्वेण अन्वयः ॥१४१॥

**भावचन्द्रिका–** शिववरस्य वन्धप्रयोजकस्य समे अधिके च अप्रयोजकत्वादाह– **अहमिति** ॥ तथाप्येते बद्धवत्स्थिताः । कपिवीरसङ्घानिति प्रागुक्त्वा पुनः सलक्ष्मणानित्याह । 'बद्धश्शक्रजितेत्यादि लीलैषा परमात्मनः' इति प्रागुक्तम् । रामानुसाराद्धनुमानपि । अत एव 'नरलोकविडम्बस्य' इत्याद्युक्तम् । इन्द्रजिति वरसद्भावमात्राभिप्रायेण एकवारोक्त्यैव तल्लाभे अत्र रुद्रवरस्य उत्तरत्र स्थानद्वये ब्रह्मशर्ववरोक्तेः प्रयोजनाभावात् 'वरेण शर्वस्य हि' इति वाक्यानुपपत्तिश्च ॥ **स चेति** ॥ स लक्ष्मणः । तदुक्तं सङ्ग्रहरामायणे– 'नामोचयन्नागबन्धात् राममारुतिलक्ष्मणाः । देवगुह्यमनुस्मृत्य समर्था अपि वानरान् ॥' इति [यु.का.१०–१३] ब्रह्मवरोल्लङ्घने लक्ष्मणस्य सामर्थ्याभावात् लक्ष्मण इत्युक्त्वा द्वयोरेव नेत्याह– **स्पृशन्ति** ॥१४१-१५४॥

**गूढवाक्यार्थ–** ॥ **अहं समर्थोऽपीति** ॥ अपि यद्यपि अहं मोचने समर्थः । सः लक्ष्मणश्च समर्थः । सलक्ष्मणोऽहं समर्थश्च समर्थो वेति वा । तथा हनूमान् तथापि तव प्रियार्थं न विमोचयामः ॥१४१॥

**तदेतदुक्तं हि पुराऽऽत्मना यत् ततो हि रामो न मुमोच कश्चन ।**
**न[1] लक्ष्मणो नैव च मारुतात्मजः स चैव जानाति हि देवगुह्यम् ॥१४२॥**

**व्यासतीर्थीया–** रामः सम्प्रधारितत्वात् न मुमोच । हनुमान् किमर्थं न मुमोचेत्यत आह– **स चेति** ॥ हव्यवहेतुत्वेति शेषः ॥१४२-१६१॥

**वेदाङ्गतीर्थीया–** सः लक्ष्मणः देवगुह्यं जानात्येव हि । हनूमांश्च ॥१४२-१४७ ॥

**वादिराजीया–** स चैव जानाति हि देवगुह्यमित्यत्र सः हनूमानेव देवगुह्यं जानाति । चशब्देन लक्ष्मणश्च जानाति । गरुडं प्रत्युपदेशसमये शयनीयतया सह स्थितत्वात् लक्ष्मणश्च जाानति । हनुमांस्तु आलोचने सर्वविषयकज्ञानवत्त्वात् स्वशक्त्यैव जानातीति भावः । अत एव स एवेत्यवधारणम् ॥

---

१. 'सलक्ष्मणः' इति जनार्दनीयताम्रपर्णीयचट्टीव्याख्यानेषु पाठः ।

**वरदराजीया–** पुरातने तद्वचनं आत्मना तेनोक्तं यस्मादतः कारणाद्रामो न कश्चन कमपि मुमोच । स लक्ष्मणोऽपि न मुमोच । स लक्ष्मणो मारुतात्मजश्च देवगुह्यं देवानां रहस्यं जानाति वेद हि ।।

**जनार्दनीया–** पुरा आत्मना स्वेनैव रामेण । तदेद्वाक्यं उक्तम् । यद् यस्मात् । तत् तस्मात् । रामः कश्चन कमपि न मुमोच । सलक्ष्मणः लक्ष्मणेन सह वर्तमानः मारुतात्मजः नैव च नैव मुमोच । पूर्वं पाशस्य कर्तृत्वविवक्षया विमोचयाम इत्युक्तमिदानीं तु अवधित्वविवक्षया मुमोचेत्युक्तं इति भावः । ननु गरुडं प्रति स्वोक्तत्वाद्रामो न मुमोचेत्युक्तं घटते । सलक्ष्मणः मारुतात्मजः किमर्थं न मुमोचेत्यत आह– **स एवेति** ।। लक्ष्मणेन सह वर्तमानो हनुमान् देवगुह्यं देवस्य हरेः गुह्यं गोप्याभिप्रायं जानात्येव । तस्मान्न मुमोचेति भावः ।।१४२।।

**ताम्रपर्णीया–** ।। **स चैव जानातीति** ।। सलक्ष्मणो हनुमांश्च । ननु लक्ष्मणस्यान्यमोचन-सामर्थ्येऽपि कथं स्वबन्धः इति चेत् अस्त्रसम्बन्धात् पूर्वं ब्रह्माद्यस्त्रेण तत्प्रतिघातेन अन्यमोचनसामर्थ्येऽपि राममनोनुसारेण देवकार्यदर्शनात् तदप्रतिघातेन तदनुसृत्य बद्धोऽभवत् इति विवक्षितत्वात् । पीडा तु नास्त्येव ।।१४२-१४७।।

**चट्टी–** पुरा आत्मना स्वेनैव श्रीरामेण तद्वाक्यं उक्तं यस्मात् तत् तस्मात् श्रीरामः कश्चन कमपि न मुमोच । सलक्ष्मणः लक्ष्मणेन सहितः मारुतात्मजः हनुमांश्च न मुमोच । किमर्थं न मुमोचेत्यत आह– **स चैवेति** ।। लक्ष्मणेन सह वर्तमानो हनुमान् देवगुह्यं देवस्य हरेर्गुह्यं गोप्याभिप्रायं जानात्येव तस्मान्न मुमोचेति भावः ।।१४२।।

**भारतश्री–** स चैव जानाति नान्यो वानरो जानातीत्यर्थः । लक्ष्मणस्य शेषावतारत्वात् उरङ्गबन्धनछेदनसामर्थ्यम् । रुद्रवरेपि लक्ष्मणे सङ्कर्षणस्य विद्यमानत्वात् रुद्रत्वे तस्य शेषात् किञ्चिन्न्यूनत्वाच्च उक्तं युक्तम् ।।१४२।।

**गूढवाक्यार्थ–** ।। **स चैव जानातीति** ।। सः लक्ष्मणः सः हनूमांश्च ।।१४२।।

**अथो निबद्ध्याऽशु हरीन् सलक्ष्मणान् जगाम रक्षः स्वपितुः सकाशम् ।**
**ननन्द चासौ पिशिताशनेश्वरः शशंश पुत्रं च कृतात्मकार्यम् ।।१४३।।**

**वादिराजीया–** रामाग्रे रावणाद्याः सर्वेऽपि क्लीबोपमा इति सूचनाय ग्रन्थकारः सर्वत्र तान् रक्षःपदेनैव निर्दिदेशेति ज्ञेयम् ।।१४३-१४५।।

**वरदराजीया–** अथानन्तरं रक्षः इन्द्रजित् सलक्ष्मणान् हरीन् आशु निबध्य पितुः रावणस्य सकाशं समीपं जगाम ययौ । असौ पिशिताशनेश्वरो रावणः ननन्द जहर्ष । कृतं आत्मकार्यं येनासौ तथा तं पुरा शशंस अस्तौत् ।।१४३।।

**जनार्दनीया–** प्रकृतमनुसरति– **अथो निबध्येति** ।। रक्षः इन्द्रजित् । पिशितं मांसं अशनं अन्नं येषां ते तथा, तेषां ईश्वरः । असौ रावणः ननन्द । कृतं आत्मकार्यं स्वप्रयोजनं येन तं पुत्रं शशंस ।।

**ताम्रपर्णीया–** ।। **अथो निबध्याशु हरीन् सलक्ष्मणानिति** ।। 'अहं समर्थोऽपि सलक्ष्मणश्च तथा हनूमान् न विमोचयामः' इत्यनेन न लक्ष्मणस्यास्य पीडेति मन्तव्यम् ।।१४३-१४७।।

**चट्टी–** अथ अनन्तरं रक्षः इन्द्रजित् सलक्ष्मणान् हरीन् कपीन् आशु निबध्य पितुः रावणस्य सकाशं समीपं जगाम । पिशितं मांसं अशनं अन्नं येषां तेषां ईश्वरः असौ रावणः ननन्द । कृतं आत्मकार्यं स्वप्रयोजनं येन स तथा तं पुत्रं इन्द्रजितं शशंस च ।।१४३।।

**गूढवाक्यार्थ–** ननु लक्ष्मणस्यान्यमोचनसामर्थ्ये 'निबध्याशु हरीन् सलक्ष्मणान्' इति कथं स्वबन्धोक्तिरितिचेत् अस्त्रसम्बन्धात् पूर्वं ब्रह्मास्त्रेण तत्प्रतिघातं कृत्वा अन्यमोचनकरणे सामर्थ्ये सत्यपि राममनोऽनुसारेण देवकार्यदर्शनात् । तदप्रतिघातेन तदनुधृत्य बद्धोऽभवदिति विवक्षितत्वात् । पीडा तु नास्त्येव । 'पुरास्त्रमेवानुसरन् सः लक्ष्मणः' इतिवक्ष्यमाणत्वात् ।।१४३।।

**स पक्षिराजोऽथ हरेर्निदेशं स्मरंस्त्वरावानिह चाऽजगाम ।**
**तत्पक्षवातस्पर्शेन केवलं विनष्ट एषां स उरङ्गबन्धः ।।१४४।।**

**मधुसूदनीया–** ।। **स पक्षिराज इति** ।। चशब्देन रामेण स्मृत इति सूचयति । तदुक्तम्– 'राघवस्य तदार्तस्य स्मरणाद्विनतासुतः । क्षीरोदस्योत्तरात्तीरादाजगाम त्वरान्वित ।।' इत्यादि रामायणे ।।

**वरदराजीया–** अथानन्तरं स पक्षिराजो गरुडो हरेर्निर्देशं आज्ञां स्मरन् त्वरावान् वेगवान् इह लङ्कामाजगाम आगतवान् । केवलं तस्य गरुडस्य पक्षवातस्पर्शेन एषां कपीनां स उरङ्गबन्धः सर्पबन्धो विनष्टोऽभूत् ।।१४४।।

**जनार्दनीया–** स पक्षिराजो गरुडः हरेर्निदेशं आज्ञां स्मरन्, त्वरावान् वेगवान् सन् । इह रणस्थानं प्रत्याजगाम । केवलं तस्य गरुडस्य पक्षयोः वातस्य वायोः । स्पर्शेन एषां कपीनां सः उरङ्गबन्धः नागपाशबन्धः विनष्टः ध्वस्तोऽभूदित्यर्थः ।।१४४।।

**चट्टी–** अथो अनन्तरं स पक्षिराजो गरुडः हरेर्निदेशं आज्ञां स्मरन् त्वरावान् वेगवान् सन् इह युद्धभूमिं प्रत्याजगाम । तस्य गरुडस्य पक्षयोः वातस्य वायोः स्पर्शेन केवलं स्पर्शेनैव एषां कपीनां सः उरङ्गबन्धः विनष्टः ध्वस्तोऽभूदित्यर्थः । तदुक्तम्– 'राघवस्य तदार्तस्य स्मरणाद्विनतासुतः । क्षीरोदस्योत्तरात्तीरादाजगाम त्वरान्वित ।।' इत्यादि रामायणे ।।१४४।।

**प्रमाणसंग्रह–** ।। **स पक्षिराज इति** ।। 'राघवस्य तदार्तस्य स्मरणाद्विनतासुतः । क्षीरोदस्योत्तरात्तीरात् आजगाम त्वरान्वितः ।।' इत्यादि ।।१४४।।

**स राममानम्य परात्मदैवतं ययौ सुमाल्याभरणानुलेपनः ।**
**कपिप्रवीराश्च तरूञ्छिलाश्च प्रगृह्य नेदुर्बलिनः प्रहृष्टाः ।।१४५।।**

**वरदराजीया–** स गरुडः परात्मदैवतं आत्मनः परदेवतां राममानम्य सुमाल्यानि पुष्पाणि आभरणानि अनुलेपनानि यस्य सः । अनेन गरुडस्य स्वरूपं वर्णितम् । कपिप्रवीराः तरून् वृक्षान् शिलाश्च प्रगृह्य बलिनः सन्तः प्रहृष्टाः नेदुः जगर्जुः ।।१४५।।

**जनार्दनीया–** शोभनानि माल्यानि पुष्पाणि, आभरणानि कुण्डलादिभूषणानि, अनुलेपनं चन्दनं यस्यासौ तथा । गरुडः आत्मनः दैवतं तथा परं च तदात्मदैवतं च स्वस्य परदैवतमित्यर्थः । रामं आनम्य ययौ । नेदुः वीरध्वनिं चक्रुः ।।१४५।।

**चट्टीं–** सः गरुडः परात्मदैवतं आत्मनः परदेवतां श्रीरामं प्रणम्य । सुमाल्याभरणानुलेपनः शोभनानि माल्यानि पुष्पाणि, आभरणानि कुण्डलादिभूषणानि, अनुलेपनं चन्दनं यस्य स तथाभूतः सन् गरुडः ययौ । कपिप्रवराश्च तरून् वृक्षान् शिलाश्च प्रगृह्य बलिनः प्रहृष्टाः सन्तः नेदुः वीरध्वनिं चक्रुः ।।१४५।।

**श्रुत्वा निनादं प्लवगेश्वराणां पुनः सपुत्रोऽत्रसदत्र रावणः ।**
**बन्धादमुष्मात् प्रतिनिस्सृतास्ते किमत्र कार्यं त्विति चिन्तयानः ।।१४६।।**

**वादिराजीया–** अत्रसदत्र रावण इत्यत्र अत्र बन्धमोचने सति अत्रसेदेवेति सम्बन्धः ।।

**वरदराजीया–** सपुत्रो रावणः प्लवगेश्वराणां कपीश्वराणां निनादं श्रुत्वा अत्र लङ्कायां अत्रसत् अबिभेत् । ते कपयोऽमुष्मात् नागबन्धात् विमुक्ता अतो इदानीं किं कार्यमिति चिन्तयानः चिन्तां कुर्वाणो अत्रसदिति सम्बन्धः ।।१४६।।

**जनार्दनीया–** निनादं वीरध्वनिम् । अत्र कपिजीवनेन अत्रसत् अबिभेत् । भयं प्रापेत्यर्थः । किंभूतः रावणः? ते वानराः अमुष्मात् बन्धात् नागपाशबन्धात् प्रविनिःसृताः मुक्ताः अत्र इदानीं किं कार्यम्? इति चिन्तयानः ।।१४६।।

**चट्टी–** सपुत्रः रावणः प्वलगेश्वराणां नादं निनादं वीरध्वनिं श्रुत्वा अत्र लङ्कायां पुनः अत्रसत् अबिभेत् भयं प्रापेत्यर्थः । कथंभूतः रावणः । ते वानराः अमुष्माद्बन्धात् नागपाशबन्धात् प्रविनिःसृताः प्रमुक्ताः । अत्र कपिविषये किं कार्यमिति चिन्तयानः चिन्तां कुर्वन् अत्रसदिति सम्बन्धः ।।१४६।।

**पुनश्च[1] हुत्वा स हुताशमेव रथं समारुह्य ययावदर्शनम् ।**
**ववर्ष चास्त्राणि महान्त्यजस्रं वरादुमेशस्य तथाऽब्जजस्य ।।१४७।।**

**वरदराजीया–** स इन्द्रजित् पुनश्च पुनरपि हुताशं वह्निं हुत्वा रथं समारुह्य अदर्शनं अप्रत्यक्षत्वं ययौ । वरात् उमेशस्य वरात् तथा अब्जजस्य ब्रह्मणो वरात् महति वीर्यवति अजस्रं सन्ततं ववर्ष ।।१४७।।

**जनार्दनीया–** स इन्द्रजित् हुताशं हुत्वा हुताशे होमं कृत्वा । महान्ति अगतसारत्वात् उत्तमानि । अजस्रं अवकाशरहितं यथास्यात्तथा ।।१४७।।

**चट्टी–** स इन्द्रजित् पुनश्च हुताशं वह्नौ हुत्वेव रथं समारुह्य अदर्शनं अप्रत्यक्षत्वं ययौ प्राप । उमेशस्य रुद्रस्य वरात् तथा अब्जजस्य ब्रह्मणः वरात् महान्ति अतिवीर्यवन्ति अस्त्राणि अजस्रं सन्ततं यथास्यात्तथा ववर्ष ।।१४७।।

**पुनश्च[2] तस्यास्त्रनिपीडितास्ते निपेतुरुर्व्यां कपयः सलक्ष्मणाः ।**
**स्पृशन्ति[3] नास्त्राणि दुरन्तशक्तिं तनुं समीरस्य हि कानिचित् क्वचित् ।।१४८।।**

---

१. पुनश्च इत्यत्र आत्मनो धनुरादिकमभिमन्त्र्य इति चशब्दार्थः । तथाहि आर्षे- 'हविस्तत् प्रतिजग्राह पावकः स्वयमुत्थितः । सोऽस्त्रमाहारयामास ब्राह्ममस्त्रविशारदः ।। धनुश्चात्मरथं चैव सर्वं तत्राभ्यमन्त्रयत् ।।' इत्यादि ।

२. अत्र सुग्रीवादिसर्वकपयः त्रिवारमपि बद्धाः । प्रथमास्त्रपातने तु राममारुतिलक्ष्मणाः न बद्धा अपि तु बद्धवत् दर्शयामासुः । 'बबन्ध नागपाशैश्च तावुभौ रामलक्ष्मणौ । वैनतेयः समागत्य तान्यस्त्राणि प्रमोचयत्।' इत्यादि वाल्मीकिरामायणपाद्मवचनानि तु 'असुरमोहनाय बद्धवत्स्थितं रामं मन्दजनाः बद्ध' इत्येव व्यजानन् । तादृशमन्दजनानां दर्शनभाषया प्रवृत्तानि तानि इत्यवधेयम् । द्वितीयास्त्रपातने तु राममारुती उभावेव न बद्धौ । लक्ष्मणस्तु बद्धः । 'ववर्ष चास्त्राणि महान्त्यजस्रं....तथाब्जजस्य' इति तथा 'निपेतुरुर्व्यां कपयः सलक्ष्मणाः' इति आचार्योक्तेः । द्वितीयास्त्रपातने ब्रह्मास्त्रस्यापि प्रयुक्तत्वात् तेन लक्ष्मणस्य बन्धः सम्भवति । तदेदाहुः पाद्मे' ...ब्रह्मास्त्रेणेन्द्रजित् क्रुद्धः पातयामास वानरान् । हनूमता समानीतो महौषधिमहीधरः ।।' इति ।...

**वेदाङ्गतीर्थीया–** सलक्ष्मणाः कपयो निपेतुरिति लक्ष्मणस्य पतनमत्रानुसरणमात्रम् । 'रामस्य मनोनुसारतः पुरास्त्रमेवानुसरन्'[१६२]इति वक्ष्यमाणत्वात् ।।१४८–१५७ ।।

**वरदराजीया–** स इन्द्रजित् पुनश्च पुनरपि । तस्य इन्द्रजितोऽस्त्रैः निपीडितास्ते सलक्ष्मणाः कपयः उर्व्यां निपेतुः । अत्र लक्ष्मणस्य पतनं नामास्त्रानुसरणमात्रं तथा च वक्ष्यत्याचार्यः । दुरन्तशक्तेः अमितशक्तेः समीरस्य वायोस्तनुं अवतारं हनूमन्तं कानिचिदस्त्राणि क्वचिद्देशे काले च न स्पृशन्ति हि ।।

**जनार्दनीया–** तस्येन्द्रजितः कानिचिदस्त्राणि समीरस्य वायोः तनुमवतारं हनुमन्तं क्वचिन्न स्पृशन्ति ।।

**ताम्रपर्णीया–** ।। **पुनश्च तस्यास्त्रनिपीडितास्त इति** ।। अस्त्रेण ब्रह्मास्त्रेण नागास्त्रेण च निपीडिता इत्यर्थः । 'ब्रह्मास्त्रेणेन्द्रजित्क्रुद्धः पातयामास वानरान् । हनूमता समानीतो महौषधमहीधरः ।।' इति [उत्तरखण्ड.२४२.३०३] पाद्मे । 'स शम्भुवरतो गर्वी पूर्ववत् सर्ववानरान् । नागपाशैर्धृढं बध्वा रावणं रावणिर्ययुः ।।' इति [यु.का.१०.२५] संग्रहरामायणे । तदुभयास्त्रसंग्रहाय अत्र सामान्येन अस्त्रशब्द-प्रयोगः । अत एव इदानीं लक्ष्मणस्यापि अस्त्रपीडोक्तिरुपपद्यते । अस्त्रस्य ब्रह्मास्त्रत्वात् । अत एव 'मरुत्सुतं त्वेकमनाकुलं च' इत्युक्तम् ।।१४८–१५४।।[1]

**चट्टी–** सलक्ष्मणाः कपयः पुनरपि तस्येन्द्रजितः अस्त्रैः निपीडिताः सन्तः उर्व्यां भूम्यां निपेतुः । अत्र लक्ष्मणस्य पतनं नाम अस्त्रानुसरणमेव । आचार्यैरग्रे वक्ष्यमाणत्वात् । दुरन्तशक्तेः अपरिमितशक्तेः समीरस्य वायोस्तनुमवतारं हनुमन्तं कानिचिदस्त्राणि क्वचिद् देशे काले न स्पृशन्ति ।।१४८।।

**भारतश्री–** दुरन्तशक्तिं रामम् ।।१४८।।

---

... अतः अत्र लक्ष्मणोपि ब्रह्मास्त्रमाननार्थं बद्धवत्प्रदर्शयामास इत्याद्यर्थप्रतिपादकानि 'तन्मानयन्तौ युधि राजपुत्रौ निपातितौ कोऽत्र विषादकालः' [६.७४.४] इत्यादिवाल्मीकिवचनानि अर्थान्तरे योज्यानि । तृतीयास्त्रापातने तु राममारुत्योः न बन्धनं नापि बद्धवत् प्रदर्शनम् । लक्ष्मणस्तु प्रथमास्त्रपातकाल इव बद्धवत् दर्शयामास । अत एव 'पुरास्त्रमेवानुसरन् स लक्ष्मणः' इत्याहुः ।

३. 'विभीषणो हनूमांश्च ददृशाते हतान् रणे । सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् ।।'७४.१२ रामायणे ।

१. अत्र केचिदाहुः । इदानीमपि हनूमतः लक्ष्मणस्य च नास्त्रपीडा । 'पुरास्त्रमेवानुसरन् स लक्ष्मण' इति वक्ष्यमाणत्वात् । 'अहं समर्थोऽपि सलक्ष्मणश्च' इत्युक्तत्वाच्च । अन्ये तु 'अस्त्येवेदानीमपि अस्त्रपीडा । अस्त्रशब्दस्य ब्रह्मास्त्रार्थकत्वात् । 'स्पृशन्ति नास्त्राणि दुरन्तशक्तिं मरुत्सुतं त्वेकमनाकुलञ्च' इत्युक्त्या तदवगमाच्च । अहं त्वमेवेत्यस्य च प्राथमिकबन्धविषयत्वात् । 'पुरास्त्रमेव' इत्यस्यास्त्रबाधात् पूर्वं नागास्त्रेण तदच्छेदेन तदनुसारेण राममनोनुसारतः । अस्त्रसम्बन्धे तु तत्पीडा [अ]वर्जनीयेत्यर्थलाभाच्च' इति मन्यन्ते ।। इति हो पुस्तके अधिकः पाठः ।

**गूढवाक्यार्थ–** ।। **पुनश्च तस्यास्त्रनिपीडिताश्च इति** ।। अस्त्रेण ब्रह्मास्त्रेण नागास्त्रेण च निपीडिता इत्यर्थः । 'ब्रह्मास्त्रेणेन्द्रजित्क्रुद्धः पातायामास वानरान् । हनूमता समानीतो महौषधमहीधरः ।।' इति पाद्मे । 'स शम्भुवरतो गर्वी पूर्ववत् सर्ववानरान् । नागपाशैर्धृढं बध्वा रावणं रावणिर्ययुः ।।' इति संग्रहे । उभयसंग्रहायात्र सामान्येन अस्त्रशब्दप्रयोगः । अ...व तदानीं लक्ष्मणस्यापि ईषदस्त्रपीडा अस्तीति ज्ञायते । अस्त्रस्य ब्रह्मास्त्रत्वात् । अत एव 'मरुत्सुतं त्वेकमनाकुलश्च' इत्युक्तम् ।।१४८।।

**विज्ञातुकामः पुरि सम्प्रवृत्तिं विभीषणः पूर्वगतस्तदाऽऽगात् ।**
**ददर्श सर्वान् पतितान् स वानरान् मरुत्सुतं[१] त्वेकमनाकुलं च ।।१४९।।**

**वरदराजीया–** विभीषणस्य का स्थितिरित्यत आह– **विज्ञातुकाम इति** ।। पुर्यां लङ्कायां राक्षसानां सम्प्रवृत्तिं व्यापारं विज्ञातुकामः पूर्वं गतः अस्त्रबन्धनात् पूर्वमेव गतस्तदा सर्वेषां मूर्च्छासमये आगात् । आगतः सः विभीषणः पतितान् सर्वान् वानरात् ददर्श । एकं मरुत्सुतं हनुमन्तं अनाकुलं अव्यग्रं च ददर्श ।।

**जनार्दनीया–** पुर्याः लङ्कायाः [पुरि लङ्कायां इति स्यात्] । प्रवृत्तिं पुरस्थानां प्रवर्तनमित्यर्थः । विज्ञातुकामः सन्, पूर्वं गतः अस्त्रबन्धनात् पूर्वं गतः विभीषणः । तदा कपीनां मूर्च्छाकाले आगात् । रणमण्डलं प्रतीति शेषः । सः विभीषणः अनाकुलं आकुलरहितं मोहरहितमिति यावत् । मरुत्सुतं एकम् । चशब्दोऽवधारणे । ददर्श ।।१४९।।

**चट्टी–** पूर्याः लङ्कायाः [पुरि लङ्कायां] सम्प्रवृत्तिं राक्षसानां व्यापारं विज्ञातुकामः सन् पूर्वं गतः अस्त्रबन्धनात् पूर्वं गतः विभीषणः । तदा कपीनां मूर्च्छासमये आगात् आगतः सः बिभीषणः पतितान् सर्वान् वानरान् ददर्श । एकं मरुत्सुतं हनुमन्तं अनाकुलं अव्याकुलं बुद्धिमोहरहितमिति यावत् । तथाविधं च ददर्श । चशब्दो अवधारणे ।।१४९।।

**स तं समादाय ययौ विधातृजं विमूर्च्छितं चोदकसेकतस्तम् ।**
**आश्वास्य किं जीवसि हीत्युवाच तथेति स प्राह च मन्दवाक्यः ।।१५०।।**

**वादिराजीया–** अस्त्रजवेदनया निमीलितचक्षुर्जाम्बवान् स्वरेण विभीषणमेव ज्ञातवान् । हनुमन्तं तु न पश्यति । तूष्णीमवस्थानात् स्वरेणापि न जानाति । अत एव जीवति किं हनूमानित्यादिप्रश्नः ।

---

१. 'ब्राह्ममस्त्रं ततो धीमान् मानयित्वा तु मारुतिः । विभीषणवचः श्रुत्वा हनूमानिदमब्रवीत् ।।'७४.५ । विभीषणवचः श्रुत्वा जाम्बवान् वाक्यमब्रवीत् । शृणु नैर्ऋतशार्दूल यस्मात् पृच्छामि मारुतिम् ।। अस्मिन् जीवति वीरे तु हतमप्यहतं बलम् । हनूमत्युज्झितप्राणे जीवन्तोऽपि मृता वयम् ।। इत्यादिवाक्यस्य अभिप्रायमाह– मरुत्सुतं त्वेकमनाकुलश्च ।।

अन्यथा हनूमद्विभीषणयोः सहैवागतत्वात् प्रश्नानुपपत्तिरिति ज्ञेयम् । आश्वास्य किं जीवसि हीत्यत्र हिशब्देन आकल्पं जीवेति रामवाक्यात्तव जीवनं प्रसिद्धमिति सूचयति ।।१५०–१५५।।

**वरदराजीया–** सः विभीषणः तं हनुमन्तं समादाय धातृजं जाम्बवन्तं उदकसेकतः शीतजलसेचनेन आश्वास्य उद्बोध्य जीवसि प्राणान् दधासि हि इत्यवोचत् अपृच्छत् विभीषण इत्यर्थः । मन्दं वाक्यं यस्य स जाम्बवान् तथेति जीवामीति प्राह ।।१५०।।

**जनार्दनीया–** सः विभीषणः । तं मरुत्सुतं समादाय, हस्तं संगृह्येत्यर्थः । विधातृजं जाम्बवन्तं प्रति ययौ । विमूर्च्छितं तं जाम्बवन्तं उदकसेकतः जलप्रोक्षणात् आश्वास्य, सञ्ज्ञां प्रापयित्वा, जीवसि किं ? सप्राणोऽसि किं ? इत्युवाच । विभीषण इति शेषः । मन्दं सूक्ष्मं स्खलत् वाक्यं यस्य सः तथा । सः जाम्बवान् तथेति जीवामीति प्राह ।।१५०।।

**चट्टी–** सः विभीषणः तं हनुमन्तं समादाय हस्तं गृहीत्वेत्यर्थः । विधातृजं ब्रह्मपुत्रं जाम्बवन्तं प्रति ययौ । विमूर्च्छितं जाम्बवन्तं उदकसेकतः जलप्रोक्षणात् आश्वास्य सञ्ज्ञां प्रापयित्वा जीवसि किं इत्युवाच । विभीषण इति शेषः । मन्दं सूक्ष्मं स्खलत् इत्यर्थः । वाक्यं यस्य सः तथा । जाम्बवान् तथेति जीवमीति प्राह च ।।१५०।।

**ऊचे[1] पुनर्जीवति किं हनूमान् जीवाम सर्वेऽपि हि जीवमाने ।**
**तस्मिन् हते निहताश्चैव सर्व इतीरितेऽस्मीत्यवदत् स मारुतिः ।।१५१।।**

**वरदराजीया–** पुनरूचे । किमिति । हनूमान् किं जीवति न वा आद्य आह । तस्मिन् जीवमाने जीवति सति वयं सर्वे जीवाम द्वितीय आह– **तस्मिन्निति** ।। हनूमति हते सति सर्वे वयं निहता एवेत्यर्थः इति जाम्बवता ईरिते सति स मारुतिर्हनूमान् अस्मि जीवामीत्यर्थः ।।१५१।।

**जनार्दनीया–** जाम्बवान् पुनः ऊचे किमिति । हनुमान् जीवति किम्? तस्मिन् हनूमति जीवमाने जीवति सति सर्वे वयमपि जीवामः । तस्मिन् हते सति सर्वे निहता एवेत्यूचे इति सम्बन्धः । सः मारुतिः जाम्बवता इति वाक्यत्रये ईरिते सति । अस्मि अहमस्मि इत्यवदत् ।।१५१।।

**चट्टी–** जाम्बुवान् पुनः ऊचे । किमिति । हनुमान् जीवति किं तस्मिन् हनूमति जीवमाने जीवति सति सर्वे वयमपि जीवामः । तस्मिन् हते सति सर्वे वयं हता एवेत्यूच इति सम्बन्धः । जाम्बवता इति ईरिते सति सः मारुतिः हनुमान् अस्मि जीवामीत्यवदत् ।।१५१।।

---

१. 'अस्मिन् जीवति वीरे तु हतमप्यहतं बलम् । हनूमत्युज्झितप्राणे जीवन्तोऽपि मृता वयम् ।।' इति । वा.रा.६.७४.२२

**इत्युक्तो जाम्बवानाह हनूमन्तमनन्तरम् ।**
**योऽसौ मेरोः समीपस्थो गन्धमादनसञ्ज्ञितः ।**
**गिरिस्तस्मात् समाहार्यं त्वयौषधिचतुष्टयम्[१] ।।१५२।।**

**वरदराजीया–** अथानन्तरं इत्युक्तो जाम्बवान् हनूमन्तमाह । किमिति । मेरोः पर्वतस्य समीपस्थो गन्धधमादनसञ्ज्ञितोऽसौ प्रसिद्धो गिरिः तस्माद्गिरेरौषधिचतुष्टयं त्वया समाहार्यं आहर्तव्यम् ।।१५२।।

**जनार्दनीया–** अनन्तरं हनुमद्वाक्यानन्तरं आह । किमिति? मेरोः पर्वतस्य समीपे तिष्ठतीति तथा । गन्धमादन इति सञ्ज्ञा सञ्जाता यस्य सः तथा । योऽसौ प्रसिद्धो गिरिः तिष्ठतीति शेषः । तस्माद्गिरेः सकाशात् त्वया औषधीनां चतुष्टयं समाहार्यं आनेतव्यम् ।।१५२।।

**चट्टी–** हनुमतेत्युक्तः जाम्बवान् अनन्तरं हनुमन्तं आह । किमिति । मेरोः समीपे तिष्ठतीति तथा । गन्धमादन इति सञ्ज्ञा यस्य सः तथा योऽसौ प्रसिद्धो गिरिः तिष्ठतीति शेषः । तस्माद्गिरेः सकाशात् त्वया औषधीनां चतुष्टयं समाहार्यम् ।।१५२।।

**मृतसञ्जीवनी मुख्या सन्धानकरणी परा ।**
**सवर्णकरणी चैव विशल्यकरणीति च ।।१५३।।**

**वरदराजीया–** किं तदौषधिचतुष्टयमित्यत आह– **मृतेति** ।। मृतसञ्जीविनी मृतान् प्राणिनः सञ्जीवयतीति तथा । अत एव तन्नामिका इतरापेक्षया मुख्या मुख्या च । अपरा अन्या सन्धानं छिन्नानामङ्गानां पूर्ववत्संधिं करोतीति तथा । तृतीया विशल्यकरणी सशल्यान् पुरुषान् विशल्यान् करोतीति तन्नामिका । सवर्णकरणीति चतुर्थी शस्त्रव्रणेन वैवर्णे सति सवर्णान् समानवर्णान् करोतीति तन्नामिकेत्यर्थः ।।१५३।।

**जनार्दनीया–** औषधीनां नामानि निरुक्तिपूर्वकमाहेत्याह– **मृतेति** ।। मृतान् सञ्जीवयति यतः अतो नामतः मृतसञ्जीविनी । मुख्या सर्वासां मध्ये मृतसञ्जीवनी श्रेष्ठा । अपरा द्वितीया सन्धानं छिन्नावयवानां सन्धिं करोतीति नामतः सन्धानकरणी । तृतीया सवर्णान् क्षतस्थानेषु विपरीतवर्णान् समानवर्णान् करोतीति नामतः सवर्णकरणी च । चतुर्थी विशल्यान् विनिस्सृतशल्यान् करोतीति नामतोऽपि विशल्यकरणी च । इत्यौषधिचतुष्टयं समाहार्यमिति पूर्वेणान्वयः ।।१५३।।

---

१. 'त्वयौषधचतुष्टयम्' इति पाठान्तरम्

**चट्टी–** औषधीनां नामानि निरुक्तिपूर्वकमाहेत्याह– **मृतसञ्जीवनीति** ।। मृतान् सञ्जीवयति यतः अतो नामतः मृतसञ्जीविनी मुख्या इतरापेक्षया श्रेष्ठा । परा द्वितीया सन्धानं छिन्नावयवानां सन्धिं करोति यतोऽतो नामतः सन्धानकरणी । तृतीया सवर्णान् क्षतस्थानेषु विपरीतवर्णान् समानवर्णान् करोतीति नामतः सवर्णकरणी च । चतुर्थी विशल्यान् विगतशरान् करोतीति नामतोऽपि विशल्यकरणी चेत्यौषधिचतुष्टयं समाहार्यमिति पूर्वेणान्वयः ।।१५३।।

**इत्युक्तः स क्षणेनैव प्रापतद् गन्धमानदम् ।**
**अवाप चाम्बरचरो राममुक्तः शरो यथा ।।१५४।।**

**वरदराजीया–** इत्युक्तः स हनूमान् क्षणेन क्षणमात्रेण गन्धमादनं प्रति प्रापतत् पुप्लुवे । अम्बरचरः सन् रामेण मुक्तः शरो यथा तथा क्षणेनावाप च ।।१५४।।

**जनार्दनीया–** इत्युक्तः सः हनूमान् । क्षणेनैव समाहार्यमिति वाक्यश्रवणमात्रादेव । तत् तस्माद्युद्धमण्डलात् । गन्धमादनं प्राप उत्पपातेत्यर्थः । प्रापतद् इत्येकमेव वा पदम् । अम्बरचरः खचरः आकाशमार्गेण गच्छन् हनुमान् रामेण मुक्तः शरः यथा निमेषमात्रेण गच्छति तथा अवाप गन्धमादनं प्राप । शरोऽप्यम्बरचरः ।।१५४।।

**अनन्तभट्टीया–** गन्धमादनं प्रतीति शेषः ।।१५४-१५५।।

**चट्टी–** इत्युक्तः सः हनूमान् क्षणेनैव क्षणमात्रेणैव समाहार्यमिति बुद्ध्या गन्धमादनं प्रति प्रापतत् पुप्लुवे । अम्बरचरः आकाशमार्गेण गच्छन् हनुमान् रामेण मुक्तः अम्बरचरः शरः यथा निमेषमात्रेण गच्छति तथा अवाप गन्धमादनं प्राप च ।।१५४।।

**अतिविशद–** इत्युक्तः स क्षणेनैव प्रापतद्गन्धमादनं इत्यत्र क्षणेन गन्धमादनपर्वतगमनं प्रतीयते । अत्र 'अन्तर्गताश्चौषधीश्च तदा विज्ञाय मारुतिः । उद्बबर्ह गिरिं क्रोधात्... ।।' इति हनूमतः अज्ञानश्च प्रतीयते । औषधीनामदर्शनादेव पर्वतोत्पाटनं कृतवानिति । अन्यथा तानेवानयेदिति पर्वतमत्र नानयेदिति आज्ञानसाधिका युक्तिः प्रतीयते । तथा 'अवाप चाक्ष्णोः स निमेषमात्रतो निपातिता यत्र कपिप्रवीरा' इति निमेषादागमनं प्रतीयते । तत्तु 'एकक्षणे त्वां हि लोकः' इत्यनेन विरुद्धम् । तत्र गमनागमन-नमस्कारादि एकक्षणे एव प्रतीयते यत अत इति चेत् न । वायुस्तुतेस्तस्य व्याख्यानरूपत्वात् । तथाहि 'अवाप चाक्ष्णोः स निमेषमात्रतो' इति भाष्यकारेणैव विरोधस्य परिहृतत्वात् । कथं केवलनिमेषः निमेषमात्रं तस्मान्निमेषमात्रत इति । तथाच एकस्य क्षणस्य 'निमेषस्त्रिलवो ज्ञेय आम्नातास्ते त्रयः क्षणा' इति भागवतवचनेनैव त्रिनिमेषरूपत्वात् । एकेन निमिषेण गमनम् , अन्येन पर्वतोत्पाटनं,

अपरेण आगमनरामनमस्कारादि यत्सूचितं तदेव स्पष्टं 'अद्राक्षीत्' इत्यनेन उक्तमिति न विरोधशङ्कावकाश इति । यदुक्तं हनूमतः अज्ञानं प्रतीयत इति तदपि औषधियुक्तपर्वतभागानयनेनैव परिहृतम् । अन्यथा तं भागं परित्यज्य अन्यभागमानयेत् यदा स एव भाग आनीतस्तदा न ममाज्ञानं किन्तु अन्येषामेवेति सूचयति । यश्च निमेषलक्षणक्षणादिविषये विरोधः सोऽपि भागवतविष्णुरहस्य-पुराणयोरपि भागवतस्य प्राधान्येन परिहरणीयः ।।१५४-१८३।।

**अन्तर्हिताश्चौषधीस्तु तदा विज्ञाय मारुतिः ।**
**उद्बबर्ह गिरिं क्रोधाच्छतयोजनमण्डलम् ।।१५५।।**

**मधुसूदनीया–** ।। **अन्तर्हिता इति** ।। तुशब्देन कोपे निमित्तान्तरं सूचयति । तदुक्तम्– 'कपे किमत्रौषधीभिर्निहतैर्दैवतैस्तव । मयापि यत्नतो रक्ष्याः सुरैराज्ञापिता यथा ।। को नो राम न जानेऽहं त्वां हि वानर बालिशम् । अपसर्प द्रुतं मत्तो मा त्वं प्राप्स्यसि वैशसम् ।। इति रामायणे ।। **शतयोजन-मुच्छ्रितमिति** ।। चतुरुत्तरत्रिंशत्सहस्रयोजनविस्तीर्णे योजनोच्छ्रिते च गन्धमादने एकदेशं शतयोजन-मुच्छ्रितं आनीतमिति न कश्चित् विरोध इति बोध्यम् ।।१५६।।

**वरदराजीया–** आत्मानं दृष्ट्वा अन्तर्हिताः लीनाः औषधीः विज्ञाय मारुतिर्हनूमान् क्रोधाच्छत-योजनमण्डलं शतयोजनपरिमितमण्डलं औषधिप्रदेशं गन्धमादनैकदेशं उद्बबर्ह उत्पाटितवान् ।।१५४।।

**जनार्दनीया–** मारुतिः तदा प्राप्तिकाले अन्तर्हिताः तिरोधनं प्राप्ताः औषधीर्विज्ञाय, मारुतिः इतोऽस्मान्नेष्यतीति भयेनान्तर्हिता इति भावः । तदा क्रोधाच्छतयोजनमण्डलं द्विसहस्रयोजनमण्डल-परिमाणपर्वतस्य एकभागस्थं शतयोजनपरिमाणौषधिप्रदेशकं गिरिं गन्धमादनैकभागं उद्बबर्ह उत्पाटयामास । तथा चोक्तं पञ्चमस्कन्धे [भा.५.१६.१०] । 'माल्यवद्गन्धमादनौ आनीलनिषधायतौ द्विसहस्रवृद्धौ' इति ।।१५५।।

**ताम्रपर्णीया–** ।। **शतयोजनमण्डलं इति** ।। यद्यपि भागवते गन्धमादनस्य बहुसहस्रयोजनत्वं उक्तम् । तथापि अयं तदेकदेश इत्यदोषः । उक्तं च सङ्ग्रहरामायणे– 'आपपात गृहीत्वा तु हनूमान् शिखरं गिरेः । तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ।।' इत्यादि ।।१५५।।

**चट्टी–** आत्मानं दृष्ट्वा अन्तर्हिताः विलीनाः ओषधीः विज्ञाय तदा मारुतिः हनुमान् क्रोधात् । तुशब्देन कोपे निमित्तान्तरं सूचयति । तदुक्तम्– 'कपे किमत्रौषधीभिर्निहतैर्दैवतैस्तव । मयापि यत्नतो रक्ष्याः सुरैराज्ञापिता यथा ।। को नो राम न जानेऽहं त्वां हि वानर बालिशम् । अपसर्प द्रुतं मत्तो मा त्वं प्राप्स्यसि वैशसम् ।। इति रामायणे । चतुरुत्तरत्रिंशत्सहस्रयोजनविस्तीर्णे गन्धमादने शतयोजनमुच्छ्रितं ओषधिप्रदेशं गिरिं पर्वतैकदेशं उद्बबर्ह उत्पाटयामास ।।१५५।।

**भारतश्री–** हनूमतः बलकीर्तिप्रकटनाय देवैरन्तर्हिता इति ज्ञेयम् ।।१५५-१६८।।

**भावचन्द्रिका–** ।। **गिरिमिति** ।। नायं मेरुगिरिः । तस्य गन्धमादनस्य चतुस्त्रिंशत्सहस्रायामस्य सहस्रद्वितयोच्छ्रायविस्तारस्य अनानीतत्वात् । किन्तु मेरुसमीपे इलावृतस्थो गन्धेनैव मादयतीति हर्षयतीति गन्धमादनसञ्ज्ञो गिरिः शतयोजन आनीत इति ।।१५५-१५८।।

**भावविवृति–** अन्तर्हिताश्चौषधीस्तु तदा विज्ञाय मारुतिः इत्यत्र मारुतिस्तदानीमोषधीः लोकदृष्ट्या अन्तर्हिता एव लीनास्तिष्ठन्तीति विज्ञाय क्रोधात् कालविलम्बो भवेदिति कोपात् ओषध्यधिष्ठानभूतं गिरिशृङ्गं उद्ववर्ह इत्यर्थः ।।१५५-२२४।।

**प्रमाणसंग्रह–** ।। **अन्तर्हिता इत्यादि** ।। 'कपे किमत्रौषधीभिर्निहतैर्दैवतैस्तव । मयापि यत्नतो रक्ष्याः सुरैराज्ञापिता यथा ।।' इत्यादि रामायणे ।।१५५।।

**गूढवाक्यार्थ–** ।। **शतयोजनमण्डलमिति** ।। यद्यपि भागवते गन्धमादनपर्वतस्य बहुसाहस्रयोजनमुक्तम् । तथाप्ययं तदेकदेश इत्यविरोधः । तदुक्तं रामायणे– 'आपपात गृहीत्वा तु हनूमान् शिखरं गिरेः । तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ।।' इत्यादि ।।१५५।।

**स तं समुत्पाट्य गिरिं करेण प्रतोलयित्वा बलदेवसूनुः ।**
**समुत्पपाताम्बरमुग्रवेगो यथा हरिश्चक्रधरः त्रिविक्रमे ।।१५६।।**

**वादिराजीया–** प्रतोलयित्वेत्यत्र प्रकर्षेण तुलनां कृत्वा हस्तगतवरहमिव पुनः पुनः चालयित्वेति यावत् । 'यथा हरिश्चक्रधरस्त्रिविक्रमे' इत्यत्र त्रयो विक्रमाः पादविक्षेपाः यस्मिन्नवतार इति व्युत्पत्त्या त्रिविक्रमसम्बन्ध्यवातर एव त्रिविक्रमपदेनोच्यते । त्रैविक्रमावतारपर्यन्तधावनं यथा त्रिविक्रमः त्रिभिः विक्रमैर्लोकत्रयं क्षणेन विचक्रमे तथा हनूमानपि मेरुलङ्कयोरन्तरे पञ्चाशत्सहस्रयोजनानि लीलयाऽत्यक्रमदिति सूचनायेति ज्ञेयम् ।।१५६–१६१।।

**सत्याभिनवीया–** तत्रैव समुत्पपाताम्वरमुग्रवेगो... इत्यस्ति । तस्यार्थः । उग्रवेगः चक्रधरः हरिः वामनरूपो हरिः त्रिविक्रमे त्रिविक्रमरूपाभिव्यक्त्यर्थं यथा अम्बरं आकाशं समुत्पपात अभिव्याप तथा हनुमान् अम्बरं समुत्पपातेति । एतेन त्रिविक्रम इत्येतत् व्यर्थमिति दूषणं परास्तम् । त्रिविक्रमशब्देन त्रिविक्रमरूपाभिव्यक्तिं गृहीत्वा त्रिविक्रमे इति सप्तमी तादर्थ्ये इत्यङ्गीकृत्य त्रिविक्रमरूपोऽभिव्यक्त्यर्थ-मित्यर्थस्यो बलत्वात् । एतेनैव हनूमत एव आकाशं प्रत्युत्पतनं न तु वामनस्य । अतः वामनो यथा अम्बरमुत्पपात तथा हनुमान् अम्बरमुत्पपातेति कथनमनुपपन्नमिति दूषणं निरस्तम् । वामनस्य यथा आकाशाभिव्याप्तिः तथा हनूमतः उत्पतनेन आकाशाभिव्याप्तिः जातेत्युच्यत इत्यभ्युपगमात् ।।१५६।।

**वरदराजीया–** सः हनूमान् तं पर्वतैकदेशमुद्धृत्य करेण एकेन करेण प्रतोलयित्वा किं गुरुत्वं किमिति परीक्षापूर्वकं धृत्वा । यतो बलदेवस्य वायोः सूनुः तस्मादुग्रवेगो अम्बरं उत्पपात । तद्यथा चक्रधरः हरिः त्रिभिः पदैः विक्रमणे सति यथा उत्पपात तथेत्यर्थः ।।१५६।।

**जनार्दनीया–** बलदेवस्य बलाभिमन्यमानदेवतायाः वायोः सूनुः स हनुमान् तं गिरिं समुत्पाट्य, करेण प्रतोलयित्वा, अयं पर्वतः कियान् भारोऽस्ति ? इति करे संस्थाप्य प्रचाल्येति भावः । अम्बरं प्रति समुत्पपात । अत एव उग्रवेगः । तत्र दृष्टान्तमाह– **यथेति** ।। त्रिविक्रमे त्रिविक्रमावतारे ।।१५६।।

**अनन्तभट्टीया–** प्रतोलयित्वा चालयित्वा इत्यर्थः । त्रिविक्रमत्व इत्यर्थः ।।१५६।।

**ताम्रपर्णीया–** प्रतोलयित्वा कन्दुकवत्पुनः पुनरम्बरे प्रक्षिप्य गृहीत्वा ।।१५६।।

**चट्टी–** बलदेवस्य वायोः सूनुः हनुमान् तं गिरिं समुत्पाट्य एकेन करेण प्रतोलयित्वा । अयं पर्वतः कियान् भारोऽस्तीति करे संस्थाप्य प्रचाल्येति भावः । उग्रवेगः सन् अम्बरं प्रति समुत्पपात । तत्र दृष्टान्तमाह– **यथेति** ।। चक्रधरो हरिः त्रिविक्रमे त्रिविक्रमावतारे यथा उत्पपात तथेत्यर्थः ।।१५६।।

**गूढवाक्यार्थ–** प्रतोलयित्वा हस्तगतं पर्वतं कन्दुकवदम्बरे प्रक्षिप्य गृहीत्वा । यद्वा हस्तगतं पर्वतं प्रकर्षेण तोलयित्वा... पनिधृत्येत्यर्थः ।।१५६।।

**अवाप चाक्ष्णोः स निमेषमात्रतो निपातिता यत्र कपिप्रवीराः ।**
**तच्छैलवातस्पर्शात्[१] समुत्थिताः [२]समस्तशो वानरयूथपाः क्षणात् ।।१५७।।**

**वरदराजीया–** स हनूमान् अक्ष्णोः निमेषमात्रतः निमेषाद्यवच्छेदकालमात्रेण यत्र कपिप्रवीरा निपातिताः तत्रैव अवाप । समस्तशः सर्वे वानरयूथपाः कपिप्रवीराः तस्य शैलस्य पर्वतस्य वातस्पर्शात् वायुस्पर्शात् क्षणमात्रेणोत्थिताः ।।१५७।।

**जनार्दनीया–** स हनुमान् अक्ष्णोः नेत्रयोः निमेषमात्रतः निमेषावच्छिन्नकालमात्रतः यत्र कपिप्रवीराः निपातिताः तत्र तं देशं अवाप । वानराणां यूथं समूहं पान्तीति ते तथा कपिश्रेष्ठाः । स

१. 'तस्यानीतस्य च स्पर्शात् सर्व एव समुत्थिताः' इति पाद्मे । [२४२.३०४]

२. सत्यधर्मतीर्थश्रीचरणास्तु श्रीरामायणव्याख्याने– 'सागरोपरि गिरिशिखरं परिगृह्योत्प्लवने तदन्तस्थानां रक्षसामनुज्जीवनञ्च न गन्धस्यान्तःप्रवेशासामर्थ्यात् । किं नाम यादोभी रक्षसां भक्षितत्वात्, निलयनमात्रेण हनुमत्कृतपर्वतोत्पाटनतः एतदनिष्टकार्यसाधने अयमुत्तरत्र किं कुर्यादिति भीतेर्वा, 'भीषास्माद्वातः पवते' इत्यादेः रामविरुद्धकार्यकरणभीतेरिव आत्मजप्रीतेर्वा वायुर्न निनाय नीरनायकमध्ये गन्धमिति वेति ज्ञेयम् । ओषधीनां 'अर्थिनं ज्ञात्वाऽदर्शनं गता' इत्यनेन ज्ञानित्वोक्तेरनुसन्धानादिकं सम्भवतीति सुघटोऽयमर्थः' इत्याहुः ।

चासौ शैलश्च ओषध्युपेतः पर्वतः, तस्य वातस्पर्शो यस्मिन् क्षणे स तथा तस्मात् क्षणात् क्षणमात्रादेव समुत्थिताः ।।१५७।।

**अनन्तभट्टीया–** निमेषमात्रत निमेषावच्छिन्नकालमात्रतः ।।१५७–१६१।।

**ताम्रपर्णीया–** ।। **निमेषमात्रत इति** ।। क्षणस्य त्रिनिमिषात्मकत्वात् एकस्मिन्निमिषे गमनं द्वितीये उत्पाटनं तृतीये पुनरागमनमिति भावः । तदुक्तम्– 'निमेषस्त्रिलवो ज्ञेय आम्नातास्ते त्रयः क्षणा' इति भागवते [३.१२.७] अत एव 'इत्युक्तस्तत्क्षणेनैव प्रापतद्गन्धमादनम् । अवाप चाम्बरचरः' इति पूर्वश्लोकस्य क्षणेनैव गन्धमादनं प्राप । पुनश्च रामनिकटं अवाप चेत्यर्थः । उक्तं च स्पष्टम्– 'अद्राक्षीदुत्पतन्तं तत उत गिरिमुत्पाटयन्तं गृहीत्वा यान्तं खे राघवांघ्रौ प्रणतमपि तदैकक्षणे त्वां हि लोकः' इति ।।१५६–१६१।।

**चट्टी–** स हनुमान् निमेषमात्रतः निमेषावच्छिन्नकालमात्रतः यत्र कपिप्रवीराः निपातिताः तत्र तं देशं अवाप । समस्तशः सर्वेषां वानराणां यूथं समूहं पान्तीति वानरयूथपाः कपिश्रेष्ठाः स चासौ शैलश्च ओषध्युपेतः पर्वतः तस्य वातस्पर्शो वायुस्पर्शात् क्षणात् क्षणमात्रतः समुत्थिताः ।।१५७।।

**गूढवाक्यार्थ–** ।। **निमेषमात्रत इति** ।। क्षणस्य तृतीयांशेनेत्यर्थः । तथा च एकस्मिन्निमेषे गमनं द्वितीये पर्वतोत्पाटनं तृतीये पुनरागमनमिति ज्ञेयम् । अत एव 'इत्युक्तस्तत्क्षणेनैव प्राप तद्गन्धमादनम् । अवाप चाम्बरचरो' इति पूर्वश्र्लोकस्य क्षणेनैव गन्धमादनं प्राप तत् पुनश्च रामसमीपमापेत्यर्थः । उक्तश्च वायुस्तुतौ 'अद्राक्षीदुत्पतन्तं तत उत गिरिमुत्पाटयन्तं गृहीत्वा यान्तं खे राघवाङ्घ्रौ प्रणतमपि तदैकक्षणे त्वां हि लोकः' इति ।।१५७।।

**अपूजयन् मारुतिमुग्रपौरुषं रघूत्तमोऽस्यानुजनिस्तथाऽपरे ।**
**पपात मूर्ध्न्यस्य च पुष्पसन्ततिः प्रमोदितैर्देववरैर्विसर्जिता ।।१५८।।**

**वेदाङ्गतीर्थीया–** रघूत्तमः अपूजयदित्यमानयदित्यर्थः ।।१५८–१६१।।

**वरदराजीया–** रघूत्तमस्य श्रीरामस्यानुजनिरनुलक्ष्मणः तथा अपरे सुग्रीवाद्याः उग्रं पौरुषं पराक्रमो यस्य तं मारुतिं हनूमन्तं अपूजयन् पूजयामास । अस्य हनूमतो मूर्ध्नि प्रमोदितैः प्रहृष्टैः देववरैः देवश्रेष्ठैः विसर्जिता पुष्पसन्ततिः पुष्पवृष्टिः पपात ।।१५८।।

**जनार्दनीया–** अनुजनिः अनुजो लक्ष्मणः । तथा अपरे कपयश्चास्य हनुमतः । प्रमोदितैः हर्षितैः । विसर्जिता विसृष्टा । पुष्पाणां सन्ततिः समूहः ।।१५८।।

**चट्टी–** रघूत्तमस्य श्रीरामस्यानुजनिः अनुजो लक्ष्मणः तथा अपरे सुग्रीवाद्याः उग्रं पौरुषं पराक्रमो यस्य तं मारुतिं हनुमन्तं अपूजयन् पूजयामासुः । अस्य हनुमतः मूर्ध्नि प्रमोदितैः प्रहृष्टैः देववर्यैः देवश्रेष्ठैः विसर्जिता विसृष्टा पुष्पाणां सन्ततिः समूहः पपात ।।१५८।।

**स[१] देवगन्धर्वमहर्षिसत्तमैरभिष्टुतो रामकरेण गूहितः ।**
**पुनर्गिरिं तं शतयोजनोच्छ्रितं न्यपातयत्[२] संस्थित एव तत्र च ।।१५९।।**

**वरदराजीया–** स हनूमान् देवर्षिसत्तमैश्चाभिष्टुतः स्तुतोऽभूत् । रामकरेणोपगूहितो लालितोऽभूत् । पुनश्च शतयोजनोन्नाहं गिरिं तत्रैव लङ्कायामेव संस्थितो न्यपातयत् स्वस्थाने पातयामास ।।१५९।।

**जनार्दनीया–** स हनुमान् । देवादिभिः अभिष्टुतः संस्तुतोऽभूत् । रामकराभ्यां उपगूहितः आच्छादितः आलिङ्गित इत्यर्थः । हनुमान् तत्रैव लङ्कायामेव संस्थितः सन् । पुनः तं गिरिं न्यपातयत् पातयामास ।।

**चट्टी–** स हनुमान् देवगन्धर्वमहर्षिसत्तमैः देवाश्च गन्धर्वाश्च महर्षिश्रेष्ठाश्च तैरभिष्टुतः संस्तुतः अभूत् । श्रीरामस्य कराभ्यां उपगूहितः आच्छादितः आलिङ्गित इत्यर्थः । सः हनुमान् तत्र लङ्कायामेव संस्थितः सन् शतयोजनोच्छ्रितं शतयोजनोन्नतं गिरिं न्यपातयत् स्थाने स्थापयामास ।।१५९।।

**भावचन्द्रिका–** ।। ...*पुनरिति ।। 'शतयोजनमण्डलं' इत्युक्त्वा 'शतयोजनोच्छ्रितं' इत्युक्त्या तावद्विस्तारोच्छ्रय इत्यर्थः ।।१५९–१६१।।

**स पूर्ववन्मारुतिवेगचोदितो निरन्तरं श्लिष्टतरोऽत्र चाभवत् ।**
**पुनश्च सर्वे तरुशैलहस्ता रणाय चोत्तस्थुरलं नदन्तः ।।१६०।।**

**वरदराजीया–** स पर्वतो वेगेन प्रेरितो अत्र स्वस्थाने निरन्तरं नष्टच्छेदं यथा भवति तथा पूर्ववदेव श्लिष्टतरो अतिसम्बद्धो अभवत् । पुनश्च पुनरपि तरवः शैलाश्च हस्तेषु येषां ते तथा सर्वकपयो अलं उच्चैर्नदन्तो गर्जन्तो रणाय युद्धार्थं उत्तस्थुः उदतिष्ठन् ।।१६०।।

---

१. '...लक्ष्मणं नीरुजं क्षणात् । चकार देवदेवेशैः पश्यतां राघवस्य च' इति नृसिंहपुराणे । ५२.९२

२. 'हनूमान् धारयामास तत्रागं यत्र संस्थितः' इत्याग्नेये१०.२०। यत्र यस्मिन् लङ्कायां रामसमीपे संस्थित एव तत्र मेरुपर्वतसमीपस्थे गन्धमादने तं पर्वतैकदेशं धारयामास गन्धमादनः स्वावयवं यथा धारणं कुर्यात् तथा कृतवानित्यर्थः । 'ततो हरिर्गन्धवहात्मजस्तु तमोषधीशैलमुदग्रवीर्यः । निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ।।' इति [७५.७७] 'ओषधिशैलः तद्वत्पर्वतः,तं तत्रत्य एव वेगात् हिमवन्तं स्वस्थानं तं उत्कृत्तशैलभाग निनाय प्रापयामास । ''संस्थित एव तत्र'' इत्यन्यत्रोक्तेः । इति रामायणव्याख्याने श्री सत्यधर्मतीर्थश्रीपादाः ।

**जनार्दनीया–** मारुतेः उग्रवेगेन तीव्रवेगेन । चोदितः प्रेरितः । स गन्धमादनैकभागः । अत्र स्वपूर्वावस्थाने पूर्ववत् निरन्तरं नष्टच्छेदाङ्को यथा न भवति तथा श्लिष्टतरः अत्यन्तं संश्लेषवान् अभवत् । सर्वे कपयः ।।१६०।।

**चट्टी–** सः पर्वतः मारुतेः हनुमतः वेगेन प्रचोदितः प्रेरितः सन्नत्र स्वपूर्वस्थाने पूर्ववन्निरन्तरं नष्टच्छेदाङ्को यथा न भवति तथा श्लिष्टतरः अत्यन्तं संश्लेषणवान् अभवत् । पुनश्च सर्वे कपयः तरुशैलहस्ताः सन्तः अलं नदन्तः सिंहनादं कुर्वन्तः रणायोत्तस्थुश्च ।।१६०।।

**पुनश्च तान् प्रेक्ष्य समुत्थितान् कपीन् भयं महच्छक्रजितं विवेश ।**
**स पूर्ववद्धव्यवहे समर्च्य शिवं तथाऽदर्शनमेव जग्मिवान् ।।१६१।।**

**वरदराजीया–** पुनश्च पुनरपि समुत्थितान् कपीन् प्रेक्ष्य स्थितं शक्रजितं महद्भयं विवेश । स इन्द्रजित् पूर्ववद्धव्यवहे अग्नौ शिवं समभ्यर्च्य अदर्शनमेवाप्रत्यक्षत्वमेव जग्मिवान् ।।१६१।।

**जनार्दनीया–** पुनश्च पुनरपि तान् कपीन् प्रेक्ष्य दृष्ट्वा, स्थितं शक्रजितं महद्भयं विवेश । स इन्द्रजित् हव्यवहे अग्नौ हुत्वेति शेषः ।।१६१।।

**चट्टी–** पुनश्च समुत्थितान् तान् कपीन् प्रेक्ष्य स्थितं शक्रजितं महद्भयं विवेश । स इन्द्रजित् पूर्ववत् हव्यवहे अग्नौ शिवं समभ्यर्च्य तथैव अदर्शनं अप्रत्यक्षत्वं जग्मिवान् ।।१६१।।

**वराश्रयेणाजगिरीशयोस्तथा पुनर्महास्त्रैः स बबन्ध तान् कपीन् ।**
**अथाऽह रामस्य मनोऽनुसारतः पुराऽस्त्रमेवानुसरन् स लक्ष्मणः ।।१६२।।**

**व्यासतीर्थीया–** रामस्य मनोनुसारत एव पुरास्त्रमनुसरन् लक्ष्मणः ।।१६२।।

**वेदाङ्गतीर्थीया–** रामस्य मनोनुसारतः एवमस्त्रमनुसरेल्लक्ष्मण इति । अनुसरन् बद्धवत् वर्तमानः ।।

**वादिराजीया–** स बबन्ध तान् कपीनिति वदता लक्ष्मणे बन्धो नास्तीति सूचितम् । अत एव 'अथाह रामस्य मनोनुसारत' इति लक्ष्मणवचनं नायुक्तम् । अतिकाये पुरा प्रयुक्तमस्त्रं पुरास्त्रम् । मध्यमपदलोपी समासः । ब्रह्मास्त्रमिति यावत् ।।१६२-१६३।।

**वरदराजीया–** स इन्द्रजित् अजगिरीशयोः ब्रह्मशिवयोर्वररूपेणाश्रयेण पुनस्तथा पूर्ववत् तान् कपीन् बबन्ध । अथ स लक्ष्मणः आहेति सम्बन्धः । ननु पूर्वं सलक्ष्मणान् बबन्धेत्युक्तविरोधात् कथं लक्ष्मण आहेत्युक्तमित्यत आह– **रामस्येति** ।। रामस्याभिप्रायं अनुसृत्य पुरास्त्रमनुसरन्नेव बद्धवदासीत् । न तु इतरकपिवत् बद्ध इत्यर्थः । तदपेक्षया 'सलक्ष्मणम्' इति प्रागुक्तमिति भावः ।।१६२।।

**जनार्दनीया–** अजो ब्रह्मा । अथ कपिबन्धनानन्तरम् । पुरा एतद्युद्धापेक्षया पूर्वं रामस्य मनसः अनुसारतः एव अनुसरणेनैव । अस्त्रं अनुसरन् अस्त्रेण बद्धवत् स्थित इत्यर्थः । तस्माल्लक्ष्मणस्य नागपाशबन्धजन्यदुःखं अस्त्रबन्धजन्यदुःखं न मन्तव्यम् । स बद्धवत् स्थित इति प्रसिद्धो लक्ष्मणः रामं प्रत्याह ।।१६२।।

**अनन्तभट्टीया–** रामस्य मनोऽनुसारतः पुरा अस्त्रमनुसरन् इत्यन्वयः । निहन्मीति शेषः । आहेति सम्बन्धः ।।१६२-१६४।।

**ताम्रपर्णीया–** ।। **अथाहेति** ।। ननु तर्हि किमिति लक्ष्मणः प्रागपि ब्रह्मास्त्रादिना तदस्त्रं न प्रतिषेधितवान् इत्यत उक्तम्– **पुरेति** ।। पुरा गरुडेनागन्तव्यमिति रामस्य मनोनुसारत अस्त्रं नागास्त्रमनुसरन् तदिच्छुत्वात् तेन बद्धप्रायः सन् तथा पुरा द्वितीयवारं हनुमद्बलं प्रकाशं कुर्वतो रामस्य मनोनुसारत अस्त्रं नागास्त्रं चानुसरन् प्रत्यस्त्रप्रयोगेन तत्प्रतिघातमकृत्वा तेन बद्धः पीडितश्च सन् आहेत्यर्थः । केचित्तु 'अतिकाये पुरा स्वेन प्रयुक्तमस्त्रं पुरास्त्रं ब्रह्मास्त्रमिति यावत् । तदनुसरन् तदभ्यसन् लक्ष्मणः पितामहास्त्रेण निहन्मीत्याह इत्यर्थ' आहुः ।।१६२-१६३।।

**चट्टी–** सः इन्द्रजित् अजगिरीशयोः वररूपेणाश्रयणेन सम्मोहनास्त्रेण तान् कपीन् पुनः बबन्ध । अथ अनन्तरं पुरा पूर्वं नागपाशैः कपिबन्धनसमये श्रीरामस्य मनोनुसारतः गरुडेनागत्य कपीनां नागपाशबन्धमोक्षः कर्तव्य इति श्रीरामस्य मनसि वर्तते तन्मनोनुसारेणैव अस्त्रं अनुसरन् बद्धवत् स्थित इत्यर्थः ।।१६२।।

**भावचन्द्रिका–** पुरा आदौ । रुद्रस्य समत्वात् अनुसरणमात्रमिति भावः । इदानीं तु ब्रह्मवरोल्लङ्घना-समर्थोऽपि लक्ष्मणः रामसङ्कल्पानुसारात् समर्थस्सन् आहेत्यर्थः । मनः सङ्कल्पः । 'सङ्कल्पविकल्पात्मकं मनः' इत्युक्तः । 'न सोढुं' इत्युत्तरवाक्यानुसारात् अस्त्रप्राप्तेः पूर्वं लक्ष्मणवाक्यम् ।।१६२-१६४।।

**गूढवाक्यार्थ–** ।। **अथाहेति** ।। पुरा गरुडेन गन्तव्यमिति रामस्य मनोनुसारतः अस्त्रं नागास्त्रमनुसरत् । तदिच्छुत्त्वात् तेन बद्धवत् स्थितः तथा पुरा द्वितीयवारं हनूमद्बलप्रकाशं कुर्वतो रामस्य मनोनुसारतः अस्त्रं नागास्त्रं ब्रह्मास्त्रमनुसरन् प्रत्यस्त्रप्रयोगमकृत्वा तेन बद्धः पीडितश्च सन् आहेत्यर्थः ।।१६२।।

**पितामहास्त्रेण[१] निहन्मि दुर्मतिं तवाऽज्ञया शक्रजितं सबान्धवम् ।**
**इतीरिते तेन स चाऽह राघवो भयाददृश्ये न विमोक्तुमर्हसि ।।१६३।।**

---

१. लक्ष्मणस्तु ततः क्रुद्धो भ्रातरं वाक्यमब्रवीत् । ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वराक्षसाम् ।। ...अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् । पलायमानं मत्तं वा न हन्तुं त्वमिहार्हसि ।। इति वाल्मीकीये ६.८०.३७-३९ ।

**वेदाङ्गतीर्थीया–** न विमोक्तुमर्हसि ब्रह्मास्त्रमिति शेषः ।।१६३।।

**वरदराजीया–** स लक्ष्मणः किमित्याह । दुष्टा मतिः यस्य तं सानुबन्धं ससहायं शक्रजितं पितामहास्त्रेण ब्रह्मास्त्रेण तवाज्ञया निहन्मीत्याहेति पूर्वेणान्वयः । तेन लक्ष्मणेनेरितः स राघवश्चाह । किमिति । भयाददृश्ये अप्रत्यक्षे ब्रह्मास्त्रं विमोक्तुं नार्हसि ।।१६३।।

**जनार्दनीया–** किमिति ? पितामहो ब्रह्मा, तदस्त्रेण निहन्मीत्याहेति सम्बन्धः । तेन लक्ष्मणेन ईरित आह । किमिति ? भयाददृश्ये निलीने अस्त्रं विमोक्तुं नार्हसि । अदृश्ये अस्त्रप्रयोगो योग्यो न । दोषसद्भावात् । तस्मान्न विमोक्तुं अर्हसि इत्याहेति भावः ।।१६३।।

**चट्टी–** सः लक्ष्मणः श्रीरामं प्रत्याह । किमिति । दुष्टा मतिः यस्य तं सबान्धवं बन्धुजनसहितं शक्रजितं इन्द्रजितं तवाज्ञया पितामहास्त्रेण ब्रह्मास्त्रेण निहन्मीत्याहेति पूर्वेणान्वयः । तेन लक्ष्मणेन ईरित सः राघवः श्रीरामश्चाह । लक्ष्मणं प्रतीति शेषः । किमिति । भयाददृश्ये निलीने ब्रह्मास्त्रं विमोक्तुं नार्हसि । अदृश्ये अस्त्रप्रयोगो न योग्यः दोषसद्भावात् । तस्मान्न विमोक्तुं अर्हसि इत्याहेति भावः ।।१६३।।

**न सोढुमीशोऽसि यदि त्वमेतदस्त्रं तदाऽहं शरमात्रकेण ।**
**अदृश्यमप्याशु[1] निहन्मि सन्तं रसातळेऽथापि हि सत्यलोके ।।१६४।।**

**व्यासतीर्थीया–** शरमात्रकेण अस्त्ररहितशरेणैव ।।१६४।।

**वेदाङ्गतीर्थीया–** ।। **न सोढुमीशोऽसीति** ।। सोढुमनीश[शत्व]ममर्षतयैव । न तु तद्बद्धत्वेन । तथात्वे पितामहास्त्रेण निहन्मीत्युक्तिविरोधात् । तदा तर्हि ।।१६४-१६५।।

**वादिराजीया–** न सोढुमीशोऽसि यदि त्वमेतदस्त्रमित्यत्र एकमेवास्त्रं पुनः पुनः प्रयुक्ते तत् सोढुं न शक्नोषि चेदित्यर्थः । अथ सत्यलोके सन्तमपि निहन्मीति हि । हिशब्देन तालखण्डनप्रयुक्तैकशरमात्रादेव गिरिं भूमिं सप्ततालांश्च निर्भिद्य तत्रत्य कुमुदिनामदैत्यवधप्रसिद्धिं स्मारयति । 'आत्मनि चैवं विचित्राश्च हि' [२.१.२९] इति सौत्रप्रसिद्धिं वा सूचयति ।।१६४।।

**वरदराजीया–** नन्वापदि अदृश्येऽपि ब्रह्मास्त्रं मोक्तव्यमित्यत आह– **नेति** ।। यदि इन्द्रजिते अस्त्रं सोढुं ईशः समर्थो न असि तदा तर्हि शरमात्रकेन ब्रह्मास्त्रानभिमन्त्रितेन साधारणमात्रेण अदृश्यमपि रसातले वा सत्यलोकेऽपि वा वसन्तं विद्यमानं निहन्मि । अदृश्ये बाणमात्रमोचने दोषाभावात् त्वया च बाणमात्रेण हन्तुमशक्यत्वात् ब्रह्मास्त्रस्य च भयात् अदृश्ये प्रयोगायोगादिति भावः ।।१६४।।

---

१. यद्येष भूमिं विशते दिवं वा रसातलं वापि नभस्तलं वा । एवं विगूढोऽपि ममास्त्रदग्धः पतिष्यते भूमितले गतासुः ।।

**जनार्दनीया–** त्वं एतत् इन्द्रजिता प्रयोजितं अस्त्रं सोढुं यदि नेशोऽसि न समर्थोऽसि । तदा तर्हि अहं शरमात्रकेण साधारणबाणेन मन्त्रप्रयोगरहितेनेत्यर्थः । अदृश्यमपि निलीनमपि । रसातले भूमेरधोभागे वर्तमानरसातललोके अपि पातालादिसप्तलोकेष्वपि सन्तं स्थितम् । अथ तथा सत्यलोके हि ब्रह्मलोकेऽपि सन्तम् । आशु निहन्मीत्याहेति पूर्वेणान्वयः ।।१६४।।

**ताम्रपर्णीया–** ।। **अदृश्यमिति** ।। रसातले सत्यलोके वा अदृष्यं सन्तं अदृश्यतया स्थितं अहं शरमात्रेण निहन्मीत्याह इति शब्दसम्बन्धः । निहन्मीति सामर्थ्यकथनं न तु इन्द्रजितं निहन्मीति । अतः पलायिताहननेऽपि अविरोधः ।।१६४-१६५।।

**चट्टी–** एतत् इन्द्रजिता प्रयोजितं अस्त्रं सोढुं यदि नेशोऽसि न समर्थोऽसि तदा तर्हि अहं शरमात्रकेण ब्रह्मास्त्रानभिमन्त्रितसाधारणबाणेन अदृश्यमपि निलीनमपि रसातले भूमेरधोभागे वर्तमानरसातललोके । रसातलमित्युपलक्षणम् । पातालादिसप्तलोकेष्वित्यर्थः । सन्तं स्थितं अथ तथा सत्यलोके हि ब्रह्मलोकेऽपि सन्तं आशु निहन्मीति स्म आहेति पूर्वेणान्वयः ।।१६५।।

**गूढवाक्यार्थ–** अदृश्यं सन्तं अदृश्यतया स्थितं इत्याहेति सम्बन्धः । इन्द्रजिता पलायनस्य कृतत्वात् । निहन्मीति सङ्कल्पहानिरिति चेत् न शरमात्रेण निहन्मीति स्वसामर्थ्यकथनमेव । न तु हननार्थं सङ्कल्पः अतो न विरोधः ।।१६४।।

**इति स्म वीन्द्रस्य हनूमतश्च बलप्रकाशाय पुरा प्रभुः स्वयम् ।**
**सम्मानयित्वाऽस्त्रममुष्य रामो दुरन्तशक्तिः शरमाददेऽथ ।।१६५।।**

**वादिराजीया–** इति पूर्वोक्तप्रकारेण बलप्रकाशायेति सम्बन्धः ।।१६६।।

**वरदराजीया–** नन्वेवं प्रभुश्चेद्रामः तर्हि किमर्थं वारद्वयं तूष्णीमासीदित्यत आह– **इति स्मेति** ।। इत्युक्तरीत्या समर्थोऽपि वीन्द्रस्य गरुडस्य हनूमतश्च बलं प्रकाशयन् पुरा वारद्वयं समर्थोऽपि अमुष्येन्द्रजितोऽस्त्रं सम्मानयन् दुरन्तशक्तिः रामो शरं आददे ।।१६५।।

**जनार्दनीया–** नन्वेवं समर्थश्चेत् रामः तर्हि पूर्वमेव किमर्थं न निवारयामासेत्यत आह– **इतीति** ।। इति स्म पूर्वोक्तप्रकारेण प्रभुः । अत एव दुरन्तशक्तिः निरवधिकबलः स्वयं रामः वीन्द्रस्य गरुडस्य हनुमतश्च बलप्रकाशाय बलप्राकाट्यार्थं पुरा वारद्वयं अमुष्य इन्द्रजितः अस्त्रं सम्मानयित्वा, अथ शरं आददे ।।१६५।।

**अनन्तभट्टीया–** इति सम्मानयित्वेति सम्बन्धः । अमुष्य शक्रजिदर्थम् ।।१६५-१६६।।

**चट्टी–** नन्वेवं समर्थश्चेत् श्रीरामः तर्हि पूर्वमेव किमर्थं न निवारयामासेत्यत आह– **इति स्म वीन्द्रस्येति** ।। दुरन्तशक्तिः निरवधिकबलः श्रीरामः स्वयं प्रभुः समर्थोऽपि वीन्द्रस्य गरुडस्य हनुमतश्च बलप्रकाशाय बलप्राकाट्यार्थं पुरा वारद्वयं अमुष्य इन्द्रजितास्त्रं सम्मानयित्वा अथ शरं आददे ।।१६५।।

**भावचन्द्रिका–** अमुष्य रुद्रस्य ब्रह्मणश्च ।।१६५-१६७।।

**गूढवाक्यार्थ–** ।। **दुरन्तशक्तिश्शरमादद इति** ।। अत्र शरादानमात्रेण तस्य प्रद्रुतत्वात् । न रामबाणवैय्यर्थ्यमिति वाच्यम् । शरमाददे इति शरादानमात्रस्य उक्तत्वेन तस्य धनुषि सन्धानस्य अनुक्तेः तदादानश्च तस्य पलायनाय भयजननार्थमिति । तस्मिन्नेव शरे विज्ञानास्त्रस्य योजितत्वाच्च । न तच्छरादानस्यापि मोघता ।।१६५।।

**अनेन दृष्टोऽहमिति स्म दुष्टो विज्ञाय बाह्वोर्बलमस्य चोग्रम् ।**
**विनिश्चयं[1] देवतमस्य पश्यन् प्रदुद्रुवे प्राणपरीप्सुराशु ।।१६६।।**

**वेदाङ्गतीर्थीया–** प्राणपरीप्सुः प्राणान् परिरक्षितुमिच्छन् ।।१६६ ।।

**वादिराजीया–** स्वाङ्गमेव लक्षीकृत्य शरसन्धानकौशलात् दुष्टः इन्द्रजित् अनेन रामेणाहं दृष्ट इति विज्ञाय । अस्य उग्रं बाह्वोर्बलं हन्मीति विनिश्चयं च पश्यन् प्राणान् परिपातुमिच्छुः प्राणपरीप्सुः सन् आशु प्रदुद्रुव इति योजना ।।१६७।।

**वरदराजीया–** अनेन रामेण अहं दृष्ट इति विज्ञाय ज्ञात्वा दुष्टः इन्द्रजित् अस्य श्रीरामस्योग्रं भयङ्करं बाह्वोर्बलं च विज्ञाय दैवतमस्य रामस्य विनिश्चयं एनं हनिष्यामीत्येवं रूपं पश्यन् प्राणपरित्राणेच्छु आशु प्रदुद्राव ।।१६६।।

**जनार्दनीया–** दुष्टः इन्द्रजित् । अनेन रामेण अहं दृष्ट इति स्म विज्ञाय, अस्य रामस्य बाह्वोः उग्रं असह्यं बलं विज्ञाय च देवतमस्य देवोत्तमस्य रामस्य विनिश्चयं स्ववधविषये कृतविनिश्चयं पश्यन् विजानन् सन् प्राणान् परीप्सुः परिरक्षितुमिच्छन् सन् आशु प्रदुद्रुवे ।।१६६।।

**ताम्रपर्णीया–** विनिश्चयं अपलायने निहन्मीति विनिश्चयम् । न च रामबाणमोघता । शरमादद इत्यादानमात्रोक्त्या शरस्य असन्धितत्वात् तदादानं च विभीषणार्थम् । तस्मिन्नेव शरे विज्ञानास्त्रं अभिमन्त्र्य प्रयोगाच्च तदादानं न व्यर्थं इति भावः ।।१६६–१६८।।

---

१. विज्ञाय तु मनस्तस्य राघवस्य महात्मनः । स निवृत्त्याहवात् तस्मात् प्रविवेश पुरं ततः ।। इत्यार्षे ६.८१.१

**चट्टी–** दुष्टः इन्द्रजित् अनेन रामेण अहं दृष्ट इति विज्ञाय ज्ञात्वाऽस्य श्रीरामस्य बाह्वोः उग्रं असह्यं बलं च विज्ञाय देवतमस्य देवोत्तमस्य श्रीरामस्य विनिश्चयं स्ववधविषये कृतविनिश्चयं पश्यन् विजानन् सन् प्राणान् परीप्सुः परिरक्षितुमिच्छुः सन् आशु प्रदुद्रुवे ।।१६६।।

**हाहाकृते प्रद्रुत इन्द्रशत्रौ रघूत्तमः शत्रुविभीषणत्वात् ।**
**विभीषणेत्येव सुरैरभिष्टुतो विज्ञानमस्त्रं त्वमुचत् स्वसैन्ये ।।१६७।।**

**व्यासतीर्थीया–** शत्रुविभीषणत्वात् विभीषण इति निरुक्त्या देवाः विभीषणे मुमुचुरिति ग्रन्थान्तरोक्तिः समाहिता ।।१६७।।

**वेदाङ्गतीर्थीया–** विभीषणेति प्रातिपदिकमात्रम् ।।१६७–१७६ ।।

**वादिराजीया–** हाहाकृत इत्यत्र पलायनं दृष्ट्वा हसद्भिर्देवैः कृतहाहाकारविषये मूलरामायणे विभीषणेति रामं सम्बोध्य स्तुतिः कृतेति कथाऽस्ति । तस्याः तात्पर्यकथनाय शत्रुविभीषणत्वात् विभीषणेति सुरैरभिष्टुत इत्युक्तम् । पलायिते शरप्रयोगस्याधर्मत्वाद्रामशरस्य अमोघत्वाच्च तमेव शरं विज्ञानास्त्रेणाभिमन्त्र्य तेन शरेण तु कपीनामङ्गच्छेदो यथा न भवति उरङ्गबन्धोच्छेदमात्रं च यथा भवति तथा हस्तलाघवविशेषेण स्वसैन्ये अमूमुचदिति योजना ।।१६८–१६९।।

**वरदराजीया–** इन्द्रशत्रौ प्रद्रुते सति हाहाकृते राक्षसैरिति शेषः । रघूत्तमो विभीषणेति सुरैरभिष्टुतो स्तुतोऽभूत् । हे विभीषणेति स्तुवतां देवानामभिप्रायमाह– **शत्रुविभीषणत्वादिति** ।। शत्रुं इन्द्रजितं विभीषयतीति शत्रुविभीषणस्तस्य भावस्तत्त्वम् । तस्माद्रामो विज्ञानमस्त्रं विज्ञानास्त्रं स्वसैन्ये अमूमुचत् कपीनुत्थापयितुमिति शेषः ।।१६७।।

**जनार्दनीया–** इन्द्रशत्रौ प्रद्रुते सति तदीयैः हाहाकृते सति कष्टमभूत् कष्टमभूदिति कोलाहले कृते सती इत्यर्थः । रघूत्तमः शत्रुं विभीषयतीति शत्रुविभीषणः, तस्य तत्त्वं, तस्माद्धेतोः । 'विभीषण' इत्येव एतन्नाम्नैव सुरैभिष्टुतः सन् । स्वसैन्ये विज्ञानमस्त्रं विज्ञानास्त्रं अमुचत् । इन्द्रजिद्विभीषणार्थं धृतशरं ज्ञानास्त्रेण अभिमन्त्र्य अमुचदिति भावः ।।१६७।।

**अनन्तभट्टीया–** हाहाकृते [यज्ञनिरीक्षके]... *इति शेषः ।।१६७–१७९।।

**चट्टी–** इन्द्रशत्रौ प्रद्रुते पलायिते सति राक्षसैः इति शेषः । हाहाकृते हाहाकारे कृते सति रघूत्तमः शत्रुं इन्द्रजितं भीषयतीति शत्रुविभीषणः तस्य भावः तत्त्वं तस्मात् विभीषणेत्येव एतन्नाम्नैव सुरैभिष्टुतः स्तुतस्सन् । स्वसैन्ये विज्ञानमस्त्रं विज्ञानास्त्रं अमुचत् । इन्द्रजितः विभीषणार्थं स्वं शरं ज्ञानास्त्रेण अभिमन्त्र्य अमुचदिति भावः ।।१६७।।

**निशाचरास्त्रं ह्यगमत् क्षणेन रामास्त्रवीर्याद्धरयो नदन्तः ।**
**उत्तस्थुरुच्चोरुगिरीन् प्रगृह्य प्रशंसमाना रघुवीरमुच्चैः ॥१६८॥**

**वरदराजीया–** रामस्य विज्ञानास्त्रवीर्यात् निशाचरस्येन्द्रजित् सम्मोहनास्त्रं क्षणेन अगमत् । हरयश्च नदन्तो गर्जन्तः गुरुगिरीन् स्थूलपर्वतान् प्रगृह्य रघुवीरं श्रीरामं प्रशंसमानाः स्तुवन्तः तस्थुरिति सम्बन्धः ॥

**जनार्दनीया–** रघुवीरमुच्चैः प्रशंसमानाः स्तुवन्तः ॥१६८॥

**चट्टी–** निशाचरेण इन्द्रजिता अस्त्रं सम्मोहनास्त्रं श्रीरामास्त्रस्य विज्ञानास्त्रस्य वीर्यात् क्षणेनागमत् नष्टमभूत् । हरयः उच्चोरुगिरीन् प्रगृह्य नदन्तः सिंहनादं कुर्वन्तः रघुवीरं श्रीरामं प्रशंसमानाः स्तुवन्तः सन्तः उत्तस्थुरित्यन्वयः ॥१६८॥

**भावचन्द्रिका–** निशाचरास्त्रस्य माननाभावात् सम्मानयित्वा इति प्राङ्... । अत्र निशाचर-प्रयुक्तमस्त्रं निशाचरास्त्रम् ॥१६८॥

**सुरैश्च पुष्पं ववृषद्भिरीडितस्तस्थौ धनुष्पाणिरनन्तवीर्यः ।**
**स रावणस्याथ सुतो निकुम्भिलां पुनः समासाद्य जुहाव पावकम् ॥१६९॥**

**वादिराजीया–** निकुम्भिला नाम इन्द्रजिता स्वहोमाय रचिता गिरिगुहोच्यते ॥१६९॥

**मधुसूदनीया–** निकुम्भिलाख्यवनम् । तथाचोक्तम्– 'ततो निकुम्भिला नाम लङ्कायाः काननं महत् । महात्मा राक्षसेन्द्रस्तु प्रविवेश सहानुगः ॥' इति रामायणे [उ.का.२५.२] । एतेन 'निकुम्भिलां लङ्कायाः प्रदेशविशेषं शिवस्थानम्' इति व्याख्यानं निरस्तम् । अप्रामाणिकत्वात् ॥१६९॥

**वरदराजीया–** धनुष्पाणिरनन्तवीर्यो रामः सुरैः पुष्पं पुष्पाणि वर्षद्भिः पुष्पवृष्टिं कुर्वद्भिः ईडितः स्तुतस्तस्थौ । अथानन्तरं स रावणस्य सुतः इन्द्रजित् निकुम्भिलां लङ्काया प्रदेशविशेषं शिवस्थानं समासाद्य प्राप्य तत्र पावकं वह्निं जुहाव ॥१६९॥

**जनार्दनीया–** ईडितः स्तुतः । अथ निकुम्भिलां निकुम्भिलाख्यं च शिवस्थानं समासाद्य प्राप्य, पुनः जुहाव अजुहोत् ॥१६९॥

**ताम्रपर्णीया–** ॥ **निकुम्भिलामिति** ॥ निकुम्भिलानामकं लङ्कास्थं वनम् । तदुक्तं उत्तररामायणे षड्विंशतितमे सर्गे [२.४] । 'ततो निकुम्भिला नाम लङ्कायाः काननं महत् । महात्मा राक्षसेन्द्रस्तत् प्रविवेश सहानुगः ॥ तत्र यूपशताकीर्णं सौम्यं चैत्योपशोभितम् । ददर्श विष्टितं यज्ञं संप्रदीप्तमिव श्रियम् ॥ ततः

कृष्णाजिनधरं कमण्डलुशिखध्वजम् । ददर्श स्वसुतं तत्र मेघनादमरिन्दमम् ।।' इति । ननु 'वानरान् मोहयित्वा तु प्रतियातु स राक्षसः । चैत्यं निकुम्भिलं नाम यत्र होमं करिष्यति ।।' इति [वा.रा.युद्ध.का.८४.१३-१४] निकुम्भिलाशब्देन चैत्यस्य उक्तत्वात् कथं इति चेत् उत्तररामायणगतस्पष्टवाक्यबलात् निकुम्भिलानामकं यद्वनं तद्गतं यत्र होमं करिष्यति तादृशं चैत्यं चतुरस्रं मण्टपं इत्यर्थो वाच्यः ।।१६९–१७०।।

**चट्टी–** धनुष्पाणिः अनन्तवीर्यः श्रीरामः पुष्पं पुष्पाणि वर्षद्भिः सुरैरीडितः स्तुतः तस्थौ । अथ अनन्तरं सः रावणस्य सुतः इन्द्रजित् निकुम्भिलां निकुम्भिलाख्यवनम् । तथोक्तम्– 'ततो निकुम्भिला नाम लङ्कायाः काननं महत् । महात्मा राक्षसेन्द्रस्तत् प्रविवेश सहानुगः ।। इति रामायणे [उ.का.२५.२] । समासाद्य प्राप्य पुनः पावकं जुहाव अजुहोत् ।।१६९।।

**भारतश्री–** निकुम्भिलां यज्ञभूमिम् । लङ्कामासाद्य अथ तत्रस्थनिकुम्भिलाख्यवनं आसाद्येत्यर्थः । 'स्यात् साकेतमयोध्यायां लङ्कायां तु निकुम्भिला' इति वागुरिः । 'ततो निकुम्भिला नाम लङ्कायाः काननं महत् । महात्मा राक्षसेन्द्रस्तत् प्रविवेश सहानुगः ।। इति रामायणे ।।१६९।।

**भावचन्द्रिका–** निकुम्भिला नाम इन्द्रजिद्धोमशाला गिरिगुहा । 'निकुम्भिलामधिष्ठाय पावकं जुहवेन्द्रजित् । यज्ञभूम्यां तु विधिवत् पावकस्तेन रक्षसा । हूयमानः प्रजज्वाल मांसशोणितभुक् तदा ।।' इति [६.८०.५] वाल्मीकिरामायणवचनात् ।।१६९–१७८।।

**प्रमाणसंग्रह–** ।। **निकुम्भलायामिति** ।। 'ततो निकुम्भिला नाम लङ्कायाः काननं महत् । महात्मा राक्षसेन्द्रस्तत् प्रविवेश सहानुगः ।। इति रामायणे [उ.का.२५.२] ।।१६९।।

**गूढवाक्यार्थ–** निकुम्भिला निकुम्भिलानामकं वनं लङ्कास्थं वनम् । तदुक्तमुत्तररामायणे षड्विंशमसर्गे 'ततो निकुम्भिलानाम लङ्कायां काननं महत्' इति । ननु युद्धकाण्डे– 'वानरान् मोचयित्वा तु प्रतियातः स राक्षसः । चैत्यं निकुम्भिलानाम यत्र होमं करिष्यति ।।' इति निकुम्भिलाशब्देन चैत्यस्योक्तत्वात् कथमिति चेत् निकुम्भिलं नाम वनं प्रतीयातस्सन् यत्र होमं करिष्यति तादृशं तद्गतं चैत्यं चतुरस्रमण्टपं शिवस्थानञ्चेत्यर्थो वक्तव्यः ।।१६९।।

**विभीषणोऽथाऽह रघूत्तमं प्रभुं नियोजयाद्यैव वधाय दुर्मतेः ।**
**कृताग्निपूजो[१] न हि वध्य एष वरो विधातुः प्रथितोऽस्य तादृशः ।।१७०।।**

---

१. 'तेन वीरेण तपसा वरदानात् स्वयम्भुवः । अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुरङ्गमाः ।। स एष किल सैन्येन प्राप्तः किल निकुम्भिलाम् । यद्युत्तिष्ठेत् कृतं कर्म हतान् सर्वांश्च विद्धि नः ।। निकुम्भिलामसम्प्राप्तं अकृताग्निं च यो रिपुः । त्वामाततायिनं हन्यादिन्द्रशत्रो स ते वधः ।। वरो दत्तो महाबाहो सर्वलोकेश्वरेण वै । इत्येवं विहितो राजन् वधस्तस्यैष धीमतः ।। इत्यार्षे ६.८५.१२-१५

**वादिराजीया–** प्रथितोऽस्य तादृश इत्यत्र तादृशः चतुर्वारमग्निपूजायां कृतायामवध्यो भवेत्येवं प्रकारः विधातुर्वरः प्रथित इति योजना ।।१७०–१७१।।

**मधुसूदनीया–** ।। **कृताग्निपूज इति** ।। हिशब्देनोक्तार्थप्रमाणप्रसिद्धिं दर्शयति । तच्चोक्तम्– 'तस्मिंश्चेदं समाप्ते तु जप्यहोमे विभावसो । युध्येयं देवसङ्ग्रामे तथा मे स्याद्विनाशनम् ।। सर्वो हि तपसा चैव वृणोत्यमरतां जनः । विक्रमेण मयाप्येतत् अमरत्वं प्रकीर्तितम् ।।' इत्यादिरामायणे [७.३०.१४-१५] । अन्यत्र च– 'चैत्यं निकुम्भिला नाम तत्र हुत्वा प्रतिष्ठिते । न हुतं वै हुताशे तु देवैरपि स वासवैः ।। भवेत् स धृष्यः संग्रामे बलवान् रावणात्मजः [६.८४.१४-१५] । तपस्तप्तेन वीरेण वरदानात् स्वयंभुवः । अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च हयोत्तमाः ।। स एव विदधे चास्य विदधे पुण्यकर्मणः । निकुम्भिलायां सम्प्राप्तमहुताग्निं च यो रिपुः ।। त्वामाहूयिष्यते युद्धे इन्द्रशत्रोऽस्य ते वधः । इत्येव तस्य विहितो वधोपायो दुरात्मनः ।। [६.८५.१२-१५] नीलजीमूतसंकाशं न्यग्रोधं द्वारमास्थितम् । तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ।। इहोपहारं भूतानां बलवान्रावणात्मजः । उपहृत्य तपः पश्चात् सङ्ग्राममभिवर्तते ।। अदृश्यः सर्वभूतानां ततो भवति राक्षसः । निहन्ति चरणे शत्रून् मथ्नाति च शरोत्तमैः ।। तमप्रतिष्ठं न्यग्रोधं इमं त्वं रावणात्मजम् । विध्वंसय शरैस्तीक्ष्णैः सरथं साश्वसारथिम् ।। [६.८७.३-६] इत्यादि ।।१७०–१८२।।

**वरदराजीया–** अथ विभीषणः प्रभुं रघूत्तमं प्राह । किमिति । दुर्मतेरिन्द्रजितो वधाय अद्यैव नियोजय. । कुतः कृता अग्नौ शिवस्य पूजा येन सः । एषः इन्द्रजित् वध्यो वधार्हो न हि यतो अस्येन्द्रजितो विधातुः ब्रह्मणः तादृशः अग्नौ पूजया त्वं केनापि न वध्यः इत्येवंरूपो वरः प्रथितः प्रसिद्धो अस्तीत्यर्थः ।।१७०।।

**जनार्दनीया–** अथ विभीषण आह । दुर्मतेः दुष्टबुद्धेः । इन्द्रजितः वधाय नियोजय आज्ञापय । कृता अग्निपूजा येन स तथा । पूर्वकृताग्निपूजापेक्षया विशेषेण कृताग्निपूज इत्यर्थः । एष इन्द्रजित् वध्यो न । कुतः ? हि यस्मात् अस्य इन्द्रजितः । तादृशः विशेषाग्निपूजानन्तरं त्वं सर्वैः अवध्यो भविष्यसीति वरः प्रथितः प्रसिद्धः । तस्मात् नियोजयेत्याहेति सम्बन्धः ।।१७०।।

**चट्टी–** अथ विभीषणः प्रभुं रघूत्तममाह । किमिति । दुर्मतेः दुष्टबुद्धेः इन्द्रजितः वधाय अद्यैव नियोजय । कुतः । कृता अग्निपूजा येन स तथा एषः इन्द्रजिद्वध्यो वधार्हो न हि यस्मात् अस्य इन्द्रजितः विधातुः ब्रह्मणः तादृशः अग्निपूजानन्तरं त्वं सर्वैः अवध्यो भविष्यसीति वरः प्रार्थितः प्रसिद्धः तस्मान्नियोजयेत्याहेति सम्बन्धः । हिशब्देनोक्तार्थप्रमाणप्रसिद्धिं दर्शयति । तच्चोक्तम्– 'तस्मिंश्चेदं समाप्ते तु जप्यहोमे विभावसो । युध्येयं देवसङ्ग्रामे तथा मे स्याद्विनाशनम् ।। सर्वो हि तपसा चैव

वृणोत्यमरतां जनः । विक्रमेण मयाप्येतत् अमरत्वं प्रकीर्तितम् ॥' इत्यादि रामायणे [उ.का.३०.१४-१५] । अन्यत्र च– 'चैत्यं निकुम्भिला नाम तत्र हुत्वा प्रतिष्ठिते । न हुतं वै हुताशे तु देवैरपि स वासवैः ॥ भवेत् स धृष्यः संग्रामे बलवान् रावणात्मजः [६.८४.१४-१५] । तपस्तप्तेन वीरेण वरदानात् स्वयंभुवः । अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च हयोत्तमाः ॥ स एव विदधे चास्य विदधे पुण्यकर्मणः । निकुम्भिलायां सम्प्राप्तमहुताग्निं च यो रिपुः ॥ त्वामाहूयिष्यते युद्धे इन्द्रशत्रोऽस्य ते वधः । इत्येव तस्य विहितो वधोपायो दुरात्मनः ॥ [६.८५.१२-१५] नीलजीमूतसंकाशं न्यग्रोधं द्वारमास्थितम् । तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ इहोपहारं भूतानां बलवान्रावणात्मजः । उपहृत्य तपः पश्चात् सङ्ग्राममभिवर्तते ॥ अदृश्यः सर्वभूतानां ततो भवति राक्षसः । निहन्ति चरणे शत्रून् मथ्नाति च शरोत्तमैः ॥ तमप्रतिष्ठं न्यग्रोधं इमं त्वं रावणात्मजम् । विध्वंसय शरैस्तीक्ष्णैः सरथं साश्वसारथिम् ॥ [यु.का.८७.३-६] इत्यादि ॥१७०॥

**प्रमाणसंग्रह–** ॥ **कृताग्निपूज इति** ॥ 'तस्मिंश्चेदं समाप्ते तु जप्यहोमे विभावसो । युध्येयं देवसङ्ग्रामे तथा मे स्याद्विनाशनम् ॥ सर्वो हि तपसा चैव वृणोत्यमरतां जनः । विक्रमेण मयाप्येतत् अमरत्वं प्रकीर्तितम् ॥' इत्यादि रामायणे [उ.का.३०.१४-१५] । अन्यत्र– 'चैत्यं निकुम्भिला नाम तत्र हुत्वा प्रतिष्ठिते । न हुतं वै हुताशे तु देवैरपि स वासवैः ॥ भवेत् स धृष्यः संग्रामे बलवान् रावणात्मजः [६.८४.१४-१५] । तपस्तप्तेन वीरेण वरदानात् स्वयंभुवः । अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च हयोत्तमाः ॥ स एव विदधे चास्य विदधे पुण्यकर्मणः । निकुम्भिलायां सम्प्राप्तमहुताग्निं च यो रिपुः ॥ त्वामाहूयिष्यते युद्धे इन्द्रशत्रोऽस्य ते वधः । इत्येव तस्य विहितो वधोपायो दुरात्मनः ॥ [६.८५.१२-१५] नीलजीमूतसंकाशं न्यग्रोधं द्वारमास्थितम् । तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ इहोपहारं भूतानां बलवान्रावणात्मजः । उपहृत्य तपः पश्चात् सङ्ग्राममभिवर्तते ॥ अदृश्यः सर्वभूतानां ततो भवति राक्षसः । निहन्ति चरणे शत्रून् मथ्नाति च शरोत्तमैः ॥ तमप्रतिष्ठं न्यग्रोधं इमं त्वं रावणात्मजम् । विध्वंसय शरैस्तीक्ष्णैः सरथं साश्वसारथिम् ॥ [यु.का.८७.३-६] इत्यादि ॥१७०॥

**गूढवाक्यार्थ–** तादृशः चतुर्थवारमग्निपूजायामवध्यो भवेत्येवं प्रकारः ॥१७०॥

**न वै वधं राम इयेष तस्य पलायितस्याऽत्मसमीक्षणात् पुनः ।**
**सत्त्वोज्झितोऽसावतिकूटयोधी न मे वधार्होऽयमिति स्म स प्रभुः ॥१७१॥**

**वरदराजीया–** नतु रामो लक्ष्मणं किमिति नियुक्तवानित्यत आह– **न वा इति** ॥ आत्मनः स्वस्य समीक्षणात् पलायितस्येन्द्रजितो वधं रामो न इयेष नैच्छत् । पुनरथ असौ इन्द्रजित् सत्वेन बलेन उज्झितो अतिकूटेन छद्मना उपाधीति मे वधार्हो न भवतीति बुद्ध्या प्रभुः समर्थोऽपि ॥१७१॥

**जनार्दनीया—** रामः आत्मनः समीक्षणाद्दर्शनात् पलायितस्य तस्य इन्द्रजितः वधम् । वै निश्चयेन । पुनः पलायनानन्तरं न इयेष नैच्छत् । न इयेषेत्यत्र कारणान्तरमप्याह— **सत्वेति** ।। असौ इन्द्रजित् । सत्त्वेन बलेन उज्झितः हीनः कूटेन कपटेन युध्यतीति तथा । यतोऽत इति शेषः । अयं इन्द्रजित् मे वधाय अर्हः योग्यः न । इति स्म इत्यभिप्रायेणापि प्रभुः सः रामः तस्य वधं न इयेषेत्यर्थः ।।१७१।।

**ताम्रपर्णीया—** रामेण हन्तुं शक्यत्वात् किमिति लक्ष्मणमादिदेश इत्यत आह— **न वै वधमिति** ।।

**चट्टी—** ननु श्रीरामः लक्ष्मणं किमिति नियुक्तवानित्यत आह— **नेति** ।। श्रीरामः आत्मनः समीक्षणाद्दर्शनात् पलायितस्य इन्द्रजितः वधं पुनः पलायनानन्तरं न इयेष नैच्छत् । न इयेषेत्यत्र कारणान्तरमप्याह— **सत्वोज्झित इति** ।। असौ इन्द्रजित् सत्वेन बलेन उज्झितः रहितः अतिकूटेन अधिकछद्मना योधीत्यर्थः । अयं मे वधार्हः वधाय योग्यः न भवति स्म इत्यभिप्रायेणापि प्रभुः श्रीरामः तस्य वधं न इयेषेत्यर्थः ।।१७१।।

**गूढवाक्यार्थ—** रामेण हन्तुं शक्यत्वात् लक्ष्मणं किमर्थमादिदेशेत्यत आह— **न वै वधमिति** ।।

**स आदिदेशावरजं जनार्दनो हनूमता चैव विभीषणेन ।**
**सहैव सर्वैरपि वानरेन्द्रैर्ययौ महात्मा स च तद्वधाय ।।१७२।।**

**वादिराजीया—** यद्यपि चतुर्थहोमानन्तरमपि ब्रह्मवरमुल्लङ्घ्य रामो हन्तुं शक्तः । तथाऽपि सत्वहीनस्य पलायितस्य वधो वीराग्रेसरस्य रामस्य योग्यो न । 'रामस्य मनोनुसारतः' इति वचनात् लक्ष्मणेनैव हन्तव्य इति रामसङ्कल्पेन हनूमतोऽपि योग्यो न । लक्ष्मणस्य ब्रह्मवरोल्लङ्घने शक्तिर्नास्ति । अतश्चतुर्थहोमात्प्रागेव लक्ष्मणस्याऽऽज्ञामदिशदिति भावेनाह— **स आदिदेशावरजमिति** ।।

**वरदराजीया—** जनार्दनः रामो अवरजं दिदेश । इन्द्रजितो वधार्थमिति शेषः । हनूमता विभीषणेन तु सर्वैः वानरैरपि सहैव महात्मा धीरो लक्ष्मणस्तस्येन्द्रजितो वधार्थमिति शेषः ।।१७२।।

**जनार्दनीया—** महात्मा अतिधैर्यबुद्धिः सः लक्ष्मणः हनुमदाद्यैः सहैव । तस्य इन्द्रजितः वधाय ।।

**ताम्रपर्णीया—** हनूमतो ब्रह्मवरोल्लङ्घनसामर्थ्येऽपि लक्ष्मणेनैव अयं हन्तव्य इति राममनोनुसारात् न हनिष्यति । अतः चतुर्थहोमात् प्राक् ब्रह्मवरोल्लङ्घनासमर्थं लक्ष्मणं आदिदेश इत्याह— **स आदिदेशेति** ।।

**चट्टी—** जनार्दनः श्रीरामः अवरजं अनुजं लक्ष्मणं तद्वधाय समादिदेश । महात्मा धीरः सः लक्ष्मणश्च हनुमता विभीषणेन च सर्वैर्वानरेन्द्रैरपि सह तस्य इन्द्रजितः वधायैव ययौ ।।१७२।।

**स जुह्वतस्तस्य चकार विघ्नं प्लवङ्गमैः सोऽथ युयुत्सया रथम् ।**
**समास्थितः कार्मुकबाणपाणिः प्रत्युद्ययौ लक्ष्मणमाशु गर्जन् ।।१७३।।**

**वरदराजीया–** स लक्ष्मणो जुह्वतो होमं कुर्वतः तस्य प्लवङ्गमैः विघ्नं च कारयामास । तिरस्कारवचनैः विघ्नं चक्रुरिति भावः । अथानन्तरं स इन्द्रजित् युयुत्सया योद्धुमिच्छया कार्मुकबाणपाणिः रथं समास्थितः सन् गर्जन् लक्ष्मणमाशु प्रत्युद्ययौ ।।१७३।।

**जनार्दनीया–** सः लक्ष्मणः प्लवङ्गमैः कपिभिः सह जुह्वतः होमं कुर्वतः तस्य इन्द्रजितः । अथ स इन्द्रजित् । योद्धमिच्छा युयुत्सा तया लक्ष्मणं प्रत्युद्ययौ ।।१७३।।

**चट्टी–** सः लक्ष्मणः प्लवङ्गमैः कपिभिः सह जुह्वतः होमं कुर्वतः तस्य इन्द्रजितः विघ्नं चकार । अथ स इन्द्रजित् योद्धुमिच्छा युयुत्सा तया रथं समास्थितः कार्मुकबाणपाणिः सन् गर्जन् सन् लक्ष्मणं आशु प्रत्युद्ययौ ।।१७३।।

**उभौ च तावस्त्रविदां वरिष्ठौ शरैः शरीरान्तकरैस्ततक्षतुः ।**
**दिशश्च सर्वाः प्रदिशः शरोत्तमैर्विधाय शिक्षास्त्रबलैर्निरन्तराः ।।१७४।।**

**व्यासतीर्थीया–** शिक्षास्त्रबलैः शिक्षास्त्रयोर्बलैः ।।१७४।।

**वरदराजीया–** ताविन्द्रजिल्लक्ष्मणावुभौ अस्त्रविदां अस्त्राणि जानतां मध्ये वरिष्ठौ श्रेष्ठौ शरीरस्यान्तकैः विनाशकैः शरैः परस्परं ततक्षतुः ताडयामासतुः । सर्वा दिशः प्रदिशश्च शरोत्तमैः शिक्षया अस्त्राणां बलैश्च निरन्तरा अवकाशरहिताश्चक्रुः ।।१७४।।

**जनार्दनीया–** उभौ इन्द्रजिल्लक्ष्मणौ । शिक्षास्त्रयोर्बलैः सर्वा पूर्वादिदिशः विदिशश्च शरोत्तमैः । निरन्तराः अवकाशरहिताः विधाय, शरीरस्य अन्तकरैः नाशकरैः शरैः ततक्षतुः परस्परं ताडयामासतुः ।।

**चट्टी–** अस्त्रविदां अस्त्राणि जानतां मध्ये वरिष्ठौ श्रेष्ठौ उभौ तौ श्रेष्ठौ इन्द्रजिल्लक्ष्मणौ शिक्षास्त्रयोर्बलैः शरोत्तमैः सर्वा दिशः प्रदिशश्च निरन्तराः अवकाशरहिताः विधाय शरीरस्य अन्तकरैः विनाशकरैः शरैः परस्परं ततक्षतुः ताडयामासतुः ।।१७४।।

**अस्त्राणि[१] तस्यास्त्रवरैः स लक्ष्मणो निवार्य शत्रोश्चलकुण्डलोज्ज्वलम् ।**
**शिरः शरेणाऽशु समुन्ममाथ [२]सुरैः प्रसूनैरथ चाभिवृष्टः ।।१७५।।**

**वरदराजीया–** स लक्ष्मणोऽस्त्रवरैः तस्येन्द्रजितोऽस्त्राणि निवार्य शत्रोः वैरिणः चलाभ्यां कुण्डलाभ्यां उज्ज्वलं प्रकाशमानं शिरः शरैरुन्ममाथ उन्मथितवान् । सुरैः कर्तृभिः प्रसूनैः पुष्पैः करणैरभिवृष्टोऽभिवर्षितोऽभूत् ।।१७५।।

**जनार्दनीया–** तस्येन्द्रजितः अस्त्राणि । चले चञ्चले ते च ते कुण्डले च, ताभ्यां उज्ज्वलं दीप्यमानं शिरः समुन्ममाथ चकर्तेत्यर्थः । अथ सुरैः प्रसूनैः अभिवृष्टोऽभूदिति शेषः ।।१७५।।

**चट्टी–** सः लक्ष्मणस्तस्येन्द्रजितो अस्त्राणि अस्त्रप्रवरैः निवार्य शत्रोः वैरिणः चलाभ्यां चञ्चलाभ्यां कुण्डलाभ्यां उज्ज्वलं प्रकाशमानं शिरः शरेण आशु समुन्ममाथ चकर्त । अथ सुरैः प्रसूनैः पुष्पैरभिवृष्टो अभिवर्षितश्चाभूदिति शेषः ।।१७५।।

**निपातितेऽस्मिन्[3] नितरां निशाचरान् प्लवङ्गमा जघ्नुरनेककोटिशः ।**
**हतावशिष्टास्तु दशाननाय [4]शशंसुरत्याप्तसुतप्रणाशम् ।।१७६।।**

**वरदराजीया–** अस्मिन्निन्द्रजिते निपातिते सति प्लवङ्गमाः अनेककोटिशः अनेककोटिसङ्ख्याकान् निशाचरान् जघ्नुः । हतेभ्योऽवशिष्टाः उर्वरिताश्च अत्याप्तभूतस्य सुतस्य इन्द्रजितो विनाशं रावणाय शशंसुः ऊचुः ।।१७६।।

**जनार्दनीया–** अस्मिन्निन्द्रजिति लक्ष्मणेन निपातिते सति प्लवङ्गमाः कपयः अनेककोटिशः बहुकोटिसङ्ख्याकान् इतरान् अन्यान् निशाचरान् जघ्नुः । हतावशिष्टाः राक्षसाः दशननाय अत्याप्तस्य परमाप्तस्य सुतस्य प्रणाशं मरणं शशंसुः ऊचुः ।।१७६।।

---

१. 'अथान्यं मार्गणश्रेष्ठं सन्दधे राघवानुजः । हुताशनसमस्पर्शं रावणात्मजदारणम् ।।६४।। येन शक्रो महातेजा दानवानजयत् प्रभुः । पुरा देवासुरे युद्धे वीर्यवान् हरिवाहनः ।।६७ ।। अथैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् । शरश्रेष्ठं धनुश्रेष्ठे विकर्षन्निदमब्रवीत् ।।६८।। ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा । तच्छिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।।७०।। प्रमथ्येन्द्रजितः कायात् पातयामास भूतले ।।७१।। इत्यादि रामायणे [६.९०.] ।

२. 'आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः । नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः ।।८५।। ववर्षुः पुष्पवर्षाणि तदद्भुतमिवाभवत् ।।'८६ इति रामायणे [६.९०] ।

३. 'पतितं समभिज्ञाय राक्षसी सा महाचमूः । वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः ।। वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः । लङ्कामभिमुखाः सस्रुः भ्रष्टसञ्ज्ञा प्रधाविताः ।।' इति वाल्मीकीये [६.९०.७६-७७] ।

४. रावणामात्यान् द्वारीकृत्य इत्यर्थः । तथाहि रामायणे– ततः पौलस्त्यसचिवाः श्रुत्वा चेन्द्रजितो वधम् । आचचक्षुः अभिज्ञाय दशग्रीवाय सत्त्वराः ।। इति ६.९२.१ ।

**चट्टी–** अस्मिन्निन्द्रजिति लक्ष्मणेन निपातिते सति प्लवङ्गमाः कपयः अनेककोटिशः बहुकोटिसङ्ख्यकान् इतरान् तदन्यान् निशाचरान् जघ्नुः अहन् । हतेभ्यो अवशिष्टाः उर्वरिताः राक्षसाः दशननाय रावणाय अत्याप्तस्य सुतस्य प्रणाशं मरणं शशंसुः ऊचुः ।।१७६।।

**स तन्निशम्याप्रियमुग्ररूपं भृशं विनिश्वस्य विलप्य दुःखात् ।**
**संस्थापयामास मतिं पुनश्च मरिष्य इत्येव विनिश्चितार्थः ।।१७७।।**

**वेदाङ्गतीर्थीया–** विनिश्चितार्थः सन् अवशेनापि मर्तव्यमिति विनिश्चितार्थः मरिष्य इत्येव मतिं संस्थापयामास ।।१७७–१८७ ।।

**वादिराजीया–** विलप्य दुःखादित्यत्र दुःखाद्विलप्य हा हतोऽसि पुत्रेत्यदिविलापवचनान्युक्त्वेत्यर्थः ।।

**वरदराजीया–** स रावणोऽप्रियं असह्यं उग्ररूपं दुःखकारणं तत् सुतस्य मरणं निशम्य भृशं विनिश्वस्य श्वासान् मुक्त्वा दुःखाद्विलप्य च पुनरपि मरिष्य इत्येवं निश्चितार्थो मतिं बुद्धिं स्थापयामास युद्धायेति शेषः । यद्वा मरिष्य इत्येवं मतिं संस्थापयामास चक्रे । कुतः यथा विनिश्चितार्थः मरणलक्षणफलं येन स तथोक्त इत्यर्थः ।।१७७।।

**जनार्दनीया–** सः रावणः । उग्ररूपं अविषह्यस्वरूपं अप्रियं दुःखभूतं तत्पुत्रमरणं निशम्य श्रुत्वा, दुःखात् भृशं उच्चं यथा स्यात्तथा । विनिश्वस्य श्वासान् विहाय, विलप्य प्रलापं कृत्वा, पुनश्च कुम्भकर्णमृत्यनन्तरं 'निराशकश्चाभवदात्मजीविते' इत्युक्तापेक्षया पुनरपि विनिश्चितः निश्चयीकृतः अर्थः मरणलक्षणप्रयोजनं येन स तथा । रावणः अहं मरिष्ये इत्येवं मतिं बुद्धिं संस्थापयामास अकरोदित्यर्थः ।।

**चट्टी– सः** रावणः अप्रियं दुःखभूतं उग्ररूपं अविषह्यस्वरूपं तत्पुत्रमरणं निशम्य भृशं विनिःश्वस्य श्वासान् मुक्त्वा दुःखात् विलाप्य प्रलापं कृत्वा हा हतो हा हतो पुत्रः इत्यादिवचनान्युक्त्वा इत्यर्थः । कुम्भकर्णमृत्यनन्तरं 'निराशकश्चाभवदात्मजीविते' इत्युक्तापेक्षया पुनरपि विनिश्चितः निश्चयीकृतः अर्थः मरणप्रयोजनं येन स तथा रावणः । अहं मरिष्ये इत्येवं मतिं संस्थापयामास अकरोत् । यद्वा मरिष्य इत्येव निश्चितार्थः सन् मतिं बुद्धिं संस्थापयामास । युद्धायेति शेषः ।।१७७।।

**मरणाभिमुखः शीघ्रं रावणो रणकर्मणे ।**
**सज्जीभवन्नन्तरैव दिदेश [१]बलमूर्जितम् ।।१७८।।**

---

१. 'बलव्यूहेन महता निर्यास्यति हि रावणः ।' 'बलव्यूहेन महता श्रुत्वा पुत्रं निपातितम् ।।' इत्यादिवाक्यसूचितं अर्थमाह– दिदेश बलमूर्जितमिति ।।

**वरदराजीया–** मरणाभिमुखो मरणोन्मुखो रावणो रणाख्ये कर्मणि सज्जीभवन् सपरिकरो भवन्नेव अन्तरा मध्ये ऊर्जितं उत्कृष्टं बलं दिदेश ।।१७८।।

**जनार्दनीया–** मरणायाभिमुखो रावणः । रणकर्मणि सज्जीभवन् स्वयं साधनवान् भवन् । अन्तरैव मध्य एव ऊर्जितं सङ्ख्यया शस्त्रादिना चोत्कृष्टम् । बलं सैन्यं दिदेश ।।१७८।।

**चट्टी–** मरणायाभिमुखः मरणोन्मुखः रावणः रणाख्ये कर्मणि सज्जीभवन् सपरिकरो भवन्नेव अन्तः मध्ये ऊर्जितं सङ्ख्यया शस्त्रादिना चोत्कृष्टं बलं शीघ्रं दिदेश ।।१७८।।

**त्रिंशत्सहस्राणि महौघकानामक्षौहिणीनामपि षट्सहस्रम् ।**
**श्रमेण संयोजयताशु रामं सज्जो भवामीति दिदेश रावणः ।।१७९।।**

**सत्याभिनवीया–** तत्रैव त्रिंशत्सहस्राणि महौघकानां... इति श्लोकः । तस्यार्थः । सः रावणः अहं सज्जीभवानि । यूयं महाश्रयेण श्रमकरमहाप्रयत्नेन आशु स्वात्मभिः संयोजयतेति महौघकानां त्रिंशत्सहस्राणि अक्षौहिणीनां षट्सहस्रं च दिदेशेत्येतत् ह प्रसिद्धमिति । एतेन स हेत्येतत् व्यर्थम् । न चस हेत्यस्य मेलयित्वेत्यर्थ इति वाच्यम् । सहेत्यस्य मेलयित्वेत्येतदर्थकत्वे प्रमाणाभावादिति दूषणं परिहृतम् । सहेत्येतदेकं पदमित्यनङ्गीकारात् । एतेनैव श्रमस्य रामसंयोगे करणत्वाभावात् श्रमेण संयोजयतेत्यनुपपन्नमिति चोद्यस्यानवकाशः श्रमेणेत्यनेन श्रमकरमहाप्रयत्नस्यैव ग्रहणं न तु केवलश्रमस्येत्यभ्युपगमात् ।।१७९।।

**वरदराजीया–** बलस्योर्जितत्वं दर्शयति– **त्रिंशदिति** ।। महौघकानां त्रिंशत्सहस्राणि तथाक्षौहिणीनां षट्सहस्रं च सहैव रावणो दिदेश । केनाभिप्रायेण आशु शीघ्रं रामं प्रति गत्वा संयोजयत संयुक्ता भवत । अहं तु सज्जः सपरिकारो भवामीति ।।१७९।।

**जनार्दनीया–** उक्तमेवार्थं विवेचयन्नाह– **त्रिंशत्सहस्राणीति** ।। रावणः महौघकानां त्रिंशत्सहस्राणि, अक्षौहिणीनां षट्सहस्रं च मेलयित्वा इति दिदेश । इतीति किम् ? तावत् रामं श्रमेण श्रान्त्या, आशु संयोजयत । अहं सज्जीभवामि सोपस्कारो भवामीति दिदेश ।।१७९।।

**चट्टी–** उक्तमेवार्थं विवेचयन्नाह– **त्रिंशत्सहस्राणीति** ।। रावणः महौघकानां त्रिंशत्सहस्राणि अक्षौहिणीनां षट्सहस्रं च मेलयित्वा दिदेश । केनाभिप्रायेण यूयं आशु शीघ्रं श्रीरामं क्रमेण संयोजयत । अहं सज्जीभवामि सोपस्कारो भवामीति दिदेशेति पूर्वेणान्वयः ।।१७९।।

**भावचन्द्रिका–** पत्तिमात्रसङ्ख्या महौघसङ्ख्या चतुरङ्गसेनासङ्ख्या अक्षौहिणीति ।।१७९–२०७।।

**तदप्रधृष्यं वरतः स्वयम्भुवो युगान्तकालार्णवघूर्णितोपमम् ।**
**प्रगृह्य नानाविधमस्त्रशस्त्रं बलं कपीञ्छीघ्रतमं जगाम ॥१८०॥**

**व्यासतीर्थीया–** घूर्णितं घूर्णनं विपरीतसमासो वा ॥१८०॥

**वरदराजीया–** स्वयम्भुवो ब्रह्मणो वरतो अप्रधृष्यं अनिवारणीयं युगन्तकालः प्रलयकालः तत्र वर्तमानस्यार्णवस्य घूर्णितं घूर्णनं तत्सदृशमित्यर्थः । घूर्णितार्णवोपममिति विपरीतसमासो वा । नानाविधं नानाप्रकारं अस्त्रं शस्त्रं च प्रगृह्य तद्बलं कपीन् शीघ्रमाजगाम ॥१८०॥

**जनार्दनीया–** स्वयम्भुवो वरतः अप्रधृष्यं असह्यमित्यर्थः । युगानां अन्तकालः नाशकालः प्रलयकाल इति यावत् । तस्मिन् विद्यमानः अर्णवः समुद्रः, तस्य घूर्णितं घूर्णनं उच्चलनमिति यावत् । तेनोपमं सदृशम् । यद्वा घूर्णितश्चासावर्णवश्चेति अर्णवधूर्णितः, युगान्तकाले स्थितश्चासावर्णवघूर्णितश्च, तेनोपमं घूर्णितार्णवोपममित्यर्थः । तद्रावणेन प्रेषितं बलम् । नानाविधं बहुप्रकारम् । अस्त्रशस्त्रमित्यत्र द्वन्द्वैकवद्भावः । प्रगृह्य शीघ्रतमं अतिशीघ्रं कपीन् जगाम प्राप ॥१८०॥

**अनन्तभट्टीया–** अर्णवघूर्णितोपमः घूर्णितार्णवोपम इत्यर्थः ॥१८०–१९१॥

**ताम्रपर्णीया–** युगान्तकालार्णवघूर्णितोपमं युगान्तकाले घूर्णितार्णवोपमं इति विशेषणस्य परनिपातः ॥

**चट्टी–** स्वयम्भुवो ब्रह्मणः वरतः अप्रधृष्यं अनिवारणीयं युगानां अन्तकालः नाशकालः, प्रलयकाल इति यावत् । तस्मिन् विद्यमानः अर्णवः समुद्रः तस्य घूर्णितं घूर्णनं उच्चलितमिति यावत् । तेनोपमं सदृशम् । यद्वा घूर्णितः उच्चलितः स चासावर्णवश्चेति अर्णवधूर्णितः युगान्तकाले स्थितश्चासावर्णवघूर्णितश्च तेनोपमं घूर्णितार्णवोपममित्यर्थः । तद्रावणेन प्रेषितं बलं नानाविधं बहुप्रकारम् । अस्त्रशस्त्रमित्यत्र द्वन्द्वैकवद्भावः । प्रगृह्य शीघ्रतमं अतिशीघ्रं कपीन् जगाम प्राप ॥१८०॥

**गूढवाक्यार्थ–** युगान्तकालार्णवघूर्णितोपमं युगान्तकाले प्रलयकाले विद्यमानः घूर्णितार्णवः तदुपममिति विशेषणस्य परनिपातः ॥१८०॥

**आगच्छमानं तदपारमेयं बलं सुघोरं प्रलयार्णवोपमम् ।**
**भयात् समुद्वीक्ष्य विषण्णचेतसः कपिप्रवीरा नितरां प्रदुद्रुवुः ॥१८१॥**

**वरदराजीया–** अपारमेयं अप्रमेयं सुघोरं भयानकं प्रलयार्णवसदृशं आगच्छमानं बलं समुद्वीक्ष्य नितरां निषण्णं चेतो येषां ते तथा कपिप्रवीराः प्रदुद्रुवुः ॥१८१॥

**जनार्दनीया–** कपिप्रवीराः आगच्छमानं अपारमेयं अज्ञेयावधि सुघोरं अस्त्रशस्त्रादिना अतिक्रूरं प्रलयार्णवोपमं तद्बलं समुद्वीक्ष्य विलोक्य, नितरां विषण्णचेतसः श्रान्तमनसः सन्तः भयात् प्रदुद्रुवुः ।।

**ताम्रपर्णीया–**निवासशक्तिरजेयता च स्यात् इति वरो दत्तः ।।१८१–१८२।।

**चट्टी–** अपारमेयं अज्ञेयावधि सुघोरं अतिक्रूरं प्रलयार्णवोपमं सदृशं आगच्छमानं तद्बलं उद्वीक्ष्य विलोक्य नितरां विषण्णं श्रान्तं चेताः येषां ते तथाभूताः कपिप्रवीराः भयात्प्रदुद्रुवुः ।।१८१।।

**वरो हि दत्तोऽस्य पुरा स्वयम्भुवा धरातलेऽल्पेऽपि निवासशक्तिः ।**
**अजेयता चेत्यत एव सार्कजाः प्लवङ्गमा द्रष्टुमपि स्म नाशकन् ।।१८२।।**

**व्यासतीर्थीया–** एतद्बलमल्पस्थले कथं स्थितं कस्माच्च कपिप्रवीरा दुद्रुवुरित्यत आह– **वर इति** ।। अस्योपरीति शेषः ।।१८२।।

**वादिराजीया–** धरातलेऽल्पेऽपि निवासशक्तिरित्यत्र निवासे शक्तिर्यस्मादिति वरस्य विशेषणम् ।।

**वरदराजीया–** नन्वेतावती सेना कथं पृथिव्यामल्पे प्रदेशे, इमान् किमर्थं च सुग्रीवादयो दृष्ट्वा दुद्रुवुरित्यत आह– **वर इति** ।। पुरा अस्य बलस्य स्वयम्भुवो वरो दत्तः । कथंभूतः धरातलेऽल्पेऽपि भागे निवासे अवस्थाने शक्तिः अजेयता चेत्येवं रूप इत्यर्थः । अत एव सार्कजाः सुग्रीवाः प्लवङ्गमाः तद्बलं द्रष्टुमपि नाशकन् न शेकुः । तद्बलं अल्पप्रदेशे स्थितं चेति द्रष्टव्यम् ।।१८२।।

**जनार्दनीया–** ननु एतावद्बलं अल्पविस्तारे लङ्काप्रदेशे कथं स्थितम् ? कपिप्रवीराः युद्धमकृत्वा किमर्थं प्रदुद्रुवुः ? इत्यत आह– **वरो हीति** ।। पुरा स्वयम्भुवा अल्पेऽपि धरातले भूप्रदेशे निवासे वासविषये शक्तिर्भवेत् । अजेयता च भवेदिति । अस्य बलस्य वरो दत्तो हि यतः । अत एव अर्कजेन सुग्रीवेन सहिताः प्लवङ्गमाः कपयः द्रष्टुमपि नाशकन् समर्थाः न बभूवुः ।।१८२।।

**चट्टी–** ननु एतावद्बलं अल्पविस्तारे लङ्काप्रदेशे कथं स्थितम् । कपिप्रवीराः तद्बलं दृष्ट्वैव किमर्थं प्रदुद्रुवुरित्यत आह– **वरो हीति** ।। पुरा स्वयम्भुवा अल्पेऽपि धरातले भूप्रदेशे निवासे अवस्थानविषये शक्तिः अजेयता च भवेदिति अस्य बलस्य वरो दत्तो हि यतः अत एव सार्कजेन सुग्रीवेन सहिताः प्लवङ्गमाः कपयः तद्बलं द्रष्टुमपि नाशकन् न शेकुः । तद्बलं अल्पप्रदेशे स्थितमिति द्रष्टव्यम् ।।१८२।।

**गूढवाक्यार्थ–** अजेयता च स्यादिति वरो दत्तः ।।१८२।।

**प्रगृह्य रामोऽथ धनुः शरांश्च समन्ततस्तानवधीच्छरौघैः ।**
**स[१] एव सर्वत्र च दृश्यमानो विदिक्षु दिक्षु प्रजहार सर्वशः ॥१८३॥**

**वादिराजीया–** समन्ततस्तानवधीच्छरौघैरित्यत्र रामः शरौघैः समन्ततः स्थितानवधीदित्येकोऽन्वयः । एकस्य बहुभिः सह कथं युद्धमित्यतस्तत्प्रश्ननाय सर्वत्र च दृश्यमानः स एव प्रजहारेत्यपरोऽन्वयः । अतः क्रियाद्वयस्य न वैयर्थ्यम् ॥१८३-१८८॥

**मधुसूदनीया–** ॥ **स एव सर्वत्र च दृश्यमान इति** ॥ अत्र चशब्देन प्रमाणं सूचयति । तदुक्तम्– 'अन्योऽन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य च' इत्यादि रामायणे [६.९३.२५] । तथाचाऽयं श्लोकार्थः । दिक्षु विदिक्षु च अनेकरूपैर्दृश्यमानः सर्वत्र दृश्यमानः सर्वेषु तेष्वेव राक्षसेषु अन्योन्यमयं राम इति भ्रान्तिं जनयन् सर्वान् राक्षसान् जघानेति । यत्तु 'उपलक्षणमेतत् । अधश्च ऊर्ध्वं चेत्यपि ग्राह्यम्' इति व्याख्यानं तच्चिन्त्यम् । सर्वत्रेत्यनेनैव तयोरपि लाभात् । ननु सर्वत्रेत्यनेन राक्षसानां गृहीतत्वेन ऊर्ध्वादिदेशयोर्ग्रहणाऽयोग इति वाच्यम् । आवृत्त्या तद्ग्रहणोपपत्तेः । आवृत्त्यपेक्षयाऽध्याहारस्य गुरुत्वादिति ॥१८३-२०५॥

**वरदराजीया–** अथ रामो धनुः शरांश्च प्रगृह्य तान् निशाचरान् शरौघैः बाणसमूहैः समन्ततः सर्वतो अवधीत् जघान । समन्तत इत्येतत्स्पष्टमाह– **स एवेति** ॥ स राम एव सर्वत्र दिक्षु विदिक्षु च दृश्यमानः अनन्तानि रामरूपाणि प्रकटयित्वा सर्वशः सर्वान् जघान ॥१८३॥

**जनार्दनीया–** रामः धनुः शरांश्च प्रगृह्य, समन्ततोऽपि सर्वत्रापि तान् राक्षसान् शरौघैः शरसमूहैः स्वयमेव अवधीत् जघान । स्वयमेव समन्ततः अवधीत् इत्युक्तं विवृण्वन्नाह– **स एवेति** ॥ स एव राम एवेत्यर्थः । सर्वत्र सर्वासु दिक्षु विदिक्षु दृश्यमानः अनन्तरामस्वरूपेण दृश्यमानस्सन् सर्वशः सर्वान् राक्षसान् जघान ॥१८३॥

**ताम्रपर्णीया–** उक्तमेव अधिकं वदन् प्रपञ्चयति– **स एवेति** ॥ विदिक्षु दिक्षु सर्वत्र च । 'रामो धरण्यां गगने च रामः रामोऽन्तिके दूरतरे च रामः । रामो विपक्षे स्वबले च रामः सर्वत्र रामः क्व बभौ न रामः ॥' इति रामायणे [यु.का.१२-२३] ॥१८३-१९०॥

---

१. प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम् । इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ॥२३॥ इति ते राक्षसाः सर्वे रामस्य सदृशान् रणे । अन्योन्यं कुपिता जघ्नुः सादृश्यात् राघवस्य तु ॥२५॥ ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः । पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ॥२७॥ इति वाल्मीकीये [६.९३.]।

**चट्टी–** अथ श्रीरामः धनुः शरांश्च प्रगृह्य समन्ततः सर्वत्र तान् निशाचरान् शराणामोघैः समूहैः अवधीत् जघान । समन्ततः इत्येतत्स्पष्टमाह– **स एवेति** ।। स श्रीराम एव दिक्षु विदिक्षु चानेकरूपैः दृश्यमानः सर्वत्र च दृश्यमानः सर्वेषु तेष्वेव राक्षसेषु अन्योन्यमयं श्रीराम इति भ्रान्तिं जनयन् सर्वान् राक्षसान् प्रजघानेति । तच्चोक्तम्– 'अन्योऽन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य च' इत्यादि रामायणे [यु.का.९३.२५] ।।१८३।।

**प्रमाणसंग्रह–** ।। **स एव सर्वत्र च दृश्यमान इति** ।। 'अन्योन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य च' इत्यादि रामायणे । तथा चायं श्लोकार्थः । दिक्षु विदिक्षु । उपलक्षणमेतत् । अधश्चोर्ध्वश्चेत्यपि ग्राह्यम् । अनेकरूपैर्दृश्यमानः सर्वत्र दृश्यमानः सर्वेषु तेष्वेव राक्षसेषु अन्योन्यं अयं रामोऽयं इति भ्रान्तिं जनयंश्च सर्वशो राक्षसान् जघ्ने इति ।।१८३।।

**क्षणेन[1] सर्वांश्च निहत्य राघवः प्लवङ्गमानामृषभैश्च पूजितः ।**
**अभिष्टुतः[2] सर्वसुरोत्तमैर्मुदा भृशं प्रसूनोत्करवर्षिभिः प्रभुः ।।१८४।।**

**वरदराजीया–** राघवो रामः क्षणमात्रेण सर्वांश्च सर्वानपि विनिहत्य प्लवङ्गमानामृषभैः श्रेष्ठैः सुपूजितः सर्वैः सुरोत्तमैः मुदाभिष्टुतः । कथंभूतैः प्रसूनोत्कराणि सुपुष्पाणि वर्षतीति तथा तैः ।।१८४।।

**जनार्दनीया–** ऋषभैः श्रेष्ठैः सम्यक्पूजितः । प्रसूनानां पुष्पाणां उत्कराणि पुञ्जानि वर्षणशीलैः । 'स्यान्निकायः पुञ्जराशी तत्करः कूटमस्त्रियाम्' इत्यमरः । अभिष्टुतः संस्तुतोऽभूत् ।।१८४।।

**चट्टी–** प्रभुः राघवः श्रीरामः क्षणेन सर्वांश्च सर्वानपि राक्षसान् निहत्य प्लवङ्गमानां ऋषभैः श्रेष्ठैः सुपूजितः सम्यक्पूजितः भृशं प्रसूनानां पुष्पाणां उत्करान् पुञ्जान् वर्षतीति तथा तैः सर्वसुरोत्तमैः मुदा अभिष्टुतः संस्तुतोऽभूत् ।।१८४।।

**अथाऽययौ सर्वनिशाचरेश्वरो हतावशिष्टेन बलेन संवृतः ।**
**विमानमारुह्य च पुष्पकं त्वरन् शरीरनाशाय महाबलोद्धतः ।।१८५।।**

---

१. दिवसस्याष्टभागेन शरैरग्निशिखोपमैः । हतान्येकेन रामेण रक्षसां कामरूपिणाम् ।। इत्यादि वाल्मीकिवचनं तु मन्ददृशां दर्शनमनुसृत्य प्रवृत्तम् । आचार्यचरणास्तु पुराणान्तरेषु ग्रथितां क्षणमात्रे रावणमूलबलहननकथां निबबन्धुः । अतः न कोऽपि विरोधः । तथाहि नृसिंहे– ततः कृद्धो जगन्नाथो रामः कमललोचनः । रावणस्य बलं शिष्टं हस्त्यश्वरथराक्षसम् ।। हत्वा क्षणेन... ।। इत्यादि ५२.९३-९४ ।

२. ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । साधु साध्विति रामस्य तत् कर्म समपूजयन् ।। इति रामायणे [९३.३६] ।

**वरदराजीया–** अथानन्तरं सर्वनिशाचरेश्वरो रावणो हतेभ्योऽवशिष्टेन बलेन सेनया संवृतो युक्तः आययौ । पुष्पकं पुष्टिवर्धनं विमानं आरुह्य त्वरन् शरीरनाशायैव महायुधोद्धतः आययाविति सम्बन्धः ।।

**जनार्दनीया–** संवृतः युक्तः । पुष्पकं विमानम् । शरीरनाशाय स्वदेहनाशार्थम् । अनेन 'विमानं पुष्पकं तस्य जहाराक्रम्य रावणः । शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ।। यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति । अवमन्य गुरुं मां च क्षिप्रं त्वं न भविष्यसि ।।' इति शापं जानन्नपि तेनैव ययावित्युच्यते । पुष्पकं विमानं पुष्पकरथं यद्यपि समरोपयोगि न भवति, तथापि मदात् तेनैव ययौ । 'असौ पुष्परथश्चक्रयानं न समराय' इत्यमरः इति । यद्वा पुष्पकं पुष्टिकरत्वात् । 'पुष्पकं पुष्टिवर्धनम्' इति संग्रहोक्तेः । त्वरन् वेगेन आययौ ।।१८५।।

**चट्टी–** अथ अनन्तरं महता बलेन उद्धतः सर्वनिशाचरेश्वरो रावणः हतेभ्योवशिष्टेन बलेन सेनया च संवृतः युक्तः पुष्पकाख्यं विमानं आरुह्य शरीरनाशाय देहनाशार्थं त्वरन्नाययौ ।।१८५।।

**अतिविशद–** विमानमारुह्य च पुष्पकं त्वरन् इत्यत्र पुष्पकं विमानं युध्दयोग्यं न भवतीति जानन्नपि मदात्तदा आरुह्य रावणः ययाविति बोध्यम् । तदुक्तम्– 'असौ पुष्परथं चक्रयानं न समराय यत्' इत्युक्तत्वात् । 'विमानं पुष्पकं तस्य जहाराक्रम्य रावणः । शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ।। यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति । अवमन्य गुरुं मां च क्षिप्रं त्वं न भविष्यसि ।।' इति वचनात्कुबेरशापोऽपि रावणस्य बोध्यः ।।१८५-१९६।।

**विरूपनेत्रोऽप्यथ[1] यूपनेत्रस्तथा महापार्श्वमहोदरौ च ।**
**ययुस्तमावृत्य सहैव मन्त्रिणो मृतिं पुरोधाय रणाय यान्तम् ।।१८६।।**

**सत्याभिनवीया–** तत्रैव विरूपनेत्रोऽथ च यूपनेत्रस्तथा... इति श्लोके मृतिं पुरोधाय रणाय यान्तं इत्यस्य समीपकाले मरणं भविष्यतीति निश्चयं कृत्वा रणाय यान्तमित्यर्थः । एतेन समीपकाले मरणं भविष्यतीति निश्चयं कृत्वा रणाय यान्तमिति वक्तव्यम् । मृतिं पुरोधाय रणाय यान्तमिति कथनमनुपपन्नमिति दूषणं परिहृतम् । मृतिं पुरोधाय रणाय यान्तमिति वाक्यस्य समीपकाले मरणं भविष्यतीति निश्चयं कृत्वा रणाय यान्तमित्यर्थे तात्पर्याभ्युपगमात् ।।१८६।।

---

१. 'विरूपनेत्रोऽथ च' इति सत्याभिनवतीर्थीयपाठः । युद्धार्थं समवर्तन्त सचिवा रावणस्य ते । मारीचश्च प्रहस्तश्च महापार्श्वमहोदरौ । अकम्पनो निकुम्भश्च शुकः सारण एव च ।। संह्रादो धूमकेतुश्च महादंष्ट्रो घटोदरः । जम्बुमाली महाह्रादो विरूपाक्षश्च राक्षसः । इत्यादि वाल्मीकिवचनात् विरूपनेत्रादयो रावणसचिवा इति ज्ञायते । ७.२७.२७-२९.

**वरदराजीया–** विरूपनेत्रादयश्चत्वारो मन्त्रिणस्तं रावणं कथंभूतं मृतिं मरणं पुरः अग्रे निधाय रणाय यान्तं आवृत्य परिवार्य सहैव ययुः ।।१८६।।

**जनार्दनीया–** विरूपनेत्रादिमन्त्रिणः मृतिं पुरः पुरतो निधाय कृत्वा, रणाय यान्तं गच्छन्तं तं रावणं समावृत्य परिवार्य सहैव ययुः ।।१८६।।

**चट्टी–** अथ विरूपनेत्रादयः चत्वारो मन्त्रिणः मृतिं मरणं पुरोधाय पुरतो निधाय यान्तं गच्छन्तं रावणं समावृत्य परिवार्य सहैव ययुः ।।१८६।।

**अथास्य सैन्यानि निजघ्नुरोजसा समन्ततः शैलशिलाभिवृष्टिभिः ।**
**प्लवङ्गमास्तानभिवीक्ष्य वीर्यवान् ससार वेगेन महोदरो रुषा ।।१८७।।**

**वरदराजीया–** अथानन्तरं प्लवङ्गमाः ओजसा बलेन शैलानामभिवृष्टिभिर्वर्षणैः अस्य रावणसय सैन्यं समन्ततः सर्वतः निजघ्नुः । तान् हन्यमानान् वीक्ष्य वीर्यवान् महोदरो नाम मन्त्री वेगेन ससार ।।

**जनार्दनीया–** प्लवङ्गमाः ओजसा बलेन । अस्य रावणस्य । महोदरः तान् स्वबलनाशकान् प्लवङ्गमान् ।।१८७।।

**चट्टी–** अथ अनन्तरं प्लवङ्गमाः कपयो अस्य रावणस्य सैन्यानि ओजसा बलेन शैलानां शिलानां अभिवृष्टिभिः वर्षणैः समन्ततः सर्वतः निजघ्नुः । हन्यमानान् तान् वीक्ष्य वीर्यवान् महोदरः नाम मन्त्री रुषा कोपेन वेगेन ससार ।।१८७।।

**वीक्ष्यातिकायं तमभिद्रवन्तं स कुम्भकर्णोऽयमिति ब्रुवन्तः ।**
**प्रदुद्रुवुर्वानरवीरसङ्घास्तमाससादाऽशु सुतोऽथ वालिनः ।।१८८।।**

**वेदाङ्गतीर्थीया–** अतिकायं बृहच्छरीरम् । अथ वीरः सः वालिनः सुतः तिष्ठध्वमिति वदन् समासदन् । इदं विभीषिकामात्रं न यात [इति] ईरयन् वदन् महोदरस्याग्रतः पुप्लुव इति योजना ।।

**सत्याभिनवीया–** तत्रैव प्रदुद्रुवुर्वानरवीरसङ्घाः... इति सार्धश्लोकः । तस्यार्थः । वानरवीरसङ्घाः प्रदुद्रुवुः । अथ अनन्तरं वालिनः सुतः वीरः सः अङ्गदः इदं विभीषिकामात्रम् । अतः तिष्ठध्वं न यातेति वदन् तं महोदरं आशु आससाद । इन्द्रसुतात्मजः बली अङ्गदः इति ईरयन् विभीषिकामात्रमिदम् । अतः तिष्ठध्वं न यातेति वदन् महोदरस्य अग्रत एव पुप्लुवे इति । एतेन इतीरयन्नित्येतदिति वदन्नित्यनेन पुनरुक्तमिति दूषणस्यानवकाशः । कपीनां धैर्योत्पादनार्थं एकमेव वाक्यं द्विवारमुक्तमिति ज्ञापयितुं वदन्नित्येतत् द्विवारमुक्तमित्यभ्युपगमात् ।।१८८–१९०।।

**वरदराजीया–** अतिकायं स्थूलकायं अभिद्रवन्तं आभिमुख्येनोत्पतन्तं महोदरं दृष्ट्वा अयं स कुम्भकर्ण इति ब्रुवन्तो वानरवीराणां सङ्घाः प्रदुद्रुवुः । अथ वालिनः सुतोऽङ्गदो तं महोदरमाससाद ।।

**जनार्दनीया–** वानरवीराणां सङ्घाः अतिकायं महादेहं अभिद्रवन्तं अभियान्तं तं महोदरं वीक्ष्य, अयं पुरोवार्तिराक्षसः स कुम्भकर्णः । पूर्वं यो हतः स कुम्भकर्णः उत्थाय पुनरप्यागत इति ब्रुवन्तः सन्तः प्रदुद्रुवुः । अथ वीरः वालिनः सुतः सोऽङ्गदः तिष्ठध्वमिति कपीन् प्रतिवदन् सन्नाशु तं महोदरं आससाद ।।१८८।।

**चट्टी–** वानरवीराणां सङ्घाः समूहाः अतिकायं स्थूलदेहं अभिद्रवन्तं अभियान्तं तं महोदरं वीक्ष्य दृष्ट्वा अयं स कुम्भकर्णः पूर्वं यो हतः स उत्थाय पुनरप्यागत इति ब्रुवन्तः सन्तः प्रदुद्रुवुः ।।१८८।।

**वदन् स तिष्ठध्वमिति स्म वीरो विभीषिकामात्रमिदं न यात ।**
**इतीरयन्नग्रत एष पुप्लुवे महोदरस्येन्द्रसुतात्मजो बली ।।१८९।।**

**वादिराजीया–** वदन्स तिष्ठध्वमित्यत्र इदं विभीषिकामात्रमितीरयन् अतः कारणात् सर्वे वानराः तिष्ठध्वं न यातेति वदन् स इन्द्रसुतात्मज इति सम्बन्धः ।।१८९–१९१।।

**वरदराजीया–** किं कुर्वन् वीरः सः अङ्गदः हे कपयः तिष्ठध्वं स्थातव्यं न यात भवद्भिर्न गन्तव्यम् । इदं विभीषिकामात्रं भयप्रदर्शनमात्रं इति वदन् आससादेति सम्बन्धः । इतीरयन् वदन् बली इन्द्रसुतस्य वालिनः आत्मजो अङ्गदः महोदरस्याग्रतः पुप्लुवे उत्पपात ।।१८९।।

**जनार्दनीया–** तिष्ठध्वमित्युक्तेः कारणं विशदयति– **विभीषिकामात्रमिति** ।। इदं प्रदृश्यमानं शरीरं विभीषिकामात्रं भयजनकमात्रम् । अत एव न यात इतीरयन् वदन् बली इन्द्रसुतस्य वालिनः आत्मजः अङ्गदः महोदरस्य अग्रत एव पुरत एव । पुप्लुवे ।।१८९।।

**चट्टी–** अथ वीरो वालिनः सुतो अङ्गदः तिष्ठध्वमिति कपीन् प्रतिवदन् सन्नाशु तं महोदरं आशु समाससाद । तिष्ठध्वमित्युक्तेः कारणं विशदयति– **विभीषिकामात्रमिति** ।। इदं प्रदृश्यमानं शरीरं विभीषिकामात्रं भयजनकमात्रं न यात इतीरयन् वदन् बली इन्द्रसुतस्य वालिनः आत्मजः अङ्गदः महोदरस्य अग्रत एव पुरत एव पुप्लुवे ।।१८९।।

**अथो शरानाशु विमुञ्चमानं शिरः परामृश्य निपात्य भूतले ।**
**ममर्द पद्भ्यामभवद् गतासुर्महोदरो वालिसुतेन चूर्णितः ।।१९०।।**

**वरदराजीया–** अथानन्तरं शरान् बाणान् विमुञ्चमानं महोदरं आशु शिरः परामृश्य धृत्वा भूतले निपात्य पदाभ्यां ममर्द । वालिसुतेनाङ्गदेन चूर्णितो महोदरो ममार ।।१९०।।

**जनार्दनीया–** विमुञ्चमानं वर्षमाणं महोदरं शिरः परामृष्य स्पृष्ट्वा, केशान् धृत्वेत्यर्थः । भूतले निपात्य, पद्भ्यां पादाभ्यां ममर्द । अङ्गद इति शेषः । वालिसुतेन चूर्णितः पिष्टीकृतः महोदरः गतासुः गतप्राणः अभवत् ।।१९०।।

**चट्टी–** अथो अनन्तरं शरान् बाणान् विमुञ्चमानं वर्षमाणं महोदरं आशु शिरः परामृष्य स्पृष्ट्वा केशान् धृत्वेत्यर्थः । भूतले निपात्य पद्भ्यां ममर्द । अङ्गद इति शेषः । वालिसुतेन अङ्गदेन चूर्णितः महोदरः गतासुः गतप्राणः अभवत् ।।१९०।।

**अथो महापार्श्व उपाजगाम प्रवर्षमाणोऽस्य शराम्बुधाराः ।**
**प्रसह्य चाऽच्छिद्य धनुः करस्थं समाददे खड्गममुष्य सोऽङ्गदः ।।१९१।।**

**वरदराजीया–** अथ अनन्तरं महापार्श्वो मन्त्री अस्याङ्गदस्योपरीति शेषः । शररूपधाराः वर्षमाण उप समीपमाजगाम । सः अङ्गदो अमुष्य करस्थं हस्ते स्थितं धनुः प्रसह्य बलादाच्छिद्यामुष्य महापार्श्वस्य महाखड्गं समाददे गृहीतवान् ।।१९१।।

**जनार्दनीया–** अस्य अङ्गदस्य उपरि प्रवर्षमाणः । सोऽङ्गदः अमुष्य महापार्श्वस्य शराम्बुधाराः प्रसह्य सोढ्वा, करस्थं धनुः अच्छिद्य छित्वा, खड्गं महापार्श्वस्य कृपाणं समाददे जगृहे ।।१९१।।

**ताम्रपर्णीया–** आच्छिद्य स्वीकृत्य ।।१९१।।

**चट्टी–** अथ अनन्तरं महापार्श्वनामा मन्त्री अस्य अङ्गदस्य उपरि इति शेषः । शररूपाम्बुधाराः प्रवर्षमाणः सन् उप समीपमाजगाम । सः अङ्गदश्च अमुष्य महापार्श्वस्य करस्थं धनुः प्रसह्य बलादाच्छिद्य छित्वा । यद्वा अमुष्य शराम्बुधाराः प्रसह्य सोढ्वा धनुः छित्वा अमुष्य कृपाणं खड्गं समाददे जगृहे ।।

**गूढवाक्यार्थ–** आच्छिद्य स्वीकृत्य ।।१९१।।

**निगृह्य केशेषु निपात्य भूतले चकर्त वामांसत औदरं परम् ।**
**यथोपवीतं स तथा द्विधाकृतो ममार मन्त्री रजनीचरेशितुः ।।१९२।।**

**व्यासतीर्थीया–** उदरसम्बध्यौदरं दक्षिणभागस्थं वामांसतः परमौदरं चकर्तेति सम्बन्धः ।।

**वेदाङ्गतीर्थीया–** वामांसत वामांसात् उदरं आ उदरपर्यन्तं परं शत्रुं चकर्त ।।१९२-२०३।।

**वादिराजीया–** वामांसत औदरमित्यत्र सम्यगर्थे एकः आकारः मर्यादार्थे अपरः आकारः । एवं च आ आ उदरमिति स्थिते मर्यादार्थकोत्तराकारस्य 'आद्गुण' इति गुणे कृते ओदरमिति शब्दनिष्पत्तिः । उदरं

मर्यादीकृत्येत्यर्थः । पुनः सम्यगर्थकाकारात् 'वृद्धिरेचि' इति वृद्धौ कृतायां सत्यां औदरमिति भवति । सम्यगुदरं मर्यादीकृत्येत्यनेन उदरप्रान्तपर्यन्तं छेदोऽभूदिति लभ्यते । यथोपवीतमिति वदता वामांसाद्दक्षिणोदरप्रान्तपर्यन्तमिति सूचितम् ।।१९२-२०३।।

**वरदराजीया–** केशेषु प्रगृह्य भूतले निपात्य वामांसतः वामस्कन्धमारभ्य औदरं उदरसम्बन्धिनं परं वामात्परं अन्यं दक्षिणभागं तत्पर्यन्तं चकर्त न्यकृन्तत् । तदेव सोदाहरणं दर्शयति– **यथेति** ।। यथोपवीतं भवति तथा चकर्त । अनेन द्विधा कृतो रजनीचरेशितुः रावणस्य मन्त्री महापार्श्वी ममार मृतोऽभवत् ।।१९२।।

**जनार्दनीया–** अङ्गदः निपात्य, वामांसतः सव्यस्कन्धमारभ्य औदरं उदरसम्बन्धिनम् परं अन्यप्रदेशम् । दक्षिणकुक्षिपर्यन्तमित्यर्थः । उपवीतं ब्राह्मणादीनां वामांसाद्दक्षिणकुक्षिं व्याप्य यज्ञोपवीतं यथा तिष्ठति तथा तेन प्रकारेण चकर्त न्यकृन्तत । द्विधाकृतः अङ्गदेनेति शेषः । ममार मृतिं प्राप ।।१९२।।

**अनन्तभट्टीया–** वामांसत आरभ्येति शेषः । उदरसम्बन्धी औदरं कुक्षिमित्यर्थः । एतदेव सदृष्टान्तमाह– **यथेति** ।।१९२-२०४।।

**ताम्रपर्णीया–** औदरं आ उदरं औदरम् । वामांसतः वामांसं आरभ्य । ल्यब्लोपनिमित्ता पञ्चमी । परं दक्षिणं उदरं आ मर्यादीकृत्य चकर्त इत्यर्थः ।।१९२-२०४।।

**चट्टी–** अङ्गदः तं केशेषु प्रगृह्य भूतले निपात्य वामांसतः वामस्कन्धमारभ्य औदरं उदरसम्बन्धिनं परं अन्यप्रदेशं वामादन्यप्रदेशं दक्षिणकुक्षिपर्यन्तमित्यर्थः । उपवीतं ब्राह्मणादीनां वामांसाद्दक्षिणकुक्षिं प्राप्य यथा तिष्ठति तथा तेन प्रकारेण चकर्त न्यकृन्तत् । अङ्गदेन द्विधाकृतः रजनीचरेशितुः रावणस्य मन्त्री सः महापार्श्वः ममार । यद्वा वामांसतः औदरं परमित्यत्र वामांसतः आ उदरमिति पदच्छेदः । वामांसतः वामस्कन्धमारभ्य परमुदरं आ दक्षिणोदरपर्यन्तमिति योजना । प्रथम आकारस्य आरभ्येत्यर्थः द्वितीय आकारस्य पर्यन्तमित्यर्थः इति ।।१९२।।

**गूढवाक्यार्थ–** औदरं आ उदरं वामांसतः वामांसमारभ्य ल्यब्लोपनिमित्ता पञ्चमी । परं दक्षिणमुदरं आ मर्यादीकृत्य चकर्तेत्यर्थः ।।१९२।।

**अथैनमाजग्मतुरुद्यतायुधौ विरूपनेत्रोऽप्यथ यूपनेत्रः ।**
**यथैव मेघौ दिवि तिग्मरश्मिं तथा समाच्छादयतां शरौघैः ।।१९३।।**

**वरदराजीया–** अथानन्तरं विरूपनेत्रो यूपनेत्रश्चेत्युभौ उद्यतं ऊर्ध्वं आयुधं ययोस्तौ एनं अङ्गदं आजग्मतुः । दिवि तिग्मा उष्णा रश्मयो यस्य तं सूर्यं मेघो यथा शरौघैः तमाच्छादयतां आच्छादितवन्तौ ।।

**जनार्दनीया–** एनं अङ्गदं प्रति । यथैव मेघौ दिवि तिग्मरश्मिं तीक्ष्णकिरणं सूर्यं आच्छादयतः तथा अङ्गदं शरौघैः समाच्छादयताम् ।।१९३।।

**चट्टी–** अथ अनन्तरं विरूपनेत्रः अथ यूपनेत्रश्चेत्युभौ उद्यते आयुधे याभ्यां तौ तथाभूतौ एनं अङ्गदं आजग्मतुः । मेघौ दिवि आकाशे तिग्मरश्मिं तीक्ष्णकिरणं सूर्यं यथा तथा अङ्गदं शरौघैः बाणसमूहैः समाच्छादयतां आच्छादितवन्तौ ।।१९३।।

**ताभ्यां स बद्धश्शरपञ्जरेण विचेष्टितुं नाशकदत्र वीरः ।**
**हरीश्वरश्शैलमतिप्रमाणमुत्पाट्य चिक्षेप तयोश्शरीरे ।।१९४।।**

**वरदराजीया–** ताभ्यां विरूपनेत्रयूपनेत्राभ्यां शरपञ्जरेण बाणमयपञ्जरेण बद्धो वानरो अङ्गदो अत्र शरपञ्जरे विचेष्टितुं नाशकत् न शक्तोऽभूत् । हरीश्वरः सुग्रीवो अतिप्रमाणं अतिक्रान्तं मानं यस्मात्तं शैलं उत्पाट्य तयोः शरीरे चिक्षेप क्षिप्तवान् ।।१९४।।

**जनार्दनीया–** ताभ्यां विरूपनेत्रयूपनेत्राभ्यां अत्र रणमण्डले बद्धः सः वीरोऽङ्गदः विचेष्टितुं हस्तपादादिचलनव्यापारं कर्तुं नाशकत् समर्थो न बभूव । अतिप्रमाणं अतिस्थूलमित्यर्थः । उत्पाट्य, शरीरे चिक्षेप ।।१९४।।

**चट्टी–** ताभ्यां विरूपनेत्रयूपनेत्राभ्यां अत्र रणमण्डले शरपञ्जरेण बाणमयपञ्जरेण बद्धः स वीरो अङ्गदः विचेष्टितुं हस्तपादादिचलनव्यापारं कर्तुं नाशकत् समर्थो न बभूव । हरीश्वरः सुग्रीवः अतिप्रमाणं अतिस्थूलमित्यर्थः । शैलमुत्पाट्य तयोः शरीरे चिक्षेप ।।१९४।।

**उभौ च तौ तेन विचूर्णितौ रणे रवेः सुतस्योरुबलेरितेन ।**
**निशाचरेशोऽथ शरेण सूर्यजं बिभेद वक्षस्यपि सोऽपतद् भुवि ।।१९५।।**

**वरदराजीया–** तेन पर्वतेन रवेः सुतस्य सुग्रीवस्य उरुबलेनेरितेन नुन्नेनोभौ विरूपनेत्रयूपनेत्रौ विचूर्णितौ बभूवतुः । अथानन्तरं निशाचरेशो रावणः शरेण सूर्यजं सुग्रीवं वक्षसि हृदयप्रदेशे विभेद भेदितवान् । स सुग्रीवोऽपि भुवि भूमौ अपतत् पपात ।।१९५।।

**जनार्दनीया–** रवेः सुतस्य सुग्रीवस्य उरुबलेन उत्कृष्टबलेन ईरितेन प्रेरितेन पर्वतेन । अथ निशाचरेशो रावणः । सोऽपि सुग्रीवोऽपि अपतत् ।।१९५।।

**चट्टी–** रवेः सुतस्य सुग्रीवस्य उरुबलेन उत्कृष्टबलेन ईरितेन प्रेरितेन तेन पर्वतेन तावुभौ च विरूपनेत्रयूपनेत्रौ रणे विचूर्णितौ बभूवतुः । अथ निशाचरेशो रावणः शरेण सूर्यजं सुग्रीवं वक्षसि हृदये बिभेद । सः सुग्रीवोऽपि भुवि भूमौ अपतत् ।।१९५।।

**ततस्तु सर्वांश्च हरिप्रवीरान् विधूय बाणैर्बलवान् दशाननः ।**
**जगाम रामाभिमुखस्तदैनं रुरोध रामावरजः शरौघैः ।।१९६।।**

**वरदराजीया–** ततस्तदनन्तरं स च बलवान् दशाननो रावणः सर्वान् कपिवीरान् बाणैर्विधूय रामाभिमुखो भूत्वा जगाम । तदा रामावरजो लक्ष्मणः एनं रावणं शरौघैः बाणसमूहैः रुरोध रोधितवान् ।।

**जनार्दनीया–** विधूय विद्राव्य । तदा एनं रावणं रुरोध ।।१९६।।

**चट्टी–** ततस्तदनन्तरं बलवान् दशाननो रावणश्च सर्वान् कपिप्रवरान् च बाणैः विधूय विद्राव्य श्रीरामाभिमुखः सन् जगाम । तदा श्रीरामावरजो लक्ष्मणो एनं रावणं शरौघैः बाणसमूहैः रुरोध ।।

**तदा दशास्योऽन्तकदण्डकल्पां मयाय दत्तां कमलोद्भवेन ।**
**मयाद्[१] गृहीतां च विवाहकाले प्रगृह्य शक्तिं विससर्ज लक्ष्मणे ।।१९७।।**

**वरदराजीया–** तदा दशास्यो रावणान्तकस्य यमस्य दण्डेन समानां कमलोद्भवेन ब्रह्मणा मयाय दैत्याय दत्तां मयात् विवाहकाले रावणेन गृहीतां मयकन्यायाः मण्डोदर्याः परिणयनकाले मयेन दत्तामिति भावः । तादृशीं शक्तिं प्रगृह्य लक्ष्मणे विससर्ज क्षिप्तवान् ।।१९७।।

---

१. 'इत्येवमुक्त्वा तां शक्तिं अष्टघण्टां महास्वनाम् । मयेन मायाविहितां अमोघां शत्रुघातिनीम् ।। इति आर्षे रामायणे ६.१००.३० ।
मयेन रावणाय दत्ता शक्तिः शत्रून् पातयित्वा पुनः रावणरथे स्वस्थानप्रापणस्वभावा इति रामायणटिप्पण्यां गोविन्दराजः । तां शक्तिं प्राणहरणसङ्कल्पेन रावणः लक्ष्मणं प्रति अमुञ्चत् । तथाहि रावणसङ्कल्पः - एषा ते हृदयं भित्वा शक्तिः लोहितलक्षणा । मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति ।। इति । [यु.का.१००.२९] अचिन्त्यशक्तिः रामः लक्ष्मणे आपतन्तीं तां केवलं स्ववचनेन मोघांचकार । तेन लक्ष्मणः मूर्च्छां अवाप । न ममार । तस्मिन् समये रामवाक्यं - तामनुव्याहरच्छक्तिमापतन्तीं स राघवः । स्वस्त्यस्तु लक्ष्मणायेति मोघा भव हतोद्यमा ।। इति [१००.३३] रामः स्ववाक्येन तां बलहीनां चकार । तेन सा लक्ष्मणशरीरे एव लग्नाभूत् । न पुनः रावणरथं प्राप । रामः तां लक्ष्मणशरीरात् विकृष्य बभञ्ज । तथा हि- तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम् । बभञ्ज समरे क्रुद्धो बलवान् विचकर्ष च ।। [१००.४३] ।

**जनार्दनीया**— तदा दशास्यः अन्तकोपमः तस्य दण्डः तेन कल्पां सदृशीम् । कमलोद्भवेन मयाय दैत्यतक्षकमयाय दत्ताम् । विवाहकाले मयकन्यापरिणयनकाले मयात् गृहीतां स्वेन स्वीकृतां शक्तिं प्रगृह्य, लक्ष्मणे विससर्ज प्राक्षिपत् । तदुक्तमार्षे [उ.का.१२.२१] 'अमोघां तस्य शक्तिं वै प्रददौ परमाद्भुताम् । परेण तपसा लब्धां जघ्निवान् लक्ष्मणं यया ।।' ।।१९७।।

**चट्टी**— तदा दशास्यः रावणः अन्तकस्य यमस्य दण्डेन कल्पां सदृशीं कमलोद्भवेन ब्रह्मणा मयाय दैत्यतक्षकाय दत्ताम्, मयाच्च विवाहकाले स्वेन गृहीताम्, मयकन्यायाः मण्डोदर्याः विवाहकाले मयेन दत्तामिति भावः । तादृशीं शक्तिं प्रगृह्य लक्ष्मणे विससर्ज ।।१९७।।

**अतिविशद**— मयाद्गृही..लक्ष्मण इत्यत्र 'अमोघां तस्य शक्तिं च प्रददौ परमाद्भुताम् । परेण तपसा लब्धां जघ्निवान् लक्ष्मणं यया ।।' इति ।।१९७–२०८।।

**तया स वीरः सुविदारितोराः पपात भूमौ सुभृशं विमूर्च्छितः ।**
**मरुत्सुतः शैलमतिप्रमाणं चिक्षेप रक्षःपतिवक्षसि द्रुतम् ।।१९८।।**

**वरदराजीया**— सः वीरो लक्ष्मणः तया शक्त्या सम्यक् विदारितं उरो हृदयं यस्य स तथा विमूर्च्छितः मूर्च्छां प्राप्तः सन् भूमौ पपात । मरुत्सुतो मुख्यप्राणसुतो हनूमानतिक्रान्तप्रमाणं मानं यस्मात्तं अतिस्थूलमिति यावत् । शैलं पर्वतं वेगेन रक्षःपतेः रावणस्य वक्षसि हृदये चिक्षेप क्षिप्तवान् ।।१९८।।

**जनार्दनीया**— तया शक्त्या सुतरां विदारितं उरः वक्षो यस्य स तथा । सुभृशं अतितरां विमूर्च्छितः सः लक्ष्मणः पपात । अतिप्रमाणं अत्युन्नतम् ।।१९८।।

**चट्टी**— वीरः सः लक्ष्मणः तया शक्त्या सुतरां विदारितं उरः वक्षो यस्य स तथा सुभृशं अतितरां विमूर्च्छितः सन्ः भूमौ पपात । मरुत्सुतो हनुमानतिप्रमाणं अत्युन्नतं शैलं द्रुतं वेगेन रक्षःपतेः रावणस्य वक्षसि हृदये चिक्षेप ।।१९८।।

**तेनातिगाढं व्यथितो दशाननो मुखैर्वमञ्छोणितपूरमाशु ।**
**तदन्तरे स प्रतिगृह्य लक्ष्मणं जगाम शक्त्या सह रामसन्निधिम् ।।१९९।।**

**वरदराजीया**— दशाननो आशु रावणः शोणितपूरं रक्तप्रवाहं मुखैर्वमन् तेन पर्वतेनातिगाढं व्यथितोऽभूत् । तदन्तरे तस्यान्तरे मध्ये लक्ष्मणं प्रतिगृह्य शक्त्या सह रामसन्निधिं जगाम हनूमानिति शेषः ।।१९९।।

**जनार्दनीया–** तेन पर्वतेन । अतिगाढं अतिदृढं यथा भवति तथा । व्यथितः व्यथां प्राप्तः दशाननः मुखैः शोणितस्य पूरः प्रवाहः, तं वमन् उद्गिरन् अभूदिति शेषः । तदन्तरे हनूमानित्यध्याहारः । लक्ष्मणं शक्त्या सह प्रतिगृह्य, रामस्य सन्निधिं समीपं जगाम ॥१९९॥

**चट्टी–** तेन पर्वतेन अतिगाढं अतिदृढं यथा स्यात् तथा व्यथितः व्यथां प्राप्तः दशाननः आशु मुखैः शोणितस्य रक्तस्य पूरः प्रवाहं वमन् उद्गिरन् अयात् । तदन्तरे रक्तवमनमध्ये हनूमानिति शेषः । लक्ष्मणं शक्त्या सह प्रतिगृह्य रामस्य सन्निधिं जगाम ॥१९९॥

**गूढवाक्यार्थ–** शोणितपूरं शोणितसमूहम् ॥१९९॥

**समुद्बबर्हाथ च तां स राघवो दिदेश च प्राणवरात्मजं पुनः ।**
**प्रभुः[1] समानेतुमथो वरौषधीः स चाऽनिनायाऽशु गिरिं पुनस्तम् ॥२००॥**

**वरदराजीया–** अथ च राघवो रामः तां शक्तिं समुद्बबर्ह उत्पाटितवान् । पुनः प्रभुः समर्थो रामो वरौषधीः उत्तमौषधीः समानेतुं आनयितुं प्राणवरस्य मुख्यप्राणस्यात्मजं हनूमन्तं दिदेश प्रेरितवान् । स च हनूमान् पुनस्तं गन्धमादनं गिरिं आनीतवान् ॥२००॥

**जनार्दनीया–** तां शक्तिं समुद्बबर्ह उत्पाटयामास । अथ शक्त्युत्पाटनानन्तरं प्रभुः औषधीः विनैव निरोगकरणे समर्थो रामः । पुनः वरौषधीः समानेतुं आनयितुं, प्राणवरो वायुः, तस्यात्मजं हनूमन्तं दिदेश । स च हनूमान् तं गिरिं गन्धमादनपर्वतं आशु निमेषमात्रेण आनिनाय आनीतवान् ॥२००॥

**चट्टी–** अथ च राघवः तां शक्तिं समुद्बबर्ह उत्पाटयामास । अथ अनन्तरं प्रभुः औषधीः विनैव तेषां निरोगकरणे समर्थोऽपि श्रीरामः पुनः वरौषधीः समानेतुं प्राणवरो वायुः तस्यात्मजं हनूमन्तं दिदेश । स च हनूमान् तं गिरिं गन्धमादनपर्वतं आशु निमेषमात्रेण पुनः आनिनाय आनीतवान् ॥२००॥

**भारतश्री–** ॥ **दिदेश च प्राणवरात्मजं पुनः इति** ॥ इदानीं नियोक्तुकामेन रामेण पूर्वं न नियुक्तः अतस्तदा जाम्बवान् प्रेषयामासेति ज्ञातव्यम् ॥२००॥

**तद्गन्धमात्रेण समुत्थितोऽसौ सौमित्रिरात्तोरुबलश्च पूर्ववत् ।**
**शशंस चाश्लिष्य मरुत्सुतं प्रभुः स राघवोऽगण्यगुणार्णवः स्मयन् ॥२०१॥**

---

१. 'इत्युक्ते हनुमान् राजन् वीरो विख्यातपौरुषः । बद्ध्वाञ्जलिं बभाषेदं हेह्यनुज्ञां स्थितोऽस्मि भोः ॥ रामः प्राह महावीर विशल्यकरणीं मम । अनुजं विरुजं शीघ्रं कुरु मित्र महाबल ॥ ततो वेगात्समुत्पत्य गत्वा द्रोणगिरिं कपिः । बद्ध्वा च शीघ्रमानीय लक्ष्मणं नीरुजं क्षणात् ॥ चकार देवदेवेशैः पश्यतां राघवस्य च ॥' इति नृसिंहपुराणे [५२.८८-९२] ।

**वरदराजीया–** तस्य पर्वतस्य गन्धमात्रेण सौमित्रिः लक्ष्मणः समुत्थितोऽभूत् । स पूर्ववत् आत्तं प्राप्तं उरुबलं येन स तादृशश्चाभवत् । अगण्यैरनन्तैरर्णव इव प्रभुः समर्थः स राघवः स्मयन् मन्दस्मितः सन् मरुत्सुतं समाश्लिष्य शशंस च । अनन्तबलपराक्रमः समर्थोऽपि रामो हनूमत्सेवां गृहीतुं एवं कृतवानिति भावः ।।२०१।।

**जनार्दनीया–** सौमित्रिः लक्ष्मणः तासां औषधीनां गन्धमात्रेण पूर्ववत् आत्तोरुबलः सन् समुत्थितश्चाभूदित्यर्थः । राघवः स्मयन् स्मितं कुर्वन् मरुत्सुतं आश्लिष्य शशंस ।।२०१।।

**चट्टी–** तासां औषधीनां गन्धमात्रेण परिमलमात्रेणैव सौमित्रिः पूर्ववत् आत्तं उरुबलं येन सः तथाभूतस्सन् समुत्थितोऽभवत् । अगण्यैरनन्तैः गुणैः अर्णवः इव प्रभुः सः राघवः स्मयन् मन्दस्मितं कुर्वन् मरुत्सुतं आश्लिष्य शशंस ।।२०१।।

**प्राक्षिपत् तं गिरिवरं लङ्कास्थः सन् स मारुतिः ।**
**अर्धलक्षे योजनानां यत्रासौ पूर्वसंस्थितः ।।२०२।।**

**वरदराजीया–** स मारुतिः लङ्कास्थः सन् लङ्कायां विद्यमान एव तं गिरिवरं गन्धमादनं योजनानामर्धलक्षपञ्चाशत्सहस्रव्यवहितदेशे यत्र पूर्वं स्थितः तत्राक्षिपत् ।।२०२।।

**जनार्दनीया–** स मारुतिः लङ्कायां तिष्ठतीति लङ्कास्थः । लङ्कायां वर्तमानः सन्नेव योजनानां अर्धलक्षे अर्धलक्षयोजनव्यवधानप्रदेशे । असौ पर्वतखण्डः । यत्र गन्धमादनपर्वतस्य यस्मिन् भागे पूर्वसंस्थितः तत्र तस्मिन् प्रदेशे तं गिरिवरं प्राक्षिपत् चिक्षेप । गन्धमादनपर्वतावयवत्वात् गन्धमादनपर्वत इति प्रसिद्धिरिति द्रष्टव्यम् । गन्धमादनः मेरुसमीपस्थत्वात् लङ्कायाः पञ्चाशत्सहस्रयोजनव्यवहितवानिति भावः ।।२०२।।

**चट्टी–** स मारुतिः हनुमान् लङ्कायां तिष्ठतीति लङ्कास्थः सन्नेव योजनानां अर्धलक्ष्ये पञ्चाशत्सहस्रयोजनव्यवहितदेशे, यत्र गन्धमादनपर्वतस्य यस्मिन् भागे असौ पर्वतैकदेशः पूर्ववत् स्थितः तत्र तस्मिन् प्रदेशे तं गिरिवरं प्राक्षिपत् । गन्धमादनपर्वतावयवत्वात् गन्धमादनपर्वत इति प्रसिद्धिरिति द्रष्टव्यम् । गन्धमादनस्य मेरुसमीपस्थत्वात् लङ्कायाः पञ्चाशत्सहस्रयोजनव्यवधानमिति भावः । यद्वा सः मारुतिः लङ्कास्थस्सन् तद्गिरिवरं प्राक्षिपत् । कुत्र प्राक्षिपदित्यत आह– **अर्धलक्षमिति** ।। योजनानां अर्धलक्षव्यवधानप्रदेशे यत्र गन्धमादने असौ पर्वतखण्डः पूर्ववद् स्थितोऽभूदिति शेषः ।।२०२।।

**तद्बाहुवेगात् संश्लेषं प्राप पूर्ववदेव सः ।**
**मृताश्च ये प्लवङ्गास्तु तद्गन्धात् तेऽपि जीविताः ॥२०३॥**

**वरदराजीया–** स पर्वतस्तस्य हनूमतो बाहुवेगात् पूर्ववत् पूर्वं यथा संश्लिष्टोऽभूत् तथा संश्लेषं सम्बन्धं प्राप । ये प्लवङ्गमा वानराः मृताः युद्धे तेऽपि तस्य पर्वतस्य गन्धाज्जीविताः जीवनं प्राप्ताः । तत्रापि मृतसञ्जीविन्या उज्जीविता इत्यर्थः ॥२०३॥

**जनार्दनीया–** स पर्वतः तस्य हनुमतः बाहुवेगान्निमित्तात् संश्लेषं सम्यक्सम्बन्धं पूर्ववत् प्राप । ये प्लवङ्गाः युद्धे मृताः तेऽपि प्लवङ्गमाः तासां औषधीनां गन्धात् परिमलात् जीवितास्तु जीवनं प्राप्ता एव ॥

**चट्टी–** स पर्वतः तस्य हनुमतः बाहुवेगान्निमित्तात् पूर्ववत् संश्लेषं सम्यक्सम्बन्धं प्राप । ये प्लवङ्गमाः वानराः युद्धे मृताः ते सर्वेऽपि तासां औषधीनां गन्धात् परिमलादेव जीविताः जीवनं प्राप्ता न तु राक्षसाः ॥२०३॥

**रामाज्ञयैव[१] रक्षांसि हरयोऽब्धाववाक्षिपन् ।**
**नोज्जीवितास्ततस्ते तु वानरा निरुजोऽभवन् ॥२०४॥**

**व्यासतीर्थीया–** मृतराक्षसास्तद्वधात् कस्मान्नोज्जीविता इत्यत आह– **रामेति** ॥ तुशब्दो अवधारणे वानरा एवोज्जीविता इति ॥२०४॥

**वेदाङ्गतीर्थीया–** ते त्वेव राक्षसा एव । वानरास्तु [निरुजः] न रुग्णाः ॥२०४-२०७ ॥

**वादिराजीया–** रामाज्ञयैव रक्षांसीत्यत्र उपरि गिर्यानयने वृत्ते सति हतानां रक्षसामप्युज्जीवनं स्यादिति भविष्यदर्थं सर्वज्ञत्वाज्जानन् रामः आज्ञापयामास । वानरास्त्वसर्वज्ञत्वाद्विविच्य तदजानानाः रामाज्ञयैव अब्धाववाक्षिपन्नित्येवकाराभिप्रायः ॥२०४॥

---

१. 'पर्वतोद्भववल्लीनां अवघ्रायामृतोपमम् । सगन्धं जीवयिष्यन्ति राक्षसाश्चेति शङ्कया ॥ निहतान् राक्षसान् सर्वान् तदा तार्क्ष्यविभीषणौ । चिक्षेपतुः सागरे तान् राघवस्याज्ञया क्षणात् ॥' इति आनन्दरामायणम्. सारकाण्डम्. ११.२५.२६। रामायणे तु– ६.७४.७५-७६ रावण एव राक्षसानां इयत्तायाः अपरिज्ञानार्थं वा, मृतशरीर-संख्याप्रतिपत्त्यर्थं वा, परैः परिच्छिद्य ज्ञानं मा भूदिति वा राक्षसदेहान् सागरे पातयामास इत्युक्तम् । तथाहि– 'यदा प्रभृति लङ्कायां युद्ध्यन्ते कपिराक्षसाः । तदा प्रभृति मानार्थं आज्ञया रावणस्य च ॥ ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः । हता हतास्तु क्षिप्यन्ते सर्व एव तु सागरे ॥' इति ।

**वरदराजीया–** तेनैव मृतसञ्जीविनीगन्धेन मृतराक्षसा अपि किमिति न जीविता इत्यत आह– **रामाज्ञयेति** ।। हि यस्मात्कारणाद्धरयो वानरा रामाज्ञया रामस्याज्ञया रक्षांसि मृतानि सर्वाणि अब्धौ समुद्रे अवाक्षिपत् चिक्षिपुः । तत्तस्मात्कारणात् ते राक्षसाः नोज्जीविताः । वानरास्तु निरुजो रोगरहिता अभवन् ।।२०४।।

**जनार्दनीया–** ननु तद्गन्धाद् राक्षसाः किमर्थं जीवनं न प्रापुरित्यत आह– **रामाज्ञयेति** ।। रामाज्ञया हरयः रक्षांसि मृतराक्षसान् हि यतः अब्धौ अवाक्षिपन् विचिक्षिपुः पूर्वमेवेति शेषः । ततः कारणात् ते राक्षसाः नोज्जीविताः । वानरास्तूज्जीविताः । न केवलं उज्जीवनमात्रं किन्तु निरुजः । छान्दसत्वात् ह्रस्वः । निरुजः नीरोगः । रोगरहिता इति यावत् । अभवन् । इन्द्रजितः युद्धे वानरार्थं गन्धमादनानयनात् पूर्वमेव वानराः मृतराक्षसानब्धौ अवाक्षिपन् । तदनन्तरमपि मृतराक्षसान् लक्ष्मणार्थं गन्धमादनानयनात् पूर्वं अब्धौ अवाक्षिपन्निति द्रष्टव्यम् । तस्मात् राक्षसाः जीवनं न प्रापुरिति भावः ।।२०४।।

**चट्टी–** ननु तद्गन्धादेव राक्षसाः कुतो न जीवनं प्राप्ता इत्यत आह– **रामाज्ञयेति** ।। हि यस्मात् हरयः वानराः श्रीरामाज्ञया रक्षांसि मृतराक्षसान् अब्धौ समुद्रे अवाक्षिपन् विचिक्षिपुः । पूर्वमेवेति शेषः । ततः कारणात्ते राक्षसाः नोज्जीविताः । वानरास्तु वानरा एव उज्जीविताः । न केवलं उज्जीवनमात्रं किन्तु निरुजः नीरोगः रोगरहिता इति यावत् अभवन् । इन्द्रजितः युद्धे वानरार्थं गन्धमादनानयनात् पूर्वमेव वानराः मृतराक्षसानब्धौ अवाक्षिपन् । तदनन्तरमपि लक्ष्मणार्थं गन्धमादनानयनात् पूर्वं एव मृतराक्षसान् अब्धौ अवाक्षिपन्निति द्रष्टव्यम् । तस्मात् राक्षसाः न जीवनं प्रापुरिति भावः ।।२०४।।

**छिन्नप्रोहिणश्चैव विशल्याः पूर्ववर्णिनः ।**
**औषधीनां प्रभावेन सर्वेऽपि हरयोऽभवन् ।।२०५।।**

**व्यासतीर्थीया–** निरुजाश्चाभवन् कथम्– **छिन्नप्रोहिण इति** ।। एवमौषधीनां प्रभावेन सर्वेऽपि हरयो निरुजोऽभवन् ।।२०५-२११।।

**वादिराजीया–** छिन्नप्रोहिणश्चैवेत्यत्र छिन्नस्यावयवखण्डस्य प्ररोहः पूर्वावयवे आरोहः पूर्ववदवयवे आरोहः सन्धानं येभ्यस्ते छिन्नप्ररोहिण इत्यर्थः । एवञ्च सन्धानकरण्याख्यौषधसत्वमनेनोक्तं भवति ।।

**वरदराजीया–** न केवलं मृतसञ्जीविन्या मृता एवोज्जीविताः किं तु सन्धानकरिण्या छिन्नप्रोहिणः अपि जाताः । छिन्नस्य हस्तपादादेः पुनःप्ररोहो वृद्धिः येषु ते तथा । विशल्यकरण्या शल्यरहिताः सवर्णकरिण्या पूर्ववर्णवन्तश्च जाता इत्याह– **विशल्या इति** ।। केन जाता ओषधीनां मृतसञ्जीविनीमुख्यानां प्रभावेन सामर्थ्येन सर्वेऽपि हरयः कपयो अभवन् छिन्नप्ररोह्याद्यो अभवन्नित्यर्थः ।।२०५।।

**जनार्दनीया–** निरुजोऽभवन्नित्युक्तं स्पष्टयति– **छिन्नेति** ।। सर्वेऽपि हरयः औषधीनां प्रभावेन सामर्थ्येन छिन्नानां अवयवानां प्ररोहः उद्भवो येषां ते तथा । विशल्याः विनिःसृतशल्याः । पूर्ववद् वर्णो विद्यते येषां ते तथा । एतादृशाः अभवन् ।।२०५।।

**अनन्तभट्टीया–** छिन्नप्ररोहिणो भवन्तीति सम्बन्धः ।।२०५-२१७।।

**ताम्रपर्णीया–** छिन्नप्ररोहिणः छिन्नस्यावयवखण्डस्य प्ररोहः । पूर्वावयव एव रोहः सन्धानं येषां सन्ति इति छिन्नप्ररोहिणः ।।२०५-२११।।

**चट्टी–** निरुजत्वं स्पष्टयति– **छिन्नेति** ।। सर्वेऽपि हरयः ओषधीनां प्रभावेन सामर्थ्येनैव छिन्नेषु अवयवेषु प्ररोहः उद्भवो येषां अस्तीति छिन्नप्ररोहिणः । यद्वा छिन्नस्यावयवस्य प्ररोहः पूर्वावयवे आरोहः सन्धानं एषामस्तीति तथा । विशल्याः विनिःसृतशल्याः । पूर्ववर्णो येषां अस्तीति पूर्ववर्णिनश्च अभवन् ।।

**गूढवाक्यार्थ–** छिन्नप्ररोहिणः छिन्नस्यावयवखण्डस्य प्ररोहस्सन्धानं येषां सन्तीति छिन्नप्ररोहिणः । औषधीनां मृतसञ्जीविनीसन्धानकरिणीविशल्यकरिणीसवर्णकरिण्याख्यौषधीनाम् ।।२०५।।

**अथाससादोत्तमपूरुषं प्रभुं [१]विमानगो रावण आयुधौघान् ।**
**प्रवर्षमाणो रघुवंशनाथं तमात्तधन्वाऽभिययौ स राघवः ।।२०६।।**

**मधुसूदनीया–** ।। **अथाससादेति** ।। 'पश्यतां सुमहद्युद्धं सप्तरात्रमवर्तत' [यु.का.१०७.६५] इत्यादि रामायणे ।।२०६–२११।।

**वरदराजीया–** अथानन्तरं उत्तमपूरुषं पुरुषोत्तमं प्रभुं समर्थं रामं आयुधानामोघान् समूहान् प्रवर्षमाणो विमानगो विमानारूढो रावणः आससाद प्राप्तवान् । रघुवंशनाथो रामः आत्तधन्वा उन्नमितचापस्तं रावणमभिययौ ।।२०६।।

**जनार्दनीया–** रघोः रघुनाम्नोः राज्ञः वंशस्य नाथं सर्वेश्वरं रामं आससाद प्राप । आत्तधन्वा गृहीतधनुः स रामः तं रावणं प्रति अभिययौ ।।२०६।।

---

१. अत्र भारतपद्मपुराणरामायणादिषु सर्वत्र अन्तिमयुद्धकाले रावणः रथमारुह्य आगत इत्येव श्रूयते । नतु पुष्पके । तथा भागवतेऽपि 'आरुह्य यानकमथाभिससार रामम्' इत्युपक्रम्यते । उपसंहारे रावणमरणकाले तु 'सोऽसृग् वमन् दशमुखैर्न्यपतद् विमानात्' इति विमानात् न्यपतदित्युच्यते । तथाच तदनुसारेण 'विमानगो रावण आयुधौगान्' इति पुष्पक एव युद्धार्थं गत इत्याचार्योक्तिः सङ्गच्छते ।

**चट्टी–** अथ अनन्तरं उत्तमपूरुषं पुरुषोत्तमं प्रभुं समर्थं श्रीरामं आयुधानां ओघान् समूहान् प्रवर्षमाणो विमानगो विमानारूढः रावणः आससाद प्राप्तवान् । रघुवंशनाथः श्रीरामः आत्तधन्वा गृहीतचापः तं रावणं अभिययौ । तदुक्तम्– 'पश्यतां सुमहद्युद्धं सप्तरात्रमवर्तत' [यु.का.१०७.६५] इत्यादि रामायणे ॥२०६॥

**प्रमाणसंग्रह–** ॥ **अथाससादेति** ॥ 'पश्यतां सुमहद्युद्धं सप्तरात्रमवर्तत' इति रामायणे ॥२०६॥

**सम्मानयन् राघवमादिपूरुषं निर्यातयामास रथं पुरन्दरः ।**
**सहायुधं मातलिसङ्गृहीतं समारुरोहाऽशु स लक्ष्मणाग्रजः ॥२०७॥**

**वरदराजीया–** पुरन्दरः इन्द्रः आदिपुरुषं पुराणपुरुषं राघवं श्रीरामं सम्मानयन् मातलिना सारथिना संगृहीतं आयुधैः सहितं रथं निर्यातयामास प्रेषयामास । स लक्ष्मणाग्रजो रामः आशु वेगेन समारुरोह रथारूढोऽभवत् ॥२०७॥

**जनार्दनीया–** पुरन्दरः राघवं सम्मानयन् प्रीणयन् इत्यर्थः । आयुधैः सहितं मातालिना मातलि-नाम्नेन्द्रसारथिना संगृहीतं रथं निर्यातयामास प्रेषयामास । सः रामः आशु रथं समारुरोह ॥२०७॥

**चट्टी–** पुरन्दरः आदिपुरुषं पुराणपुरुषं राघवं श्रीरामं संमानयन् प्रीणयन् इत्यर्थः । आयुधैः सहितं मातलिनाम्ना स्वसारथिना संगृहीतं रथं निर्यातयामास प्रेषयामास । लक्ष्मणाग्रजः श्रीरामः आशु तं रथं आरुरोह ॥२०७॥

**भारतश्री–** ॥ **निर्यातयामास रथं पुरन्दर इति** ॥ पूर्वं रामजये सन्दिग्धः सन् रथं न प्रेषयामास । इदानीं कुम्भकर्णेन्द्रजिन्मुख्येषु पतितेषु इतो रावणोऽपि मरिष्यतीति तत्कृतभयं त्यक्त्वा रथं तदा प्रेषयामासेति ज्ञातव्यम् ॥२०७॥

**आरुह्य तं रथवरं जगदेकनाथो लोकाभयाय रजनीचरनाथमाशु ।**
**अभ्युद्ययौ दशशतांशुरिवान्धकारं लोकानशेषत इमान् निगिरन्तमुद्यन् ॥२०८॥**

**वेदाङ्गतीर्थीया–** उद्यन् दशशतांशुरन्धकारमिव ॥२०८–२१३॥

**वरदराजीया–** जगतः एको मुख्यो नाथः स्वामी रामः तद्रथश्रेष्ठमारुह्य लोकानामभयाय आशु रजनीचरनाथं रावणमभ्युद्ययौ । कथम्भूतं अशेषतः स इमाल्लोकान्निगिरन्तं ग्रसन्तम् । कः कमिव उद्यन्नुदयमासाद्यमानो दशशतांशुः दशशतानि सहस्रं अंशवः किरणानि यस्य सः सूर्यो अन्धकारमिव । लोकानित्यादि अन्धकारस्यापि विशेषणम् ॥२०८॥

**जनार्दनीया–** स चासौ रथवरश्चेति विग्रहः । यद्वा तदिति भिन्नं पदम् । 'दैवादृते वरः श्रेष्ठे त्रिषु' इत्यभिधानात् । लोकानां भक्तजनानामभयाय । अशेषतः अशेषान् इमान् लोकान् पातालादिस्वर्गान्तान् निगिरन्तं ग्रसन्तम् रजनीचरनाथं रावणं प्रति अभ्युद्ययौ । कः कमिव? उद्यन् उदयं प्राप्यन् दशशतांशुः सहस्ररश्मिः सूर्यः लोकान् निगिरन्तं अन्धकारमिव ।।२०८।।

**चट्टी–** जगतः एकनाथो मुख्यस्वामी श्रीरामः तद्रथवरं लोकानां भक्तजनानामभयायाशेषतः अशेषान् इमान् लोकान् पातालादिस्वर्गान्तान् निगिरन्तं ग्रसन्तं रजनीचरनाथं रावणं प्रति आशु अभ्युद्ययौ । कः कमिव । उद्यन् उदयं प्राप्स्यन् दशशतांशुः सहस्ररश्मिः सूर्यः लोकान्निगिरन्तं अन्धकारमिव ।।२०८।।

**भावचन्द्रिका–** जगदेकनाथत्वात् महाबलः । रजनीचरनाथत्वात् अल्पबल इति ।।२०८–२२४।।

**गूढवाक्यार्थ–** निगिरन्तं भक्षयन्तं रावणम् ।।२०८।।

**आयान्तमीक्ष्य रजनीचरलोकनाथः शस्त्राण्यथास्त्रसहितानि मुमोच रामे ।**
**रामस्तु तानि विनिवार्य निजैर्महास्त्रैस्तस्योत्तमाङ्गदशकं[१] युगपन्न्यकृन्तत् ।।**

**वरदराजीया–** रजनीचरलोकनाथो रावणः आपतन्तं आगच्छमानं राममीक्ष्य रामे अस्त्रसहितानि अस्त्रैरभिमन्त्रितानि शस्त्राणि मुमोच । रामस्तु तानि शस्त्राणि निजैः स्वकीयैरस्त्रैर्विनिकृत्य छित्वा तस्य रावणस्य उत्तमाङ्गानां शिरसां दशकं युगपदेव न्यकृन्तत् चिच्छेद ।।२०९।।

**जनार्दनीया–** रामः निजैः महास्त्रैः तानि रावणप्रमुक्तशस्त्राणि विनिकृत्य छित्वा, तस्य रावणस्य उत्तमाङ्गानां शिरसां दशकं युगपदेकप्रयत्नेन एकबाणेन न्यकृन्तत् अच्छिनत् ।।२०९।।

**चट्टी–** रजनीचरलोकनाथो रावणः आयान्तमागच्छमानं श्रीरामं ईक्ष्य रामे अस्त्रसहितानि अस्त्रैरभिमन्त्रितानि शस्त्राणि मुमोच । अथ श्रीरामस्तु निजैः वरास्त्रैः तानि रावणप्रमुक्तशस्त्राणि विनिकृत्य छित्वा तस्य रावणस्य उत्तमाङ्गानां शिरसां दशकं युगपदेकवारं प्रमुक्तेनैकेन बाणेन न्यकृन्तत् अच्छिनत् ।।२०९।।

---

१. 'दशग्रीवस्य चिच्छेद शिरांसि रघुसत्तमः । समुत्थितानि बहुशो वरादानात्कपर्दिनः ।।' इत्यादि पाद्मे.उत्तर. २४२.३१८ । यत्तु ''शिरः अच्छिन्दत् अच्छिनत् । एकवचनात् तदानीं रावण एकशिरा एव युद्धमकरोदिति गम्यते । अत एव वक्ष्यति- 'विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ' इत्यादिना'' इति गोविन्दराजः आह । तदयुक्तम् । तादृशव्याख्यानस्य 'सोऽसृग्वमन् दशमुखैर्न्यपतत्' इति तथा 'दशास्यो विंशतिभुजः प्रगृहीतशरासनः । अदृश्यत दशग्रीवो मैनाक इव पर्वतः ।।' ६.१०२.३६ इत्यादि भागवतरामायणस्कान्दपद्मपुराणादि-गतवाक्यानवलोकनमूलत्वात् ।

**अतिविशद–** तस्योत्तमाङ्गदशकं युगपन्न्यकृन्तत् । कृत्तानि तानि पुनरेव समुत्थितानि इत्यत्र शिरच्छेदेन हतं रावणं दृष्ट्वा पुनः हृदयभेदेन रावणहननं प्रतीयते । तेन रामस्याज्ञानञ्च प्रतीयते । यदि रामस्य ज्ञानं स्यात् तर्हि पूर्वमेव हृदयभेदनं कुर्यादित्यज्ञानस्थिरत्वमपि । तस्मादेतत्कथमिति चेत् । सत्यम् । यद्यपि हृदयभेदनेनैवायं मरिष्यतीति ज्ञानं रामस्यास्ति । तथापि । तथाकरणं तादृशब्रह्मवरोऽप्यस्याप्यस्तीति लोकानां दर्शनार्थं रामेण पूर्वं तथा कृतमित्यदोष इति ।।२०९–२१६।।

**कृत्तानि[१] तानि पुनरेव समुत्थितानि दृष्ट्वा वराच्छतधृतेर्हृदयं बिभेद ।**
**बाणेन [२]वज्रसदृशेन स भिन्नहृत्को रक्तं वमन् न्यपतदाशु महाविमानात् ।।**

**वादिराजीया–** स भिन्नहृत्को रक्तं वमन्नित्यत्र स्वार्थे कप्रत्ययः । भिन्नहृदित्यर्थः । हृदो विदारणभरेण कं शिरोपि विदारितमिति वा भिन्नहृत्कः इत्युक्तम् ।।२११-२१३।।

**वरदराजीया–** कृत्तानि छिन्नानि पुनरेव शतधृतेः ब्रह्मणो वरात्समुत्थितानि पुनरुत्पन्नानि तानि शिरांसि दृष्ट्वा हृदयं बिभेद भेदितवान् । रावणो वज्रसदृशेन बाणेन भिन्नं हृदयं येन स तथा भिन्नहृत्कः सन् रक्तं वमन् आशु महाविमानात् न्यपतत् पपात ।।२१०।।

**जनार्दनीया–** रामः शतधृतेः ब्रह्मणः वरान्निमित्तात् कृत्तानि छिन्नानि पुनरेव समुत्थितानि समुद्भूतानि तानि शिरांसि दृष्ट्वा बाणेन हृदयं बिभेद विददार । भिन्नहृत्कः विदारितहृदयः स रावणः न्यपतत् पपात ।।२१०।।

---

१. 'छिन्नानि दशशीर्षाणि कुण्डलाढ्यानि संयुगे । एकोत्तरशतं वारं सहस्रोत्तरयोदश ।। तानि तान्यभवन् तस्य वेधसो वरगौरवात् । ब्रह्मास्त्रं योजयामास मातलेर्वाक्यगौरवात् ।। बिभेद हृदयं तस्य पापात च ममार च । छिन्नानां पुन उत्पत्तिः ब्रह्मणो वरदानतः ।। हृदयस्य विभेदेन मरणं ब्रह्मनिर्मितम् । अभेद्यकवचं धत्ते रावणो हृदयस्य तु ।।' इति स्कान्दे । उमासंहिता.१२. 'एवमुक्त्वा तु तं राम दशग्रीवं पितामहः । श्रुणु चापि वरो भूयः प्रीतस्येह शुभो मम ।। हुतानि यानि शीर्षाणि पूर्वमग्नौ त्वयानघ । पुनस्तानि भविष्यन्ति तथैव तव राक्षस ।। वितरामीह ते सौम्य वरं चान्यं दुरासदम् । छन्दतस्तव रूपं च मनसा यद् यथेप्सितम् ।। एवं पितामहोक्तस्य दशग्रीवस्य रक्षसः । अग्नौ हुतानि शीर्षाणि पुनस्तान्युत्थितानि वै ।।' इत्यार्षे रामायणे ७.१०.२२-२६ । एवं क्षिपन् धनुषि सन्धितमुत्ससर्ज बाणं स वज्रमिव तद्धृदयं बिभेद । सोऽसृग्वमन् दशमुखैर्न्यपतद्विमानात् हा हेति जल्पति जने सुकृतीव रक्षः ।। इति भागवते[९.८.१०४]।

२. 'जग्राह स शरं दीप्तं निःश्वसन्तमिवोरगम् । ब्रह्मणा निर्मितं पूर्वं इन्द्रार्थममितौजसा ।। यं तस्मै प्रथमं प्रादात् अगस्त्यो भगवान् ऋषिः । ब्रह्मदत्तं महद्बाणं अमोघं युधि वीर्यवान् ।। यस्य वाजेषु पवनः फले पावकभास्करौ । शरीरमाकाशमयं गौरवे मेरुमन्दरौ ।। द्वाराणां परिघाणां च गिरीणां चापि भेदनम् । नानारुधिरदिग्धाङ्गं मेदोदिग्धं सुदारुणम् ।। वज्रसारं महानादं नानासमितिदारणम् । वाजितं विविधैर्वाजैः चारुचित्रैर्गरुत्मतः ।। तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम् ।' इति वा.रा.६.१११.४-१२

**चट्टी—** श्रीरामः शतधृतेः ब्रह्मणः वरान्निमित्तात् कृन्तानि छिन्नानि तानि शिरांसि पुनरेव समुत्थितानि समुद्भूतानि दृष्ट्वा वज्रसदृशेन बाणेन हृदयं बिभेद । भिन्नहृत्कः विदारितहृदयः स रावणः रक्तं वमन् आशु महाविमानात् न्यपतत् पपात ।।२१०।।

**गूढवाक्यार्थ—** शतधृतेः ब्रह्मणः । 'ब्रह्मा स्वयम्भू द्रुहिणो वैभावः शतधृत्तथा' इति शब्दनिर्णये ।।

**तस्मिन् [१]हते त्रिजगतां परमप्रतीपे [२]ब्रह्मा शिवेन सहितः सह लोकपालैः ।**
**अभ्येत्य पादयुगलं जगदेकभर्तू रामस्य भक्तिभरितः शिरसा ननाम ।।२११।।**

**वरदराजीया—** त्रिजगतां त्रैलोक्यपरमप्रतीपेऽतिविरोधिनि तस्मिन् रावणे हते सति शिवेन सहितो ब्रह्मा लोकपालैरिन्द्रादिभिः सह जगदेकभर्तुः जगतो मुख्यधारकस्य रामस्य पादयोर्युगलं द्वयं अभ्येत्य भक्त्या भरितः पूर्णः शिरसा ननाम ।।२११।।

**जनार्दनीया—** लोकपालैः सह ब्रह्मा त्रिजगतां त्रयाणां लोकानां परमप्रतीपे मुख्यद्वेषिणि तस्मिन् रावणे हते सति जगतः एकभर्तुः मुख्यस्वामिनः रामस्य पादयुगलं अभ्येत्य प्राप्य शिरसा ननाम ।।

**चट्टी—** त्रिजगतां त्रयाणां लोकानां परमप्रतीपे मुख्यद्वेषिणि तस्मिन्रावणे हते सति ब्रह्मा शिवेन सहितः लोकपालैश्च सह जगतामेकभर्तुः मुख्यस्वामिनः श्रीरामस्य पादयुगलं अभ्येत्य भक्तिभरितः सन् शिरसा ननाम ।।२११।।

---

१. शङ्कुकर्णो दशग्रीवः पिङ्गलो रक्तमूर्धजः । चतुष्पाद् विंशतिभुजो महाकायो महाबलः ।। जात्याञ्जननिभो दंष्ट्री लोहितग्रीव एव च । राजसेनो यथा युक्तो रूपेण च बलेन च ।। ...चतुर्युगानि राजात्र त्रयोदश च राक्षसः । ताः पञ्चकोट्यो वर्षाणामाख्याताः सङ्ख्या द्विजैः ।। नियुतान्येकषष्टिश्च सङ्ख्याविद्भिरुदाहृतः । षष्टिं शतसहस्राणि वर्षाणां तु स रावणः ।। देवानां च ऋषीणां च घोरं कृत्वा प्रजागरम् । त्रेतायुगे चतुर्विंशे रावणः तपसः क्षयात् ।। रामं दाशरथिं प्राप्य सगणः क्षयमीयिवान् ।। वायु.७०.४२-४८ इति रावणस्य स्वरूपं तस्यायुःपरिमाणं [५,६१,६०,०००वर्षाणि] च निरूपितम् ।

२. 'ततो हते दशग्रीवे देवाः सर्षिपुरोगमाः । आशीर्भिर्जययुक्ताभिः आनर्चुस्तं महाभुजम् ।। रामं कमलपत्राक्षं तुष्टुवुः सर्वदेवताः । गन्धर्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ।। पूजयित्वा रणे रामं प्रतिजग्मुर्यथागतम् ।।' इति भारते रामोपाख्याने । 'ततो ब्रह्मा समागत्य हंसयानेन राघवम् । अमोघाख्येन स्तोत्रेण स्तुत्वा राममवोचत ।। ब्रह्मोवाच- त्वं विष्णुरादिर्भूतानां अनन्तो ज्ञानदृग्व्ययः । त्वमेव शाश्वतं ब्रह्म वेदान्ते विदितं परम् ।। त्वया यदद्य निहतो रावणो लोकरावणः । तदाशु सर्वलोकानां देवानां कर्म साधितम् ।। इत्युक्ते पद्मयोनौ तु शङ्करः प्रीतिमास्थितः । प्रणम्य रामं तस्मै तं भूयो दशरथं नृपम् ।। दर्शयित्वा गतो देवः...।।' इति नृसिंहपुराणे ५२.११४-११८ ।

**अथैनमस्तौत् पितरं कृताञ्जलिर्गुणाभिरामं जगतः पितामहः ।**
**जितं जितं तेऽजित लोकभावन प्रपन्नपालाय नताः स्म ते वयम् ।।२१२।।**

**व्यासतीर्थीया–** जितं जयः ।।२१२-२१४।।

**मधुसूदनीया–** ।। **जितं जितं ते जितलोकभावनेति** ।। सर्वं जितं पराभूतमित्यर्थः । जितं सर्वं वशीकृतमित्यर्थः । 'पराभूतं वशस्थं च जितमित्युच्यते बुधैः' इति शब्दनिर्णये । लोकभावन लोकानां भावनं सृष्टिस्थितिसंहारात्मकं यस्मात्स तथोक्तः । हे लोकभावन हे जित भक्तवशीकृतः रावणादिराक्षसवधस्य भक्तप्रीत्यर्थं कृतत्वादिति भावः । यद्वा हे अजित परैरपराजित । 'सृष्टिः स्थितिश्च संहारो भावनं समुदाहृतम्' इति शब्दनिर्णये । अथवा लोकभावन लोकानां भावं सुखं नयतीति लोकभावनः । ननु लोकसुखप्रापकत्वं कथमस्येत्यतो हेतुगर्भविशेषणेन स्तौति– **प्रपन्नपालायेति** ।। 'सद्भाववाचिनश्शब्दास्सर्वे ते सुखवाचकाः । अभाववाचिनश्शब्दास्सर्वे ते दुःखवाचकाः ।।' इति शब्दनिर्णये [गी.ता.२.]।।२१२।।

**वरदराजीया–** अथानन्तरं जगतः पितामहो ब्रह्मा कृताञ्जलिः सन् गुणैरभिरामं स्वपितरं स्वजनकं एनं राममस्तौत् अस्तुवत् । किमिति हे अजित ते त्वया जितं जितं च जयः प्राप्तः । आदरेण द्विरुक्तिः । वयं प्रपन्नाच्छरणागतान् पालयतीति तथा तस्मै ते तुभ्यं नता स्मः प्रणता स्मः ।।२१२।।

**जनार्दनीया–** अथ नमस्कारानन्तरम् । जगतः पितामहः ब्रह्मा । कृतः अञ्जलिर्येन स तथा । मुकुलीकृतकरः सन्नित्यर्थः । गुणैः स्वरूपभूतज्ञानानन्दादिगुणैः अभिरमतीति तथा तं पितरं स्वपितरं एनं रामं अस्तौत् तुष्टाव । किमिति ? हे अजित । पराभवरहित जयशीलेति यावत् । लोकान् भावयति उत्पादयतीति तथा, तस्य सम्बोधनं हे लोकभावन । ते त्वया । जितं जयो लब्धः । आदरे द्विरुक्तिः । वयं प्रपन्नान् पालयति रक्षयति इति तथा तस्मै । ते तुभ्यं नताः स्म नमस्कृतवन्तः स्याम । अथवा ते प्रपन्नपालयेति सम्बन्धः । तदा ते वयं इति सामानाधिकरण्यम् । अथवा ते इति षष्ठ्यन्तम् । तव वयं इत्यर्थः ।।२१२।।

**ताम्रपर्णीया–** जगतः पितरं इत्यन्वयः । हे अजित ते त्वया रावणादिशत्रुजातं जितं पराजितम् । सर्वं च जितम् । लब्धमित्यर्थः ।।२१२-२१३।।

**चट्टी–** अथ नमस्कारानन्तरं जगतः पितामहः ब्रह्मा कृता अञ्जलिर्येन स तथा मुकुलीकृतकरः सन्नित्यर्थः । गुणैः स्वरूपभूतज्ञानानन्दादिगुणैः अभिरमतीति गुणाभिरामः तं पितरं स्वजनकं एनं श्रीरामं अस्तौत् तुष्टाव । किमिति । हे अजित पराभवरहित जयशीलेति यावत् । लोकान् भावयति

उत्पादयतीति तथा तस्य सम्बोधनम् । हे लोकभावन ते त्वया जितं जितं जयो प्राप्तः । आदराद् द्विरुक्तिः । प्रपन्नान् शरणागतान् पालयति रक्षयति इति तथा तस्मै । ते तुभ्यं वयं नताः स्म प्रणता स्म ।।

**गूढवाक्यार्थ–** जगतःपितरम् । हे अजित! ते त्वया जितं रावणादिशत्रुजातं जितं सर्वं कीर्त्यादिकं लब्धम् ।।२१२।।

**त्वमेक ईशोऽस्य न चाऽदिरन्तस्तवेड्य कालेन तथैव देशतः ।**
**गुणा ह्यगण्यास्तव तेप्यनन्ताः प्रत्येकशश्चाऽदिविनाशवर्जिताः ।।२१३।।**

**वादिराजीया–** तव तेऽप्यनन्ता इत्यत्र अनन्ताः देशतः कालतः गुणतश्चान्तरहिता इत्यर्थः ।।

**वरदराजीया–** अस्य जगतस्त्वं एकः मुख्य ईशः स्वामी हे ईड्य स्तुत्य तव कालेन कालतो देशतश्चान्तः समाप्तिर्नैव तथा गुणतोप्यन्तो नास्तीत्याह– **गुणा इति** ।। अगण्यास्तव सन्ति । तेऽपि प्रत्येकशः प्रत्येकमनन्ताः अनन्तगुणाः । गुणानामपि गणतः आनन्त्यमेवेत्यर्थः । गुणानां देशत एव कालतोऽप्यानन्त्यमस्तीत्याह– **आदीति** ।। पूर्वोत्तरकालावधिशून्य इत्यर्थः ।।२१३।।

**जनार्दनीया–** अस्य जगतः त्वं एकः ईशः मुख्यस्वामी इत्यर्थः । हे ईड्य स्तुत्य । तव कालेन तथैव देशतः आदिरुत्पत्तिः अन्तः विनाशः न च नैव । तव गुणाः अगण्याः हि । आदिविनाशाभ्यां प्रागभावप्रध्वंसाभ्यां वर्जिताः रहिताः । तेऽपि अगण्यगुणाः प्रत्येकशः प्रत्येकं अनन्ताः । गुणानामपि गणतः आनन्त्यं अस्ति इति भावः ।।२१३।।

**चट्टी–** अस्य जगतः त्वं एकः ईशः मुख्यस्वामी । हे ईड्य स्तुत्य तव कालेन कालतः तथैव देशतः आदिरुत्पत्तिः अन्तः विनाशः न च नैव । तव गुणाः अगण्याः हि । आदिविनाशाभ्यां प्रागभावप्रध्वंसाभ्यां वर्जिताः रहिताः तेऽपि गुणाः प्रत्येकशः प्रत्येकं चानन्ताः एकैकगुणस्यापि आनन्त्यं अस्ति इति भावः ।।२१३।।

**न चोद्भवो नैव तिरस्कृतिस्ते कचिद् गुणानां परतः स्वतो वा ।**
**त्वमेक आद्यः परमः स्वतन्त्रो भृत्यास्तवाहं शिवपूर्वकाश्च ये ।।२१४।।**

**वेदाङ्गतीर्थीया–** परतः कारणान्तरात् । स्वतः स्वभावतः ।।२१४-२१७।।

**वादिराजीया–** न चोद्भव इत्यत्र ते गुणानां कचिदपि परतः अन्यस्मात् शापेन वरेण वा तिरस्कृतिर्नैव आविर्भावश्च न । वृद्धस्य स्वाभावत एव सौन्दर्यादिगुणानां तिरस्कारवत्तव गुणानां स्वतोऽपि तिरस्कृतिर्न । बालस्य क्रमेण स्वत एवाविर्भाववदाविर्भावोऽपि नेत्यर्थः ।।२१४-२१५।।

**वरदराजीया–** तदेव स्पष्टयति– **न चेति** ।। ते गुणानां स्वतः परतो वा उद्भवः नैव तिरस्कृतिर्विनाशो नैव । तत्र हेतुमाह– **त्वमेक एवेति** ।। आद्यः सर्वस्येति शेषः । परमः स्वतन्त्रो अनन्याधीनः । तवाहं ब्रह्मा भृत्यः पोषणीयः । शिवपूर्वका ये देवास्तेऽपि भृत्या इत्यर्थः ।।२१४।।

**जनार्दनीया–** ते गुणानां परतः स्वतो वा क्वचित् उद्भव आविर्भावो न च नैव । तिरस्कृतिश्च तिरोधानमपि नैव । सदोदिता इत्यर्थः । त्वमेकः आद्यः पुराणपुरुषः परमः सर्वोत्कृष्टः स्वतन्त्रश्च अत एव अहं शिवपूर्वकाश्च एते सर्वे तव भृत्याः ।।२१४।।

**ताम्रपर्णीया–** उद्भवः व्यक्तिः । तिरस्कृतिरव्यक्तिः । परतः वरशापादेः । स्वतः कालादेः । 'वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः' [तन्त्रसार १-२७] इत्यत्र स्वत इत्यस्य देशकालाभ्यां इत्यर्थस्य सिद्धत्वात् । यद्वा यथा मारुतस्य गुणानां स्वत एव इच्छयापि व्यक्त्यव्यक्ती वा इत्यर्थः ।।२१४।।

**चट्टी–** तदेव स्पष्टयति– **न चेति** ।। ते गुणानां परतः स्वतो वा क्वचित् उद्भव आविर्भावो न च नैव । तिरस्कृतिश्च विकारोऽपि नैव । सदोदिता इत्यर्थः । अत्र हेतुमाह त्वमेक एव आद्यः सर्वस्येति शेषः । परमः सर्वोत्कृष्टः स्वतन्त्रश्च अनन्याधीनः । अत एव अहं ब्रह्मा तव भृत्यः । शिवपूर्वकाश्च ये देवाः ते सर्वे तव भृत्याः ।।२१४।।

**गूढवाक्यार्थ–** उद्भवः व्यक्तिः । तिरस्कृतिः अव्यक्तिः । परतः वरशापादेः । स्वतः कालतः । मारुतवत् इच्छया व्यक्त्यव्यक्ती वा ।।२१४।।

**यथाऽर्चिषोऽग्नेः पवनस्य वेगा मरीचयोऽर्कस्य नदीषु चाऽपः ।**
**गच्छन्ति चाऽयान्ति च सन्तताश्च तद्वन्मदाद्याः शिवपूर्वकाश्च ये ।।२१५।।**

**व्यासतीर्थीया–** भृत्यत्वं च न लोक इवेत्येतत् दृष्टान्तेनाह– **यथेति** ।। सन्तताः विच्छेदरहिताः ।।

**वरदराजीया–** यथाग्नेः सकाशात् अर्चिषो ज्वालाः पवनस्य वायोः वेगाख्याः गुणाः, अर्कस्य सूर्यस्य मरीचयो घृष्टयः, नदीषु आपः उदकानि च तद्वत् तथा । मदाद्याः अहमाद्यो येषां ते तथा शिवपूर्वकाः सुराः सन्तताश्च गच्छन्ति आगच्छन्ति सृष्टौ ।।२१५।।

**जनार्दनीया–** जीवपरमात्मनोर्वैलक्षण्यं स्पष्टयन्नाहेत्याह– **यथेति** ।। यथा अग्नेः अर्चिषः ज्वालाः पवनस्य वेगाः वेगलक्षणगुणाः अर्कस्य मरीचयः नदीषु आपः गच्छन्ति आयान्ति । तद्वत् मदाद्याः अहं आद्यो येषां ते तथा । सन्तता अनादिकालस्थाः शिवपूर्वकाः ये सुराः ते प्रलयकाले गच्छन्ति सृष्टिकाले आयान्ति ।।२१५।।

**ताम्रपर्णीया–** ।। **यथार्चिषोग्नेरिति** ।। उत्पन्नार्चिषां विनाशेन प्रवेशनिर्गमाभावेऽपि तथा प्रतीत्यपेक्षया एवमुक्तिरिति ध्येयम् । वायोस्सर्वत्र विद्यमानत्वेन वेगस्याविर्भावतिरोभावेन प्रवेशनिर्गमौ युक्तौ । सूर्यरश्मीनां तु 'रश्मीनामविशेषेऽपि ह्यन्यदृष्टिव्यपेक्षया । सूर्यस्य मण्डलं यान्तीत्युच्यन्ते तददर्शनात् ।।' इति षट्प्रश्नभाष्यवचनात् [४-१] देशान्तरे तेषामेव दर्शनेन उदयास्तमयोरविशेषेऽपि अज्ञदृष्टिव्यपेक्षया प्रवेशनिर्गमोक्तिः । सन्तताः प्रवाहरूपेण नित्याः । मदाद्या अहमेव आदिर्येषां वायुसरस्वतीभारतीनां ते मदाद्याः ।।२१५।।[१]

**चट्टी–** जीवपरमात्मनोर्वैलक्षण्यं स्पष्टयन्नाहेत्याह– **यथेति** ।। यथा अग्नेः सकाशात् अर्चिषः ज्वालाः पवनस्य वेगाः वेगलक्षणगुणाः अर्कस्य मरीचयः रश्मयः नदीषु आपः उदकानि च गच्छन्ति आयान्ति तद्वत् सन्तता अनादिकालस्थाः । अहं आद्यो येषां ते मदाद्याः । शिवपूर्वकाः च ये सुराः ते प्रलये गच्छन्ति सृष्टिकाले आयान्ति ।।२१५।।

**गूढवाक्यार्थ–** सन्तताः प्रवाहरूपेण नित्याः ।।२१५।।

> **ये ये च मुक्तास्त्वथ ये च बद्धाः सर्वे तवेशेश वशे सदैव ।**
> **वयं सदा त्वद्गुणपूगमुच्चैः सर्वे वदन्तोऽपि न पारगामिनः ।।२१६।।**

**व्यासतीर्थीया–** न केवलं वयं त्वद्वशाः किन्तु मुक्ताश्चेत्याह– **य इति** ।। त्वद्वशत्वे निमित्तमाह– **वयमिति** ।।२१६।।

**वादिराजीया–** ये ये च मुक्तास्त्वथ ये च बद्धा इत्यत्र ये ये मुक्ताः संसारात् मुक्ताः वैकुण्ठादिलोकस्थाः तमोगाश्च । अथ ये बद्धाः नित्यसंसारिणश्चेति बद्धमुक्तपदाभ्यामेव त्रिविधजीवानामपि संग्रहो ज्ञेयः ।।

**वरदराजीया–** ये ये च मुक्ताः मदाद्याः ये च बद्धास्ते सर्वे सर्वदा मुक्तौ संसारे च हे ईशानामीश तवैव वशे वर्तते इत्यर्थः । सर्वे वयं त्वद्गुणानां पूगं समूहं उच्चैः सर्वे वदन्तोऽपि पारमन्तं गच्छतीति तथा तादृशो न पारगामिन इत्यर्थः ।।२१६।।

**जनार्दनीया–** ये ये च मुक्ताः । अथ तथा । ये ये बद्धाः संसारस्थाः । हे ईश ते सर्वे सदा मुक्तौ संसारे च तव वशे । तिष्ठन्तीति शेषः । सर्वे वयं सदा अनादिकालतः तव गुणानां पूगं समूहं वदन्तोऽपि पारं गुणानामन्तं गच्छन्ति इति तथा, न । गुणपारदर्शिनो न भवाम इत्यर्थः ।।२१६।।

---

१. केचित् 'मेरोः परितः प्रतिदिङ्मुखतः आदित्यस्य रश्मयः सन्ति । तस्य पार्श्वान्तरागतानां तत्र प्रवेशः' इत्यादि प्रलपन्ति ।। इति हो पुस्तके अधिकःपाठः ।

**ताम्रपर्णीया–** बद्धानां उत्पत्त्यादीनां ईशाधीनत्वेन मुक्तानां तदधीनत्वसाम्यात् इत्यत आह– **ये ये च मुक्ता इति** ।। तत्र हेतुः– **ये च बद्धा इति** ।। बद्धानां तदधीनत्वात् मुक्तानामपि तद्युज्यते । अन्यथा प्रेक्षावान् न कथञ्चन मोचयेत् । तदुक्तं सुधायां 'जगद्यदि स्वाधीनतां जह्यात् तदा प्रेक्षावान् तन्न मोचयेत्' इति । तथा च न पूर्वश्लोकात् पुनरुक्तिः ।।२१६–२२१।।

**चट्टी–** ये ये च मुक्ताः अथ तथा ये ये बद्धाः संसारस्थाः हे ईश ईशानां ईश ते सर्वे सदा मुक्तौ संसारे च तवैव वशे तिष्ठन्तीत्यर्थः । सर्वे वयं सदा अनादिकालतः तव गुणानां पूगं समूहं उच्चैः वदन्तोऽपि पारं अन्तं गच्छन्ति इति पारगामिनः न भवाम इत्यर्थः ।।२१६।।

**किमेष ईदृग्गुणकस्य ते प्रभो रक्षोवधोऽशेषसुरप्रपालनम् ।**
**अनन्यसाध्यं हि तथाऽपि तद् द्वयं कृतं त्वया तस्य नमो नमस्ते।।२१७।।**

**व्यासतीर्थीया–** रक्षोवधादिकमल्पं चेज्जितं जितमिति न स्तुतिः कार्येत्यत आह– **अनन्येति** ।।

**वादिराजीया–** तद्द्वयमित्यत्र यद्यपि तव लीलामात्रं तथापि कृतं तत् रक्षोवधदेवपालनाख्यं द्वयं कर्मद्वयं अनन्यसाध्यं हीति योजनात् ।।२१७–२२१।।

**वरदराजीया–** हे प्रभो समर्थ ईदृशा गुणा यस्य स तथा तस्य ते तव एषः रक्षसां वधः, तेन च अशेषाणां सुराणां प्रपालनं संरक्षणं किमधिकं न किमपीत्यर्थः । तथापि तव अल्पमपि अनन्यसाध्यं अन्यसाध्यं न भवतीति तथा । तद्रक्षोवधः सुररक्षणं चेति द्वयं त्वत्कृतं अस्मदनुग्रहार्थमिति शेषः । तस्य तस्मै ते नमो नम इत्यर्थः ।।२१७।।

**जनार्दनीया–** हे प्रभो इति हेतुगर्भसम्बोधनम् । ईदृशाः पूर्वोक्तप्रकाराः गुणाः यस्य तथा । स्वार्थे कप्रत्ययः । तस्य ते तव । रक्षसां वधः । अशेषाणां सर्वेषां, सुराणां प्रपालनं रक्षणं, किम्? किमाश्चर्यम्? आश्चर्यं नैवेत्यर्थः । तथापि यद्यपि तव आश्चर्यं नैव तथापीत्यर्थः । तद्वयं रक्षोवधः सुरप्रपालनं च अनन्यसाध्यं त्वदन्यैः साध्यं न भवतीति तथा । अत एव त्वया तस्य रक्षोवधसुर-प्रपालनात्मककार्यद्वयस्य सम्पादनमिति शेषः । कृतं हि । एतादृशाय ते तुभ्यं नमो नमः ।।२१७।।

**चट्टी–** हे प्रभो समर्थ इदं हेतुगर्भसम्बोधनम् । ईदृशाः पूर्वोक्तप्रकाराः गुणाः यस्य सः तथा । स्वार्थे कप्रत्ययः । तस्य ते तव एषः रक्षोवधः रक्षसां वधः अशेषाणां सर्वेषां सुराणां प्रपालनं रक्षणं किं किमाश्चर्यम् । आश्चर्यं नैवेत्यर्थः । तथापि यद्यपि तव आश्चर्यं न भवति तथापीत्यर्थः । तद्द्वयं रक्षोवधः अशेषसुरप्रपालनं च अनन्यसाध्यं त्वदन्यैः साध्यं न भवति हि । एतादृशकार्यद्वयं त्वया कृतं तस्य ते तुभ्यं नमो नमः ।।२१७।।

**अतिविशद–** किमेष ईदृग्गुणकस्य ते प्रभो रक्षोवधोऽशेषसुरप्रपालनं इत्यत्र पूर्वार्धे विद्यमानस्य ईदृग्गुणकस्य उत्तरार्धस्थेन तस्य इत्यनेन सम्बन्धः । योग्यतायाः सत्वात् । तदुक्तम् । 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत्' इति । नतु समीपस्थेन । योग्यतायाः बाधितत्वात् । विभक्तिपरिणामस्तु अगतिकागतिरिति भावः । अत्र ते ते इति पदद्वयं पौनरुक्त्या पराहतम् । तत्परिहारस्त्वित्थं अक्षरनया ज्ञातव्यः । तथाहि हे प्रभो ईदृग्गुणकस्य भवतः एषः रक्षोवधः अशेषसुरप्रपालनश्चेति ते किं न किमपि । तथापि त्वया कृतं तद्द्वयं अनन्यसाध्यं हि यस्मात्तस्मात् ते नमो नम इति ॥२१७॥

**इतीरिते त्वब्जभवेन शूली समाह्वयद् राघवमाहवाय ।**
**वरं[1] मदीयं त्वगणय्य रक्षो हतं त्वया तेन रणाय मैहि[2] ॥२१८॥**

**व्यासतीर्थीया–** इहि आगच्छ ॥२१८॥

**वेदाङ्गतीर्थीया–** मा मां इहि आगच्छ ॥२१८–२२० ॥

**वरदराजीया–** अब्जभवेन ब्रह्मणा इति उक्तरीत्या ईरिते सति शूली रुद्रो राघवं श्रीराममाहवाय युद्धार्थं समाह्वयत् आह्वयामास । किमिति । मदीयं मया दत्तं वरं अगणय्यानादृत्य त्वया रक्षो राक्षसो हतं हतस्तेन कारणेन रणाय युद्धार्थं मा मां एहि आगच्छेति ॥२१८॥

**जनार्दनीया–** शूलमस्यास्तीति शूली शिवः मत्सम्बन्धिनं वरं अगणय्य अविचिन्त्य, त्वया रक्षः हतं रावणो हत इत्यर्थः । येन तेन कारणेन रणाय मा मां प्रति एहि आगच्छेति राघवं आहवाय युद्धार्थं समाह्वयत् ॥२१८॥

**अनन्तभट्टीया–** मैहीत्यत्र म एहि इति पदच्छेदः ॥२१८–२२०॥

**चट्टी–** अब्जभवेन ब्रह्मणा इति पूर्वोक्तप्रकारेणेरिते सति शूलमस्यास्तीति शूली शिवः । राघवं श्रीरामं आहवाय समाह्वयत् । किमिति । मदीयं वरं अगणय्य अविचिन्त्य त्वया रक्षः हतं रावणो हतः । येन तेन कारणेन रणाय मा मां प्रति एहि आगच्छेति रुद्रेण इतीरिते सति राघवः श्रीरामः अस्त्विति

---

१. रावणेन तपस्तप्तं सर्वेषामपि दुःसहम् । तपोधिपो महादेवस्तुतोष च तदा भृशम् ।। वरान् प्रायच्छत तदा सर्वेषामपि दुर्लभान् । ज्ञानविज्ञानसहितं लब्धं तेन सदाशिवात् ।। अजेयत्वं च संग्रामे द्वैगुण्यं शिरसामपि । पञ्चवक्त्रो महादेवो दशवक्त्रोथ रावणः ।। देवानृषीन् पितृंश्चैव निर्जित्य तपसा विभुः । महेशस्य प्रसादाच्च सर्वेषामधिकोभवत् ।। स्कान्दे.माहेश्वर.८.३३-३६

२. 'इहि' इति व्यासतीर्थीयवेदाङ्गतीर्थीयपाठः ।

तथैवास्त्वित्यभिधाय उक्त्वा धनुः प्रगृह्य आशु शरं बाणं च सन्दधे । विकृष्यमाणे सति धनुषीति शेषः । वसुन्धरा भूश्चलिता चचाल । रुद्रोऽपि धरायाः प्रकम्पतः चलनात् पपात ।।२१८-२१९।।

**अतिविशद–** इतीरिते त्वब्ज..सुराः इत्यत्र रामसन्धितशरस्य मोघत्वमुच्यते । तदनुपपन्नम् । तस्य यं प्रति सन्धितत्वं तद्धननस्य तदीयहननस्य वा वरुणादिषु दृष्टत्वात् इति चेत् । अत्रापि शरसन्धाने रुद्रपातदर्शनात् न तस्य वैयर्थ्यमिति ।।२१८-२२१।।

**इतीरितेऽस्त्वित्यभिधाय राघवो धनुः प्रगृह्याऽशु शरं च सन्दधे ।**
**विकृष्यमाणे चलिता वसुन्धरा पपात रुद्रोऽपि धराप्रकम्पतः ।।२१९।।**

**वरदराजीया–** इतीरिते सति राघवो रामोऽस्त्विति अभिधाय उक्त्वा आशु धनुः शार्ङ्गं प्रगृह्य तत्र शरं वाणं च सन्दधे । शरं सन्धाय धनुषि विकृष्यमाणे आकृष्यमाणे सति वसुन्धरा पृथ्वी चचाल चलिता । रुद्रोऽपि धरायाः भूम्याः प्रकम्पतः प्रचलनात् पपात ।।२१९।।

**जनार्दनीया–** धनुषीति शेषः । वसुन्धरा भूश्चलिता । रुद्रोऽपि धरायाः प्रकम्पतः कम्पनात् चलनात् पपात ।।२१९।।

**अथोत्थितश्चासुरभाववर्जितः क्षमस्व देवेति ननाम पादयोः ।**
**उवाच च त्वद्वशगोऽस्मि सर्वदा प्रसीद मे त्वद्विषयं मनः कुरु ।।२२०।।**

**वरदराजीया–** अथानन्तरं उत्थितः आसुरभाववर्जितश्च भूत्वा देव क्षमस्वेति वदन् पादयोर्ननाम उवाच च । किमिति । सर्वदा त्वद्वशगोऽस्मि । मे प्रसीद मनस्त्वद्विषयं त्वन्निष्ठं कुरुष्व कुरु ।।२२०।।

**जनार्दनीया–** अथ पतनानन्तरं उत्थितः असुरभावेन वर्जितः मुक्तो रुद्रः । हे देव क्षमस्वेति ब्रुवन्, पादयोर्ननाम उवाच च । किमिति? सर्वदा त्वद्वशगः त्वदधीनोऽस्मि । मे प्रसीद प्रसन्नो भव त्वद्विषयं त्वय्यासक्तं मनः कुरु ।।२२०।।

**चट्टी–** अथ अनन्तरं उत्थितः असुरभावेन वर्जितः रहितश्च भूत्वा रुद्रः हे देव क्षमस्वेति ब्रुवन् पादयोर्ननाम । उवाच च । किमिति । अहं सर्वदा त्वद्वशगः त्वदधीनोऽस्मि मे प्रसीद प्रसन्नो भव । मम मनस्त्वद्विषयं त्वमेव विषयो यस्य तत्तथा । त्वय्यासक्तं कुरु इति ।।२२०।।

**अथेन्द्रमुख्याश्च तमूचिरे सुरास्त्वयाऽविताः स्मोऽद्य निशाचराद् वयम् ।**
**तथैव सर्वापद एव नस्त्वं प्रपाहि सर्वे भवदीयकाः स्म ।।२२१।।**

**व्यासतीर्थीया–** अविता रक्षिताश्च ।।२२१।।

**वेदाङ्गतीर्थीया–** अविताः रक्षिताः ।।२२१।।

**वरदराजीया–** अथानन्तरं रुद्रो मुख्यो येषां ते सुरा देवाः तं रामं ऊचिरे अवदन् । किमिति । वयं निशाचराद्रावणात् त्वया रक्षिता स्म । यथा इदानीं तथा सर्वापदः सकाशान्नोऽस्मान् प्रपाहि पालय । सर्वे वयं भवदीयकास्त्वदीयकाः स्मः ।।२२१।।

**जनार्दनीया–** सुराः तं रामं प्रत्यूचिरे । किमिति ? वयं अद्य त्वया निशाचराद्रावणात् आविताः रक्षिताः स्मः । 'अस भुवि' इति धातोर्लट् उत्तमपुरुषबहुवचनम् । तथैव यथेदानीं तथोत्तरत्रापीत्यर्थः । त्वन्नोऽस्मान् सर्वापदः समस्तविपदः सकाशात् प्रपाहि रक्ष । यतो सर्वे वयं भवदीयकाः त्वदीयाः त्वद्भक्ता इत्यर्थः । स्मः भवामः ।।२२१।।

**अनन्तभट्टीया–** सर्वापद इति पञ्चमी ।।२२१।।

**चट्टी–** अथ अनन्तरं इन्द्रः मुख्यः एषां ते इन्द्रमुख्याः सुराः देवाश्च तं श्रीरामं प्रत्यूचिरे । किमिति । वयं त्वया निशाचराद्रावणात् अविताः स्मः । 'अस भुवि' इति धातोर्लट् उत्तमपुरुषबहुवचनम् । यथेदानीं तथोत्तरत्र सर्वापदः सकाशात् नो अस्मान् त्वं प्रपाहि पालय । यतो सर्वे वयं भवदीयकाः त्वद्भक्ता इत्यर्थः । स्मः भवामः ।।२२१।।

**सीताकृतिं तामथ तत्र [१]चाऽगतां दिव्यच्छलेन प्रणिधाय पावके ।**
**कैलासतस्तां पुनरेव चाऽगतां सीतामगृह्णाद्धुतभुक्समर्पिताम् ।।२२२।।**

**व्यासतीर्थीया–** कैलासत एव ।।२२२-२२८।।

**वेदाङ्गतीर्थीया–** दिव्यच्छलेन शपथव्याजेन ।।२२२-२२३ ।।

**वादिराजीया–** दिव्यच्छलेनेत्यत्र दिव्यमग्निप्रवेशाख्यं प्रमाणम् ।।२२२-२२३।।

**अभिनव–** तत्रैव सीताकृतिं तामथ तत्र इति श्लोकः । तस्यार्थः । रामः अथ च अनन्तरमेव तत्र स्वसमीपदेशे आगतां तां सीताकृतिं दिव्यच्छलेन शपथव्याजेन पावके प्रणिधाय कैलासतः आगतां अग्न्यन्तरागतां हुतभुक्समर्पितां अग्निदत्तां सीतामेव पुनः अगृह्णाचेति । एतेन अथ तत्र चागतामिति चकारो व्यर्थ इति दूषणं निरस्तम् । सीताकृतेः ब्रह्मादिस्तुत्यनन्तरमेवागमनं न तु विलम्ब इत्यर्थः अथ

१. 'चाहुताम्' इति वरदराजीयपाठः ।

चेत्यनेनोच्यत इति स्वीकरणात् । एतेनैव पुनः एव चेति पदत्रयं व्यर्थमिति दूषणं पराकृतम् । विवाहकाले सीताग्रहणस्य कृतत्वात् पुनः अगृह्णादिति वक्तुं पुनश्शब्दः । सीतामेव अगृह्णात् न तु प्रतिकृतिमिति कथनार्थं एवशब्दः । न केवलं रावणसंहारः कृतः किन्तु सीतामगृह्णाच्चेति प्रतिपादयितुं चकार इत्यभ्युपगमात् ।।२२२।।

**मधुसूदनीया–** ।। **सीताकृतिं तामथ तत्र चागतामिति** ।। सीताकृतिमित्यादि वक्ष्यमाणार्थे प्रमाणप्रसिद्धिं सूचयति । चशब्देन–

कृत्वाथ रावणवधं रामो लक्ष्मणसंयुतः । समादायाऽभवत् सीतां शङ्काकुलितमानसः ।।
सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ।।
दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः ।।
प्रगृह्य भर्तुश्चरणौ कराभ्यां सा सुमध्यमा । चकार प्रणतिं भूमौ रामाय जनकात्मजा ।।
ननाम वह्निं शिरसा तोषयामास राघवः । तमाह देवो लोकानां दाहको हव्यवाहनः ।।
या सीता राक्षसेन्द्रेण सीता भगवती हृता । मायामयी मया सृष्टा रावणस्य वधेप्सया ।।'
इति कौर्मे । [द्वितीयभागे.३३.१२९–१३४]

।। **दिव्यच्छलेनेति** ।। 'अथवा पुंश्चलीं वापि रामातिक्रमचारिणीम् । ततः संवर्तको भूत्वा भस्मसात्कुरु पावक ।।' इति वा ।।२२२-२२४।।

**वरदराजीया–** अथानन्तरं सीतायाः आकृतिं प्रतिकृतिं तत्र स्वसमीपे आहूताम् । 'आगताम्' इति पाठान्तरम् । दिव्यछलेन शपथव्याजेन पावके च प्रणिधाय निक्षिप्य, कैलासतः कैलासात् पुनरागतां सीतामेव हुतभुजा अग्निना समर्पितां दत्तां अगृह्णात् गृहीतवान् ।।२२२।।

**जनार्दनीया–** अथ रामः । तत्र स्वसमीपं आगतां प्राप्तां रावणाहृतां सीतायाः आकृतिं प्रतिमाम् । दिव्यस्य शपथस्य, छलेन व्याजेन पावके अग्नौ प्रणिधाय प्रवेशयित्वा, कैलासतः कैलासपर्वतादागतां हुतभुजा अग्निना समर्पितां प्रदत्तां तां सीताम् । पुनरेव लोकदृष्ट्यनुसारेणेति चार्थः । अगृह्णात् स्वीकृतवान् ।।२२२।।

**अनन्तभट्टीया–** दिव्यच्छलेन शपथव्याजेन ।।२२२-२२८।।

**ताम्रपर्णीया–** तत्र युद्धरङ्गे । दिव्यच्छलेन शपथव्याजेन । 'अशोकमूलमासाद्य दर्शयामास जानकीम् । नित्यावियोगिनीं देवीं रामो मन्ददृषामपि ।।' इति मणिमञ्जरीश्लोके आसाद्य स्थितां दर्शयामासेति हनूमन्तं आसादयित्वा इति वा अर्थस्य विवक्षितत्वात् न विरोधः । 'भूम्ना नियुक्तः पवमानसूनुः सीताकृतिं त्वां विनयेन गत्वा' इत्यादि [सं.रा.यु.का.१४-३८] ।।२२२-२२९।।

**चट्टी–** अथ अनन्तरं श्रीरामः तत्र स्वसमीपं आगतां प्राप्तां तां रावणाहृतां सीताकृतिं प्रतिमां दिव्यस्य शपथस्य छलेन व्याजेन पावके अग्नौ प्रणिधाय प्रवेशयित्वा, कैलासतः कैलासपर्वताद् पुनरागतां हुतभुजा अग्निना समर्पितां दत्तां स्वां सीतां पुनरेव अगृह्णात् स्वीकृतवान् । लोकदृष्ट्यनुसारेणेति चार्थः ।।

**अतिविशद–** दिव्यच्छलेन इत्यत्र दिव्या शुद्धेति छलं व्याजः । शुद्धेति व्याजेनेति समुदायार्थः । तथोक्तं मध्वविजये– 'वह्निप्रवेशाधिगतात्मशुद्ध्या' इति । 'उवाच रामो वैदेहीं परामर्शविशङ्कितः । गच्छ वैदेहि मुक्ता त्वं यत्कार्यं तन्मया कृतम् ।। मामासाद्य पतिं भद्रे न त्वं राक्षसवेष्मनि । जरां व्रजेथा इति मे निहतोऽसौ निशाचरः ।। कथमस्मद्विधो जानन् सर्वधर्मविनिश्चयम् । परहस्तगतां नारीं मुहूर्तमपि धारयेत् ।। सुवृत्तामसुवृत्तां वा अहं त्वामद्य मैथिलि । नोत्सहे परिभोगाय श्वावलीढं हविर्यथा ।। ततः सा सहसा बाला तच्छ्रुत्वा रावणं वचः । पपात देवी व्यथिता निकृत्ता कदली यथा ।।' इत्यादि । तथा– 'तत उत्थाय वैदेही तेषां मध्ये यशस्विनी । उवाच वाक्यं कल्याणी रामं पृथुलवक्षसम् ।। अन्तश्चरति भूतानां मातरिश्वा सदागतिः । स मे विमुञ्चतु प्राणं यदि पापं चराम्यहम् ।।' इत्यादि सीतावचनं श्रुत्वा, 'नलकूबरशापेन रक्षा चास्या कृता मया । यदि ह्यकामामाशासेत् स्त्रियमन्यामपि ध्रुवम् ।। शतधाऽस्य पतेन्मूर्धा इत्युक्तः सोऽभवत्पुरा । नात्र शङ्का त्वया कार्या प्रतीच्छेमां महामते ।।' इत्यादि भारते ब्रह्मवचनाच्च 'दिव्यच्छलेन' इत्यस्य शुद्धव्याजेन इत्यर्थोऽवगम्यते ।।२२२।।

**गूढवाक्यार्थ–** आगतां हनूमता तत्रानीताम् । दिव्यच्छलेन शपथव्याजेन ।।२२२।।

**जानन् गिरीशालयगां स सीतां समग्रहीत् पावकसम्प्रदत्ताम् ।**
**मुमोद सम्प्राप्य च तां स रामः सा चैव देवी भगवन्तमाप्य ।।२२३।।**

**वरदराजीया–** स रामो गिरिशस्य रुद्रस्यालये स्थितां जानन् तामेव पावकसम्प्रदत्तां अगृह्णात् । अनेन रावणेन नीतां सीतां परपुरुषस्पर्शशङ्कापरिहारार्थं दिव्येन शुद्धां निश्चित्य परिगृहीतवान् राम इत्यर्थकपुराणवचनानां तात्पर्यमुक्तं भवति । स रामस्तां सीतां प्राप्य मुमोद । सा च देवी सीता भगवन्तमाप्येवं मुमोद ।।२२३।।

**जनार्दनीया–** गिरीशस्य रुद्रस्य आलयः कैलासः तस्मिन् गच्छतीति तथा ताम् । जानन् रामः पावकसम्प्रदत्तां सीतां समग्रहीत् । न तु रावणहृतां सीताकृतिमित्यर्थः । तां सीताम् । सा देवी सीता ।।

**चट्टी–** श्रीरामः गिरीशस्य रुद्रस्य आलयः कैलासः तस्मिन् गच्छतीति तथा तां जानन् पावकसम्प्रदत्तां सीतां समग्रहीत् । न तु रावणहृतां सीताकृतिमित्यर्थः । सः श्रीरामः तां प्राप्य मुमोद । सा देवी सीता च भगवन्तं श्रीरामं आप्य मुमोद । चशब्देनोक्तार्थे प्रमाणप्रसिद्धिं सूचयति । तथाचोक्तम्–

कृत्वाथ रावणवधं रामो लक्ष्मणसंयुतः । समादायाऽभवत् सीतां शङ्काकुलितमानसः ।। सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ।। दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः ।। प्रगृह्य भर्तुश्चरणौ कराभ्यां सा सुमध्यमा । चकार प्रणतिं भूमौ रामाय जनकात्मजा ।। ननाम वह्निं शिरसा तोषयामास राघवः । तमाह देवो लोकानां दाहको हव्यवाहनः ।। या सीता राक्षसेन्द्रेण सीता भगवती हृता । मायामयी मया सृष्टा रावणस्य वधेप्सया ।।' इति कौर्मे ।।२२३।।

**अतिविशद–** सम्प्रग्रहीत्पावकसम्प्रदत्तां इत्यत्र 'मायामयीं सीतां कैलासादागतां पुनः । रामायादर्शयत्सीतां पावकोऽसौ हरिप्रियः ।।' इत्यार्षवचनम् ।।२२३-२२४।।

**अथो गिरेरानयनात् परस्ताद् ये वानरा रावणबाणपीडिताः ।**
**तारापिता तान् निरुजश्चकार सुषेणनामा भिषजां वरिष्ठः ।।२२४।।**

**वादिराजीया–** सुषेणनामा भिषजां वरिष्ठ इत्यत्र सुषेणोऽप्यश्विनो रूपान्तरम् । मैन्दविविदौ तु रामावतारात्प्रागेव विद्यमानौ अश्विनोरवतारौ । रामावतारसमये सुषेणाख्यं रूपान्तरमुत्पन्नमिति ज्ञेयम् । अत एव भिषजां वरिष्ठ इत्युक्तम् ।।२२४।।

**वरदराजीया–** युद्धे मृताः छिन्नाश्च सर्वे वानराः सुषेणेनोत्थापिता इति पुराणान्तरे उक्तिस्तद्विरोधं परिहरति– **अथो इति** ।। अथानन्तरं गिरेः गन्धमादनगिरेः आनयनात्परस्तात् तदनन्तरं ये वानराः रावणबाणपीडितास्तान् भिषजां वैद्यानां वरिष्ठः श्रेष्ठः तारायाः पिता सुषेणनामा कपिः निरुजः रोगरहितान् पीडारहितांश्चकार । पूर्वं तु गन्धमादनानयनेन हनूमांश्चकारेति भावः ।।२२४।।

**जनार्दनीया–** गिरेः आनयनात् परस्तात् गन्धमादनानयनानन्तरं ये पीडिताः । तारायाः वालिभार्यायाः तारायाः पिता भिषजां वैद्यानां मध्ये वरिष्ठः श्रेष्ठः सुषेणनामा वानरः तान् रावणबाणपीडितान् वानरान् निरुजः निर्गतरोगान् चकार ।।२२४।।

**चट्टी–** गिरेः गन्धमादनगिरेः आनयनात् परस्तात् अनन्तरं ये वानराः रावणबाणपीडिताः तान् भिषजां वैद्यानां मध्ये वरिष्ठः श्रेष्ठः तारायाः वालिभार्यायाः पिता सुषेणनामा वानरः निरुजः निर्गता रुग् रोगा येभ्यस्ते तथा तान् चकार अकरोत् ।।२२४।।

**तदा[१] मृतान् राघव आनिनाय यमक्षयाद् देवगणांश्च सर्वशः ।**
**समन्वजानात् पितरं च तत्र समागतं गन्तुमियेष चाथ ॥२२५॥**

**वादिराजीया–** तदा मृतान् राघव आनिनायेत्यत्र वानराणां सर्वेषां मृतसञ्जीवनादिनोज्जीवितत्वात् ब्रह्मरुद्रेन्द्रादिदेवगणानां सर्वेषां पूर्वमेवाऽऽगतत्वाच्च मृतानामानयनं देवगणानामानयनमित्यस्य कोऽर्थः इति चेत्सत्यं स्ववियोगेन मृतस्य यमलोके स्थितस्य पितुर्दशरथस्य स्वदर्शनेन सुखं दातुमानयन्राम लौकिकपुरुषवद्बन्धुष्वासक्तिर्नास्तीति बोधनाय तेन सह सर्वान्मृतान्योग्यजीवानपि स्वदर्शनेन कृतार्थीकरणाय आनयामासेत्येको भावः । कारागृहपालकैः सहैव कारागृहस्थानामानयनवत् यमपुरिस्थानामानयनमपि यमभटैस्सहैव कार्यम् नतु तानुल्लङ्घ्येति राजनीतिप्रकटनाय यमदेवगणांश्च सहैवानयामासेत्यपरो भावः । अत एव दशस्वेकदेश इतिवत्तत्र तेषां मृतानां मध्ये समागतं पितरमित्युक्तम् । समन्वजानात् गच्छेत्याज्ञापयामास ॥२२५-२२८॥

**मधुसूदनीया–** ॥ **तदा मृतानिति** ॥ ननु पूर्वं स्तुत्यर्थं समागताः ब्रह्मादयः किमभवन्नित्यत आह– **देवगणांश्चेति** ॥ सर्वशो देवगणान् ब्रह्मादिदेवगणान् इन्द्रेण सह समागतं पितरं दशरथं च समन्वजानात् अनुज्ञापितवानित्यर्थः । स्वस्थानं प्रतीति शेषः । 'ततो राजा दशरथो महेन्द्रेण समागतः । परिरेभे सुतं प्रीत्या बाष्पपर्याकुलेक्षणः ॥ अन्वजानात्स पितरं ब्रह्मादीनपरानपि ॥' इति सङ्ग्रहरामायणे [यु.का.१५.३,९]

केचित्तु 'यमक्षयात् देवगणांश्च पितरं च निनाय समागतं पितरं समन्वजानात् ज्ञातवान्' इत्याहुः । तच्चिन्त्यम् । उक्तमानविरोधात् । तथाचायं श्लोकार्थः । मृतान् कपीन् यमक्षयादानिनाय । स्वस्तुत्यर्थं स्वर्गादिलोकात् समागतान् सर्वशो देवगणान् ब्रह्मादिदेवसमूहान् स्वर्गलोकादिन्द्रेण सह समागतं पितरं च समन्वजानादिति । अथ देवादीनामाज्ञाप्रदानानन्तरं गन्तुमयोध्यां प्रतीति शेषः ॥ इयेषेति ॥ उक्तं चारण्यपर्वणि दशरथस्य स्वर्गादागमनं 'राजा दशरथश्चैव भास्वरो मूर्तिमान् पिता । विमानेन महार्हेन हंसयुक्तेन भास्वता ॥' इत्यादि [२९२.१९] ॥२२५॥

**वरदराजीया–** तदा गिरेरानयनानन्तरं मृतान् वानरान् राघवो रामो यमक्षयाद्यमलोकादानिनाय आनयामास । सर्वशो देवगणांश्च प्रति समन्वजानात् समनुजज्ञे अनुज्ञां दत्तवान् । तत्र इन्द्रेण सहागतं पितरं दशरथञ्च समन्वजानात् इति सम्बन्धः । अथ च स्वयं गन्तुं इयेष ऐच्छत् ॥२२५॥

---

१. रामः अमृतवृष्टिं कारयित्वा मृतान् वानरान् पुनः उज्जीवयामास इति वासुदेवसहस्रनामस्तोत्रे राममहिमा स्तूयते । तथा हि- 'सुधावृष्टिमृताशेषस्वसैन्योज्जीवनैककृत्' पाद्म.उ.ख.७१.२३० । रामायणे तु इन्द्रद्वारा सर्वान् उज्जीवयामास इति श्रूयते । (६.१२३.५) मम हेतोः पराक्रान्ता ये गता यमसादनम् । ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥ इति इन्द्रं प्रति रामवचनम् ॥

**जनार्दनीया–** राघवः तदा तस्मिन् काले पर्वतानयनोत्तरकाले मृतान् वानरान् यमस्य क्षयात् सदनात् आनिनाय आनयमास । सर्वशः सर्वान् देवगणान् स्तुतिं कर्तुं आगतान् ब्रह्मादिदेवगणान् । तत्र स्वसमीपं प्रति समागतं देवैः सह समागतम् पितर दशरथं समन्वजानात् आज्ञापयामास । तदुक्तं संग्रहे– 'सङ्कल्पात् सत्यसङ्कल्पः समानिन्ये यमक्षयात् । ततो राजा दशरथो महेन्द्रेण समागतः ।।' इति । तथा 'अनुजानात् स पितरं ब्रह्मादीनपरानपि ।' इति । अथ ब्रह्मदीनां गमनानन्तरं च । स्वयं च गन्तुं अयोध्यां प्रतीति शेषः । इयेष ऐच्छत् ।।२२५।।

**ताम्रपर्णीया–** ।। **देवगणान् इति** ।। तत्र युद्धे समागतान् देवगणान् समागतं पितरं दशरथं समन्वजानात् स्वस्थानं गन्तुं अनुजज्ञे इत्यर्थः ।।२२५।।

**चट्टी–** राघवः श्रीरामः तदा पर्वतानयनोत्तरकाले मृतान् वानरान् यमस्य क्षयात् गृहात् आनिनाय आनयमास । सर्वशः सर्वान् देवगणान् च तत्र समीपमागतं इन्द्रेण सह स्वर्गलोकात् समागतं पितरं दशरथं च गन्तुं समन्वजानात् आज्ञापयामास । अथ स्वयं च गन्तुं अयोध्यां प्रतीति शेषः । इयेष ऐच्छत् । तदुक्तम्– 'ततो राजा दशरथो महेन्द्रेण समागतः । परिरेभे सुतं प्रीत्या बाष्पपर्याकुलेक्षणः ।। अन्वजानात्स पितरं ब्रह्मादीनपरानपि ।।' इति संग्रहे ।।२२५।।

**भावचन्द्रिका–** रामदूतानां देवत्वेनापरोक्षज्ञानित्वेन च अधोगत्यभावाद्यपेक्षया स्वर्गस्थ यमसभाया इत्यर्थः । समागतं इन्द्रेण सहेति शेषः । 'तदा राजा दशरथो महेन्द्रेण समागत' इति सङ्ग्रहरामायणे [यु.का.१५.३] ।।२२६।।

**भावविवृति–** तदा मृतान्राघव आनिनाय इत्यत्र तदा मृतानां कपीनां देहस्य नष्टत्वात् रामाज्ञया प्रकृतिनिर्मितपूर्वदेहसदृशदेहोऽभूदिति सूचनाय चशब्दः ।।२२५-२४८।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूज रामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ अष्टमोऽध्यायः ।।

**अतिविशद–** तदा मृतान् राघव आनिनाय यमक्षयाद्देवगणांश्च सर्वश इत्यत्र सङ्ग्रहश्च 'सङ्कल्पात्...समागत' इति तथा 'अन्वजानात् स पितरं ब्रह्मादीनपरानपि' इति ।।२२५-२३२।।

**प्रमाणसंग्रह–** ।। **देवगणांश्च सर्वश इत्यादि समागतं पितरं इति वाक्यम्** ।। 'ततो राजा...' ब्रह्मादीनपरानपि ।।' इति संग्रहे [यु.का.१५.३,९] ।।२२५।।

**गूढवाक्यार्थ–** देवगणान् युद्धदिदृक्षया समागतान् देवगणान् । समन्वजानात् स्वस्थानं गन्तुमनुजज्ञे ।।२२५।।

**विभीषणेनार्पितमारुरोह[1] स पुष्पकं तत्सहितः सवानरः ।**
**पुरीं जगामाऽशु निजामयोध्यां पुरो हनूमन्तमथ न्ययोजयत् ॥२२६॥**

**मधुसूदनीया–** ॥ **विभीषणेनार्पितमिति** ॥ स रामः तत्सहितः विभीषणेन सहितः सवानरः सुग्रीवादिकतिपयवानरयुक्तस्सन् विभीषणेनार्पितं पुष्पकमारुरोहेत्यन्वयः । तथा चोक्तम्–

'अथारुरोह तं राजा सुग्रीवस्सह मन्त्रिभिः । लक्ष्मणश्च महाधन्यो युवराजोऽङ्गदस्तथा ॥
सुग्रीवाऽनुगता ये च विद्वांसो हरियूथपाः । ऋक्षराजो गवाक्षश्च ... ॥' इत्यादि रामायणे ।
'आरुरोह विमानाग्र्यं वैदेह्या भार्यया सह । लक्ष्मणेन च शूरेण सुग्रीवेण महात्मना ॥
विभीषणेन शूरेण राक्षसैश्च महाबलैः । यथा विमाने वैकुण्ठे नित्यमुक्तैर्महात्मभिः ॥
तथा सर्वैस्समारुह्य ऋक्षवानरराक्षसैः । अयोध्यां प्रस्थितो रामो स्तूयमानस्सुरोत्तमैः ॥'

इति पाद्मे च [उ.ख.२४२.३४६–३४९] । विभीषणोऽपि चतुर्भिर्मन्त्रिभिस्सह पुष्पकं समारुरोह इत्येतद्रामायणे [६.१२२.२४] प्रसिद्धम् । अन्ये वानरास्तु भूमावेवागता इति ध्येयम् । तदुक्तम्– 'अनुजानामि तत्सर्वान्यथेष्टं गम्यताम्' इति [६.१.१४] । 'तेनैव सेतुना तीर्त्वा मकरालयमव्ययम्' इत्यादि रामायणे[2] । यत्तु 'विभीषणेनार्पितं पुष्पकमारुरोह । तत्सहितः तेन विभीषणेन सहितः सवानरः वानरैस्सह वर्तमानः आशु निजां स्वकीयामयोध्यां पुरीं जगाम' इत्यपव्याख्यानम् तन्न । उक्तमानविरोधात् । अप्रामाणिकत्वात् । उक्तमानविरोधस्तु विभीषणादीनामपि पुष्पकारोहणस्योक्तत्वादिति ध्येयम् ॥२२६॥

**वरदराजीया–** विभीषणेनार्पितं समर्पितं पुष्पकमारुरोह । तेन विभीषणेन सहितो वानरैः सह वर्तमानः आशु निजां स्वकीयां अयोध्यां पुरीं जगाम । अथानन्तरं पुरः अग्रे गन्तुमिति शेषः । हनूमन्तं न्ययोजयत् प्रेषितवान् ॥२२६॥

**जनार्दनीया–** स रामः पुष्पकं विमानं आरुरोह । तेन विभीषणेन सहितः रामः अयोध्यां पुरीं जगाम । अथो पुरः अग्रे हनूमन्तं न्ययोजयत् । स्वागमनं भरतस्य सूचयितुं प्रेषयामासेत्यर्थः ॥२२६॥

**चट्टी–** स श्रीरामः विभीषणेनार्पितं पुष्पकं तत्सहितः तेन विभीषणेन सहितः सन् सवानरः सुग्रीवादिकपिभिः सहितस्सन् आरुरोह । तथोक्तम्– 'अथारुरोह तं राजा सुग्रीवस्सह मन्त्रिभिः । लक्ष्मणश्च

१. पुष्पकं नाम भद्रं ते विमानं सूर्यसन्निभम् । मम भ्रातुः कुबेरस्य रावणेन बलीयसा ॥ हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम् ॥... प्रीतियुक्तस्य विहितां ससैन्यः स सुहृद्गणः । सत्क्रियां राम ते तावद् गृहाण त्वं मयोद्यताम् ॥ इत्यादि रामायणे ६.१२१

२. इदं श्लोकार्धं भारते अरण्यपर्वणि.२९२.५३दृश्यते ।

महाधन्यो युवराजोऽङ्गदस्तथा ।। सुग्रीवाऽनुगता ये च विद्वांसो हरियूथपाः । ऋक्षराजो गवाक्षश्च ... ।।' इत्यादि रामायणे । विभीषणोऽपि चतुर्भिर्मन्त्रिभिस्सह पुष्पकं समारुरोहेत्येतद्रामायणे [यु.का.१२२.२४] प्रसिद्धम् । अन्ये वानरास्तु भूमावेव गता इति ध्येयम् । तदुक्तम् । 'अनुजानामि तत्सर्वान्यथेष्टं गम्यतामिति' इति [यु.का.१२२.१४] । 'तेनैव सेतुना तीर्त्वा मकरालयमव्ययम्' इत्यादि रामायणे । सः श्रीरामः आशु निजां अयोध्यां प्रति जगाम । अथो अनन्तरं पुरः अग्रे गन्तुमिति शेषः । हनूमन्तं न्ययोजयत् प्रेषितवान् ।।२२६।।

**भावचन्द्रिका–** तत्सहितः विभीषणसहितः । असौ मनुष्यरूपी भूत्वा ययौ । '...रामनियोगेन मारुतिर्मारुतोपमः । मानुष्यं रूपमाश्रित्य पुरीं राघववल्लभाम् ।।' इति च । कोऽयं वानर इति भरतभीतिपरिहारायेति भावः ।।२२६–२३२।।

**प्रमाणसंग्रह–** ।। **तत्सहितः स वानर इति** ।। 'अथारुरोह तं राजा सुग्रीवस्सह मन्त्रिभिः । लक्ष्मणश्च महाधन्यो युवराजोऽङ्गदस्तथा ।। सुग्रीवाऽनुगता ये च विद्वांसो हरियूथपाः । ऋक्षराजो गवाक्षश्च...।।' इत्यादि रामायणे । 'अनुजानामि तत्सर्वान्यथेष्टं गम्यताम्' इति । 'तेनैव सेतुना तीर्त्वा मकरालयमव्ययम्' इति च ।।२२६।।

**ददर्श चासौ भरतं हुताशनं प्रवेष्टुकामं जगदीश्वरस्य ।**
**अदर्शनात् तं विनिवार्य रामं समागतं चास्य शशंस मारुतिः ।।२२७।।**

**मधुसूदनीया–** ।। **समागतं चास्येति** ।। रामस्समागत इति मया कथं ज्ञातव्यमित्यतस्तज्ज्ञापकं पश्येति चाहेति सूचयति चशब्देन । 'पांसुं दाशरथे पश्य व्याप्नुवानं दिशो दश । किङ्कराणां त्वदार्यस्य हरीणां रभसोत्थितम् ।।' इति संग्रहरामायणे [६.१५.४०–४१] ।।२२७–२३३।।

**वरदराजीया–** असौ हनूमान् जगतः ईश्वरस्य रामस्यादर्शनान्निमित्ताद्धुताशनं अग्निं प्रवेष्टुकामं प्रवेष्टुं कामयति इच्छतीति स तथा तं भरतं निवार्य वारयित्वा मारुतिर्हनूमान् रामं समागतं शशंस । श्रीरामः आगतः अग्निः मा प्रविशेति कथित इति भावः ।।२२७।।

**जनार्दनीया–** असौ हनूमान् जगदीश्वरस्य रामस्यादर्शनाद्धेतोः हुताशनं प्रवेष्टुकामं भरतं ददर्श । स मारुतिः । तं भरतं 'अग्निं मा प्रविश' इति निवार्य, समागतं रामं अस्य भरतस्य शशंस । समागतो राम इत्यकथयदिति भावः ।।२२७।।

**चट्टी–** असौ हनूमान् जगतः ईश्वरस्य श्रीरामस्य अदर्शनाद्धेतोः । हुताशनं अग्निं प्रवेष्टुकामं भरतं ददर्श । स मारुतिः तं भरतं अग्निं मा प्रविशेति निवार्य श्रीरामं समागतं चास्य भरतस्य शशंस । श्रीरामः समागत

इत्यकथयदिति भावः । श्रीरामः समागत इति मया कथं ज्ञातव्यमित्यतस्तज्ज्ञापकं पश्येति चाहेति सूचयति चशब्देन । 'पांसुं दाशरथे पश्य व्याप्नुवानं दिशो दश । किङ्कराणां त्वदार्यस्य हरीणां रभसोत्थितम् ।।' इति संग्रहरामायणे [यु.का.१५.४०–४१] ।।२२७।।

**श्रुत्वा प्रमोदोरुभरः स तेन सहैव पौरैः सहितः समातृकः ।**
**शत्रुघ्नयुक्तोऽभिसमेत्य राघवं ननाम बाष्पाकुललोचनाननः ।।२२८।।**

**वरदराजीया–** स भरतो रामागमनं श्रुत्वा प्रमोदस्य सन्तोषस्योरुभरः उत्कृष्टो भारो यस्मिन् स तथा तादृशो भूत्वा तेन हनूमता सहैव पौरैः पुरस्थैः सहितो मातृभिः कौसल्यादिभिः सह वर्तमानः तथा शत्रुघ्नेन युक्तो राघवं अभिसमेत्य प्राप्य बाष्पेणानन्दजलेनाकुले आच्छादिते लोचने यत्र तत्तथा तादृशं आननं पश्येति तादृशो भरतो ननाम ।।२२८।।

**जनार्दनीया–** सः भरतः श्रुत्वा समागतः रामः इत्येवंरूपं हनुमद्वाक्यं श्रुत्वा । प्रमोदस्य उत्कृष्टानन्दस्य उरुभरः महातिशयो यस्य सः तथा सन् । 'अतिशयो भरः' इत्यमरः । तेन हनुमता सहैव राघवं अभिसमेत्य सम्प्राप्य । बाष्पैः आनन्दबाष्पैः आकुले लोचने यस्मिन् तत् तथा, तादृशं आननं मुखं यस्य सः तथा तादृशः सन् ननाम ।।२२८।।

**चट्टी–** सः भरतः श्रीरामागमनं श्रुत्वा प्रमोदस्य सन्तोषस्य उरुभरः उत्कृष्टो भारो यस्मिन् सः तथा तादृशस्सन् । तेन हनुमता सहैव पौरैः पुरस्थैः सहितः मातृभिः कौसल्यादिभिः सह वर्तमानस्तथा शत्रुघ्नेन युक्तस्सन् राघवं श्रीरामं अभिसमेत्य बाष्पैः आनन्दजलैः आकुले आच्छादिते लोचने यस्मिन् तत् तथा तादृशं आननं मुखं यस्य सः तथा तादृशः सन्ननाम ।।२२८।।

**उत्थाप्य तं रघुपतिः सस्वजे प्रणयान्वितः ।**
**शत्रुघ्नं च तदन्येषु प्रतिपेदे यथावयः ।।२२९।।**

**व्यासतीर्थीया–** यथावयः वयोऽनुसृत्य ।।२२९–२३०।।

**वादिराजीया–** सस्वजे आलिलिङ्गे । प्रतिपेदे यथावय इत्यत्र यथावयः तथा प्रतिपेदे प्रियवाक्यप्रतिपादनं कृतवान् ।।२२९–२३०।।

**वरदराजीया–** प्रणयेन स्नेहेन अन्वितो रघुपतिः राघवस्तं भरतं उत्थाप्य सस्वजे आलिलिङ्गे । तथा शत्रुघ्नं च सस्वज इत्यर्थः । तदन्येषु ताभ्यामन्येषु यथा वयः वयोऽनुसारेण प्रह्वीभावाश्लेषकरस्पर्शादिभिः प्रतिपेदे सम्माननां चकारेत्यर्थः ।।२२९।।

**जनार्दनीया–** प्रणयेन प्रीत्या अन्वितः युक्तः तं भरतं सस्वजे समाश्लिषत् । शत्रुघ्नं च उत्थाप्य सस्वजे इत्यर्थः । ताभ्यां भरतशत्रुघ्नाभ्याम् । अन्येषु अन्यविषयेषु मात्रादिषु इत्यर्थः । यथावयः वयोनुसारेण वयोज्येष्ठमारभ्य इत्यर्थः । प्रतिपेदे मर्यादस्थितये स्वयं ननाम इत्यर्थः ।।२२९।।

**अनन्तभट्टीया–** तदन्येषु इति विषयसप्तमी ।।२२९–२३०।।

**चट्टी–** रघुपतिः श्रीरामः प्रणयेन स्नेहेन अन्वितः सन् तं भरतं उत्थाप्य सस्वजे समाश्लिषत् । शत्रुघ्नं च सस्वजे । तदन्येषु ताभ्यां भरतशत्रुघ्नाभ्यां अन्येषु यथा वयः वयोनुसारेण प्रतिपेदे सन्मानं चकार । मात्रादीन् मर्यादास्थितये ननाम । तदन्यान् यथासम्भवं बहुमानं चक्र इति भावः ।।२२९।।

**पुरीं प्रविश्य मुनिभिः साम्राज्ये चाभिषेचितः ।**
**यथोचितं च सम्मान्य सर्वानाहेदमीश्वरः ।।२३०।।**

**वरदराजीया–** पुरीमयोध्यां प्रविश्य मुनिभिः वसिष्ठाद्यैः साम्राज्ये अधिराज्ये अभिषेचितो अभिषिक्तोऽभूत् । यथोचितं यथायोग्यं सम्मान्य मानयित्वा सर्वान् सुग्रीवादीन् ईश्वरः इदमाह ।।

**जनार्दनीया–** अभिषेचितो अभिषिक्तो रामः । उचितं अनतिक्रम्य यथोचितं, यथायोग्यं इत्यर्थः । सम्मान्य मानयित्वा, इदं वक्ष्यमाणं वाक्यं सर्वान् प्रत्याह ।।२३०।।

**चट्टी–** ईश्वरः श्रीरामः पुरीमयोध्यां च प्रविश्य मुनिभिः वसिष्ठाद्यैः साम्राज्ये अधिराज्ये अभिषेचितो अभिषिक्तो सन्नुचितमनतिक्रम्य यथोचितं यथायोग्यमित्यर्थः । सर्वान् च सम्मान्य मानयित्वा इदं वक्ष्यमाणं वाक्यं सुग्रीवादीन् प्रत्याह ।।२३०।।

**सर्वैर्भवद्भिः सुकृतं विधाय देहं मनोवाक्सहितं मदीयम् ।**
**एतावदेवाखिलसद्विधेयं यत् कायवाक्चित्तभवं मदर्चनम् ।।२३१।।**

**व्यासतीर्थीया–** सर्वैर्भवद्भिर्मनोवाक्सहितं देहं मदीयं विधाय सुकृतं सुष्ठु कृतम् । तद्विवृणोति– एतावदिति ।।२३१।।

**वादिराजीया–** सर्वैर्भवद्भिस्सुकृतमित्यत्र सर्वैर्भवद्भिः मनोवाक्सहितं देहं मदीयं विधाय एतावन्तं कालं देहेन मम नमस्कारं विधाय वाचा स्तुतिं विधाय मनसा ध्यानं विधायेति यावत् सुकृतं शोभनमेव कृतम् । न तूदरभरणमेव कृत्वा स्थितमिति भावः ।।२३१।।

**वरदराजीया–** किमिति भवद्भिः सर्वैः मनोवाक्सहितं देहं मदीयं विधाय मत्सेवोपयोगित्वात् सुकृतं शोभनमेव कृतम् । अनेकेषु जन्मसु मनोवाक्कायैर्मदर्चनमेव कृतमिति भावः । सर्वेषां सज्जनानां इदमेव कर्तव्यमित्याह– **एतावदिति** ।। अखिलैः सद्भिः सज्जनैः विधेयं कर्तव्यमेतावदेव । किं तत् कायवाक्चित्तभवं मनोवाक्कायैः कृतं ममार्चनं पूजेत्यर्थः ।।२३१।।

**जनार्दनीया–** सर्वैः भवद्भिः मनोवाक्सहितं देहं मदीयं विधाय, मत्कार्ये समर्प्य इत्यर्थः । कायश्च वाक्च चित्तं च तथा, तैः भवं सम्पादितम् । यन्ममार्चनं पूजा तत्सुकृतं सुष्टु सम्यक्कृतम् । भवद्भिः इत्यर्थः । अखिलसद्भिः विधेयं कर्तव्यं एतावदेव । इतः परं अधिकं नास्तीत्यर्थः ।।२३१।।

**अनन्तभट्टीया–** देहं मदीयं विधाय मत्सेवार्थं समर्प्येत्यर्थः । सत्कृतं शोभनं कृतमित्यर्थः । सद्विधेयं सद्भिः कर्तव्यम् ।।२३१।।

**ताम्रपर्णीया–** सुकृतं सुष्ठु कृतम् ।।२३१।।

**चट्टी–** किमिति । सर्वैः भवद्भिः मनोवाक्सहितं देहं मदीयं विधाय मत्सेवोपयोगिनं कृत्वा कायश्च वाक्च चित्तं च कायवाक्चित्तानि तैः भवं सम्पादितं यन्मदर्चनं तत्सुकृतं सम्यक्कृतम् । अखिलसद्भिः विधेयं कर्तव्यं एतावत् एव । इतः परं नास्ति इत्यर्थः ।।२३१।।

**गूढवाक्यार्थ–** मदीयं विधाय मत्सेवोपयोग्यं विधाय । सुकृतं शोभनमेव कृतम् ।।२३१।।

**मुक्तिप्रदानात् प्रतिकर्तृता मे सर्वस्य चाथो भवतां भवेत ।**
**हनूमतो[१] न प्रतिकर्तृता स्यात् स्वभावभक्तस्य निरौपधं मे ।।२३२।।**

**व्यासतीर्थीया–** अथो मे भवतामस्य सर्वस्यापि शुश्रूषणस्य प्रतिकर्तृता मुक्तिप्रदानाद्भवेत । निरौपधं निर्व्याजं क्रियाविशेषणम् ।।२३२।।

**वेदाङ्गतीर्थीया–** स्वभावभक्तस्य मोक्षादिनिमित्तरहितभक्तिमतः । निरौपधं निर्व्याजम् । क्रियाविशेषणमेतत् ।।२३२ ।।

**वादिराजीया–** भवतां सर्वस्य मत्सेवारूपसुकृतस्येति सम्बन्धः । निर्गतमौपधं उपाधिर्यथा भवति तथेति क्रियाविशेषणम् । उप समीपे धीयते इत्युपधमुपाधिः । ततश्च स्वार्थेऽणूप्रत्यये कृते णित्वाद्वृद्धौ च कृतायां उपधमेवौपधमिति शब्दनिष्पत्तिरिति भावः ।।२३२।।

---

१. 'एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे । शेषस्येहोपकाराणां भवाम ऋणिनो वयम् ।। मदङ्गे जीर्णतां यातु यत् त्वयोपकृतं कपे । नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम् ।। ततोऽस्य हारं चन्द्राभं मुच्य कण्ठात् स राघवः । वैदूर्यतरलं कण्ठे बबन्ध च हनूमतः ।।' वा.रा.७.४०.२३-२५

**वरदराजीया–** एवं कृतवतां सर्वस्य भवत्कृतस्य मे प्रतिकर्तृता प्रत्युपकारकर्तृता मुक्तिप्रदानादेव स्यात् भवेत् । भवत्कृतसेवाफलत्वेन मुक्तिं दास्यामीति भावः । एतावता हनूमतोऽप्येवमेव मन्तव्यमित्यत आह– **हनूमत इति** ।। निरौपधं अनौपाधिकं यथा भवति तथा मे स्वभावत एव तस्य हनूमतो मुक्तिप्रदानेन प्रतिकर्तृता न स्यात् । तद्भक्तेः मोक्षाद्यपेक्षारूपोपाधिरहितत्वेन स्वाभाविकत्वादिति भावः ।।

**जनार्दनीया–** अथो भवत्कृतसेवानन्तरं भवतां सर्वस्य भवत्कृतार्चनस्य मुक्तिप्रदानात् मे प्रतिकर्तृता प्रत्युपकारकत्वं भवेत् स्यात् । निरौपधं उपाधिरेवौपधम् । मोक्षादिप्रयोजननिरपेक्षमित्यर्थः । क्रियाविशेषणमेत् । मे स्वभावभक्तस्य स्वभावत एव भक्तिमतः हनूमतः मुक्तिप्रदानात् प्रतिकर्तृता न स्यात् । मोक्षादिपुरुषार्थानपेक्षत्वात् हनूमतः प्रतिकर्तृता न स्यादिति भावः ।।२३२।।

**अनन्तभट्टीया–** सर्वस्य सैन्यस्य । निरौपधं उपाधिरेव औपधं प्रयोजननिरपेक्षमित्यर्थः । क्रियाविशेषणञ्चैतत् । मोक्षार्थिभक्तव्यावृत्त्यर्थमिदम् ।।२३२।।

**ताम्रपर्णीया–** भवतां सर्वस्य साधनजातस्य । अत्र प्रतिकर्तृत्वं नाम सुरकृतसेवानान्तरीयक-फलत्वेन मोक्षदातृत्वं विवक्षितम् । न तु मुख्यफलत्वेन । तेषां मोक्षस्य भगवदुपासनार्थत्वेऽपि अकृतसाधनप्रधानफलत्वेन तदपेक्षाया अभावात् । अनपेक्षितदानस्य अपुरुषार्थत्वात् । तदुक्तम्– 'यदि दद्याद्भक्तियोगात् फलं मोक्षमपीश्वरः । भक्तियोगफलत्वेन न तद्गृह्णीयुरेव ते ।। कामिनोऽपि स्वयं कामान् भुञ्जते न फलात्मना । तस्माद्विरागेऽप्यधिकाः देवा एव विशेषत ।।' इति [भा.ता.११.२०.३७] । 'नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्टो आज्ञात्वेनैव गृह्णते ।।' [भा.ता.३.२७.३४] इति च ।

उक्तञ्च तत्वोद्योतटीकायां 'एषामपवर्गोऽपि परमपुरुषावबोधार्थं अभ्यर्थनीयः' इति । गीताभाष्य-नरहरितीर्थीये च 'तेषां मोक्षस्यापि निरन्तरभगवद्ध्यानार्थत्वं इत्यविरोध' इति । नच तैर्मोक्षस्य परमपुरुषावबोधार्थं अभ्यर्थनीयत्वे 'आज्ञात्वेनैव गृह्णते' इति विरोध इति वाच्यम् । नान्तरीयफलतया ईश्वराज्ञापितमपि निरन्तराय भगवद्ध्यानोपयोगित्वात् भवतु इति तेषां अभिप्रेतत्वेनाविरोधात् । न च 'ऋष्युत्तमाः देवतास्तु विमुक्तौ परिनिष्ठिताः । तथाप्यधिकसौख्यार्थं यतन्ते शुभकर्मसु ।।' इति द्वितीयस्कन्धतात्पर्यविरोधः [२.१.९] इति वाच्यम् । 'परब्रह्मत्वमिच्छामि परब्रह्मन् जनार्दन' [२.५०] इत्यादिना ब्रह्मादिभिरपि काङ्क्षितत्वादिति भगवद्गीताभाष्याप्रमेयदीपिकायाम् । 'मोक्षे सक्तिस्तुत्यर्थं चैतदित्यतो न ब्रह्मण एकान्तित्वविरोध' इत्युक्तत्वेन तद्वदिहाप्युपपत्तेः । यद्वा 'अधिकसौख्यार्थं यतन्ते' इत्यत्र अधिकसौख्यफलकं यत्नं कुर्वन्ति इति विवक्षितत्वेन यत्नसौख्ययोर्नान्तरीयकफलफलिभावसत्वात् अविरोधः ।। **हनूमत इति** ।। तस्य अनादितः सर्वदोषविहीनत्वेन संसारप्रतिकृतेरपि भगवदाराधनेऽन्त-

रायाभावात् निरन्तरायं आराधनोपाधिनापि मोक्षाशा तु निर्गतं औपधं उपाधिः यथा भवति तथा । स्वभावभक्तस्य एकान्तस्य हनूमतः साधनस्य मे न प्रतिकर्तृत्वं इत्यर्थः ।।२३२।।[१]

**चट्टी–** अथो भवत्कृतसेवानन्तरम् । भवतां सर्वस्य भवत्कृतार्चनस्य मुक्तिप्रदानात् मे प्रतिकर्तृता प्रत्युपकारकत्वं भवेत् स्यात् । उपधिरेव औपधः मोक्षाद्यपेक्षारूपं छद्म । निर्गतं उपधः यस्मात् तदिति क्रियाविशेषणम् । निरौपधं यथा भवति तथा । स्वभावभक्तस्य स्वभावत एव भक्तिमतः हनूमतः मुक्तिप्रदानात् प्रतिकर्तृता न स्यात् । मोक्षादिपुरुषार्थानपेक्षितत्वात् हनूमतः प्रतिकर्तृता न स्यादिति भावः ।।२३२।।

**गूढवाक्यार्थ–** भवतां सर्वस्य साधनजातस्य । ननु सुग्रीवताराङ्गदादीनां देवावताराणां तत्कृतसेवाप्रतिकर्तृता रामेणो...* ते । '...एकान्तानां न कस्यचित् । अर्थे नारायणो देवः सर्वमन्यत् तदर्थकम् ।। [गी.ता.] 'यदि दद्याद्भक्तियोगफलं मोक्षमपीश्वरः । भक्तियोगफलत्वेन न तद्गृह्णीयुरेव ते ।।

१. ।। **मुक्तिप्रदानादिति** ।। अत्र 'प्रतिकर्तृत्वं नाम सुरकृतसेवाफलत्वेन मोक्षप्रदत्वम्' इति केचित् । तच्चिन्त्यम् । देवानां स्वकृतसेवाफलत्वेन मोक्षेच्छा एवाभावात् । अनिच्छितदानस्य चापुराषार्थत्वात् । तदुक्तम्– 'यदि दद्याद्भक्तियोगफलं मोक्षमपीश्वरः । भक्तियोगफलत्वेन न तद् गृह्णीयुरेव ते ।। कामिनोऽपि स्वयं कामान् भुञ्जते न फलात्मना । तस्माद् विरागेऽप्यधिका देवा एव विशेषतः ।।' इति । 'नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्टो आज्ञात्वेनैव गृह्णते ।।' इति च । अत्र गुरवः अस्त्वेवं देवानां मोक्षेच्छा । किन्तु न स्वसाधनफलत्वेन । तदुक्तं तत्त्वोद्योतटीकायाम्– 'एषामपवर्गोऽपि परमपुरुषावबोधार्थमर्थनीयः' इति । न च 'आज्ञात्वेनैव गृह्णते' इति वचनविरोधः । अवधारणस्यानभिमतक्रियाव्यार्तकत्वात् । अन्यथा देवानां वायुवैलक्षण्याभावापत्तेः । वायोरेव ह्याज्ञा तेनैव ग्रहणम् । न च 'ऋष्युत्तमा देवतास्तु विमुक्तौ परिनिश्चिताः । तथाऽपि अधिकसौख्यार्थं यतन्ते शुभकर्मसु ।।' इति द्वितीयतात्पर्यविरोधः इति वाच्यम् । 'परब्रह्मत्वमिच्छामि परब्रह्मन् जनार्दन ।।' इत्यादिना ब्रह्मादिभिरपि प्रार्थितत्वादिति श्रीमद्गीताभाष्यप्रमेयदीपिकायां 'मोक्षे सक्तिस्तुत्यर्थमतः इत्यतो न ब्रह्मणो एकान्तित्वविरोधः' इति परिहृतत्वात् । अधिकसौख्यमासाद्य हनूमन्तमासादयित्वेति वाऽर्थः । अतो न विरोधः । 'अधिकसौख्यार्थं यतन्ते' इत्यत्र अधिकसौख्यप्रयोजनकं यत्नं कुर्वन्तीति वाऽर्थः । तच्चास्त्येव नान्तरीयकतया न त्वधिकसौख्योद्देशाभावात् । न प्रयत्न इत्यतो वा न विरोधः । तथा च प्रतिकर्तृत्वं नाम सुरकृतसेवायाः अफलत्वेन निर्विघ्नतया परमपुरुषार्थावबोधार्थमभ्यर्थितमोक्षदातृत्वम् विवक्षितम् । एतेन 'नैकात्मतां मे स्पृहयन्ति केचित्' [भा३.२७.३४] । 'न परिलषन्ति केचिदपवर्गमपि ईश्वरतया' 'एकान्तानां न कस्यचित् । अर्थे नारायणो देवः' [गी.ता] इत्यादि विरोधोऽप्यपास्तः ।। हनूमत इति ।। तस्यानादिकालतया सर्वदोषविहीनत्वेन संसारेऽपि परमपुरुषावबोधने विघ्नाभावात् न निर्विघ्नेनाराधितमपि मोक्षाशा अतो न प्रतिकर्तृकं स्यादिति भावः । तत्र हेतुमाह– **स्वभावेति** ।। कदाचित् भक्तासुरादिव्यावृत्तये स्वभावेति विशेषणम् । वक्ष्यति हि 'ईषच्चकारेव मनस्त्वयीश' इति । अस्मदादिव्यावृत्तये निरौपाधिकमिति ।।२३२।। इति हो पुस्तकपाठः ।

कामिनोऽपि स्वयं कामान् भुञ्जते न फलात्मना । तस्माद्विरागेऽप्यधिकाः देवा एव विशेषत ।।' इति [भा.ता.११.२०.३७] । 'नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्टो आज्ञात्वेनैव गृह्णते ।।' [भा.ता.३.२६.३४] इत्यादिना देवानां स्वकृतसेवाफलत्वेन मोक्षस्यानपेक्षितत्वावगमात् । अनपेक्षितप्रदानस्यापुरुषार्थत्वात् इति चेत् सत्यम् । यद्यपि देवानां स्वकृतसाधनफलत्वेन मोक्षाकाङ्क्षा नास्ति । तथापि तेषां मोक्षापेक्षास्त्येव । ...* नास्मदादिवत् सुखार्थं किन्तु संसारे अस ...* प्रतिवद्धवशेन क्वचिदत्युद्रिक्ततया भगवदाराधनं न घटते । दुःखादिपीडा चास्ति । अतः निर्बाधं भगवदाराधानार्थं भगवान् मोक्षं ददाति चेत् ददात्वित्येवापेक्षन्ते । तदुक्तं तत्वोद्योते टीकायाम् 'एषामपवर्गोऽपि परमपुरुषावबोधार्थमर्थनीय' इति । गीतातात्पर्यनरहरितीर्थीये च- 'तेषां मोक्षस्यापि निरन्तरभगवद्ध्यानार्थत्वादविरोधः' इति । ननु निरन्तरभगवद्ध्यानार्थमर्थनीयत्वे आज्ञात्वेनैव गृह्णत इति न वाच्यम् । नान्तरीयकफलत्वेन स्वीकर्तव्यं इति । ईश्वराज्ञापि स च मोक्षः निरन्तरायं भगवद्ध्यानोपयोगित्वात् भवत्वित्यभिप्रेतत्वेनाविरोधः । तथाच भगवान् तत्कृतसाधनेन तुष्टः नान्तरीयफलत्वेन तदपेक्षितां मुक्तिं ददातीति न विरोधः । हनूमतस्तु मोक्षाकाङ्क्षा नास्त्येव । ईश्वराराधनप्रतिबन्धकस्यैवाभावात् । किन्तु श्रीहरिप्रीतिरेव अपेक्षिता । भगवदाज्ञाया अनुल्लङ्घ्यत्वादेव तद्दत्तमुक्तिस्वीकारः ।।२३२।।

**मद्भक्तौ[1] ज्ञानपूर्तावनुपधिकबलप्रोन्नतिस्थैर्यधैर्य-**
**स्वाभाव्याधिक्यतेजःसुमतिदमशमेष्वस्य तुल्यो न कश्चित् ।**
**शेषो रुद्रः सुपर्णोऽप्युरुगुणसमितौ नो सहस्रांशतुल्या**
**अस्येत्यस्मिन्मदैशं[2] पदमहममुना सार्धमेवोपभोक्ष्ये ।।२३३।।**

**व्यासतीर्थीया-** तर्हि हनुमत्प्रतिकर्तृता तव नास्त्येव किमित्यत स्तुवन् आह- **मद्भक्ताविति** ।। सुमतिरवधारणशक्तिः । शेषादेः सद्भावात् कथमस्य तुल्यो न कश्चिदित्युक्तिरित्यत उक्तम्- **शेष इति** ।। राज्ञो भृत्येन सहभोजनस्याप्रशस्तत्वात् करणेऽपि तस्य महापुरुषार्थत्वाभावात् सह भोजनदानमयुक्तमिति प्रत्युक्तम् । सहभोजनस्य पदात्मकत्वादिति भावेनोक्तम्- **मदैशं पदमिति** ।।२३३।।

---

१. पराक्रमोत्साहमतिप्रतापसौशील्यमाधुर्यनयानयैश्च । गाम्भीर्यचातुर्यसुवीर्यधैर्यैः हनूमतः कोऽप्यधिकोऽस्ति लोके ।। इति वाल्मीकीये ७.३६.४४ । 'तेजो धृतिर्यशो दाक्ष्यं सामर्थ्यं विनयो नयः । पौरुषं विक्रमो बुद्धिः यस्मिन्नेतानि नित्यदा ।।' इत्यार्षे६.१२८.८२ । 'शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम् । विक्रमश्च प्रभावश्च हनूमति कृतालयाः ।।' इति रामायणे ७.३५.३।

२. 'मदंशं' इति वेदाङ्गतीर्थीयवादिराजीयपाठः ।

**वेदाङ्गतीर्थीया–** बलस्यानुपधिकत्वं नाम वरास्त्रादिनिरपेक्षत्वम् । बलस्य प्रोन्नतिः । स्वाभाव्याधिक्यं नामान्यावेशादिनिमित्तरहितत्वम् । न कश्चित् तुल्य इति कथम् । शेषादिसद्भावादित्यत आह– **शेष इत्यादि** ।। शेषो रुद्रः सुपर्णोप्यस्य हनूमतः उरुगुणसमितौ सहस्रांशतुल्या नो इति यस्मात् तस्मात् मदुपासकेषु सर्वाधिक्यकारणात् मदंशं मत्प्रतिबिम्बं मत्स्थानप्रतिविम्बभूतमित्यर्थः ।।२३३ ।।

**वादिराजीया–** ज्ञानाधिक्यस्योक्तत्वात् पुनः सुमतिग्रहणेन अज्ञाननिमित्ताहङ्कारपरधिक्कारादि-दोषरहितत्वेन शोभना मतिरुच्यते । स्वाभाव्याधिक्यं स्वभाव एव स्वाभाव्यम् । स्वार्थिकोऽण् । ऋजुकुलोत्पन्नत्वात् स्वभावतः एव सकलजीवोत्तम इत्यर्थः । मदंशं वैकुण्ठादिलोकेष्विव मम विशेषांशो यस्मिन् तत् मदंशं पदं सत्यलोकस्थानमित्यर्थः । ब्रह्मणः रुद्रादिभ्यो वाणीद्वारा द्विशतगुणाधिकत्वेऽपि 'उमा यावदनन्तांशान्' इति वचनात् उमापर्यन्तमुत्तरोत्तरेषां अनन्तानन्तांशैराधिक्यमित्यनुव्याख्यने आचार्यैरेव निर्णीतत्वादत्र शतपदमप्यनन्तपरम् । अतः सहस्रांशतुल्या नो इत्यस्य न काप्यनुपपत्तिरिति ज्ञेयम् ।।२३३।।

**वरदराजीया–** ननु एतादृशोऽन्योऽपि चेत्तदा किमिति हनूमत इति विशिष्योच्यत इत्यत्र आह– **मद्भक्ताविति** ।। सर्वत्र विषयसप्तमी । मद्भक्त्यादिविषय इत्यर्थः । मम भक्तौ तथा ज्ञानपूर्तौ पूर्णतायां अनुपाधिकं वरावेशाद्यनिमित्तकं यद्बलं तस्य प्रोन्नतौ अधिक्ये, तथा स्थैर्यधैर्यस्वभावात् । स्वभावादेव प्राप्तं आधिक्यं नत्वावेशादिना । तादृशे आधिक्ये । तेजसि सुमतिरवधारणशक्तिः । शमे बुद्धेर्मन्निष्ठतायां दमे इन्द्रियनिग्रहे च अस्य हनूमतो तुल्यः समानः कश्चिन्नास्ति । ननु शेषादेर्विद्यमानत्वात् कथं नास्तीत्यत आह– **शेष इति** ।। अस्य हनूमतो उरूणां गुणानां समितौ प्राप्तौ शेषाद्याः त्रयः सहस्रांशेनापि नो तुल्याः न समानाः । अस्मात्सर्वाधिकार्युत्तमत्वकारणात् अहं अमुना हनूमता सार्धमेव मदैशं मत्स्वामिकं पदं सत्यलोकाधिपत्यं भोक्ष्ये । इदमेव मया सहभोजनं नामेति भावः ।।२३३।।

**जनार्दनीया–** सर्वाधिक्यं अपि प्रकटयन् आह इत्याह– **मद्भक्तौ इति** ।। मद्भक्तौ मद्भक्तिविषये । ज्ञानस्य पूर्तिः तस्यां सर्वविषये सविशेषज्ञानपूर्णताविषये । अनुपधिकं वरास्त्रावेशाद्युपाधिरहितम् । तादृशं च तद्बलं च, तस्य प्रोन्नतौ आधिक्ये, स्थैर्ये स्थिरभावे, धैर्ये धार्ष्ट्ये स्वाभाव्यं च, तदाधिक्यं च अन्यावेशनिमित्तरहितश्रेष्ठत्वं तस्मिन् । तेजसि सामर्थ्ये, शरीरस्थकान्त्या वा, सुमतौ अवधारणशक्त्याम्, दम इन्द्रियनिग्रहे, शमे हरिनिष्ठबुद्धौ । एतेषु विषयेषु अस्य हनुमतः तुल्यः सदृशः कश्चिन्नास्ति । अस्य हनुमतः उरूणां उत्तमाणां गुणानां समितौ समूहे शेषादयोऽपि त्रयः सहस्रांशेन सहस्रभागेन तुल्याः नो नैव । इत्यस्मात् मद्भक्तेषूत्तमत्वनिमित्तात् अहं अमुना हनुमता सार्धमेव सहैव मदैशं मत्स्वामिकं पदं सत्यलोकं भोक्ष्ये । ब्रह्मलोकाधिपत्यप्रदानमेव सहभोजनमिति भावः ।।२३३।।

**अनन्तभट्टीया–** सुमतिः अवधारणाशक्तिः । मदैशं मत्स्वामिकमित्यर्थः ।।२३३।।

**ताम्रपर्णीया–** न केवलं तद्भक्तेः अनौपाधिकत्वम् । किन्तु ज्ञानादीनां ? तेतां सर्वेषां अपि वदन् नैतादृशोऽन्य इत्याह– **मद्भक्तौ इति** ।। अनुपाधकित्वं बलादीनां धैर्यान्तानां विशेषणम् । बलप्रोन्नतिः वलातिशयः । स्थैर्यं अचाश्चल्यम् । धैर्यं अभीरुत्वम् । स्वाभाव्येति आधिक्यादीनां सर्वेषां विशेषणम् । आधिक्यादिनां स्वाभाविकत्वं नाम आवेशवराद्यप्रयोजितत्वम् । सुमतिः प्रतिभा । ततः किं इत्यत आह– **इत्यस्मादिति** ।। यस्मात् हनूमत इति उक्तरीत्या निरुपाधिकभक्तत्वेन मे न प्रतिकर्तृत्वं अस्मात् मदैशं अहमेव ईशः स्वामी आज्ञाकर्ता यस्य तन्मदैशम् । ब्रह्मपदं अमुना सह भोक्ष्ये । उपलक्षणमेतत् पदानन्तरं मुक्तय आज्ञापयामि च । अत्र विवक्षितं आशयं आचार्यः स्वयमेव स्पष्टीकरिष्यति ।।२३३।।[१]

**चट्टी–** हनुमतः सर्वाधिक्यमपि प्रकटयन् आह– **मद्भक्तौ इति** ।। मयि भक्तिः मद्भक्तिः तस्यां मद्भक्तौ मयि भक्तिविषये ज्ञानस्य पूर्तिः तस्यां सर्वविषयकसविशेषज्ञानपूर्णतायाम् । तद्विषयेति सर्वत्र सम्बन्धः । अनुपधिकं वरास्त्रावेशाद्युपाधिरहितं तादृशं च तद्बलं च तस्य प्रोन्नतौ आधिक्ये, स्थैर्ये स्थिरस्वभावे, धैर्ये धार्ष्ट्ये स्वाभाव्यं च तदाधिक्यं च अन्यावेशनिमित्तरहितश्रेष्ठत्वं तस्मिन्, तेजसि सामर्थ्ये शरीरस्थकान्त्यां वा, सुमतौ अवधारणशक्त्याम्, दम इन्द्रियनिग्रहे, शमे हरिनिष्ठबुद्धौ एतेषु विषये अस्य हनुमतः तुल्यः समानः कश्चिन्नास्ति । अस्य हनुमतः उरूणां उत्तमाणां गुणानां समितौ समूहे शेषः रुद्रः सुपर्णश्चेति त्रयोऽपि सहस्रांशेन सहस्रभागेन तुल्याः समाः नो नैव इत्यस्मात् मद्भक्तेषूत्तमत्वनिमित्तात् अहं अमुना हनुमता सार्धमेव मदैशं मत्स्वामिकं पदं सत्यलोकं उपभोक्ष्ये । ब्रह्मलोकाधिपत्यप्रदानमेव सहभोजनमिति भावः ।।२३३।।

**भावचन्द्रिका–** शेषाच्छताधिका भारती तच्छताधिको वायुः । एवञ्च शेषाच्छतशताधिको वायुरिति 'नो सहस्रांश तुल्या' इत्याह ।।२३३-२३६।।

---

१. सुमतिदमशमेष्वित्यत्र सुमतिशब्देन प्रतिभा लौकिकविषयबुद्धिर्वा । ननु अस्मान् मदीशमित्यत्र 'अतो हनूमान् पदमेतु धातुः' इत्यत्र च मोक्षादपि ब्रह्मपदस्योत्तमत्वमुच्यते । तत्कथमिति चेन्न । अत्र न चतुर्मुखमोक्षात् तत्पदस्योत्तमत्वमभिप्रेतम् । किन्त्वितरमोक्षात् । तदुक्तम्– 'या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद् भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्... ।।' इति भागवते [४.१०.१०] । 'ब्रह्मपदादपि अधिकसुखं मोक्षे' इति श्रीमद्गीताभाष्योक्तेश्च । प्रमेयदीपे च– ।। **ब्रह्मादिपदादपि अधिकतममिति** ।। ब्रह्मणो ब्रह्मपदादप्यधिकं शेषस्य शेषपदादप्यधिकमित्यादि''[२.५०] मोक्षमिति । यद्वा भक्तिज्ञानादेव एतत्सम्भवादमुनैव सार्धं मदैशं मदैकस्वामिकं मद्दैवस्वामिकं पदं भोक्ष्ये इत्येवार्थो न तु यस्माद्धनुमतो न प्रतिकर्तृता स्यादस्माद्धेतोः मदैशं पदं अमुना सार्धं भोक्ष्ये इत्यर्थः इति ।।२३३।। इति हो पुस्तकपाठः ।

**अतिविशद–** मद्भक्तौ ज्ञानपूर्तौ इत्यत्र शेषरुद्रसुपर्णानां ज्ञानभक्त्यादौ हनुमदपेक्षया सहस्रांशेन तुल्यता नास्तीत्युच्यते । तत्तु आनन्दश्रुतिविरुद्धमिवाभाति । तत्र एकस्मादेकस्य शतगुणोक्तेरिति चेत् सत्यम् । यद्यप्यत्र तथोक्तमस्ति तथापि गुणशब्दो गणनार्थ इति टीकाकारैर्व्याख्यातत्वात् सहस्रांशतुल्यता नास्तीति लभ्यते । तथा स्फुटं तैत्तिरीयभाष्ये [ब्रह्मवल्ली] तच्छ्रुतिव्याख्यानसमये 'परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् । यथा दीपाच्छतगुणाप्यग्निज्वाला न दीपवत् ।। स्फुटीभवेत् यथैवाग्निर्बहुलोऽपि न सूर्यवत् । यथैव सूर्याद् द्विगुणश्चन्द्रो नैव स्फुटीभवेत् ।। उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ।। प्रतिबिम्बा यतः पूर्वे ब्रह्मान्तानां नरादयः । अतोऽस्पष्टस्वरूपास्ते स्फुटरूपास्तथोत्तरा ।।' इत्यादिनोक्तम् । एतेनैतदपि प्रत्युक्तम् । यदि 'सहस्रलक्षामितभानुदीधितिं' इत्यत्र ऋजूनामेवाधिकाधिकारः तदा अर्जुनस्य विश्वरूपदर्शनसमये सहस्रसूर्यवद्दर्शनं विरुद्धं स्यादिति आनन्दस्फुटतावशात् स्वनीचापेक्षया तद्दर्शनोपपत्तेरिति भावः ।।२३३।।

**गूढवाक्यार्थ–** समितौ पूर्तौ । इत्यस्मादिति ।। इत्यस्मात् हनुमतो निरुपाधिकभक्तत्वेन रामे न प्रतिकर्तृत्वं अस्मात् । मदेशं अहमेवेशः स्वामी आज्ञाकर्ता यस्य तन्मदेशम् । ब्राह्मं पदं अमुना सह भोक्ष्ये । उपलक्षणमेतत् मुक्तिप्राप्त्यनन्तरं मुक्तप्रवर्तकत्वादिकं चाज्ञापयामि ।।२३३।।

**पूर्वं जिगाय भुवनं दशकन्धरोऽसावब्जोद्भवस्य वरतो न तु तं कदाचित् ।**
**कश्चिज्जिगाय पुरुहूतसुतः कपित्वाद् विष्णोर्वरादजयदर्जुन एव चैनम् ।।२३४।।**

**व्यासतीर्थीया–** सोपोद्घातं प्रकारान्तरेण स्तौति– **पूर्वमित्यादिना** ।। कार्तवीर्यार्जुनः ।।२३४।।

**वेदाङ्गतीर्थीया–** हनुमदाधिक्यं प्रतिपादयितुमितिहासमाह– **पूर्वमित्यादिना** ।। अर्जुनः कार्तवीर्यार्जुनः ।।

**वादिराजीया–** पुरुहूतसुतः कपित्वादित्यत्र पुरुहूतसुतो वाली । भूमेः प्रदक्षिणं कुर्वन्वाली विरोद्धुमागतं रावणं गृहीत्वा स्वगृहमानीय स्वसुतस्याङ्गदस्य डोलोपरि विनोदाय कृत्रिमवत् बबन्धेति पौराणिकी कथा । विष्णोः दत्तात्रेयरूपस्य विष्णोः । कार्तवीर्यार्जुनस्य दत्तात्रेयो गुरुरिति पौराणिकी कथा ।।

**मधुसूदनीया–** ।। **विष्णोर्वरादिति** ।। विष्णोर्दत्तात्रेयस्य वरादेव एनं रावणमर्जुनः कार्तवीर्यार्जुनः अजयदित्यन्वयः । तथाचोक्तम्– 'तस्मै दत्तो वरान् प्रादात् चतुरो भूरितेजसः । पूर्वं बाहुसहस्रं तु प्रार्थितं सुमहत् वरम् ।।' इति हरिवंशे [१पर्व.३३.११] । बाहुसहस्रं तु युद्धे एव भवति न सर्वदा इति ज्ञेयम् । तथाचोक्तम्– 'तस्य बाहुसहस्रं तु युद्ध्यतः किल भारत । योगाद्योगेश्वरस्यैव प्रादुर्भवति मायया ।।' इत्यादि [हरिवंश.हरि.३३.१४] । उक्तं च विष्णुपुराणे [४अं.११.११-१२] । 'कृतवीर्यात्कार्तवीर्यार्जुनः सप्तद्वीपाधिपतिर्बाहुसहस्रो जज्ञे । योऽसौ भगवदंशमत्रिकुलप्रसूतं दत्तात्रेयमाराध्य बाहुसहस्रमधर्मनिर्वाणं

धर्मेण पृथिवीजयम् । धर्मतश्चाऽनुपालनमरातिभ्यो अपराजयमखिलजगत्प्रख्यातपुरुषाच्च मृत्युमित्येतान् वरानभिलषितवाल्लेभे च ।।' इति ।।२३४।।

**वरदराजीया–** स्वस्य सर्वाधिक्यं हनूमतश्च शिवाद्याधिक्यं दर्शयितुमितिहासमाह– **पूर्वमित्यादिना** ।। असौ दशकन्धरो रावणोऽब्जोद्भवस्य ब्रह्मणो वरतो वरात् भुवनं त्रैलोक्यं जिगाय । तं रावणं तु कदाचित्काले कश्चित्पुरुषो न जिगाय । तर्हि वाली रावणं कथं जिगायेत्यत आह– **पुरुहूतेति** ।। पुरुहूतस्येन्द्रस्य सुतो वाली कपित्वात् वानरत्वात् रावणं अजयत् । वानरान् विना अजयेयत्वस्य ब्रह्मणा दत्तवरत्वात् । तर्हि कार्तवीर्यार्जुनेन कथं पराजित इत्यत उक्तम्– **विष्णोर्वरादिति** ।। अर्जुनः सहस्रार्जुनः विष्णोर्वरादेव एनं रावणं अजयदित्यर्थः ।।२३४।।

**जनार्दनीया–** स्वोक्तार्थप्रतिपादकमितिहासमाहेत्याह– **पूर्वमित्यादिना** ।। असौ दशकन्धरः दशग्रीवो रावणः भुवनं त्रैलोक्यं जिगाय जितवान् । कश्चित् पुरुषः कदाचित् तं रावणं न तु जिगाय इत्यत्र हेतुपूर्वकमपवादमाह– **पुरुहूतेत्यादिना** ।। पुरुहूतसुतो वाली । कपित्वात् कपिजातिनिमित्तात् रावणं जिगायेत्यर्थः । अर्जुनः कार्तवीर्यार्जुनः विष्णोर्वरादेव एनं रावणं अजयच्च ।।२३४।।

**अनन्तभट्टीया–** यद्यपि नरत्वादेव...*जयः सम्भावित एव तथापि कार्तवीर्यस्य शक्त्यभावात् वरादित्युक्तम् ।।२३४-२३५।।

**ताम्रपर्णीया–** तत्र मारुतिबलस्य स्वाभाविकत्वं उपलक्षणत्वेन वक्तुं आह– **पूर्वमिति** ।। विष्णोर्वरादिति । यद्यपि नरत्वादेव कार्तवीर्यार्जुनस्य रावणजयः सम्भावितः । तथापि शक्त्यभावात् वरादित्युक्तम् । यद्वा कर्मदेवतासमत्वेन चतुर्मुखविषयविष्णुवरादित्यर्थः ।।२३४-२३६।।

**चट्टी–** स्वस्य सर्वाधिक्यं हनुमतः शिवाद्याधिक्यं दर्शयितुं इतिहासमाह– **पूर्वमित्यादिना** ।। असौ दशकन्धरः रावणः अब्जोद्भवस्य ब्रह्मणो वरतो वराद् भुवनं त्रैलोक्यं जिगाय जितवान् । कश्चित् पुरुषः कदाचित् तं रावणं न तु जिगाय । तत्र हेतुपूर्वकमपवादमाह– **पुरूहूतेत्यादिना** ।। पुरुहूतसुतो वाली कपित्वात् कपिजातिनिमित्तात् रावणं जिगायेत्यर्थः । अर्जुनः कार्तवीर्यार्जुनः विष्णोः दत्तात्रेयस्य वरादेव एनं रावणं अजयच्च । तथाचोक्तम्– 'तस्मै दत्तो वरान् प्रादात् चतुरो भूरितेजसः । पूर्वं बाहुसहस्रं तु प्रार्थितं सुमहत् वरम् ।।' इति हरिवंशे [हरि.पर्व.३३.११] । बाहुसहस्रं तु युद्धे एव भवति न सर्वदा इति ज्ञेयम् । तथाचोक्तम्– 'तस्य बाहुसहस्रं तु युद्ध्यतः किल भारत । योगाद्योगेश्वरस्यैव प्रादुर्भवति मायया ।।' इत्यादि [हरिवंश.हरिपर्व.३३.१४] ।।२३४।।

**अतिविशद–** पूर्वं जिगाय भुवनं दशकन्धरोऽसौ इत्यत्र वालिनः रावणजेतृत्वमुच्यते । तत्र हेत्वाङ्क्षायां कपित्वादिति हेतुरुच्यते । तेनात्रायं प्रयोगः सूचितो भवति । वाली रावणजेता कपित्वादिति

कपित्वादिति न हेतुः । किन्तु नरवानरान्प्रति ब्रह्मणो वराभाव एव । 'दत्तो वरो न मनुजान्प्रति वानरांश्च धात्राऽस्य तेन विजितो युधि वालिनैव' इत्युत्तरत्र वाक्यादिति चेन्न । सर्ववानरनराणां नरवानरत्वाविशेषात् रावणजेतृत्वापत्त्या 'विजितो युधि वालिनैव' इति विशेषोक्तिर्विरुद्धा स्यात् । यत एवं 'विशेषविधिः शेषनिषेधं गमयति' इति न्यायेन पुरुहूतसुतकपित्वहेतुरिति ज्ञायते । तस्यापि सपक्षेषु रामादिष्वभावात् अस्य असाधारणानैकान्तिकता तस्मात्कपित्वाज्जिगायेति कथमुक्तिरिति चेन्न । कपित्वाज्जिगायेत्युक्ते कपित्वस्य लोकातिजघन्यत्वेन अप्रयोजकत्वात् कथमस्य हेतुत्वमित्याशङ्क्य 'दत्तो वरो न मनुजान्प्रति वानरांश्च' इत्यनेन सम्भावना उक्ता हेतुत्वं तस्योक्तमुपपादयितुं तेन कपित्वस्य कपिविशेषत्वादित्यर्थत्वात् न व्यभिचारित्वादिति । तथाहि । कपिविशेषत्वस्य तन्मात्रवर्तिनस्तदन्यत्र कुत्राप्यभावान्न व्यभिचारिता नाप्यसाधारणानैकान्तिकता । रामादेः पक्षतुल्यत्वेन सपक्षत्वाभावात् । 'पुरुहूसुतः कपित्वात्' इत्युपक्रम्य 'आवां स्वशक्त्या जयिनौ' इत्यादि रामोपदेशात् वालिनः पक्षता अन्येषां पक्षतुल्यता ज्ञायते । यत्र रावणजेतृत्वाभावः तत्र कपिविशेषत्वाभाव् इति व्यतिरेकव्याप्तिः । तस्मात् रामायणादिप्रमाणानुगृहीतृत्वात् तथैव व्याप्त्यादिमत्वात् कपित्वाज्जिगायेति साधूक्तमिति ॥२३४-२३६॥

**प्रमाणसंग्रह–** ॥ **विष्णोर्वरादजयदिति** ॥ 'तस्मै दत्तो वरान् प्रादात् चतुरो भूरितेजसः । पूर्वं बाहुसहस्रं तु प्रार्थितं सुमहत् वरम् ॥' इति हरिवंशे । 'तस्य बाहुसहस्रं तु युद्ध्यतः किल भारत । योगाद्योगेश्वरस्यैव प्रादुर्भवति मायया ॥' इत्यादि ॥२३४॥

**गूढवाक्यार्थ–** मारुतिबलस्य स्वाभाविकत्वमुपलक्षणत्वेनाह– **पूर्वमिति** ॥ जिगायेति क्रियापदम् । वालिना कार्तवीर्यार्जुनेन च जितत्वात् कश्चिन्न जिगायेति कथमित्यतो गतिमाह– **पुरुहूतेति** ॥ वालिनो जये कपित्वं हेतुः । कार्तवीर्यार्जुनस्य जये विष्णुवरो हेतुरित्यर्थः । एनं रावणम् ॥२३४॥

**दत्तो वरो न मनुजान् प्रति वानरांश्च**
**धात्राऽस्य तेन विजितो युधि वालिनैषः ।**
**[१]अब्जोद्भवस्य वरमाश्वभिभूय रक्षो**
**जिग्ये त्वहं रणमुखे बलिमाह्वयन्तम् ॥२३५॥**

१. तदियं चेतोहारिणी कथा । तथाहि विष्णुधर्मोत्तरपुराणे- ततोऽस्य नगरं भूयः परिचक्राम रावणः । स ददर्श तदा तत्र प्रासादं सर्वकाञ्चनम् ॥ मुक्ताजालपरिक्षिप्तं तथा विद्रुमतोरणम् । गारुडेन च रक्तेन समन्तात्कृतवेदिकम् ॥ वैडूर्यरुचिरस्तम्भं पद्मरागप्रभोज्ज्वलम् । इन्द्रनीलप्रभाच्छन्नं निर्यूहशतशोभितम् ॥ महाभुवनसम्बाधं महोद्यानविभूषितम् । सुखारोहणसोपानं दीर्घिकाशतसङ्कुलम् ॥ सर्वर्तुकुसुमैर्वृक्षैः.....

**व्यासतीर्थीया–** कपित्वादिकं कथं रावणजये निमित्तमित्यत आह– **दत्त इति** ।। राम त्वं मनुष्यत्वाद्रावणमजयः किमित्यतो देवत्वेऽप्यजयत्वमित्याह– **अब्जेति** ।।२३५।।

**वेदाङ्गतीर्थीया–** अहं त्विति तुशब्देनात्मनो विशेषमाह ।।२३५।।

**मधुसूदनीया–** कार्तवीर्यार्जुनस्तमजयदित्यत्र मुख्यं कारणमुक्त्वा कारणान्तरं वालिजये हेतुं चाह– **दत्त इति** ।। धात्रा वानरान् प्रति वरो न दत्त इति उपलक्षणम् । नन्दिशापसद्भावाच्च रावणः कपिभिर्जित इति ध्येयम् । तथाचोक्तम्– 'स क्रुद्धो भगवान् नन्दी शङ्करस्य परा तनुः । अब्रवीद्राक्षसं तत्र

---

... समन्तादुपशोभितम् । सर्वासनयुतं रम्यं महेन्द्रभवनाधिकम् ।। तं तु दृष्ट्वा गृहं राजन् प्रहस्तं वाक्यमब्रवीत् । प्रहस्त शीघ्रं जानीहि कस्येदं भवनोत्तमम् ।। एवमुक्तः प्रहस्तस्तु प्रविवेश गृहोत्तमम् । सम्प्राप्तायां च कक्ष्यायां भिन्नाञ्जनचयोपमम् ।। सर्वाभरणसंवीतं सर्वलक्षणलक्षितम् । गृहीत्वा लोहमुसलं द्वारदेशे व्यवस्थितम् ।। ददर्श पुरुषं भीमं ज्वालामण्डलदुर्दृशम् । तं तु दृष्ट्वा तथाभूतं स विवेश दशाननः ।। समाप्तायां च कक्ष्यायां स ददर्श तमेव हि । तमुवाच महातेजा निशाचरगणेश्वरः ।। यद्धयार्थहमनुप्राप्तो यद्धातिथ्यं प्रयच्छ मे । अथवा तस्य शंस त्वं गृहे योऽस्मिन् व्यवस्थितः ।। ततो राक्षसराजस्य पुरुषो वाक्यमब्रवीत् । तिष्ठत्यस्मिन् गृहे राजा दानवानां बलिर्बली ।। तेन चेद्योत्स्यसे वीर प्रविशेदं गृहोत्तमम् । योद्धुं नार्हसि तेन त्वं स महात्मा महाबलः ।। ब्रह्मण्यश्च शरण्यश्च शूरः सत्यपराक्रमः । वीरो बहुगुणोपेतो बलवान् दृढविक्रमः ।। बालार्क इव तेजस्वी समरेष्वनिवर्तकः । प्रियंवदः संविभागी गूढसाक्ष्याय तत्परः ।। एवमुक्तो दशग्रीवः प्रविवेस गृहोत्तमम् । अथ सन्दर्शनादेव बलिना सुमहात्मना ।। शीघ्रमुत्सङ्गमारोप्य पृष्टस्त्वागमनं ततः । तस्योवाच महातेजा रावणो राक्षाधिपः ।। श्रुतं मया महाभाग बद्धस्त्वं किल विष्णुना । सोऽहं मोचयितुं शक्तो बन्धनात्त्वां न संशयः ।। एवमुक्तस्ततो हासं बलिर्मुक्त्वेदमब्रवीत् । एते मे कुण्डले दिव्ये महारत्नोपशोभिते ।। अनयोरेकमानीय चात्रोपविश माचिरम् । अत्रोपविष्टस्य च ते व्याख्यास्ये विष्णुविक्रमम् ।। एवमुक्तो दशग्रीवः कुण्डलानयने ततः । चकार परमं यत्नं न शशाक च शत्रुहा ।। यदा चालयितुं स्थानात् न शशाक सकुण्डलम् । प्रस्विन्नसर्वगात्रस्तु सन्दष्टदशनच्छदः ।। भ्रुकुटीसङ्कटमुखः परं विस्मयमागतः । उत्सङ्गे तदवस्थे तु बलिः कृत्वेदमब्रवीत् ।। हिरण्यकशिपुर्नामाभवन्मे प्रपितामहः । यदा बभूव तस्येमे कुण्डले वै बभूवतुः ।। एताभ्यां कुण्डलाभ्यां तु सोऽभूत्पूर्वं विभूषितः । ऊर्वोरारोप्य नखरैः करैस्तेन विदारितः ।। कथमद्य महाभागं तं त्वं जेतुं व्यवस्यसि । स एव पुरुषः श्यामो द्वारि तिष्ठति नित्यशः ।। एतेन दानवेन्द्राश्च तथान्ये बलदर्पिताः । वशं नीता बलवता पूर्वपूर्वतराश्च ये ।। बद्धश्चाहमनेनैव कालोऽयं दुरतिक्रमः । क एनं पुरुषं लोके वञ्चयिष्यति राक्षस ।। लोकत्रयस्य सर्वस्य कर्ता हर्ता तथैव च । संहरत्येष भूतानि स्थावराणि चराणि च ।। पुनश्च सृजते सर्वमनाद्यन्तो महेश्वरः । इष्टञ्चैव हुतञ्चैव तपस्तप्तं तथैव च ।। सर्वस्येव हि लोकेशो धाता गोप्ता न संशयः । सर्वदेवमयश्चैव सर्वभूतमयस्तथा ।। सर्वलोकमयश्चैव सर्वज्ञानमयस्तथा । सर्वरूपी महारूपी महाबालो महाभुजः ।। स्मृत्वा स्तुत्वा तथेष्ट्वा च सर्वमस्मादवाप्नुयात् । एतच्छ्रुत्वा च वचनं रावणो निर्ययौ तदा ।। न च तं पुरुषं तत्र ददर्श रजनीचरः ।। इत्यादि प्र.खं.२३८.४-३६ ।

दशग्रीवमुपस्थितम् ।। उत्पत्स्यन्ते त्वदर्थं हि कुलस्य तव वानरा ।।' इत्यादि रामायणे [उ.का.१६.१५, १७] ।।२३५-२३६।।

**वरदराजीया–** तत्र हेतुमाह– **दत्त इति** ।। धात्रा ब्रह्मणोऽस्य रावणस्य मनुजान् वानरांश्च ऋते वरो दत्तस्तेन कारणेन एषः रावणो युधि युद्धे वालिना विजितः पराजितः । उपलक्षणश्चैतत् नरत्वाद्विष्णोः वरत्वाच्चार्जुनोऽजयदित्यपि द्रष्टव्यम् । तर्हि त्वया कथं पराजित इत्यत आह– **अब्जोद्भवस्येति** ।। अहं तु अब्जोद्भवस्य वरं अभिभूय तिरस्कृत्य रणमुखे बलिं बलिचक्रवर्तिनं आह्वयन्तं रावणं जिग्ये जितवानस्मि मम अतिसमर्थत्वादिति भावः ।।२३५।।

**जनार्दनीया–** कपित्वादित्युक्तेर्कारणमाह– **दत्त इति** ।। धात्रा ब्रह्मणा अस्य रावणस्य मनुजान् मनुष्यान् प्रति वानरांश्च प्रति वरः अजेयवरः न दत्तः । येन कारणेन तेन एषो रावणः विजितः पराजितः । नरत्वाद्विष्णोर्वराच्चार्जुनेनापि विजित इति द्रष्टव्यम् । कपित्वाद्युपाधिवशात् ताभ्यां पराजित इत्युक्त्या स्वस्य वायोश्च जयप्रकारं वक्ष्यन्नाह– **अब्जोद्भवस्येत्यादिना** ।। अहं रणमुखे बलिं प्रह्लादपौत्रं बलिमाह्वयन्तं रावणं जिग्ये । कथम्भूतं आह्वयन्तं रक्षः राक्षसम् । विशेषणविशेष्यभावस्य कामचारित्वात् । रक्षः रावणमुद्दिष्य दत्तं वरं अभिभूय निरस्य, जिग्ये इति वा ।।२३५।।

**चट्टी–** कार्तवीर्यार्जुनस्तमजयदित्यत्र मुख्यकारणमुक्त्वा कारणान्तरं च वालिजयेप्याह– **दत्त इति** ।। धात्रा ब्रह्मणा अस्य रावणस्य मनुजान् मनुष्यान् प्रति वानरान् कपीन् प्रति च वरः अजेयत्ववरः न दत्तः । येन कारणेन तेन एषो रावणः युधि युद्धे वालिना पराजितः विजितः । नन्दिशापसद्भावाच्च रावणः कपिभिः जित इति ज्ञेयम् । तथा चोक्तम्– 'स क्रुद्धो भगवान् नन्दी शङ्करस्य परा तनुः । अब्रवीद्राक्षसं तत्र दशग्रीवमुपस्थितम् ।। उत्पत्स्यन्ते त्वदर्थं हि कुलस्य तव वानरा ।।' इत्यादि रामायणे [उ.का.१६.१५,१७] कार्तवीर्याजुनेनाऽपि पूर्वोक्तविष्णुवररूपमुख्यकारणात् नरत्वरूपकारणान्तराच्च रावणो विजित इति द्रष्टव्यम् । वराद्युपाधिवशात् ताभ्यां पराजित इत्युक्त्वा स्वस्य वायोश्च जयप्रकारं वक्ष्यतीत्याह– **अब्जोद्भवस्येत्यादिना** ।। अहं तु रक्षो रावणमुद्दिश्य दत्तमब्जोद्भवस्य ब्रह्मणः वरमाश्वभिभूय तिरस्कृत्य रणमुखे बलिं बलिचक्रवर्तिनं आह्वयन्तं तं रावणं जिग्ये ।।२३५।।

**गूढवाक्यार्थ–** तदेव विशदयति– **दत्त इति** ।।२३५।।

**बलेर्द्वारस्थोऽहं [1]वरमस्मै सम्प्रदाय पूर्वं तु ।**
**तेन मया रक्षोऽस्तं [2]योजनमयुतं पदाङ्गुल्या ।।२३६।।**

---

१. न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे । त्वच्छासनातिगान् दैत्यान् चक्रं मे सूदयिष्यति ।। रक्षिष्ये ....

**व्यासतीर्थीया–** तदेव विवृणोति– **बलेरिति** ।।२३६।।

**वेदाङ्गतीर्थीया–** अस्मै बलये वरं सम्प्रदाय । अहं तव द्वारपालः स्यामिति वरं सम्प्रदाय । तेन कारणेन द्वारस्थोऽहम् ।।२३६ ।।

**वादिराजीया–** बलेर्द्वारस्थोऽहमित्यत्र पूर्वं त्रैलोक्यदानात्तुष्टोऽहं अस्मै बलये वरं तव द्वारि तिष्ठामीति वरं सम्प्रदाय बलेर्द्वारस्थोऽहमभवमिति सम्बन्धः । तद्दत्त्यैव द्वारस्थोऽहमभवं न तु तच्छक्त्येति भावः ।।

**वरदराजीया–** एतदेव विवृणोति– **बलेरिति** ।। पूर्वं पुरा अस्मै बलिराजाय वरं त्वद्वारपालः स्यामिति वरं सम्प्रदाय दत्वा बलेर्द्वारस्थोऽहं जातः । तेन कारणेन मया रक्षो रावणो पदाङ्गुल्या पदाङ्गुष्ठेन अयुतं योजनं योजनानि दशसहस्रयोजनानि अस्तं निरस्तं परास्त इत्यर्थः ।।२३६।।

**जनार्दनीया–** तत्र कारणमाह– **बलेरिति** ।। पूर्वं अस्मै बलये । वरं 'अहं त्वद्वाररक्षकः स्याम्' इति वरं सम्प्रदाय, अहं बलेः द्वारस्थः येन कारणेन । तेन कारणेन मया रक्षः रावणः पदस्य पादस्याङ्गुल्या कनिष्ठाङ्गुल्या अयुतं अयुतयोजनं अयुतयोजनान्यतिक्रम्येत्यर्थः । अस्तं निरस्तम् । मया रावणः क्षिप्त इत्यर्थः ।।२३६।।

**अनन्तभट्टीया–** उक्तमेव विवृणोति– **बलेरिति** ।। वरं प्रदाय । द्वारस्थ इत्यन्वयः । अनेन वरप्रदानं द्वारस्थत्वे कारणमित्युक्तं भवति । तेन वरदाने तपोद्वयं... । अस्तं निरस्तम् ।।२३६।।

**चट्टी–** तत्र कारणमाह– **बलेरिति** ।। पूर्वं अस्मै बलये वरं अहं त्वद्वाररक्षकः स्यामिति वरं सम्प्रदाय दत्वा अहं बलेः द्वारस्थः जातः येन तेन कारणेन मया रक्षः रावणः पदाङ्गुल्या पदस्याङ्गुल्या कनिष्ठाङ्गुल्या अयुतं अयुतयोजनानि दशसहस्रयोजनानि अस्तं निरस्तम् । मया रावणः क्षिप्त इत्यर्थः ।।

**गूढवाक्यार्थ–** अस्मै बलये पूर्वं वरं प्रदाय द्वारस्थ इति सम्बन्धः । अनेन वरदानं द्वारस्थत्वे कारणमित्युक्तं भवति । तेन वरदानेन योजनं योजनानि । अस्तं निरस्तं न्यस्तं वा ।।२३६।।

**पुनश्च युद्धाय समाह्वयन्तं न्यपातयं रावणमेकमुष्टिना ।**
**महाबलोऽहं कपिलाख्यरूपस्त्रिकोटिरूपः पवनश्च मे सुतः ।।२३७।।**

---

... सर्वतोऽहं त्वां सानुगं सपरिच्छदम् । सदा सन्निहितं वीर तत्र मां द्रक्ष्यसे भवान् ।। तत्र दानवदैत्यानां सङ्गात् ते भाव आसुरः । दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनङ्क्ष्यति ।। इति भागवते ८.२१.३४-३६

२. यस्य भगवान् स्वयमखिलजगद्गुरुः नारायणो द्वारि गदापाणिरवतिष्ठते निजजनानुकम्पितहृदयो येन पदाङ्गुष्ठेन दशकन्धरो योजनायुतं दिग्विजये उच्चाटितः ।। भा.५.२३.२७-

**व्यासतीर्थीया–** ऋषिरूपत्वेऽप्यजयमित्याह– **पुनरिति** ।। त्रिकोटिसङ्ख्यावदवताररूपवान् पवनश्च न्यपातयदिति शेषः ।।२३७–२३८।।

**वेदाङ्गतीर्थीया–** पुनश्च कालान्तरे । त्रिकोटिरूपः त्रिकोटिसङ्ख्यावदवतारवान् पवनश्च न्यपातयदिति शेषः ।।

**वादिराजीया–** अहं मे सुतः पवनश्चेत्यावां जयिनाविति स्म हेतोः । स्मपदेन स्वस्यानन्त-बलवत्त्वप्रसिद्धिं हनुमतस्सर्वजीवेष्वधिकबलवत्त्वप्रसिद्धिं च सूचयति । महाबलः कपिलाख्यरूपः पुनः समयान्तरे युद्धाय समाह्वयन्तं एनं रावणं एकमुष्टिना धरातले न्यपातयम् । त्रिकोटिरूपः मे सुतः पवनः हनुमांश्च एकमुष्टिना रावणं धरातले न्यपातयदिति योजना । 'त्रिकोटिमूर्तिसंयुक्तस्त्रेतायां रक्षसान्तकः । हनुमानिति विख्यातो रामकार्यधुरन्धरः ।।' इति वचनात् । त्रिकोटिरूपः पवनश्च मे सुत इति हनुमानिति । तस्य वालिवत् कपित्वादेव जयः कुतो नेति चेन्न । वालिनः इन्द्ररूपत्वेन ब्रह्मवरोल्लङ्घने असामर्थ्यात् कपित्वादेव जयः । हनुमतस्तु मुख्यप्राणरूपतया ब्रह्मसमानत्वसम्भवात् स्वसत्त्वादेव जयो न कपित्वदेवेति विवेकसम्भवात् । शिवो मे वरादेनं रावणं एवं कार्तवीर्यार्जुनवत् अजयत् न तु स्वशक्त्येति सम्बन्धः । लङ्कां प्रति शिवेन सह कैलासमपनेष्यामीति बलोद्धतेन रावणेन स्वविंशतिहस्तैः गिर्युद्धरणे क्रियमाणे शिवेन च गिरिस्तम्भने कृते गिरिमाकर्शन् रावणः स्वयमेव पपातेति पौराणिकी कथा । तत्संग्रहाय शिवो वरात् मेऽजयदेनमित्युक्तम् ।।२३७–२३८।।

**मधुसूदनीया–** ।। **त्रिकोटिरूप इति** ।। मे कपिलरूपस्य ममेत्यर्थः । सुतः त्रिकोटिरूपः पवनः एतत्सदृशः हनूमानित्यर्थः । अयं भावः । एतद्धनुमत्सदृशाः त्रिकोटिसङ्ख्याकाः हनूमन्तः कपिलेन सृष्टाः ते रावणं जितवन्त इति । तदुक्तम्–

संप्रविश्य च पातालं रावणो वरनिर्भयः । अपश्यद्वानरांस्तत्र नीलाञ्जनचयोपमान् ।।
केयूरधारिणस्सर्वान् कृतमाल्यानुलेपनान् । अङ्गुलीयकवज्राद्यैः अलङ्कारैर्विभूषितान् ।।
दृश्यन्ते तत्र नृत्यन्तः तिस्रः कोट्यो महात्मना । भगवान् कपिलो राम द्वीपस्थो नर उच्यते ।
ये तु नृत्यन्ति तस्याग्रे सुतास्ते तस्य धीमतः ।।' इति रामायणे ।[१]
उक्तश्च विष्णुधर्मोत्तरे [२३९.१८–२३]
प्रविश्य ददृशे तत्र सर्वाभरणभूषितान् । नित्योत्सवान् शान्तभयान् निष्कलान् पावकप्रभान् ।।
चतुर्भुजान् महाभोगान् श्रीवत्सकृतलाञ्छनान् । एकरूपधरान् सर्वान् रक्तमाल्यानुलेपनान् ।।
रागद्वेषविनिर्मुक्तान् सर्वशक्तिजगत्प्रियान् । नृत्येन गीतवाद्येन सेवमानान् जनार्दनम् ।।

१. परिमल पब्लिकेषन्– दिल्ली द्वारा मुद्रितरामायणपुस्तके एव प्रक्षिप्तभागत्वेन मुद्रिताः । अन्यपुस्तकेषु एते श्लोकाः नोपलभ्यन्ते ।

मानसं पूजनं कृत्वा देवदेवस्य चक्रिणः । समीपं समनुप्राप्तांस्तस्यैव परमेष्ठिनः ।।

तिस्रः कोट्यस्तदा तेषां दृष्ट्वा च रजनीचरः । ऊर्ध्वरोमा ततस्तस्माद्देशाद् देशमपासरत् ।।'

यत्तु सुतः त्रिकोटिरूपः पवनो वायुश्च रावणं जिगायेति । तन्न । मूलरूपेण वायोः रावणजयाभावादिति बोध्यम् ।।२३७।।

**वरदराजीया–** पुनश्च पुनरपि मां युद्धाय समाह्वयन्तं रावणं महद्बलं यस्य सः कपिल इति अख्या नाम यस्य तत्तथा तादृशं रूपं यस्य सा अहमेकमुष्टिना न्यपातयं पातितवानस्मि । मे मम सुतः पुत्रः त्रिकोटिरूपः कोटित्रयसङ्ख्याकरूपवान् पवनो वायुश्च रावणं जिगायेति शेषः ।।२३७।।

**जनार्दनीया–** महाबलः कपिलाख्यरूपः कपिलावतारोऽहम् । पुनश्च पुनरपि । पुनः व्यावर्त्य । युद्धे युद्धाय आह्वयन्तम् । 'पुनरप्रथमे प्रश्ने व्यावृत्तावववधारणे' इति यादवः । बलिं समाह्वयन्तं रावणं एकमुष्टिना न्यपातयम् । महाबल इति हेतुगर्भविशेषणम् । वाल्यर्जुनवन्नैवेति भावः । महाबल इत्यावर्तनीयम् । त्रिकोटिरूपः त्रिकोटिसङ्ख्याकचतुर्भुजादिरूपवान् मे कपिलाख्यस्य सुतः पवनो वायुः । अजयदिति शेषः । त्रिकोटिरूप इत्यनेन विलक्षणानेकरूपप्रदर्शनेनैव अजयदित्युक्तं भवति । तदुक्तं विष्णुधर्मोत्तरे [१.२३९.१८–२३]

'प्रविश्य ददृशे तत्र सर्वाभरणभूषितान् । नित्योत्सवान् शान्तभयान् निष्कलान् पावकप्रभान् ।।

चतुर्भुजान् महारूपान् श्रीवत्सकृतलाञ्छनान् । एकरूपधरान् सर्वान् रक्तमाल्यानुलेपनान् ।।

रागद्वेषविर्निमुक्तान् [१]सर्वशक्तान् जगत्प्रियान् । नृत्येन गीतवाद्येन सेवमानान् जनार्दनम् ।।

मानुष्यपूजनं कृत्वा देवदेवस्य चक्रिणः । समीपं समनुप्राप्ताः तस्यैव परमेष्ठिनः ।।

तिस्रः कोट्यस्तदा तेषां दृष्ट्वा च रजनीचरः । ऊर्ध्वरोमा ततस्तस्माद्देशाद्देशमपासरत् ।।' इति ।

कपिलपुत्रा इत्युक्तमार्षे । [उ.का.प्रक्षिप्तसर्ग ५.६९]

'ये तु नृत्यन्ति वै तत्र सुताः ते तस्य धीमतः । तुल्यतेजःप्रभावास्ते कपिलस्य नरस्य वा ।।' इति ।।

**अनन्तभट्टीया–** कपिलाख्यरूपो योऽहं एकमुष्टिना इति सम्बन्धः । पुनश्च स्थलान्तरेऽपीत्यर्थः । पुनश्च तं जिगायेति शेषः ।।२३७।।

**ताम्रपर्णीया–** त्रिकोटिसङ्ख्याकरूपः पवनश्च न्यपातयदिति योज्यम् । यद्वा कर्मदेवतासमत्वात् वरविषय एव । ब्रह्मवरमोघीकरणे तस्य शक्तिव्युत्पादनाय मे सुत इत्युक्तम् । चतुर्मुखवत् प्रथमजस्सुतो तत्सम इति भावः ।।२३७।।

**चट्टी–** महद् बलं यस्य सः महाबलः कपिल इत्याख्या यस्य तत्तथा । कपिलाख्यं रूपं यस्य सः कपिलाख्यरूपः कपिलावतारोऽहं पुनश्च पुनरपि युद्धाय बलिनं समाह्वयन्तं तं रावणं एकश्चासौ मुष्टिश्च

एकमुष्टिस्तेन न्यपातयम् । महाबल इति हेतुगर्भविशेषणम् । वाल्यर्जुनवन्नैवेति भावः । महाबल इत्यावर्तनीयम् । महाबलः मे कपिलाख्यरूपस्य मम सुतः त्रिकोटिरूपः पवनः एतद्धनुमत्सदृशतनुमानित्यर्थः । अजयदिति शेषः । अयं भावः । एतद्धनुमत्सदृशाः त्रिकोटिसङ्ख्याकाः हनुमन्तः कपिलेन सृष्टाः ते रावणं जितवन्त इति । तदुक्तम्– संप्रविश्य च पातालं रावणो वरनिर्भयः । अपश्यद्वानरांस्तत्र नीलाञ्जनचयोपमान् ।। केयूरधारिणस्सर्वान् कृतमाल्यानुलेपनान् । अङ्गुलीयकवज्राद्यैः अलङ्कारैर्विभूषितान् ।। दृश्यन्ते तत्र नृत्यन्तः तिस्रः कोट्यो महात्मना । भगवान् कपिलो राम द्वीपस्थो नर उच्यते । ये तु नृत्यन्ति तस्याग्रे सुतास्ते तस्य धीमतः ।।' इति रामायणे । विष्णुधर्मोत्तरे चोक्तम्– 'प्रविश्य ददृशे तत्र सर्वाभरणभूषितान् । नित्योत्सवान् शान्तभयान् निष्कलान् पावकप्रभान् ।। चतुर्भुजान् महारूपान् श्रीवत्सकृतलाञ्छनान् । एकरूपधरान् सर्वान् रक्तमाल्यानुलेपनान् ।। रागद्वेषविर्निर्मुक्तान् 'सर्वशक्तान् जगत्प्रियान् । नृत्येन गीतवाद्येन सेवमानान् जनार्दनम् ।। मानुष्यपूजनं कृत्वा देवदेवस्य चक्रिणः । समीपं समनुप्राप्ताः तस्यैव परमेष्ठिनः ।। तिस्रः कोट्यस्तदा तेषां दृष्ट्वा च रजनीचरः । ऊर्ध्वरोमा ततस्तस्माद्देशाद्देशमपासरत् ।।' इति ।। यत्तु 'मे सुतः त्रिकोटिरूपः पवनो वायुश्च रावणं जिगाय' इति च तद्विचारणीयम् । मूलरूपेण वायोः रावणजयाभावादिति बोध्यम् ।।२३७ ।।

**भारतश्री–** त्रिकोटिरूपः हनूमान् भीम आनन्द इति त्रिकोटिरूपः वानरक्षत्रियविप्रत्वात् त्रयाणां रूपाणां कोटीत्युक्तम् । एककोटिकः द्विकोटिकः संशय इत्यादौ कोटिशब्दस्य नानाजातिवस्तुनि प्रयोगात् । तदुक्तं स्कान्दे–

'वायुर्बलज्ञाननेता विष्णुसेवार्थमेव सः । त्रिकोटिमूर्तिसंयुक्तः त्रेतायां राक्षसान्तकः ।।
हनूमानिति विख्यातो रामकार्यधुरन्धरः । स वायुर्भीमसेनोभूत् द्वापरान्ते कुरूद्वह ।।
कृष्णं सम्पूजयामास हत्वा दुर्योधनादिकान् । द्वैपायनस्य सेवार्थं बदर्यां तु कलौ युगे ।।
यतिरूपधरो वायुः जनिष्यति न संशयः । प्रथमो हनूमान्नाम द्वितीयो भीम एव च ।।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ।।' इति वायुदेवस्य त्रिकोटिरूपाण्यपि सन्तीत्यप्याहुः ।।

**भावचन्द्रिका–** ।। **त्रिकोटीति** ।। अम्भोधितीरस्थः जात एव हनूमान् यदा बुभुक्षितस्तदा फलदानार्थं जननी जगाम । तदा वायुर्देवोत्तम इति ज्ञापयितुं उदये सूर्यं ग्रसन्तं राहुं प्रति उत्पपात । स च इन्द्रे शरणं जगाम । सचाजानन्वज्रं मुमोच । तदा वायोरुत्तमत्वं ज्ञापयितुमेव स्वस्य सामर्थ्येऽपि न प्रतिचकार । शरीरं वज्रहतं मेरौ पपात । तदा पुत्रमङ्कमारोप्य श्वासनिरोधं चकार । अस्य श्वासनियामकत्वे तन्निरोधे सति सर्वे शर्वेन्द्राद्याः काष्ठवत्कृताः इति संग्रहरामायणपरामर्शलब्धा कथा ।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां अष्टमोऽध्यायः ।।

**अतिविशद–** त्रिकोटिरूपः पवनश्च मे सुतः इत्यत्र विष्णुधर्मोत्तरपुराणवाक्यं प्रमाणमस्ति । 'प्रविश्य ददृशे तत्र सर्वाभरणभूषितान् । नित्योत्सवान् शान्तभयान् निष्कलान् पावकप्रभान् ।। चतुर्भुजान् महारूपान् श्रीवत्सकृतलाञ्छनान् । एकरूपधरान् सर्वान् रक्तमाल्यानुलेपनान् ।। रागद्वेषविर्निमुक्तान् [1]सर्वशक्तान् जगत्प्रियान् । नृत्येन गीतवाद्येन सेवमानान् जनार्दनम् ।। मानुष्यपूजनं कृत्वा देवदेवस्य चक्रिणः । समीपं समनुप्राप्ताः तस्यैव परमेष्ठिनः ।। तिस्रः कोट्यस्तदा तेषां दृष्ट्वा च रजनीचरः । ऊर्ध्वरोमा ततस्तस्माद्देशाद्देशमपासरत् ।।' इति । यद्वा हनुमानेककोटिः द्वितीयाकोटिर्भीमः तृतीयाकोटिर्मध्व इति । पवनश्च मे सुत इत्यत्रार्षे उक्तम्– 'ये तु नृत्यन्ति वै तत्र सुताः ते तस्य धीमतः । तुल्यतेजःप्रभावास्ते कपिलस्य नरस्य वा ।।' इति ।।२३७–२३८।।

**प्रमाणसंग्रह–** ।। **त्रिकोटिरूप इति** ।। 'संप्रविश्य च पातालं रावणो वरनिर्भयः । अपश्यद्वानरांस्तत्र नीलाञ्जनचयोपमान् ।। केयूरधारिणस्सर्वान् कृतमाल्यानुलेपनान् । अङ्गुलीयकवज्राद्यैः अलङ्कारैर्विभूषितान् ।। दृश्यन्ते तत्र नृत्यन्तः तिस्रः कोट्यो महात्मना । भगवान् कपिलो राम द्वीपस्थो नर उच्यते । ये तु नृत्यन्ति तस्याग्रे सुतास्ते तस्य धीमतः ।।' इति रामायणे । 'प्रविश्य ददृशे तत्र सर्वाभरणभूषितान् । नित्योत्सवान् शान्तभयान् निष्कलान् पावकप्रभान् ।। चतुर्भुजान् महारूपान् श्रीवत्सकृतलाञ्छनान् । एकरूपधरान् सर्वान् रक्तमाल्यानुलेपनान् ।। रागद्वेषविर्निमुक्तान् [1]सर्वशक्तान् जगत्प्रियान् । नृत्येन गीतवाद्येन सेवमानान् जनार्दनम् ।। मानुष्यपूजनं कृत्वा देवदेवस्य चक्रिणः । समीपं समनुप्राप्ताः तस्यैव परमेष्ठिनः ।। तिस्रः कोट्यस्तदा तेषां दृष्ट्वा च रजनीचरः । ऊर्ध्वरोमा ततस्तस्माद्देशाद्देश-मपासरत् ।।' इति । 'मे कपिलः पुत्र' इत्युक्तमाचार्यैः । 'ये तु नृत्यन्ति वै तत्र सुताः ते तस्य धीमतः । तुल्यतेजःप्रभावास्ते कपिलस्य नरस्य वा ।।' ।।२३७।।

**कण्ठकोद्धार–** महाबलोऽहं कपिलाख्यरूप इति श्लोकम् । अत्रायमितिहासः । पूर्वं कपिलरूपेण शयिते सति युद्धकाङ्क्षिणा रावणेन युद्धाय प्रेषिते सति तदायं कपिलरूपी भगवान् मनसि वायुं प्रेषयित्वा त्वं कोटित्रयसङ्ख्याकरूपवान् भूत्वा युद्धे जयेति तेनोक्तः । स तु युद्धं कृत्वा जित इति त्रिकोटिरूप इति कथां कथयन्ति ।।२३७।।

**गूढवाक्यार्थ–** पवनश्च न्यपातयदित्यध्याहृतेन सम्बन्धः ।।२३७।।

**आवां स्वशक्त्या जयिनाविति स्म शिवो वरान्मेऽजयदेनमेव[2] ।**
**ज्ञात्वा सुराजेयमिमं हि वव्रे हरो जयेयाहममुं दशाननम् ।।२३८।।**

---

१. 'सर्वशक्तीन् जगत्प्रभून्' इति इदानीन्तनपाठः ।

२. 'अजयदेनमेवं' इति जनार्दनीये पाठान्तरम् ।

**मधुसूदनीया–** ।। **शिवो वरान्मेऽजयदेनमेवेति** ।। 'रुदतो राक्षसस्यैवं गतं वर्षसहस्रकम् । ततः प्रीतो महादेवः शैलाग्रे विष्ठितस्तथा ।। उपगम्य दशग्रीवं मोचयित्वा भुजान्नृपः । [१]शैलाक्रान्तेन यो मुक्तस्त्वया रावः सुदारुणः ।। यस्माल्लोकत्रयं त्वेतत् रावितं भयमागतम् । तस्मात्त्वं रावणो नाम नाम्ना तेन भविष्यसि ।।' इति रामायणे [उ.का.१६.३५-३७] ।।२३८।।

**वरदराजीया–** इति कारणात् आवां स्वशक्त्या जयिनौ जयवन्तौ । कैलासदोलनसमये रुद्रेण कथं पराजित इत्यत आह– **शिव इति** ।। शिवो मे वरादेव एनं रावणं अजयत् । ननु शिवाय वरः त्वया किमिति दत्त इत्यत आह– **ज्ञात्वेति** ।। हरो रुद्रः सुरैः देवैः अजेयमिमं ज्ञात्वा इमं वरं वव्रे । किमिति । अहममुं दशाननं रावणं जयेयं पराभविष्यामीति वव्रे इति सम्बन्धः ।।२३८।।

**जनार्दनीया–** इति स्म हेतोः आवां अहं वायुश्चेत्यर्थः । स्वशक्त्या स्वरूपबलेन जयिनौ जयवन्तौ । शिवो मे वरादेव एनं रावणं अजयत् । 'एवम्' इति पाठे उत्तरत्रान्वयः । हरः सुरैरजेयं जेतुमशक्यमिमं रावणं ज्ञात्वा, अहं अमुं कैलासोत्पाटनमिच्छन्तं दशाननं जयेयं पराभविष्यामि । एवं अनेन प्रकारेण वव्रे । वरमिति शेषः ।।२३८।।

**अनन्तभट्टीया–** शिवोऽजयत् कैलासोद्धरणसमय इत्यर्थः । शिवेन सह लङ्कां प्रति कैलासमेव नेष्यामीति बलोद्धतेन रावणेन स्वविंशतिहस्तैर्गिर्युद्धरणे शिवेन च गिरिस्तम्भने कृते गिरिमाकृष्यन् रावणः स्वयमेव पपातेति पौराणिकी कथा । तत्संग्रहाय शिवो वरान्मेऽजयदेनं इत्युक्तम् ।।२३८।।

**ताम्रपर्णीया–** ।। **आवामिति** ।। अहं वायुश्च इत्यावां स्वशक्त्या जयिनौ इत्येतत् स्म प्रसिद्धं इत्यर्थः । आवामिति किं विशिष्य उच्यते । शिवस्यापि तथात्वात् इत्यत आह– **शिव इति** ।।२३८।।

**चट्टी–** इति स्म हेतोः अहं वायुश्च स्वशक्त्या स्वरूपबलेन जयिनौ जयवन्तौ । ननु कैलासाचललोलनसमये रुद्रेण कथं पराजित इत्यत आह– **शिव इति** ।। शिवो मे वरादेव एनं रावणं अजयत् । ननु शिवः किमिति वरं वव्र इत्यत आह– **ज्ञात्वेति** ।। हरः सुरैरजेयं इमं रावणं ज्ञात्वा अहं अमुं कैलासोत्पाटनमिच्छन्तं दशाननं जयेयं पराभविष्यामि इति वव्रे वरमिति शेषः । तदुक्तम्– 'रुदतो राक्षसस्यैवं गतं वर्षसहस्रकम् । ततः प्रीतो महादेवः शैलाग्रे विष्ठितस्तथा ।। उपगम्य दशग्रीवं मोचयित्वा भुजान्नृपः । शैलाक्रान्तेन यो मुक्तस्त्वया रावः सुदारुणः ।। यस्माल्लोकत्रयं त्वेतत् रावितं भयमागतम् । तस्मात्त्वं रावणो नाम नाम्ना तेन भविष्यसि ।।' इति रामायणे ।।२३८।।

**गूढवाक्यार्थ–** शिवेन सह लङ्कां प्रति कैलासमेव नेष्यामीति रावणेन पर्वतहरणे क्रियमाणे शिवेन गिरिस्तम्भने आकर्षन् रावणः पपातेति शिवो वरादित्युक्तम् ।।२३८।।

---

१. रुदतो वेदनान्मुक्तः सर्वः परमदारुणः । इति अर्वाचीनपाठः

**अतः स्वभावाज्जयिनावहं च [1]वायुश्च [2]वायुर्हनुमान् स एषः ।**
**अमुष्य[3] हेतोस्तु पुरा हि वायुना शिवेन्द्रपूर्वा अपि काष्ठवत् कृताः ॥**

---

१. 'वायुर्हि' इति प्रमाणसङ्ग्रहपाठः ।

२. महीयांसो हि महदनुग्रहविधूतकल्केषु पुण्यपूतेष्वेव क्षेत्रेषु अवतरन्ति । अतः सर्वदेवोत्तमस्य वायोः भूमौ अवतरणार्थं प्रवृत्तां अञ्जनाकेसरिणोः महदनुग्रसम्पादिनीं कथां कथयति वाल्मीकिमुनिः । तथाहि- 'माल्यवान् नाम वैदेही गिरीणामुत्तमो गिरिः । ततो गच्छति गोकर्णं पर्वतं केसरी हरिः ।। स च देवर्षिभिर्दिष्टः पिता मम महाकपिः । तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरत् ।। यस्याहं हरिणः क्षेत्रे जातो वातेन मैथिली । हनूमानिति विख्यातो लोके स्वेनैव कर्मणा ।। हतेऽसुरे संयति शम्बसादने कपिप्रवीरेण महर्षिचोदनात् । ततोऽस्मि वायुप्रभवो हि मैथिली प्रभावतस्तत्प्रतिमश्च वानरः ।।' इति [वा.रा.५.३५.८१-८४] इमामेव कथां 'तीर्थविघ्नकरं दुष्टगजं हत्वा प्रतोषिताः । भरद्वाजादयः पुत्रं केसरिणो ददुः ।।' इति पुराणान्तरगतश्लोकमुदाहृत्य नारयणपण्डिताचार्याः स्वीये मध्वविजयव्याख्याने सञ्जग्रहुः । सङ्ग्रहेऽपि- 'हन्तुं भरद्वाजमभिद्रवन्तं सिन्धोस्तटे सिन्धुरमुन्मदान्धम् । अवेक्ष्य दूरादपि तस्य कुम्भे स केसरी केसरिवत्पपात ।। तं शङ्खपूर्वं शबलं स हत्वा तीर्थं मुनीनामभयं चकार । महर्षिसङ्घः समवाप हर्षं वरं वृणीष्वेति च तं जगाद ।। यदि प्रसन्ना भगवत्तमा मे सुतं वृणे सर्वगुणाभिरामम् । तस्मान्न मुख्योऽस्तु विना मुकुन्दमेवं स वव्रेऽथ वरं द्विजेभ्यः ।।' इति कि.का.१.२-४ । गोविन्दराजादयोऽपि युद्धकाण्डव्याख्याने [६.२७.२५] 'पुरा किल शम्बसादनो नामासुरो गजरूपेण मुनीन् बाधमानस्तैर्मुनिभिश्चोदितेन केसरिणा हनुमत्पित्रा हतः । तत्सन्तुष्टैर्मुनिभिर्महापराक्रमो हनुमान् पुत्रस्ते भविष्यतीति केसरिणो वरो दत्तः । ततः प्रभृति हस्तिनां वानराणाञ्च परस्परं वैरमभूदिति ।' इत्याहुः ।

३. 'जातमात्रस्तु यो बाल्ये वीक्ष्य सूर्यं खमाप्लुतः । भक्ष्यार्थी तस्य पार्श्वस्थं राहुं दृष्ट्वा निशाचरम् ।। सूर्यमुत्सृज्य भक्ष्यार्थी तदा राहुं प्रदुद्रुवे । राहुर्जगाम शरणं भयाद्भीतं च वासवम् ।। तस्यानु प्रययावेव स तु बालो महाबलः । स ददर्श महाकायं तदा शक्रस्य दन्तिनम् ।। तं प्रदुद्राव भक्ष्यार्थी सशक्रं कुञ्जरोत्तमम् । प्राहरत्त्वरया वज्रं ततस्तस्य सुराधिपः ।। तस्य वज्रप्रहारेण वामो हनुरभज्यत । हनुमानिति तेनास्य नाम चक्रे पितामहः ।।' इति विष्णुधर्मोत्तरपुराणे.१.२२३.२८-३२ ।

'भङ्गे प्रसक्तेऽपि न भङ्गमाप हनुः शिशोर्यद्धनुमानतोऽयम्' इति सङ्ग्रहे वज्रायुधताडितोऽपि हनुमतो हनुः नाभज्यत । अत एवासौ नाम्ना हनूमानिति लोके प्रथित इति । ननु रामायणे 'मत्करोत्सृष्टवज्रेण हनुरस्य यथा हतः । नाम्ना वै कपिशार्दूलो भविता हनुमानिति ।। ७.३६.११.इति मारुतेर्हनुः कुलिशाहतः अतः असौ हनूमानित्यभिधीयते इत्युच्यते? सत्यम् । तदयं दैत्यमोहनायैव कथाभेदः । यथाहुः 'मोहायैषु विभिन्नता' इति । वस्तुतस्तु लोके यो हि विपुलज्ञानवान् स एव ज्ञानवानिति, यो हि प्रशस्तभोजनवान् स एव भोक्तापुरुषः इति व्यवह्रियते । तथा 'अहो शचीपतिपविशातितोऽपि अस्य हनुः नाभज्यत् अतो नूनमयमेव प्रशस्तहनुमान् अतो हनुमान् इति देवाः प्राहुः' इति पण्डिताचार्योक्तनामनिरुक्तिरेव साधुतमा । किष्किन्धाकाण्डगतमपि श्लोकमत्र संवदति । तथाह्युच्यते वृद्धतमेन जाम्बवता 'वज्रस्य च निपातेन विरुजं त्वां समीक्ष्य च । सहस्रनेत्रः प्रीतात्मा ददौ ते...

**व्यासतीर्थीया–** प्रकारान्तरेण स्तुवन् 'पदमहममुना सार्धमेवोपभोक्ष्ये' इत्युक्तं विवृणोति– **अमुष्येति** ।।२३९।।

**वेदाङ्गतीर्थीया–** अहं वायुश्च स्वभावाज्जयिनौ । स वायुरेव हनुमान् । अनेन हनुमदाधिक्यं भवत्युक्तम् । पुरा हनुमज्जन्मकाले ।।२३९।।

**वादिराजीया–** अमुष्य हेतोस्तु पुरा हि वायुनेत्यत्र हिशब्देन हनूमतः शिरसि शिशुतायां शक्रवज्रप्रहारे कृते सति कुपितो मूलरूपी वायुः शिवेन्द्रादिकान् सर्वान् देवान् श्वासं निरुध्य काष्टवन्निश्चेश्टान् चकारेति रामायणकथाप्रसिद्धिं सूचयति ।।२३९–२४०।।

**मधुसूदनीया–** ।। **अतः स्वभावादिति** ।। यतः त्रिकोटिरूपेण कपिलरूपेण च अहं वायुश्च जितवन्तौ । तस्मादहं वायुश्च स्वभावाज्जयिनौ । ननु वायोः त्रिकोटिरूपेण रावणजये हनूमतः किमायातमित्यत आह– **वायुर्हनूमानिति** ।। यो वायुः त्रिकोटिहनूमद्रूपको रावणं जिग्येऽस्य त्रिकोटि-हनूमदात्मको वायुरेष हनूमानित्यन्वयः । 'त्रिकोटिमूर्तिसंयुक्तः त्रेतायां राक्षसान्तकः । हनूमानिति विख्यातो रामकार्यधुरन्धरः ।। स वायुर्भीमसेनोऽभूत् द्वापरान्ते कुरुद्वहः । कृष्णं सम्पूजयामास हत्वा दुर्योधनादिकान् ।। द्वैपायनस्य सेवार्थं बदर्यां कलौ युगे । यतिरूपधरो वायुर्भविष्यति मुनीश्वर ।।' इति वचनात् ।। **अमुष्य हेतोस्त्विति** ।। तुशब्देन अस्मिन्नर्थे प्रमाणं सूचयति । तथाचोक्तम्– 'चुक्रोधेन्द्राय पवनः प्रजानामशिवाय च । गुहां प्रविष्टं स्वसुतं शिशुमादाय मारुतः । विण्मूत्राशयमावृत्य प्रजास्वन्तर्गतः प्रभुः । रुरोध सर्वभूतानि यथा वर्षाणि वासवः । वायुप्रकोपाद्भूतानि रुद्धश्वासानि सर्वतः । सन्धिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे ।।' इत्यादि रामायणे [७.३५.४८–५१] ।।२३९।।

।। इति श्रीमद्विद्याधीशतीर्थपूज्यपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे अष्टमोऽध्यायः ।।

**वरदराजीया–** अतः कारणात् अहं वायुश्च स्वभावादेव जयिनौ । नतु वरादिनेत्यर्थः । ननु वायोः स्वभावतो जयित्वे हनूमतः किमागतमित्यत आह– **वायुरिति** ।। एष हनूमान् स वायुरेवेत्यर्थः ।

---

... वरमुत्तमम् ।।' इति ४.६६.२८ । 'नूनं व्याकरणं कृत्स्नं अनेन बहुधा श्रुतम् । बहुव्याहरताऽनेन न किञ्चिदपशब्दितम् ।। न मुखे नेत्रयोश्चापि ललाटे च भ्रुवोस्तथा । अन्येष्वपि च सर्वेषु दोषः संविदितः क्वचित् ।।' इत्यादिवचांस्यपि पण्डिताचार्योक्ततत्वमेव प्रतिपादयन्ति । 'पतितस्य कपेरस्य हनुरेका शिलातले । किञ्चिद् भिन्ना दृढहनुः हनूमानेष तेन वै ।।' इति रामायणे ६.२८.१५ । 'हनुः तालप्रदेशः' इति गो.रा. । यद्यप्युत्तरकाण्डे इन्द्रवज्रेण पतनमुक्तम् । तथापि तदपि हेत्वन्तरमिति ज्ञेयम् ।''तथा हनुः । हनुः चिबुकम् । इति ९६.७२ विष्णुस्मृतिव्याख्याने ।

अमुष्य हनुमतो हेतोः हनूमदर्थं शिवेन्द्रपूर्वे देवा अपि वायुना पुरा इन्द्रेण हनूमति वज्रपातसमये काष्ठवज्जडीकृताः ॥२३९॥

**जनार्दनीया–** अतः कारणात् स्वभावात् वरावेशाद्युपाधिविनैवेत्यर्थः । स्वरूपसामर्थ्याज्जयिनौ जयवन्तौ अहं वायुश्च द्वावेवेत्यर्थः । न त्वन्य इति भावः । यदर्थमेतावदुक्तं तदाह– **वायुरिति** ॥ स एषो वायुः हनुमान्, तस्माद्धनुमता स्वशक्त्या रावणो जित इति शेषः । इतिहासान्तरमाह– **अमुष्येति** ॥ पुरा हनुमदुत्पत्तिकाले अमुष्य हनुमतः हेतोः अर्थे वायुना शिवेन्द्रपूर्वा देवा अपि काष्ठवत्कृताः जडीकृताः । इन्द्रेण वज्रेण हनूमति ताडिते सति वायुना देवाः काष्ठवत्कृता इति पौराणिकी कथा अवगन्तव्या । तथा चोक्तं विष्णुधर्मोत्तरे [१.२२३.३१] 'तं प्रदुद्राव भक्षार्थी सशक्रं कुञ्जरोत्तमम् । प्राहरत् त्वरया वज्रं ततस्तस्य सुराधिपः ॥'इति । 'क्रुद्धं च जगतां वायुं सान्त्वयित्वा पितामहः ।' [१.२२३.३३] इति च ॥

**अनन्तभट्टीया–** अमुष्य हनूमतः । अयं कथासंग्रहः रामायणादवगन्तव्या ॥२३९॥

**ताम्रपर्णीया–** आवामिति विशेष्योक्तिं घटयित्वा उपसंहरति– **अत इति** ॥ वायोः नैसर्गिक-बलशालित्वे किं हनूमत इत्यत आह– **वायुरिति** ॥ अस्तु वायुबलस्य स्वाभाविकत्वं सर्वातिशयित्वं कुत इत्यत आह– **अमुष्येति** ॥ राहुमुक्तं सूर्यमण्डलं गतवतो हनूमतः शिरसि शक्रेण वज्रे प्रयुक्ते मूलरूपी वायुः कुपितः शिवादीनां श्वासनिरोधेन काष्ठवच्चकार इत्यर्थः ॥२३९॥

**चट्टी–** यतः कपिलरूपेण त्रिकोटिरूपेण चाहं वायुश्च जितवन्तौ । अतः अहं वायुश्च स्वभावात् वरावेशाद्युपाधिं विनैवेत्यर्थः । स्वरूपसामर्थ्याज्जयिनौ जितवन्तौ । ननु वायोस्त्रिकोटिरूपेण रावणजयेऽपि हनूमतः किमागतमित्यत आह– **वायुरिति** ॥ योः वायुः त्रिकोटिहनुमद्रूपात्मको रावणं जिग्ये सः त्रिकोटिहनुमदात्मको वायुरेष हनुमानित्यन्वयः । 'त्रिकोटिमूर्तिसंयुक्तः त्रेतायां राक्षसान्तकः । हनूमानिति विख्यातो रामकार्यधुरन्धरः ॥ स वायुर्भीमसेनोऽभूत् द्वापरान्ते कुरुद्वहः । कृष्णं सम्पूजयामास हत्वा दुर्योधनादिकान् ॥ द्वैपायनस्य सेवार्थं बदर्यां कलौ युगे । यतिरूपधरो वायुर्भविष्यति मुनीश्वर ॥' [न संशयः] ॥' इति वचनात् ॥ इतिहासान्तरमाह– **अमुष्येति** ॥ पुरा हनूमदुत्पत्तिकाले अमुष्य हनुमतः हेतोः अर्थे वायुना शिवेन्द्रपूर्वा अपि देवा काष्ठवत्कृताः जडीकृताः । इन्द्रवज्रेण हनूमति ताडिते सति वायुना देवाः काष्ठवत्कृता इति पौराणिकी कथा च वक्तव्या । तथा चोक्तं विष्णुधर्मोत्तरे– 'तं प्रदुद्राव भक्षार्थी सशक्रं कुञ्जरोत्तमम् । प्राहरत् त्वरया वज्रं ततस्तस्य सुराधिपः॥' इति । 'क्रुद्धं च जगतां वायुं सान्त्वयित्वा पितामहः ।' इति च । 'चुक्रोधेन्द्राय पवनः प्रजानामशिवाय च । गुहां प्रविष्टं स्वसुतं शिशुमादाय मारुतः । विण्मूत्राशयमावृत्य प्रजास्वन्तर्गतः प्रभुः । रुरोध सर्वभूतानि यथा वर्षाणि वासवः । वायुप्रकोपाद्भूतानि रुद्धश्वासानि सर्वतः । सन्धिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे ॥' इत्यादि रामायणे ॥२३९॥

**अतिविशद–** काष्ठवत्कृता इत्यत्र काष्ठवत्कृता जडीकृताः । वज्रपाणिना अञ्जनासूनौ वज्रेण ताडिते सति वायुना इन्द्रादिदेवाः काष्ठवत्कृताः इति पौराणिकीकथा अनुसन्धेया । तथोक्तं विष्णुधर्मोत्तरपुराणे– 'तं प्रदुद्राव भक्षार्थी सशक्रं कुञ्जरोत्तमम् । प्राहरत् त्वरया वज्रं ततस्तस्य सुराधिपः ।।' इति ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ अष्टमोऽध्यायः ।।

**प्रमाणसंग्रह–** ।। **वायुर्हि वायुर्हनुमान्स एषः** ।। 'त्रिकोटिमूर्तिसंयुक्तः त्रेतायां राक्षसान्तकः । हनूमानिति विख्यातो रामकार्यधुरन्धरः ।। स वायुर्भीमसेनोऽभूत् द्वापरान्ते कुरुद्वहः । कृष्णं सम्पूजयामास हत्वा दुर्योधनादिकान् ।। द्वैपायनस्य सेवार्थं बदर्यां कलौ युगे । यतिरूपधरो वायुर्भविष्यति मुनीश्वर ।।' ।। **अमुष्य हेतोरिति** ।। इन्द्रेण वज्रेण हनूमति ताडिते सति वायुना देवाः काष्ठवत्कृताः इति पौराणिकी कथा । तथाचोक्तं विष्णुधर्मोत्तरे– 'तं प्रदुद्राव भक्षार्थी सशक्रं कुञ्जरोत्तमम् । प्राहरत् त्वरया वज्रं ततस्तस्य सुराधिपः।।' इति । 'क्रुद्धं च जगतां वायुं सान्त्वयित्वा पितामहः ।' ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे अष्टमोऽध्यायः ।।

**कण्ठकोद्धार–** अमुष्य हेतोस्तु पुरा हि वायुना शिवेन्द्रपूर्वा अपि काष्ठवत्कृता इति । अत्रेमां कथामाहुः । पूर्वं हनुमान् वायौ उत्पन्नो क्षुदितः सन् अरुणभूतं सूर्यमण्डलं दृष्ट्वा तत्र फलमित्यारोप्य तद्भक्षितुमारेभे किल । तदा तं दृष्ट्वा इन्द्रः वज्रं पातयामास । तदा वायुः सर्वान् स्तम्भीभूतान् कृतवान् । तदा ब्रह्मेन्द्रादयः आगत्य हनुमते ब्रह्मास्त्रादिबन्धराहित्यं चिरञ्जीवित्वं दत्वा शमयामासेति ।।२३९।।

।। इति चक्रपाणिश्रीनिवासाचार्यविरचिते कण्ठकोद्धारे अष्टमोध्यायः ।।

**अतो [1]हनूमान् पदमेतु धातुर्मदाज्ञया सृष्ट्यवनादि कर्म ।**
**मोक्षं च लोकस्य सदैव कुर्वन् मुक्तश्च मुक्तान् सुखयन् प्रवर्तताम् ।।२४०।।**

---

१. 'सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात्' इत्यार्षे ७.३६.४७ । 'त्वत्कृतस्योपकारस्य प्रतिदातुं न विद्यते । तथापि तव दास्यामि शरीरालिङ्गनं मुने ।। मच्छरीरात् गरिष्ठं तु न विजानामि ते शुभम् । एवमुक्त्वाङ्गसङ्गं च तस्यादात्पुरुषोत्तमः ।। यथा त्वया कृतं कर्म तथा पूर्वं कपीश्वरः । सीतानिमित्तं यः कर्म कृतवान् मारुतात्मजः ।। तस्मै प्रादां महीदेव सन्तुष्टः सहभोजनम् । सत्यलोकाधिपत्यञ्च सीतावार्तावलम्बिने ।।' भविष्य.वे.मा.११.१९६–२०० ।। तथाच अत्र पद्मावतीपत्रावलम्बिने रुद्ररूपाय शुकाय अङ्गसङ्गमेव ददौ नतु सत्यलोकाधिपत्यम् । भविष्यद्विधात्रे वायवे तु अङ्गसङ्गं सत्यलोकाधिपत्यमित्युभयमपि ददौ ।

**वेदाङ्गतीर्थीया–** अत एव अधिकत्वात् । कुर्वन् धातुः पदे स्थित इति शेषः ।।२४०।।

**वरदराजीया–** अतः सर्वाधिकार्युत्तमत्वात् हनूमान् धातुर्ब्रह्मणः पदं स्थानं एतु प्राप्नोतु । तत्र स्थित्वा मदाज्ञया सृष्ट्यवनादि सृष्टिरक्षणादिकर्म तथा लोकस्य मोक्षं च सदा मुक्तिपर्यन्तं कुर्वन् । मुक्तश्च मुक्तान् स्वेन सह मुक्तान् सुखयन् स्वस्वरूपानन्दं भोजयन् प्रवर्ततां तिष्ठतु ।।२४०।।

**जनार्दनीया–** अतः शेषाद्युत्तमत्वात् । हनुमान् धातुः पदं सत्यलोकाधिपत्यं एतु प्राप्नोतु । तत्र विद्यमानः सन् । मदाज्ञया लोकस्य सृष्टिः उत्पत्तिः अवनं पालनं आदिपदेन संहारः एते यस्मिन् कर्मणि तत्तथा तादृशं कर्म । मोक्षं च सदैव आ मुक्तेरित्यर्थः । कुर्वन् सन् । मुक्तः स्वनियतकाले मुक्तः सन् मुक्तान् लोकान् सुरान् तत्तद्योग्यस्वरूपानन्देन सुखयन् प्रवर्ततां तिष्ठतु ।।२४०।।

**ताम्रपर्णीया–** अस्त्वेवं हनुमतो [भगवत्प्ररं] एकान्तभक्तत्वेन स्वस्य प्रतिकर्तृत्वं तत किं इत्यत 'अस्मान्मदैशं पदम्' इत्युक्तं विवृणोति– **अत इति** ।। यतो निरौपधं स्वभावभक्तस्य हनूमतो मुक्तिप्रदानादपि न प्रतिकर्तृत्वं अत अस्य अस्मिन् कल्पे मोक्षाभावात् लोकस्य सृष्ट्यवनादिकर्म मोक्षं च सदा कुर्वन् मदाज्ञयैव विधातुः पदमेतु । मदाज्ञयैव मुक्तः मुक्तान् सुखयन् प्रवर्ततामित्यर्थः । निरुपाधिकभक्तत्वेन न प्रत्युपकारबुध्या पदं मोक्षादिकं ददामि । किन्तु आज्ञापयामि इति भावः ।।[१]

**चट्टी–** अतः शेषाद्युत्तमत्वात् । हनुमान् धातुः पदं सत्यलोकाधिपत्यं एतु प्राप्नोतु । तत्र स्थितः सन् मदाज्ञया लोकस्य सृष्टिः उत्पत्तिः अवनं पालनम् । आदिपदगृहीतः संहारश्च । सृष्ट्यवनादि तल्लक्षणं कर्म मोक्षं च सदैव आमुक्तेरित्यर्थः । कुर्वन्सन् मुक्तश्च स्वनियतकाले मुक्तः सन् मुक्तान् लोकान् सुखयन् तत्तद्योग्यस्वरूपानन्देन सुखयन् प्रवर्ततां तिष्ठतु ।।२४०।।

**भोगाश्च[२] ये यानि च कर्मजातान्यनाद्यनन्तानि ममेह सन्ति ।**
**मदाज्ञया तान्यखिलानि सन्ति धातुः पदे तत् सहभोगनाम ।।२४१।।**

**वेदाङ्गतीर्थीया–** तत् तस्मात् सहभोगनाम धातुः पदमिति शेषः ।।२४१-२४७।।

**वादिराजीया–** इह लोके अनाद्यनन्तानि यानि कर्मजातानि तैस्तैरनन्तैः प्राणिभिः क्रियमाणानि पुण्यरूपकर्मजातानि तानि मम वशे सन्ति । कर्मणां वन्धकत्वात् । षष्ठ्यर्थो नाधाराधेयमावस्सम्बन्धः किं तु स्वामिस्वाम्यभाव इति भावः । तानि धातुः पदेऽपि कल्पे कल्पे तत्पदब्रह्मणां वशेऽपि सन्ति ।

१. ।। सदैवेति ।। नियमेनेत्यर्थः ।। २४०।। इति हो पुस्तकपाठः ।

२. सीताप्रसादाच्च सदा मामिहस्थमरिन्दम । उपतिष्ठिन्ति दिव्या हि भोगा भीम यथोप्सिताः ।। इति भारते वन.१५०.१७ ।

आवयोः समस्तप्राणिभिः क्रियमाणशुभकर्मणामसाधारणहेतुत्वात् आवयोरेव स्वजन्यसारभूतसुखांश-दायकानीति यावत् । अतस्तत्कर्मफलभूता ये भोगाः सुखानुभवाः ते सर्वे च मम सन्ति लीलया भोगेन बन्धकत्वाभावात् साक्षान्मम सन्ति । धातुः पदस्थानामपि सन्ति तान् सर्वान् भोगान् ब्रह्मणा सह ब्रह्मान्तर्यामी सन्नहं भुनज्मि । अतो ब्रह्मपदस्य सहभोग नामेति योजना ।।२४१-२४५।।

**वरदराजीया–** ननु सेवया प्रसन्नो रामः हनूमते सहभोजनं दत्तवानिति पुराणवचनानि सन्ति । ब्रह्मपददानोक्तौ च विरोधः स्यादित्यतः सहभोजनशब्दार्थमाह– **भोगाश्चेति** ।। मम ये ये भोगाः सन्ति अनाद्यनन्तानि उत्पत्तिनाशरहितानि इह जगद्विषये कर्मजातानि कर्मसमूहाः सन्ति तान्यखिलानि भोगादीनि धातुः ब्रह्मणः पदे सत्यलोके तद्योग्यमुक्तौ वा सन्ति तस्मात् धातुः पदं सहभोगो नामेत्यर्थः ।।

**जनार्दनीया–** सहभोजनं दत्तमिति पुराणगतवाक्यविरोधं परिहरन्नाह– **भोगा इति** ।। मम ये भोगाः सन्ति । इह जगद्विषये अनाद्यनन्तानि उत्पत्तिध्वंससहितानि यानि । कर्मणां जातानि पुञ्जानि च सन्ति । मदाज्ञया तानि अखिलानि भोगादिकर्मजातानि धातुः पदे सन्ति यद्यस्मात् तस्मात् सहभोगनाम धातुः पदमिति शेषः ।।२४१।।

**अनन्तभट्टीया–** ...*निरुपाधिकभक्तत्वादित्यर्थः । पुराणाद्युक्तसहभोगशब्दार्थमाह– **भोगा इति** ।। इह जगति ।।२४१-२४२।।

**ताम्रपर्णीया–** पदं अमुना सह भोक्ष्य इत्युक्तम् । कोऽयं सहभोगो नाम ग्रन्थान्तरे रामेण हनुमते सहभोजनं दत्तं इत्युक्ते तस्य कोऽभिप्राय इत्यत आह– **भोगाश्चेति** ।। इह जगति मम भोगाः अनाद्यनन्तानि आदिः पूर्वावधिः अन्तः उत्तरावधिः तद्रहितानि निस्सीमानि इति यावत् । यद्वा अनाद्यनन्तकालीनानि तत्तद्ब्रह्मकल्पे क्रियमाणानि इति यावत् । यानि कर्माणि सृष्ट्यवनमोचनानि कर्माणि तानि भोगाः कर्माणि च धातुः पदे सन्ति इति यत् तत् सहभोगशब्दोक्तं इत्यर्थः । ननु 'सर्वं स पूतमश्नाति स्वदितं मातरिश्वना' [ऋ.९.६७.३१] इत्यादि प्रमाणबलेन जगति शुभवस्तुसु सर्वत्र भगवद्योग्यसारवत् प्राणभोग्यसारस्य विद्यमानत्वेनादनाघ्राणदृष्ट्यादिभिः यथायोग्यं सर्वभोगसम्भवेऽपि कथं भगवता सह सर्वक्रियाकर्तृत्वं त्रिवृत्करणरावणहननानन्दभोगशक्तिदानादीनां ईशैकनिष्ठत्वात् । तदुक्तं सूत्रभाष्ये तत्त्वप्रकाशिकायां [२.४.२१] । 'त्रिवृत्कर्तृत्वं च विष्णोरेव' इत्यादि 'जीवस्य सुखदुःखानां भोगशक्तिप्रदश्च सः । परमः पुरुषो विष्णुः सर्वकर्तापि सन् सदा ।। विशेषकर्ता केषाश्चित्.... ।।' [गी.ता.१३-२१] इति गीतातात्पर्ये ।। अत्रोच्यते ।। हरेः सर्वत्र प्राधान्येन कर्तृत्वेऽपि अङ्गतया प्राणस्यापि प्रवेशो अस्ति । रावणहनने हनुमतो उपयोगित्वात् 'पञ्चात्मको मारुत एव बाणः' 'गदा तु वायुः' इत्याद्युक्त्या क्वचित् शस्त्ररूपेण हननक्रियान्वयात् । 'सोऽवनिमध्ये रङ्गन् अरिदरयुग्बालरूपमध्येरं

गन्' इति यमकभारते [श्लो१३] । 'जगाद वायुवाहन' इत्युपरितनग्रन्थे चोक्त्या कंसहनने वाहनरूपेण उपयोगात् । उक्तं च स्कान्दे 'वैकुण्ठाधिपतेर्वायुः कचिद्वाहनतां व्रजेत् । कदाचिदङ्गतां याति कदाचित् शस्त्रतां व्रजेत् ।।' इति । 'भोक्तृत्वदाने चित्प्रकृत्यादीनां अन्यत्रप्रवृत्तिमपेक्ष्य अल्पप्रवृत्तिमत्वेन भगवत एव अधिकप्रवृत्तिमत्वात्' इति न्यायदीपिकायां [गी.ता१३-२१] आनन्दादि भोगशक्तिदानेऽपि अल्पवृत्त्युक्तेः । एतत् समानन्यायेन तेजोऽबन्नाभिमानित्वेन त्रिवृत्करणेऽपि ईशादङ्गत्वोपपत्ते इति दिक् ।

यद्वा इह जीवसमूहे यानि कर्माणि तानि मम वशे सन्ति । ये च शुभकर्मफलभोगाः 'ऋतं पिबन्तौ' इत्युक्तरीत्या मम सन्ति तानि कर्माणि ते भोगाश्च धातुः पदे सन्ति हरिमुख्यप्राणयोरेव सर्वक्रिया-प्रवर्तकत्वेन स्वामित्वात् 'स्वामिनः फलश्रुतेः' इत्युक्तरीत्या [सू.३.४.४४] तत्प्रयुक्तफलभोगोऽपि तयोरेव इति भावः ।।२४१-२४२।।[1]

---

१. ।। भोगाश्चेति ।। इह जगति मम ये भोगाः यानि भोग्यानि अनाद्यनन्तानि अनाद्यनन्तकालीनानि यानि कर्मजातानि सन्ति तानि अखिलानि भोग्यानि कर्मजातानि च धातुःपदे ब्रह्मपदे तद्योग्यजीवेषु सन्तीति यावत् । तत्सहभोगनामेत्यर्थः । यद्वा अनाद्यनन्तानि सङ्ख्यापरिगणनयाऽऽद्यन्तरहितानि, यद्वा उत्पत्तिरहितानि प्राणक्रियायाः प्रायेण स्वरूपानुबन्धित्वादिति भावः । अस्मिन् पक्षे ब्रह्मपदयोग्यजीवेषु इत्यङ्गीकारेऽपि न दोषः । ननु इह जगति इत्युक्त्या लक्ष्मीभोगशङ्कानवकाशेऽपि नीलादिभोगशङ्का च स्यादेवेति चेन्न । नीलादिचैतन्या-द्यभिमाननिमित्तभोगोऽस्त्येव । पतित्वेन भोगस्तु इहेति इहशब्दनैव निरस्तः । 'भोज्यभोक्तृस्वरूपोऽसौ सर्वभोक्ता चतुर्मुखः' इति वचनात् । स्वभोगोऽप्युपपद्यते । यानि च कर्मजातानि तानीति कथं रावणहनननवनीतभक्षण-त्रिवृत्करणानन्दभोगादीनां वायौ अनुपपत्तेः । रामा चरितानि तदन्यपुम्भिः अशक्यानीति वक्ष्यमाणत्वात्– ''त्रिवृत्क्रिया यतो विष्णोः स्वरूपं नान्यदिष्यते'[रुपं च तदपेक्षया] । 'त्रिवृत्कर्तृत्वं च विष्णोरेव' इत्यादिभाष्ये तत्त्वप्रकाशिकोक्तेः । 'जीवस्य सुखदुःखानां भोगशक्तिप्रदश्च सः । परमः पुरुषो विष्णुः सर्वकर्ताऽपि सन् सदा ।। विशेषकर्ता केषाञ्चित् ...' इति गीतातात्पर्योक्तेश्च इति चेन्न । अत्रेदं रहस्यम् । रावणहननं वायुना बाणरूपेण कृतमेव । तदुक्तं बाणरूपत्वं संग्रहरामायणे । 'तं वायुबीजं रविवह्निधारं आकाशमानस्वशरीरयष्टिम्'[युद्ध.का१४.१२] । इत्याद्युक्त्वा 'साक्षद् ऋजूनां न तु युक्तमेतद्' [युद्ध.का.१४.१६] इति । अत्रापि 'पञ्चात्मको मारुत एव बाण' इत्युक्तम् । तत्संस्कारकर्तृत्वसामर्थ्येऽपि तदकरणं ईश्वरवरानुसारेण । तदुक्तम्– 'विचिन्तयामास ततो हनूमान् मयैव हन्तुं समरे सुशक्यः' इत्यादि विना बाणादिकं कंसहननादिक्रियायां कथमिति चेन्न । तत्रापि हननक्रियाकर्मभूते कंसादौ भगवद्धन्तव्य-तोपयुक्तबलप्रदर्शनादिना हरिसेवार्थं वायोरवस्थानाङ्गीकारेण यथाकथञ्चित् क्रियावत्त्वं बोध्यम् । वक्ष्यति हि । 'देहेऽपि योऽभवदमुष्य रमेशबन्धुः वायुः स कृष्णतनुमाश्रयत्' इति । त्रिवृत्कर्तृत्वमपि अमुख्यतया स्वीकार्यमेव । 'तस्मादानन्दमानं तु गुणेषूत्कृष्टमुच्यते । तस्याभिमानी ब्रह्मैक.... ।।' इति एकादशतात्पर्ये । आनन्दानुभवाभिमानोक्तेः । किञ्च परमेश्वरस्यैव सर्वकर्तृत्वेऽपि भोक्तृत्वदाने देव्याः अल्पप्रवृत्तिरिति दर्शयितुं उच्यते इति स्थानद्वयेऽप्युक्तम् कर्तृत्वेऽपि स एव मुख्यहेतुः । तथाऽपि भोक्तृत्वापेक्षया तस्या अधिकप्रवृत्तिरिति ...

आवयोः समस्तप्राणिभिः क्रियमाणशुभकर्मणामसाधारणहेतुत्वात् आवयोरेव स्वजन्यसारभूतसुखांश-दायकानीति यावत् । अतस्तत्कर्मफलभूता ये भोगाः सुखानुभवाः ते सर्वे च मम सन्ति लीलया भोगेन बन्धकत्वाभावात् साक्षान्मम सन्ति । धातुः पदस्थानामपि सन्ति तान् सर्वान् भोगान् ब्रह्मणा सह ब्रह्मान्तर्यामी सन्नहं भुनज्मि । अतो ब्रह्मपदस्य सहभोग नामेति योजना ।।२४१-२४५।।

**वरदराजीया–** ननु सेवया प्रसन्नो रामः हनूमते सहभोजनं दत्तवानिति पुराणवचनानि सन्ति । ब्रह्मपददानोक्तौ च विरोधः स्यादित्यतः सहभोजनशब्दार्थमाह– **भोगाश्चेति** ।। मम ये ये भोगाः सन्ति अनाद्यनन्तानि उत्पत्तिनाशरहितानि इह जगद्विषये कर्मजातानि कर्मसमूहाः सन्ति तान्यखिलानि भोगादीनि धातुः ब्रह्मणः पदे सत्यलोके तद्योग्यमुक्तौ वा सन्ति तस्मात् धातुः पदं सहभोगो नामेत्यर्थः ।।

**जनार्दनीया–** सहभोजनं दत्तमिति पुराणगतवाक्यविरोधं परिहरन्नाह– **भोगा इति** ।। मम ये भोगाः सन्ति । इह जगद्विषये अनाद्यनन्तानि उत्पत्तिध्वंससहितानि यानि । कर्मणां जातानि पुञ्जानि च सन्ति । मदाज्ञया तानि अखिलानि भोगादिकर्मजातानि धातुः पदे सन्ति यद्यस्मात् तस्मात् सहभोगनाम धातुः पदमिति शेषः ।।२४१।।

**अनन्तभट्टीया–** ...*निरुपाधिकभक्तत्वादित्यर्थः । पुराणाद्युक्तसहभोगशब्दार्थमाह– **भोगा इति** ।। इह जगति ।।२४१-२४२।।

**ताम्रपर्णीया–** पदं अमुना सह भोक्ष्य इत्युक्तम् । कोऽयं सहभोगो नाम ग्रन्थान्तरे रामेण हनुमते सहभोजनं दत्तं इत्युक्ते तस्य कोऽभिप्राय इत्यत आह– **भोगाश्चेति** ।। इह जगति मम भोगाः अनाद्यनन्तानि आदिः पूर्वावधिः अन्तः उत्तरावधिः तद्रहितानि निस्सीमानि इति यावत् । यद्वा अनाद्यनन्तकालीनानि तत्तद्ब्रह्मकल्पे क्रियमाणानि इति यावत् । यानि कर्माणि सृष्ट्यवनमोचनानि कर्माणि तानि भोगाः कर्माणि च धातुः पदे सन्ति इति यत् तत् सहभोगशब्दोक्तं इत्यर्थः । ननु 'सर्वं स पूतमश्नाति स्वदितं मातरिश्वना' [ऋ.९.६७.३१] इत्यादि प्रमाणबलेन जगति शुभवस्तुसु सर्वत्र भगवद्योग्यसारवत् प्राणभोग्यसारस्य विद्यमानत्वेनादनाघ्राणदृष्ट्यादिभिः यथायोग्यं सर्वभोगसम्भवेऽपि कथं भगवता सह सर्वक्रियाकर्तृत्वं त्रिवृत्करणरावणहनननानन्दभोगशक्तिदानादीनां ईशैकनिष्ठत्वात् । तदुक्तं सूत्रभाष्ये तत्वप्रकाशिकायां [२.४.२१] । 'त्रिवृत्कर्तृत्वं च विष्णोरेव' इत्यादि 'जीवस्य सुखदुःखानां भोगशक्तिप्रदश्च सः । परमः पुरुषो विष्णुः सर्वकर्तापि सन् सदा ।। विशेषकर्ता केषाञ्चित्.... ।।' [गी.ता.१३-२१] इति गीतातात्पर्ये ।। अत्रोच्यते ।। हरेः सर्वत्र प्राधान्येन कर्तृत्वेऽपि अङ्गतया प्राणस्यापि प्रवेशो अस्ति । रावणहनने हनुमतो उपयोगित्वात् 'पञ्चात्मको मारुत एव बाणः' 'गदा तु वायुः' इत्याद्युक्त्या क्वचित् शस्त्ररूपेण हननक्रियान्वयात् । 'सोऽवनिमध्ये रङ्गन् अरिदरयुग्वालरूपमध्येरं

गन्' इति यमकभारते [श्लो१३] । 'जगाद वायुवाहन' इत्युपरितनग्रन्थे चोक्त्या कंसहनने वाहनरूपेण उपयोगात् । उक्तं च स्कान्दे 'वैकुण्ठाधिपतेर्वायुः कचिद्वाहनतां व्रजेत् । कदाचिदङ्गतां याति कदाचित् शस्त्रतां व्रजेत् ।।' इति । 'भोक्तृत्वदाने चित्प्रकृत्यादीनां अन्यत्रप्रवृत्तिमपेक्ष्य अल्पप्रवृत्तिमत्त्वेन भगवत एव अधिकप्रवृत्तिमत्त्वात्' इति न्यायदीपिकायां [गी.ता१३-२१] आनन्दादि भोगशक्तिदानेऽपि अल्पवृत्त्युक्तेः । एतत् समानन्यायेन तेजोऽबन्नाभिमानित्वेन त्रिवृत्करणेऽपि ईशदङ्गत्वोपपत्ते इति दिक् ।

यद्वा इह जीवसमूहे यानि कर्माणि तानि मम वशे सन्ति । ये च शुभकर्मफलभोगाः 'ऋतं पिबन्तौ' इत्युक्तरीत्या मम सन्ति तानि कर्माणि ते भोगाश्च धातुः पदे सन्ति हरिमुख्यप्राणयोरेव सर्वक्रिया-प्रवर्तकत्वेन स्वामित्वात् 'स्वामिनः फलश्रुतेः' इत्युक्तरीत्या [सू.३.४.४४] तत्प्रयुक्तफलभोगोऽपि तयोरेव इति भावः ।।२४१-२४२।।[1]

---

१. ।। भोगाश्चेति ।। इह जगति मम ये भोगाः यानि भोग्यानि अनाद्यनन्तानि अनाद्यनन्तकालीनानि यानि कर्मजातानि सन्ति तानि अखिलानि भोग्यानि कर्मजातानि च धातुःपदे ब्रह्मपदे तद्योग्यजीवेषु सन्तीति यावत् । तत्सहभोगनामेत्यर्थः । यद्वा अनाद्यनन्तानि सङ्ख्यापरिगणनयाऽऽद्यन्तरहितानि, यद्वा उत्पत्तिरहितानि प्राणक्रियायाः प्रायेण स्वरूपानुबन्धित्वादिति भावः । अस्मिन् पक्षे ब्रह्मपदयोग्यजीवेषु इत्यङ्गीकारेऽपि न दोषः । ननु इह जगति इत्युक्त्या लक्ष्मीभोगशङ्कानवकाशेऽपि नीलादिभोगशङ्का च स्यादेवेति चेन्न । नीलादिचैतन्या-द्यभिमाननिमित्तभोगोऽस्त्येव । पतित्वेन भोगस्तु इहेति इहशब्दनैव निरस्तः । 'भोज्यभोक्तृस्वरूपोऽसौ सर्वभोक्ता चतुर्मुखः' इति वचनात् । स्वभोगोऽप्युपपद्यते । यानि च कर्मजातानि तानीति कथं रावणहनननवनीतभक्षण-त्रिवृत्करणानन्दभोगादीनां वायौ अनुपपत्तेः । रामा चरितानि तदन्यपुम्भिः अशक्यानीति वक्ष्यमाणत्वात्– ''त्रिवृत्क्रिया यतो विष्णोः स्वरूपं नान्यदिष्यते'[रुपं च तदपेक्षया] । 'त्रिवृत्कर्तृत्वं च विष्णोरेव' इत्यादिभाष्ये तत्त्वप्रकाशिकोक्तेः । 'जीवस्य सुखदुःखानां भोगशक्तिप्रदश्च सः । परमः पुरुषो विष्णुः सर्वकर्ताऽपि सन् सदा ।। विशेषकर्ता केषाञ्चित् ...' इति गीतातात्पर्योक्तेश्च इति चेन्न । अत्रेदं रहस्यम् । रावणहननं वायुना बाणरूपेण कृतमेव । तदुक्तं बाणरूपत्वं संग्रहरामायणे । 'तं वायुबीजं रविवह्निधारं आकाशमानस्वशरीरयष्टिम्'[युद्ध.का१४.१२] । इत्याद्युक्त्वा 'साक्षद् ऋजूनां न तु युक्तमेतद्' [युद्ध.का.१४.१६] इति । अत्रापि 'पञ्चात्मको मारुत एव बाण' इत्युक्तम् । तत्संस्कारकर्तृत्वसामर्थ्येऽपि तदकरणं ईश्वरवरानुसारेण । तदुक्तम्– 'विचिन्तयामास ततो हनूमान् मयैव हन्तुं समरे सुशक्यः' इत्यादि विना बाणादिकं कंसहननादिक्रियायां कथमिति चेन्न । तत्रापि हननक्रियाकर्मभूते कंसादौ भगवद्धन्तव्य-तोपयुक्तबलप्रदर्शनादिना हरिसेवार्थं वायोरवस्थानाङ्गीकारेण यथाकथञ्चित् क्रियावत्त्वं बोध्यम् । वक्ष्यति हि । 'देहेऽपि योऽभवदमुष्य रमेशबन्धुः वायुः स कृष्णतनुमाश्रयत्' इति । त्रिवृत्कर्तृत्वमपि अमुख्यतया स्वीकार्यमेव । 'तस्मादानन्दमानं तु गुणेषूत्कृष्टमुच्यते । तस्याभिमानी ब्रह्मैक.... ।।' इति एकादशतात्पर्ये । आनन्दानुभवाभिमानोक्तेः । किञ्च परमेश्वरस्यैव सर्वकर्तृत्वेऽपि भोक्तृत्वदाने देव्याः अल्पप्रवृत्तिरिति दर्शयितुं उच्यते इति स्थानद्वयेऽप्युक्तम् कर्तृत्वेऽपि स एव मुख्यहेतुः । तथाऽपि भोक्तृत्वापेक्षया तस्या अधिकप्रवृत्तिरिति ...

आवयोः समस्तप्राणिभिः क्रियमाणशुभकर्मणामसाधारणहेतुत्वात् आवयोरेव स्वजन्यसारभूतसुखांश-दायकानीति यावत् । अतस्तत्कर्मफलभूता ये भोगाः सुखानुभवाः ते सर्वे च मम सन्ति लीलया भोगेन बन्धकत्वाभावात् साक्षान्मम सन्ति । धातुः पदस्थानामपि सन्ति तान् सर्वान् भोगान् ब्रह्मणा सह ब्रह्मान्तर्यामी सन्नहं भुनज्मि । अतो ब्रह्मपदस्य सहभोग नामेति योजना ।।२४१-२४५।।

**वरदराजीया–** ननु सेवया प्रसन्नो रामः हनूमते सहभोजनं दत्तवानिति पुराणवचनानि सन्ति । ब्रह्मपददानोक्तौ च विरोधः स्यादित्यतः सहभोजनशब्दार्थमाह– **भोगाश्चेति** ।। मम ये ये भोगाः सन्ति अनाद्यनन्तानि उत्पत्तिनाशरहितानि इह जगद्विषये कर्मजातानि कर्मसमूहाः सन्ति तान्यखिलानि भोगादीनि धातुः ब्रह्मणः पदे सत्यलोके तद्योग्यमुक्तौ वा सन्ति तस्मात् धातुः पदं सहभोगो नामेत्यर्थः ।।

**जनार्दनीया–** सहभोजनं दत्तमिति पुराणगतवाक्यविरोधं परिहरन्नाह– **भोगा इति** ।। मम ये भोगाः सन्ति । इह जगद्विषये अनाद्यनन्तानि उत्पत्तिध्वंससहितानि यानि । कर्मणां जातानि पुञ्जानि च सन्ति । मदाज्ञया तानि अखिलानि भोगादिकर्मजातानि धातुः पदे सन्ति यद्यस्मात् तस्मात् सहभोगनाम धातुः पदमिति शेषः ।।२४१।।

**अनन्तभट्टीया–** ...*निरुपाधिकभक्तत्वादित्यर्थः । पुराणाद्युक्तसहभोगशब्दार्थमाह– **भोगा इति** ।। इह जगति ।।२४१-२४२।।

**ताम्रपर्णीया–** पदं अमुना सह भोक्ष्य इत्युक्तम् । कोऽयं सहभोगो नाम ग्रन्थान्तरे रामेण हनुमते सहभोजनं दत्तं इत्युक्ते तस्य कोऽभिप्राय इत्यत आह– **भोगाश्चेति** ।। इह जगति मम भोगाः अनाद्यनन्तानि आदिः पूर्वावधिः अन्तः उत्तरावधिः तद्रहितानि निस्सीमानि इति यावत् । यद्वा अनाद्यनन्तकालीनानि तत्तद्ब्रह्मकल्पे क्रियमाणानि इति यावत् । यानि कर्माणि सृष्ट्यवनमोचनानि कर्माणि तानि भोगाः कर्माणि च धातुः पदे सन्ति इति यत् तत् सहभोगशब्दोक्तं इत्यर्थः । ननु 'सर्वं स पूतमश्नाति स्वदितं मातरिश्वना' [ऋ.९.६७.३१] इत्यादि प्रमाणबलेन जगति शुभवस्तुसु सर्वत्र भगवद्योग्यसारवत् प्राणभोग्यसारस्य विद्यमानत्वेनादनाघ्राणदृष्ट्यादिभिः यथायोग्यं सर्वभोगसम्भवेऽपि कथं भगवता सह सर्वक्रियाकर्तृत्वं त्रिवृत्करणरावणहननानन्दभोगशक्तिदानादीनां ईशैकनिष्ठत्वात् । तदुक्तं सूत्रभाष्ये तत्त्वप्रकाशिकायां [२.४.२१] । 'त्रिवृत्कर्तृत्वं च विष्णोरेव' इत्यादि 'जीवस्य सुखदुःखानां भोगशक्तिप्रदश्च सः । परमः पुरुषो विष्णुः सर्वकर्तापि सन् सदा ।। विशेषकर्ता केषाञ्चित्.... ।।' [गी.ता.१३-२१] इति गीतातात्पर्ये ।। अत्रोच्यते ।। हरेः सर्वत्र प्राधान्येन कर्तृत्वेऽपि अङ्गतया प्राणस्यापि प्रवेशो अस्ति । रावणहनने हनुमतो उपयोगित्वात् 'पञ्चात्मको मारुत एव बाणः' 'गदा तु वायुः' इत्याद्युक्त्या क्वचित् शस्त्ररूपेण हननक्रियान्वयात् । 'सोऽवनिमध्ये रङ्गन् अरिदरयुग्बालरूपमध्येरं

गन्' इति यमकभारते [श्लो१३] । 'जगाद वायुवाहन' इत्युपरितनग्रन्थे चोक्त्या कंसहनने वाहनरूपेण उपयोगात् । उक्तं च स्कान्दे 'वैकुण्ठाधिपतेर्वायुः कचिद्वाहनतां व्रजेत् । कदाचिदङ्गतां याति कदाचित् शस्त्रतां व्रजेत् ।।' इति । 'भोक्तृत्वदाने चित्प्रकृत्यादीनां अन्यत्रप्रवृत्तिमपेक्ष्य अल्पप्रवृत्तिमत्वेन भगवत एव अधिकप्रवृत्तिमत्वात्' इति न्यायदीपिकायां [गी.ता१३-२१] आनन्दादि भोगशक्तिदानेऽपि अल्पवृत्त्युक्तेः । एतत् समानन्यायेन तेजोऽबन्नाभिमानित्वेन त्रिवृत्करणेऽपि ईशदङ्गत्वोपपत्ते इति दिक् ।

**यद्वा इह जीवसमूहे यानि कर्माणि तानि मम वशे सन्ति । ये च शुभकर्मफलभोगाः 'ऋतं पिबन्तौ' इत्युक्तरीत्या मम सन्ति तानि कर्माणि ते भोगाश्च धातुः पदे सन्ति हरिमुख्यप्राणयोरेव सर्वक्रिया-प्रवर्तकत्वेन स्वामित्वात् 'स्वामिनः फलश्रुतेः' इत्युक्तरीत्या [सू.३.४.४४] तत्प्रयुक्तफलभोगोऽपि तयोरेव इति भावः ।।२४१-२४२।।**[१]

१. ।। भोगाश्चेति ।। इह जगति मम ये भोगाः यानि भोग्यानि अनाद्यनन्तानि अनाद्यनन्तकालीनानि यानि कर्मजातानि सन्ति तानि अखिलानि भोग्यानि कर्मजातानि च धातुःपदे ब्रह्मपदे तद्योग्यजीवेषु सन्तीति यावत् । तत्सहभोगनामेत्यर्थः । यद्वा अनाद्यनन्तानि सङ्ख्यापरिगणनयाऽऽद्यन्तरहितानि, यद्वा उत्पत्तिरहितानि प्राणक्रियायाः प्रायेण स्वरूपानुबन्धित्वादिति भावः । अस्मिन् पक्षे ब्रह्मपदयोग्यजीवेषु इत्यङ्गीकारेऽपि न दोषः । ननु इह जगति इत्युक्त्या लक्ष्मीभोगशङ्कानवकाशेऽपि नीलादिभोगशङ्का च स्यादेवेति चेन्न । नीलादिचैतन्या-द्यभिमाननिमित्तभोगोऽस्त्येव । पतित्वेन भोगस्तु इहेति इहशब्दनैव निरस्तः । 'भोज्यभोक्तृस्वरूपोऽसौ सर्वभोक्ता चतुर्मुखः' इति वचनात् । स्वभोगोऽप्युपपद्यते । यानि च कर्मजातानि तानीति कथं रावणहनननवनीतभक्षण-त्रिवृत्करणानन्दभोगादीनां वायौ अनुपपत्तेः । रामा चरितानि तदन्यपुम्भिः अशक्यानीति वक्ष्यमाणत्वात्– ''त्रिवृत्क्रिया यतो विष्णोः स्वरूपं नान्यदिष्यते'[रूपं च तदपेक्षया] । 'त्रिवृत्कर्तृत्वं च विष्णोरेव' इत्यादिभाष्ये तत्त्वप्रकाशिकोक्तेः । 'जीवस्य सुखदुःखानां भोगशक्तिप्रदश्च सः । परमः पुरुषो विष्णुः सर्वकर्ताऽपि सन् सदा ।। विशेषकर्ता केषाञ्चित् ...' इति गीतातात्पर्योक्तेश्च इति चेन्न । अत्रेदं रहस्यम् । रावणहननं वायुना बाणरूपेण कृतमेव । तदुक्तं बाणरूपत्वं संग्रहरामायणे । 'तं वायुबीजं रविवह्निधारं आकाशमानस्वशरीरयष्टिम्'[युद्ध.का१४.१२] । इत्याद्युक्त्वा 'साक्षद् ऋजूनां न तु युक्तमेतद्' [युद्ध.का.१४.१६] इति । अत्रापि 'पञ्चात्मको मारुत एव बाण' इत्युक्तम् । तत्संस्कारकर्तृत्वसामर्थ्येऽपि तदकरणं ईश्वरवरानुसारेण । तदुक्तम्– 'विचिन्तयामास ततो हनूमान् मयैव हन्तुं समरे सुशक्यः' इत्यादि विना बाणादिकं कंसहननादिक्रियायां कथमिति चेन्न । तत्रापि हननक्रियाकर्मभूते कंसादौ भगवद्धन्तव्य-तोपयुक्तबलप्रदर्शनादिना हरिसेवार्थं वायोरवस्थानाङ्गीकारेण यथाकथञ्चित् क्रियावत्त्वं बोध्यम् । वक्ष्यति हि । 'देहेऽपि योऽभवदमुष्य रमेशबन्धुः वायुः स कृष्णतनुमाश्रयत्' इति । त्रिवृत्कर्तृत्वमपि अमुख्यतया स्वीकार्यमेव । 'तस्मादानन्दमानं तु गुणेषूत्कृष्टमुच्यते । तस्याभिमानी ब्रह्मैक.... ।।' इति एकादशतात्पर्ये । आनन्दानुभवाभिमानोक्तेः । किञ्च परमेश्वरस्यैव सर्वकर्तृत्वेऽपि भोक्तृत्वदाने देव्याः अल्पप्रवृत्तिरिति दर्शयितुं उच्यते इति स्थानद्वयेऽप्युक्तम् कर्तृत्वेऽपि स एव मुख्यहेतुः । तथाऽपि भोक्तृत्वापेक्षया तस्या अधिकप्रवृत्तिरिति ...

**चट्टी–** श्रीरामेण हनुमतः सहभोजनं दत्तमिति पुराणगतवाक्यविरोधं परिहरन्नाह– **भोगा इति** ।। मम ये भोगाः सन्ति । अनाद्यनन्तानि उत्पत्तिनाशरहितानि इह जगद्विषये यानि कर्मजातानि कर्मसमूहाश्च मम सन्ति तानि अखिलानि भोगादीनि मदाज्ञया धातुः ब्रह्मणः पदे सत्यलोके यत् यस्मात् सन्ति तत् तस्मात् तत् धातुः पदं सहभोग नाम । वादिराजास्तु 'इह लोके अनन्तैः प्राणिभिः क्रियमाणस्य अनाद्यनन्तानि यानि शुभकर्मजातानि मम वशे सन्ति । कर्मणां बन्धकत्वात् । षष्ट्यर्थो नाधाराधेयभावस्सम्बन्धः किंतु स्वस्वामिभावस्सम्बन्धः । तानि धातुः पदेऽपि कल्पे कल्पे तत्पदस्थब्रह्मणां वशेऽपि सन्ति । आवयोः समस्तप्राणिभिः क्रियमाणशुभकर्मणामसाधारणहेतुत्वाद् आवयोरेव स्वजन्यसारभूतसुखांशदायकानीति यावत् । अतस्तत्कर्मफलभूता ये भोगाः सुखानुभवाः ते सर्वे च मम सन्ति लीलया भोगेन बन्धकत्वाभावात् साक्षान्मम सन्ति । धातुः पदस्थानामपि सन्ति तान् सर्वान् भोगान् ब्रह्मणा सह ब्रह्मान्तर्यामी सन्नहं भुनज्मि । अतो ब्रह्मपदस्य सहभोगनामेति योजना ।' इत्याचक्षते ।।२४१।।

**भारतश्री–** कर्मजातानि जातानि सन्तीत्यर्थः ।।२४१-२४८।।

।। इति श्रीडम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अष्टमोऽध्यायः ।।

**गूढवाक्यार्थ–** 'पदममुना सह भोक्ष्ये' इत्युक्तम् । कोऽयं सहभोगो नाम...* क्तेश्च कोऽभिप्राय इत्यत आह– **भोगाश्च यानीति** ।। अनाद्यनन्तानि आद्यन्तरहितानि पूर्वोत्तरावधिवर्जितानीति यावत् । निःसङ्ख्याकानीति भावः । यानि कर्माणि सृष्ट्यादीनि तानि कर्माणि भोगाश्च धातुः....* तीति यत्...* भ्येऽन्वर्तन्ते । ते सर्वे धातुःपदे सन्तीति कथमुच्यते ? ईश्वरैकभोग्यसारविशेषभोगाभावादिति चेदुच्यते इति ये भोग्यपदार्था वर्तन्ते, ते सर्वे विरिञ्चभोग्या एव । भगवदेकभोग्यसाराभोगे ये जगति शुभवस्तुषु 'सर्वं सपूतमश्नाति स्वदितं मातरिश्वना' [ऋ.९.६७.] इत्यादिप्रमाणानुसारेण भगवद्भोग्यं सारवत् प्राणभोग्यं सारस्य विद्यमानत्वेन अदनाघ्राणदृष्ट्यादिभिः यथायोग्यं सर्वभोगः सम्भवति । ननु

... कर्तृत्वहेतुः प्रकृतिरुच्यते इति । सर्वहेतुतोऽपि विष्णोः प्रकृतेः जीवं प्रति भोक्तृत्वदाने अल्पप्रवृत्तिरिति पुरुषभोक्तृत्वे हेतुरुच्यत इति विशेषहेतुरेवमुच्यते इति गीतातात्पर्ये । विष्णोरेकस्यैव आनन्दानुभवदातृत्वमुक्त्वा रमायाः अल्पप्रवृत्तेरुक्तत्वात् । तन्न्यायेन प्राणस्यापि तथाऽल्पप्रवृत्तिरिति उक्तं न्यायदीपे । भोक्तृत्वदाने चित्प्रकृत्यादीनां अत्र प्रवृत्तिमपेक्ष्याल्पप्रवृत्तित्वेन भगवत एव अधिकप्रवृत्तिमत्वादिति । अत्रादिशब्देन हिरण्यगर्भादेरपि भोगशक्तिदानमिति सूचनात् । प्राणस्य क्वचित् प्राणादिरूपेण क्वचित् हननकर्माभिमानित्वेन नवीनतानन्दानुभावाद्यन्तर्यामित्वेनेत्यादिरूपेण सर्वक्रियान्वयः इति गुरवः आहुः ।।२४१-२४८।। इति हो पुस्तकपाठः ।

रावणहननकंसादिहननत्रिवृत्करणानन्दानुभवदानादीनां विष्ण्वेकनिष्ठत्वात् 'त्रिवृत्कर्तृत्वं विष्णोरेव' इति भाष्ये, 'जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा । परमः पुरुषो विष्णुस्सर्वकर्तापि सन् सदा ।। विशेषकर्ता केषाञ्चित् ।।' इति गीतातात्पर्ये[१३.२१] चोक्तत्वात् तान्यखिलानि सन्तीति कथमिति चेत् सत्यम् । रावणहननादिकरणे बाणादिरूपत्वाद्वायोः क्वचिच्छस्त्ररूपेण हननक्रियान्वयात् रावणहनने हनुमतो अङ्गत्वात् । तदुक्तं स्कान्दे– वैकुण्ठाधिपतेः वायुः क्वचिद्वाहनतां व्रजेत् । कदाचिदङ्गतां याति कदाचिच्छस्त्रतां व्रजेत् [कदाचिच्छस्त्ररूपतामिति] ।। इति । आनन्दानुभवदानेऽपि 'भोक्तृत्वदाने चित्प्रकृत्यादीनामन्यत्र प्रवृत्तिमपेक्ष्याल्पप्रवृत्तिमत्त्वेन भगवत एवाधिकप्रवृत्तित्वात्' [१३.२१] इति न्यायप्रदीपिकायामल्पप्रवृत्त्युक्तेः । तेजोऽबन्नाभिमानित्वेन त्रिवृत्करणेऽपीषदङ्गत्वोपपत्तेश्च सर्वमुपपद्यते ।।

**एतादृशं मे सहभोजनं ते मया प्रदत्तं हनुमन् सदैव ।**
**इतीरितस्तं हनुमान् प्रणम्य जगाद वाक्यं स्थिरभक्तिनम्रः ।।२४२।।**

**वरदराजीया–** हे हनूमन् एतादृशं मे मम सहभोजनं ते तुभ्यं मया दत्तम् । सदैवेति संसारे मुक्तौ चेत्यर्थः । इतीरितो हनूमान् तं रामं प्रणम्य स्थिरया अचलया भक्त्या नम्रः सन् वाक्यं जगाद ।।२४२।।

**जनार्दनीया–** हे हनुमन् एतादृशं सत्यलोकाधिपत्यात्मकं मे सहभोजनं मया ते सदैव सर्वकल्पेषु प्रदत्तं रामेण इतीरितः, स्थिरभक्त्या निश्चलभक्त्या नम्रः प्रह्वः हनूमान् नन्तरं रामं प्रणम्य वाक्यं जगाद ।।

**चट्टी–** हे हनुमन् एतादृशं सत्यलोकाधिपत्यात्मकं मे सहभोजनं मया ते सदैव सर्वकल्पेषु प्रदत्तं इति श्रीरामेण इतीरितः स्थिरया भक्त्या नम्रः हनूमान् तं श्रीरामं प्रणम्य वाक्यं जगाद ।।२४२।।

**को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु च त्रिष्वपीह ।**
**तथाऽपि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणादृते ।।२४३।।**

**वरदराजीया–** हे ईश स्वामिन् पादसरोजं भजतां पुरुषाणां चतुर्षु धर्मार्थकाममोक्षेषु अर्थेषु पुरुषार्थेषु दुर्लभः को नु अस्ति न कोऽपीत्यर्थः । हे भूमन् परिपूर्ण तथापि पुरुषार्थानां सौलभ्येऽपि भवत्पदाम्भोजस्य त्वत्पादपङ्कजस्य निषेवणात् भजनादृते अन्यं पुरुषार्थं न वृणोमि न प्रार्थये ।।

**जनार्दनीया–** किमिति ? हे ईश । ते तव । पादसरोजं पादकमलं भजन्ति ते पादसरोजभाजस्तेषां तथा । त्वदुपासकानामित्यर्थः । इह संसारे । चतुर्ष्वपि धर्मादिचतुर्ष्वपि । अर्थेषु पुरुषार्थेषु । सुदुर्लभः अतिप्रयाससाध्यः । को नु? कः पुरुषार्थः? न कोऽपीत्यर्थः । हे भूमन् परिपूर्ण । तथाऽपि पुरुषार्थानामप्रयासेन प्राप्तौ सत्यामपि अहं भवत्पादाम्बोजस्य त्वत्पादसरोजस्य निषेवणात् उपासनात् ऋते अन्यं पुरुषार्थं न प्रवृणोमि न स्वीकरोमि ।।२४३।।

**अनन्तभट्टीया–** ते पादसरोजभाजां सुदुर्लभः अतिप्रयाससाध्यः कः । अनेन अव्यवधानेन त्वत्पादतः ...* आयाससाध्य इति सूचितम् । 'क्लेशोऽधिकतरस्तेषां अव्यक्तासक्तचेतसाम्' इत्युक्तत्वादिति भावः । तथापि अल्पायाससाध्यत्वेऽपि...* ।।२४३-२४४।।

**ताम्रपर्णीया–** ।। **को नु इति** ।। इह जीवसमुदाये त्वत्पादसरोजभाजां भक्तानां धर्मादिषु को वार्थो दुर्लभः । त्वत्प्रसादात् साधनसाध्य एव इह भक्तेष्वपि पादसरोजमकरन्दमधुपानां एकान्तानां अत एव स्वसाधनफलतया त्वत्प्रीतिमेव आशासानां धर्मादिषु को वा अर्थो दुर्लभः । नान्तरीयफलतया निरन्तरायं त्वदाराधनार्थं अपेक्षायां सुलभ एव तथापि नाहं प्रवृणोमि इत्यर्थः । त्वया आज्ञापितश्चेत् आज्ञाया अनुल्लङ्घ्यत्वात् स्वीकरिष्यामि इति भावः ।।२४३।।

**चट्टी–** किमिति । हे ईश इह लोके ते तव पादसरोजं पादकमलं भजन्तीति तथा तेषां त्वदुपासकानामित्यर्थः । चतुर्ष्वपि अर्थेषु सुदुर्लभः प्रयाससाध्यः को नु अस्ति । न कोऽपीत्यर्थः । हे भूमन् परिपूर्ण तथापि पुरुषार्थानां सौलभ्येऽपि अहं भवत्पादाम्बोजस्य त्वत्पादसरोजस्य निषेवणात् उपासनात् ऋते विना अन्यं पुरुषार्थं न प्रवृणोमि न प्रार्थये ।।२४३।।

**त्वमेव साक्षात् परमस्वतन्त्रस्त्वमेव साक्षादखिलोरुशक्तिः ।**
**त्वमेव चागण्यगुणार्णवः सदा रमाविरिञ्चादिभिरप्यशेषैः ।।२४४।।**

**व्यासतीर्थीया–** इह जगद्विषये भवदुपासकस्य च त्रिषु पुरुषार्थेषु न कोऽपि दुर्लभ इत्येतत् कुत इत्यत तन्महिमानं निरूपयन्नाह– **त्वमेवेति** ।।२४४-२४५।।

**वरदराजीया–** त्वमेव साक्षादनुपचारेण परमः स्वतन्त्रश्च त्वमेव च साक्षादखिला सर्वविषया उत्कृष्टा शक्तिर्यस्य सः अशेषैः सर्वैः रमाविरिञ्चादिभिः अगण्या गणयितुमशक्याः ये गुणाः तेन अर्णव इव त्वमेवेत्यर्थः ।।२४४।।

**जनार्दनीया–** नन्विदं कुत ? इत्यतः तन्महिमानं निरूपयन्नाह– **त्वमेवेति** ।। अखिलविषये उरुशक्तिर्यस्येति । सदाऽशेषैः रमाविरिञ्चादिभिरपि । अगण्यैरनन्तैः गुणैरर्णव इव तथा । त्वमेव अन्यो नास्तीत्यर्थः ।।२४४।।

**चट्टी–** कुत एवमुच्यत इत्यतः तन्महिमानं निरूपयन्नाह– **त्वमेवेति** ।। त्वमेव साक्षात् अनुपचारेण परमः स्वतन्त्रश्च त्वमेव साक्षात् अखिला सर्वविषया उत्कृष्टा शक्तिर्यस्य सः अशेषैः सर्वै रमाविरिञ्चादिभिरपि अगण्यैः गणयितुमशक्याः ये गुणाः तैरर्णव इव त्वमेवेत्यर्थः ।।२४४।।

**समेत्य सर्वेऽपि सदा वदन्तोऽप्यनन्तकालाच्च नवै समाप्नुयुः ।**
**गुणांस्त्वदीयान् परिपूर्णसौख्यज्ञानात्मकस्त्वं हि सदाऽतिशुद्धः ।।२४५।।**

**वरदराजीया–** रमादिभिरगण्यगुणार्णवत्वं स्पष्टयति– **समेत्येति** ।। सर्वे रमाब्रह्मादयः समेत्य मिलित्वा सदा त्वदीयान् गुणान् स्तुवन्तोऽपि वर्णयन्तोऽपि अनन्तकालादपि न समाप्नुयुः समाप्तिं न प्राप्नुयुः । त्वं हि यस्मात् कारणात् परिपूर्णसौख्यज्ञानान्येव आत्मा स्वरूपं यस्य स तथा । सदा सर्वकाले अतिशुद्धो निर्दोषः ।।२४५।।

**जनार्दनीया–** अगण्यगुणार्णव इत्युक्तं विवृणोति– **समेत्येति** ।। सर्वे मुक्तामुक्तब्रह्माद्याः । सदाऽपि नित्यमुक्ता रमाऽपीत्यर्थः । समेत्य सम्भूय । त्वदीयान् गुणान् अनन्तकालात् वदन्तोऽपि वर्णयन्तोऽपि वै निश्चयेन न समाप्नुयुः समाप्तिं न प्राप्नुयुः । गुणान्तं न पश्यन्तीति भावः । हि यस्मात् तस्मात् सदा त्वं परिपूर्णसौख्यज्ञानात्मकः सम्पूर्णानन्दज्ञानस्वरूपकः । अतिशुद्धश्च अतिपवित्रः कलङ्करहित इति यावत् ।।२४५।।

**अनन्तभट्टीया–** तदेव विवृणोति– **समेत्येति** ।। समेत्य सम्भूय...* । तद्घटनार्थं म इत्युक्तम् । एकान्तभक्तस्येत्यर्थः । जीवमानः सार्थकजीवत्वादिति भावः । कथञ्चित् भक्त्यादि...* जीवमानोऽपीत्यर्थः ।।२४५-२४६।।

**चट्टी–** अगण्यगुणार्णवत्वं विवृणोति– **समेत्येति** ।। सर्वे रमाब्रह्मादयोऽपि समेत्य सम्भूय त्वदीयान् गुणान् सदा वदन्तोऽपि वर्णयन्तोऽपि अनन्तकालाच्च वै निश्चयेन न समाप्नुयुः । गुणानां अन्तं न पश्यन्तीति भावः । त्वं हि यस्मात् परिपूर्णसौख्यज्ञाने आत्मा स्वरूपं यस्य सः तथा तस्मात् सदा अतिशुद्धः अतिपवित्रः कलङ्करहित इति यावत् । अतस्त्वद्भक्तिरेव सर्वेषां जीवनफलमित्याह ।।२४५।।

**यस्ते[१] कथासेवक एव सर्वदा सदा रतिस्त्वय्यचलैकभक्तिः ।**
**स जीवमानो न परः कथञ्चित् तज्जीवनं मेऽस्त्वधिकं समस्तात् ।।२४६।।**

---

१. 'यावद्रामकथेयं ते भवेल्लोकेषु शत्रुहन् । तावज्जीवेयमित्येवं तथास्त्विति च सोऽब्रवीत् ।।' इति वन.१५०.१६ हनूमान् प्रणतो भूत्वा राघवं वाक्यमब्रवीत् । स्नेहो मे परमं राजन् त्वयि तिष्ठतु नित्यदा ।। भक्तिश्च नियता वीर भावो नान्यत्र गच्छतु । यावद् रामकथा वीर चरिष्यति महीतले ।। तावच्छरीरे वत्स्यन्तु प्राणा मम न संशयः ।·यच्चैतच्चरितं दिव्यं कथा ते रघुनन्दन ।। तन्ममाप्सरसो राम श्रावयेयुर्नरर्षभ । उत्कण्ठां तां हरिष्यामि मेघलेखामिवानिलः ।। एवं ब्रुवाणं रामस्तु हनूमन्तं वरासनात् । उत्थाय सस्वजे स्नेहात् वाक्यमेतदुवाच ह ।। एवमेतत् कपिश्रेष्ठ भविता नात्र संशयः । चरिष्यति कथा यावदेषा लोके च मामिका ।। तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा । लोका हि यावत्स्थास्यन्ति तावत् स्थास्यन्ति मे कथाः ।। इति वाल्मीकीये७.४०.१५-२२ ।

**व्यासतीर्थीया–** भगवत्पादाम्भोजनिषेवणादृतेऽन्यन्न प्रवृणोमीत्यत्र निमित्तमाह– **यस्त इति** ।।

**वादिराजीया–** सदारतिः त्वय्यचलैकभक्तिरित्यत्र 'रमु क्रीडायाम्' इति धातोः रतिः परमात्मना सहावतारादिषु देहे देहे च सहक्रीडा ।।२४६।।

**वरदराजीया–** अतस्त्वद्भक्तिरेव सर्वेषां जीवनफलमित्याह– **य इति** ।। यः सर्वदा रतिः कथासेवकः । एकः त्वद्गुणकर्माभिधायकं वाक्यप्रबन्धानेव शृण्वान इत्यर्थः । त्वयि सदा रतिः यस्यासौ तथा । अचला अचञ्चला एका मुख्या भक्तिर्यस्य स तथा एतादृश एव पुरुषो लोके जीवमानः जीवनफलस्य प्राप्तत्वात् । पर अन्यः कथासेवनादिरहितः कथञ्चित् अन्येन द्रव्यसम्पत्त्यादिना प्रकारेण जीवमानो न भवति । विद्यमानस्यापि जीवनस्य निष्फलत्वात् तस्मात् समस्तात् पुरुषार्थादधिकं तज्जीवनं तादृशं जीवनं मे अस्तु ।।२४६।।

**जनार्दनीया–** सर्वदा ते तव कथासेवकः गुणकर्मप्रशंसनकथां शृण्वन् । त्वयि सदा रतिः प्रीतिर्यस्य स तथा । त्वयि अचला स्थिरा, एका मुख्या, भक्तिर्यस्य स तथा । एतादृशो यः पुरुषः स पुरुषः जीवमान एव जीवनफलवानेव । परः कथाश्रवणादिगुणविशिष्टपुरुषादन्यः पुरुषः कथञ्चित् जीवनफलवान्नैव जीवन्मृत इत्यर्थः । एतादृशं यज्जीवनं तादृशं जीवनं मे समस्ताज्जीवसङ्घात् अधिकं यथा स्यात् तथाऽस्त्विति शेषः ।।२४६।।

**चट्टी–** सर्वदा ते तव कथासेवकः त्वद्गुणकर्माभिधायकवाक्यप्रबन्धं शृण्वानः, त्वयि सदा रतिः प्रीतिर्यस्य स तथा त्वयि अचला स्थिरा एका मुख्या भक्तिर्यस्य स तथा । एतादृशो यः पुरुषः स एव जीवमान जीवनफलवान् । परः अन्यः कथाश्रवणादिरहितः पुरुषः कथञ्चित् जीवनफलवान्नैव, जीवन्मृत इत्यर्थः । तज्जीवनं तस्य कथासेवकजीवनं तादृशं जीवनमित्यर्थः । मे समस्ताज्जीवसङ्घात् अधिकं यथा स्यात्तथाऽस्त्विति शेषः ।।२४६।।

**प्रवर्द्धतां भक्तिरलं क्षणे क्षणे त्वयीश मे ह्रासविवर्जिता सदा ।**
**अनुग्रहस्ते मयि चैवमेव [१]निरौपधौ तौ मम सर्वकाम ।।२४७।।**

**व्यासतीर्थीया–** उपधः उपाधिः । निरौपधौ निरुपाधिकौ ।।२४७–२४८।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां अष्टमोऽध्यायः ।।

---

१. 'निरौपधौ' इति व्यासतीर्थीयपाठः ।

**वादिराजीया–** निरूपधौ तावित्यत्र वित्तं दधाति इति मया कदापि भक्तिर्न कर्तव्या किन्तु मम स्वामीत्येव त्वयि भक्तिर्भवतु । वित्तं दधाति इति त्वयाऽनुग्रहो न कर्तव्यः तव भक्तेषु सनकादिषु वित्तस्यैवाभावात् । वित्तवन्तं दुर्योधनं विहाय निर्धने विदुरे तवानुग्रहदर्शनात् । अतः अनाद्यनन्तकालमारभ्य मम भक्तोऽयमित्येव त्वमप्यनुग्रहं कुर्विति भावः । अत एवाह 'यमः द्रव्याणामप्यभावे तु सलिलेनापि पूजितः । यो दधाति स्वकं स्थानं स त्वया किं न पूजितः ॥' उक्तं च गीतायां भगवता त्वयैव– पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ इति : आह च भागवते एकान्तभक्तः प्रह्लादश्च– नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथामुखश्रीः ॥ इति ॥२४८॥

**सत्याभिनवीया–** तत्रैव प्रवर्धतां भक्तिरलं क्षणे इति श्लोके ह्रासविवर्जितेत्यस्य ह्रासेन विविधप्रकारेण सर्वात्मना वर्जितेत्यर्थः । एतेन ह्रासविवर्जितेत्यत्र वीत्येतत् व्यर्थमिति दूषणं पराकृतम् । विविधप्रकारेणेत्यर्थकस्य वीत्यस्य सर्वात्मनेत्यर्थे तात्पर्यमित्यभ्युपगमात् ॥

॥ इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां अष्टमोऽध्यायः ॥

**वरदराजीया–** तदेव प्रार्थयते– **प्रवर्धतामिति** ॥ हे ईश मे त्वयि भक्तिः क्षणे क्षणे प्रतिक्षणं अलं सम्यक् प्रवर्धताम् । सदा मुक्तिपर्यन्तं वृद्धिह्रासविवर्जिता ह्रासकारणनिषिद्धरागादिदोषवर्जिता प्रवर्धतामिति सम्बन्धः । ते अनुग्रहो मयि एवमेवास्तु । निरूपधौ निरूपाधिकौ तौ ह्रासविवर्जितभक्त्यनुग्रहौ मम सर्वकामः सर्वपुरुषार्थः ॥२४७॥

**जनार्दनीया–** हे ईश ह्रासैः क्षयकरकामक्रोधादिदोषैः, विवर्जिता रहिता त्वयि विद्यमाना मे भक्तिः सदा आमुक्तेः क्षणे क्षणे प्रतिक्षणमित्यर्थः । अलं मद्योग्यतापूर्तिर्यथा स्यात्तथा प्रवर्धतां वृद्धिं प्राप्नोतु । एवमेव ते अनुग्रहः मयि प्रवर्धतामित्यर्थः । निरूपधौ ऊपधः उपाधिः तद्रहितौ निरुपाधिकावित्यर्थः । तौ भक्त्यनुग्रहौ मम सर्वकामः समस्तपुरुषार्थः ॥२४७॥

**अनन्तभट्टीया–** ह्रासविवर्जितं ह्रासकारणदुष्टरागादिरहितेत्यर्थः । निरूपधौ निर्व्याजौ । सर्वकामः सर्वपुरुषार्थः ॥२४७–२४८॥

॥ इति श्रीमुष्णं अनन्तभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां तन्त्रमालायां(सत्तत्त्वमालायां) अष्टमोऽध्यायः ॥

**ताम्रपर्णीया–** सर्वकामः काम्यते इति कामः । सम्पूर्णपुरुषार्थः ।।२४७।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) अष्टमोऽध्यायः ।।

**चट्टी–** भक्त्यनुग्रहौ प्रार्थयते– **प्रवर्धतामिति** ।। हे ईश ह्रासविवर्जिता ह्रासकारणकामक्रोधादिदोषवर्जिता त्वयि विद्यमाना मे भक्तिः सदा आमुक्तेः क्षणे क्षणे प्रतिक्षणं अलं मद्योग्यतापूर्तिर्यथा स्यात्तथा प्रवर्धतां ऋद्धिं प्राप्नोतु । एवमेव ते अनुग्रहः मयि प्रवर्धतामित्यर्थः । निरूपधौ उपधः उपाधिः तद्रहितौ निरुपाधिकावित्यर्थः । तौ भक्त्यनुग्रहौ । मम सर्वकामः समस्तपुरुषार्थः ।।२४७।।

**गूढवाक्यार्थ–** सर्वकामः काम्यत इति कामः सम्पूर्णपुरुषार्थः ।।२४७।।

**इतीरितस्तस्य ददौ स तद्द्वयं पदं विधातुः सकलैश्च शोभनम् ।**
**समाश्लिषच्चैनमथाऽर्द्रया धिया यथोचितं सर्वजनानपूजयत् ।।२४८।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये श्रीरामचरिते अयोध्याप्रवोशो नाम अष्टमोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** तद् द्वयं भक्त्यनुग्रहौ ।।२४८ ।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां अष्टमोऽध्यायः ।।

**वादिराजीया–** विधातुः पदं सकलैः सर्वजनैः क्रियमाणं शोभनं– पुण्यं पुण्यफलं च ।।२४९।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां अष्टमोऽध्यायः ।।

**वरदराजीया–** इतीरितः प्रार्थितः स रामः तद्भक्त्यनुग्रहरूपं द्वयं ददौ । तथा विधातुर्ब्रह्मणः पदं तत्र च सर्वकालं भोगादिरूपं शोभनञ्च ददौ । अथ स्नेहार्द्रया धिया एनं हनूमन्तं समाश्लिषच्च अलिलिङ्गे । सर्वजनान् सुग्रीवादीन् यथोचितं यथायोग्यं अपूजयत् संमानयामास ।।२४८।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुबोधिन्यां अष्टमोऽध्यायः ।।

**जनार्दनीया–** इतीरितः स रामः तस्य हनूमतः तद्द्वयं भक्त्यनुग्रहौ ददौ । विधातुः पदं सत्यलोकाधिपत्य- मित्यर्थः । ददौ । सकलं च शोभनं च मङ्गलरूपभोगादिकं च ददावित्यर्थः । अथ आर्द्रया स्नेहार्द्रया धिया अन्तःकरणेन एनं हनूमन्तं समाश्लिषत् सस्वजे । सर्वजनान् वानरपौरजानपदादिसर्वभक्तजनान् । यथोचितं यथायोग्यं अपूजयत् वस्त्रभूषणादिना तोषयामासेत्यर्थः ।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात् ।
पूर्तिं तस्य कृतौ सतां सुखकरोऽध्यायोऽष्टमः पुण्यदः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
पदार्थदीपिकायां अष्टमोऽध्यायः ।।

**चट्टी–** इतीरितः स श्रीरामः तस्य हनूमतः तद्द्वयं भक्त्यनुग्रहौ ददौ । तथा विधातुः ब्रह्मणः पदं सत्यलोकाधिपत्यमित्यर्थः । ददौ । सकलं च शोभनं च मङ्गलरूपं भोगादिकं च ददावित्यर्थः । अथ आर्द्रया स्नेहार्द्रया धिया अन्तःकरणेन एनं हनूमन्तं समाश्लिषत् । सर्वजनान् वानरपौरजानपदादिजनान् यथोचितं यथायोग्यं अपूजयत् । वस्त्रभूषणादिना सम्मानयामासेत्यर्थः ।।२४८।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां अष्टमोऽध्यायः ।।

**गूढवाक्यार्थ–** अपूजयत् सम्मानयामास ।।२४८।।

।। इति विट्ठलाचार्यतनूजेन नरसिंहाचार्येण रचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां गूढवाक्यार्थविवृतौ अष्टमोऽध्यायः ।।

**।। श्रीकृष्णार्पणमस्तु ।।**

*****

## ।। नवमोऽध्यायः ।।

**अथाऽप्तराज्यो भगवान्[१] स लक्ष्मणं जगाद राजा तरुणो भवाऽशु ।**
**इतीरितस्त्वाह स लक्ष्मणो गुरुं भवत्पदाब्जान्न परं वृणोम्यहम्     ।।१।।**

**व्यासतीर्थीया–** उत्तरकाण्डकथामाह– **अथेत्यादिना** ।।१।।

**वेदाङ्गतीर्थीया–** तरुणो राजा युवराजः ।।१-४।।

**वादिराजीया–** युवन्तरुणशब्दयोः पर्यायत्वात् तरुणो राजा भव युवराजो भवेत्यर्थः ।।१।।

**वरदराजीया–** ।। **अथेति** ।। अथानन्तरं आप्तं राज्यं येन स भगवान् लक्ष्मणं जगाद । किमिति । आशु तरुणो राजा युवराजो भवेतीरिते सति लक्ष्मणो गुरुं ज्येष्ठं श्रीराममाह । किमिति । भवत्पादाब्जात् भवत्पादारविन्दसेवनात् परमन्यं पुरुषार्थमहं न वृणोमि नेच्छामि ।।१।।

**जनार्दनीया–** उत्तरकाण्डकथमाह– **अथेत्यादिना** ।। अथ सर्वजनपूजनानन्तरम् । आप्तराज्यः प्राप्तसाम्राज्यो भगवान् स रामः लक्ष्मणं जगाद । तरुणो राजा युवराजो भवेति सम्बन्धः । इतीरितः स लक्ष्मणः भवतः पदाब्जात् चरणकमलात् परं अन्यद्विषयसेवनं न वृणोमि नाङ्गीकरोमीति गुरुं मुख्यगुरुं श्रीराममाह । युधिष्ठिरो भीमार्जुनयोर्ज्येष्ठत्वात् यथा गुरुस्तथा नैवेति भावः ।।१।।

**अनन्तभट्टीया–** तरुणो राजा युवराजः । भवत्पदाब्जात् भवत्पदाब्जसेवनात् ।।१।।

**ताम्रपर्णीया–** तरुणयुवन्शब्दयोः पर्यायत्वात्तरुणो राजा युवराजा । आशु स्वस्य राज्याभिषेकानन्तरं विलम्बमकृत्वैव जगादेत्यन्वयः ।।१-४।।

---

१. उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः । आतिष्ठ धर्मज्ञ मया सहेमां गां पूर्वराजाध्युषितां बलेन । तुल्यं मया त्वं पितृभिर्धृता या तां यौवराज्ये धुरमावहस्व ।। सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् । वियुज्यमानो भुवि यौवराज्ये ततोऽभ्यषिञ्चत् भरतं महात्मा ।। इति रामायणे६.१२८.९१-९३ ।

**चट्टी–** उत्तरकाण्डकथमाह– **अथेत्यादिना** ।। अथ अनन्तरं आप्तं प्राप्तं राज्यं येन स भगवान् श्रीरामः लक्ष्मणं जगाद । किमिति । आशु तरुणो राजा युवराजो भवेति । इतीरिते सति लक्ष्मणः गुरुं ज्येष्ठं श्रीराममाह । किमिति । भवत्पादाब्जात् भवत्पादारविन्दसेवनात् परं अन्यं पुरुषार्थं अहं न वृणोमि न स्वीकरोमि ।।१।।

**गूढवाक्यार्थ–** युवतरुणशब्दयोः पर्यायत्वात् तरुणो राजा भव तरुणो युवराजो भवेत्यर्थः ।।१।।

**न मां भवत्पादनिषेवणैकस्पृहं तदन्यत्र नियोक्तुमर्हसि ।**
**न हीदृशः कश्चिदनुग्रहः क्वचित् तदेव मे देहि ततः सदैव ।।२।।**

**व्यासतीर्थीया–** भवत्पदाब्जात् परं न वृणोमीत्यत्र निमित्तमाह– **न मामिति** ।। मम राज्यप्राप्तावपि सेवाप्रदानमनुचितमित्यत आह– **न हीति** ।।२-३।।

**वादिराजीया–** तदेव मे देहीत्यत्र ईदृशानुग्रहकरणमेव देहीत्यर्थः । भवत्पादनिषेवणमिति वा ।।२।।

**वरदराजीया–** भवतः पादयोर्निषेवणे केवलं स्पृहा यस्य स तथा तम् । तस्मात् सेवनादन्यत्र पुरुषार्थे नियोक्तुं नियोजयितुं नार्हसि । एवमेवानुग्रहः कार्य इत्याह– **नहीति** ।। क्वचित्पुरुषविशेषे ईदृशोऽनुग्रहः कश्चिदपि नास्ति । ततोऽनुग्रहात् सदा तदेव तत्पादनिषेवणमेव सदा देहि ।।२।।

**जनार्दनीया–** भवतः पादौ तयोर्निषेवणं सेवा तस्मिन् एका मुख्या स्पृहा इच्छा यस्य स तथा तं माम् । तस्मात् पादनिषेवणादन्यत्र अन्यविषये नियोक्तुं नार्हसि । क्वचित् ईदृशः सेवाप्रदानरूपः कश्चिदनुग्रहः न नास्ति । ततः कारणात् सदैव संसारे मुक्तौ च तदेव पादनिषेवणमेव मे देहि ।।२।।

**अनन्तभट्टीया–** निषेवणैकस्पृहं केवलनिषेवणकामम् ।। **भवत्पदाब्जस्पृह इति** ।। इगुपधलक्षणक-प्रत्ययो ...* शब्दो वा । अत्र व्यधिकरणबहुव्रीहिरित्यवगन्तव्यः ।।२।।

**चट्टी–** भवतः पादयोः निषेवणे केवलं स्पृहा यस्य स तथा तम् । मां तस्मात् सेवनादन्यत्र पुरुषार्थे नियोक्तुं योजयितुं नार्हसि । एवमेवानुग्रहः कार्य इत्याह– **न हीति** ।। क्वचित् पुरुषविशेषे ईदृशानुग्रहः कश्चिदपि नास्ति । ततः अनुग्रहात् सदा सदैव भवत्पादनिषेवणमेव देहि ।।२।।

**इतीरितस्तस्य तदेव दत्त्वा दृढं समाश्लिष्य च राघवः प्रभुः ।**
**स यौवराज्यं भरते निधाय जुगोप लोकानखिलान् सधर्मकान् ।।३।।**

**वादिराजीया–** सधर्मकान् स्वस्वधर्मसहितान् लोकान् जुगोप । यथा सर्वे स्वस्वधर्मसहिता भवन्ति तथा जुगोपेति भावः ।।३-६।।

**वरदराजीया–** इतीरितो रामः तस्य लक्ष्मणस्य तदेव स्वपादारविन्दनिषेवणमेव दत्वा दृढं समाश्लिष्यालिङ्ग्य प्रभुः समर्थः सः राघवो यौवराज्ये युवराजकर्तव्ये कर्मणि भरतं निधाय स्थापयित्वाखिलान् सधर्मकान् लोकान् जुगोप ररक्ष । धर्मा अपि रक्षिता इति भावः ।।३।।

**जनार्दनीया–** तस्य लक्ष्मणस्य तदेव पादनिषेवणमेव । यौवराज्ये युवराज्यपदे भरतं निधाय संस्थाप्य सधर्मकान् वर्णाश्रमोचितधर्मकान् लोकान् जुगोप ररक्ष ।।३।।

**अनन्तभट्टीया–** यौवराज्यं युवराज्यम् । सधर्मकान् धर्ममपि जुगोपेत्यर्थः ।।३।।

**चट्टी–** इतीरितः श्रीरामः तस्य लक्ष्मणस्य तदेव स्वपादनिषेवणमेव दत्वा दृढं समाश्लिष्य आलिङ्ग्य प्रभुः समर्थः सः राघवः यौवराज्ये युवराजकर्तव्यकर्मणि भरतं निधाय स्थापयित्वा अखिलान् सधर्मकान् लोकान् जुगोप ररक्ष । धर्मा अपि रक्षिता इति भावः ।।३।।

**प्रशासतीशे पृथिवी बभूव [1]विरिश्चलोकस्य समा गुणोन्नतौ ।**
**जनोऽखिलो[2] विष्णुपरो बभूव [3]न धर्महानिश्च बभूव कस्यचित् ।।४।।**

**व्यासतीर्थीया–** विरिश्चलोकसमत्वमेव विवृण्वन्नाह– **जन इति** ।।४।।

**वरदराजीया–** ईशे श्रीरामे प्रशासति पृथिवी भूमिः गुणोन्नतौ गुणाधिक्यविषये विरिश्चलोकस्य समाना बभूव । अखिलः सर्वो जनो विष्णुः परः उत्कृष्टो यस्यासौ तथा विष्णुसेवापरो बभूव । कस्यचित्पुरुषार्थस्य धर्महानिः वर्णाश्रमोचितकर्मत्यागो नाभूत् ।।४।।

**जनार्दनीया–** ईशे रामे पृथिवीं शासति सति पृथ्वी गुणानां उन्नतौ उत्कर्षविषये विरिश्चलोकस्य समा सदृशा बभूव । गुणोन्नतिप्रवृत्तिं स्पष्टयति– **जन इत्यादिना** ।। विष्णुरेव परः उत्कृष्टो यस्य स तथा । धर्महानिः विहितधर्मत्यागः ।।४।।

---

१. 'अतिसर्वाणि भूतानि रामो दशरथिर्बभौ । ऋषीणां देवतानाञ्च मानुषाणाञ्च सर्वशः ।। पृथिव्यां सह वासोऽभूत् रामे राज्यं प्रशासति ।।' इति द्रोण.५९.१९ । 'अदंशमशका देशा नष्टव्यालसरीसृपाः । नाप्सु प्राणभृतां मृत्युः नाकाले ज्वलनोऽदहत् ।।' द्रोण.५९.२३ ।

२. 'नावैष्णवो अव्रती राजन् रामराज्येऽतिविश्रुते' इत्यादि स्कान्दोक्तं [ब्रा.खं.२धर्मारण्य.३०.१०१] सङ्गृह्णाति– जनोऽखिलो विष्णुपरो बभूव इति ।।

३. 'प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः' इति भागवतोक्तं प्राह– न धर्महानिश्च बभूव कस्यचिदिति ।।

**अनन्तभट्टीया– विधेयविष्णुपरं वा** । विष्णुस्सर्वोत्तम इति बुद्धिमानित्यर्थः । तत्सेवापरः रतिर्वा । धर्महानिः विहितकर्महानिः । धर्माचरणस्याप्युपलक्षणमेतत् । अखिलो जनः मोक्षयोग्यः ॥४-६॥

**चट्टी–** ईशे रामे प्रशासति सति पृथिवी भूमिः गुणानां उन्नतौ गुणाधिक्यविषये विरिञ्चिलोकस्य समाना बभूव । गुणोन्नतिप्रवृत्तिं दर्शयति– **जन इत्यादिना** ॥ अखिलः सर्वो जनः । विष्णुः परः उत्कृष्टो यस्यासौ तथा विष्णुसेवापरो वा बभूव । कस्यचित् पुरुषस्य धर्महानिः वर्णाश्रमोचितधर्मत्यागो न बभूव ॥४॥

**गुणैश्च सर्वैरुदिताश्च सर्वे यथायथा योग्यतयोच्चनीचाः ।**
**समस्तरोगादिभिरुज्झिताश्च [1]सर्वे सहस्रायुष ऊर्जिता धनैः ॥५॥**

**व्यासतीर्थीया–** ऊर्जिताः उद्रिक्ताः ॥५॥

**वेदाङ्गतीर्थीया–** [उदिताः] उत्कृष्टाः । योग्यतया यथायथा उच्चनीचाः स्वस्वयोग्यतानुसारेण उत्तमाधमा इति भावः ॥५-१० ॥

**वरदराजीया–** सर्वे जनाः सर्वैर्ज्ञानभक्त्यादिगुणैः उदिता अभिव्यक्ताः सन्तो यथायोग्यं स्वस्वयोग्यतानुसारात् उच्चनीचाः उत्तमाधमभावमापन्ना बभूवुरित्यर्थः । सर्वे प्राणिनः समस्तरोगादिभिः । आदिशब्देन आधय उच्यन्ते । उज्झिताः रहिता बभूवुः । सर्वे सहस्रं वर्षाणि आयुः येषां ते तथा । धनैरूर्जिताः उत्कृष्टाश्च बभूवुः ॥५॥

**जनार्दनीया–** सर्वे सज्जनाः । यथा यथायोग्यतया स्वस्वरूपयोग्यतया उच्चनीचा उत्तमाधमाः । तथा तथा स्वस्वयोग्यानुसारेण । सर्वैः गुणैः ज्ञानभक्तिसम्पदादिगुणैः उदिताः आविर्भूताः । रोगैः आदिशब्देन मानसीपीडा । सहस्रं सहस्रवर्षपरिमितं आयुर्येषां ते । धनैः ऊर्जिताः उत्कृष्टाः ॥५॥

**ताम्रपर्णीया–** उदिताः व्यक्ताः । कथं सर्वेषां गुणव्यक्तिरित्यत आह– **यथा यथेति** ॥ आद्यो यथाशब्दः योग्यतावाची । द्वितीयोऽनतिक्रमार्थः । तथा च यथा योग्यतानतिक्रमेण योग्यतानुसारेण सर्वैर्गुणैरित्यर्थः । ननु अस्ति किं योग्यतायां भेद इत्यत आह– **योग्यतयोच्चनीचा इति** ॥५-६॥

**चट्टी–** सर्वे सज्जना सर्वैः ज्ञानभक्त्यादिभिर्गुणैः उदिताः आविर्भूताः । यथा यथा योग्यतया इति पदत्रयम् । एको यथाशब्दः दृष्टान्तार्थः । द्वितीयो योग्यतार्थः । तथाशब्दोऽध्याहर्तव्यः । ततश्चायमर्थः । यथा योग्यता यथा यादृशी तथा तादृशी योग्यतया, स्वस्वरूपयोग्यतानुसारेणेति यावत् ॥ **उच्चनीचा**

---

१. 'आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः' इति रामायणे ७.१२८.१०१ ।

इति ।। अथवा तथाशब्दो न अध्याहार्यः । ततश्च यथायोग्यता यथा यादृशी तया योग्यतयेति । अथवा योग्यतया यथा यथावस्थिताः तथा तथा उच्चनीचाः । अथवा योग्यतया यथा यथावस्थिताः तथा तथा उच्चनीचाः । सर्वैः गुणैः उदिताः स्वस्वयोग्यतानुसारेण सर्वगुणसम्पन्ना इति यावत् । सर्वे प्राणिनः समस्तरोगादिभिः । आदिशब्देन आधयो उच्यन्ते । उज्झिताः रहिताश्च बभूवुः । सर्वे सहस्रं सहस्रवर्षपरिमितं आयुर्येषां ते तथा । धनैः ऊर्जिताः उत्कृष्टाश्च बभूवुः ।।५।।

**भावचन्द्रिका–** ।।१-४।। सर्वे पुमांसः ।।५-९।।

**गूढवाक्यार्थ–** [आ...*जगादेत्यन्वयः।] **गुणैश्च सर्वैरिति** ।। तत्र एकश्चशब्दो अप्यर्थः । अन्यस्त्ववधारणे । आद्यो यथाशब्दो योग्यतावाची द्वितीयो अनतिक्रमार्थः । तथाचैवं योजना । यथा यथा योग्यतया स्वयोग्यतामनतिक्रम्यैव सर्वैर्गुणैरुदिताः व्यक्ताः, पूर्णा इति यावत् । अत एव उच्चनीचास्तारतम्योपेताः बभूवुरिति शेषः । उत्तरेणान्वयः ।। **सर्वे सहस्रायुष इति** ।। स्त्रीणामपि सहस्रायुष्ट्वे पत्यपेक्षया पश्चादुत्पन्नस्त्रीणां विधवात्वप्रसङ्ग इति चेन्न । पातिव्रत्यधर्मेण बुद्धिपूर्वं सहगमनान्नानुपपत्तिः । अबुद्धिपूर्वमरणाभावस्याभिप्रेतत्वान्नानुपपत्तिः ।।५।।

**सर्वेऽजरा नित्यबलोपपन्ना [१]यथेष्टसिद्ध्या च सदोपपन्नाः ।**
**समस्तदोषैश्च सदा विहीनाः सर्वे सुरूपाश्च सदा महोत्सवाः ।।६।।**

---

१. कृतयुगसम्बन्धिन्यः सिद्धयः विवृताः विष्णुपुराणस्य विष्णुचित्तीयव्याख्याने– कृते तु मिथुनोत्पत्तिः सिद्धिश्चापि रसोल्लसा । सकृद्वृष्टिमयी चान्या गृहवृक्षात्मिकाऽपरा ।। पश्चात्सङ्कल्पसिद्धिश्च कल्पवृक्षात्मिका परा । प्रकामवृष्टिश्चाकृष्टपच्यसिद्धिस्तथाष्टमी ।।' रसोल्लासः योगाभ्यासबलात् स्वमूर्धन्यमृतांशुबिम्बस्रवदमृततृप्तता । स्त्रीनैरपेक्ष्येण आनन्दो मिथुनोत्पत्तिः । सकृद्वृष्टिमयी सकृद्वृष्ट्या सस्यनिष्पत्तिः । गृहवृक्षात्मिका इच्छया गृहवृक्षोद्गमः । सङ्कल्पसिद्धिः सङ्कल्पेन अभिमता सिद्धिः । कल्पवृक्षात्मिका भरद्वाजाश्रमवत् । प्रकामवृष्टिः निकामे निकामे वृष्टिः । अकृष्टपच्यसिद्धिः अकृष्टपच्यभूमित्वमिति पुराणेषु बहुधोक्ता ।' इति । सिद्धयः स्कान्दादिप्रोक्ताः । तथाहि– 'रसस्य स्वत एवान्तरुल्लासः स्यात् कृते युगे । रसोल्लासाख्यका सिद्धिः तया हन्ति क्षुधं नरः ।। स्त्र्यादीनां नैरपेक्ष्येण सदा तृप्ताः प्रजास्तथा । द्वितीया सिद्धिरुद्दिष्टा सा तृप्तिर्मुनिसत्तमैः ।। धर्मोत्तमश्च नास्त्यासां सा तृतीयाभिधीयते । चतुर्थी तुल्यता तासां आयुषः सुखरूपयोः ।। ऐकान्त्यबलबाहुल्यं विशोका नाम पञ्चमी । परमात्मपरत्वेन तपोध्यानादिनिष्ठिता ।। षष्ठी च कामचारित्वं सप्तमी सिद्धिरुच्यते । अष्टमी च तथा प्रोक्ता यत्र क्वचन शायिता ।। ' इति । तथा नागरखण्डे स्कान्देऽपि- तत्र सत्वाश्च ये केचित् पशवः पक्षिणो मृगाः । दैवीं वाचं प्रजल्पन्ति न विरोधं व्रजन्ति च ।। क्रीडन्ति नकुलैः सर्पा बिडाला मूषकैः समम् । पञ्चाननैर्मृगा नित्यमुलूकश्चापि वायसैः ।। अकृष्टा च मही सस्यं जनयत्यति भूरिशः । व्रीहिमुद्गयवप्रायं सुस्वादु बलवृद्धिदम् ।। सर्वर्तुफलिनो वृक्षाः सुपुष्पफलधारिणः । सुपत्राः कण्टकैर्हीना कल्पपादपसंन्निभाः ।। इत्यादि नागर.२७.१५-१८ ।

**व्यासतीर्थीया–** सिद्ध्या लाभेन । दोषैः कामक्रोधादिभिः ।।६–८।।

**वरदराजीया–** सर्वे अजरा मरणरहिताः । नित्यं यावज्जीवं बलोपपन्नाः यथेष्टसिद्ध्या च सदोपपन्नाः युक्ता बभूवुः । समस्तदोषैः रागादिभिः सदा विहीनास्तथा सर्वे समीचीनं रूपं येषां ते तथा । सदा महान् उत्सवो येषां ते तथा बभूवुः ।।६।।

**जनार्दनीया–** यथेष्टं यद्यदभीष्टं तस्य सिद्धिः प्राप्तिः तया । उपपन्नाः युक्ताः । समस्तदोषैः नवविधद्वेषरूपदोषैः रागादिभिर्वा ।।६।।

**चट्टी–** सर्वे अजराः जरारहिताः नित्यं यावज्जीवं बलेन उपपन्नाः । यथेष्टं यद्यदभीष्टं तस्य सिद्धिः प्राप्तिः तया उपपन्नाः युक्ताः । समस्तदोषैः कामादिभिश्च सदा विहीनाः । सर्वे शोभनं रूपं येषां ते सुरूपाश्च तथा । सदा महान् उत्सवो येषां ते तथा बभूवुः ।।६।।

**सर्वे मनोवाक्तनुभिः सदैव विष्णुं यजन्ते न तु कश्चिदन्यम् ।**
**समस्तरत्नोद्भरिता च पृथ्वी यथेष्टधान्या बहुदुग्धगोमती ।।७।।**

**वादिराजीया–** नतु कश्चिदन्यमित्यत्र तु विशेषेण विष्णुम् । सर्वोत्तमत्वेन अन्यं कञ्चिद्देवं न यजन्ते किं तु विष्णुपरिवारतया यजन्त इति भावः । गवां बहुदुग्धमपि भुवस्तृणोल्लासेन भवतीति भावेन बहुदुग्धगोमतीति भुवो विशेषणं कृतम् ।।७।।

**वरदराजीया–** सर्वे प्राणिनो मनोवाक्कायैः सदा विष्णुमेव मुख्यत्वेन यजन्ते । कश्चित् अन्यदेवं सर्वोत्तमत्वेन न यजन्ते । पृथ्वी च समस्तरत्नैः उद्भरिता पूर्णा बभूव । तथाच यथेष्टानि धान्यानि यस्यां सा तथा । बहुदुग्धं क्षीरं यासां ताः बहुदुग्धाः गावो यस्यां वियन्ते इति बहुदुग्धगोमती बभूवेत्यर्थः ।।७।।

**जनार्दनीया–** कश्चिदन्यं लक्ष्म्यादिकं देवगणम् । तु विशेषेण सर्वोत्तमत्वेनेत्यर्थः । न यजन्ते । पृथ्वी उद्भरिता सम्पूर्णा यथेष्टानि बहूनि धान्यानि यस्यां पृथिव्यां सा तथा । बहुदुग्धानि यासां ता तथा । ताश्च ताः गावश्च । ताः वियन्ते यस्यां पृथिव्यां सा तथा इति पृथिव्यां गुणत्रयोत्कर्ष उक्तः ।।७।।

**अनन्तभट्टीया–** अन्यं लक्ष्मणादिकं न यजन्ति । सर्वोत्तमत्वेनेति शेषः ।।७–१०।।

**ताम्रपर्णीया–** ।। **न तु कश्चिदिति** ।। कार्तयुगजनवद्देवतात्वेन न तु कश्चिदन्यं यजन्त इत्यर्थः । गुरुत्वपितृत्वादिरूपेणैवेन्द्रादिपूज्यतेति भावः ।।७।।

**चट्टी–** सर्वे प्राणिनः मनोवाक्कायैः सदा विष्णुमेव मुख्यत्वेन यजन्ते । कथञ्चिदन्यं देवं तु विशेषेण विष्णुमिव सर्वोत्तमत्वेनेत्यर्थः । न यजन्ते । किन्तु विष्णुपरतयैव यजन्ते इति भावः । पृथ्वी समस्तानि

च तानि रत्नानि श्रेष्ठवस्तूनि च तेन उद्धरिता सम्पूर्णा । यथेष्टानि बहूनि धान्यानि यस्यां सा तथा । बहुदुग्धं क्षीरं यासां ता बहुदुग्धाः तथाविधाः गावः अस्यां पृथिव्यां सन्तीति बहुदुग्धगोमती बभूव ।।७।।

**समस्तगन्धाश्च सदाऽतिहृद्या रसा मनोहारिण एव तत्र ।**
**शब्दाश्च सर्वे श्रवणातिहारिणः स्पर्शाश्च सर्वे स्पर्शेन्द्रियप्रियाः ।।८।।**

**वादिराजीया–** श्रवणमतिशयेन हरन्ति स्वाभिमुखीकुर्वन्तीति श्रवणातिहारिणः ।।८–९।।

**वरदराजीया–** समस्तगन्धा घ्राणेन्द्रियविषया अतिहृद्याः अतिमनोहरा बभूवुः । तत्र रामराज्ये रसा रसनेन्द्रियविषयाः मनोहारिण एव बभूवुः । सर्वे शब्दाः श्रोत्रेन्द्रियविषयाः श्रवणेन्द्रियप्रिया इत्यर्थः । सर्वे स्पर्शा स्पर्शेन्द्रियविषयाः स्पर्शेन्द्रियप्रिया एव बभूवुः ।।८।।

**जनार्दनीया–** समस्तगन्धाः चन्दनादिद्रव्याणि । 'गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः ।।' इत्यभिधानम् । अतिहृद्याः अतिमनोहराः । तत्र रामराज्ये श्रवणेन्द्रियं अत्यन्तं हरन्तीति विग्रहः । प्रिया इत्यर्थः ।।८।।

**ताम्रपर्णीया–** श्रवणमतिशयेन हरन्ति स्वाभिमुखीकुर्वन्तीति श्रवणातिहारिणः ।।८–९।।

**चट्टी–** समस्तगन्धाश्च घ्राणेन्द्रियविषयाः सदा अतिहृद्याः अतिमनोहराः । तत्र श्रीरामराज्ये रसाः रसनेन्द्रियविषया मनोहरा एव सर्वे शब्दाः श्रोत्रेन्द्रियविषयाः श्रवणेन्द्रियं अत्यन्तं हरन्तीति श्रवणेन्द्रियहारिणः श्रोत्रेन्द्रियप्रिया इत्यर्थः । सर्वे स्पर्शाः स्पर्शेन्द्रियविषयाः स्पर्शेन्द्रियप्रियाः बभूवुः ।।

**गूढवाक्यार्थ–** श्रवणं हरन्ति स्वाभिमुखं कुर्वन्तीति श्रवणातिहारिणः ।।८ ।।

**न कस्यचिद् दुःखमभूत् कथञ्चिन्न वित्तहानिश्च बभूव कस्यचित् ।**
**नाधर्मशीलो[१] न च कश्चनाप्रजो न दुष्प्रजो नैव कुभार्यकश्च ।।९।।**

**वरदराजीया–** कस्यचित् पुरुषस्य कथञ्चित् केनापि प्रकारेण दुःखं नाभूत् । कस्यचित् पुरुषस्य वित्तहानिः द्रव्यहानिश्च न बभूव । कश्चन पुरुषो अधर्मशीलः अधर्मनिरतो न बभूव । कश्चन कोऽपि अप्रजः सन्तानरहितो दुष्प्रजा दुष्टसन्तानो वा न बभूव । तथा कुत्सिता दुष्टभार्या यस्य सोऽपि न बभूव ।।

१. न योनिसङ्करश्चासीत् तत्र नाचारसङ्करः । न वन्ध्या दुर्भगा नारी काकवन्ध्या मृतप्रजा ।। विधवा नैव काप्यासीत् सभर्तृका नैव लप्यते ।। इत्यादि [ब्रा.खं.२धर्मारण्य.३०.९५-९६] स्कान्दोक्तमाह- नाधर्मशील इत्यादिना ।।

**जनार्दनीया–** अधर्मशीलः अधर्मबुद्धिः । अप्रजः सन्तानरहितः । दुष्प्रजः दुष्टप्रजावान् । कुत्सिता भार्या यस्य स तथा ।।९।।

**चट्टी–** कस्यचित् पुरुषस्य कथञ्चित् केनापि प्रकारेण दुःखं नाभूत् । कस्यचित् पुरुषस्य वित्तहानिः द्रव्यहानिश्च न बभूव । अधर्मशीलः अधर्मे शीलं स्वभावो यस्य सः तथा न बभूव । कश्चन कोऽपि अप्रजः सन्तानरहितश्च न । दुष्प्रजो दुष्टसन्तानवान् न । कुत्सिता दुष्टा भार्या यस्य स कुभार्यः । सोऽपि नैव ।।९।।

**स्त्रियो न चासन् विधवाः कथञ्चिन्न वै पुमांसो विधुरा बभूवुः ।**
**नानिष्टयोगश्च बभूव कस्यचिन्न चेष्टहानिर्न च पूर्वमृत्युः ।।१०।।**

**व्यासतीर्थीया–** पश्चाज्जातस्य पूर्वमृत्युः ।।१०–१२।।

**वादिराजीया–** स्त्रियो न चासन् विधवाः कथञ्चिदित्यत्र सर्वेषां सहस्रायुष्ट्वनियमेऽपि अकृतपरिहारेण शापसर्पदंशादिना पतीनां स्त्रीणां वा मरणादित्यर्थः । अतो न पूर्वोत्तरविरोध इति भावः । स्त्रियो विधवा नासन् पुमासंश्च विधुरा स्त्रीरहिता न बभूवुर्वा इति योजना । वैशब्देन रामायणे प्रसिद्धिं सूचयति । स्त्रीणां पुंसां च समानायुष्ट्वे स्त्रीपुंभावायोगः । स्त्रीणां किञ्चिदूनायुष्ट्वे सहस्रयुष्ट्वायोगः इति चेत्सत्यम्, नैव कुभार्यश्चेत्युक्त्वा पुंसामेवायं नियमः स्त्रीणां किञ्चिदूनत्वेऽपि न हानिरिति परिहारसम्भवात् । सहस्रायुषः पूर्वं मृत्युः अपमृत्युः पूर्वमृत्युः ।।१०–११।।

**वरदराजीया–** स्त्रियः कथञ्चित् केनापि प्रकारेण विधवा भर्तृरहिता न बभूवुः । पुमांसः पुरुषाः विधुराः अपत्नीका न बभूवुः । कस्यचित्पुरुषस्य अनिष्टेन साकं सम्बन्धो योगो न बभूव । इष्टस्य हानिर्न बभूव । पितुः पूर्वं मृत्युः न बभूव ।।१०।।

**जनार्दनीया–** पुमांसः पुरुषाः विधुराः स्त्रीरहिताः । अनिष्टस्याप्रियवस्तुनः सम्बन्धः । इष्टस्य प्रियवस्तुनः हानिः वियोगः । पूर्वमृत्युः वृद्धात् पूर्वं तरुणस्य मृत्युरित्यर्थः ।।१०।।

**ताम्रपर्णीया–** ।। स्त्रिय इति ।। ननु सर्वे सहस्रायुष इति वक्ष्यमाणत्वात् पत्युश्च स्वस्त्र्यपेक्षया पूर्वोत्पत्तिनियमात् सहस्रसंवत्सरं स्थित्वा पश्चादुत्पन्नस्त्रीपुरतो नाशात् स्त्रियो वैधव्यमवर्जनीयम् । न च सहगमनान्नेति वाच्यम् । सहस्रायुष्ट्वनियमभङ्गादिति चेत् अल्पत्वाविवक्षया सहस्रायुष्ट्वत्वोक्त्युपपत्तेः । यद्वा पातिव्रत्यधर्मेण बुद्धिपूर्वं सहगमनात् नानुपपत्तिः । अबुद्धिपूर्वं मरणाभावस्याभिप्रेतत्वात् ।।१०–११।।

**चट्टी–** स्त्रियः कथञ्चित् केनापि प्रकारेण विधवाः भर्तृहीनाः न बभूवुः । पुमांसः पुरुषाः विधुराः अपत्नीकाः न बभूवुः । कस्यचित् पुरुषस्य अनिष्टस्याप्रियवस्तुनः योगः सम्बन्धश्च न बभूव । इष्टस्य प्रियस्य वस्तुनः हानिः वियोगश्च न । पूर्वमृत्युः वृद्धात् पूर्वं तरुणमृत्युश्च न बभूव ।।१०।।

**भारतश्री–** ।। **स्त्रियो न चासन् विधवा इति** ।। श्रीरामराज्याभिषेकानन्तरमिति ज्ञातव्यम् । अतो राममातृणां विद्यमानत्वेऽपि न विरोधः ।।१०–१६।।

**भावचन्द्रिका–** स्त्रीणां... *रत्व[नियति] नियमेन सहस्रायुष्ट्वानुपपत्तेः ।। **स्त्रिय इति**।। सहगमनादिति भावः ।।१०–११।।

**यथेष्टमाल्याभरणानुलेपना यथेष्टपानाशनवाससोऽखिलाः ।**
**बभूवुरीशे जगतां प्रशासति प्रकृष्टधर्मेण जनार्दने नृपे ।।११।।**

**वेदाङ्गतीर्थीया–** जगतामीशे जनार्दने नृपे प्रशासति सति जगतीमिति शेषः ।।११-१२।।

**वरदराजीया–** यथेष्टानि माल्यानि पुष्पाणि आभरणानि अनुलेपनानि च येषां ते तथा । यथेष्टानि पानानि अशनानि अन्नानि वासांसि येषां ते तथा । जगतामीशे स्वामिनि जनार्दने नृपे राज्ञि प्रकृष्टधर्मेण प्रशासति सति एवं बभूवुरित्यर्थः ।।११।।

**जनार्दनीया–** यथेष्टानि बहूनि माल्यानि पुष्पाणि आभरणानि भूषणानि अनुलेपनानि चन्दनानि येषां ते तथा । यथेष्टानि पानानि जलदुग्धादीनि अशनानि अन्नानि वासांसि येषां ते तथा । अखिलाः सर्वे लोका बभूवुः । कस्मिन् सति ? जगतां सर्वलोकानां ईशे स्वामिनि जनार्दने दुष्टमर्दने नृपे रामराज्ये प्रकृष्टेन उत्कृष्टेन धर्मेण प्रशासति सति । शास्तीति शासत् । तस्मिन् तथा रक्षति सति । पृथिवीमिति शेषः ।।११।।

**अनन्तभट्टीया–** प्रकृष्टधर्मेण शासतीत्यर्थः । प्रजा इति शेषः । जगतां ईश्वर इति सम्बन्धः । अथवा नृपे सति प्रकृष्ट... *पूर्वोक्तगुणा इत्यर्थः ।।११।।

**चट्टी–** यथेष्टानि बहूनि माल्यानि पुष्पाणि आभरणानि भूषणानि अनुलेपनानि येषां ते तथा । यथेष्टानि पानानि जलदुग्धादीनि अशनानि अन्नानि वासांसि येषां ते तथा । अखिलाः सर्वे लोका बभूवुः । कस्मिन् सति जगतां सर्वलोकानां ईशे स्वामिनि जनार्दने दुष्टमर्दने नृपे श्रीरामे राज्ये प्रकृष्टेन उत्कृष्टेन धर्मेण प्रशासति । पृथिवीमिति शेषः ।।११।।

**गूढवाक्यार्थ–** प्रकृष्टधर्मेण प्रकृष्टधर्मस्थापनेन ।।११।।

**स[1] ब्रह्मरुद्रमरुदश्विदिवाकरादिमूर्द्धन्यरत्नपरिघट्टितपादपीठः ।**
**नित्यं सुरैः सह नरैरथ वानरैश्च सम्पूज्यमानचरणो रमते रमेशः ॥१२॥**

**वादिराजीया–** स ब्रह्मरुद्रमरुत् इत्यत्र 'मनु अवबोधन' इति धातोः औणादिके डप्रत्यये कृते मं ज्ञानम्, 'रुह बीजजन्मनिप्रादुर्भाव' इति धातोः रोहयति उत्पादयतीति मरुत् । मनोभिमानितया मानसज्ञानजनकः इन्द्रः । 'मृञ् प्राणत्यागे' इति धातोः डप्रत्यये कृते मं मरणं रुणद्धीति मरुत्प्राणः । गुरुरूपेण मं ज्ञानं रोहयति जनयति मरुत् बृहस्पतिश्च । 'आशु गतौ' इति धातोः आशु गतिमानश्वी प्रवहाख्यो वायुः । सम्पूज्यमानचरणः ब्रह्मरुद्रादिसुरैः नरैर्वानरैश्च सम्यक् षोडशोपचारपूजया पूज्यमानचरण इत्यर्थः । प्राक् मूर्ध्ना प्रणम्य पश्चात्सम्यक्पूजां कुर्वन्तीति भावः । अतो न पौनरुक्त्यम् ॥

**वरदराजीया–** सः रमेशो रामः ब्रह्मरुद्रमरुदश्विदिवाकरादयो येषां तेषां मूर्धनि शिरसि विद्यमानानि रत्नानि तैः परिघट्टिते पादपीठे यस्यासौ तथा । एवं नित्यं सन्ततं सुरैर्देवैरथ वानरैश्च सम्पूज्यमानौ चरणौ यस्य स रामो रमते क्रीडते स्म ॥१२॥

**जनार्दनीया–** ब्रह्मादीनां मूर्ध्नि विद्यमानानि मूर्धन्यानि । तानि च तानि रत्नानि च । तैः परिघट्टिते सङ्घर्षिते पादपीठे यस्य स तथा । सुरैः । अथशब्दः समुच्चयार्थः । सह वानरैश्च । नित्यं प्रत्यहम् । सम्पूज्यमानचरणः स रमेशो रामः रमते ॥१२॥

**अनन्तभट्टीया–** रमते अरंस्यत ॥१२॥

**ताम्रपर्णीया–** ॥ **सुरैस्सहेति** ॥ सहपदप्रयोगात् अदृश्यत्वासंस्पृश्यत्वादिमन्तोऽपि देवाः भगवत्सेवौत्सुक्येन नरवानरैः संमिलिता एव व्यचरन्नित्युक्तं भवति ॥१२॥

**चट्टी–** ब्रह्मरुद्रमरुदश्विदिवाकराः आदयो येषां तेषां मूर्ध्नि विद्यमानानि मूर्धन्यानि तानि च तानि रत्नानि च तैः परिघट्टिते सङ्घट्टिते पादपीठे यस्य स तथा । अथशब्दः समुच्चयार्थः । सुरैः देवैश्च सह नरैः वानरैश्च नित्यं प्रत्यहं सम्पूज्यमानचरणः सः रमेशो श्रीरामः रमते स्म क्रीडते स्म ॥१२॥

**भावचन्द्रिका–** नरैस्सह सह नरैः । नरपूर्वैर्वानरैरिति वा । सर्वाङ्गसुन्दररूपवानर्यो वा । नरा अपि । 'भेजुर्योगानुभावास्ते तस्मिन् जनसमागमे' [यु.का.१५.६२] इति संग्रहरामायणे ॥१२-१५॥

---

१. 'यस्यामलं नृपसदस्सु यशोऽधुनापि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपाते । तन्नाकपालवसुपालकिरीटजुष्टं पादाम्बुजं रघुपतेः शरणं प्रपद्ये ॥' इति भागवते ९.९.२१ ।

**तस्याखिलेशितुरनाद्यनुगैव लक्ष्मीः सीताभिधा त्वरमयत् स्वरतं रमेशम् ।**
**नित्यावियोगिपरमोच्चनिजस्वभावा सौन्दर्यविभ्रमसुलक्षणपूर्वभावा ॥१३॥**

**व्यासतीर्थीया–** नित्यावियोगित्वे निमित्तमुक्तम्– **निजस्वरूपेति** ॥ भावाः धर्माः ॥१३-१६॥

**वेदाङ्गतीर्थीया–** नित्यावियोगिपरमोच्चनिजस्वभावसौन्दर्यविभ्रमसुलक्षणपूर्वभावा । सौन्दर्यं च विभ्रमो विलासः समस्तलक्षणानि च । नित्यावियोगीनि परमोच्चानि निजस्वभावभूतानि च तानि सौन्दर्यादीनि चेति विशेषणसमासः । निजस्वभावत्वं नाम निजस्वरूपत्वम् । तन्नित्यावियोगित्वे हेतुः । सौन्दर्यादीनि पूर्वाणि येषां ते सौन्दर्यादिपूर्वाः । सौन्दर्यादिपूर्वाः भावा धर्माः गुणा यस्या सा तथोक्ता ॥

**वादिराजीया–** सीताभिधा त्वरमयदित्यत्र तु विशेषेण पादसंवहनगन्धमाल्याद्यर्पणताम्बूलदानादिना अरमयदिति सम्बन्धः । नित्यमेव सुखं व्यक्तीचकारेत्यर्थः । नित्यावियोगिनः परमोच्चाः निजस्वभावाः सौन्दर्यादयो भावाः धर्माः यस्याः सा तथोक्ता ॥१३॥

**वरदराजीया–** अखिलेशितुः सर्वेश्वरस्य अनाद्यनुगा अनादितो अवियोगिनी सीताभिधा लक्ष्मीः स्वरतं स्वस्मिन्नेव रतं परेशं रामं अरमयत् । कथम्भूता सा नित्यावियोगिपरमोच्चनिजस्वभावसौन्दर्य-विभ्रमसुलक्षणपूर्वभावा सौन्दर्यसुरूपता विभ्रमो विलासः सुलक्षणानि द्वात्रिंशल्लक्षणानि चेति तथा नित्यावियोगिनीति यावद्द्रव्यभाविनी । परमोच्चानि उत्तमोत्तमानि निजस्वभावभूतानि सौन्दर्यादीनि च तानि पूर्वाणि येषां ते तथा तादृशाः भावा धर्माः गुणाः यस्याः सा तथोक्ता । सा अरमयदिति सम्बन्धः ॥

**जनार्दनीया–** तस्य रामस्य अनादितः अनादिकालतः अनुगा तेन संयुक्ता इत्यर्थः । सीताभिधा सीतानाम्नी लक्ष्मीः अरमयत् रमयामास । कथंभूता लक्ष्मीः ? सौन्दर्यविभ्रमो सौन्दर्यविलासः । सुलक्षणानि सल्लक्षणानि । नित्यं अवियोगिनि वियोगरहितानि । अत्युत्तमानि परमोच्चानि निजस्वभावभूतानि स्वस्वरूपभूतानि सौन्दर्यविभ्रमलक्षणानि पूर्वाणि येषां ते तथा । त एव भावाः धर्माः यस्याः सा तथोक्ता ॥१३॥

**अनन्तभट्टीया–** नित्यावियोगित्वे हेतुः– **निजस्वरूपेति** ॥ भावाः धर्माः ॥१३॥

**ताम्रपर्णीया–** नित्यावियोगिनः परमोच्चाः निजस्वभावाः । सौन्दर्यकटाक्षवीक्षणादिविपुलाः । सुलक्षणत्वादिधर्माः यस्यास्सा तथोक्ता । नित्यावियोगिनी च सा परमोच्चनिजस्वभावसौन्दर्य-विभ्रमसुलक्षणपूर्वभावा चेति वा ॥१३॥

**चट्टी–** अखिलेशितुः सर्वेश्वरस्य तस्य श्रीरामस्य अनादितः अनादिकालतः अनुगा तेन संयुक्ता इत्यर्थः । सीताभिधा तन्नाम्नी लक्ष्मीः स्वरतं स्वस्मिन्नेव रतं सुरेशं श्रीरामं अरमयत् । कथंभूता लक्ष्मीः सौन्दर्यं

सुरूपता विभ्रमो विलासः सुलक्षणानि द्वात्रिंशल्लक्षणानि च नित्यं अवियोगिनि वियोगरहितानि परमोच्चानि अत्युत्तमानि निजस्वभावभूतानि स्वस्वरूपभूतानि सौन्दर्यविभ्रमसुलक्षणानि पूर्वाणि येषां ते तथा । अत एव भावाः धर्माः गुणा इत्यर्थः । यस्या सा तथोक्ता सा अरमयदिति पूर्वेणान्वयः ।।१३।।

**रेमे तया स परमः स्वरतोऽपि नित्यं नित्योन्नतप्रमदभारभृतस्वभावः ।**
**पूर्णोडुराजसुविराजितसन्निशासु दीप्यन्नशोकवनिकासु सुपुष्पितासु ।।१४।।**

**वेदाङ्गतीर्थीया–** नित्योन्नतप्रमदभारभृतस्वभावः नित्योन्नतेन प्रमदेन आनन्देन भृतः पूर्णः स्वभावः स्वरूपं यस्य स तथोक्तः । दीप्यन् शोभमानः ।।१४ ।।

**वादिराजीया–** 'मदि हर्षे' इति धातोः प्रकृष्टो मदः सन्तोषः तस्य भारं बिभर्तीति प्रमदभारभृतः । कर्तरि क्तप्रत्ययः । तादृशः स्वभावो यस्य स तथोक्ता ।।१४-१५।।

**वरदराजीया–** स्वरतोऽपि स परमः उत्तमो रामः तदनुग्रहार्थं नित्यं तया सीतया रेमे । पुनः कथंभूतः उन्नतः उत्कृष्टः प्रमोदः आनन्दः तस्य भारेण भृतः पूर्णः स्वभावः स्वरूपं यस्य सः । कथम्भूतः पूर्णेन उडुराजेन चन्द्रेण सुविराजितासु अलंकृतासु दोषरहितासु निशासु रात्रिषु सुपुष्पितासु कुसुमितासु अशोकवनिकासमूहेषु दीप्यन् प्रकाशमान इत्यर्थः ।।१४।।

**जनार्दनीया–** नित्यं उन्नतप्रमदभारेण उत्कृष्टानन्दसमूहेन भृतः पूर्णः स्वभावः स्वरूपं यस्य स तथा । उडूनां नक्षत्राणां राजेत्युडुराजः । पूर्णोडुराजेन सुविराजितासु दीप्यमानासु सन्निशासु सुखकररात्रिषु दीप्यन् शोभमानः सुपुष्पितासु उत्तमकुसुमितासु अशोकवनिकासु तया सीतया रेमे ।।१४।।

**अनन्तभट्टीया–** नित्योन्नतः नित्यानन्दोरुपूर्वस्वभावः । पुष्पितासु रेम इति भावः । सम्बन्धः ।।१४-१६।।

**ताम्रपर्णीया–** प्रमदभारं बिभ्रतीति प्रमदभारभृतः स्वः स्वभावो यस्येति कर्तरि क्तप्रत्ययः । यद्वा प्रमदभारेण भृतः पूर्णः स्वभावो यस्य स इत्यर्थः ।।१४-१७।।

**चट्टी–** नित्यं उन्नतप्रमदभारेण उत्कृष्टानन्दसमूहेन भृतः पूर्णः स्वभावः स्वरूपं यस्य स तथा । परमः उत्तमः श्रीरामः स्वरतोऽपि । उडूनां नक्षत्राणां राजेत्युडुराजः पूर्णश्चासौ उडुराजश्च चन्द्रश्च तेन सुविराजितासु तासु दीप्यमानासु सन्निशासु दोषरहितरात्रिषु सुपुष्पितासु उत्तमकुसुमितासु अशोकवनिकासु दीप्यन् तदनुग्रहार्थं नित्यं तया सीतया रेमे ।।१४।।

**गूढवाक्यार्थ–** ।। **प्रमदभार इति** ।। प्रमदभारेण भृतः निर्भृतः पूर्णः स्वभावः यस्य स तथोक्तः ।।

**गायन्ति चैनमनुरक्तधियः सुकण्ठा गन्धर्वचारणगणाः सह चाप्सरोभिः ।**
**तं तुष्टुवुर्मुनिगणाः सहिताः सुरेशै राजान एनमनुयान्ति सदाऽप्रमत्ताः ।।१५।।**

**वेदाङ्गतीर्थीया–** सुकण्ठाः सुस्वराः ।।१५।।

**वरदराजीया–** सुकण्ठाः सुस्वराः कण्ठाः येषां ते सुकण्ठाः । गन्धर्वाणां चारणानां गणाः अप्सरोभिः अप्सरास्त्रीभिः सह एनं श्रीरामं गायन्ति । सुरेशैः सहिताः मुनीनां ऋषीणां गणाः तं रामं तुष्टुवुः अस्तुवन् । तथा सदा अप्रमत्ताः विस्मरणरहिताः नृपा एनं रामं सर्वदा अनुयान्ति आगच्छन्ति स्म ।।१५।।

**जनार्दनीया–** अनुरक्ता प्रीतियुक्ता धीर्बुद्धिर्येषां ते तथा । सुकण्ठाः सुस्वराः गायन्ति । सुरेशैः सहिताः मुनिगणाः अप्रमत्ताः मदरहिताः राजानः एनं रामं अनुयान्ति अभिप्रयान्ति । अनुकूलेन तिष्ठन्तीति वा ।।१५।।

**चट्टी–** अनुरक्ता प्रीतियुक्ता धीः येषां ते तथा । सुकण्ठाः सुस्वराः गन्धर्वाणां चारणानां च गणाः अप्सरोभिः अप्सरस्त्रीभिः सह एनं श्रीरामं गायन्ति । सुरेशैः सहिताः मुनिगणाः ऋषिसमूहा तं श्रीरामं तुष्टुवुः अस्तुवन् । राजानः नृपाः सदा अप्रमत्ताः मदरहिताः एनं रामं अनुयान्ति आगच्छन्ति स्म ।।

**एवं त्रयोदशसहस्रमसौ समास्तु पृथ्वीं ररक्ष विजितारिरमोघवीर्यः ।**
**आनन्दमिन्दुरिव सन्दधदिन्दिरेशो लोकस्य सान्द्रसुखवारिधिरप्रमेयः ।।१६।।**

**वेदाङ्गतीर्थीया–** एवं ररक्ष ।।१६।।

**वादिराजीया–** एवं त्रयादशसहस्रमसौ समास्त्वित्यत्र तु विशेषेण दृष्टिगोचरतया ररक्षेत्यर्थः । पालकतया दृष्ट्यगोचरमूलरूपेण सदा रक्षन्नपीदानीं मूर्तिविशेषेण दृश्यः सन् ररक्षेति भावः ।।१६।।

**मधुसूदनीया–** ।।१-१५।। एवं त्रयोदशेति ।। ननु 'दशवर्षसहस्राणि दशवर्षशतानि च । रामो राज्यमुपाश्रित्य ब्रह्मलोकं गमिष्यति ।।' इति रामायणे [उ.का.५१.२२] । 'दशवर्षसहस्राणि दशवर्षशतानि च । राज्यं कारितवान् रामः ततस्स त्रिदिवं गतः ।।' इत्यरण्यपर्वणि [१५०.१८] । 'दशवर्षसहस्राणि दशवर्षशतानि च । अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत् ।।' इति हरिवंशे च [१.४१.१५१] 'दशवर्षसहस्राणि दशवर्षशतानि च । राज्यं कारितवान् रामः ततस्स त्रिदिवं गतः ।।' इति पाद्मे [२४४.३५] च एकादशसहस्रसङ्ख्याकसंवत्सरपर्यन्तमेव रामस्य राज्यपालकत्वोक्तेः त्रयोदशसहस्रसमास्तु पृथ्वीं ररक्षेत्येतदयुक्तम् । तद्विरोधादिति चेत् सत्यम् । नक्षत्रमानेनैतदुक्तेश्चोपपन्नत्वेन विरोधाभावात् । तथाचोक्तम्– 'नाक्षत्रमानगणितं [नक्षत्रमास] त्रयोदशसहस्रकम् । ब्रह्मलोकसमश्चक्रे समस्तं

क्षितिमण्डलम् ।।' इति स्कान्द इति नवमस्कन्धतात्पर्ये च [९.९.१७] । 'तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभुः । त्रयोदशाब्दसाहस्रमग्निहोत्रमथाजुहोत्' इति भागवते । [९.९.१८] भारतादिकं तु 'दशमासाब्द' इति पक्षान्तराभिप्रायेण कल्पान्तरव्यवस्थया वा प्रवृत्तमिति न विरोधः । एवमुत्तरत्राप्यूह्यम् । अत एवोत्तरत्र तदादिशङ्कायां तत्परिहारार्थं 'बहुकल्पानुसारेण मयेयं सत्कथोदिता । नैकग्रन्थाश्रया तस्मान्नाशङ्क्यात्र विरुद्धता ।।' इति वक्ष्यतीति एतद्विशेषसूचनार्थमेव तुशब्द इति बोध्यम् ।।१६।।

**वरदराजीया—** एवमुक्तरीत्या अमोघं सफलं वीर्यं यस्यासौ । अत एव विजिता अरयो येन स रामः त्रयोदशसहस्रं समाः वर्षाणि पृथ्वीं भूमिं ररक्ष । कथंभूतः इन्दिरायाः रमायाः ईशः स्वामी सान्द्रेण निरन्तरेण सुखेन वारिधिरिवाप्रमेयः साकल्येन प्रमातुमशक्यः स रामो लोकस्य जनस्य इन्दुश्चन्द्र इव आनन्दं सन्तोषं दधत् कुर्वाणः ।।१६।।

**जनार्दनीया—** विजिता अरयः शत्रवो येन स तथा । अमोघं सफलं वीर्यं पराक्रमो यस्य स तथा । लोकस्य आनन्दं इन्दुरिव चन्द्र इव सन्दधत् धारयन् । इन्दिरायाः लक्ष्म्याः ईशः पतिः । सान्द्रेण निरवकाशेन, पूर्णेनेति यावत् । सुखेन वारिधिरिव समुद्र इव समुद्रः । अत एव अप्रमेयः प्रमातु-मशक्योऽसौ रामः । एवं पूर्वोक्तप्रकारेण त्रयोदशसहस्रसङ्ख्याकाः समाः संवत्सरान् । 'कालाध्वनो-रत्यन्तसंयोगे' [सि.कौ.५५८] इति द्वितीया । पृथिवीं ररक्ष ।।१६।।

**चट्टी—** अमोघं सफलं वीर्यं पराक्रमो यस्य सः । अत एव विजिता अरयः शत्रवो येन स तथा । लोकस्य आनन्दं सन्तोषं इन्दुरिव चन्द्र इव सन्दधत् कुर्वाणः इन्दिरायाः लक्ष्म्याः ईशः पतिः सान्द्रेण निरवकाशेन, पूर्णेनेति यावत् । सुखेन वारिधिरिव समुद्र इव अत एव अप्रमेयः प्रमातुमशक्यः । असौ श्रीरामः एवं पूर्वोक्तप्रकारेण त्रयोदशसहस्रसङ्ख्याकाः समाः संवत्सराणि पृथ्वीं तु विशेषेण दृष्टिगोचरतया ररक्षेत्यर्थः । पालकतया दृष्ट्यगोचरमूलरूपेण सदा रक्षन्नपि इदानीं मूर्तिविशेषेण दृश्यस्सन् ररक्षेति भावः । त्रयोदशसहस्रमिति नक्षत्रमासमानेनेति ज्ञातव्यम् । 'नक्षत्रमानगणितं त्रयोदशसहस्रकम् । ब्रह्मलोकसमश्चक्रे समस्तक्षितिमण्डलम् ।।' इति स्कान्दवचनात् । ननु एतदनुपपन्नम् । 'दशवर्षसहस्राणि दशवर्षशतानि च । रामो राज्यमुपाश्रित्य ब्रह्मलोकं गमिष्यति ।।' इति रामायणे [उ.का.५१.२२] । 'दशवर्षसहस्राणि दशवर्षशतानि च । राज्यं कारितवान् रामः ततस्स त्रिदिवं गतः ।।' इति पाद्मे अरण्यपर्वणि च [१५०.१८] । 'दशवर्षसहस्राणि दशवर्षशतानि च । अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत् ।।' इति हरिवंशे च [१.४१.१५१] एवं एकादशसहस्रवत्सराणां राज्यपालनकालत्वेनोक्तत्वात् विष्णुपुराणे च 'द्वादशाब्धसहस्रं च रामो राज्यमकारयत्' [४.४.९९] इत्युक्तत्वात् तद्विरोध इति चेन्न । शते पञ्चाशन्न्यायेन त्रयोदशसहस्रवत्सरेषु पक्षद्वयस्याप्यन्तर्भावात् । एतदभिप्रायेणैव त्रयोदशसहस्रमित्युक्तम् ।

अन्यथा भारतस्य निर्णयग्रन्थत्वेन एतद्ग्रन्थस्य 'विशेषतो भारतवर्त्मचारी' इत्युक्त्या भारतानुसारित्वेन भारतोक्त्यनुसारेणैव एकादशसहस्रमित्येवावक्ष्यदिति ज्ञेयम् ।

यद्वा चान्द्रमानानुसारेण भारतादिग्रन्थोक्तैकादशसहस्राब्दानां नाक्षत्रमानेन गणनायां प्रतिमासं दिनत्रयलाभेन द्वाविंशत्युत्तरद्विशतोत्तरद्वादशसहस्रवर्षाणामष्टादशदिनोत्तरमासद्वयस्य च जायमानत्वेन तत्र द्वादशसहस्रातिरिक्तस्याल्पकालत्वेन तदविवक्षया विष्णुपुराणस्य प्रवृत्तत्वेन विरोधाभावात् । न चैवं त्रयोदशसहस्राब्दप्रतिपादकवचनविरोध इति वाच्यम् । वचनप्रवृत्तेः वक्तृविवक्षाधीनत्वेन अत्र द्वादश-सहस्राब्दातिरिक्तकालस्याल्पत्वेऽपि त्रयोदशसहस्रप्रविष्टत्वेन तद्विवक्षया त्रयोदशसहस्राब्द-व्यवहारस्यापि सम्भवात् । यद्यपि भारतोक्तानुसारेणैकादशसहस्रमिति वक्तव्यम् । तथापि– 'तत ऊर्ध्वं ब्रह्मचर्यं धारयन् शुशुभे प्रभुः । त्रयोदशाब्दसाहस्रं अग्निहोत्रमथाजुहोत् ॥' इति भागवतवचनस्य पूर्वोक्तभारतादिवचन-विरोधस्फुरणाय तद्विरोधोपशमकभागवततात्पर्योदाहृतस्कान्दवचनानुसन्धानज्ञापनाय च त्रयोदशसहस्र-मित्युक्तमिति ज्ञेयम् ।

यद्वा दशमासपरिमिता अब्दा अपि सन्ति नक्षत्रजातके तथा उक्तत्वात् । मनुष्यशतायुषो मासै : सहस्राब्दप्रतिपादकमासैः 'सहस्राब्दं सत्रमुक्तं नराणाम्' [ता.नि.२२.१११] इति वाक्ये आचार्यैः सूचितत्वाच्च । तथा च नक्षत्रमानेन द्वादशमासपरिमितैकादशसहस्राब्दानां तन्मानेनैव दशमास-परिमिताः चतुर्मासाधिकद्वात्रिंशदुत्तराष्टशताधिकद्वादशसहस्रब्दा भवन्ति । एवञ्च द्वादशसहस्राधिककालस्य पूर्णसहस्रत्वाभावेन तदविवक्षया विष्णुपुराणस्य प्रवृत्तत्वेन क्रोशोनदशयोजने ग्रामे अल्पत्वाविवक्षया दशयोजनो ग्राम इतिवत् किञ्चिदूनाब्दशतद्वयमात्रस्य न्यूनत्वेन तदविवक्षया त्रयोदशसहस्रमिति वाक्यस्य प्रवृत्तत्वेन विरोधाभावात् ॥१६॥

**भावचन्द्रिका–** स्वरतोऽपि तदनुग्रहार्थं रेमे ॥ एवमिति ॥ [एकादशाब्दसहस्रं] 'द्वादशाब्दसहस्रं राज्यमकरोत्' इति [४.४.९९] विष्णुपुराणविरुद्धमिति चेन्न । 'नक्षत्रमासगणितं त्रयोदशसहस्रकं' इति नवमस्कन्धतात्पर्योक्त्या सप्तविंशतिनक्षत्रपरिवर्तनेन यो मासः तत्सङ्ख्या त्रयोदशसहस्रमित्युपपत्तेः । एवमपि 'दशवर्षसहस्राणि दशवर्षशतानि च । राज्यं चकार धर्मेण राघवः शंसितव्रतः ॥' इति पाद्मवचनविरोध इति चेन्न । भूमिप्रवेशादूर्ध्वं सप्तशतानि तत्पूर्वं त्रिशतमित्यङ्गीकारेण वा अल्पत्वादविवक्षया वा सीतावियोगकालपरित्यागेन एकादशसहस्रमित्युपपत्तेः ॥१६–२५॥

**अतिविशद–** ॥१-१५॥ एवं त्रयोदशसहस्रमसौ समास्तु पृथ्वीं ररक्ष इत्यत्र रामस्य त्रयोदशसहस्रं भुवो रक्षकत्वं प्रतीयते । तथा भागवतेऽपि 'त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम्' इत्यादिना । तत्तु वाल्मीकिरामायणादिविरुद्धम् । 'दशवर्षसहस्राणि दशवर्षशतानि च' इत्यादिना रामस्यैकादशसाहस्रं भुवो

रक्षकत्वश्रवणादिति चेन्न । तत्र 'दशवर्षसहस्राणि' इत्यनेन दशसहस्राणि सिद्धान्येव तत्र विवादाभावात् एकादशसहस्रसङ्ख्यया एकसहस्रे उर्वरिते दशवर्षसहस्रमिति वक्तव्ये यदा 'दशवर्षशतानीत्युक्तं तेन बहुवचनेन त्रयोदशसहस्राणि सिद्धानीति तद्वाक्यपर्यालोचनयापि सिद्धेर्न विरोधशङ्कावकाशः । यद्वा नक्षत्रमासगणितं त्रयोदशसाहस्रगणिकत्वेन एकस्य अपरस्य तु चान्द्रमासादिगणितैकादशसहस्रकत्वेन उभयोरप्यविरोधात् । तदुक्तम्– नक्षत्रमासगणितं त्रयोदशसहस्रकम् । ब्रह्मलोकसमं चक्रे समस्तं क्षितिमण्डलम् ।। रामो रामो राम इति सर्वेषामभत्तदा । सर्वो राममयो लोकः यदा रामस्त्वपालयत् ।।' इति स्कान्दे नवमतात्पर्ये [९.९.१७] । ग्रन्थान्तरे चान्द्रादिरुक्तः– दर्शावधिं मासमुशन्ति चान्द्रं सौरं तथा भास्करराशिचारात् । त्रिंशद्दिनं सावनसञ्ज्ञमाहुर्नक्षत्रमिन्दोर्भगणक्रमेण ।।' इति । 'दर्शान्तः पौर्णमासान्ता वै' इत्युक्तत्वात् चान्द्रो द्विविधः । दर्शावधिः पौर्णमासावधिश्चेति । सौरस्त्रिविधः । 'चैत्राद्या अथ मीनाद्या मेषाद्या वा विवस्वतः' इत्युक्तत्वात् सौरादिभेदेन त्रिविधश्चैत्रादिः ।।१६।।

**प्रमाणसंग्रह– ।। एवं त्रयोदशसहस्रमिति ।।** 'नक्षत्रमानगणितं त्रयोदशसहस्रकम् । ब्रह्मलोकसमश्चक्रे समस्तक्षितिमण्डलम् ।।' इति नवमतात्पर्ये । सौरमाने तु– दशवर्षसहस्राणि दशवर्षशतानि च । रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ।।' इति रामायणे ।।१६।।

**कण्टकोद्धार–** एवं त्रयोदशसहस्रं रामो भूमण्डले स्थित इति उच्यते । रामायणे 'दशवर्षसहस्राणि दशवर्षशतानि च' इति एकादशवर्षसहस्रं भूमण्डलवासश्चोच्यते । अत्र समाधानं भागवते नवमतात्पर्ये उक्तम्– नाक्षत्रमानेन एकादशसहस्रस्य त्रयोदशवर्षाणि भवतीति तावदब्दं भूमण्डले श्रीरामो स्थितवानिति परिहारो उच्यते । एकादशे कृष्णप्रार्थनकथायां रावणकुम्भकर्णौ त्वया त्वदीयप्रतिहारौ द्वारपालकौ इति श्लोकम् । तयो..दैत्यौ तद्भिन्नौ । तदुक्तं भागवते– त्रय इमे रिपवो यत्र इति द्वित्वावच्छिन्न...*त्रय इति तदर्थो बोध्यः ।।१६ ।।

।। इति चक्रपाणिश्रीनिवासाचार्यविरचिते कण्टकोद्धारे नवमोध्यायः ।।

**देव्यां स चाजनयदिन्द्रहुताशनौ द्वौ पुत्रौ यमौ [1]कुशलवौ बलिनौ गुणाढ्यौ ।**
**शत्रुघ्नतो[2] लवणमुल्बणबाणदग्धं कृत्वा चकार मधुरां पुरमुग्रवीर्यः ।।१७।।**

१. 'अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ । कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ।। अङ्गदश्चक्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ । तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ।। सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ।।' इति भागवते ९.९.११-१३।

कुशमुष्टिमुपादाय लवं चैव तु स द्विजः । वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम् ।। उ.का. ६६.६ [भागवतटिप्पण्यां वंशीधर श्लोकमिमं एवं व्याचख्यौ] कुशानामग्रभागस्तु कुशमुष्टिरिहोच्यते । अधोभागः ...

**व्यासतीर्थीया–** शत्रुघ्नतः शत्रुघ्नेन । लवणं लवणासुरम् ।।१७।।

**वेदाङ्गतीर्थीया–** शत्रुघ्नतः शत्रुघ्नेन । लवणं लवणासुरम् ।।१७।।

**वादिराजीया–** 'साक्षात्कुशलवच्छन्नेन्द्राग्नितातः'[१] इति वासुदेवसहस्रनामस्तोत्रे [पद्म.उ.खं.७१.२३४] रामनामासु पाठात् इन्द्रहुताशनौ द्वौ पुत्रावित्युक्तम् ।।१७।।

**मधुसूदनीया– ।। देव्यां स चाजनयदिति ।।** नन्विन्द्रहुताशनावेव किमर्थं पुत्रत्वेनाजनयदन्येषां सुराणां सत्वादिति चेत्सत्यम् । इन्द्रेण सीताकृतिप्रवेशपरमान्नदानादिना हुताशनेन प्रतिकृतिसर्जनादिना सीतायाः बहुसेवायाः कृतत्वात् । तदर्थं तावेव पुत्रत्वेनाऽजनयत् । एवं त्रिजटामपि सीतासेवाकारित्वात् कृष्णाऽवतारे स्वस्वसारं सुभद्रां कृतवानिति भावः ।।१७।।

**वरदराजीया–** स च रामो देव्यां सीतायां इन्द्रहुताशनौ इन्द्राग्नी, पूर्वमिति शेषः । यमौ यमजौ युगपदुत्पन्नाविति भावः । बलिनौ बलवन्तौ गुणैरगण्यौ श्रेष्ठौ कुशलवौ कुशलवनामानौ पुत्रावजनयत् जनयामास । उग्रं दुष्टभयङ्करं वीर्यं यस्य स रामः शत्रुघ्नात् लवणं लवणनामकं असुरं उल्बणेन भयङ्करेण स्वदत्तेन बाणेन दग्धं कृत्वा तस्मिन् प्रदेशे मधुरां पुरं पुरीं चकार कारयामास ।।१७।।

**जनार्दनीया–** स रामः देव्यां सीतादेव्याम् । यमौ एकस्यां एकसमयोत्पन्नावित्यर्थः । नाम्ना कुशलवौ द्वौ पुत्रौ अजनयत् । तौ पूर्वं इन्द्रहुताशनौ । उग्रं सोढुमशक्यमित्यर्थः । वीर्यं पराक्रमो यस्य स तथा । रामः शत्रुघ्नतः शत्रुघ्नेन लवणं लवणासुरं उल्बणेन क्रूरेण बाणेन स्वहस्तगतबाणेन । स्वलोकगमनसमये 'शरं दधार तं करे' इत्यग्रे वक्ष्यते । दग्धं कृत्वा कारयित्वा लवणस्य मधुवनं मथुरापुरीं चकार कारयामास ।।१७।।

---

...कुशानां तु लवः प्रोक्तो मनीषिभिः ।। कुशमुष्ट्या मार्जितो यः स कुशः प्रोक्त आख्यया । लवेन मार्जितो यो वै स लवः परिकीर्तितः ।।

२. पुलोम्नस्तनयः श्रीमान् मधुर्नाम निशाचरः । **विनिकृष्य स्वकाच्छूलात् शूलं प्रादाद् वृषध्वजः ।। तपसा तोषितो यस्य सपुत्रस्य महात्मनः** । त्रैलोक्यविजयासक्ते तेन राजेन्द्र रावणे ।। दीक्षिते मेघनादे च तथा याते निकुम्भिलाम् । अन्तर्जलगते वीरे तथैव च विभीषणे ।। निद्रावशगते राजन् कुम्भकर्णे सुरद्विषि । मालिनस्तनया तेन रावणस्य स्वसा हृता ।। कुम्भीनसी महाभागा रूपद्रविणसंयुता । यस्यामस्य सुतो जज्ञे लवणो नाम राक्षसः ।। येन शूलप्रभावेण मान्धाता विनिपातितः । न तस्य पुत्रो भार्या वा बभूवातिदुरात्मनः ।। प्राणिनां पुरुषाद्यानां सहस्रैर्दशभिर्नृप । आहारमाह्निकं तस्य भवत्यौदरिकस्य तु ।। रामाज्ञया तस्य बभूव राजन् रामानुजो मृत्युरदीनसत्वः । शत्रुघ्ननामा भुवनस्य वीरो महान्तरस्थो हरिरप्रमेयः ।। इति वि.धर्मोत्तरे.१खं.२००अ । रामायणे.७.२५.१९-५२,७.६१.

१. 'इन्द्रादितात' इति अर्वाचीनपाठः ।

**अनन्तभट्टीया–** शत्रुघ्नतः शत्रुघ्नेन ।।१७।।

**चट्टी–** स श्रीरामः देव्यां सीतादेव्यां इन्द्रहुताशनौ इन्द्राग्नी यमौ एकस्यां युगपदुत्पन्नावित्यर्थः । वलिनौ बलवन्तौ गुणैरग्र्यौ श्रेष्ठौ कुशलवौ कुशलवनामानौ द्वौ पुत्रौ अजनयत् जनयामास । ननु इन्द्रहुताशनावेव किमर्थं पुत्रत्वेनाजनयत् । अन्येषां सुराणां सत्वादिति चेत् सत्यं इन्द्रेण सीताकृतिप्रवेशपरमान्नदानादिना हुताशनेन प्रतिकृतिसर्जनादिना सीतायाः बहुसेवाकृतत्वात् तदर्थं तावेव पुत्रत्वेनाजनयत् । अत एव त्रिजटामपि सीतासेवाकारित्वात् कृष्णावतारे स्वसारं सुभद्रां कृतवानिति भावः । उग्रं सोढुमशक्यं वीर्यं पराक्रमो यस्य स तथा । श्रीरामः शत्रुघ्नतः शत्रुघ्नेन लवणं लवणासुरं उल्बणेन क्रूरेण स्वदत्तवाणेन दग्धं कृत्वा कारयित्वा लवणस्य मधुवने मथुरापुरं चकार कारयामास ।।

**भारतश्री–** कृत्वा कारयित्वा विवाहमित्यादिवत् । तदुक्तं बृहद्भाष्ये– 'स्वातन्त्र्यस्नेहयोरन्तर्णीत-णिच्' इति हि सूत्रम्' इति [६.३] । रामस्य स्वातन्त्र्यात् कृत्वेत्युक्तम् । निजघानेत्यत्रापि तथा ।।१७।।

**अतिविशद–** देव्यां स चाजनयदिन्द्रहुताशनौ द्वौ इत्यत्र कुशलवयोः रामोत्पन्नत्वं प्रतीयते । कुत्रोत्पन्नौ इत्याकाङ्क्षायां पुर्यामेव नान्यत्र इति न निश्चयः । तस्य साधारणवचनत्वादिति संशये । [भा.९.९.८–११]

कदाचिल्लोकजिज्ञासुर्गूढो रात्रावलक्षितः । चरन् वचोऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित् ।।
नाहं बिभर्मि दुष्टां त्वां असतीं परवेश्मगाम् । स्त्रैणेति बिभृयात्सीतां रामो नाहं भजे पुनः ।।
इति लोकाद्बहुविधः दुराराध्यादसंविदः । श्रुत्वा भीतेन सा त्यक्ता प्राप्ता ऋष्याश्रमं तथा ।।
अन्तर्वत्न्या गता काले यमौ सा सुषुवे सुतौ । कुशो लव इति ख्यातौ तयोश्चक्रे क्रियां मुनिः ।।'

तथा– [भा.९.९.१५]'मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता । ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ।।' इत्यादिना भागवतवचनेन अरण्ये एव तयोर्जननमङ्गीकार्यम् । 'विवरं प्रविवेश ह' इत्यत्र प्राचेतसाश्रमगताया सीतायाः पुनः रामदर्शनाभावः प्रतीयते । तत्तु वाल्मीकीरामायाणविरुद्धम् । तत्र रामपुरत एव भूविवरप्रवेशश्रवणात् । यथोक्तं वाल्मीकीरामायणे– [उ.का.९७.१३-१४,१७]

सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी । अब्रवीत् प्राञ्जलिर्वाक्यं अधोदृष्टिरवाङ्मुखी ।।
यथाऽहं राघवादन्यं मनसाऽपि न चिन्तये । तथा मे माधवी देवी विवरं दातुमर्हति ।।
तथा शपन्त्यां वैदेह्यां प्रादुरासीन्महाद्भुतम् । भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ।।
इत्यादि ।।१७–७०।।

**कोटित्रयं[१] स निजघान तथाऽसुराणां गन्धर्वजन्म भरतेन सतां च धर्मम् ।**
**संशिक्षयन्नयजदुत्तमकल्पकैः[२] स्वं यज्ञैर्भवाजमुखसत्सचिवाश्च यत्र ॥१८॥**

**व्यासतीर्थीया–** उत्तमकल्पकैः उत्तमप्रकारैः ॥१८–२०॥

**वेदाङ्गतीर्थीया–** गन्धर्वजन्म गन्धर्वात् जन्म यस्य कोटित्रयस्य तत् कोटित्रयम् । स्वमयजदिति सम्बन्धः । यत्र यज्ञेषु ॥१८–२०॥

**वादिराजीया–** कोटित्रयमित्यत्र तथा लवणवधवत् । गन्धर्व जन्म गन्धर्वेषु जन्म यस्य तत् गन्धर्वजन्म असुराणां कोटित्रयं भरतेन निमित्तेन जघान । भरतस्य कीर्तिदानाय तस्य हृदिस्थितस्सन् जघानेत्यर्थः । उत्तमः कल्पः कल्पना येषां तैः यज्ञैः अयजतेति योजना । भवाजमुखाः भवाजौ मुखौ क्रमेण मुख्यौ प्रधानौ येषां ते भवाजमुखाः । 'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः' [आश्वमेधिक. ११८.३८] इति वचनात् इन्द्रादिदेवानामाहत्य मुख्यो भवः तस्यापि मुख्यत्वात् परम्परया मुख्योऽज इति भावेन व्युत्क्रमेण कीर्तनम् । सचिवाः सम्यक्साचिव्यकर्तार इत्यर्थः । यद्वा भवाजयोरपि मुखाः मुख्याः श्रीभूदुर्गा एव सचिवाः सम्यक्साचिव्यकर्त्र्यः, परिवेषयन्त्य इति यावत् ॥१८–२१॥

**वरदराजीया–** तथा गन्धर्वात् जन्म यस्य तत् । असुराणां कोटित्रयं भरतेन जघान घातयामास । सतां सज्जनानां धर्मं संशिक्षयन् स्वं स्वात्मानमेवोत्तमकल्पकैः मुख्यप्रयोगयुक्तैः यज्ञैः अयजत् । कीदृशैर्यज्ञैः यत्र यज्ञेषु भवाब्जजमुखा रुद्रचतुर्मुखाद्याः सन्तः सचिवाः परिचारकास्तैरित्यर्थः ॥१८॥

**जनार्दनीया–** स रामः । गन्धर्वेषु जन्म यस्य तत्तथा । गन्धर्वजातमित्यर्थः । महासुराणां कोटीनां त्रयं भरतेन निजघान घातयामास । सतां धर्मं संशिक्षयन् उत्तमकल्पकैः मुख्यप्रयोगवद्भिः संपूर्णदक्षिणाद्यैः संयुतैरित्यर्थः । यज्ञैः स्वं स्वात्मानमयजत् । यत्र यज्ञेषु । भवो रुद्रः अजो ब्रह्मा भवाजौ तौ मुखौ आद्यौ येषां ते तथा । त एव सत्सचिवाः समीचीनपरिचारकाः सन्तः । सज्जनाः सचिवा इति वा ॥

**अनन्तभट्टीया–** जघान घातयामास । उत्तमकल्पकैः । मुख्यकल्पवद्भिः । सचिवाः परिचारकाः ॥

**ताम्रपर्णीया–** ॥ **गन्धर्वजन्म** ॥ शैलूषाख्याद् गन्धर्वाज्जन्म यस्य तद् गन्धर्वजन्मा । 'शैलूषाख्यस्य दुःशीला गन्धर्वस्याभवन् सुता' [उ.का. ५.८] इति संग्रहरामायणे ॥१८॥

---

१. 'पितामहवरोद्रेकात् अवध्यं देवतागणैः । हतवानसि शैलूशं देवब्राह्मणकण्टकम् ॥' इति विष्णुधर्मोत्तरे. प्र.खं.२६७.५० । 'देवब्राह्मकण्टकम्' इत्यनेन तेषामासुरभावं व्यज्यते । स्वभावतः असुरत्वादेव तत्स्वरूपे सर्वथाबलाद्यभावात् वरादिभिरेव तेषां बलादिसद्भावमाह- पितामहवरोद्रेकादिति ॥

२. 'भगवानात्मनात्मानं राम उत्तमकल्पकैः । सर्वदेवमयं देवमीज आचार्यवान् मखैः ॥' इति भागवते ९.९.१ । 'वासुदेवं स्वमात्मानं अश्वमेधैरथायजत् । सर्वदानानि स ददौ पालयामास स प्रजाः' इत्यग्निपुराणे.१०.३३.

**चट्टी–** स श्रीरामः तथा लवणवधवत् शत्रुघ्नेन यथा लवणासुरं जघान तथा भरतेन गन्धर्वान् जघान । गन्धर्वात् जन्म यस्य तत्तथा । असुराणां कोटित्रयं भरतेन जघान घातयामास । सतां सज्जनानां धर्मं संशिक्षयन् उत्तमकल्पकैः मुख्यप्रयोगवद्भिः संपूर्णदक्षिणाद्यैः संयुतैरित्यर्थः । यज्ञैः स्वं स्वात्मानमयजत् । यत्र यज्ञेषु भवाजमुखाः रुद्रचतुर्मुखाद्याः सत् सचिवाः समीचीनपरिचारकाः सन्तः सज्जनाः सचिवा इति वा ।।१८।।

**गूढवाक्यार्थ–** गन्धर्वजन्म गन्धर्वात् शैलूषाख्यात् जन्म यस्य तत् गन्धर्वजन्म । असुराणां कोटित्रयं भरतेन निमित्तेन जघान । तदुक्तम्– 'शैलूषाख्यस्य दुःशीला गन्धर्वस्याभवन् सुताः' इति संग्रहे [७.५.८] । सचिवाः परिचारकाः ।।१८।।

**अथ [१]शूद्रतपश्चर्यानिहतं विप्रपुत्रकम् ।**
**उज्जीवयामास विभुर्हत्वा तं शूद्रतापसम् ।।१९।।**

**मधुसूदनीया–** ।। **अथ शूद्रेति** ।। शूद्रहननपर्यन्तं बालकस्य शरीरं किं कृतवानित्येतच्छङ्कानिरासस्तु 'बालस्य च शवं शीघ्रं तैलद्रोण्यां निधापय' इत्यादि रामायणवाक्येन [उ.का.७५-२] कर्तव्यः ।।

**वरदराजीया–** अथानन्तरं स विभुः रामः शूद्रस्य तपश्चर्यया निमित्तभूतया निहतं विप्रस्य कस्यचित् ब्राह्मणस्य पुत्रकं बालकं तं शूद्ररूपं तापसं तपश्चरन्तं हत्वा उज्जीवयामास ।।१९।।

**जनार्दनीया–** अथ यज्ञानन्तरं शूद्रस्य तपश्चर्यान्निहतं मृतं विप्रपुत्रकम् । शूद्रतपश्चरणं दोषसाधनं तस्मात् मृतमिति भावः । तं शूद्रतापसं शूद्रतपस्विनं हत्वा उज्जीवयामास ।।१९।।

**अनन्तभट्टीया–** निहतं शूद्रतपश्चरणा...*अन्यायप्रवृत्त्या मृतम् ।।१९–२१।।

**चट्टी–** अथ अनन्तरं शूद्रस्य तपश्चर्यया निमित्तभूतया निहतं विप्रस्य कस्यचिद् ब्राह्मणस्य पुत्रकं शूद्रतपश्चरणं दोषसाधनं तस्मान् मृतमिति भावः । तं शूद्रतापसं शूद्रतपस्विनं हत्वा उज्जीवयामास । शूद्रहननपर्यन्तं बालकस्य शरीरं किं कृतवानित्येतच्छङ्कानिरासस्तु 'बालस्य च शवं शीघ्रं तैलद्रोण्यां निधापय' इत्यादि रामायणवाक्येन [उ.का.७५.२] कर्तव्यः ।।१९।।

---

१. 'देवत्वं प्रार्थये राम स्वशरीरेण सुव्रत । न मिथ्याहं वदे भूप देवलोकजिगीशया ।। शूद्रं मां विद्धि काकुत्स्थ शम्बूकं नाम नामतः ।।...पुष्पवृष्टिश्च महती देवानां सुसुगन्धिनी ।। आकाशाद्विप्रमुक्ता तु राघवं सर्वतोऽकिरत् । सुप्रीताश्चाब्रुवन् देवा रामं वाक्यविदां वरम् ।। सुरकार्यमिदं सौम्य कृतं ते रघुनन्दन ।।' इत्यादि पाद्मे.सृ.खं. ३५.८४-८९ ।।

**जङ्गनामाऽसुरः पूर्वं गिरिजावरदानतः ।**
**बभूव शूद्रः कल्पायुः स लोकक्षयकाम्यया ।**
**तपश्चचार दुर्बुद्धिरिच्छन् माहेश्वरं पदम् ॥२०॥**

**वरदराजीया–** तद्धनने हेतुमाह– जङ्गेति ॥ पूर्वं जङ्गेति नामा असुरो गिरिजायाः पार्वत्या वरदानतो वरदानात् कल्पायुः शूद्रो बभूव । स शूद्रो लोकस्य क्षयकाम्यया नाशेच्छया । माहेश्वरं महेश्वरस्य रुद्रस्य विद्यमानं पदं इच्छन् दुर्बुद्धिः कुबुद्धिः तपश्चकार ॥२०॥

**जनार्दनीया–** स पूर्वं क इत्यत आह– **जङ्गेति** ॥ यः पूर्वं जङ्गनामा असुरः स गिरिजावरदानतः कल्पायुः । लोकस्य जगतः क्षयो नाशः तस्य काम्यया इच्छया शूद्रो बभूव । शूद्रतपश्चर्याख्यान्यायप्रवृत्त्या लोकक्षयः स्यादिति बुद्ध्या शूद्रो बभूवेति भावः । तपश्चरणे निमित्तान्तरमाह– **तप इति** ॥ माहेश्वरं रुद्रसम्बन्धि पदं स्थानम् । पार्वतीभर्तृत्वमिति भावः । इच्छन् तपश्चचार । अतः दुर्बुद्धिः ॥

**ताम्रपर्णीया–** ॥ **लोकक्षयकाम्ययेति** ॥ महेश्वरस्य लोकसंहर्तृत्वं श्रुत्वा लोकक्षयकाम्यया महेश्वरं पदं इच्छन्नित्यर्थः ॥२०–२२॥

**चट्टी–** स पूर्वं क इत्यत आह– **जङ्गेति** ॥ यः पूर्वं जङ्गनामा असुरः गिरिजायाः पार्वत्याः वरदानतः वरदानात् कल्पायुः लोकस्य जगतः क्षयो नाशः तस्य काम्यया इच्छया शूद्रो बभूव । शूद्रतपश्चर्याख्यान्यायप्रवृत्त्या लोकक्षयः स्यादिति बुद्ध्या शूद्रो बभूवेति भावः । तपश्चरणे निमित्तान्तरमाह– **तप इति** ॥ माहेश्वरं रुद्रसम्बन्धि पदं स्थानं पार्वतीभर्तृत्वमिति भावः । इच्छन् तपश्चचार । तस्माद्वरदानतः अनन्यवध्यं पुरुषोत्तमः श्रीरामः जघानेति वा ॥२०॥

**गूढवाक्यार्थ–** ॥ **लोकक्षयकाम्ययेति** ॥ महेश्वरस्य लोकसंहर्तृत्वात् स्वयमपि लोकसंहारकाम्यया माहेश्वरं पदमिच्छतीत्यर्थः ॥२०॥

**अनन्यवध्यं तं तस्माज्जघान पुरुषोत्तमः ।**
**श्वेतदत्तां तथा मालामगस्त्यादाप राघवः ॥२१॥**

**व्यासतीर्थीया–** तस्मात् अयोग्यमाहेश्वरपदेच्छया तपःकर्तृत्वात् ॥२१-३२॥

**वेदाङ्गतीर्थीया–** तस्मात् गिरिजावरदानतः अनन्यवध्यम् ॥२१॥

**मधुसूदनीया–** ।। **श्वेतदत्तामिति** ।। राघवः यथा पूर्वं अगस्त्याच्छार्ङ्गमवाप तथा श्वेतदत्तां श्वेतेन राज्ञा दत्तां मालामाभरणविशेषं अगस्त्यादापेत्यन्वयः । तथाचोक्तम्– 'इह चाभरणं सौम्यं सुकृतं विश्वकर्मणा । प्रतिगृह्णीष्व काकुत्स्थ मत्प्रियं कुरु राधव ।।' इत्यादि रामायणे [उ.का.७६.३०–३१] ।।

**वरदराजीया–** तस्मात् कारणात् अनन्यवध्यं स्वव्यतिरेकेणान्येनावध्यं पुरुषोत्तमो जघान । तथाशब्दः समुच्चये । राघवो रामः श्वेतेन राज्ञा दत्तां अगस्त्यहस्ते दत्तां मालां अगस्त्यादाप प्राप ।।२१।।

**जनार्दनीया–** तस्माद्वरदानतः अनन्यवध्यं तं शूद्रं जघान । तस्मादयोग्यकर्मकर्तृत्वात् जघानेति वा । अत्र तथाशब्दः क्रियान्तरसमुच्चयार्थः ।।२१।।

**चट्टी–** राघवः यथा पूर्वं अगस्त्यात् शार्ङ्गमाप तथा श्वेतदत्तां श्वेतेन राज्ञा दत्तां मालां आभरणविशेषं अगस्त्यादाप इत्यन्वयः । तथाचोक्तम्– 'इह चाभरणं सौम्यं सुकृतं विश्वकर्मणा । प्रतिगृह्णीष्व काकुत्स्थ मत्प्रियं कुरु राघव ।।' इत्यादि रामायणे [उ.का.७६.३०–३१] ।।२१।।

**प्रमाणसंग्रह–** ।। **श्वेतदत्तां तथा मालामिति** ।। 'इह चाभरणं सौम्यं सुकृतं विश्वकर्मणा । प्रतिगृह्णीष्व काकुत्स्थ मत्प्रियं कुरु राघव ।। तच्छवं भक्षयामास सर्वं हि रघुनन्दन । ततो भुक्त्वा यथा कामं मांसं वहुसुपीवरम् ।। अवतीर्य सरः स्वर्गी स स्प्रष्टुमुपचक्रमे । अथाहमब्रुवं वाक्यं तमेनं पुरुषोत्तम ।। को भवान् देवसङ्काश आहारश्च विगर्हितः । त्वयेवं भुज्यते सौम्य किमर्थं वक्तुमर्हसि ।। आश्चर्यमीदृशो भावः भास्वरो देवसम्मितः । आहारो गर्हितः सौम्य श्रोतुमिच्छामि तत्वतः ।। नाहमौपयिकं मन्ये तव भोज्यमिमं शवम् ।। [उ.का.७७.१५-२०] श्रुत्वा तु भाषितं वाक्यं मत्तो राम शुभाक्षरम् । प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ।। शृणु ब्रह्मन् यथावृत्तं ममैतत्सुखदुःखयोः । दुरतिक्रमणं यं हि यथा पृच्छसि मां द्विज ।। पुरा वैदर्भको नाम पिता मम महायशाः । सुदेव इति विख्यातः त्रिषु लोकेषु वीर्यवान् ।। तस्य पुत्रद्वयं ब्रह्मन् द्वाभ्यां स्त्रीभ्यामजायत । अहं श्वेत इति ख्यातो यवीयान् सुरथोऽभवत् ।। ततः पितर्युपरते पौरा मामभ्यषिञ्चयन् ।। [उ.का.७८.१-५] ततो मां स्वर्गसंस्थं वै क्षुत्पिपासे द्विजोत्तम । अवाधेतां भृशं चाहमभवं व्यथितेन्द्रियः ।। तत्र त्रिभुवनश्रेष्ठमवोचन्त पितामहम् । आहारः कश्च मे ब्रूहि तन्मे ब्रूहि पितामह ।। पितामहश्च मामाह तदाहारस्सुदेवज । स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः ।। अपि चेद्वैक्षमाणाय भिक्षा वै याचते पुरा । न हि दत्ता त्वयेन्द्राय महातिथयेऽपि वै ।। दत्ता न तस्मिन् सूक्ष्मापि तप एव निषेवसे । तेन स्वर्गगतो वत्स क्षुत्पिपासावशो ह्यसि ।। स त्वं सुपुष्टमाहारः स्वशरीरमनुत्तमम् । यदा तु तद्वनं श्वेत अगस्त्यस्सुमहानृषिः ।। आगमिष्यति दुर्धर्षः ततः कृच्छ्रात् विमोक्ष्यसे । सोऽहं भगवतः श्रुत्वा देवदेवस्य भाषितम् ।। भुञ्जे बीभत्समाहारं स्वशरीरमनुत्तमम् । अधमे न गतिर्ह्यत्र कुम्भयोनिमृते द्विजम् ।। इदमाभरणं सौम्य तारणार्थं द्विजोत्तम । प्रतिगृहीष्व भद्रं ते

प्रसादं कर्तुमर्हसि ।। तस्याहं वज्रिणो वाक्यं श्रुत्वा दुःखसमन्वितम् । तारणायोपजगृहे तदाभरणमुत्तमम् ।। ततो गृहीते तु मयि तस्मिन्नाभरणे शुभे । मानुषः पूर्वको देहो राजर्षेस्स ननाश ह ।। प्रणष्टे तु शरीरेऽसौ राजर्षिः परमया मुदा । तृप्तः प्रमुदितो राजा जगाम त्रिदिवं सुखम् ।। श्वेतो वैदर्भको राजा तदाभूत् गतकल्मषः ।।' इत्यादिना [उ.का.७८.११-२८] ।।२१।।

**अनन्नयज्ञकृच्छ्वेतो राजा क्षुद्विनिवर्तनम् ।**
**कुर्वन् स्वमांसैर्धात्रोक्तो मालां रामार्थमर्पयत् ।**
**अगस्त्याय न साक्षात्तु रामे दद्यादयं नृपः ।।२२।।**

**वेदाङ्गतीर्थीया–** तथाशब्दः क्रियान्तरसमुच्चायकः । अनन्नयज्ञकृत् अन्नदानरहितयज्ञकृत् श्वेतो राजा परलोके स्वमांसैः क्षुद्विनिवर्तनं कुर्वन् सुखेन क्षुद्विनिवर्तनोपायं पृष्टेन धात्रा रामार्थं मालामगस्त्याय देहीत्युक्तः रामार्थं रामाय दातुं मालामगस्त्यायार्पयत् । मालामगस्त्यव्यवधानेन रामाय दातुमुपदिशतो धातुरभिप्रायमाह– **न साक्षादित्यादिना** ।।२२-२६।।

**वादिराजीया–** श्वेतदत्तां तथा मालामित्यत्र स्वमांसैः क्षुद्विनिवर्तनं कुर्वन् श्वेतो राजा श्वेताख्यो राजा मम क्षुदभावः केन स्यादिति ब्रह्माणं प्रति पृष्टे सति मृतसञ्जीवनस्य स्पर्शवदस्याः मालायाः सकृत्स्पर्शमात्रेण तव क्षुद्विनिवर्तनं भविष्यति तदुपरीमां मालां रामार्थमगस्त्यकरे दिशेति धात्रोक्तस्सन् रामार्थमगस्त्याय तां मालामर्पयत् । अयं नृपः साक्षाद्रामे न दद्यात् । कुतो न दद्यादित्यत उक्तं साक्षाद्राघवेऽर्पितमिदं माल्यं क्षुदभावमात्रफलदं न । सत्पात्रदानमहिम्ना ततोऽधिकफलदमपि स्यात् । अस्तु को दोष इत्यत उक्तं असौ नृपः क्षुदभावमात्रमाकाङ्क्षन् मां परिपृच्छति ततोऽधिकफलमाकाङ्क्षन् नेति । काम्यफलार्थिनश्च काम्यफलमेव दातव्यं नतु कृपयापि तस्य भोगाधिक्यं देयम् । ऐहिककामनाया दोषत्वेन कृपाप्रतिबन्धकत्वात् । ततः कारणात् व्यवधानत एव श्वेतो रामे दद्यात् नतु साक्षादिति प्रभुर्ब्रह्मा मत्वा मालां कुम्भयोनये दातुमदिशदिति योजना ।।२२-२६।।

**मधुसूदनीया–** ।। **अनन्नयज्ञकृदिति** ।। अन्नदानाभावे ज्योतिष्टोमादियज्ञस्यैवायोगात् । अनन्नयज्ञकृदित्यस्य अन्नदानमकृत्यैव ज्योतिष्टोमादियज्ञकृदिति नार्थः । किन्तु अनन्नयज्ञकृत् अनन्नः अन्नदानात्मकद्रव्ययज्ञभिन्नो यज्ञस्तपोयज्ञः तमेव करोतीति । गृहस्थस्यान्नदानस्य विहितत्वात् । एतेन यतयेऽपि भिक्षामात्रमप्यदत्त्वैव केवलं तप एव कृतमिति भावः । स्वमांसैः पूर्वजन्मनि यच्छरीरं स्वेन त्यक्तं तस्य स्वस्य स्वकीयस्य शरीरस्य मांसैरित्यर्थः । तथाचोक्तम्–

तच्छवं भक्षयामास सर्वं हि रघुनन्दन । ततो भुक्त्वा यथा कामं मांसं बहुसुपीवरम् ।।
अवतीर्य सरः स्वर्गी स स्प्रष्टुमुपचक्रमे । अथाहमब्रुवं वाक्यं तमेनं पुरुषोत्तम ।।
को भवान् देवसङ्काश आहारश्च विगर्हितः । त्वयेवं भुज्यते सौम्य किमर्थं वक्तुमर्हसि ।।
आश्चर्यमीदृशो भावः भास्वरो देवसम्मितः । आहारो गर्हितः सौम्य श्रोतुमिच्छामि तत्वतः ।।
नाहमौपयिकं मन्ये तव भोज्यमिमं शवम् ।। [उ.का.७७.१५-२०]
श्रुत्वा तु भाषितं वाक्यं मत्तो राम शुभाक्षरम् । प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ।।
शृणु ब्रह्मन् यथावृत्तं ममैतत्सुखदुःखयोः । दुरतिक्रमणं यं हि यथा पृच्छसि मां द्विज ।।
पुरा वैदर्भको नाम पिता मम महायशाः । सुदेव इति विख्यातः त्रिषु लोकेषु वीर्यवान् ।।
तस्य पुत्रद्वयं ब्रह्मन् द्वाभ्यां स्त्रीभ्यामजायत । अहं श्वेत इति ख्यातो यवीयान् सुरथोऽभवत् ।।
ततः पितर्युपरते पौरा मामभ्यषिञ्चयन् ।। [उ.का.७८.१-५]
ततो मां स्वर्गसंस्थं वै क्षुत्पिपासे द्विजोत्तम । अबाधेतां भृशं चाहमभवं व्यथितेन्द्रियः ।।
तत्र त्रिभुवनश्रेष्ठमवोचन्त पितामहम् । आहारः कश्च मे ब्रूहि तन्मे ब्रूहि पितामह ।।
पितामहश्च मामाह तदाहारस्सुदेवजम् । स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः ।।
अपि चेद्भैक्षमाणाय भिक्षा वै याचते पुरा । न हि दत्ता त्वयेन्द्राय महातिथयेऽपि वै ।।
दत्ता न तस्मिन् सूक्ष्मापि तप एव निषेवसे । तेन स्वर्गगतो वत्स क्षुत्पिपासावशो ह्यसि ।।
स त्वं सुपुष्टमाहारः स्वशरीरमनुत्तमम् । यदा तु तद्वनं श्वेत अगस्त्यस्सुमहानृषिः ।।
आगमिष्यति दुर्धर्षः ततः कृच्छ्रात् विमोक्ष्यसे । सोऽहं भगवतः श्रुत्वा देवदेवस्य भाषितम् ।।
भुञ्जे बीभत्समाहारं स्वशरीरमनुत्तमम् । अधमे न गतिर्ह्यत्र कुम्भयोनिमृते द्विजम् ।।
इदमाभरणं सौम्य तारणार्थं द्विजोत्तम । प्रतिगृहीष्व भद्रं ते प्रसादं कर्तुमर्हसि ।।
तस्याहं वज्रिणो वाक्यं श्रुत्वा दुःखसमन्वितम् । तारणायोपजगृहे तदाभरणमुत्तमम् ।।
ततो गृहीते तु मयि तस्मिन्नाभरणे शुभे । मानुषः पूर्वको देहो राजर्षेस्स ननाश ह ।।
प्रणष्टे तु शरीरेऽसौ राजर्षिः परमया मुदा । तृप्तः प्रमुदितो राजा जगाम त्रिदिवं सुखम् ।।
श्वेतो वैदर्भको राजा तदाभूत् गतकल्मषः ।।' इत्यादि रामायणे [उ.का.७८.११-२८] ।

तथाचेत्थं योजना । अनन्नयज्ञकृच्छ्वेतो राजा धात्रोक्तो भूमावागत्य स्वमांसैः पूर्वजन्मत्यक्तस्वशरीरमांसैः क्षुद्विनिवर्तनं कुर्वन् धात्रोक्तो रामार्थं अगस्त्याय मालामर्पयदिति सम्बन्धः । वेदाङ्गतीर्थास्तु 'अनन्नयज्ञकृच्छ्वेतो राजा परलोके स्वमांसैः क्षुद्विनिवर्तनं कुर्वन्' इत्याचक्षते । तन्न । उक्तप्रमाणविरोधात् ।।

**वरदराजीया–** श्वेतेन मालादाने निमित्तमाह– **अनन्नेति** ।। न विद्यते अन्नं यत्रासौ अनन्नः तादृशं यज्ञं करोतीति तथोक्तः । यज्ञाङ्गब्राह्मणभोजनरहितयज्ञकर्तेत्यर्थः । एवम्भूतः श्वेतो राजा तेनापराधेन परलोके स्वमांसेन क्षुद्विनिवर्तनं क्षुत्परिहारं कुर्वन् ममान्नेन क्षुत्परिहारः कथं स्यादिति तुष्टेन धात्रा

रामाय मालां समर्पयेत्युक्तो राजा रामार्थं मालामगस्त्यहस्ते अर्पयत् दत्तवान् । अगस्त्यद्वारा मालां रामाय समर्पयेदिति वदतो ब्रह्मणोऽभिप्रायमाह– **न साक्षादित्यादिना** ।। अयं नृपः श्वेतो रामे रामार्थं साक्षादव्यवधानेन मालां न दद्यात् ।।२२।।

**जनार्दनीया–** राघवः श्वेतेन श्वेतराजेन दत्तां रामार्थं अगस्त्यहस्ते मालां अगस्त्यादाप । श्वेतः किमर्थं मालामदादित्यत आह– **अनन्नेति** ।। न विद्यते अन्नं अन्नदानं यस्मिन्नसौ तथा । स चासौ यज्ञश्च । तं करोतीति तथा । श्वेतो राजा स्वमांसैः क्षुधः विनिवर्तनं परिहारं कुर्वन् सन् क्षुन्निवृत्त्युपायं पृष्टेनेति वाक्यशेषः । धात्रा ब्रह्मणा रामार्थे अगस्त्याय मालां देहीत्युक्तः श्वेतः रामार्थं मालां अगस्त्याय अर्पयदित्यावृत्त्या योज्यम् ।।२२।।

**अनन्तभट्टीया–** अनन्नयज्ञकृत् अकृतयज्ञाङ्गविप्रभोजनः । अगस्त्याय अगस्त्य हस्त इत्यर्थः । ...* । कुम्भयोनये अगस्त्याय । स्वमांसैरिति भूम्यां विद्यमानपूर्वदेहस्थितस्वमांसैरित्यर्थः । तस्य अमृतसम्बन्धात् अशुचित्वादिकं नास्तीति ज्ञातव्यम् ।।२२-२६।।

**ताम्रपर्णीया–** ।। **स्वमांसैरिति** ।। स्वर्गं गतः श्वेतः कस्मिंचित् सरसि विद्यमानपूर्वस्वदेहमांसतः क्षुद्विनिवर्तनं कुर्वन्नित्यर्थः । न तु स्वर्गस्थतेजोमयशरीरमांसत इति भ्रमितव्यं । तदुक्तं उत्तररामायणे ।

अथापश्यं शवं तत्र सुमृष्टमजरं क्वचित् । तिष्ठन्तं परया लक्ष्म्यास्तस्मिन्तोयाशये नृप ।
अथापश्यन्मुहूर्तात्तु दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम् ।
स च सिंहासनं हित्वा मेरुकूटमिवांशुमान् । पश्यतो मे महाराजो विमानादवरुह्य च ।
तं शवं भक्ष्यामास सर्वं हि रघुनन्दन । ततो भुक्त्वा यथाकामं मांसं बहु च सुष्ठु च ।।'

[उ.का.७७.८–१६] इत्यादि । शवशरीरस्य बहुकालमवस्थानं प्रतिदिनं समग्रभक्षणेऽपि पुनरभिवृद्धिस्तर्पकत्वं च हिरण्यगर्भवरादिति ज्ञेयम् । तदप्युक्तं रामायणे । 'स्वशरीरं त्वयोच्छिष्टं कुर्वता तप उत्तमम्' 'भक्षयित्वामृतरसं तेन तृप्तिर्भविष्यतीति' 'मानुषः पूर्वको देहो राजर्षे स ननाश ह' [उ.का ७८.१५.१७.२७] इति च ।।२२-३०।।

**चट्टी–** ।। **अनन्नयज्ञकृदिति** ।। अन्नदानाभावे ज्योतिष्टोमादियज्ञस्यैवायोगात् अनन्नयज्ञकृदित्यस्य अन्नदानमकृत्वैव ज्योतिष्टोमादियज्ञकृदिति नार्थः । किन्तु अनन्नयज्ञकृत् अनन्नः अन्नदानात्मकयज्ञभिन्नो यज्ञस्तपोयज्ञः तमेव करोतीति । गृहस्थस्यान्नदानस्य विहितत्वात् । एतेन यतयेऽपि भिक्षामात्रमन्नमप्यदत्वैव केवलं तप एव कृतमिति भावः । स्वमांसैः पूर्वजन्मनि यच्छरीरं स्वेन त्यक्तं तस्य स्वस्य स्वकीयस्य शरीरस्य मांसैरित्यर्थः । तथाचोक्तम्– तच्छवं भक्षयामास सर्वं हि रघुनन्दन । ततो भुक्त्वा यथा कामं मांसं वहुसुपीवरम् ।। अवतीर्य सरः स्वर्गी स स्प्रष्टुमुपचक्रमे । अथाहमब्रुवं वाक्यं तमेनं

पुरुषोत्तम ।। को भवान् देवसङ्काश आहारश्च विगर्हितः । त्वयेवं भुज्यते सौम्य किमर्थं वक्तुमर्हसि ।। आश्चर्यमीदृशो भावः भास्वरो देवसम्मितः । आहारो गर्हितः सौम्य श्रोतुमिच्छामि तत्वतः ।। नाहमौपयिकं मन्ये तव भोज्यमिमं शवम् ।। [उ.का.७७.१९-२०] । श्रुत्वा तु भाषितं वाक्यं मत्तो राम शुभाक्षरम् । प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ।। शृणु ब्रह्मन् यथावृत्तं ममैतत्सुखदुःखयोः । दुरतिक्रमणं यं हि यथा पृच्छसि मां द्विज ।। इत्यादि रामायणे । तथाचेत्थं योजना । अनन्नयज्ञकृच्छ्वेतो राजा धात्रोक्तो भूमावागत्य स्वमांसैः पूर्वजन्मत्यक्तस्वशरीरमांसैः क्षुद्विनिवर्तनं कुर्वन् धात्रोक्तो रामार्थं अगस्त्याय मालामर्पयदिति । अगस्त्यव्यवधानादेहीति वदतो ब्रह्मणः अभिप्रायमाह- **नेति** ।। अयं नृपः श्वेतो राजा साक्षात्स्वयमेवेत्यर्थः । रामे मालां न दद्यात् ।।२२।।

**गूढवाक्यार्थ-** ।। **स्वमांसैरिति** ।। स्वर्गं गतः श्वेतःकस्मिंश्चित् सरसि स्थितपूर्वस्वदेहमांसैरित्यर्थः । तदुक्तं रामायणे अथापश्यं शवं तत्र सुमृष्टमजरं क्वचित् । तिष्ठन्तं परया लक्ष्म्यास्तस्मिन्तोयाशये नृप । अथापश्यन्मुहूर्तात्तु दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम् । स च सिंहासनं हित्वा मेरुकूटमिवांशुमान् । पश्यतो मे महाराजो विमानादवरुह्य च । तं शवं भक्ष्यामास सर्वं हि रघुनन्दन । ततो भुक्त्वा यथाकामं मांसं बहु च सुष्टु च ।।' [उ.का.७७.८–१६] इत्यादि । शवशरीरस्य वहुकालमवस्थानं प्रतिदिनं समग्रभक्षणेऽपि पुनरभिवृद्धिस्तर्पकत्वं च हिरण्यगर्भवरादिति ज्ञेयम् । तदप्युक्तं रामायणे । 'स्वशरीरं त्वयोच्छिष्टं कुर्वता तप उत्तमम्' 'भक्षयित्वामृतरसं तेन तृप्तिर्भविष्यतीति' इति 'मानुषः पूर्वको देहो राजर्षेस्स ननाश ह' इति च ।।२२।।

**क्षुदभावमात्रफलदं न साक्षाद् राघवेऽर्पितम् ।**
**क्षुदभावमात्रमाकाङ्क्षन् मामसौ परिपृच्छति ।।२३।।**

**वरदराजीया-** कुतः राघवे साक्षादव्यवधानेनार्पितं समर्पितं वस्तु क्षुदभावः क्षुत्परिहार एव फलं तद्ददातीति तथा तादृशं न भवति । तस्य महाफलत्वादिति भावः । तर्हि साक्षात् मालासमर्पणेन महाफलमेव भवत्वित्याशङ्क्याह- **क्षुदभावेति** ।। असौ श्वेतः क्षुदभावमात्रं क्षुत्परिहारमात्रं आकांक्षन् इच्छन् उपायं परिपृच्छति ।।२३।।

**जनार्दनीया-** अगस्त्यव्यवधानात् देहीत्युक्तस्य अभिप्रायमाह- **नेति** ।। अयं नृपः साक्षात् स्वयमेवेत्यर्थः । रामे न दद्यात् । कुतः ? साक्षात् स्वहस्तेनैव राघवे अर्पितं मालादिकं क्षुधः अभावमात्रफलदं परिहारमात्रमेव फलदं न । किन्तु सर्वपुरुषार्थफलदमित्यर्थः ।।२३।।

रामाय मालां समर्पयेत्युक्तो राजा रामार्थं मालामगस्त्यहस्ते अर्पयत् दत्तवान् । अगस्त्यद्वारा मालां रामाय समर्पयेदिति वदतो ब्रह्मणोऽभिप्रायमाह– **न साक्षादित्यादिना** ।। अयं नृपः श्वेतो रामे रामार्थं साक्षादव्यवधानेन मालां न दद्यात् ।।२२।।

**जनार्दनीया–** राघवः श्वेतेन श्वेतराजेन दत्तां रामार्थं अगस्त्यहस्ते मालां अगस्त्यादाप । श्वेतः किमर्थं मालामदादित्यत आह– **अनन्नेति** ।। न विद्यते अन्नं अन्नदानं यस्मिन्नसौ तथा । स चासौ यज्ञश्च । तं करोतीति तथा । श्वेतो राजा स्वमांसैः क्षुधः विनिवर्तनं परिहारं कुर्वन् सन् क्षुन्निवृत्त्युपायं पृष्टेनेति वाक्यशेषः । धात्रा ब्रह्मणा रामार्थे अगस्त्याय मालां देहीत्युक्तः श्वेतः रामार्थं मालां अगस्त्याय अर्पयदित्यावृत्त्या योज्यम् ।।२२।।

**अनन्तभट्टीया–** अनन्नयज्ञकृत् अकृतयज्ञाङ्गविप्रभोजनः । अगस्त्याय अगस्त्य हस्त इत्यर्थः । ...* । कुम्भयोनये अगस्त्याय । स्वमांसैरिति भूम्यां विद्यमानपूर्वदेहस्थितस्वमांसैरित्यर्थः । तस्य अमृतसम्बन्धात् अशुचित्वादिकं नास्तीति ज्ञातव्यम् ।।२२-२६।।

**ताम्रपर्णीया–** ।। **स्वमांसैरिति** ।। स्वर्गं गतः श्वेतः कस्मिंचित् सरसि विद्यमानपूर्वस्वदेहमांसतः क्षुद्विनिवर्तनं कुर्वन्नित्यर्थः । न तु स्वर्गस्थतेजोमयशरीरमांसत इति भ्रमितव्यं । तदुक्तं उत्तररामायणे ।

अथापश्यं शवं तत्र सुमृष्टमजरं क्वचित् । तिष्ठन्तं परया लक्ष्म्यास्तस्मिन्तोयाशये नृप ।
अथापश्यन्मुहूर्तात्तु दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम् ।
स च सिंहासनं हित्वा मेरुकूटमिवांशुमान् । पश्यतो मे महाराजो विमानादवरुह्य च ।
तं शवं भक्ष्यामास सर्वं हि रघुनन्दन । ततो भुक्त्वा यथाकामं मांसं बहु च सुष्टु च ।।'

[उ.का.७७.८–१६] इत्यादि । शवशरीरस्य बहुकालमवस्थानं प्रतिदिनं समग्रभक्षणेऽपि पुनरभिवृद्धिस्तर्पकत्वं च हिरण्यगर्भवरादिति ज्ञेयम् । तदप्युक्तं रामायणे । 'स्वशरीरं त्वयोच्छिष्टं कुर्वता तप उत्तमम्' 'भक्षयित्वामृतरसं तेन तृप्तिर्भविष्यतीति' 'मानुषः पूर्वको देहो राजर्षे स ननाश ह' [उ.का ७८.१५.१७.२७] इति च ।।२२-३०।।

**चट्टी–** ।। **अनन्नयज्ञकृदिति** ।। अन्नदानाभावे ज्योतिष्टोमादियज्ञस्यैवायोगात् अनन्नयज्ञकृदित्यस्य अन्नदानमकृत्वैव ज्योतिष्टोमादियज्ञकृदिति नार्थः । किन्तु अनन्नयज्ञकृत् अनन्नः अन्नदानात्मकयज्ञभिन्नो यज्ञस्तपोयज्ञः तमेव करोतीति । गृहस्थस्यान्नदानस्य विहितत्वात् । एतेन यतयेऽपि भिक्षामात्रमन्न-मप्यदत्वैव केवलं तप एव कृतमिति भावः । स्वमांसैः पूर्वजन्मनि यच्छरीरं स्वेन त्यक्तं तस्य स्वस्य स्वकीयस्य शरीरस्य मांसैरित्यर्थः । तथाचोक्तम्– तच्छवं भक्षयामास सर्वं हि रघुनन्दन । ततो भुक्त्वा यथा कामं मांसं बहुसुपीवरम् ।। अवतीर्य सरः स्वर्गी स स्प्रष्टुमुपचक्रमे । अथाहमब्रुवं वाक्यं तमेनं

पुरुषोत्तम ।। को भवान् देवसङ्काश आहारश्च विगर्हितः । त्वयेवं भुज्यते सौम्य किमर्थं वक्तुमर्हसि ।। आश्चर्यमीदृशो भावः भास्वरो देवसम्मितः । आहारो गर्हितः सौम्य श्रोतुमिच्छामि तत्वतः ।। नाहमौपयिकं मन्ये तव भोज्यमिमं शवम् ।। [उ.का.७७.१९-२०] । श्रुत्वा तु भाषितं वाक्यं मत्तो राम शुभाक्षरम् । प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ।। शृणु ब्रह्मन् यथावृत्तं ममैतत्सुखदुःखयोः । दुरतिक्रमणं यं हि यथा पृच्छसि मां द्विज ।। इत्यादि रामायणे । तथाचेत्थं योजना । अनन्नयज्ञकृच्छ्वेतो राजा धात्रोक्तो भूमावागत्य स्वमांसैः पूर्वजन्मत्यक्तस्वशरीरमांसैः क्षुद्विनिवर्तनं कुर्वन् धात्रोक्तो रामार्थं अगस्त्याय मालामर्पयदिति । अगस्त्यव्यवधानादेहीति वदतो ब्रह्मणः अभिप्रायमाह– **नेति** ।। अयं नृपः श्वेतो राजा साक्षात्स्वयमेवेत्यर्थः । रामे मालां न दद्यात् ।।२२।।

**गूढवाक्यार्थ–** ।। **स्वमांसैरिति** ।। स्वर्गं गतः श्वेतःकस्मिंश्चित् सरसि स्थितपूर्वस्वदेहमांसैरित्यर्थः । तदुक्तं रामायणे अथापश्यं शवं तत्र सुमृष्टमजरं क्वचित् । तिष्ठन्तं परया लक्ष्म्यास्तस्मिन्तोयाशये नृप । अथापश्यन्मुहूर्तात्तु दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम् । स च सिंहासनं हित्वा मेरुकूटमिवांशुमान् । पश्यतो मे महाराजो विमानादवरुह्य च । तं शवं भक्ष्यामास सर्वं हि रघुनन्दन । ततो भुक्त्वा यथाकामं मांसं बहु च सुष्टु च ।।' [उ.का.७७.८–१६] इत्यादि । शवशरीरस्य बहुकालमवस्थानं प्रतिदिनं समग्रभक्षणेऽपि पुनरभिवृद्धिस्तर्पकत्वं च हिरण्यगर्भवरादिति ज्ञेयम् । तदप्युक्तं रामायणे । 'स्वशरीरं त्वयोच्छिष्टं कुर्वता तप उत्तमम्' 'भक्षयित्वामृतरसं तेन तृप्तिर्भविष्यतीति' इति 'मानुषः पूर्वको देहो राजर्षेस्स ननाश ह' इति च ।।२२।।

**क्षुदभावमात्रफलदं न साक्षाद् राघवेऽर्पितम् ।**
**क्षुदभावमात्रमाकाङ्क्षन् मामसौ परिपृच्छति ।।२३।।**

**वरदराजीया–** कुतः राघवे साक्षादव्यवधानेनार्पितं समर्पितं वस्तु क्षुदभावः क्षुत्परिहार एव फलं तद्ददातीति तथा तादृशं न भवति । तस्य महाफलत्वादिति भावः । तर्हि साक्षात् मालासमर्पणेन महाफलमेव भवत्वित्याशङ्क्याह– **क्षुदभावेति** ।। असौ श्वेतः क्षुदभावमात्रं क्षुत्परिहारमात्रं आकांक्षन् इच्छन् उपायं परिपृच्छति ।।२३।।

**जनार्दनीया–** अगस्त्यव्यवधानात् देहीत्युक्तस्य अभिप्रायमाह– **नेति** ।। अयं नृपः साक्षात् स्वयमेवेत्यर्थः । रामे न दद्यात् । कुतः ? साक्षात् स्वहस्तेनैव राघवे अर्पितं मालादिकं क्षुधः अभावमात्रफलदं परिहारमात्रमेव फलदं न । किन्तु सर्वपुरुषार्थफलदमित्यर्थः ।।२३।।

**चट्टी–** कुतः साक्षात् स्वहस्तेनैव राघवे अर्पितं वस्तु क्षुधः अभावमात्रफलदं न किन्तु सर्वपुरुषार्थफलदमित्यर्थः । सर्वपुरुषार्थफलदमप्यस्तु को दोष इत्यत आह– **क्षुदिति** ।। असौ श्वेतः क्षुदभावमात्रं आकाङ्क्षन् मां परिपृच्छति उपायमिति शेषः ।।२३।।

**भारतश्री–** क्षुदभावमात्रफलदं साक्षात् राघवेर्पितं न भवति अयमधिकयोग्यो न भवति अतः तावन्मात्रमेव पृष्टवान् ।।२३।।

**व्यवधानस्ततो रामे दद्याच्छ्वेत इति प्रभुः ।**
**मत्वा ब्रह्माऽदिशन्मालां प्रदातुं कुम्भयोनये ।।२४।।**

**वरदराजीया–** तत्तत्फलं व्यवधानेन समर्पणस्यैवेति ततः कारणतो व्यवधानतो अगस्त्यद्वारा रामे मालां दद्यादिति मत्वा अभिप्रेत्य प्रभुः ब्रह्मा रामाय मालां प्रदातुं कुम्भयोनये प्रदिशेति आदिशत् आज्ञापितवान् ।।२४।।

**जनार्दनीया–** एवं चेत् किमित्यत आह– **क्षुदेति** ।। असौ श्वेतः क्षुदभावमात्रं आकाङ्क्षन् इच्छन् मां पृच्छति । उपायमिति शेषः । यतः कारणात् । ततः व्यवधानतः पुरुषान्तरव्यवधानेन रामे दद्यादिति प्रभुर्ब्रह्मा मत्वा ज्ञात्वा । कुम्भ एव योनिः उत्पत्तिकारणं यस्य स तथा तस्मै । अगस्त्याय मालां प्रदातुं अदिशत् आज्ञापयामास ।।२४।।

**चट्टी–** यतः कारणात्ततः व्यवधानतः पुरुषान्तरव्यवधानेन राघवे मालां दद्यादिति प्रभुर्ब्रह्मा मत्वा ज्ञात्वा । कुम्भं योनिः उत्पत्तिकारणं यस्य स तथा तस्मै । अगस्त्याय मालां प्रदातुं अदिशत् । श्वेतमिति शेषः ।।२४।।

**तामगस्त्यकरपल्लवार्पितां भक्त एष मम कुम्भसम्भवः ।**
**इत्यवेत्य जगृहे जनार्दनस्तेन संस्तुत उपागमत् पुरम् ।।२५।।**

**वरदराजीया–** जनार्दनो रामो अगस्त्यमुनेः करपल्लवाभ्यामर्पितां दत्तां मालां एषः कुम्भसम्भवो मम भक्त इत्येव ज्ञात्वा जगृहे स्वीकृतः सन् अनेनागस्त्येन संस्तुतः पुरमयोध्यामगमदित्यर्थः ।।२५।।

**जनार्दनीया–** जनार्दनः रामः । एष अगस्त्यः मम भक्तः इत्यवेत्य ज्ञात्वा । अगस्त्यस्य करपल्लवेन करलक्षणकोमलदलेन अर्पितां दत्तां तां श्वेतदत्तां मालां जगृहे अङ्गीचकार । तेन अगस्त्येन संस्तुतः सन् पुरं अयोध्यापुरीं उपागमत् उपाजगाम ।।२५।।

**चट्टी–** जनार्दनः श्रीरामः अगस्त्यस्य करलक्षणपल्लवाभ्यां अर्पितां मालां एष कुम्भसम्भवः अगस्त्यः मम भक्तः इत्यवेत्य ज्ञात्वा जगृहे स्वीकृतवान् । तेन अगस्त्येन संस्तुतः पुरं अयोध्यां उपागमत् उपाजगाम ।।२५।।

**भावचन्द्रिका–** [पल्लवार्पितां] कुसुमस्याम्लानत्वात् तद्वदाह– **करपल्लवेति** ।।२५-३३।।

**अथ केचिदासुरसुराः सुराणका इत्युरुप्रथितपौरुषाः पुरा ।**
**ते तपः सुमहदास्थिता विभुं पद्मसम्भवमवेत्य[1] चोचिरे ।।२६।।**

**वेदाङ्गतीर्थीया–** असुरव्यामोहार्थं श्रीरामकृतसीतापरित्यागं वक्तुं कथान्तरमारभते– **अथेति** ।। तां कथामाह– **केचिदित्यादिना** ।।२६–२९।।

**वादिराजीया–** अथ केचिदासुरसुरा इत्यत्र सुराणकाः सुराणकाख्या असुरा आसुरिति योजना ।।

**वरदराजीया–** अथ सीता रामेण परित्यक्तेन दुष्प्रथाया मूलं वक्तुं कथामारभते– **अथेत्यादिना** ।। अथ कथान्तरमारभ्यत इत्यर्थः । तदेव कथान्तरमाह– **केचिदिति** ।। केचिदसुरा सुराणका इति प्रसिद्धाः । पुरा असुरा आसन् । कथंभूताः । उरु प्रथितं पौरुषं येषां ते तथा । ते सुराणकाः सुमहत्तप आस्थिताः कुर्वन्तः पद्मसंभवं ब्रह्माणमवेत्यागत्योचिरे अवदन् ।।२६।।

**जनार्दनीया–** अथशब्दः कथान्तरवाची । तां कथामाह– **केचिदित्यादिना** ।। पुरा उरुप्रथितं अतिप्रसिद्धं पौरुषं पराक्रमो येषां ते तथा । सुराणकाः सुराणका इति नाम्ना प्रसिद्धाः केचिदसुरा आसुः । ते सुराणकाः सुमहत्तप आस्थिताः तपसि स्थिता इति भावः । पद्मात् सम्भवो उत्पत्तिर्यस्येति विग्रहः । विभुं ब्रह्माणं अवेत्य ज्ञात्वा । प्राप्येति वा । प्रत्यक्षीभूतमिति शेषः । 'अवेक्ष्य' इति वा पाठः ऊचिरे ।।

**अनन्तभट्टीया–** पद्मसम्भवमवेत्य ज्ञात्वा ।।२६–२८।।

**चट्टी–** अथशब्दः कथान्तरवाची तां कथामाह– **केचिदित्यादिना** ।। पुरा उरुप्रथितं अतिप्रसिद्धं पौरुषं पराक्रमो येषां ते तथा सुराणकाः इति प्रसिद्धाः केचिदसुरा आसुः । सुराणकाः सुमहत्तप आस्थिताः कुर्वन्तः पद्मात् सम्भवो उत्पत्तिर्यस्य सः तथा । तं विभुं ब्रह्माणं अवेत्य ज्ञात्वा प्राप्येति वा प्रत्यक्षीभूतमिति शेषः । अवेक्ष्येति दृष्ट्वैव इति वा पाठः । ऊचिरे अवदन् ।।२६।।

**भूरिपापकृतिनोऽपि निश्चयान्मुक्तिमाप्नुम उदारसद्गुण ।**
**इत्युदीरितमजोऽवधार्य तत् प्राह च प्रहसिताननः प्रभुः ।।२७।।**

---

१. 'अवेक्ष्य इति' जनार्दनीये पाठान्तरम् ।

**वरदराजीया–** हे उदारसद्गुण उदाराः उत्कृष्टाः सन्तो गुणा यस्य तस्य सम्बुद्धिः । भूरिपापकृतिनः बहूनां पापानां कृतिः करणं विद्यते येषां ते तादृशा । [आधिक्यं अपि] वयं निश्चयात् मुक्तिं मोक्षं आप्नुमः इत्युदीरितं वचनं अवधार्य प्रहसितमाननं यस्य सः प्रभुः ब्रह्मा प्राह ।।२७।।

**जनार्दनीया–** किमिति ? हे उदार वदान्य । हे सद्गुण । उदारसद्गुणेत्येकं वा पदम् । उदारा उत्कृष्टाः । भूरीणां महतां पापानां कृतिः करणमेषामस्तीति तथा । ईदृशा अपि निश्चयात् मुक्तिं आप्नुमः । अजः ब्रह्मा इत्युदीरितं अवधार्य मनसि धृत्वा प्राह । कथं भूतः ? प्रहसितं हासयुक्तं आननं यस्य ।।२७।।

**चट्टी–** किमिति हे उदारसद्गुण उत्कृष्टाः सन्तो गुणा यस्य स तथा तस्य सम्बुद्धिः । उदार वदान्य सुगुण इति वा । भूरीणां महतां पापानां कृतिः कारणमेषामस्तीति भूरिपापकृतिनोऽपि वयं निश्चयात् मुक्तिं मोक्षं आप्नुमः । इत्युदीरितं तद्वचनं अवधार्य मनसि धृत्वा प्रहसितं आननं यस्य स तथा । अजः ब्रह्मा प्राह ।।२७।।

**यावदेव रमया रमेश्वरं नो वियोजयथ सद्गुणार्णवम् ।**
**तावदुच्चमपि दुष्कृतं भवन्मोक्षमार्गपरिपन्थि नो भवेत् ।।२८।।**

**वरदराजीया–** किमिति । यावदेव यावत्कालपर्यन्तं रमया लक्ष्म्या रमाया ईश्वरं पतिं नारायणं नो वियोजयथ वियुक्तं न मन्यथाः तावत्पर्यन्तं उच्चं बह्वपि दुष्कृतं भवतां मोक्षमार्गस्य परिपन्थि विरोधि नो भवेन्न स्यात् ।।२८।।

**जनार्दनीया–** किमिति ? यावदेव यावत्कालं रमया रमेश्वरं हरिं नो वियोजयथ वियोगं न प्रापयिष्यथ । तावत् उच्चमपि स्वमातृगमनब्रह्महत्यादिमहदपि दुष्कृतं पातकं भवतां मोक्षमार्गपापन्थि नो मुक्तिसाधनविरोधि नो भवेत् न भविष्यति । भवंश्चासौ मोक्षश्च तस्य मार्गः भक्त्यादि । तस्य परिपन्थिर्विरोधीति वा । यद्वा भवदिति भिन्नं पदं दुष्कृतविशेषणम् ।।२८।।

**अनन्तभट्टीया–** वियोजयथ वियोगं प्रापयिष्यथ । नो भवेत् न भविष्यति ।।२८।।

**चट्टी–** किमिति । यावदेव यावत्कालं रमया लक्ष्म्या रमेश्वरं हरिं नारायणं नो वियोजयथ वियुक्तत्वेन न मन्यथ तावत् उच्चं बह्वपि दुष्कृतं भवतां मोक्षमार्गस्य मुक्तिसाधनस्य परिपन्थि विरोधि नो भवेत् न भविष्यति । भवंश्चासौ मोक्षश्च तस्य मार्गः भक्त्यादि तस्य परिपन्थिर्विरोधीति वा ।।२८।।

**भारतश्री–** रमया रमेश्वरं वियोजयथ चेति मोक्षमार्गपरिपन्थि भवेत्...* इत्यर्थः ।।२८।।

**भावविवृति–** ।।१-२७।। यावदेव रमया रमेश्वरं यथेत्यत्र हे दैत्याः यूयं रामं सीतया यावत्पर्यन्तं नो वियोजयथ तावत्पर्यन्तं भवद्भिरनुष्ठितं उच्चं ब्रह्महत्यादुष्कृतमपि मोक्षमार्गपरिपन्थि नो भवतीत्यन्वयः ।।२८–४९।।

**इत्युदीरितमवेत्य तेऽसुराः क्षिप्रमोक्षगमनोत्सुकाः क्षितौ ।**
**साधनोपचयकाङ्क्षिणो हरौ शासति क्षितिमशेषतोऽभवन् ।।२९।।**

**वेदाङ्गतीर्थीया–** साधनोपचयकाङ्क्षिणः साधनसम्पत्तिमिच्छन्तः ।।२९।।

**वरदराजीया–** ते असुराः सुराणका इत्युदीरितमवेत्य ज्ञात्वा क्षिप्रं शीघ्रं मोक्षं प्रति गमने उत्सुका उत्कण्ठयुक्ता साधनोपचयकाङ्क्षिणो मोक्षसाधनसम्पत्तिमपेक्ष्यमाणा हरौ रामे क्षितिं प्रशासति अशेषतः सर्वे क्षितौ भूमौ अभवन् जाता इत्यर्थः ।।२९।।

**जनार्दनीया–** असुराः सुराणकाः अवेत्य ज्ञात्वा क्षिप्रं मोक्षस्य गमने प्राप्तौ उत्सुकाः उत्कण्ठयुक्ताः सन्तः साधनोपचयकाङ्क्षिणः मोक्षसाधनाधिक्यं इच्छन्तः अशेषतः सर्वे क्षितौ अभवन् जाता इत्यर्थः । कस्मिन् सति हरौ क्षितिं शासति सति ।।२९।।

**अनन्तभट्टीया–** अशेषतः सर्वेऽपीत्यर्थः ।।२९–३१।।

**चट्टी–** ते असुराः सुराणकाः इत्युदीरितं अवेत्य ज्ञात्वा क्षिप्रं शीघ्रं मोक्षस्य गमने प्राप्तौ उत्सुकाः उत्कण्ठयुक्ताः सन्तः साधनोपचयकाङ्क्षिणः मोक्षसाधनाधिक्यं इच्छन्तः हरौ श्रीरामे क्षितिं शासति सति अशेषतः सर्वे क्षितौ भूमौ अभवन् जाता इत्यर्थः ।।२९।।

**ताननादिकृतदोषसञ्चयैर्मोक्षमार्गगतियोग्यतोज्झितान् ।**
**मैथिलस्य तनया व्यचालयन्मायया स्वतनुवा स्वमार्गतः ।।३०।।**

**वेदाङ्गतीर्थीया–** स्वतनुवा स्वस्वरूप [भूतया] मायया दुर्गया ।।३०।।

**वादिराजीया–** मायया स्वतनुवेत्यत्र स्वतनुवा स्वाभिमन्यमानया स्वदेहस्थानीयया मायया भ्रमजनकाविद्यया स्वमार्गतः स्वानां स्वभक्तानां मार्गतः तत्त्वज्ञानाख्यमार्गात् तान् सुराणकान् व्यचालयत् । व्यचालयदिति वदता पूर्वं वैष्णवैः सह संवासात् जपाकुसुमसम्बन्धेन स्फटिकेषु रक्तिमेव तेष्वपि सन्मार्गः स्थित इति सूचितम् । वैष्णवसमागमवशात् सीतारामौ लक्ष्मीनारायणाविति या प्रमा प्रागासीत् तस्यां सत्यां स्वमोक्षाख्यप्रयोजननाशभीत्या अपहासं न कुर्युः अतो भ्रमजनन्या मायया तां

बुद्धिं विनाश्य मनुष्यावेताविति विपरीतबुद्धिं स्थिरीचकारेति भावः । सुष्ठु दैत्यानाममार्गभूतात् तत्त्वज्ञानादिति वा । स्वेषु सुराणकेष्ववस्थितात् सन्मार्गत इति वा । 'न ऋते त्वत्क्रीयते' [ऋ.१०.११२.९] इति श्रुतेः ।।३०।।

**सत्याभिनवीया–** मैथिलस्य तनया व्यचालयन्मायया इत्यस्ति । तस्यार्थः । मैथिलस्य तनया सीता तान् असुरान् स्वतनुवा स्वतन्त्रनारायणशरीरभूतया नारायणप्रतिमयेति यावत् मायया मोहकशक्त्या मोहयित्वा स्वमार्गतः स्वतन्त्रनारायणप्राप्तिमार्गतः व्यचालयदिति । एतेन स्वतनुवेत्येतत् व्यर्थमिति दूषणं पराकृतम् । मोहकशक्तेः मोहकरणत्वं नारायणसन्निधानादिति वक्तुं मोहकशक्तेः नारायण-प्रतिमात्वप्रतिपादनार्थं स्वतनुवेत्युक्तमिति स्वीकरणात् ।।३०।।

**वरदराजीया–** तान् सुराणकान् अनादितः बहूनां दोषाणां सञ्चयैः संग्रहैः निमित्तैः मोक्षमार्गं प्रति गतौ गमने योग्यतया उज्झितान् रहितान् मैथिलस्य तनया सीता स्वतनुवा स्वस्वरूपभूतया मायया दुर्गाख्यया । मोहयित्वेति शेषः । स्वमार्गतः स्वप्राप्तिमार्गतो व्यचालयत् । मार्गच्युतांश्चकारेति भावः ।।

**जनार्दनीया–** मैथिलस्य जनकस्य तनया दुहिता सीता स्वतनुवा स्वतन्वा स्वस्वरूपया मायया दुर्गया । अनादितः कृतदोषाणां सञ्चयैः समूहैः । कृत्वा । मोक्षमार्गस्य गतिः प्राप्तिः तस्यां योग्यता तया उज्झितान् सुराणकान् स्वमार्गतः स्वः स्वतन्त्रो विष्णुः तत्प्राप्तिनिमित्तज्ञानमार्गतः व्यचालयन् ।।३०।।

**ताम्रपर्णीया–** स्वतनुवा स्वाभिमन्यमानतया स्वशरीरभूतया अविद्यास्वरूपभूतया दुर्गया वा स्वप्रतिमाभूतया सीताकृत्या वा आकृतिं निर्माय रावणवशं प्रापयद् दैत्यान् मोहयामासेति भावः । स्वमार्गतः स्वेषां विष्णवादीनां मार्गतः 'स्वातन्त्र्यात् स्व इति प्रोक्तः' इति वचनात् । स्वतन्त्रस्य हरेः मार्गत इति वा । यद्यपि तेषां स्वरूपमेव विपरीतज्ञानात्मकं तथापि वरादीषत्सद्बुद्धिप्रतिबन्धाय मायापेक्षितेति ज्ञेयम् ।।३०–३३।।

**चट्टी–** अनादितः कृतानां दोषाणां सञ्चयैः समूहैः निमित्तात् मोक्षमार्गस्य गतिः प्राप्तिः तस्यां योग्यता तया उज्झितान् रहितान् । सुराणकान् मैथिलस्य जनकस्य तनया सीता स्वतनुवा स्वस्वरूपया मायया दुर्गया मोहयित्वेति शेषः । स्वमार्गतः स्वतन्त्रो विष्णुः तत्प्राप्तिज्ञानमार्गतः व्यचालयत् । सन्मार्गच्युतांश्चकारेति भावः ।।३०।।

**भारतश्री–** स्वमार्गतः हरिमार्गतः । 'परस्वोहरिरुद्दाम इति नामचतुष्टयम् । विष्णोर्गुह्यं तु यो वेद सर्वपापैः प्रमुच्यते ।। इति प्रकाशसंहितायाम्' [१०.३.१८] इति दशमस्कन्धतात्पर्ये ।।३०।।

**गूढवाक्यार्थ–** स्वतनुवा स्वस्वरूपभूतया मायया बन्धकशक्त्या मोहयित्वेति शेषः । स्वमार्गतः स्वेषां वैष्णवादीनां मार्गतः । यद्यपि तेषां स्वरूपमेव मिथ्याज्ञानात्मकं तथापि वैष्णवसमागमात् प्राप्तेषत्सुबुद्धिप्रतिबन्धाय माया अपेक्षितेति ज्ञेयम् । यद्वा स्वमार्गतः सुष्ठु दैत्यानाममार्गभूतात् तत्त्वज्ञानात् व्यचालयदित्यर्थः ।।३०।।

**आज्ञयैव हि हरेस्तु मायया मोहितास्तु दितिजा व्यनिन्दयन् ।**
**राघवो निशिचराहृतां पुनर्जानकीं जगृह इत्यनेकशः ।।३१।।**

**वेदाङ्गतीर्थीया–** अनेकशः बहुवारम् ।।३१।।

**वादिराजीया–** तु विशेषेण हरेराज्ञयैव । 'सत्वाच्चावरस्य' [ब्र.सू.२.१.१७] इति सूत्रात् मायया तदधीनमायया च तु विशेषण मोहिताः । मोहस्य तत्स्वरूपत्वात् प्रागाच्छदित आसीत् । इदानीं मायावशात् प्रकटीभूतेन मोहेन युक्ता इत्यर्थः । हिशब्देन हरेः स्वातन्त्र्याप्रसिद्धिं दैत्यानां मोहस्वरूपत्वं च प्रसिद्धिमिति सूचयति ।।३१।।

**सत्याभिनवीया–** तदनन्तरमेव आज्ञयैव हि हरेस्तु इत्यस्ति । तस्यार्थः । हरेः तु विशेषतः आज्ञयैव सीतया मायया मोहकशक्त्या हि यस्मात् मोहिताः तस्मात् दितिजाः तु विशेषतः व्यनिन्दयन्निति । एतेन किमस्य वाक्यस्य हरेः मायया मोहिता इत्यर्थः किं वा सीतया मोहिता इत्यर्थः । नाद्यः आज्ञयेत्यस्य वैय्यर्थ्यप्रसङ्गात् । न द्वितीयः । सीतयेति पदस्याश्रवणात् इति दूषणं परास्तम् । सीतयेत्यस्याध्याहारेण सीतया मायया मोहिता इत्यर्थ उच्यते इत्यभ्युपगमात् ।।३१।।

**मधुसूदनीया–** ।। **राघवो निशिचराहृतामिति** ।। इत्यनेकशः व्यनिन्दयन्निति सम्बन्धः । इत्याद्यनेकप्रकारेण विशेषेण निन्दां चक्रुरित्यर्थः । तथाचोक्तम्–

हत्वा च रावणं युद्धे सीतामाहृत्य राघवः । अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ।।
कीदृशं हृदये तस्य सीतासंभोगजं सुखम् । अङ्कमारोप्य हि पुरा रावणेन हृतां च ताम् ।।
लङ्कामपि पुनर्नीतां अशोकवनिकां गताम् । रक्षसां वशमापन्नां कथं रामो न कुत्स्यति ।।'
इत्यादि रामायणे [उ.का.४३.१६–१८] । नवमस्कन्धे च [९.८–९]
कदाचित् लोकजिज्ञासुः गूढो रात्र्यामलक्षितः । चरन् वचोऽशृणोद् रामो भार्यामुद्दिश्य कस्यचित् ।।
नाहं बिभर्मि त्वां दुष्टां असतीं परवेश्मगाम् । स्त्रैणो हि बिभृयात् सीतां रामो नाहं भजे पुनः ।।'

इदं वचनमितिशब्दसंगृहीतमिति ध्येयम् । इतिशब्दः आद्यर्थः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यभिधानात् ।।३१-३३।।

**वरदराजीया–** हरेराज्ञयैव मायया दुर्गया मोहिता मोहं मिथ्याज्ञानं प्रापिता दितिजा असुरा अनिन्दयन् निन्दितवंतः । राघवो रामो निशाचरेण रावणेन हृतां सीतां जानकीं पुनर्जगृह इत्यनेकश अनेकधा अनिन्दयन्निति सम्बन्धः ।।३१।।

**जनार्दनीया–** हरेः आज्ञया मायया दुर्गया मोहिताः । आहृतां अपहृताम् । पुनः जगृहे स्वीकृतवानिति । अनेकशः बहुप्रकारेण व्यनिन्दयन् ।।३१।।

**अनन्तभट्टीया–** आहृतां अपहृताम् ।।३१।।

**चट्टी–** हरेः आज्ञयैव मायया दुर्गया मोहिताः मोहं प्रापिताः दितिजाः राघवः श्रीरामः निशिचरेण आहृतां अपहृतां जनकीं सीतां पुनः जगृहे स्वीकृतवानिति अनेकशः बहुप्रकारेण व्यनिन्दयन् । तथाचोक्तम्– हत्वा च रावणं युद्धे सीतामाहृत्य राघवः । अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ।। कीदृशं हृदये तस्य सीतासंभोगजं सुखम् । अङ्कमारोप्य हि पुरा रावणेन हृतां च ताम् ।। लङ्कामपि पुनर्नीतां अशोकवनिकां गताम् । रक्षसां वशमापन्नां कथं रामो न कुत्स्यति ।।' इत्यादि रामायणे [उ.का.४३.१६–१८] । इदं वचनमितिशब्दसंगृहीतमिति ध्येयम् । इतिशब्दः आद्यर्थः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यभिधानात् ।।३१।।

**ब्रह्मवाक्यमृतमेव कारयन् पातयंस्तमसि चान्ध आसुरान् ।**
**नित्यमेव सहितोऽपि सीतया सोऽ[1]ज्ञसाक्षिकमभूद् वियुक्तवत् ।।३२।।**

**व्यासतीर्थीया–** अज्ञसाक्षिकमज्ञप्रतीतिकम् ।।३२-३४।।

**वेदाङ्गतीर्थीया–** अज्ञसाक्षिकं अज्ञप्रत्यक्षानुसारेण ।।३२।।

**वादिराजीया–** सोऽज्ञसाक्षिकमभूद्वियुक्तवदित्यत्र वियुक्तवत् वसिष्ठाश्रमं [वाल्मीक्याश्रमम्] प्रति अज्ञदृष्ट्या सीतायाः प्रेषणेन सीतया वियुक्त इवाभूदित्यर्थः ।।३२।।

**वरदराजीया–** ततः किं प्रकृत इत्यत आह– **ब्रह्मेति** ।। ब्रह्मवाक्यं यावदेव रमयेत्यादिरूपं ऋतं सत्यं कारयन् आसुरान् असुरस्वभावान् सुराणकान् अन्यांश्चान्धन्तमसि पातयंश्च नित्यं सीतया सहित एवापि स रामो अग्निसाक्षिकं अग्निप्रत्यक्षं यथा भवति तथा वियुक्तवत् बभूव ।।३२।।

**जनार्दनीया–** स रामः नित्यमेव सहितोऽपि । अग्निसाक्षिकं अग्निप्रत्यक्षम् । वियुक्तवत् वियोगवदभूत् । 'अज्ञसाक्षिकम्' इति पाठे अज्ञाः अज्ञानिनः साक्षिणो यस्यामिति क्रियाविशेषणम् ।।

१. 'अग्निसाक्षिकं' इति वरदराजीयजनार्दनीयचट्टीटिप्पणीषु पाठः ।

**अनन्तभट्टीया–** अज्ञसाक्षिकं अज्ञदृष्टेरित्यर्थः ।।३२।।

**चट्टी–** ततः किं कृतवानित्यत आह– **ब्रह्मेति** ।। सः श्रीरामः ब्रह्मवाक्यं ऋतं सत्यं कारयन्नासुरान् असुरस्वभावान् सुराणकान् अन्यांश्च अन्धन्तमसि पातयन् नित्यमेव सीतया सहितोऽपि अग्निसाक्षिकं अग्निप्रत्यक्षं यथा भवति तथा वियुक्तवत् अभूत् ।।३२।।

**गूढवाक्यार्थ–** अज्ञसाक्षिकं अज्ञजनप्रत्यक्षविषयं यथा भवति तथा ।।३२।।

**तेन चान्धतम ईयुरासुरा यज्ञमाह्वयदसौ च मैथिलीम् ।**
**तत्र भूमिशपथच्छलान्नृणां [१]दृष्टिमार्गमपहाय सा स्थिता ।।३३।।**

**वेदाङ्गतीर्थीया–** तेन वियोजनेन । तत्र यज्ञे ।।३३।।

**वादिराजीया–** यज्ञमाह्वयदित्यत्र असौ राघवः वसिष्ठाश्रमगतं जानकीं यज्ञं यज्ञं प्रत्याह्वयच्च । यज्ञकरणसमये पुनराह्वयामास चेत्यर्थः । तत्र यज्ञसभायां भूमिशपथच्छलात् भूमिं प्रत्यहमदुष्टा चेत् हे भूमे त्वं ममावकाशं देहीति शपथव्याजात् सा सीता नृणां दृष्टिमार्गमपहाय स्थिता । विदारितभूमेरन्तःप्रविष्टा सती दृष्टिमार्गं त्यक्त्वा स्थिता नृणामदृश्याऽभूदित्यर्थः ।।३३-३५।।

**वरदराजीया–** तेन भ्रान्त्या प्रतीतेन वियोगेन आसुरा अन्धन्तम ईयुः प्रापुः । अग्निसाक्षिकं वियोगप्रदर्शनप्रकारमाह– **यज्ञमिति** ।। असौ रामो मैथिलीं सीतां स्वक्रियमाणयज्ञं प्रति आह्वयत् आह्वयामास । तत्र यज्ञभूमिशपथच्छलात् आह । परामृष्टा चेत् मां भूमिर्ग्रसतु इत्येवं रूपेण भूमौ शपथस्य दिव्यव्याजेनेत्यर्थः । आसीत् । नृपाणां मनुष्याणां दृष्टिमार्गमपहाय परिहृत्य स्थिता मनुष्यदृष्ट्यविषयत्वेन रामसमीप एव स्थितेत्यर्थः । एतादृग्वञ्चनाकरणे तेषां सम्यज्ज्ञानान्मोक्षप्राप्तिः स्यात् । अयोग्यत्वेन सम्यज्ज्ञानेऽपि मोक्षभावे भवन्मोक्षमार्गपरिपन्थि नो भवेदित्यादिब्रह्मवचनमसत्यं स्यात् । अतस्तेषां तमःप्राप्त्यर्थं ब्रह्मवाक्सत्यत्वार्थं च देवीदेवाभ्यामेवं वञ्चनं कृतमिति भावः ।।३३।।

**मधुसूदनीया–** ।। **तत्र भूमिशपथच्छलादिति** ।। यद्यहं मनो वाक्कर्मभी राममेव समर्थये । तदा मे विवरं देहि नो चेन्मास्त्विति भूमिं प्रति शपथच्छलादित्यर्थः । तथाचोक्तं रामायणे [उ.का.९७.१५] ।

---

१. 'रुक्ममय्याथ जानक्या यज्ञारम्भं चकार सः । अज्ञानदृग्भ्यो द्रष्टुं वै चकार स्वर्णनिर्मिताम् ।। वामाङ्गस्थां गुप्तरूपां ज्ञानदृग्भ्यश्च सात्विकीम् । बिभ्रत् सदैव श्रीरामो जानकीं लोकमातरम् ।।' इत्यानन्दरामायणे.जन्मकाण्ड.४.४८–४९ । यद्यप्यानन्दरामायणं स्वस्य प्राचीनार्वाचीनत्वयोः सन्दिग्धत्वात् न प्रमाणपदवीमाटीकते । तथापि 'यच्चानुकूलमेतस्य' इति न्यायान्तर्गततया इदमत्र उदाह्रियते । अत्रोक्तानां सदागमाविरोधितत्वानां यत्र क्वापि मूलं भवेदेवेत्यभिमतिरेवात्र मूला ।

'कर्मणा मनसा वाचा यदा रामं समर्थये । ततो मे माधवी देवि विवरं दातुमर्हसि ।।'इति च ।
उक्तश्च– 'कृताञ्जलिर्बाष्पकुला सीता यज्ञं विवेश ह' इत्युपक्रम्य ।
सर्वान् समागतान् दृष्ट्वा सीता कौशेयवासिनी । उदङ्मुखा ह्यधोदृष्टिः प्राञ्जलिर्वाक्यमब्रवीत् ।।
यदाहं राघवादन्यं मनसापि न चिन्तये । तथा मे माधवी देवी विवरं दातुमर्हसि ।।
तथा वदन्त्यास्सीतायाः प्रादुरासीत्समन्ततः । भूतलाद्दिव्यमत्यर्थं सिंहासनमनुत्तमम् ।।
ध्रियमाणं शिरोभिस्तैः उदतिष्ठद्दुरासदम् । दिव्यं दिव्येन वपुषा नागैरमितविक्रमैः ।।
तस्मिंस्तु धरणी देवी सीतां सङ्गृह्य बाहुना । स्वागतं तेऽभ्युवाचैनां आसने चोपवेशयत् ।।
तामासनगतां सीतां प्रविशन्तीं रसातलम् । पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरन् ।।
साधुवादश्च सुमहान् देवानां परमाद्भुतः ।।'

इत्यादि पद्मपुराणे [१] [रामायण.उ.का.९७.१३-२१] । यत्तु 'भूमिशपथच्छलात् । अहं परामृष्टा चेत् मां भूमिः ग्रसतु इत्येवंरूपात् भूमौ शपथस्य दिव्यस्य व्याजादिति । 'अहं दुष्टा चेत् भूमिर्ग्रहतु' इति च वरदराजीयानन्तभट्टीयव्याख्यानं तच्चिन्त्यम् । तथात्वे सीतायाः दोषित्वापत्तेः । 'यावदेव रमया रमायुतमित्यादिना' रमावियोगज्ञानस्यैव तमस्साधनत्वोक्तेः । दोषित्वे देवैः पुष्पवृष्टिः प्रक्षेपायोगात् । 'वसुधे देवि भवति सीता निर्यात्यतां मम' इति [उ.का.९८.६] । रामायणे रामेण पुनर्याचनाभावाच्च ।।३३-४०।।

**जनार्दनीया–** तेन सीतारामाभ्यां दर्शितवियोगेन । 'अग्निसाक्षिकम्' इत्युक्तं विविच्याह– **यज्ञमिति** ।। असौ रामः मैथिलीं सीतां यज्ञं प्रत्याह्वयत् । तत्र यज्ञभूमौ कृतशपथस्य छलात् व्याजात् नृणां दृष्टिमार्गं दृष्टिगोचरत्वमित्यर्थः । अपहाय विहाय सीता स्थिता । रामसन्निधाविति शेषः । यद्यहं न निशाचरगामिनी तर्हि भूमिर्मां ग्रसत्विति शपथं चकारेति भावः ।।३३।।

**अनन्तभट्टीया–** [यज्ञपत्नीत्वे इति शेषः] भूमिशपथच्छलात् अहं दुष्टा चेत् भूमिर्ग्रसतु इति शपथव्याजेनेत्यर्थः । स्थिता रामसमीप इति शेषः ।।३३-३५।।

**ताम्र–** भूमिशपथच्छलादहं अदुष्टा चेद्भूर्विवरं प्रददात्विति भूमिप्रवेशशपथव्याजादित्यर्थः ।।३३।।

**चट्टी–** तेन सीतारामाभ्यां दर्शितवियोगेन असुराः अन्धःतमः ईयुः प्रापुः । अग्निसाक्षिकं वियोगदर्शनप्रकारमाह– **यज्ञमिति** ।। असौ श्रीरामः मैथिलीं सीतां स्वेन क्रियमाणयज्ञं प्रत्याह्वयत् आकारयामास । तत्र यज्ञे भूमिशपथच्छलात् यद्यहं मनोवाक्कायकर्मभिः श्रीराममेव समर्थये तदा मे विवरं देहि नो चेन्मास्तु इति भूमिं प्रति शपथस्य छलाद् व्याजात् नृणां दृष्टिमार्गं गोचरत्वं इत्यर्थः । अपहाय

---

१. पाद्मे उ.ख.२४४.२४-३२ उक्तानुपूर्वीविशिष्टा श्लोकाः न दृश्यन्ते परन्तु रामायणे उत्तरकाण्डे एव उपलभ्यन्ते ।

विहाय सा सीता श्रीरामसन्निधाविति शेषः । तथाचोक्तं रामायणे [उ.का.९७.१५] । 'कर्मणा मनसा वाचा यदा रामं समर्थये । ततो मे माधवी देवि विवरं दातुमर्हसि ।।'इति च । उक्तश्च– 'कृताञ्जलिर्बाष्पकुला सीता यज्ञं विवेश ह' इत्युपक्रम्य । सर्वान् समागतान् दृष्ट्वा सीता कौशेयवासिनी । उदङ्मुखा ह्यधोदृष्टिः प्राञ्जलिर्वाक्यमब्रवीत् ।। यदाहं राघवादन्यं मनसापि न चिन्तये । तथा मे माधवी देवी विवरं दातुमर्हसि ।। तथा वदन्त्यास्सीतायाः प्रादुरासीत्समन्ततः । भूतलाद्दिव्यमत्यर्थं सिंहासनमनुत्तमम् ।। ध्रियमाणं शिरोभिस्तैः उदतिष्ठद्दुरासदम् । दिव्यं दिव्येन वपुषा नागैरमितविक्रमैः ।। तस्मिंस्तु धरणी देवी सीतां सङ्गृह्य बाहुना । स्वागतं तेऽभ्युवाचैनां आसने चोपवेशयत् ।। तामासनगतां सीतां प्रविशन्तीं रसातलम् । पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरन् ।। साधुवादश्च सुमहान् देवानां परमाद्भुतः ।।' इत्यादि पद्मपुराणे ।।३३।।

**भावचन्द्रिका–** सीतया सह यज्ञं कृत्वा वहुसहस्रवर्षं सुखेन स्थितो रामः निन्दां शुश्राव । ततो गर्भिणी सीता रामेण त्यक्ता लक्ष्मणेन वल्मीकाश्रमं प्रापिता । तत्र यमलौ पुत्रौ सुषुवे । ताभ्यां सह सीता...* सभायां शपथेन वाल्मिकिना चापापायां कृतायां पुत्रौ लोकसम्मतौ कृत्वा राज्यार्थं स्थापयितुमेव रामः हृदिस्थो वाल्मीकिं प्रेरयत् । तत्प्रेरितवाल्मीकिमुखादेव तामाश्रमादाह्वयदित्याह– **यज्ञ इति** ।। सुवर्णमयसीतां कृत्वा यज्ञकरणकाल इत्यर्थः । इदं सर्वं पद्मपुराणे द्रष्टव्यम् । कूर्मे च त्रिंशेऽध्याये– कृत्वा च रावणवधं रामो लक्ष्मणसंयुतः । समादाय गतः सीतां लज्जाकुलितमानसः ।। सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावके दीप्ते ददाह त्वनलोऽपि ताम् ।। दग्ध्वा मायामयीं सीतां भगवान् हव्यवाहनः । रामायादर्शयत्सीतां पेतुः खे पुष्पवृष्टयः ।।' इति ।।३३-३५।।

**प्रमाणसंग्रह– ।। तत्र भूमिशपथच्छलादिति ।।** कृताञ्जलिर्बाष्पकुला सीता यज्ञं विवेश ह' इत्युपक्रम्य । सर्वान् समागतान् दृष्ट्वा सीता कौशेयवासिनी । उदङ्मुखा ह्यधोदृष्टिः प्राञ्जलिर्वाक्यमब्रवीत् ।। यदाहं राघवादन्यं मनसापि न चिन्तये । तथा मे माधवी देवी विवरं दातुमर्हसि ।। तथा वदन्त्यास्सीतायाः प्रादुरासीत्समन्ततः । भूतलाद्दिव्यमत्यर्थं सिंहासनमनुत्तमम् ।। ध्रियमाणं शिरोभिस्तैः उदतिष्ठद्दुरासदम् । दिव्यं दिव्येन वपुषा नागैरमितविक्रमैः ।। तस्मिंस्तु धरणी देवी सीतां सङ्गृह्य वाहुना । स्वागतं तेऽभ्युवाचैनां आसने चोपवेशयत् ।। तामासनगतां सीतां प्रविशन्तीं रसातलम् । पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरन् ।। साधुवादश्च सुमहान् देवानां परमाद्भुतः ।।' इत्यादि ।।

**गूढवाक्यार्थ–** असौ रामः वसिष्ठाश्रमगतां सीतां यज्ञं प्रति आह्वयच्च । भूमिशपथच्छलात् अहमदुष्टा चेत् भूमे मम अवकाशं देहीति शपथव्याजात् ।।३३।।

**गुरुं हि जगतो विष्णुर्ब्रह्माणमसृजत् स्वयम् ।**
**तेन तद्वचनं सत्सु नानृतं कुरुते क्वचित् ॥३४॥**

**व्यासतीर्थीया–** अज्ञप्रतीत्यापि सीतावियुक्तस्यैव भगवतः आसुरांस्तमः प्रवेशयितुं सामर्थ्यभावेऽपि किमर्थं ब्रह्मवाक्यं ऋतं कुर्वन् वियुक्त इव प्रतीयमानः तमस्यपातयदित्यतो निमित्तमाह– **गुरुमित्यादिना** ॥३४-३८॥

**वेदाङ्गतीर्थीया–** 'ब्रह्मवाक्यमृतमेव कारयन्' 'सोऽज्ञसाक्षिकमभूत् वियुक्तवत्' इत्युक्तम् । कुतस्तद्वाक्यमृतं कर्तव्यमित्यतस्तत्र हेतुमाह– **गुरुमित्यादिना** ॥ तेन तस्य गुरुत्वेन । सत्सु सज्जनविषये । तद्वचनं ब्रह्मवचनम् ॥३४-३७॥

**वरदराजीया–** ननु ब्रह्मणो वचनमेवानृतं स्यात् को दोषः तथात्वे तन्निन्दनं न कर्तव्यमित्यत आह– **गुरुं हीति** ॥ विष्णुः स्वयं जगतो गुरुं ब्रह्माणमसृजत् । तेन गुरुत्वेन सत्सु सज्जनेषु विषये तस्य ब्रह्मणो वचनं क्वचिदपि अनृतमसत्यं न कुरुते ॥३४॥

**जनार्दनीया–** 'ब्रह्मवाक्यमृतमेव कारयन्' इत्याद्युक्तस्य हेतुमाह– **गुरुमित्यादिना** ॥ स्वयं रामरूपो विष्णुः गुरुं कृत्वा असृजत् हि यस्मात् तेन कारणेन तस्य ब्रह्मणः वचनं सत्सु विषये क्वचिदिहामुत्रेत्यर्थः ॥३४॥

**ताम्रपर्णीया–** ब्रह्मवाक्यमृतं कर्तुं सुराणकनिन्दामात्रेण कुतः सीतां जहौ ब्रह्मवाक्यस्यासद्विषयस्य अनृतत्वोपपत्तेः इत्यत आह– **गुरुमिति** ॥३४॥

**चट्टी–** ब्रह्मवाक्यमृतमेव कारयन्नित्याद्युक्तम् । तत्र हेतुमाह– **गुरुमित्यादिना** ॥ स्वयं श्रीरामरूपो विष्णुः ब्रह्माणं जगतः गुरुं कृत्वा असृजत् । हि यस्मात्तेन कारणेन ब्रह्मणः वचनं सत्सु सज्जनेषु विषये क्वचिदिहामुत्रेत्यर्थः । अनृतमसत्यं न कुरुते ॥३४॥

**भारतश्री–** ब्रह्मवाक्यमृतमेव कारयन् इत्युक्तम् । तत्र निमित्तमाह– **गुरुं हीति** ॥३४॥ [तु एव । कुत इत्यनेन सम्बध्यते ।]

**नासत्स्वप्यनृतं कुर्याद् वचनं पारलौकिकम् ।**
**ऐहिकं त्वसुरेष्वेव क्वचिद्धन्ति जनार्दनः ॥३५॥**

**वादिराजीया–** नासत्स्वप्यनृतं कुर्यात् इत्यत्र पारलौकिकवचनस्य क्वचिदनृतत्वे सत्स्वप्यनृतत्वशङ्क्या सतां अपि मोक्षमार्गे प्रवृत्तिः कुण्ठिता स्यात् । अतः पारलौकिकं वचनं पारलौकिकवचनं असत्स्वप्यनृतं न कुर्यात् । ऐहिकं तु सतामनपेक्षितमेवेति तत्रानृतत्वशङ्कायामपि न काचिद्धानिरिति भावः ॥

**वरदराजीया–** तर्हि सुराणकानां दुष्टत्वात् तद्विषये ब्रह्मवचनं अनृतं भवत्वित्यत आह– **नेति** ।। असत्सु असज्जनेष्वपि विषये पारलौकिकीं परलोकविषयं मोक्षं भविष्यत्यनेनेत्येवं रूपं ब्रह्मणो वचनं नो अनृतं कुर्यात् । असुरेष्वसत्स्वपि ऐहिकं अजेयत्वावध्यत्वसार्वभौमादिविषयकं वचनं क्वचिद्धन्ति क्वचित् मानयतीत्यर्थः ।।३५।।

**जनार्दनीया–** असत्स्वपि दुष्टेष्वपि दैत्येष्वपीति यावत् । पारलौकिकं वचनं मोक्षो भवेदिति परलोकसम्वन्धि वचनं असुरेष्वेव न तु सज्जनेष्वित्यर्थः । एवकारस्त्वन्ययोगव्यवच्छेदकः । ऐहिकं अवध्यादिभूलोकसम्वन्धिवचनं क्वचिद् हन्ति नाशयति क्वचित् मानयतीत्यर्थः ।।३५।।

**अनन्तभट्टीया–** पारलौकिकं न असुराणां परलोको नेत्येवं रूपः । ऐहिकं सर्वजयित्वं...* आयुष्यादिकं भविष्यतीत्यादिकं रूपम् ।।३५।।

**ताम्रपर्णीया–** क्वचिदिति परलोकविषये इह लोकविषये चेत्यर्थः ।।३५।।

**चट्टी–** तर्हि सुराणकानां दुष्टत्वात् तद्विषये ब्रह्मवचनमनृतं भवत्वित्यत आह– **नेति** ।। असत्स्वपि दुष्टेष्वपि विषये पारलौकिकं वचनं मोक्षो भवेदिति परलोकसम्वन्धि ब्रह्मणो वचनं अनृतं न कुर्यात् । असुरेषु असत्स्वपि ऐहिकं अजेयत्वावध्यत्वसार्वभौमत्वादिविषयकं वचनं जनार्दनः क्वचिद्धन्ति नाशयति क्वचिन्मानयतीत्यर्थः ।।३५।।

**भावचन्द्रिका–** पारलौकिकं परलोको भूयादिति वचनं 'यावदेव रमया' इत्यादिरूपम् ।।

**निजाधिक्यस्य विज्ञप्त्यै क्वचिद् वायुस्तदाज्ञया ।**
**हन्ति ब्रह्मत्वमात्मीयमद्धा ज्ञापयितुं प्रभुः ।।३६।।**

**वरदराजीया–** ननु तेषामैहिकफलयोग्यत्वादैहिकविषयं ब्रह्मवचनं कुतो हन्तीत्यत उक्तम्– **निजेति** ।। ब्रह्मणोऽप्यहमुत्कृष्ट इति ज्ञापयितुमित्यर्थः । निजेत्यस्योत्तरत्र वा सम्बन्धः । जनार्दन इति विशेषणं वायुव्यतिरिक्तव्यावर्तकमित्याह– **निजेति** ।। वायुस्तस्य जनार्दनस्य आज्ञया निजाधिक्यस्य रुद्राधिक्यस्य विज्ञप्त्यै आत्मीयं ब्रह्मत्वं भविष्यद्ब्रह्मत्वं अद्धा निश्चयेन ज्ञापयितुं च क्वचिद् ब्रह्मविषयं हन्ति यतः प्रभुः समर्थः इत्यर्थः ।।३६।।

**जनार्दनीया–** क्वचिदपि कुतो हन्तीत्यत आह– **निजेति** ।। निजस्य स्वकीयस्य आधिक्यस्य ब्रह्मणः सकाशात् उत्तमत्वस्य विज्ञप्त्यै ज्ञापनार्थम् । सतामिति शेषः । हन्तीति सम्बन्धः । प्रभुः वायुः तस्य हरेराज्ञया निजस्य स्वकीयस्य । आधिक्यस्य शेषादिभ्यः उत्तमत्वस्य विज्ञप्त्यै 'निजमात्मीय-

नित्ययोः' इत्यभिधानम् । आत्मीयं स्वकीयं ब्रह्मत्वं भविष्यच्चतुर्मुखत्वं अद्धा निश्चयेन ज्ञापयितुं च असुरेषु ऐहिकं हन्तीति सम्बन्धः । 'निजाधिक्यस्य' इत्युभयत्र सम्बन्ध्यते ।।३६।।

**अनन्तभट्टीया–** तत्करणप्रयोजनमाह– **निजेति** ।।...* न किञ्चिदित्यर्थः ।।३६–३८।।

**ताम्रपर्णीया–** ।। **पारलौकिकमिति** ।। पारलौकिकवचनस्य क्वचिदनृतत्वे फलसन्देहेन बह्वायाससाध्या पारलौकिकीप्रवृत्तिः सतामपि कुण्ठिता स्यादिति भावः । असुरेष्वेव क्वचित् हन्ति न तु सत्सु वाक्यं पारलौकिकमैहिकं च ।।३६–३७।।

**चट्टी–** ननु तेषां ऐहिकफलयोग्यत्वात् ऐहिकविषयं ब्रह्मवचनं कुतो हन्तीत्यत आह– **निजेति** ।। निजस्य स्वस्य आधिक्यस्य ब्रह्मणः सकाशात् उत्तमत्वस्य विज्ञप्त्यै ज्ञापनार्थं सतामिति शेषः । हन्तीति सम्बन्धः । निजाधिक्यस्येत्युभयत्र सम्बध्यते । वायुः तस्य जनार्दनस्य आज्ञया निजाधिक्यस्य रुद्राद्याधिक्यस्य विज्ञप्त्यै आत्मीयं ब्रह्मत्वं भविष्यद्ब्रह्मत्वं अद्धा निश्चयेन ज्ञापयितुं च क्वचिद् ब्रह्मवचनं हन्ति । यतः प्रभुः समर्थः ।।३६।।

**नान्यः कश्चित् तद्वराणां शापानामप्यतिक्रमी ।**
**अयोग्येषु तु रुद्रादिवाक्यं तौ कुरुतो मृषा ।**
**एकदेशेन सत्यं तु योग्येष्वपि कदाचन ।।३७।।**

**वेदाङ्गतीर्थीया–** तौ विष्णुवायू ।।३७–३९।।

**वादिराजीया–** एकदेशेन सत्यं तु इत्यत्र योग्येष्वपि तु विशेषेण सत्यं कुरुते । कदाचन एकदेशेन सत्यं न कुरुत इति सम्बन्धः । दूर्वाससो वचनस्य अम्बरीषे व्यर्थीकरणाच्चेति भावः ।।३७ ।।

**वरदराजीया–** विष्णुवायू विना अन्यः पुरुषस्तस्य ब्रह्मणो वराणां शापानां च अतिक्रमी तिरस्कर्ता क्वचित्काले देशे च नास्ति । अतो विष्णुवायू अयोग्येषु विषये तत्फलायोग्ये तत्फलदाने क्रियमाणे तत् रुद्रादिवाक्यं मृषा अनृतं कुरुत इत्यर्थः ।।३७।।

**जनार्दनीया–** अन्यः विष्णुवायुभ्यां अन्यः कश्चित्पुरुषः तस्य ब्रह्मणः वराणां शापानां अतिक्रमी अतिक्रमणशीलः । अपि क्वचिदपि नास्ति । अयोग्येषु तु योग्यताधिक्यं रुद्रादिवाक्यं तौ विष्णुवायू मृषा कुरुतः । योग्येष्वपि एकदेशेन ईषदित्यर्थः । तु अधिकम् । योग्यतापेक्षया ईषदधिकरुद्रादिवाक्यमित्यर्थः । कदाचन सत्यं कुरुतः ।।३७।।

**ताम्रपर्णीया–** ।। **एकदेशेनेति** ।। ऐहिकविषयैकदेशरूपेण विद्यमानं वाक्यं ऐहिकम् । रुद्रादिवाक्य-मयोग्येष्वप्येकदेशेन सत्यं कुरुत इत्यर्थः ।। **योग्येष्विति** ।। योग्येष्वप्यैहिकं रुद्रादिवाक्यमेकदेशेन सत्यमेकदेशेन मृषा कुरुत इत्यर्थः । यद्वक्ष्यति 'अतः शिववरेऽप्येषा जज्ञे योषैव नान्यथा' [११.११३] इति । कदाचन विष्णोरिति योज्यम् ।।३७।।

**चट्टी–** अन्यः विष्णुवायुभ्यां अन्यः कश्चित्पुरुषः तस्य ब्रह्मणः वराणां शापानां च अतिक्रमी अतिक्रमणशीलो अपि क्वचिदपि नास्ति । तौ विष्णुवायू अयोग्येषु विषये तत्तत्फलायोग्येषु तत्तत्फलदाने रुद्रादिभिः क्रियमाणेन तत् रुद्रादिवाक्यं अनृतं कुरुत इत्यर्थः ।।३७ ।।

**भावचन्द्रिका–** शापानामिति प्रासङ्गिकं दृष्टान्तार्थं वा । जयविजयप्रसङ्गेन सनकादीन् प्रत्युक्तं चोक्तम् । अतः 'न विष्णोः' इति वरशापविषयम् ।।३७।।

**न विष्णोर्वचनं क्वापि मृषा भवति कस्यचित् ।**
**एतदर्थोऽवतारस्तु विष्णोर्भवति सर्वदा ।।३८।।**

**व्यासतीर्थीया–** जनार्दनो निजाधिक्यस्य विज्ञप्त्यै ऐहिकत्वे असुरेष्विव क्वचिद्धन्तीति यदुक्तं निजाधिक्यज्ञापनं प्रयोजनं तदवतारस्यापि प्रयोजनमित्याह– **एतदर्थ इति** ।।३८–४१।।

**वादिराजीया–** 'न विष्णोर्वचनं क्वापि' इत्यत्र असुरान् प्रति बुद्धवचनं अनृतमभूदिति शङ्कां देवान् प्रति तद्वाक्यमपि सत्यमेव असुराः तु स्वभ्रान्त्या अन्यथा व्यजानन्निति वक्ष्यन् आचार्य एव परिहरिष्यति । अतो नोक्तभङ्ग इति ज्ञेयम् । व्यासोऽपि दुर्दर्शनरीत्या शैवपुराणादिकं कृतवान् । अतस्तान्यपि तदनुवादरूपाण्येव न साक्षात् स्ववाक्यनि । अतोऽपि न भगवद्वचनस्य अनृतत्वशङ्केत्यनु-सन्धेयम् । अत एव 'सत्यव्रतम्' इति भगवन्तं गृणन्ति । भगवानपि पदत्रयं देहीति स्वोक्तेः सत्यत्वरक्षणार्थं स्वपदान्येव वर्धयामास न तु त्रित्वभङ्गं कृतवान् । शिशुपालमातरं प्रति 'शतमागांसि सोढाऽहम्' इति स्वोक्तेः सत्यतायै शतापराधपर्यन्तं शक्तोऽपि शिशुपालं न जघान । रुक्मिणीं प्रति प्रेमकलहसमये 'निष्किञ्चना वयं शश्वत् निष्किञ्चनजनप्रियाः । तस्मात् प्रायेण नो ह्याढ्या न भजन्ति सुमध्यमे ।।' [भाग.७५.१८] इत्यदीनामापततोऽसत्यार्थतया प्रतीयमानस्ववचनानां

निष्किञ्चनो ननु भवान्न यतोऽस्ति किञ्चिद्यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ।
न त्वा विदन्त्यसुतृपोऽन्तिकमाढ्यतान्धाः प्रेष्ठः सतां बलिभुजामपि योऽन्तरास्से ।। [भाग.७५.४१]

इत्यादिना रुक्मिण्योक्तानुकूलसत्यार्थान् स्ववचनसत्यतायै 'मयोदितं यदन्वर्थं तत्सर्वं सत्यमेव हि' इति स्वयमप्यङ्गीचकार । अतः परिहासकथायामपि भगवद्वाक्यं नानृतं किमुतान्यत्रेति ज्ञेयम् । अत एव

नित्ययोः' इत्यभिधानम् । आत्मीयं स्वकीयं ब्रह्मत्वं भविष्यचतुर्मुखत्वं अद्धा निश्चयेन ज्ञापयितुं च असुरेषु ऐहिकं हन्तीति सम्बन्धः । 'निजाधिक्यस्य' इत्युभयत्र सम्बन्ध्यते ।।३६।।

**अनन्तभट्टीया–** तत्करणप्रयोजनमाह– **निजेति** ।।...* न किञ्चिदित्यर्थः ।।३६–३८।।

**ताम्रपर्णीया–** ।। **पारलौकिकमिति** ।। पारलौकिकवचनस्य क्वचिदनृतत्वे फलसन्देहेन बह्वायाससाध्या पारलौकिकीप्रवृत्तिः सतामपि कुण्ठिता स्यादिति भावः । असुरेष्वेव क्वचित् हन्ति न तु सत्सु वाक्यं पारलौकिकमैहिकं च ।।३६–३७।।

**चट्टी–** ननु तेषां ऐहिकफलयोग्यत्वात् ऐहिकविषयं ब्रह्मवचनं कुतो हन्तीत्यत आह– **निजेति** ।। निजस्य स्वस्य आधिक्यस्य ब्रह्मणः सकाशात् उत्तमत्वस्य विज्ञप्त्यै ज्ञापनार्थं सतामिति शेषः । हन्तीति सम्बन्धः । निजाधिक्यस्येत्युभयत्र सम्बध्यते । वायुः तस्य जनार्दनस्य आज्ञया निजाधिक्यस्य रुद्राद्याधिक्यस्य विज्ञप्त्यै आत्मीयं ब्रह्मत्वं भविष्यद्ब्रह्मत्वं अद्धा निश्चयेन ज्ञापयितुं च क्वचिद् ब्रह्मवचनं हन्ति । यतः प्रभुः समर्थः ।।३६।।

**नान्यः कश्चित् तद्वराणां शापानामप्यतिक्रमी ।**
**अयोग्येषु तु रुद्रादिवाक्यं तौ कुरुतो मृषा ।**
**एकदेशेन सत्यं तु योग्येष्वपि कदाचन ।।३७।।**

**वेदाङ्गतीर्थीया–** तौ विष्णुवायू ।।३७–३९।।

**वादिराजीया–** एकदेशेन सत्यं तु इत्यत्र योग्येष्वपि तु विशेषेण सत्यं कुरुते । कदाचन एकदेशेन सत्यं न कुरुत इति सम्बन्धः । दूर्वाससो वचनस्य अम्बरीषे व्यर्थीकरणाच्चेति भावः ।।३७ ।।

**वरदराजीया–** विष्णुवायू विना अन्यः पुरुषस्तस्य ब्रह्मणो वराणां शापानां च अतिक्रमी तिरस्कर्ता क्वचित्काले देशे च नास्ति । अतो विष्णुवायू अयोग्येषु विषये तत्फलायोग्ये तत्फलदाने क्रियमाणे तत् रुद्रादिवाक्यं मृषा अनृतं कुरुत इत्यर्थः ।।३७।।

**जनार्दनीया–** अन्यः विष्णुवायुभ्यां अन्यः कश्चित्पुरुषः तस्य ब्रह्मणः वराणां शापानां अतिक्रमी अतिक्रमणशीलः । अपि क्वचिदपि नास्ति । अयोग्येषु तु योग्यताधिक्यं रुद्रादिवाक्यं तौ विष्णुवायू मृषा कुरुतः । योग्येष्वपि एकदेशेन ईषदित्यर्थः । तु अधिकम् । योग्यतापेक्षया ईषदधिकरुद्रादिवाक्यमित्यर्थः । कदाचन सत्यं कुरुतः ।।३७।।

**ताम्रपर्णीया–** ।। **एकदेशेनेति** ।। ऐहिकविषयैकदेशरूपेण विद्यमानं वाक्यं ऐहिकम् । रुद्रादिवाक्य-मयोग्येष्वप्येकदेशेन सत्यं कुरुत इत्यर्थः ।। **योग्येष्विति** ।। योग्येष्वप्यैहिकं रुद्रादिवाक्यमेकदेशेन सत्यमेकदेशेन मृषा कुरुत इत्यर्थः । यद्वक्ष्यति 'अतः शिववरेऽप्येषा जज्ञे योषैव नान्यथा' [११.११३] इति । कदाचन विष्णोरिति योज्यम् ।।३७।।

**चट्टी–** अन्यः विष्णुवायुभ्यां अन्यः कश्चित्पुरुषः तस्य ब्रह्मणः वराणां शापानां च अतिक्रमी अतिक्रमणशीलो अपि क्वचिदपि नास्ति । तौ विष्णुवायू अयोग्येषु विषये तत्तत्फलायोग्येषु तत्तत्फलदाने रुद्रादिभिः क्रियमाणेन तत् रुद्रादिवाक्यं अनृतं कुरुत इत्यर्थः ।।३७ ।।

**भावचन्द्रिका–** शापानामिति प्रासङ्गिकं दृष्टान्तार्थं वा । जयविजयप्रसङ्गेन सनकादीन् प्रत्युक्तं चोक्तम् । अतः 'न विष्णोः' इति वरशापविषयम् ।।३७।।

**न विष्णोर्वचनं क्वापि मृषा भवति कस्यचित् ।**
**एतदर्थोऽवतारस्तु विष्णोर्भवति सर्वदा ।।३८।।**

**व्यासतीर्थीया–** जनार्दनो निजाधिक्यस्य विज्ञप्त्यै ऐहिकत्वे असुरेष्विव क्वचिद्धन्तीति यदुक्तं निजाधिक्यज्ञापनं प्रयोजनं तदवतारस्यापि प्रयोजनमित्याह– **एतदर्थ इति** ।।३८–४१।।

**वादिराजीया–** 'न विष्णोर्वचनं क्वापि' इत्यत्र असुरान् प्रति बुद्धवचनं अनृतमभूदिति शङ्कां देवान् प्रति तद्वाक्यमपि सत्यमेव असुराः तु स्वभ्रान्त्या अन्यथा व्यजानन्निति वक्ष्यन् आचार्य एव परिहरिष्यति । अतो नोक्तभङ्ग इति ज्ञेयम् । व्यासोऽपि दुर्दर्शनरीत्या शैवपुराणादिकं कृतवान् । अतस्तान्यपि तदनुवादरूपाण्येव न साक्षात् स्ववाक्यनि । अतोऽपि न भगवद्वचनस्य अनृतत्वशङ्केत्यनु-सन्धेयम् । अत एव 'सत्यव्रतम्' इति भगवन्तं गृणन्ति । भगवानपि पदत्रयं देहीति स्वोक्तेः सत्यत्वरक्षणार्थं स्वपदान्येव वर्धयामास न तु त्रित्वभङ्गं कृतवान् । शिशुपालमातरं प्रति 'शतमागांसि सोढाऽहम्' इति स्वोक्तेः सत्यतायै शतापराधपर्यन्तं शक्तोऽपि शिशुपालं न जघान । रुक्मिणीं प्रति प्रेमकलहसमये 'निष्किञ्चना वयं शश्वत् निष्किञ्चनजनप्रियाः । तस्मात् प्रायेण नो ह्याढ्या न भजन्ति सुमध्यमे ।।' [भाग.७५.१८] इत्यदीनामापततोऽसत्यार्थतया प्रतीयमानस्ववचनानां

निष्किञ्चनो ननु भवान्न यतोऽस्ति किञ्चियस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ।
न त्वा विदन्त्यसुतृपोऽन्तिकमाढ्यतान्धाः प्रेष्ठः सतां बलिभुजामपि योऽन्तरास्से ।। [भाग.७५.४१]

इत्यादिना रुक्मिण्योक्तानुकूलसत्यार्थान् स्ववचनसत्यतायै 'मयोदितं यदन्वर्थं तत्सर्वं सत्यमेव हि' इति स्वयमप्यङ्गीचकार । अतः परिहासकथायामपि भगवद्वाक्यं नानृतं किमुतान्यत्रेति ज्ञेयम् । अत एव

रुक्मिणीरूपश्रीरप्युवाच 'नैवालीकं भवत्येव वचस्ते मधुसूदन' इति [भाग.७५.५१] । एतदर्थः एतत् पूर्वोक्तनानाविधमर्यादारक्षणमर्थः प्रयोजनं यस्य सः तथोक्तः ।।३८–४०।।

**वरदराजीया–** कदाचित् फलयोग्येषु अधिकफलदाने रुद्रादिवाक्यं एकदेशेन योग्यफलांशमादाय सत्यं कुरुतः । अयोग्यफलांशापेक्षया योग्येष्वपि मृषैव कुरुत इत्यर्थः । कस्यचिदपि पुरुषस्य केन विष्णोर्वचनं क्वापि देशे काले च न मृषा भवति । विष्णूक्तं केनाप्यनृतं कर्तुं न शक्यत इति भावः । सर्वदा सर्वकालेषु विष्णोरवतारो रामकृष्णाद्यवतारः एतदर्थो रुद्रादिदत्तवरभङ्गार्थः । स्वदत्तवररक्षणार्थमित्यर्थः ।।३८।।

**जनार्दनीया–** विष्णोर्वचनं कस्यचित् पुरुषस्य क्वापि कस्मिंश्चिद्देशे कालेऽपि । एतदेव स्वावर-रक्षणान्यवरविनाशनरूपः अर्थः प्रयोजनं यस्य स तथा । विष्णोरवतारः सर्वदा सर्वकालेषु भवति ।।

**अनन्तभट्टीया–** एतदर्थमिति...* नाद्यर्थम् ।।३८–४०।।

**ताम्रपर्णीया–** क्व विषये कस्यचित्सतोऽसतो वा ।। **एतदर्थ इति** ।। 'मयैव वध्यौ भवतम्' इत्यादि स्ववचनामोघत्वार्थः । ब्रह्मवरामोघत्वार्थः रुद्रवरमोघत्वार्थः । निजाधिक्यस्य विज्ञप्त्यै क्वचिद् ब्रह्मवरमोघत्वार्थ इत्यर्थः ।।३८–४२।।

**चट्टी–** कदाचित् फलयोग्येषु अधिकफलदाने रुद्रादिवाक्यं एकदेशेन योग्यफलांशपेक्षया सत्यं कुरुतः । अयोग्यफलांशापेक्षया मृषैव कुरुत इत्यर्थः । विष्णोर्वचनं कस्यचित् पुरुषस्य क्वापि देशे काले च मृषा न भवति । विष्णोरुक्तं केनाप्यनृतं कर्तुं न शक्यमिति भावः । सर्वदा सर्वकालेषु विष्णोरवतारः श्रीरामकृष्णाद्यवतारः एषः अर्थो यस्य सः एतदर्थं भवति । रुद्रादिदत्तवरभङ्गार्थः स्वदत्तरक्षणार्थ इत्यर्थः ।।

**प्रविश्य भूमौ सा देवी लोकदृष्ट्यनुसारतः ।**
**रेमे [१]रामेणावियुक्ता भास्करेण प्रभा यथा ।।३९।।**

**वेदाङ्गतीर्थीया–** अथ प्रकृतमनुसरति– **प्रविश्येति** ।। प्रभा भास्करप्रभा यथा भास्करेणावियुक्ता तथा रामेणावियुक्ता ।।३९–४३।।

**वरदराजीया–** तस्मात् पारलौकिकं ब्रह्मणो वचनमृतं कर्तुमेव नटनं कृतमित्युपसंहरति– **प्रविश्येति** ।। सा देवी सीता [लोकदृष्टिमनुसृत्य] अपेक्ष्य भूमौ प्रविश्य भास्करेण प्रभा यथा तथा रामेणावियुक्ता सीता रामेण साकं रेमे ।।३९।।

---

१. 'अनन्या हि मया सीता भास्करेण प्रभा यथा' इत्यार्षे.७.११८.१९ । युद्ध.कांडेऽपि १२१/२०.

**जनार्दनीया–** प्रकृतमनुसरति– **प्रविश्येति** ।। सा देवी सीता । अनुसारतः अनुसारेण । भूमौ प्रविश्य रामेण संयुक्ता सती रेमे । का केनैव । प्रभा नित्यावियोगिनी सूर्यकान्तिः भास्करेण सूर्येण यथा तथेति सम्बन्धः ।।३९।।

**चट्टी–** प्रकृतमनुसरति– **प्रविश्येति** ।। लोकदृष्ट्यनुसारतः लोकदृष्ट्यनुसारेण भूमौ प्रविश्य भास्करेण सूर्येण प्रभा यथा तथा श्रीरामेणावियुक्ता सीता श्रीरामेण साकं रेमे ।।३९।।

**एवं रमालालितपादपल्लवः पुनः स यज्ञैरयजत्स्वमेव ।**
**वराश्वमेधादिभिराप्तकामो रेमेऽभिरामो नृपतीन् विशिक्षयन् ।।४०।।**

**वादिराजीया–** एवं रमालालितपादपल्लव इत्यत्र एवं पूर्वोक्तप्रकारेण रमया अदृश्यया सीतया लालितपादपल्लवस्सन् रेमे । नृपतीन् विशिक्षयन् सन् वराश्वामेधादिभिर्यज्ञैः पुनश्च स्वमेवायजच्चेति योजना ।।४०–४२।।

**मधुसूदनीया–** ।। **एवं रमालालितपादपल्लव इति** ।। [१]ननु पत्न्यभावात् कथं रामो यज्ञमकरोत् । पत्नीसाध्यत्वाद्यज्ञादेरिति चेत्सत्यम् । 'पत्नीं मे काञ्चनीं सौम्य दीक्षार्थं यज्ञकर्मणि' इति रामायणवाक्येन [उ.का.९१.२५] पत्न्याकृतिसद्भावात् यज्ञकरणोपपत्तेरिति विशेषवाची तुशब्दार्थश्चशब्दः ।।

**वरदराजीया–** एवमुक्तरीत्या रमया सीतया लालिते पादपल्लवे यस्य सः पुनरपि वराश्वमेधादिभिः उत्तमकल्पकाश्वमेधादिभिः यज्ञैः स्वं स्वात्मानमेवायजत् । किं कुर्वन् नृपतीन् विशिक्षयन् उपदिशन् स्वयमाप्तकामोऽपि सीतानुग्रहार्थं रेम इत्यर्थः ।।४०।।

**जनार्दनीया–** एवं अनेन प्रकारेण रमया सीतया लालितपादपल्लवो रामः पुनश्चाश्वमेधादिभिर्यज्ञैः नृपतीन् विशिक्षयन् नृपतिभिर्यज्ञाः कर्तव्या इत्युपदेशं कुर्वन्नित्यर्थः । स्वं स्वात्मानमयजत् । आप्तकामः प्राप्तसकलाभीष्टसिद्धिः अभिरामः मनोहरो रामः रेमे । सीतयेति शेषः ।।४०।।

**अनन्तभट्टीया–** स्वमात्मानमुद्दिश्य ।।४०–४२।।

---

१. अत्राहुस्तिलककृतः । 'नच पत्न्या अपि यजमानत्वाद्यज्ञस्वामित्वाच्च स्वामिनो यजमानस्य प्रतिनिधिप्रतिषेधात् कथं पत्न्या प्रतिनिधिः'स्वामिनोऽग्नेर्देवातायाश्च शब्दात्कर्मणश्च प्रतिनिधिर्निवृत्तः' इत्यापस्तम्भसूत्रात् स्वामिनो यजमानस्य पत्न्या वा इति चेन्न । 'यस्य भार्याऽन्यदेशस्था नेष्यते पतिनाथवा । अशक्ता प्रतिकूला वा तस्याः प्रतिनिधिक्रिया ।।' इत्येवं विधे विषये प्रतिनिधेरनुमतत्वात् । 'अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः । अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः ।। सौवर्णीं वा षोडशपलैः माषकैः षोडशैरपि ।।' इति स्मृतेश्च 'मृतायामपि भार्यायां वैदिकीं न त्यजेद्द्विजः । उपाधिनापि तत्कर्म यावज्जीवं समापयेत् ।।' इति विष्णुस्मृतेश्च ।

**चट्टी–** एवमुक्तरीत्या रमया अदृश्यया सीतया लालितौ पदपल्लवौ यस्य सः अभिरामः मनोहरः श्रीरामः नृपतीन् शिक्षयन् नृपतिभिर्यज्ञाः कर्तव्या इत्युपदेशं कुर्वन्नित्यर्थः । पुनरपि । वराश्वमेधादिभिर्यज्ञैः स्वं स्वात्मानमेवायजत् । आप्ताः कामाः येन स तथा तादृशोऽपि सीतायाः अनुग्रहार्थम् । 'यज्ञकर्मणि' इति रामायणवाक्ये पत्न्याकृतिसद्भावाद्यज्ञकर्मणोपपत्तिरिति विशेषवाचि तुशब्दार्थश्चशब्दः ॥४०॥

**भावचन्द्रिका–** ॥ **पुनश्चेति** ॥ 'सुवर्णमयसीताप्रतिमां कृत्वा तया सह' इति ॥४०–६५॥

**प्रमाणसंग्रह–** ॥ **पुनश्च यज्ञैरयजत् इति** ॥ 'पत्नीं मे काञ्चनीं सौम्य दीक्षार्थं यज्ञकर्मणि' इति ॥

**रामस्य दृश्या त्वन्येषामदृश्या जनकात्मजा ।**
**भूमिप्रवेशादूर्ध्वं सा रेमे सप्तशतं समाः ॥४१॥**

**व्यासतीर्थीया–** भूमिप्रवेशादूर्ध्वं कियन्तं कालं रेम इति जिज्ञासायामाह– **रामस्येति** ॥४१॥

**वरदराजीया–** सा जनकात्मजा भूमिप्रवेशादूर्ध्वं सप्तशतं सप्तशतानि समा वर्षाणि रामस्य दृश्या भूत्वा अन्येषां प्राणिनामदृश्या अप्रत्यक्षा च भूत्वा रेमे ॥४१॥

**जनार्दनीया–** दृश्या दृष्टिविषया । अदृश्या दृष्ट्यगोचरा । ऊर्ध्वमनन्तरम् । समाः वर्षाणि ॥४१॥

**चट्टी–** सा जनकात्मजा सीता भूमिप्रवेशादूर्ध्वं अनन्तरं सप्तशतं सप्तशतानि समाः वर्षाणि श्रीरामस्य दृश्या दृष्टिविषया अन्येषां अदृश्या दृष्ट्यगोचरा सति रेमे ॥४१॥

**एवं विधान्यगणितानि जनार्दनस्य रामावतारचरितानि तदन्यपुम्भिः ।**
**शक्यानि नैव मनसाऽपि हि तानि कर्तुं ब्रह्मेशशेषपुरुहूतमुखैः सुरैश्च ॥४२॥**

**व्यासतीर्थीया–** एवं काश्चिद्रामावतारकथा उक्ता एव न केवलमन्याश्च बह्व्यः सन्ति ग्रन्थबाहुल्य प्रसङ्गान्नोच्यन्त इति उपसंहरति– **एवं विधानीति** ॥४२-४५॥

**वादिराजीया–** एवं विधान्यगणितानीत्यत्र अनाद्यनन्तकालेष्वप्यनन्तब्रह्मणां दिने दिने क्रियमाणत्वात् अगणितान्यसङ्ख्यातानि रामावतारचरितानि इति योजना ॥४२-४४॥

**वरदराजीया–** एवं रामावतारकथां विस्तरेणोक्त्वा उपसंहरति– **एवमिति** ॥ जनार्दनस्य श्रीविष्णोः एवं विधा प्रकारो येषां तानि अगणितानि अनन्तानि तस्मादन्यैः पुंभिः पुरुषैः मनसापि स्मरणं कर्तुं अशक्यानि किं बहुना इमानि रामावतारकृतानि चरितानि ब्रह्मरुद्रेन्द्रादिभिर्देवैश्च मनसा कर्तुमशक्यानीत्यर्थः ॥

**जनार्दनीया–** जनार्दनस्य हरेः एवंविधान्येतानि ईदृशानि पूर्वोक्तप्रकाराणीत्यर्थः । अगणितानि यानि रामावतारस्य चरितानि कर्माणि सुरैश्च सुरैरपि मनसापि कर्तुं शक्यानि नैव हि यस्मात् तस्मात् तेभ्यः ब्रह्मादिभ्यः अन्यपुम्भिः ऋष्यादिभिः तानि रामावतारचरितानि मनसापि स्मर्तुं कर्तुं शक्यानि नैवेति किं वक्तव्यमित्यर्थः ।।४२।।

**अनन्तभट्टीया–** कर्तुं स्मर्तुम् ।।४२-४४।।

**ताम्रपर्णीया–** ।। तदन्यपुम्भिरिति ।। 'मयैव हन्तुं समरे स शक्य' इत्येतद्विरोधस्तु प्रागेव परिहृतः ।।[1]

**चट्टी–** एवं रामावतारकथां विस्तरेणोक्त्वा उपसंहरति– **एवमिति** ।। जनार्दनस्य हरेः एवं विधान्येतादृशानि पूर्वोक्तप्रकाराणि अगणितानि असङ्ख्यातानि रामावतारचरितानि रामावतारे कृतानि चरितानि कर्माणि तदन्यपुम्भिः तस्मात् अन्यैः पुरुषैः मनसापि स्मरणं कर्तुं नैव शक्यानि हि । ननु स्मरणं कर्तुं समर्थानां ब्रह्मादीनां विद्यमानत्वात् कथं न शक्यानि इत्युच्यते इत्यत आह– **ब्रह्मेति** ।। ब्रह्मेशशेषपुरुहूतमुख्यैः सुरैश्च देवैरपि तानि रामावतारचरितानि मनसापि कर्तुं स्मर्तुं शक्यानि नैव । यद्वा जनार्दनस्य हरेरेवंविधान्यगणितानि रामावतारचरितानि सुरैरपि कर्तुं शक्यानि नैव हि यस्मात् तेभ्यो ब्रह्मादिभ्यो अन्यपुम्भिः ऋष्यादिभिः श्रीरामावतारचरितानि मनसापि कर्तुं शक्यानि नैवेति किं वक्तव्यमित्यर्थः ।।४२।।

**तस्यैवमब्जभवलोकसमामिमां क्ष्मां कृत्वाऽनुशासत उदीक्ष्य गुणान् धरायाः ।**
**वैशेष्यमात्मसदनस्य हि काङ्क्षमाणा वृन्दारकाः कमलजं प्रति तच्छशंसुः ।।४३।।**

**वेदाङ्गतीर्थीया–** तस्य रामस्य क्ष्मामनुशासतः ।।४३-४५।।

**वरदराजीया–** अब्जभवस्य ब्रह्मणो लोकस्य सत्यलोकस्य समामिमां क्ष्मां भूमिं कृत्वा अनुशासतस्तस्य रामस्य धराया गुणानुदीक्ष्य वृन्दारकाः देवाः भूम्यपेक्षया आत्मसदनस्य स्वर्गादेर्वैशेष्यं विशिष्टत्वमाकाङ्क्षमाणा अपेक्ष्यमाणाः कमलजं ब्रह्माणं प्रति शशंसुः विज्ञापितवन्तः ।।४३।।

**जनार्दनीया–** वृन्दारकाः देवाः । तस्य रामस्य । अब्जभवलोकसमां सत्यलोकसमानां इमां क्ष्मां भूमिं कृत्वा अनुशासतः सतः । धरायाः गुणानुदीक्ष्य । आत्मसदनस्य स्वलोकस्यान्तरिक्षादिषण्णां लोकानामित्यर्थः । वैशेष्यं उत्तमत्वं काङ्क्षमाणाः इच्छन्तः कमलजं ब्रह्माणं प्रति शशंसुः कथयामासुः ।।

---

१. ।। तदन्यपुम्भिरिति ।। भगवत्कर्मणां परमविचित्रत्वेन अन्याज्ञेयत्वात् 'न विद्म न विजानीमो यदेतदनुशिष्यात्' [तलवकार] इति श्रुतेरिति भावः ।।४२-७७ ।। इति होपुस्तके अधिकःपाठः ।

**चट्टी–** वृन्दारकाः देवाः तस्य श्रीरामस्य इमां भूमिं अब्जभवस्य ब्रह्मणः लोकस्य सत्यलोकस्य समां कृत्वा एवमनुशासतः धरायाः गुणानुदीक्ष्य आत्मसदनस्य स्वसदनस्य अन्तरिक्षादिलोकानां षण्णामित्यर्थः । वैशेष्यं उत्तमत्वं काङ्क्षमाणाः इच्छन्तः सन्तः कमलजं ब्रह्माणं प्रति तत् शशंसुः कथयामासुः ।।४३।।

**भारतश्री–** अनुशासतः सतः ।।४३।।

**आमन्त्र्य तैः सह विभुर्भगवत्प्रयाणं स्वीयाय सद्मन इयेष दिदेश चाशु ।**
**रुद्रं स्वलोकगमनाय रघूत्तमस्य सम्प्रार्थने स च समेत्य विभुं ययाचे ।।४४।।**

**वादिराजीया–** आमन्त्र्य तैः सह विभुरित्यत्र धरायाः सकाशात् स्वलोकस्य वैशेष्याकाङ्क्षायामसूयाशङ्का स्यात् । महत्तरसाम्राज्याद्रामस्य प्रच्यावने अपराधोऽपि स्यात् । तदुभयं च ऋजुयोगिषु श्रेष्ठस्य ब्रह्मणः स्वस्य नोचितम् । अतः स्वयमेव देवानादाय रामं प्रार्थयितुं नागतः । किन्तु स्वपुत्रं हरेः पौत्रं रामनामप्रियरुद्रं एव आदिशदिति भावेनोक्तम्– **रुद्रमेव दिदेश चेति** ।। अत एव 'पौत्रकवचो यदपि ह्ययोग्यं सम्भावयति गुणिन' इति स्वयमेव वक्ष्यति । स्वीयाय सद्मन इत्यत्र स्वीयाय स्वकीयाय सद्मने श्वेतद्वीपाख्यसद्मने ।।४४।।

**वरदराजीया–** विभुर्ब्रह्मा देवैः वृन्दारकैरामन्त्र्य विचार्य स्वीयाय स्वकीयाय सद्मने स्थानाय प्रयाणं स्वलोकं प्रति प्रयाणमित्यर्थः । इयेष ऐच्छत् । अथानन्तरं रघूत्तमस्य स्वलोकगमनार्थं सम्प्रार्थने प्रार्थयितुं रुद्रं दिदेश प्रेषितवान् । स च रुद्रो विभुं [तद्भूमेरात्मलोकसाम्यं] श्रीरामं समेत्य ययाचे प्रार्थितवान् ।।४४।।

**जनार्दनीया–** विभु ब्रह्मा तैः देवैः सह आमन्त्र्य विचार्य स्वीयाय सद्मने स्वकीयाय वैकुण्ठायेत्यर्थः । भगवतः प्रयाणं गमनं इयेष ऐच्छत् । स्वलोकं प्रति गमनाय गन्तुम्, रघूत्तमसंप्रार्थनविषये रुद्रं दिदेश । स च रुद्रः ययाचे ।।४४।।

**अनन्तभट्टीया–** विभुः ब्रह्मा । सम्प्रार्थने...* सम्प्रार्थना...* ।।४४।।

**चट्टी–** विभु ब्रह्मा तैः देवैः सह आमन्त्र्य विचार्य स्वीयाय स्वकीयाय सद्मने स्थानाय वैकुण्ठायेत्यर्थः । भगवतः प्रयाणं गमनं इयेष ऐच्छत् । अथ अनन्तरं स्वर्लोकं प्रति गमनाय गमनार्थं रघूत्तमस्य सम्प्रार्थनविषये रुद्रं दिदेश प्रेषितवान् । स च रुद्रः विभुं श्रीरामं समेत्य ययाचे प्रार्थिवान् ।।४४।।

**एकान्तमेत्य रघुपेण समस्तकालो रुद्रो जगाद वचनं जगतो विधातुः ।**
**वैशेष्यमात्मसदनस्य हि काङ्क्षमाणास्त्वामर्थयन्ति विबुधाः सहिता विधात्रा ।।**

**व्यासतीर्थीया–** काल एत्य विभुं ऊच इति यद् ग्रन्थान्तरे तत्समाहितम्– **समस्तकालो रुद्र इति** ।।

**वेदाङ्गतीर्थीया–** एकान्त [मेत्य रघुपेण] समस्तकालो रुद्र इत्यनेन कचित् ग्रन्थान्तरे कालो रामं स्वर्लोकगमनाय प्रार्थयामासेत्युक्तेपि सर्वसंहारकर्तृत्वात् रुद्र एव कालनामेत्युक्तं भवति ।।४५।।

**वादिराजीया–** देवताकार्यमेव रुद्रस्यागमनम् । स्वस्य तु संहार एव प्रिय इति सूचनाय समस्तकालो रुद्र इत्युक्तम् । यद्वा भूमेः भाग्यात् प्रच्यावनं संहर्तुरस्य प्रिय इति सूचनाय समस्तकाल इत्युक्तम् । 'कल हिंसायाम्' इति धातोः समस्तं कालयति मारयतीति समस्तकालः । अनेन रामायणस्थ-कालशब्दार्थ उक्तो भवति । जगतो विधातुरिति वदता भूमेरपि ब्रह्मसृष्टत्वात् स्वसृष्टलोकस्याऽधिक्ये स्वपुत्रीसौभाग्यदर्शनवत् स्वस्य सन्तोष एव नासूयेति सूचितम् । ब्रह्मा देवकार्यार्थं एव मामदिशत् न तु स्वप्राधान्येनेति भावेन विधात्रा सहिता विबुधा इति विबुधानामेव प्रधान्यमुक्तम् । वैशेष्यमात्मसदनस्य हि काङ्क्षमाणा इत्यत्र हिशब्देन भूलोकात् स्वर्गलोकस्याऽधिक्यं प्रसिद्धम् । अन्यथा स्वर्गकामनया ज्योतिष्टोमकरणायोगात् । अतो देवानां अपि नात्यन्तमपराध इति सूचयति ।।४५।।

**मधुसूदनीया–** ।। **एकान्त इति** ।। पद्मपुराणे [उ.ख.२४४.३६] 'कस्यचित् त्वथ कालस्य राघवस्य निवेशनम् । कालस्तापसरूपेण संप्राप्तो वाक्यमब्रवीत् ।।' इति कालो जगादेत्युक्तम् । तत्संघटनाय समस्तकालेरुद्र इत्युक्तम् ।।४५-५१।।

**वरदराजीया–** प्रार्थनप्रकारमाह– **एकान्तमिति** ।। रघुपेण सह एकान्ते रहसि कालो आगत्य जगादेति पुराणेषूक्तिः । तत्र कालशब्देन रुद्र एवोक्त इत्यभिप्रायेण समस्तेत्युक्तम् । सर्वान् कालयति संहारयतीति कालो रुद्र इत्यर्थः । जगतो विधातुः सृष्टिकर्तुः ब्रह्मणो वचनं वाक्यं जगाद । किमिति । आत्मसदनस्य लोकस्य वैशेष्यं पृथिवीलोकाद्विशिष्टत्वं आकाङ्क्षमाणाः विबुधाः धात्रा ब्रह्मणा सह त्वामर्थयन्ति प्रार्थयन्ते ।।४५।।

**जनार्दनीया–** एतदेव स्पष्टयति– **एकान्तमिति** ।। समस्तान् कालयति नाशयतीति कालः । कालनामा 'कल च्छेदने' इति धातुः । अनेन 'कालः प्रार्थयामास' इति ग्रन्थान्तरोक्तिविरोधः परिहृतः । रुद्रः रघुपेण एकान्तं एत्य, जगतः विधातुः प्रसवितुः ब्रह्मणः वचनं जगाद । किमिति ? विधात्रा ब्रह्मणा सहिताः विबुधाः देवाः आत्मसदनस्य वैशेष्यं विशेषत्वं । भूमेरिति शेषः । काङ्क्षमाणाः सन्तः त्वामर्थयन्ति प्रार्थयन्ति ।।४५।।

**अनन्तभट्टीया–** ...*स्थितकालशब्दं वदन्नर्थमाह– **काल इति** ।।४५-४७।।

**चट्टी–** प्रार्थनाप्रकारमाह– **एकान्तमिति** ।। समस्तान् कालयति नाशयतीति कालः कालनामा । 'कल बन्धने' इति धातुः । अनेन कालः एत्य प्रार्थयामासेति पुराणोक्तिविरोधः परिहृतः । रुद्रः रघुपेण एकान्तं एत्य जगतः विधातुः प्रसवितुः ब्रह्मणः वचनं जगाद । किमिति । विधात्रा ब्रह्मणा सहिताः विबुधाः देवाः आत्मसदनस्य वैशेष्यं विशेषत्वं भूमेरिति शेषः । काङ्क्षमाणाः सन्तः त्वामर्थयन्ति प्रार्थयन्ति ।।४५।।

## पुत्रस्तवेश कमलप्रभवस्तथाऽहं पौत्रस्तु पौत्रकवचो यदपि ह्ययोग्यम् ।
## सम्भावयन्ति गुणिनस्तदहं ययाचे गन्तुं स्वसद्म नतिपूर्वमितो भवन्तम् ।।४६।।

**व्यासतीर्थीया–** एतल्लोकहानेन लोकान्तरगमनमयुक्तं याचत इति शङ्कायामुत्तरमाह– **पुत्र इति** ।।४६।।

**वेदाङ्गतीर्थीया–** ययाचे प्रार्थयामि ।।४६–४९ ।।

**वादिराजीया–** तु विशेषेण पौत्रः भृगुनारदादिभ्योऽप्यतिशयेन पौत्रः ।।४६।।

**सत्याभिनवीया–** तत्रैव पुत्रस्तवेश कमलप्रभवस्तथा इति श्लोके पौत्रकवचो यदपि ह्ययोग्यं सम्भावयन्ति गुणिनः इत्यस्य यत् अयोग्यं पौत्रकवचः तदपि गुणिनः सम्भावयन्ति इत्येतत् हि प्रसिद्धमित्यर्थः । एतेन यत् यत् पौत्रकवचः तत् सर्वमयोग्यमिति नियमाभावात् । यदपि यद्यपि पौत्रकवाक्यमयोग्यं तथापि गुणिनः सम्भावयन्ति इति कथनमनुपपन्नमिति दूषणं परास्तम् । पौत्रस्य योग्यवाक्यमिव अयोग्यवाक्यमपि सम्भावयन्तीत्यर्थ इत्यङ्गीकारात् ।।४६।।

**वरदराजीया–** भवत्प्रार्थितं मया किमर्थं कर्तव्यमित्यत आह– **पुत्रस्तवेश** ।। ईश स्वामिन् कमलप्रभवो ब्रह्मा तव पुत्रः । तथा च अहं तत्पुत्रत्वात्तव पौत्रः । पौत्रकस्याल्पस्यापि वचो वचनं यदि यद्यपि अयोग्यं कर्तुमिति शेषः । तथापि गुणिनो गुणाधिकाः सम्भावयन्ति तत्तस्मादितो भूलोकात् स्वस्य स्थानं वैकुण्ठं प्रति गन्तुं नतिपूर्वं प्रणतिपूर्वकं भवन्तं त्वां ययाचे प्रार्थयामि ।।४६।।

**जनार्दनीया–** हे ईश कमलप्रभवः ब्रह्मा तव पुत्रः तथाहं पौत्रस्तु पौत्रश्चेत्यर्थः । यदपि यद्यपि पौत्रकवचः अयोग्यं तथापि गुणिनः सद्गुणवन्तः सम्भावयन्ति हि यस्मात् तस्माद् अहमितः भूमेः सकाशात् स्वसद्म वैकुण्ठं प्रति गन्तुं नतिपूर्वं प्रणामपूर्वं यथा स्यात् तथा । भवन्तं त्वां ययाचे प्रार्थयामि ।।

**ताम्रपर्णीया–** ।। **यदपि ह्ययोग्यमिति** ।। यद्यस्मादयोग्यमपि सम्भावयन्ति तत्तस्मादित्यन्वयः ।।

**चट्टी–** भवत्प्रार्थितं मया किमर्थं कर्तव्यमित्यत आह– **पुत्र इति** ।। हे ईश स्वामिन् कमलप्रभवः ब्रह्मा तव पुत्रः । तथाहं तु विशेषेण पौत्रः भृगुनारदादिभ्योऽप्यतिशयेन पौत्रः । यदपि यद्यपि पौत्रकवचः अयोग्यं तथापि गुणिनः सद्गुणवन्तः सम्भावयन्ति मानयन्ति हि यस्मात्तस्माद् अहं इतः भूलोकात् स्वसद्म स्वस्थानं वैकुण्ठं गन्तुं नतिपूर्वं यथा स्यात् तथा भवन्तं त्वां ययाचे प्रार्थयामि ।।४६।।

**यत्कार्यसाधनकृते[१] विबुधार्थितस्त्वं प्रादुश्चकर्थ निजरूपमशेषमेव ।**
**तत् साधितं हि भवता तदितः स्वधाम क्षिप्रं प्रयाहि हर्षं विबुधेषु कुर्वन् ।।**

**व्यासतीर्थीया–** गमने निमित्तान्तरं चाह– **यत्कार्येति** ।।४७–५०।।

**वादिराजीया–** क्षिप्रं प्रयाहि हर्षं विबुधेषु कुर्वन्नित्यत्र सदा रामदर्शनजन्यसुखविरोधित्वात् बहुतरयज्ञादिजन्यसुखविरोधित्वाच्च दृढो हर्षो न भवतीति सूचनाय हर्षमिति विश्लिष्टोक्तिरिति ज्ञेयम् ।।

**वरदराजीया–** यस्य कार्यस्य साधनकृते साधनार्थं विबुधैर्देवैरर्थितः प्रार्थितस्त्वं निजरूपं रामाख्यं प्रादुश्चकर्थ प्रकटीकृतवानसि तदशेषं कार्यं भवता साधितं तं तस्मादवशिष्टकार्याभावात् विबुधेषु हर्षं सन्तोषं कुर्वन् इतो भूलोकात् स्वधाम स्वलोकं वैकुण्ठं क्षिप्रं शीघ्रं प्रयाहि इति जगादेति पूर्वेणान्वयः ।।

**जनार्दनीया–** यच्च तत्कार्यं च तथा यत्कार्यस्य साधनकृते सम्पादनाय तदशेषं तत्सर्वं भवता साधितमेव सम्पादितमेव । हि यस्मात् तस्मात् विबुधेषु हर्षं कुर्वन् इतः अस्माल्लोकात् क्षिप्रं स्वधाम प्रति याहीति ययाचे इति पूर्वेण सम्बन्धः ।।४७।।

**अनन्तभट्टीया–** साधनकृते साधनाय ।।४७–५०।।

**चट्टी–** यच्च तत्कार्यं च यत्कार्यं यत्कार्यस्य साधनकृते साधनार्थं विबुधार्थितः त्वं निजरूपं श्रीरामाख्यं प्रादुश्चकर्थ प्रकटीकृतवानसि । तदशेषं तत्सर्वं भवता साधितमेव हि यस्मात्तस्मात् अवशिष्टकार्याभावात् विबुधेषु देवेषु हर्षं सन्तोषं कुर्वन् इतः भूलोकात् स्वधाम वैकुण्ठं क्षिप्रं शीघ्रं प्रयाहीति जगाद इति पूर्वेणान्वयः ।।४७।।

**ओमित्युवाच भगवांस्तदशेषमेव श्रुत्वा रहस्यथ तनुस्त्वपरा हरस्य ।**
**दुर्वासनामयुगिहाऽगमदाशु रामं मां भोजय क्षुधितमित्यसकृद् ब्रुवाणः ।।४८।।**

---

१. श्रुणु राजन् महासत्व यदर्थमहमागतः । पितामहेन देवेन प्रेषितोऽस्मि महाबल ।। तवाहं पूर्वके भावे पुत्रः परपुरञ्जय । माया सम्भावितो वीर कालः सर्वसमाहरः ।। इत्यार्षेये.७.१०४.१-२ ।

**वादिराजीया–** तदशेषमेव श्रुत्वेत्यत्र तदशेषं श्रुत्वैवेति सम्बन्धः । स्वस्यापि गमने अभिरुचिरस्तीति सूचनं तत्फलम् ।।४८।।

**वरदराजीया–** रहसि एकान्ते भगवान् रामस्तदशेषं सर्वं वचनं श्रुत्वा ओमित्युवाच तथास्त्वित्य-वददिति भावः । अथानन्तरं रुद्रस्य अपरा तनुर्द्वितीयावतारो दूर्वासनाम्ना युक्तः इहायोध्यां राममाशु शीघ्रमगमत् । कथंभूता तनुः क्षुधितं मां भोजयेत्यसकृत् बहुवारं ब्रुवाणः ब्रुवन्नित्यर्थः ।।४८।।

**जनार्दनीया–** रहसि तदशेषं श्रुत्वा ओमिति तथास्त्वित्युवाच । अथ संवादानन्तरं क्षुधितं क्षुधायुक्तं मां भोजयेति असकृत्पुनः पुनः ब्रुवाणा ब्रुवन्ती दुर्वासनाम्ना युनक्तीति तथा युक्ता दूर्वासनाम्ना इत्यर्थः । हरस्य अपरातनुः अन्यद्रूपमित्यर्थः । इह एकान्तस्थले आशु रामं प्रति अगमत् प्राप ।।४८।।

**चट्टी–** भगवान् श्रीरामः रहसि एकान्ते तदशेषं सर्वं श्रुत्वैव ओमिति तथास्त्वित्युवाच अवदत् । अथ अनन्तरं दुर्वासनाम्ना युक् हरस्य रुद्रस्य अपरा तनुः द्वितीयोऽवतारः दुर्वासाः क्षुधितं मां आशु भोजयेति बहुवारं ब्रुवाणस्सन् इह एकान्तस्थले रामं अगमत् ।।४८।।

**सिद्धं[1] न देयमुत साध्यमपीति वाचं**
**श्रुत्वाऽस्य वाक्समयजातमुरु स्वहस्तात् ।**
**अन्नं चतुर्गुणमदादमृतोपमानं[2]**
**रामस्तदाप्य बुभुजेऽथ मुनिः सुतुष्टः ।।४९।।**

**वेदाङ्गतीर्थीया–** चतुर्गुणं भक्ष्यभोज्यलेह्यपेयगुणोपेतम् ।।४९।।

**वादिराजीया–** स्वहस्ताद्वाक्समयजातं चतुर्गुणमन्नमित्यनेन दूरस्थाङ्गुष्ठं विहाय कामधेनोः स्तनचतुष्टयवत् तर्जन्याद्यङ्गुलीचतुष्टयात् भक्ष्यभोज्यलेह्यपेयाख्यं चतुर्गुणमन्नं तत्क्षणादेव जातः । अतः प्राक्सिद्धमपि न उपरि साध्यमपि नेति सूचितम् ।।४९।।

**वरदराजीया–** सिद्धमन्नं न देयं साध्यं पाकेन साध्यमपि न देयमिति अस्य दूर्वाससो वाचं श्रुत्वा स्वहस्तात् वाक्समये वाक्योच्चारणसमये जातमुत्पन्नं उरु उत्कृष्टं चतुर्गुणयुतं भक्ष्यभोज्यलेह्यपेह्यगुणोपेतं अमृतोपमानं अमृतसदृशमन्नं [रामो दातुः पूर्वं सिद्धं न देयं प्रार्थनानन्तरकालं साध्यं न देयं इति

१. 'अद्य वर्षसहस्रस्य समाप्तिर्मम राघव । सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ ।।' इति रामायणे ७.१०५.१३

२. 'स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम् । साधु रामेति सम्भाष्य स्वमाश्रममुपागतम् ।।' इति वाल्मीकीये ७.१०५.१५ ।

असम्भावितस्यैव प्रार्थितत्वात् प्रार्थनसमय एव अन्नमुत्पन्नं] दत्तवानिति भावः । अथानन्तरं सुतुष्टो अत्यन्तं तुष्टो दूर्वासामुनिरेतदन्नं आप्य बुभुजे ।।४९।।

**जनार्दनीया–** रामः सिद्धं न देयं उत प्रार्थनानन्तर साध्यमपि करिष्यमाणमपि न देयं इत्येवं रूपां अस्य दूर्वाससः वाचं श्रुत्वा, अस्य वाक्समये वागुच्चारणकाले जातं उरु उत्कृष्टं चतुर्गुणं भक्ष्यभोज्यलेह्यपेयगुणोपेतं अमृतेन उपमानं तुल्यं अन्नमदात् । मुनिः दूर्वासाः तदन्नं आप्य, अथ सुतुष्टः सन् बुभुजे ।।४९।।

**चट्टी–** श्रीरामः सिद्धं अन्नं न देयं उत प्रार्थनानन्तरं साध्यं करिष्यमाणमपि न देयं इत्येवं रूपं दूर्वाससः वचनं श्रुत्वा स्वहस्तात् अस्य वाक्समये वागुच्चारणकाले जातं उरु उत्कृष्टं चतुर्गुणं भक्ष्यभोज्यलेह्यपेयगुणोपेतं अमृतेन उपमानं तुल्यं अन्नं अदात् । मुनिः दूर्वासाः तदन्नं आप्य अथ सुतुष्टः अत्यन्तं सन्तुष्टः सन् बुभुजे ।।४९।।

**भावविवृति–** अन्नं चतुर्गुणमदादित्यत्र प्रकृतिभागनिर्मितं अमृतवत् स्वादु लेह्यपेयखाद्यचोष्यं इति चतुर्विधान्नमदादित्यर्थः ।।४९–५०।।

**तृप्तो[१] ययौ च सकलान् प्रति कोपयानः**
**कश्चिन्न मेऽर्थितवरं प्रतिदातुमीशः ।**
**एवम्प्रतिज्ञक ऋषिः स हि तत्प्रतिज्ञां**
**मोघांचकार[२] भगवान् न तु कश्चिदन्यः ।।५०।।**

**व्यासतीर्थीया–** रामस्तवने सकलकोपने च निमित्तमाह– **कश्चिदिति** ।।५०।।

**वेदाङ्गतीर्थीया–** सकलान् प्रति कोपयानश्च तृप्तो ययौ ।।५०।।

**वादिराजीया–** तत्प्रतिज्ञां मोघीचकार हीति हिशब्देन इतराभग्नतत्प्रतिज्ञाभङ्गादपि रावणवधादिव भगवतः सर्वोत्तमत्वं प्रसिद्धमभूदिति सूचयति ।।५०।।

**सत्याभिनवीया–** तत्रैव तृप्तो ययौ च सकलान् प्रति इति श्लोकः । तस्यार्थः एवं प्रतिज्ञकः ऋषिः अहं सकलान् प्रति गत्वा यत्सिद्धं न भवति यत्साध्यं न भवति तादृशमन्नं देयमिति प्रार्थयिष्ये । तदा कश्चिदपि मे अर्थितवरं प्रार्थितान्नरूपं वरं दातुं ईशः समर्थो न भविष्यति तदा सर्वेषु कोपं कृत्वा गमिष्यामि इत्येवं प्रतिज्ञा यस्य सः एवम्प्रतिज्ञकश्चासौ ऋषिश्च एवम्प्रतिज्ञकऋषिः । दुर्वासाः सकलान् प्रति गत्वा अर्थितान्नालाभे सति सकलान् प्रति कोपयानः सन् ययौ । सः भगवान् रामः एव तत्प्रतिज्ञां

दुर्वाससः प्रतिज्ञां हि यस्मात् प्रार्थितान्नदानेन मोघां चकार । अन्यः कश्चित् दुर्वाससः प्रतिज्ञां मोघां न तु नैव चकार तस्मात् रामं प्रति च रामं प्रत्येव तृप्तो ययौ इति । एतेन एतच्छ्लोकस्थपदानामनन्वय इति शङ्का परास्ता । अपेक्षितपदानामध्याहारेण अन्वयस्योक्तत्वात् एतेनैव प्रतिदातुमीश इत्यत्र प्रतिशब्दः ययौ चेति चशब्दश्च व्यर्थ इति दूषणं परास्तम् । प्रतिचशब्दयोः राम इत्यनेनान्वयं चशब्दस्य एवार्थत्वं चाङ्गीकृत्य रामं प्रत्येवेत्यर्थस्योक्तत्वात् ।।५०।।

**वरदराजीया–** तृप्तः कश्चिदपि मे मया प्रार्थितवरं प्रदातुमीशः समर्थो न भवतीति सर्वान् लोकान् प्रति कोपयानः कोपं कुर्वाणः एवं प्रतिज्ञा यस्यासौ ऋषिः दूर्वासो ययौ प्रययावित्यर्थः । स भगवान् रामः तस्य ऋषेः प्रतिज्ञां मोघां व्यर्थां चकार । अन्यः कश्चित् कोऽपि मोघां न चकार ।।५०।।

**जनार्दनीया–** मे मया । अर्थितवरं प्रार्थिताभीष्टं प्रतिदातुं, कश्चित् पुरुषः ईशः समर्थो न । एवं प्रतिज्ञा यस्येति विग्रहः । स ऋषिः दूर्वासाः सकलान् जनान् प्रति कोपयानः कश्चिदपि मदभीष्टं न करोतीति कोपं कुर्वन् सन् अतृप्तो भूत्वा ययौ । स हि स एव । रामः तस्य दूर्वाससः प्रतिज्ञां मोघां व्यर्थां चकार । अन्यः रामादन्यः कश्चिन्न तु न चकार ।।५०।।

**अनन्तभट्टीया–** कोपयानः केनापि मदिष्टं न कृतमिति कोपं कुर्वन्नित्यर्थः ।।५०–५२।।

**चट्टी–** कश्चिदपि मे मया अर्थितवरं प्रार्थिताभीष्टं प्रतिदातुं ईशः समर्थो न एवं प्रतिज्ञा यस्य स । ऋषिः दूर्वासाः सकलान् जनान् प्रति कोपयानः मदभीष्टं न करोतीति कोपं कुर्वन् सन् अन्नतृप्तस्सन् ययौ । भगवान् स हि स एव श्रीरामः तस्य दूर्वाससः प्रतिज्ञां मोघां व्यर्थां चकार । अन्यः रामादन्यः कश्चिन्न तु न चकार ।।५०।।

**कुन्ती तु तस्य हि मुनेर्वरतोऽजयत्तं**
**रामः स कृष्णतनुवा स्वबलाज्जिगाय ।**
**तस्मिञ्छिवे प्रतिगते मुनिरूपके च**
**याहीति लक्ष्मणमुवाच रमापतिः सः ।।५१।।**

**व्यासतीर्थीया–** ननु कुन्तीकृष्णाभ्यां तत्प्रतिज्ञाभङ्गस्य कृतत्वात् कथं न तु कश्चिदन्य इत्युक्तिरित्यत आह– **कुन्तीति** ।।५१।।

**वेदाङ्गतीर्थीया–** कृष्णतनुवा कृष्णतन्वा कृष्णरूपेण । स्वबलाज्जिगाय । एतच्च 'स तान् समर्च्य केशवः प्रदाय चोरुमात्रकाः' इत्यत्रैवोक्तम् ।।५१ ।।

**वादिराजीया–** कुन्तीभोजगृहे चातुर्मास्यव्रते स्थितमप्रिये सति गमिष्यामीति प्रतिज्ञावन्तमतिकोप-मृषिं कुन्ती स्वसेवाकौशलेन प्रसाद्य मन्त्रं जग्राह । तदाऽप्रिये सति गच्छमीति ऋषेः प्रतिज्ञां प्रियस्यैव कारणात् जिगायेति भरतकथा । सोऽपि जयः भीतां कुन्तीं प्रति त्वयि कोपं न करोमीति तस्य वरादेवेति भावेनाह– **कुन्ती तु तस्य हि मुनेर्वरत इति** ।। कृष्णोऽपि ममोदरपूर्तिः केनापि कर्तुं न शक्यत इति प्रतिज्ञया व्रजं प्रत्यागतं दूर्वाससं यथेष्टान्नपानादाने सति इतः परं भोक्तुं न शक्नोमीति वाचयित्वा जिगाय । तदपि रामवत् स्वमहिम्नैवेति भावेनाह– **रामः स कृष्णतनुवा स्वबलाज्जिगायेति** ।।

**मधुसूदनीया–** ।। **कुन्ती तु तस्येति** ।। ननु रामः स्वकृष्णतनुवा स्वबलाज्जिगाय इत्येतत् कथं निरणायि इत्यत आह– **हीति** ।। प्रसिद्धमित्यर्थः । तथाचोक्तम् कृष्णेन प्रद्युम्नं प्रति ।

अथासन्नो गृहं कश्चिद् ब्राह्मणः हरिपिङ्गलः । चीरवासाः बिल्वदण्डो दीर्घश्मश्रुरदीनवाक् ।।
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिकं विदुः । सर्वान् सञ्चरते लोकान् ये दिव्या ये च मानुषाः ।।
इमां गाथां गायमानः चत्वरेषु सभासु च । दूर्वाससं वासयेत् को ब्राह्मणं स्वेच्छया गृही ।।
परिभाषां च मे श्रुत्वा को वा दद्यात् प्रतिश्रयम् । कामान् न कश्चित् दापयेच्च न च संकोपयीत च ।।
ततस्तद्वाक्यमाकर्ण्य तमहं समवासयम् । अथ त्वावसथं दत्वा शय्यां चास्तरणानि च ।।
अथ मामब्रवीत् भूपः स मुनिः संशितव्रतः । कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः ।।
तथैव तु मया तस्य चित्तज्ञेन गृही जनः । सर्वाण्यन्नानि पानानि भक्ष्याश्चोच्चावचानि च ।।
भवन्तु संस्कृतानीह पूर्वमेव प्रचोदितः । ततोऽहं ज्वलमानस्य पायसं प्रत्यवेदयम् ।।
स भुक्तवांस्तु मां क्षिप्रं ततो वचनमब्रवीत् । क्षिप्रमंगानि लिंपस्व पायसेनेति सस्पृहः ।।
अविमृश्यैव च ततः कृतवानस्मि तत्तथा । तेनोच्छिष्टेन गात्राणि शिरश्चाहं समलिपम् ।।
स ददर्श ममाभ्याशे मातरं ते शुभाननाम् । तामविस्मयमानस्सन् पायसेन प्रलिम्पयम् ।।
ततः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् । न च मे स्यान्मनस्तापः दुःखमीर्षाकृतं ततः ।।
ततः सुमार्गेण महता सा नीता निर्भयो बहिः । तं दृष्ट्वा महदाश्चर्यं दाशार्हाः जातमन्यवः ।।
ततोऽज्वलन् मिथः केचित्समभाष्य परस्परम् । ब्राह्मणा एव ज्यायांसो नान्ये वर्णाः कदाचन ।।
को ह्येनां रथमास्थाय जीवेदन्यः पुमानिह । आशीविषं तीक्ष्णतरमतस्तीक्ष्णतरं विषम् ।।
ब्रह्माशीविषदग्धस्य नास्ति कश्चिच्चिकित्सकः । तस्मिन्व्रजति दुर्धर्षे प्रास्खलत् रुक्मिणी पथे ।।
अमर्षयन्तदा श्रीमान् ततस्तूर्णमचोदयत् । ततः परमसंक्रुद्धो रथात् प्रस्कन्द्य स द्विजः ।।
पदातिरूत्पथेनैव प्राद्रवत् दक्षिणामुखः । तमुत्पथेन धावन्तं अन्वधावं द्विजोत्तमम् ।।
तथैव पायसादिग्धः प्रसीद भगवानिति । ततः प्रसन्नः तेजस्वी दुर्वासा मामुवाच ह ।।'

इत्यादि अनुशासने [२६४.१४-३६] । एवं च रामः कृष्णरूपेण पायसलेपनादिना दूर्वाससं जितवानिति भावः ।।५१-५७।।

**वरदराजीया–** कुन्ती तु तस्य मुनेः दूर्वाससो वरात् प्रसादात्तमजयद्वशीचकार । स रामः कृष्णतनुर्वा कृष्णरूपेण स्वबलात् स्वसामर्थ्येन द्वारकायां जिगाय जितवान् । तस्मिन् मुनिरूपके मुनिरूपधरे शिवे प्रतिगते सति परावृत्य गते सति सः रमापतिः इतो याहीति लक्ष्मणमुवाच ॥५१॥

**जनार्दनीया–** उक्तार्थस्य अपवादमाह– **कुन्ती त्विति** ॥ तस्य मुनेः दूर्वाससः । रामः कृष्णतनुर्वा कृष्णस्वरूपेणापि स्वबलात् स्वरूपसामर्थ्येन । दूर्वाससः वासदानतत्कृतगृहदाहादिसहनोच्छिष्टपायसादन-रथवाहनादितदभीष्टकरणेन जिगायेति भावः । इदञ्च उक्तं दानधर्मे । 'अवसन् मद्गृहे तात ब्राह्मणो हरिपिङ्गलः' [अनु.२६४.१४] इत्यादिना । तस्मिन् ब्रह्मप्रेषिते शिवे गते मुनिरूपके दुर्वाससःस्वरूपके शिवे च ॥५१॥

**ताम्रपर्णीया–** कृष्णतनुर्वा कृष्णरूपेण हंसडिभिकाभ्यां दुर्वाससः सर्वस्वे हृते तौ हत्वा तन्मनोरथमपूरयदिति भावः ॥५१-५६॥

**चट्टी–** उक्तार्थस्य अपवादमाह– **कुन्तीत्विति** ॥ कुन्ती तु तस्य मुनेः दूर्वाससः वरतः वरप्रदानात् तमजयत् वशीचकार । श्रीरामः कृष्णतनुर्वा कृष्णरूपेणापि स्वबलात् स्वसामार्थ्यात् द्वारकायां जिगाय जितवान् । उष्णपायसदानपायसविलेपनरथवाहनादितदभीष्टकरणेन जिगायेति भावः । ननु श्रीरामः कृष्णतनुर्वा स्वबलाद् जिगायेत्येतत् कथं निरणायि इत्यत आह– **हीति** ॥ प्रसिद्धमित्यर्थः । तथाचोक्तं कृष्णेन प्रद्युम्नं प्रति । अथासन्नो गृहं कश्चिद् ब्राह्मणः हरिपिङ्गलः । चीरवासाः बिल्वदण्डो दीर्घश्मश्रुरदीनवाक् ॥ दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिकं विदुः । सर्वान् सञ्चरते लोकान् ये दिव्या ये च मानुषाः ॥ इमां गाथां गायमानः चत्वरेषु सभासु च । दूर्वाससं वासयेत् को ब्राह्मणं स्वेच्छया गृही ॥ परिभाषां च मे श्रुत्वा को वा दद्यात् प्रतिश्रयम् । कामान् न कश्चित् दापयेच्च न च संकोपयीत च ॥ ततस्तद्वाक्यमाकर्ण्य तमहं समवासयम् । अथ त्वावसथं दत्वा शय्यां चास्तरणानि च ॥ अथ मामब्रवीत् भूपः स मुनिः संशितव्रतः । कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः ॥ तथैव तु मया तस्य चित्तज्ञेन गृही जनः । सर्वाण्यन्नानि पानानि भक्ष्याश्चोच्चावचानि च ॥ भवन्तु संस्कृतानीह पूर्वमेव प्रचोदितः । ततोऽहं ज्वलमानस्य पायसं प्रत्यवेदयम् ॥ स भुक्तवांस्तु मां क्षिप्रं ततो वचनमब्रवीत् । क्षिप्रमंगानि लिंपस्व पायसेनेति सस्पृहः ॥ अविमृश्यैव च ततः कृतवानस्मि तत्तथा । तेनोच्छिष्टेन गात्राणि शिरश्चाहं समलिपम् ॥ स ददर्श ममाभ्याशे मातरं ते शुभाननाम् । तामविस्मयमानस्सन् पायसेन प्रलिम्पयम् ॥ ततः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् । न च मे स्यान्मनस्तापः दुःखमीर्षाकृतं ततः ॥ ततः सुमार्गेण महता सा नीता निर्भयो बहिः । तं दृष्ट्वा महदाश्चर्यं दाशार्हाः जातमन्यवः ॥ ततोऽज्वलन् मिथः केचित्समभाष्य परस्परम् । ब्राह्मणा एव ज्यायांसो नान्ये वर्णाः कदाचन ॥ को ह्येनां रथमास्थाय जीवेदन्यः पुमानिह । आशीविषं तीक्ष्णतरमतस्तीक्ष्णतरं विषम् ॥ ब्रह्माशीविषदग्धस्य

नास्ति कश्चिचिकित्सकः । तस्मिन्व्रजति दुर्धर्षे प्रास्खलत् रुक्मिणी पथे ।। अमर्षयन्तदा श्रीमान् ततस्तूर्णमचोदयत् । ततः परमसंक्रुद्धो रथात् प्रस्कन्य स द्विजः ।। पदातिरूत्पथेनैव प्राद्रवत् दक्षिणामुखः । तमुत्पथेन धावन्तं अन्वधावं द्विजोत्तग्म ।। तथैव पायसादिग्धः प्रसीद भगवानिति । ततः प्रसन्नः तेजस्वी दुर्वासा मामुवाच ह ।।' इत्यादि अनुशासने [२६४.१४-३६] । तस्मिन् ब्रह्मप्रेषिते शिवे मुनिरूपके दुर्वासस्वरूपके शिवे च प्रतिगते सः रमापतिः लक्ष्मणमितो याहीत्युवाच ।।५१।।

**भावविवृति–** रामः स कृष्णतनुवा स्वबलाज्जिगायेत्यत्र रामो यथा दूर्वाससं जिगाय जितवान् तथा कृष्णोऽपि रुक्मिणीस्वयंवरे पायसभोजनादिना दूर्वाससं जितवानिति ज्ञेयम् । एनं जिगायेति पौराणिकी कथा अस्ति । तत्संग्रहाय रामः कृष्णतन्वा कृष्णरूपेण सहेत्युक्तम् ।।५१-६०।।

**गूढवाक्यार्थ–** कृष्णतनुवा कृष्णरूपेण हंसडिविकाभ्यां दुर्वासतः सर्वस्वे हृते तौ हत्वा तन्मनोरथमपूरयदिति भावः ।।५१।।

**एकान्ते तु यदा रामश्चक्रे रुद्रेण संविदम् ।**
**द्वारपालं स कृतवांस्तदा लक्ष्मणमेव सः ।।५२।।**

**व्यासतीर्थीया–** सहसा लक्ष्मणं प्रति याहीत्युक्तौ निमित्तमाह– **एकान्त इति** ।।५२-५६।।

**वेदाङ्गतीर्थीया–** याहीत्युक्तौ कारणमाह– **एकान्त इति** ।। श्लोकद्वयस्य युगपत् सम्बन्धः । तथा च लक्ष्मण इति सम्बन्धः ।।५२-५६।।

**वरदराजीया–** लक्ष्मणं याहीति वचने निमित्तमाह– **एकान्त इति** ।। रहसि यदा रामो रुद्रेण संविदं विचारं चक्रे तदा तस्मिन् समये लक्ष्मणमेव द्वारपालं चक्रे स्म ।।५२ ।।

**जनार्दनीया–** याहीत्युक्तौ कारणमाह– **एकान्त इति** ।। यदा संविदं विचारं चक्रे तदा । यदि अत्र विचारस्थलं कश्चित् पुरुषः प्रविशेत्तर्हि त्वां हन्मीति वचः ब्रुवन् वदन् स रामः लक्ष्मणं द्वारपालं कृतवान् । तदन्तरा रामशिवविचारमध्ये अमन्यत बुबोध । मनसि विचारयामासेत्यर्थः ।।५२-५३।।

**अनन्तभट्टीया–** संविदं आलोचनम् ।।५२।।

**चट्टी–** याहीत्युक्तौ कारणमाह– **एकान्त इति** ।। एकान्ते रहसि यदा सः श्रीरामः रुद्रेण संविदं विचारं चक्रे तदा तस्मिन् समये लक्ष्मणं एव द्वारपालं कृतवान् ।।५२।।

**गूढवाक्यार्थ–** एकान्ते एकान्तस्थले ।।५२।।

**यद्यत्र प्रविशेत् कश्चिद्धन्मि त्वेति वचो ब्रुवन् ।**
**तदन्तराऽऽगतमृषिं दृष्ट्वाऽमन्यत लक्ष्मणः ॥५३॥**

**वरदराजीया–** रामः किं कुर्वन् अत्र एकान्तस्थले कश्चित् प्रविशयेत् तर्हि त्वां हन्मि हनिष्ये इत्येवं वचो ब्रुवन् द्वारपालं चक्र इति सम्बन्धः । तदन्तरा तन्मध्ये विचारकारणसमय इत्यर्थः । आगतं प्राप्तं ऋषिं दूर्वाससं दृष्ट्वा लक्ष्मणो मन्यते एवं विचारितवान् ॥५३॥

**अनन्तभट्टीया–** अन्तरा मध्ये ॥५३-५८॥

**चट्टी–** यदि अत्र एकान्तस्थलं कश्चित् पुरुषः प्रविशेत्तर्हि त्वा त्वां हन्मि हनिष्ये इति वचः ब्रुवन् द्वारपालं चक्रे । तदन्तरा शिवरामविचारमध्ये आगतं प्राप्तं ऋषिं दुर्वाससं दृष्ट्वा लक्ष्मणो अमन्यत बुबोध । मनसि विचारयामासेत्यर्थः ॥५३॥

**दुर्वाससः प्रतिज्ञा तु रामं प्राप्यैव भज्यताम् ।**
**अन्यथा त्वयशो रामे करोत्येष मुनिर्ध्रुवम् ॥५४॥**

**वरदराजीया–** किमिति । दूर्वाससः प्रतिज्ञा पूर्वोक्ता राममेव प्राप्य भज्यतां भङ्गं प्राप्नोत् । अन्यथा एषः मुनिः दूर्वासनामा अपयशो ध्रुवं निश्चयेन करोति कुर्यात् ॥५४॥

**जनार्दनीया–** किमिति ? भज्यतां नश्यतु । कर्म कर्तरि लोट् । अन्यथा प्रतिज्ञाभङ्गाभावे अयशः अपकीर्तिं करोति करिष्यति ॥५४॥

**चट्टी–** किमिति दुर्वाससः प्रतिज्ञा श्रीराममेव प्राप्य भज्यतां नश्यतु । अन्यथा प्रतिज्ञाभङ्गाभावे मार्गप्रदानाभावे इति वा । एषः मुनिः दूर्वासाः श्रीरामे अयशः अपकीर्तिं ध्रुवं निश्चयेन करोति ॥५४॥

**राघवो घ्नन्नपि तु मां करोत्येव दयां मयि ।**
**इति मत्वा ददौ मार्गं स तु दुर्वाससे तदा ॥५५॥**

**वादिराजीया–** राघवो घ्नन्नपि तु मामित्यत्र राघवस्तु मां घ्नन्नपि मयि दयामेव करोतीति सम्बन्धः । स तु दूर्वाससे तदेत्यत्र सः लक्ष्मणः तदा तु राघवापयशोमार्जनाख्यकार्यविशेषेण मार्गं ददाविति तुशब्दार्थः ॥

**वरदराजीया–** तर्हि रामः त्वां हन्यादित्याशङ्क्याह– **राघव इति** ॥ राघवो रामो मां घ्नन्नपि त्वां हन्मीति प्रतिज्ञावानपि वात्सल्यात् मयि दयां कृपां करोत्येव करिष्यत्येवेत्यमन्यतेत्यन्वयः । स लक्ष्मण इति मत्वा निश्चित्य दूर्वाससे तदा एकान्तसमयेऽपि मार्गं ददौ तं द्वारि मुमोचेत्यर्थः ॥५५॥

**जनार्दनीया–** मां घ्नन्नपि हन्तीति घ्नन्नपि । हन्मीति वदन्नपि राघवः । इति मत्वा ज्ञात्वा ।।५५।।

**चट्टी–** तर्हि श्रीरामः त्वां हन्यादित्याशङ्क्याह– **राघव इति** ।। राघवो मां घ्नन्नपि हन्मीति प्रतिज्ञावात्सल्यात् मयि दयां कृपां करोत्येव । इति मत्वा ज्ञात्वा सः लक्ष्मणः तदा एकान्तसमये दूर्वाससे मार्गं ददौ । तं द्वारि मुमोचेत्यर्थः ।।५५।।

**स्वलोकगमनाकाङ्क्षी स्वयमेव तु राघवः ।**
**इयं प्रतिज्ञा हेतुः स्यादिति हन्मीति सोऽकरोत् ।।५६।।**

**व्यासतीर्थीया–** रामः कथमनुजं यद्यत्र प्रविशेत् कश्चित् हन्मि त्वामित्युक्तवानित्यतो निमित्तमाह– **स्वलोकेति** ।।५६।।

**वेदाङ्गतीर्थीया–** हन्मीति प्रतिज्ञातो हेतुमाह– **स्वलोकेति** ।। स्वलोकगमनाकाङ्क्षी तु तस्यापि स्वलोकगमनाकाङ्क्षी ।।५६–५८।।

**वादिराजीया–** स्वलोकगमनाकाङ्क्षीत्यत्र 'आत्मात्मीयज्ञातिधनवाची स्वशब्दः' इति वचनात् स्वस्य स्वात्मीयस्य स्वज्ञातेर्वा लक्ष्मणस्य स्वलोकः नागलोकः तं प्रति तस्य गमनकाङ्क्षीत्यर्थः । यद्यपि श्वेतद्वीपे शेषोऽस्ति तथापि नासौ तल्लोकः किन्तु शयनीयतया पद्मनाभसेवार्थं तत्रैकांशेनागतः । अंशाच्च नावतारः किन्तु इन्द्रादीनां स्वलोकस्थितमूलरूपादेव अवतार । अवतारसमाप्तौ मूलरूपप्रवेशश्च धर्मः । अतो नागलोकं प्रत्येव लक्ष्मणः प्रेषणीय इति भावेन स्वलोकगमनाकाङ्क्षीत्युक्तम् । स्वलोको विष्णुलोकः तद्गमनाकाङ्क्षीत्यर्थकथने इयं प्रतिज्ञा हेतुः स्यादित्यादिकं वक्ष्यमाणमसङ्गतं स्यात् । अत उक्त एवार्थः । इयं प्रतिज्ञा हन्मीति प्रतिज्ञा हेतुः लक्ष्मणस्य स्वलोकगमने हेतुः स्यादिति हेतोः स्वलोकगमनाकाङ्क्षी स तु राघवः स्वयमेव हन्मीति प्रतिज्ञामकरोदिति सम्बन्धः । स्वयमेवेत्येवकारेण स्वेच्छयैव प्रतिज्ञाकरणं न तु लक्ष्मणोपरि कोपजननायेति सूच्यते । तदुक्तं भागवते हनुमद्रूपेण ग्रन्थकारेणैव 'न लक्ष्मणं चापि जहाति कर्हिचित्' इति । कोपान्न जहातीत्यर्थः । तर्हि व्यर्था प्रतिज्ञा किमर्थं कार्येति शङ्कापरिहाराय तुशब्दः । कार्यविशेषात् प्रतिज्ञेति तस्यार्थः । कार्यविशेषश्च लक्ष्मणस्यापि स्वमूलरूपप्रवेशो धर्मः । सेवातुरश्चायं न गमिष्यति अतः प्रतिज्ञाभङ्गव्याजेन तस्य प्रेषणम् । अतिप्रिये कृतायाः हन्मीत्युग्रप्रतिज्ञायाः हननमेव न धर्मः किन्तु तस्य प्रतिनिधाना केनचित् प्रतिज्ञारक्षणमिति मर्त्यशिक्षणश्च । तदप्युक्तं भागवते 'मर्त्यावतारस्त्विह मर्त्यशिक्षणम्' इति । अत एव गाण्डीवावमन्तारं हन्मीति स्वप्रतिज्ञापालनाय गाण्डीवावमन्तुर्धर्मराजस्य हननायोद्यतमर्जुनं कृष्णोऽपि हननप्रतिनिधिना निन्दाख्यहननेनैव घातयामास ।।५६–५८।।

**वरदराजीया–** रामो हन्मीति किमर्थमुक्तवानित्यत आह– **स्वलोकेति** ।। लक्ष्मणस्य स्वलोकं शेषलोकं प्रति गमनमाकाङ्क्षमाणः स्वयमेव राघवः स्वलोकगमने इयं हन्मीति प्रतिज्ञा हेतुः कारणं स्यादित्यभिप्रायेण सः रामो हन्मीति प्रतिज्ञामकरोदित्यर्थः ।।५६।।

**जनार्दनीया–** हन्मीति प्रतिज्ञायां हेतुमाह– **स्वलोकेति** ।। स्वलोकं प्रति शेषलोकं प्रति गमनाय आकाङ्क्षा वाञ्छा विद्यते यस्य स तथा । लक्ष्मणस्येति शेषः । स्वयमेव तु स्वयमेव रामश्च इत्यर्थः । स्वलोकगमनाकाङ्क्षी वैकुण्ठलोकगमनापेक्षी स राघवः । इयं प्रतिज्ञा हन्मीति प्रतिज्ञा हेतुः स्यादित्यवधार्य हन्मीति अकरोत् । प्रतिज्ञामिति शेषः ।।५६।।

**ताम्रपर्णीया–** स्वलोकगमनाकाङ्क्षी लक्ष्मणस्येति शेषः ।।५६–५८।।

**चट्टी–** श्रीरामः हन्मीति किमर्थं उक्तवानित्यत तत्र हेतुमाह– **स्वलोकेति** ।। सः श्रीरामः स्वयमेव स्वलोकगमनाकाङ्क्षी सन् लक्ष्मणस्येति शेषः । लक्ष्मणस्य स्वलोकं शेषलोकं प्रति गमनमाकाङ्क्षन् सन् लक्ष्मणस्य स्वलोकगमने इमं हन्मीति प्रतिज्ञा हेतुः कारणं स्यादित्यभिप्रायेण हन्मीति प्रतिज्ञामकरोत् ।।

**अत्यन्तबन्धुनिधनं[1] त्याग एवेति चिन्तयन् ।**
**याहि स्वलोकमचिरादित्युवाच स लक्ष्मणम् ।।५७।।**

**व्यासतीर्थीया–** प्रतिज्ञानुसारेण हननमकृत्वा कथं याहीत्युक्तवान् । प्रतिज्ञाहानिप्राप्तेरित्यत आह– **अत्यन्तेति** ।।५७।।

**मधुसूदनीया–** ।। **याहि स्वलोकमिति** ।। लक्ष्मणमेव रामः किमर्थं पुरतः स्वलोकं प्रेषितवानित्याशङ्कापरिहारस्तु लोके राजानो यत्र कुत्रचिद्गन्तुमुद्युक्ताः प्रथमतः शय्यां प्रेषयन्तीति लक्ष्मणस्यापि स्वशय्यारूपत्वात् प्रतिज्ञां निमित्तीकृत्य प्रथमतः प्रेषयामासेति भावः । अत एवोक्तम्– 'पर्यङ्कत्वमवाप यो जलनिधौ' इति ।।५७।।

**वरदराजीया–** तर्हि किमर्थं न जघान कथञ्चेयं प्रतिज्ञा स्वलोकगमने कारणं जातेत्यत आह– **अत्यन्तेति** ।। अत्यन्तबन्धोः साक्षाद्बन्धोर्निधनं नाम त्याग एव इति चिन्तयन् सः रामः स्वलोकं अचिरात् शीघ्रं याहीति लक्ष्मणमुवाचेत्यर्थः । अनेन त्याग एव निधनं प्रतिज्ञा च गमनं प्रति हेतुर्जातेत्युक्तं भवति ।।५७।।

---

१. अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः । येषाञ्चान्नानि भुञ्जीत ये च स्युः शरणागताः ।। महत्यप्यपराधेऽपि तेषां दण्डो विसर्जनम् ।। इति उद्योगपर्वणि ३६.६६ ।।

**जनार्दनीया–** ननु रामः बन्धुस्नेहयन्त्रितः सन् प्रतिज्ञाभङ्गं कृतवानित्यत आह– **अत्यन्तेति** ।। अत्यन्तं बन्धोः अतिस्नेहवद्बन्धोः निधनं त्याग एवेति ।।५७।।

**चट्टी–** तर्हि किमिति न जघान इत्यत आह– **अत्यन्तेति** ।। अत्यन्तबन्धोः अतिस्नेहबन्धोः निधनं नाम त्याग एवेति चिन्तयन् सः श्रीरामः स्वलोकं अचिरात् शीघ्रं याहीति लक्ष्मणं उवाचेत्यर्थः । लक्ष्मणमेव रामः किमर्थं पुरतः स्वलोकं प्रेषितवानित्याशङ्कापरिहारस्तु लोके राजानो यत्र कुत्रचिद्गन्तुमुद्युक्ताः प्रथमतः शय्यां प्रेषयन्तीति लक्ष्मणस्यापि स्वशय्यारूपत्वात् प्रतिज्ञां निमित्तीकृत्य प्रथमतः प्रेषयामासेति भावः । अत एवोक्तं 'पर्यङ्कत्वमवाप यो जलनिधौ' इति ।।५७।।

**गूढवाक्यार्थ–** स्वलोकगमनाकाङ्क्षी स्वलोकं शेषलोकं प्रति लक्ष्मणस्य गमनाकाङ्क्षी क्ष..... मेव हन्मीति प्रतिज्ञामकरोदिति सम्बन्धः । एवकारेण स्वेच्छयैव प्रतिज्ञाकरणं न तु लक्ष्मणे कोपेनेति सूचितम् ।।५७।।

**इत्युक्तः स ययौ जगद्भवभयध्वान्तच्छिदं राघवम्**
**ध्यायन्नाप च तत्पदं दशशतैर्युक्तो मुखाम्भोरुहैः ।**
**आसीच्छेषमहाफणी मुसलभृद् दिव्याकृतिर्लाङ्गली**
**पर्यङ्कत्वमवाप यो जलनिधौ विष्णोः शयानस्य च ।।५८।।**

**व्यासतीर्थीया–** तत्पदं तस्य स्वरूपम् ।।५८–६२।।

**वेदाङ्गतीर्थीया–** इत्युक्तः स लक्ष्मणः ययौ । ध्यायन् नित्यमजस्रं ययौ आप चेति सम्बन्धः । दशशतैर्मुखाम्भोरुहैर्युक्तः । दिव्याकृतिर्लाङ्गली मुसलभृत् यः शेषः महाफणी आसीत् । यश्च जलनिधौ शयानस्य विष्णोः पर्यङ्कत्वमवाप । तत्पदं तत्स्वरूपमाप च ।।५८।।

**वादिराजीया–** इत्युक्तः सः ययावित्यत्र रामसमीपाययौ । तत्पदं शेषस्थानमाप चेति योजना ।।५८।।

**मधुसूदनीया–** इत्युक्तस्स लक्ष्मणः जगद्भवभयध्वान्तच्छिदं राघवं ध्यायन् सन् देहं त्यक्त्वेति शेषः । ययावित्यन्वयः । तदुक्तम्– स गत्वा सरयूतीरं उपस्पृश्य कृताञ्जलिः । निगृह्य सर्वस्रोतांसि निश्वासं स मुमोच ह । अनुच्छ्वसन्तं मुक्तं तं सशक्रास्साप्सरोगणाः । देवास्सर्षिगणास्सर्वे पुष्पवृष्टिमवाकिरन् ।।' इत्यादि रामायणे [उ.का.१०६.१५-१६] । केचित्तु 'लक्ष्मणो देहमत्यक्त्वैव क्षीरसागरं गतवान्' इत्याहुः । तच्चिन्त्यम् । उक्तमानविरोधादप्रामाणिकत्वाच्च ।।५८–६०।।

**वरदराजीया–** इत्युक्तः स लक्ष्मणो जगतो लोकस्य भवः संसारः तस्मात् यत् भयं तदेव ध्वान्तं तमः तच्छिनत्ति परिहरतीति तथा । तं राघवं श्रीरामं ध्यायन्नेव तस्य स्वमूलरूपस्य शेषस्य पदं स्वरूपं आप प्राप । कथम्भूतस्य शेषस्य यः दशशतैः सहस्रसङ्ख्याकैः मुखाम्भोरुहैः मुखकमलैर्युक्तो, यः शेषाख्यो महाफणी महान् सर्पः यश्च मुसलं बिभर्तीति तथा, यश्च दिव्याकृतिर्यस्य स तथा, लाङ्गली लाङ्गलवान् हलधारीत्यर्थः । यश्च पयोनिधौ क्षीराब्धौ शयानस्य विष्णोः पर्यङ्कत्वं मञ्चत्वं आप तस्य शेषस्य स्वरूपत्वं प्राप्त इत्यर्थः । यदा तस्य रामस्य पदं स्थानं वैकुण्ठाख्यं आप । कीदृशो भूत्वेत्याकाङ्क्षायां दशशतैरित्यादिविशेषणानि लक्ष्मणस्य द्रष्टव्यानि ।।५८।।

**जनार्दनीया–** इत्युक्तः स लक्ष्मणः । जगतः भवभयाख्यध्वान्तं अन्धकारं छिनत्ति नाशयतीति जगद्भवभयध्वान्तच्छित् तं राघवं ध्यायन् ययौ । भूलोकादिति शेषः । तस्य रामस्य पदं स्थानं वैकुण्ठं आप । दशशतैः सहस्रसङ्ख्याकैः मुखाम्भोरुहैः मुखकमलैर्युक्तः । मुसलभृत् परिघधारी । लाङ्गली । दिव्याकृतिः देवस्वरूपः शेषाख्यश्चासौ महाफणी महासर्प आसीत् । जलनिधौ क्षीराब्धौ शयानस्य विष्णोः पर्यङ्कत्वं मञ्चत्वं यः शेषः अवाप तस्य शेषस्य पदं स्वरूपं आप च । लक्ष्मणः शेषो भूत्वा स्वमूलरूपशेषेण ऐक्यं प्रापेति भावः । आप च तत्पदमित्युभयत्र सम्बध्यते ।।५८।।

**अनन्तभट्टीया–** जलनिधौ क्षीरोदधौमुक्तस्थले ।।५८।।

**ताम्रपर्णीया–** तत्पदमिति तस्य भगवतः स्थानमापेत्यर्थः । तस्य स्वस्य पदं स्वरूपमाप इति वा । कथमापेत्यत तत्प्रकारमाह– **दशेति** ।। पर्यङ्कत्वमिति ।। शेषफणिभावात् अनन्तरं यो लक्ष्मणः जलनिधौ शयानस्य विष्णोः पर्यङ्कत्वमवापेत्यर्थः । यद्वा यः पर्यङ्कत्वमवाप सः शेषमहाफणिरासीदिति योज्यम् ।।५८–६४।।

**चट्टी–** इत्युक्तः स लक्ष्मणः जगतः लोकस्य भवः संसारः तस्माद् भयं तदेव ध्वान्तं तच्छिनत्ति नाशयतीति जगद्भवभयध्वान्तच्छित् तं राघवं श्रीरामं ध्यायन् देहम्, त्यक्त्वा इति शेषः । ययौ इत्यन्वयः । तदुक्तम्– स गत्वा सरयूतीरं उपस्पृश्य कृताञ्जलिः । निगृह्य सर्वस्रोतांसि निश्वासं स मुमोच ह । अनुच्छ्वसन्तं मुक्तं तं सशक्रास्साप्सरोगणाः । देवास्सर्षिगणास्सर्वे पुष्पवृष्टिमवाकिरन् ।।' इत्यादि रामायणे [उ.का.१०६.१५-१६] । लक्ष्मणो देहमत्यक्त्वैव क्षीरसागरं गतवानिति रामायणविरुद्धम् । तस्य श्रीरामस्य पदं स्थानं वैकुण्ठं अवाप । दशशतैः सहस्रसङ्ख्याकैः मुखाम्भोरुहैः मुखकमलैर्युक्तः मुसलं बिभर्तीति मुसलभृत् । लाङ्गली हली दिव्याकृतिः दिव्यस्वरूपः देवरूपः इत्यर्थः । शेषाख्यश्चासौ महाफणी महासर्प आसीत् जलनिधौ क्षीराब्धौ शयानस्य विष्णोः पर्यङ्कत्वं मञ्चत्वं यः शेषः अवाप तस्य शेषस्य पदं स्वरूपं आप च । लक्ष्मणः शेषो भूत्वा स्वमूलरूपशेषेण ऐक्यं प्रापेति भावः । आप च तत्पदमित्युभयत्र सम्बध्यते ।।५८।।

**प्रमाणसंग्रह–** ।। आसीच्छेशमहाफणीति ।। 'स गत्वा...* अवाकिरन् ।।' इति रामायणे ।।५८।।

**गूढवाक्यार्थ–** तत्पदं तस्य शेषस्य पदं...* शेषमहाफणी...* रासीदित्यन्वयः ।।५८।।

**अथ राघवः स्वभवनोपगतौ विदधे मतिं सह जनैरखिलैः ।**
**समघोषयच्च य इहेच्छति तत् पदमक्षयं सपदि मैत्विति सः ।।५९।।**

**वेदाङ्गतीर्थीया–** मा एतु मामायातु इति समघोषयत् ।।५९–६०।।

**वादिराजीया–** सपदि मैत्विति स इत्यत्र तत्पदमिच्छति सः सपदि तत्क्षणादेव मा मां प्रति एत्वेति योजना ।।५९।।

**वरदराजीया–** अथानन्तरं राघवः अखिलैः जनैः सह स्वभवनं वैकुण्ठाख्यं प्रति उपगतौ गमने गमनार्थं मतिं बुद्धिं विदधे । तथा समघोषयच्च भेरीताडनादिना प्रसिद्धमकरोदित्यर्थः । किमिति इह लोके तदक्षयं नाशरहितं पदं स्थानं इच्छतीति सः सपदि एतत्क्षण एव मा मां एतु प्राप्नोतु इति समघोषयदित्यर्थः ।।५९।।

**जनार्दनीया–** अथ लक्ष्मणगमनानन्तरं इह कर्मभुवि अक्षयं अविनाशि तत्पदं सिद्धस्थानम् । वैकुण्ठमिति यावत् । यो योऽधिकारी इच्छति स च स च सपदि शीघ्रं मा मां प्रति एतु आयातु ।।५९।।

**अनन्तभट्टीया–** मा एतु इति पदच्छेदः ।।५९।।

**चट्टी–** अथ लक्ष्मणगमनानन्तरं राघवः अखिलैः जनैः सह स्वभवनं वैकुण्ठाख्यं तस्य उपगतौ गमने गमनार्थं मतिं बुद्धिं विदधे तथा समघोषयच्च भेरीताडनादिप्रसिद्धमकरोदित्यर्थः । किमिति । इह कर्मभुवि तदक्षयं नाशरहितं पदं स्थानं यः इच्छति सः सपदि एतत्क्षण एव मा मां एतु प्राप्नोतु इति समघोषयदिति पूर्वेणान्वयः ।।५९।।

**गूढवाक्यार्थ–** मां एतु ।।५९।।

**श्रुत्वा तु तद् य इह मोक्षपदेच्छवस्ते सर्वे समाययुरथाऽतृणमापिपीलम् ।**
**रामाज्ञया गमनशक्तिरभूत् तृणादेर्ये तत्र दीर्घभविनो न हि ते तदैच्छन् ।।६०।।**

**वादिराजीया–** श्रुत्वा तु तद्यइहेत्यत्र तदाघोषणं श्रुत्वा इहायोध्यायां ये तु मोक्षपदेच्छव इति तुशब्दसम्बन्धः ।।६०।।

**मधुसूदनीया–** ।। **श्रुत्वा तु तद् य इहेति** ।। ननु मोक्षपदेच्छवः सर्वे समाययुरथ आतृणमापिपीलमित्येतन्न युज्यते । तृणपिपीलिकादियोनीनां पापादागतत्वेन तज्जातेर्मुक्तावभावात् । अतस्तेषां तदानीं रामेण सह गमनं न युज्यते । इति सत्यम् । यद्यपि केषाञ्चित्तत्वेऽपि सर्वेषां तत्त्वाभावेन तत्तज्जातीनां नित्यत्वेन तादृशानां मुक्तिसम्भवेन तेन सह गमनोपपत्तेः ।'तिरश्चीनाः स्थावराश्च सर्वे ज्ञानाद्धिकुण्ठगाः । अमुक्ता मुक्तिमायान्ति नियमात्कर्मणः क्षयात् ।।' इति स्मृतेः ।

पशुवृक्षादिभेदेन जीवा एव स्वतः स्थिताः । संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता ।।
तत्र स्थावरमुक्तेभ्यो वराः जङ्गममुक्तिगाः । तेभ्यो मानुषमुक्ताश्च विप्रमुक्तास्ततोऽधिकाः ।।
तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवेदिनः । अर्थज्ञा ऋषयस्तेभ्यो ये देवास्संशयच्छिदः [अतो देवाः] ।।
पूर्णधर्मास्ततस्त्विन्द्रो निस्सङ्गो गरुडस्ततः । भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्स्मृतः ।।
मुक्तौ वा संसृतौ वापि सम्यगेतेषु ते गुणा ।।' इति कापिलेये [भा.ता.३.३१.३३] ।।६०–६५।।

**वरदराजीया–** तत्समघोषणं श्रुत्वा इह लोके मोक्षपदेच्छवो मोक्षाख्यं पदमाकाङ्क्षमाणास्ते आतृणं तृणमारभ्य आपिपीलिकापर्यन्तं सर्वे जीवाः समाययुः । श्रीरामसमीपमिति शेषः । ननु स्वतश्चलनरहितस्य तृणादेः कथं आगमनं सम्भवतीत्यत आह– **रामाज्ञयेति** ।। रामस्याज्ञया तृणादेः गमनशक्तिरभूत् । तत्र लोके ये दीर्घभाविनः कल्पान्तरे मुमुक्षवो नित्यसंसारिणश्च ते तन्मोक्षपदं नैच्छन् हि ।।६०।।

**जनार्दनीया–** तद्विघोषणं श्रुत्वा, इह अस्मिन् काले । सुसाधनसम्पत्तिपूर्तिविशेषबलेन ये मोक्षेच्छवः ते सर्वे । आतृणं तृणादि जडजीवान् मर्यादीकृत्य । आपिपीलं पिपीलिकादिचेतनं मर्यादीकृत्य समाययुः । अयोध्यां प्रतीति शेषः । ननु तृणादिस्थावराणां गमनशक्तिः कथमित्यत आह– **रामाज्ञयेति** ।। तत्र मोक्षाधिकारिषु मध्ये दीर्घभविनः बहुकालोत्पत्तिमन्तो ये ते तदा रामगमनकाले हि यस्मात् नैच्छन् तस्मात् स्वयोग्यतापूर्तिकाले मोक्षं गमिष्यन्तीत्यर्थः । दीर्घभविन इत्यत्र नित्यसंसारिणो विवक्षिताः । ते न मोक्षपदमैच्छन् ।।६०।।

**अनन्तभट्टीया–** आतृणं तृणजीवम् । आपिपीलं आपिपीलिकम् । दीर्घभविनः संसारहेतुकर्मयुक्ताः ।।

**चट्टी–** तद्विघोषणं श्रुत्वा इह अस्मिन् काले तु साधनसम्पत्तिपूर्तिविशेषबलेन ये मोक्षपदेच्छवः मोक्षाख्यं पदमाकाङ्क्षमाणास्ते सर्वे आतृणं तृणादिजडजीवान् मर्यादीकृत्य आपिपीलं पिपीलिकादिचेतनं मर्यादीकृत्य समाययुः । श्रीरामसमीपमिति शेषः । ननु स्वतश्चलनादिरहिततृणादिस्थावरजीवानां गमनशक्तिः कथमित्यत आह– **रामाज्ञयेति** ।। श्रीरामस्याज्ञया तृणादेः गमनशक्तिरभूत् । तत्र मोक्षाधिकारिषु मध्ये बहुकाले उत्पत्तिमन्तो ये ते तदा रामगमनकाले हि यस्मात् तत् मोक्षपदं नैच्छन्

तस्मात् स्वयोग्यतापूर्तिकाले मोक्षं गमिष्यन्तीत्यर्थः । दीर्घभविन इत्यत्र नित्यसंसारिणो विवक्षिताः । तेषां मोक्षाधिकाराभावात् ।।६०।।

**भारतश्री–** दीर्घभविनः दीर्घसंसारिणः ।।६०।।

**भावविवृति–** रामाज्ञया गमनशक्तिरभूत्तृणादेरित्यत्र सर्वे समाययुरथातृणमापिपीलं इत्युक्त्या तृणान्ता स्थावरा अप्यागता इति ज्ञायते । तेषां गमनशक्तिः कथमित्यत आह– **रामाज्ञयेति** ।। अत्र रामपरंधामप्रवेशकाले तृणाद्या 'सदा रामभावनात्' 'सदा सुतत्त्ववेदिन' इत्युक्त्या तेषां स्वयोग्यसाधनस्य मानुषदेहस्य साध्यत्वात् मानुषदेहवन्तः उत रक्षादिदेहवन्तः इति । नाद्यः । मानुषदेहत्वे रामाज्ञाया गमने अनपेक्षणात् । वृक्षादिदेहत्वे तु सदा रामभावत्वाद्यसम्भवात् । किञ्च 'अवगाह्य जलं यो यः प्राणिराशिः पृथक्पृथक् । मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत् ।।' इति संग्रहरामायणोक्त्या 'ते च दिव्यवपुषोऽभवंस्तदा' इत्युक्त्या च साधनपूर्त्यर्थं मानुषदेहं प्राप्तास्ते तु तदा तद्देहं त्यक्त्वापि तेजोमयपुरुषाकारा इति ज्ञायते । अतस्तदाज्ञाया अनपेक्षणादिति चेदुच्यते । स्थावराणां साधनस्य मानुषदेहसाध्यत्वेऽपि तत्पूर्वदेहेषु मानुषत्वं प्राप्य स्वयोग्यसाधनसम्पूर्तिं सम्पाद्य तदा स्थावरादिदेहवन्त इति वक्तव्यम् । तेषां तद्देहस्यैव चरमत्वात् । तदुक्तं संग्रहरामायणे– नानास्तम्वलतोपेता रुद्धपादाहिपादपाः । अनुयातुमशक्तास्त्वामनुशोचन्ति शोभनाः ।। तिर्यञ्चः कीटपर्यन्ताः ...मृगपक्षिणः । भक्तवत्सल...इमान् ...।।' इति ।। 'त्यक्तसर्वेशणार्थान् वृक्षान् पक्षीभकीटान् पितरमथसखीन् मातृपूर्वान् विसृज्य' इत्युक्त्या च तेषां तदा खगावरादित्वमेव ज्ञायते । अतस्तेषां तदा रामसमीपगमने रामाज्ञाया अपेक्षितत्वमेव । किञ्च तद्देहस्यैव चरमत्वात् तद्देहपरित्यागशक्तिरपि रामाज्ञयेति वक्तव्यम् । तेषां स्वोत्तमप्रवेशेनोत्क्रमणमार्गयोरभावात् । अपिच तद्देहपरित्यागानन्तरं 'पिपीलिकातृणान्तानां ददौ लोकाननुत्तमान्' इत्युक्त्या तेषां तेजोमयस्थावरादिदेहप्राप्तिरिति प्रतीयते । 'पशुवृक्षादिभेदेन जीवा एव व्यवस्थिताः । संसृतौ व्यत्यस्तेषां मुक्तौ तत्तत्स्वरूपता ।।' इति तात्पर्योक्तेः । तथाच तेषां श्वेतद्वीपस्थस्थानविशेषाणाम् ... ।।६०–९२।।

**गूढवाक्यार्थ–** तत् आघोषणं श्रुत्वा ।।६०।।

**संस्थापयामास कुशं स्वराज्ये तैः साकमेव च लवं युवराजमीशः ।**
**संस्थाप्य वालितनयं कपिराज्य आशु सूर्यत्मजोऽपि रघुवीरसमीपमायात् ।।**

**वेदाङ्गतीर्थीया–** तैः दीर्घभविभिः ।।६१-६३।।

**वादिराजीया–** संस्थापयामास कुशमित्यत्र तैः दीर्घभाविभिः जनैः सह कुशं संस्थापयामास । सुग्रीवोऽपि वालितनयं कपिराज्ये संस्थाप्य रघुवीरसमीपमायादिति योजना ।।६१-६३।।

**वरदराजीया–** ईशो रामः स्वराज्ये कुशं स्वपुत्रं सन्ततैर्दीर्घभविभिः साकं संस्थापयामास । लवं च युवराजं कृत्वा संस्थापयामासेत्यर्थः । सूर्यात्मजः सुग्रीवोऽपि वालितनयमङ्गदं कपीनां विद्यमाने राज्ये संस्थाप्य रघुवीरस्य श्रीरामस्य समीपमाशु आयात् ।।६१।।

**जनार्दनीया–** तैर्दीर्घभविभिः साकं कुशं कुशाख्यपुत्रम् । युवराजं लवं च लवाख्यपुत्रं संस्थापयामासेत्यर्थः ।।६१।।

**चट्टी–** ईशो श्रीरामः स्वराज्ये कुशं कुशाख्यं स्वपुत्रं तैर्दीर्घभविभिः साकं संस्थापयामास । लवं च युवराजं कृत्वा संस्थापयामासेत्यर्थः । सूर्यात्मजः सुग्रीवोऽपि वालितनयमङ्गदं कपिराज्ये कपीनां आधिपत्ये संस्थाप्य रघुवीरस्य श्रीरामस्य समीपमाशु आयात् ।।६१।।

**गूढवाक्यार्थ–** तैः दीर्घभविभिः ।।६१।।

**अथाऽह वायुनन्दनं स राघवः समाश्लिषन् ।**
**तवाहमक्षिगोचरः सदा भवामि नान्यथा ।।६२।।**

**व्यासतीर्थीया–** तैर्दीर्घभविभिः स्वधाम जिगमिषुर्भगवान् हनूमन्तमपि स्थपायन्नत्रावस्थाने मे भगवद्दर्शनं न स्यादिति हनुमदाशङ्कायामाह– **अथाहेति** ।।६२।।

**वरदराजीया–** अथानन्तरं स राघवो रामो वायुनन्दनं समाश्लिषन्नाह । किमिति । अहं तव सदा अक्षिगोचरो भवामीति । अन्यथा न ।।६२।।

**जनार्दनीया–** अक्ष्णोः गोचरः प्रत्यक्षः ।।६२।।

**चट्टी–** अथानन्तरं स राघवो श्रीरामो वायुनन्दनं समाश्लिषन्नाह । किमिति । अहं सदा तव अक्ष्णोः गोचरः प्रत्यक्षः भवामीति । नान्यथा अन्यथा न ।।६२।।

**त्वया सदा महत् तपः सुकार्यमुत्तमोत्तमम् ।**
**तदेव मे महत् प्रियं चिरं तपस्त्वया कृतम् ।।६३।।**

**व्यासतीर्थीया–** त्वया तपः कार्यमित्युक्त्या ततः पूर्वमकृतमिति प्रतीतिं निवारयन्नाह– **चिरमिति** ।।

**वरदराजीया–** त्वया सदा उत्तमोत्तमं महत् बहुकालसाध्यं तपः कार्यं अनुष्ठेयम् । कुतः त्वया चिरं बहुकालं कृतं तप एव मे महत्प्रियं अतिप्रीतिकरं यत इत्यर्थः ।।६३।।

**जनार्दनीया–** त्वया चिरं शनैः मदवयवध्यानेन कृतं चिरमित्यर्थः । यत्तपः कृतं तदेव मे महत्प्रियं अतितुष्टिदम् ।।६३।।

**चट्टी–** त्वया सदा उत्तमोत्तमं महत्तपः सुकार्यं सम्यक् अनुष्ठेयम् । कुतः । त्वया चिरं बहुकालं कृतं तप एव मे मम महत्प्रियं अतिप्रियं यत इत्यर्थः ।।६३।।

**दशास्यकुम्भकर्णकौ यथा सुशक्तिमानपि ।**
**जघन्थ न प्रियाय मे तथैव जीव कल्पकम् ।।६४।।**

**व्यासतीर्थीया–** तथैव मे प्रियं कुर्वन् कल्पकं जीव ।।६४-६९।।

**वेदाङ्गतीर्थीया–** तथैव मत्प्रियायैव । त्वज्जीवनमपि मम प्रियमिति भावेन ।।६४।।

**वादिराजीया–** यथा सुशक्तिमानपीत्यत्र अव्ययानामनेकार्थत्वात् यथातथाशब्दौ यतस्तत इत्यर्थे ।।

**वरदराजीया–** दशास्यकुम्भकर्णकौ रावणकुम्भकर्णौ सुशक्तिमानपि त्वं मे प्रियाय मत्प्रियार्थं न जघन्थ न हतवानसि । तथैव मत्प्रियार्थमेव कल्पकं कल्पपर्यन्तं जीवनं प्राप्नुहि । त्वज्जीवनमपि मेऽतिप्रियमिति भावः ।।६४।।

**जनार्दनीया–** दशास्यकुम्भकर्णकौ हन्तुं सुशक्तिमानपि अतिसमर्थोऽपि । त्वं मे प्रियाय प्रियार्थं यथा न जघन्थ तथैव मत्प्रियायैव कल्पकं कल्पान्तमवधीकृत्य जीव ।।६४।।

**ताम्रपर्णीया–** ।। **सुशक्तिमानपीति** ।। स्वानुग्रहेण सुशक्तिमानपीत्यर्थः । अन्येषां तादृशानुग्रहपात्रत्वमेव नेति भावः । तयैव मत्प्रियापेक्षैव ।।६४-७१।।

**चट्टी–** दशास्यकुम्भकर्णकौ रावणकुम्भकर्णौ तौ हन्तुं सुशक्तिमानपि अतिसमर्थोऽपि त्वं मे प्रियाय मत्प्रियार्थं यथा न जघन्थ न । तथैव मत्प्रियार्थमेव कल्पकं कल्पपर्यन्तं जीव जीवनं प्राप्नुहि । त्वज्जीवनमपि मेऽतिप्रियमिति भावः ।।६४।।

**गूढवाक्यार्थ–** सुशक्तिमानपि मदनुग्रहेण सुशक्तिमानपीत्यर्थः । तथैव मत्प्रियार्थमेव ।।६४।।

**पयोब्धिमध्यगं च मे सुसद्म चान्यदेव वा ।**
**यथेष्टतो गमिष्यसि स्वदेहसंयुतोऽपि सन् ।।६५।।**

**वेदाङ्गतीर्थीया–** स्वदेहसंयुतः इदानीन्तनमानवदेहसंयुतः सन्नपि ।।६५-७१।।

**वरदराजीया–** पयोब्धेः क्षीरसमुद्रस्य मध्ये स्थितं यच्छ्वेतद्वीपाख्यं अन्यदेव वा वैकुण्ठाख्यं अनन्तासनाख्यं वा मम सद्म स्वदेहसंयुतोऽपि इदान्तीनकपिदेहसंयुतोऽपि सन् यथेष्टतः स्वेच्छानुसारेण गमिष्यसि । श्वेतद्वीपादौ तु स्वेच्छानुसारेण गतिरस्त्विति भावः ।।६५।।

**जनार्दनीया–** स्वदेहसंयुतोऽपि वानरस्वरूपयुक्तः सन्नपि पयोब्धिमध्ये गं विद्यमानं सुसद्म श्वेतद्वीपं अन्यत्सुसद्म एव वा अनन्तासनं वा वैकुण्ठं वा यथेष्टतः स्वेच्छानुसारेण गमिष्यसि यास्यसि ।।६५।।

**चट्टी–** स्वदेहसंयुतोऽपि इदानीं कपिदेहसंयुतोऽपि सन् पयोब्धिमध्यगं क्षीरसमुद्रमध्यस्थितं सुसद्म श्वेतद्वीपं अन्यत् अनन्तासनं वैकुण्ठं वा यथेष्टतः स्वेच्छानुसारेण गमिष्यसि यास्यसि । श्वेतद्वीपादौ स्वेच्छानुसारेण गतिरस्त्विति भावः ।।६५।।

**भावचन्द्रिका–** ।। **पयोब्धीति** ।। 'मम त्रिधाम्नः त्रिषु धामसु त्वमनन्यगम्येषु [अनल्पगम्येषु] चरेः' इति संग्रहरामायणे [उ.का.७.६] ।।६५-६९।।

**यथेष्टभोगसंयुतः सुरेशगायकादिभिः ।**
**समीड्यमानसद्यशा रमस्व मत्पुरः सदा ।।६६।।**

**मधुसूदनीया–** ।। **यथेष्टभोगसंयुतो रमस्वेति** ।। ननु 'त्वया सदा महत्तपः सुकार्यमुत्तमोत्तमं' इत्युक्त्वा 'यथेष्टभोगसंयुतो रमस्व' इति कथमुच्यते । तपोभोगयोः परस्परविरुद्धत्वेनैककालीनत्वा-योगादिति चेदुच्यते । अत्र तपश्शब्देन तपोविशेषस्य गृहीतत्वेन विरोधाभावाच्च । तपोविशेषस्तु– तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु । अहिंसा सत्यवचनं आनृशंस्यं दमो गुणाः । एतत्तपो विदुर्विप्राः न शरीरस्य शोषणम् ।।' इति शान्तिपर्वोक्त्यावगन्तव्यः [७९.१८] ।।६६–७७।।

**वरदराजीया–** यथेष्टभोगैः संयुतः । सुरेशगायकाः देवगन्धर्वादयो येषां तैः समीड्यमानं स्तूयमानं सन्निर्दुष्टं यशो यस्य तादृशः सन् । सदा मत्पुरो मत्समीपे रमस्व क्रीडस्व ।।६६।।

**जनार्दनीया–** समीड्यमानं स्तूयमानं सन्निर्दुष्टं यशो यस्य स तथा । तादृशः सन् मत्पुरः मदग्रे ।।

**चट्टी–** यथेष्टभोगैः संयुतः युक्तः । सुरेशगायकाः देवगन्धर्वा ते आदयो येषां तैः । समीड्यमानं सम्यक् स्तूयमानं सन्निर्दुष्टं यशो यस्य स तथा तादृशः सन् सदा मत्पुरो मदग्रे रमस्व रमणं कुरु । स्वेच्छानुसारेण प्रवर्तस्वेत्यर्थः ।।६६।।

**तवेप्सितं न किञ्चन क्वचित् [1]कदाचिदेव वा ।**
**मृषा भवेत् प्रियश्च मे पुनः पुनर्भविष्यसि ।।६७।।**

**वरदराजीया–** तवेप्सितं त्वदिष्टं किञ्चन किमपि क्वचिद्देशे कदाचित्काले । 'कुतश्चित्' इति पाठे कुतश्चिद्धेतोरित्यर्थः । मृषा न भवेत् । पुनः पुनरुत्तरोत्तरं मे प्रिय एव भविष्यसि ।।६७।।

**जनार्दनीया–** तव ईप्सितमभीष्टं किञ्चन किञ्चिदपि क्वचित् कस्मिंश्चित् स्थले कदाचित् कस्मिंश्चित् काले मृषा न भवेत् । पुनः पुनः कल्पे कल्पे मे प्रियश्च ।।६७।।

**चट्टी–** तव ईप्सितमभीष्टं किञ्चन किञ्चिदपि क्वचित् कस्मिंश्चित् देशे कदाचित् कस्मिंश्चित् काले । 'कुतश्चित्' इति पाठे कुतश्चिद्धेतोरित्यर्थः । मृषा व्यर्थं न भवेत् । पुनः पुनः कल्पे कल्पे मे प्रियश्च भविष्यसि ।।६७।।

**इतीरितो मरुत्सुतो जगाद विश्वनायकम् ।**
**विधेहि पादपङ्कजे तवेश भक्तिमुत्तमाम् ।।६८।।**

**वरदराजीया–** इति उक्तरीत्या ईरितोऽभिहितो मरुत्सुतो हनूमान् विश्वनायकं जगन्नाथं श्रीरामं जगाद । किमिति । हे ईश तव पादपङ्कजे उत्तमां सर्वाधिकारिभक्त्युत्तमां भक्तिं देहि कुरु प्रदिशेत्यर्थः ।।६८।।

**जनार्दनीया–** विश्वस्य नायकं स्वामिनम् । हे ईश तव पादपङ्कजे मम भक्तिं उत्तमां रुद्रभारत्यादिभक्त्यधिकां कृत्वा विधेहि पोषय अभिवृद्धां कुर्वित्यर्थः ।।६८।।

**चट्टी–** इत्युक्तरीत्या ईरितोऽभिहितो मरुत्सुतो हनूमान् विश्वनायकं जगन्नाथं श्रीरामं जगाद । हे ईश तव पादपङ्कजे मम उत्तमां रुद्रभारत्यादिभक्त्यधिकां भक्तिं विदेहि कुरु प्रदिशेत्यर्थः ।।६८।।

**सदा प्रवर्धमानया तया रमेऽहमञ्जसा ।**
**समस्तजीवसञ्चयात् सदाऽधिका हि मेऽस्तु सा ।।६९।।**

**वादिराजीया–** समस्तजीवसञ्चयादित्यस्य ब्रह्मपदवीयोग्येतरसमस्तजीवसञ्चयादित्यर्थः । सदाधिका हीति हिशब्देन स्वस्याधिकारिसर्वोत्तमत्वप्रसिद्धिं सूचयति ।।६९–७१।।

---

१. 'कुतश्चित्' इति वरदराजीयचट्टीटिप्पण्योः पाठान्तरम् ।

**वरदराजीया–** सदा मुक्तिपर्यन्तं प्रवर्धमानया अभिव्यज्यमानया तया भक्त्या अहं अञ्जसा रमे क्रीडिष्ये । समस्तजीवसञ्चयात् सर्वाधिकारिसमूहात् तद्भक्तेरधिका उत्तमा सा भक्तिर्मेऽस्तु ।।६९।।

**जनार्दनीया–** सदा प्रतिक्षणं प्रवर्धमानया एधमानया तया भक्त्या रमे । सा भक्तिरधिकास्तु ।।६९।।

**चट्टी–** सदा प्रतिक्षणं प्रवर्धमानया अभिव्यज्यमानया तया भक्त्या अहं अञ्जसा रमे क्रीडिष्ये । समस्तजीवसञ्चयात् सर्वाधिकारिसमूहात् तद्भक्तेरधिका उत्तमा सा भक्तिर्मे सदास्तु ।।६९।।

**नमो नमो नमो नमो नतोऽस्मि ते सदा पदम् ।**
**समस्तसद्गुणोच्छ्रितं नमामि ते पदं पुनः ।।७०।।**

**व्यासतीर्थीया–** मानसिकव्यापाररूपां भक्तिं कृत्वा कायिकां नमनरूपां करोति– **नम इति** ।।

**वरदराजीया–** अत्यादरात् नम इति बहुवारमुक्तिः । ते पदं पादौ सदा नतोऽस्मि प्रणतोऽस्मीत्यर्थः । समस्तैर्गुणैरुच्छ्रितं उत्कृष्टं ते पदं पुनर्नमामि ।।७०।।

**जनार्दनीया–** समस्तसद्गुणैः उच्छ्रितं उत्तमं ते पदम् । नमो नम इत्यादरात् ।।७०।।

**चट्टी–** मानसिकव्यापाररूपां भक्तिं कृत्वा कायिकां नमनरूपां करोति– **नमो नम इति** ।। ते नमो नमः । ते पदं सदा नतोऽस्मि । समस्तसद्गुणैरुच्छ्रितं उत्तमं ते पदं पुनर्नमामि । आदरात् एवमुक्तम् ।।

**भावचन्द्रिका–** ।। **नम इति** ।। पञ्चावरनियमसूचनाय पुनर्नमामीत्युक्तम् ।।७०–७४।।

**अतिविशद–** नमो नमो नमो नमो नतोऽस्मि इति श्लोके षट्कृत्वा नमःशब्दः सूच्यते । पुनःशब्देन सप्तकृत्वोऽपि ज्ञायते तत्किमर्थमित्युक्ते आदरादित्याहुः । किञ्च आदरार्थत्वे च एकप्रकारशब्दाभ्यासः स्यात् । नत्वनेकाकारः । यथोक्तं बृहद्भाष्ये– [६.३.३७] एकप्रकारशब्दानां अभ्यासस्त्वादरार्थकः । स्वरवर्णादिमात्रं वाऽप्यन्यथा चेत्तथापरः ।। अर्थः स्यादेष नियमो वाक्ये वीप्सापदे तथा । प्रातिस्विकार्थेऽपि भवेत् आभ्यासे वा तथास्थिते ।।' इति शब्दनिर्णये । तर्हि आदरात् शतकृत्वः किन्नोक्तमित्युक्ते मूकतैव शरणमिति । अत्रोच्यते । 'तवाहमक्षिगोचर' इत्यादिना वराणां षड्विधत्वश्रवणात् नमःशब्दस्यापि तावत्वमिति यथा राज्ञा किञ्चिदुक्ते हे प्रभो त्वदुक्तं सत्यं तुभ्यं नम इति वदन्ति तथेहापीति ।

प्रियश्च मे पुनःपुनर्भविष्यतीत्यस्य पृथग्वरत्वं न शङ्कनीयम् । तस्य तवेप्सितं न किञ्चन मृषा भवेदित्यत्र हेतुत्वात् यस्मादित्यर्थः । ततश्चायमर्थः । हे हनूमन् तवाहमक्षिगोचरः सदा भवामि । अन्यथा पुरस्थिताक्षिगोचरत्वस्य सिद्धत्वात् अक्षिगोचरो भवामीति वचनमनुपपन्नमित्यतः सदेत्युक्तम् ।

अयमभिप्रायः । अहं परंधाम गमिष्यामि त्वमत्र तिष्ठेत्युक्ते अहं त्वत्सेवार्थमेवावतीर्णः त्वां विना कथं स्थास्ये इति हनूमतः हार्दशङ्कापरिहारार्थं सदाक्षिगोचर इत्युक्तम् । अनेन किम्पुरुषे एकरूपेण अहं स्थास्ये मद्दर्शनं सदा तव भविष्यति इत्यभिप्रायः सूचितो भवतीत्येवमुक्त हनूमान् नम इत्याह ।।१।।

अत्र स्थित्वा मया किं कार्यमित्याह– **त्वयेति** ।। त्वया महत्तपःसुकार्यं तदेवोत्तमोत्तमम् । तदेव मे महत्प्रियम् । चिरं तपः त्वया कृतमित्यत्र तपःशब्देन महदित्यादिविशेषणादालोचनमेव ग्राह्यम् । न सन्तापादि । सन्तापादिग्रहणे बाधकमनुपदमेव वक्ष्यते 'यथेष्टभोगसंयुत' इति वचनेन । एवमुक्तः पुनराह नम इति ।।२।।

मत्प्रियार्थं त्वं कल्पपर्यन्तं जीवेत्याह– **दशास्येति** ।। दशास्यकुम्भकर्णकौ यथा सुशक्तिमानपि जघन्थ न प्रियाय मे तथा मत्प्रियार्थं त्वं कल्पपर्यन्तं जीवेत्युक्तः नम इत्याह ।।३।।

तवानन्तरूपसेविनो मम अत्रावस्थितिः कथं घटत इत्यत आह– **पयोब्धिमध्यगमिति** ।। मे पयोब्धिमध्यगं श्वेतद्वीपं अन्यत् सद्म वैकुण्ठमनन्तासनञ्च यथेष्टतः गमिष्यसि । एतद्देहिनो मम तद्गमनं कथं घटत इत्यत उक्तम्– **स्वदेहसंयुतोऽपि सन्निति** ।। एवमुक्तः पुनराह नम इति ।।४।।

इदानीं कायक्लेशः त्याज्य इत्याह– **यथेष्टेति** ।। यथेष्टभोगसंयुतस्सन् सुरेशगायकादिभिः सह सम्यक् ईड्यमानयशाः सन् मत्पुरः रमस्वेत्युक्त आह नम इति ।।५।।

अन्यस्येव तवेप्सितं वृथा न भवत्वित्याह– **तवेति** ।। तव ईप्सितं किञ्चन क्वचित् कदाचिद्वा मृषा वृथा न भवेत् । यथेष्टभोगसंयुत इत्युक्त्यैव पूर्वं तपःशब्देनोभयं ग्राह्यमिति निरस्तम् । अनेनैव च सन्तापग्रहणे पूर्वत्र बाधकोक्तिश्च सूचिता भवति । भोगयुक्तत्वे सन्तापायोगात् बाधकश्चोक्तो भवति । हे हनूमान् त्वं पूर्वं प्रियः इदानीं प्रियः उत्तरत्रापि पुनर्भविष्यसि यतः अतः तवेप्सितं किञ्चन क्वचिद्वा मृषा न भवेत् । लोके राजादेःप्रियस्यैव अभीप्सितप्राप्तिदर्शनात् इति पुनःशब्देन नमःसमाप्तिकृत्वेऽपि प्रियश्च मेत्यस्य पृथग्वरत्वम् ।।६।।७०–७२।।

**इतीरिते तथेति तं जगाद पुष्करेक्षणः ।**
**जगाम धाम चाऽत्मनस्तृणादिना सहैव सः ।।७१।।**

**वरदराजीया–** इति हनुमता ईरिते सति पुष्करवत् कमलवत् ईक्षणे यस्य स रामः । तं हनूमन्तं तथेति तथास्त्विति जगाद । स राम आत्मनः स्वस्य धाम स्थानं तृणादिना सहैव जगाम ।।७१।।

**जनार्दनीया–** हनुमति इतीरिते सति । पुष्करेक्षणः अब्जनेत्रो रामः तथेति तथास्त्विति जगाद । धाम वैकुण्ठम् ।।७१।।

**चट्टी–** हनुमता इति ईरिते सति पुष्करवत् कमलवत् ईक्षणे यस्य स रामः तं हनूमन्तं तथेति तथास्त्विति जगाद । स राम आत्मनः स्वस्य धाम स्थानं वैकुण्ठं तृणादिना सहैव जगाम ।।७१।।

**खगा[१] मृगास्तृणादयः पिपीलिकाश्च गर्दभाः ।**
**तदाऽऽसुरुत्तमा यतो नृवानरास्तु किं पुनः ।।७२।।**

**व्यासतीर्थीया–** ननु रागादिदोषदूराणामेव भगवद्धामगमनमतः कथं तृणादेः रामधामगमनमित्यत आह– **खगेति** ।।७२।।

**वेदाङ्गतीर्थीया–** उत्तमाः उत्तमदिव्यदेहाः ।।७२।।

**वादिराजीया–** तदाऽऽसुरुत्तमा यत इत्यत्र यतः कारणात् तदा रामेण राज्यपरिपालनसमये खगाद्याः गर्दभान्ताः हीनयोनयोऽप्युतमा आसुः । ततः कारणात् नृवानराद्याः उत्तमजीवा इति किं पुनः किं वक्तव्यम् । अतः सर्वेषां मोक्षदानमिति भावः ।।७२।।

**सत्याभिनवीया–** तत्रैव खगा मृगास्तृणादयः...इति श्लोकः तस्यार्थः । यतः यत् विष्णोः विष्णुस्वरूपरामचन्द्रप्रसादादिति यावत् । यदा खगादयः उत्तमा आसुः तदा तु खगाद्यपेक्षया विशेषेण युक्ताः नृवानरा उत्तमा आसुरिति किं पुनर्वक्तव्यं किं वक्तव्यमिति । एतेन यत इत्येतत् व्यर्थमिति दूषणं परास्तम् । यत इत्यस्य यस्मादित्यर्थ इत्यङ्गीकारात् । एतेनैव नृवानरास्तु किं पुनरित्यत्र पुनःशब्दो व्यर्थ इति दूषणं परास्तम् । किं पुनरिति शब्दद्वयं किमित्यर्थे वर्तते इति स्वीकरणात् ।।७२।।

**वरदराजीया–** तृणादिनेत्येतद्विवृणोति– **खगा इति** ।। खगाः पक्षिणः, मृगाः वनचारिणो हरिणाद्याः, तृणादयः तृणगुल्मलतौषध्यादयः, पिपीलिकाः तदुपलक्षिताः सर्वे कीटाः, गर्दभाः खरोपलक्षिताः सर्वे पशवः तदा तस्मिन् काले उत्तमा एवासुर्बभूवुः । यतो तृणादिना सहैव जगामेत्यर्थः । नराः वानरास्तु उत्तमा आसुरिति किं पुनर्वक्तव्यमित्यर्थः ।।७२।।

**जनार्दनीया–** तदा स्वर्गारोहणकाले । तृणानि आदिशब्देन वल्लिवृक्षादयः । उत्तमाः दिव्यदेहाः आसुः । यतः कारणात् अतः नराश्च वानराश्च उत्तमा आसुरिति पुनः किं वक्तव्यमित्यर्थः ।।७२।।

---

१. 'ततः सस्त्रीपुमांसस्ते सपक्षिपशुबान्धवाः । राघवस्यानुगास्सर्वे हृष्टा विगतकल्मशाः ।।..नोच्छ्वसत् तदयोध्यायां सुसूक्ष्ममपि दृश्यते । तिर्यग्योनिगताश्चैव सर्वे राममनुव्रताः ।। इत्यार्षे १०९.१५.२२ ।

**ताम्रपर्णीया–** उत्तमाः स्वरूपेण । स्वरूपोत्तमत्वेऽपि खगादीनां साधनपूर्त्यभावात् कथं मुक्तिं ययुः ।।[1]

**चट्टी–** तृणादिनेत्येतद्विवृणोति– **खगा इति** ।। तदा स्वर्गारोहणकाले खगा पक्षिणः, मृगाः वनवासिणो हरिणाद्याः, तृणादयः पिपीलिकाः तदुपलक्षिता सर्वे कीटगर्दभाः, खरोपलक्षिताः सर्वे पशवः उत्तमा दिव्यदेहाः आसुः यतः कारणात् अतः नराश्च वानराश्च उत्तमा आसुरिति किं वक्तव्यमित्यर्थः ।।७२।।

**अतिविशद–** खगाः मृगास्तृणादयः पिपीलिकाश्च गर्दभाः इत्यत्र तृणादीनां पिपीलिकादुत्तमत्वमुच्यते इति भाति तृणादीनां स्थावरत्वात् पिपीलिकादीनां जङ्गमत्वात् 'तत्र स्थावरमुक्तेभ्यो वरा जङ्गममुक्तिगाः । तेभ्यो मनुष्यमुक्ताश्च विप्रमुक्तास्ततोऽधिकाः ।। तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवादिनः । अर्धज्ञा ऋषयस्तेषां...' ।। [भा.ता.३.] इत्यादि प्रमाणविरुद्धम् । तस्मात् कथमुच्यते इति चेत् भ्रान्तोऽसि । तदा रामराज्यकाले यदा यस्मात्तृणादय उत्तमाः स्युः खगाः मृगाः गर्दभाः पिपीलिकाश्च पुनः किमित्यन्वये विरोधशङ्काया एवाभावात् समाधानावकाश इति ।।७२-८८।।

**गूढवाक्यार्थ–** उत्तमाः स्वरूपेणोत्तमाः ।।७२।।

**सदैव[2] [3]रामभावनात् सदा सुतत्त्ववेदिनः ।**
**यतोऽभवंस्ततस्तु ते ययुः पदं हरेस्तदा ।।७३।।**

---

१. ननु तृणखगादीनां अल्पकत्वेन कथं रामेण सह गमनमिति तत्राह– **तदेति** ।। उत्तमाः स्वरूपेण । अन्ये तु 'इहोत्तमत्वं नाम साधनपरिपाकवत्वं न स्वरूपोत्तमत्वम्' इत्याहुः । तच्चिन्त्यम् । किं मनुष्याधिकखगाद्याभावादेवमुच्यते उत तत्सत्वेऽपि प्रकृते अविवक्षितत्वात् । नाद्यः । वैकुण्ठादौ तृणवृक्षखगखराद्यभावापातात् । 'उष्ट्रैः केचित् द्विजैः केचित्' इत्यादि भागवते अष्टमस्कन्धे नानाविधजन्तूनामेव देवतावाहनत्वोक्तेश्च । किञ्च बृहदारण्यके ब्रह्मणः सर्वजातिसृष्टिमुक्त्वा 'एवमेव यदिदं किञ्च मिथुनमापिपीलकाभ्यस्तत् सर्वमसृजत' [३.प्रजापतिब्राह्मण] इत्युपसंहृतम् । तेन ज्ञायते । ब्रह्मसृष्टा उत्तमा वृक्षपिपीलिकाद्यो वर्तन्ते इति । गीताभाष्ये च 'तद्वित् तत्पुत्रतां व्रजेत् पिपीलिकान्तं रुद्रादौ यथायोग्यत्वमात्मन' इति पिपीलिकादिभावस्य फलत्वमुक्तमिति । न द्वितीयः । 'ददौ लोकाननुत्तमान्' इति वक्ष्यमाणरीत्या तेषामुत्तमत्वावगमात् । न ह्यल्पकानां तृणादीनां उत्तमलोकप्राप्तिः । 'केचिदत्रैव मुच्यन्ते' [सू.भा.४.४.१९] इत्यादेः ।।७२-७७।। इति हो.पुस्तकपाठः

२. 'पशवः पक्षिणश्चैव सर्वे स्थावरजङ्गमाः । अनुजग्मुर्महात्मानं समीपस्था नरोत्तमाः ।। ये च पश्यन्ति काकुत्स्थं स्वपथान्तर्गतं प्रभुम् । ते तथाऽनुगता रामं निवर्तन्ते न केचन ।।' इति पाद्मे उ.२४४.७४-७५ । 'सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत् । राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् ।।' ६.१२८.१०० । 'रामो रामो राम इति प्रजानामभवन् कथाः । रामभूतं जगदभूत् रामे राज्यं प्रशासति ।।' इति वाल्मीकीये ६.१२८.१०२ ।

३. 'रामभावनाः' इति वादिराजीयपाठः ।

**व्यासतीर्थीया–** खगादेरुत्तमत्वभवनमेव कुतः येन चोद्यपरिहारः स्यादित्यत आह– **सदैवेति** ।।

**वेदाङ्गतीर्थीया–** ननु ज्ञानादेव मुक्तिरिति श्रुतेः कथमेषां ज्ञानरहितानां मुक्तिप्राप्तिरित्यत आह– **सदैवेति** ।। रामभावनात् रामस्य ध्यानात् । सुतत्त्ववेदिनः सुतत्त्वज्ञानिनः ।।७३-७५।।

**वादिराजीया–** सदैव रामभावना इत्यत्र यतः कारणात् सदा सुतत्त्ववेदिनः गुरुमुखात् सुष्ठु तत्त्वज्ञानवन्तः यतः सदैव रामं भावयन्तीति रामभावनाः राममननध्यानवन्तः यतश्च तु अपरोक्षज्ञानाख्यविशेषवन्तश्चाभवन् ततः कारणात् रामगमनसमये ते खगाद्याः हरेः पदं ययुरिति योजना ।।

**वरदराजीया–** ननु ज्ञानादेवापवर्ग इति श्रूयते । ज्ञानरहितानां खगादीनां कथं हरिपदप्राप्तिरित्यत आह– **सदैवेति** ।। सदा रामस्य भावनात् ज्ञानात् सदा सुतत्त्ववेदिनो यतः कारणात् अभवन् ततः कारणात् ते खगादयः हरेः पदं तदा तस्मिन् काले ययुः ।।७३।।

**जनार्दनीया–** नन्वेतेषां ब्रह्मज्ञानाभावात् कथं मोक्षोऽभूदित्यत आह– **सदेति** ।। सदा रामस्य भावनात् चिन्तनात् सुतत्ववेदिनः यतः अभवन् ततः कारणात् ते तृणादयः तदा हरेः पदं ययुः ।।७३।।

**ताम्रपर्णीया–** तत्राह– **सदैवेति** ।। न चोत्तमतृणखगादिसत्वे प्रमाणाभावः इति वाच्यम् । 'उष्ट्रैः केचित् द्विजैः केचिद्' [८.९.९] इति भागवते अष्टमस्कन्धे खगादीनां देववाहनत्वोक्तेः । उत्तमखगाद्यभावे वैकुण्ठादौ तदभावापतश्च । 'पिपीलिकातृणान्तानां ददौ लोकाननुत्तमान्' इति पिपीलिकानामनुत्तमेषु उत्तमेषु इत्युक्तवैकुण्ठादिप्राप्त्युक्तेश्च । न हि अल्पकानां 'केचिदत्रैव मुच्यन्ते' इति मुक्तानां अनुत्तमलोकप्राप्तिर्युज्यते इति । केचित्तु 'इह उत्तमत्वं नाम साधनपूर्तिमत्वं विवक्षितं न तु स्वरूपोत्तमत्वम्' इत्याहुः ।।७३-७६।।

**चट्टी–** नन्वेतेषां ब्रह्मज्ञानाभावात् कथं मोक्षोऽभूदित्यत आह– **सदेति** ।। सदैव श्रीरामस्य भावनात् ध्यानात् सदा सुतत्त्ववेदिनः तत्त्वज्ञानिनो यतः अभवन् ततः ते तृणादयः तदा हरेः पदं ययुः ।।७३।।

**गूढवाक्यार्थ–** साधनपूर्त्यभावा...* आह– सदैवेति ।।७३।।

**स[1] तैः समावृतो विभुर्ययौ दिशं तदोत्तराम् ।**
**अनन्तसूर्यदीधितिर्दुरन्तसद्गुणार्णवः ।।७४।।**

१. 'द्वात्रिंशल्लक्षणोपेतः साक्षाद्राम इवापरः' इति वराहपुराणान्तर्गतवेङ्कटेशमाहात्म्ये भाग१.३७.१८। शङ्खचक्रगदा-शार्ङ्गपद्महस्तश्चतुर्भुजः । दिव्याभरणसम्पन्नो दिव्यगन्धानुलेपनः ।। दिव्यपीताम्बरधरः पद्मपत्पनिभेक्षणः । युवा कुमारः सौम्याङ्गः कोमलावयवोज्ज्वलः ।। सुस्निग्धनीलकुटिलकुन्तलः शुभलक्षणः । नवदूर्वाङ्कुरः श्यामः पूर्णचन्द्रनिभाननः ।। देवीभ्यां सहितः श्रीमान् विमानमधिरुह्य च । तस्मिन् सिंहासने दिव्ये मूले कल्पतरोः प्रभुः ।। निषसाद महातेजाः सर्वदेवैरभिष्टुतः ।।

**व्यासतीर्थीया–** गमनवेलायां रामस्य वपुस्स्थितिप्रकारमाह– **अनन्तेत्यादिना** ।।७४-७५।।

**वरदराजीया–** विभुः समर्थः सः रामस्तदा तैः खगादिभिः समावृतः सन् उत्तरां दिशं ययौ । तदानीन्तनश्रीरामस्वरूपं वर्णयति– **अनन्तेत्यादिना** ।। अनन्तानामपरिमितानां सूर्याणां दीधितिरिव दीधितिर्यस्य स तथा । दुरन्तैः सद्गुणैः अर्णव इव ।।७४।।

**जनार्दनीया–** तैः खगाद्यैः । उत्तरां उदीचीं दिशं प्रति । विभुत्वं वर्णयति– **अनन्तेत्यादिना** ।। अनन्तसूर्याणां दीधितिरिव दीधितिः प्रकाशो यस्य तथा । दुरन्तैः अन्तरहितैः सद्गुणैः अर्णव इवार्णवः ।।

**चट्टी–** विभुः समर्थः श्रीरामस्तदा तैः खगादिभिः समावृतः सन् उत्तरां उदीचीं दिशं ययौ । विभुत्वं वर्णयति– **अनन्तेत्यादिना** ।। अनन्तानामपरिमितानां सूर्याणां दीधितिरिव दीधितिः प्रकाशो यस्य स तथा । दुरन्तैः अन्तरहितैः सद्गुणैः अर्णव इव ।।७४।।

**भावचन्द्रिका–** रामध्यानपरायणानां मुमुक्षूणां यथा रामध्यानं प्राप्तं तथा रामध्यानकरणेन इतरेषां मोक्षो भविष्यतीति भावेन वर्णयति– **अनन्तेति** ।।७४-८६।।

**गूढवाक्यार्थ–** गमनकाले स्थितश्रीरामरूपं वर्णयति– **अनन्तेत्यादिना** ।।७४।।

**सहस्रसूर्यमण्डलज्वलत्किरीटमूर्द्धजः ।**
**सुनीलकुन्तलावृतामितेन्दुकान्तिसन्मुखः ।।७५।।**

**वादिराजीया–** सहस्रसूर्यमण्डलवत् ज्वलत् किरीटं मूर्धजे यस्य स तथोक्तः ।।७५।।

**वरदराजीया–** सहस्रसूर्यमण्डलज्वलत्किरीटं येषु ते तथा, ते मूर्धजा केशा यस्य स तथा । सुनीलेनात्यन्तं कृष्णवर्णेन कुन्तलेन केशभारेणावृतम्, अमितेन्दुवत् कान्तं मनोहरं सत् निर्दुष्टं मुखं यस्य स तथा ।।७५।।

**जनार्दनीया–** सहस्रसूर्याणां मण्डलवत् समूहवत् ज्वलद्दीप्यमानं किरीटं मुकुटं येषु ते तथा । तादृशः मूर्धजाः केशा यस्य स तथा । अमितेन्दूनां कान्तिरिव कान्तिर्यस्य तत् तथा । सुनीलैः अतिनीलवर्णैः कुन्तलैः केशैः आवृतं परिवेष्टितं अमितेन्दुकान्ति सन्निर्दुष्टं मुखं यस्य स तथा । 'कुन्तलो देशपर्यायः कुन्तलः केशवाचकः' इत्यभिधानम् ।।७५।।

**चट्टी–** सहस्रसूर्याणां मण्डलवत् समूहवत् ज्वलद्दीप्यमानं किरीटं मुकुटं येषु ते तथा तादृशः मूर्धजाः केशा यस्य स तथा । सुनीलैः अतिनीलवर्णैः कुन्तलैः केशैः आवृतं परिवेष्टितम् । 'कुन्तलः केशवाचकः' इत्यभिधानम् । अमितेन्दूनां कान्तिरिव कान्तिर्यस्य तदमितेन्दुकान्ति सन्निर्दुष्टं मुखं यस्य स तथा ।।

**सुरक्तपद्मलोचनः सुविद्युदाभकुण्डलः ।**
**सुहासविद्रुमाधरः समस्तवेदवाग्रसः ॥७६॥**

**व्यासतीर्थीया–** समस्तवेदवाग्रसो रसना यस्य स तथोक्तः ॥७६–७७॥

**वेदाङ्गतीर्थीया–** समस्तवेदवाग्रसः । रसा रसना । समस्तवेदवाचः रसायां यस्य स तथोक्तः ॥

**वादिराजीया–** समस्तवेदवाचो रसायां रसनायां यस्य स तथोक्तः । 'रस आस्वादन' इति धातोः रसयति आस्वादयतीति रसा रसना ॥७६॥

**वरदराजीया–** सुरक्तपद्मवल्लोचने यस्य सः समीचीने विद्युदाभे विद्युत्सदृशे कुण्डले यस्य स तथा । सुहासः समीचीनहासयुक्तो विद्रुमवद्रक्तो अधरो यस्य स तथा । समस्ता वेदवाचो रसायां रसनायां यस्य स तथा ॥७६॥

**जनार्दनीया–** सुरक्तपद्मवत् रक्तोत्पलवत् लोचने यस्य स तथा । शोभमाने विद्युदाभे तडित्प्रभे कुण्डले यस्य स तथा । सुहासः शोभनहासयुक्तः । विद्रुमवत् प्रवालवद् रक्त इत्यर्थः । अधरः अधरोष्ठो यस्य स तथा । समस्तवेदः वाग्रसो वचनं यस्य स तथा ॥७६॥

**अनन्तभट्टीया–** समस्तवेदवाग्रसः समस्तवेदवाच्यः रसनं रसो यस्येति विग्रहः ॥७६॥

**ताम्रपर्णीया–** समस्तवेदवाग्रस इति समस्ता वेदा एव वाक् सारो यस्येति विग्रहः । समस्तवेदवाचो रसायां रसनायां यस्य स तथोक्तः । 'रसो रसना' इति हलायुधः । यद्वा समस्तवेदवाचां रसः सारभूतोऽर्थः येन प्रतिपाद्यते स तथोक्तः । 'वेदार्थसारान् विमलाननर्घ्यान्' [उ.का.७.२०] इति संग्रहरामायणे ॥७६॥

**चट्टी–** सुरक्तपद्मवल्लोचने यस्य सः तथा । शोभमाने विद्युदाभे विद्युत्सदृशे कुण्डले यस्य स तथा । सुहासः समीचीनहासः विद्रुमसदृशं अधरं यस्य स तथा । समस्ताः वेदवाचो रसः रसायां रसनायां यस्य स तथा ॥७६॥

**गूढवाक्यार्थ–** समस्तवेदवाग्रसः समस्तवेदवाचो रसायां रसनायां यस्य स तथोक्तः । 'रसा रसना' इति हलायुधः । यद्वा समस्तवेदवाचां रसस्सारभूतोऽर्थः येन प्रतिपाद्यते स तथोक्तः ॥७६॥

**दिवाकरौघकौस्तुभप्रभासकोरुकन्धरः ।**
**सुपीवरोन्नतोरुसज्जगद्धरांसयुग्मकः ॥७७॥**

**वादिराजीया—** सहस्रबाहुभिः जगद्धारणमपि पीवरांसशक्त्यैवेति हेतोः जगद्धारांसयुग्मक इत्युक्तम् ।।

**वरदराजीया—** दिवाकराणां सूर्याणां ओघवत् समूहवत् विद्यमानस्य कौस्तुभस्य प्रभासकः प्रकाशकः उरु कन्धरो कण्ठो यस्य स तथा । सुपीवरं अत्यन्तं पुष्टं उन्नतं उरु उत्कृष्टं सत् दोषरहितं जगद्भरं जगत्पोषकं अंसयुग्मकं स्कन्धयुगलं यस्य स तथा ।।७७।।

**जनार्दनीया—** दिवाकराणां ओघवत् स्थितं कौस्तुभं कौस्तुभाख्यमणिं, प्रभासकः प्रकाशमानः । उरु उत्तमा कन्धरो गलो यस्य स तथा । सुपीवरं अतिपीनं उन्नतं उच्चं उरु उत्तमं सन्निर्दुष्टं जगद्भरं जगत्पोषकं अंसयुग्मकं स्कन्धयुगलं यस्य स तथा ।।७७।।

**अनन्तभट्टीया—** जगद्भरं जगत्पोषकम् ।।७७।।

**ताम्रपर्णीया—** ।। जगद्भरांसयुग्मकेति ।। एतेन कूर्मरूपेण पृष्ठेऽण्डधारणवदण्डे कूर्मरूपेण वायुधारणवत् प्रातिस्विकं अंसद्वयेन चतुर्दशभुवनधारकत्वमप्यभ्यनुज्ञातम् ।।७७।।

**चट्टी—** दिवाकराणां सूर्याणामोघवत् समूहवत् विद्यमानस्य कौस्तुभस्य कौस्तुभाख्यमणेः प्रभासकं प्रकाशिकां उर्वी कन्धरा यस्य सः तथा । सुपीवरं अतिमांसलं उन्नतं उच्चं उरु उत्तमं उत्कृष्टं सन्निर्दुष्टं जगद्भरं जगत्पोषकं अंसयुग्मकं स्कन्धयुगलं यस्य स तथा ।।७७।।

**गूढवाक्यार्थ—** जगद्भरांसयुग्मकः एतेन कूर्मरूपेण पृष्ठे अण्डधारणवत् अण्डे कूर्मरूपेण वायुकूर्मधारणवच्च प्रातिस्विकमंसद्वयेन चतुर्दशभुवनधारकत्वमस्तीत्युक्तं भवति ।।७७।।

**सुवृत्तदीर्घपीवरोल्लसद्भुजद्वयाङ्कितः ।**
**जगद् विमथ्य सम्भृतः शरोऽस्य दक्षिणे करे ।।७८।।**

**व्यासतीर्थीया—** जगद्विमथ्य विचार्य सकलजगति विचार्यमाणे यः श्रेष्ठो देवो वायुः स एव शररूपेण सम्भृत इत्यर्थः ।।७८–८९।।

**वेदाङ्गतीर्थीया—** जगद्विमथ्य अचेतनं जगत् सर्वं मथित्वा सर्वपदार्थेषु योऽयः सारस्तं दध्नो नवनीतवद् उद्धृत्य सम्भृत निर्मितः शरः अस्य दक्षिणे करेऽस्तीति शेषः ।।७८।।

**वादिराजीया—** जगद्विमिथ्य सम्भृत इत्यत्र जगत् अतिदृढीभूतमेरुमन्दरहिमवदाद्यचलात्मकं अयःशिलात्मकं च सकलं जगत् विमथ्य तदीयद्रढिम्नः सर्वान् एकीकृत्य दध्नो नवनीतमिव तेषां सर्वेषां द्रढिम्नां सारांशमादाय स्वयं विष्णुनैव तेन सारांशेन निर्मितः यः शरः सः अस्य विष्णोरेव दक्षिणे करे सम्भृतः । अनादिकालमारभ्य सम्यग्भृतः आसीत् । विष्णुना तेन स्वकरधृतशरेणैव मधुश्च कैटभश्च हतः ।

रामोऽपि स्वावतारसमये मूलरूपात् दैत्यवधायागतं शरं लक्ष्मणानुजे शत्रुघ्ने ददौ । सः शत्रुसूदनः शत्रुघ्नः रसवत् लवणरसवदाह्वयो नाम यस्य सः रसाह्वयो लवणासुर इत्यर्थः । येन शरेण तमवधीत् मधुराभिधां पुरीमकारयच्च । समस्तसारसम्भवं तं शरं स्वलोकगमनसमये करे दक्षिणे करे दधारेति योजना । स्वयं रामेण निर्मितः अस्य रामस्य करे सम्भृत इत्यर्थकथने आदिकालीनमधुकैटभवधोपयोगिता अस्य शरस्य न स्यात् । शरं दधार तं करेति वक्ष्यमाणेन पौनरुक्त्यं च स्यात् । अत उक्त एवार्थः ।।७८–८१।।

**मधुसूदनीया–** ।। **जगद्विमथ्येति** ।। तथाचोक्तम्– अयं शरस्त्वमोघस्ते दिव्यः परपुरञ्जयः । अनेन लावणं सौम्य हन्तासि रघुनन्दन ।। सृष्टश्शरोऽयं काकुत्स्थ यदा शेते महार्णवे । स्वयंभूरर्चितो देवो यन्मे दृष्ट्वा सुरासुरान् ।। अधृष्यस्सर्वभूतानां तेनायं च शरोत्तमः । मधुकैटभयोर्वीर विनाशे वर्तमानयोः ।। स्रष्टुकामेन लोकांस्त्रीन् तौ चानेन हतौ युधि ।।' इत्यादि रामायणे [उ.का.६३.१९–२२] ।।७८।।

**वरदराजीया–** सुवृत्तं अत्यन्तवर्तुलं दीर्घपीवरं पुष्टं उल्लसद्विराजनं यद्भुजद्वयं तेनाङ्कितोऽलंकृतः । जगत् अचेतनं सर्वजगद्विमथ्य मथित्वा सर्वपदार्थेषु यः सारभागस्ततः दध्नो नवनीतवदुद्धृत्य सम्भृतो निर्मितो, आदिसृष्टौ हरिणेति शेषः । तादृशः शरः बाणोऽस्य दक्षिणे करेऽस्तीति शेषः ।।७८।।

**जनार्दनीया–** सुवृत्तं सुष्ठु वर्तुलं दीर्घं आजानुलम्बं पीवरं पीनं उल्लसत् शोभमानं यद्भुजद्वयं तेनाङ्कितः चिह्नितः । अस्य अनेन । 'नञा निर्दिष्टमनित्यम्' इति वचनात् षष्ठी साधुः । दक्षिणे करे यः शरः संभृतः सम्यग् भृतः स्थापित इत्यर्थः ।।७८।।

**अनन्तभट्टीया–** स्वयं निर्मित इति सम्बन्धः । विमथ्य विचार्य उत्तमत्वेन निष्टङ्कितो वायुः शररूपेण सम्भूत इत्यर्थः ।।७८–७९।।

**ताम्रपर्णीया–** ।। **जगद्विमथ्येति** ।। जगद्विमथ्य जगद्विचार्य अयमेव सर्वजीवोत्तम इति निश्चित्य तं शराभिमानित्वेन स्वीकृत्य, तथा जगद्विमथ्य सर्वसारानुपादानीकृत्य तेन विष्णुना स्वेन साक्षान्निर्मितः शरः तेन विष्णुना स्वयं दक्षिणे करे संभृतः स एव शरः अस्य रामस्य दक्षिणे करेति योजना ।।७८।।[१]

**चट्टी–** सुवृत्तं अत्यन्तवर्तुलं दीर्घं आजानुलम्बं पीवरं पुष्टं उल्लसत् शोभमानं यद्भुजद्वयं तेनाङ्कितः । जगद्विमथ्य विचार्यमाणे यः श्रेष्ठः देवो वायुस्स एव अस्य दक्षिणे करे शररूपेण सम्भृत इत्यर्थः । 'पञ्चात्मको मारुत एव बाण' इत्युक्तेः । यद्वा जगदचेतनं सर्वं जगद्विमथ्य मथित्वा सर्वपदार्थे यः सारभागस्तं दध्नो नवनीतवदुद्धृत्य संभृतो निर्मितो शरो बाणः दक्षिणे करेऽस्तीति शेषः ।।७८।।

---

१. यद्वा तेन विष्णुना समुद्रे जगद्विमथ्य नानाविधौषध्यदिकं विधाय विमथ्य निर्मितः शरः ।।७८–७९।। इति हो पुस्तक पाठः ।

**गूढवाक्यार्थ–** ।। **जगद्विमथ्येति** ।। जगद्विमथ्य विचार्य । अयमेव सर्वोत्तम इति यो निश्चितो वायुः तं शराभिमानित्वेन स्वीकृत्य तथा सर्वजगद्विमथ्य तेन उद्धृतसारांशेन स्वयं स्वेन विष्णुनैव निर्मितः यश्शरः सः अस्य विष्णोः दक्षिणकरे सम्भृत इत्यर्थः ।।७८।।

**स्वयं स तेन निर्मितो हतो मधुश्च कैटभः ।**
**शरेण तेन[1] विष्णुना ददौ च लक्ष्मणानुजे ।।७९।।**

**वेदाङ्गतीर्थीया–** निर्मितः केन कुत्र इत्यत आह– **स्वयमिति** ।। स शरः तेन विष्णुना स्वयमात्मना निर्मितः । विष्णुना तेन शरेण करणेन मधुर्हतः । कैटभश्च हतः । तं लक्ष्मणानुजे ददौ च राम इति शेषः ।।

**मधुसूदनीया–** ।। **हतो मधुश्च कैटभः** ।। यः शरेण येनेति । तथा च 'निष्पीडितावूरुतले कराभ्यां तन्मेदसैवाशु चकर्त मेदिनीम्' इति तृतीयध्याये । प्रथमतः शरेण ताडनानन्तरं कराभ्यां निष्पीड्य हननोक्त्या तदुक्त्यविरोधात् ।।७९।।

**वरदराजीया–** केन निर्मितः किमर्थं च निर्मित इत्यत आह– **स्वयमिति** ।। स्वयं विष्णुना स शरो निर्मितः तेन निर्मितेन शरेण तेन विष्णुना मधुर्हतः कैटभश्च हतः । तं शरं लक्ष्मणानुजे शत्रुघ्नाय ददौ ।।

**जनार्दनीया–** स शरः स्वयं तेन रामस्वरूपेण विष्णुना जगद्विमथ्य मथित्वा आलोड्येति यावत् । निर्मितः जगति सारभूतं वायुं शरं चकारेति भावः । 'पश्चात्मको मारुत एव बाणः' इत्यत्र मानम् । विष्णुना येन शरेण करणेन मधुः मधुनामासुरः हतः कैटभश्च कैटभाख्योऽसुरो हतः । रामोऽयं शरमिति वाक्यशेषः । लक्ष्मणस्यानुजे शत्रुघ्ने शत्रुघ्नाय ददौ ।।७९।।

**ताम्रपर्णीया–** शरं पुनः विशिनष्टि– **हत इत्यादिना** ।। येन शरेण तेन मधुकैटभश्च हतः यं च शरं रामो लक्ष्मणानुजे ददौ ।।७९।।

**चट्टी–** स शरः केन किमर्थं निर्मित इत्यत आह– **स्वयमिति** ।। स्वयं तेन श्रीरामस्वरूपेण विष्णुना सःशरो निर्मितः । विष्णुना येन शरेण करणेन मधुः मधुनामासुरः हतः । कैटभः कैटभाख्यासुरश्च हतः । तं शरं श्रीराम इति शेषः । लक्ष्मणस्यानुजे शत्रुघ्ने शत्रुघ्नाय ददौ । तथाचोक्तम्–

अमोघोऽयं शरो वीर दिव्यः परपुरञ्जय । अनेन लवणं क्रूरं हन्तासि रघुनन्दन ।।
सृष्टश्शरोऽयं शत्रुघ्न जगत्येकार्णवे पुरा । स्वयंभुवा च देवेन वधार्थं सुरविद्विषाम् ।।
अधृष्यस्सर्वभूतानां तेनायं च शरोत्तमः । सृष्टः तथाभिभूतेन विनाशार्थं दुरात्मनाम् ।।

---

१. 'येन' इति मधुसूदनभिक्षुजनार्दनभट्टयोः पाठः ।

जगदर्थे हि निहताावसुरौ मधुकैटभौ । अनेन शरमुख्येन ततो लोकांश्चकार सः ।।
नायं मया शरः पूर्वं दशग्रीवजिघांसया । मुक्तः शत्रुघ्न मा नाशो भूतानां तु भवेदिति ।।
इत्यादि रामायणे [उ.का.६३.१९–२३] ।।७९।।

**गूढवाक्यार्थ–** पुनः कीदृशः शर इत्यत आह– **हत इति** ।। येन शरेण तेन विष्णुना मधुः कैटभश्च हतः यं शरं रामो लक्ष्मणनुजे ददौ ।।७९।।

**स शत्रुसूदनोऽवधीन्मधोः सुतं रसाह्वयम् ।**
**शरेण[१] येन चाकरोत् पुरीं च माधुराभिधाम् ।।८०।।**

**वेदाङ्गतीर्थीया–** माधुराभिधां पुरीं चाकरोत् । लवणं हत्वेति शेषः ।।८०–८३।।

**वरदराजीया–** स शत्रुघ्नो मधोर्मधुनामकस्यासुरस्य सुतं रसाह्वयं लवणनामकं येन शरेणावधीत् हत्वा च मधुराभिधां मधुरासञ्ज्ञां पुरीं चाकरोत् । लवणं हत्वा तत्प्रदेशे मधुरापुरं निर्मितवानिति भावः ।।

**जनार्दनीया–** स शत्रुसूदनः शत्रुघ्नः येन शरेण मधोः मधुनाम्नो असुरस्य । रस इति आह्वयं यस्य स तथा । लवणनामानमित्यर्थः । सुतं अवधीत् जघान । तस्मिन् स्थले मधुरेति अभिधा नाम यस्येति विग्रहः । पुरीं अकरोत् ।।८०।।

**अनन्तभट्टीया–** शत्रसूदनो शत्रुघ्नः ।।८०–८३।।

**ताम्रपर्णीया–** स शत्रुसूदनो मधोस्सुतं रसाह्वयं लवणरसनामकम्, लवणमिति यावत् । येन शरेणावधीत् । मधुराभिधां च पुरीं चाकरोत् ।।८०।।

**चट्टी–** स शत्रुसूदनः शत्रुघ्नः मधोः मधुनामकस्य असुरस्य सुतं रसाह्वयं लवणनामकं येन शरेणावधीत् जघान । तस्मिन् प्रदेशे मधुरेति अभिधा नाम यस्यास्तां पुरीं चाकरोत् ।।८०।।

**गूढवाक्यार्थ–** स शत्रुसूदनः शत्रुघ्नः मधोस्सुतं रसाह्वयं लवणरसनामकं लवणासुरमिति यावत् । येन शरेण अवधीत् तं समस्तसारसम्भवं सर्वश्रेष्ठेन वायुना सहभवं तदभिमन्यमानं सर्वा.... तसारोपादानकं शरं दधारेत्यर्थः ।।८०।।

**समस्तसारसम्भवं शरं दधार तं करे ।**
**स वामबाहुना धनुर्दधार शार्ङ्गसञ्ज्ञितम् ।।८१।।**

---

१. वायुरूप हरेर्बाण वायोरधिकवेगवान् । नय मां वायुवेगेन विष्णलोकं सनातनम् ।। इति वाराहे चा.मा.५.३६।

**वरदराजीया–** येनावधीत् तं समस्तानामचेतनानां पदार्थानां सारेण संभृतं शरं लवणं संहृत्य शत्रुघ्नात् पुनरागतं करे दधारेत्यर्थः । स रामो वामबाहुना शार्ङ्गसञ्ज्ञितं धनुः दधार ।।८१।।

**जनार्दनीया–** समस्तेषु सारेण श्रेष्ठेन वायुना संभवो निर्माणं यस्येति विग्रहः । तं शरं करे दधारेति योजना ।।८१।।

**ताम्रपर्णीया–** तं समस्तसारसम्भवं समस्तश्रेष्ठेन वायुना सह भवः तदभिमन्यमानम् । तथा सर्वाचेतनसारोपादानं शरं दधार इत्यर्थः । तदुक्तं संग्रहरामायणे– शरोऽयं प्राङ्म्या सृष्टः शयानेन महार्णवे । अघातयन् तदा घोरौ अनेन मधुकैटभौ ।। समस्तवीर्यसारोऽयं अमोघस्तेरिसूदन ।।' इति [उ.का.३.३९–४०] । तं वायुबीजं रविवह्निधारं आकाशमानस्स्वशरीरयष्टिम् । शरं महामेरुगुरुं स्वचापे सुवर्णपुङ्खे प्रतिसन्दधे सः ।।' [युद्ध.का १४.१२] इत्याद्युक्त्वा 'साक्षात् ऋजूनां ननु युक्तमेतद्' [युद्ध.का १४.१६] । इति च ।।८१-८५।।

**चट्टी–** समस्तानां अचेतनपदार्थानां सारेण सम्भृतं शरं लवणं संहृत्य शत्रुघ्नात् पुनरागतं करे दधार इत्यर्थः । यद्वा समस्तेषु सारेण श्रेष्ठेन वायुना सम्भवो निर्माणं यस्य तं शरं करे दधार । सः श्रीरामः वामबाहुना शार्ङ्गसञ्ज्ञितं धनुर्दधार ।।८१।।

**उदारबाहुभूषणः शुभाङ्गदः सकङ्कणः ।**
**महाङ्गुलीयभूषितः सुरक्तसत्कराम्बुजः ।।८२।।**

**वादिराजीया–** उदारबाहुभूषणः उत्कृष्टभुजकीर्त्याख्यभूषणः ।।८२।।

**वरदराजीया–** उदारं बाहुभूषणं यस्य स तथा । शुभमङ्गदं यस्य स तथा कङ्कणेन सह वर्तमानः सकङ्कणः । महद्भिः अङ्गुलीयैः मुद्रिकाभिः विभूषितः । सुरक्ते सती कराम्बुजे यस्य स तथा ।।८२।।

**जनार्दनीया–** स रामः । उदारानि उत्तमानि बाह्वोर्भूषणानि यस्य स तथा । शुभं अङ्गदं कटकं यस्य स तथा । कङ्कणाख्यकरभूषणविशेषाभ्यां सहितः । महाङ्गुलीयैः उत्तममुद्रिकाभिर्भूषितः अलंकृतः । सुरक्ते अतिताम्रवर्णे सती निर्दुष्टे कराम्बुजे करकमले यस्य स तथा ।।८२।।

**चट्टी–** स श्रीरामः उदारे उत्तमे बाहुकीर्त्याख्यबाहुभूषणे यस्य स तथा । कङ्कणाभ्यां सहितः महद्भिः अङ्गुलीयैः मुद्रिकाभिर्भूषितः अलंकृतः । सुरक्ते अतिताम्रवर्णे सती निर्दुष्टे कराम्बुजे करकमले यस्य स तथा ।।८२।।

**गूढवाक्यार्थ–** भुजकीर्त्याख्यवाहुभूषणः ।।८२।।

**अनर्घ्यरत्नमालया वनाख्यया च मालया ।**
**विलासिविस्तृतोरसा बभार च श्रियं प्रभुः ॥८३॥**

**वादिराजीया–** अनर्घ्यरत्नमालया वनाख्यया मालाया च वनमालया च विलासि । 'लस प्रकाश' इति धातोः । विशेषेण शोभमानं विस्तृतं यदुरस्तेन ॥८३॥

**वरदराजीया–** अनर्घानां रत्नानां मालया तथा वनाख्यया मालया वनमालया च विलासिना विराजमानेन विस्तृतेन उरसा उरस्थलेन श्रियं लक्ष्मीं बभार ॥८३॥

**जनार्दनीया–** अनर्घ्याणां अमौल्यानां उत्तमानामित्यर्थः । रत्नानां मालया । वनाख्यया वैजयन्त्याख्यया मालया च । विलासिना शोभमानेन विस्तृतेन विशालेन उरसा वक्षःस्थलेन श्रियं लक्ष्मीं बभार दधार । चञ्चलां श्रियं यतो बभार अत एव प्रभुरित्यर्थः ॥८३॥

**चट्टी–** अनर्घ्याणां अमूल्यानां रत्नानां मालया वनाख्यया वैजयन्त्या मालया च विलासिना शोभमानेन विस्तृतेन विशालेन उरसा वक्षःस्थलेन श्रियं लक्ष्मीं बभार दधार । चञ्चलां श्रियं यतो बभार अत एव प्रभुरित्यर्थः ॥८३॥

**गूढवाक्यार्थ–** ॥ **अनर्घ्येति** ॥ रत्नमालया वनमालया च विलासि । 'लस प्रकाशे' इति धातोः । विशेषाकारेण शोभमानं विस्तृतं यत् उरः तेन । भूतिः श्रीः वसत्यस्मिन्निति श्रीवत्सः भूषणं यस्य स तथोक्तः ॥८३॥

**स भूतिवत्सभूषणस्तनूदरे वलित्रयी ।**
**उदारमध्यभूषणो लसत्तडित्प्रभाम्बरः ॥८४॥**

**वेदाङ्गतीर्थीया–** भूतिवत्सः श्रीवत्सः ॥८४-८६॥

**वादिराजीया–** भूतिः श्रीः वसत्यस्मिन्निति भूतिवत्सः श्रीवत्सः भूषणं यस्य स तथोक्तः । उदारमध्यभूषणश्चासौ उल्लसत् तटित् प्रभाम्बरश्चेति विग्रहः ॥८४-८७॥

**वरदराजीया–** प्रभुः श्रीरामः भूतिवत्सः श्रीवत्सं भूषणं यस्य स तथा । तनूदरे अल्पे उदरे वलित्रयवान् । उदारमुत्कृष्टं मध्यभूषणं काञ्चीरूपं तेन उल्लसत् विराजमानं तडित्प्रभं विद्युत्सदृशमम्बरं पीताम्बरं यस्य स तथा ॥८४॥

**जनार्दनीया—** भूतिवत्सः श्रीवत्सः स एव भूषणं तेन सहितः । तनूदरे अल्पोदरे । वलीनां त्रयं विद्यते यस्यासौ तथा । उदारेण उत्तमेन मध्यभूषणेन कटिभूषणेन काञ्च्या उल्लसत् शोभमानं तडित्प्रभं विद्युद्वद्भासमानं अम्बरं पीतवसनं यस्य स तथा ।।८४।।

**अनन्तभट्टीया—** भूतिवत्सभूषणः श्रीवत्सभूषणः ।।८४-८६।।

**चट्टी—** सः श्रीरामः भूतिः श्रीः वसत्यस्मिन् इति भूतिवत्सः श्रीवत्सः स एव भूषणं यस्य स तथा तनूदरे अल्पोदरे वलीनां त्रयं विद्यते यस्य स तथा । उदारेण उत्कृष्टेन मध्यभूषणेन कटिभूषणेन काञ्च्या उल्लसत् शोभमानं तडित्प्रभं विद्युदाभं अम्बरं पीताम्बरं यस्य स तथा ।।८४।।

**करीन्द्रसत्करोरुयुक् सुवृत्तजानुमण्डलः ।**
**क्रमाल्पवृत्तजङ्घकः सुरक्तपादपल्लवः ।।८५।।**

**वरदराजीया—** करीन्द्रस्य गजेन्द्रस्य सत्करसदृशोरुयुक्तः । सुवृत्तं वर्तुलं जानुमण्डलं यस्य सः । क्रमेणाल्पा वृत्ता वर्तुलं जङ्घा यस्य स तथा । सुरक्ते पादपल्लवे यस्य स तथा ।।८५।।

**जनार्दनीया—** करीन्द्रस्य सत्करः । सच्छब्देन कर्कशत्वदोषरहितत्वं सूचितम् । गजेन्द्रस्य सत्करवत् स्थिताभ्यां ऊरुभ्यां युग्युक्तम् । सुवृत्तं वर्तुलं जानुमण्डलं जानुप्रदेशो यस्य स तथा । क्रमेण अल्पवृत्ते किञ्चिद् वर्तुले । जानुप्रदेशात् गुल्फपर्यन्तं क्रमाद्वृत्त इत्यर्थः । तादृशे जङ्घे यस्य स तथा । स्वार्थे कप्रत्ययः । सुरक्ते अतिताम्रे पादपल्लवे पादलक्षणकोमलदले यस्य स तथा ।।८५।।

**चट्टी—** करीन्द्रस्य गजेन्द्रस्य सत्करः सच्छब्देन कर्कशत्वदोषरहितत्वं सूचितम् । तत्सदृशाभ्यां ऊरुभ्यां युग्युक्तः । सुवृत्तं अतिवर्तुलं जानुमण्डलं जानुप्रदेशो यस्य स तथा । क्रमेण अल्पवृत्ते किञ्चिद्वर्तुले जानुप्रदेशात् गुल्फपर्यन्तं क्रमाद्वृत्त इत्यर्थः । तादृशे जङ्घे यस्य स तथा । स्वार्थे कप्रत्ययः । सुरक्तौ अतिताम्रौ पल्लवसदृशपादौ यस्य स तथा ।।८५।।

**लसद्धरिन्मणिद्युती रराज राघवोऽधिकम् ।**
**असङ्ख्यसत्सुखार्णवः समस्तशक्तिसत्तनुः ।।८६।।**

**वरदराजीया—** लसतो हरिन्मणेरिन्द्रनीलस्य द्युतिर्यस्य स तथा । एतादृशो राघवोऽधिकं अत्यन्तं रराज रेजे । असङ्ख्येनामितेन सता दोषरहितेन सुखेनार्णव इव । समस्ता सम्पूर्णा शक्तिः सती तनुर्यस्य स तथा ।।८६।।

**जनार्दनीया–** लसतो दीप्यमानस्य हरिन्मणेः इन्द्रनीलमणेः द्युतिरिव द्युतिः कान्तिर्यस्य स तथा । असङ्ख्यसत्सुखेन अर्णव इव अर्णवः । समस्तेषु सृष्ट्याद्यनेककर्मसु सुशक्तिः यस्या सा तथा । सा च सा सत्तनुः निर्दुष्टस्वरूपः यस्य स तथा । एतादृशो राघवः । अधिकं क्षराक्षरेभ्यः अधिकं यथा स्यात्तथा । रराज शुशुभे ॥८६॥

**ताम्रपर्णीया–** ॥ **हरिन्मणिद्युतिरिति** ॥ न च 'श्रीमान्मरकतश्याम' इति संग्रहरामायणविरोध इति वाच्यम् । तत्रत्यमरकतशब्दस्यापि हरिन्मणिपरत्वाद् । अत एव तत्रैव स्थानन्तरे 'हरिन्मणिश्रीरधिकं चकाश' [उ.का ७.१३] इत्युक्तम् ॥८६॥

**चट्टी–** लसतो दीप्यमानस्य हरिन्मणेः इन्द्रनीलस्य द्युतिरिव द्युतिर्यस्य स तथा । असङ्ख्येन अमितेन सता दोषरहितेन सुखेनार्णव इव । समस्तेषु सृष्ट्याद्यनेककर्मसु शक्तिः यस्या सा तथा सा च सती तनुः निदुष्टस्वरूपं यस्य स तथा एतादृशो राघवः अधिकं यथा स्यात्तथा रराज शुशुभे ॥८६॥

**गूढवाक्यार्थ–** ॥ **हरिन्मणिद्युतिरिति** ॥ 'श्रीमान्मरकतश्याम' इति संग्रहरामायणविरोध इति न वाच्यम् । तत्र मरकतशब्दस्य हरिन्मणिपरत्वात् अत एव तत्र स्थानान्तरे 'हरिन्मणिश्रीरधिकं चकाश' इत्युक्तम् ॥८६॥

**ज्ञानं नेत्राब्जयुग्मान्मुखवरकमलात् सर्ववेदार्थसारान्**
**तन्वा ब्रह्माण्डबाह्यान्तरमधिकरुचा भासयन् भासुरास्यः ।**
**सर्वाभीष्टाभये च स्वकरवरयुगेनार्थिनामादधानः**
**प्रायाद् देवाधिदेवः स्वपदमभिमुखश्चोत्तराशां विशोकम् ॥८७॥**

**वेदाङ्गतीर्थीया–** अर्थिनां ज्ञानार्थिनाम् । नेत्राब्जयुग्मादिकात् ज्ञानादिकमादधानः ॥८७॥

**वरदराजीया–** देवानामधिदेवः श्रीरामो विशोकां शोकरहितां उत्तराशां दिशं प्रत्यभिमुखः स्वपदं प्रायादिति सम्बन्धः । कथम्भूतः नेत्राब्जयुग्मात् लोचनाख्यारविन्दद्वयात् अर्थिनां ज्ञानार्थिनां ज्ञानमादधानः दधान इत्यर्थः । मुखोत्तमकमलात् सर्ववेदार्थेषु सारभूतान् अर्थानादधानो व्याकुर्वाणः । अधिका रुक् दीप्तिर्यस्य स तथा । तन्वा देहेन ब्रह्माण्डस्य बाह्यमन्तरं च भासयन् भासुरं प्रकाशमानं आस्यं यस्य स तथा । स्वकरवरयुगेन उत्तमहस्तद्वयेन यथाक्रमं सर्वेषां अभीष्टाभयश्चेति द्वयं अर्थिनामभीष्टाद्यर्थिनां आदधानः कुर्वन् प्रायादिति सम्बन्धः ॥८७॥

**जनार्दनीया–** श्रीरामस्वरूपमुक्त्वा गमनवैभवमाह– **ज्ञानमित्यादिना** ॥ स्वपदस्याभिमुखः । भासुरं प्रकाशमानं आस्यं मुखं यस्य स तथा । देवाधिदेवो रामः अर्थिनां ज्ञानाद्यभीष्टं इच्छतां प्राणिनां

नेत्राब्जयुग्मात् ज्ञानमादधानः दधत् । मुखवरकमलात् सर्ववेदानां अर्थसारान् अर्थविशेषान् आदधानः पुष्टिं कुर्वन् । अधिका रुक् दीप्तिर्यस्याः सा तथा तया तन्वा देहकान्त्येत्यर्थः । ब्रह्माण्डस्य बाह्यं अबादिनवावरणस्य बहिर्देशं आन्तरं अन्तर्विद्यमान प्रदेशं भासयन् दीप्यन् स्वकरवरयुगेन सर्वाभीष्टं सकलाभीष्टं अभयं च आदधानः धारयन् यस्य यस्यार्थिनः यद्यदिष्टं तत्तत्कुर्वन्निति भावः । विगतशोकां उत्तराशां उदीचीं दिशं प्रति प्रायात् ।।८७।।

**अनन्तभट्टीया–** ज्ञानं भासयन्निति सम्बन्धः ।।८७।।

**ताम्रपर्णीया–** ।। **सर्वाभीष्टाभये चेति** ।। न च शरोऽस्य दक्षिणे करे । स वामबाहुना धनुर्दधार शार्ङ्गसञ्ज्ञितमिति करद्वयकृत्यस्यापि हरेरुक्तत्वात् कथं वराभययोरवकाश इति वाच्यम् । प्रयाणकाले चतुर्भुजत्वेनोपपत्तेः । शरधनुर्धरदक्षिणवामकरयोरेवाभयवरमुद्राधारणोपपत्तेश्च ।।८७।।

**चट्टी–** श्रीमत्स्वरूपमुक्त्वा गमनवैभवमाह– **ज्ञानमित्यादिना** ।। स्वपदं प्रत्यभिमुखः । भासुरं प्रकाशमानं आस्यं मुखं यस्य स तथा । देवानामधिदेवः श्रीरामः अर्थिनां ज्ञानार्थिनां प्राणिनां नेत्राब्जयुग्मात् लोचनाख्यारविन्दद्वयात् ज्ञानमादधानः दधत् मुखवरकमलात् मुखाख्योत्तमकमलात् सर्ववेदानां अर्थसारान् अर्थविशेषान् आदधानः व्याकुर्वाणः । अधिका रुक् दीप्तिर्यस्याः सा तथा तया तन्वा देहकान्त्येत्यर्थः । ब्रह्माण्डस्य बाह्यं अबादिनवावरणस्य बहिर्देशं आन्तरं अन्तर्विद्यमानं प्रदेशं भासयन् दीप्यन् । स्वकरवरयुगेन सर्वाभीष्टं अभयं च आदधानः धारयन् । यस्य यस्यार्थिनः यद्यदिष्टं तत्तत्कुर्वन्निति भावः । विगतशोकां उत्तराशां उदीचीं दिशं प्रायात् । उत्तराशां प्रत्यभिमुखः सन् स्वपदं प्रायादिति वा ।।८७।।

**भावचन्द्रिका–** लोके व्याख्यातारः अर्थं वदन्त एव शिष्यमुखं दृष्ट्वा भ्रूविलासादिना यथा अर्थं ज्ञापयन्ति तथेत्याह– **ज्ञानमिति** ।। आदधान इत्यन्वयः ।।८७–८८।।

**गूढवाक्यार्थ–** ।। **सर्वाभिष्टाभयेति** ।। करद्वयेन शरशार्ङ्गधारणस्योक्तत्वेऽपि ताभ्यामेव वराभयमुद्राधारणोपपत्तेर्नानुपपत्तिः ।।८७।।

**दध्रे च्छत्रं हनूमान् स्रवदमृतमयं पूर्णचन्द्रायुताभं**
**सीता सैवाखिलाक्ष्णां विषयमुपगता श्रीरिति ह्रीरथैका ।**
**द्वेधा भूत्वा दुधाव व्यजनमुभयतः पूर्णचन्द्रांशुगौरं**
**प्रोद्यद्भास्वत्प्रभाभा सकलगुणतनुर्भूषिता भूषणैः स्वैः ।।८८।।**

**वेदाङ्गतीर्थीया–** सा इयत्कालमदृश्या सती । एकैव सीता ॥८८–९०॥

**वादिराजीया–** द्वेधा भूत्वा दुधावेत्यत्र 'धुञ् कम्पने' इति धातोः व्यजनं बालव्यजनं दुधाव बीजयामास । विशेषेण अज्यते वायुना सम्बध्यते अनेनेति व्युत्पत्त्या विशेषेण व्यज्यते वायुरनेनेति व्युत्पत्त्या चामरमपि वायुव्यञ्जकत्वात् व्यजनम् । 'बालव्यजनमादाय रत्नदण्डं सखीकरात् । तेन वीजयती देवी उपासांचक्र ईश्वरम् ॥' [१०.७५.११] इति भागवते प्रयोगाच्च चामरमपि व्यजनम् ॥

**वरदराजीया–** हनूमान् छत्रं दध्रे दधार । कथम्भूतं अमृतमयं जलं स्रवत् । अयुतपूर्णचन्द्र-सदृशमित्यर्थ । सैव या एतावत्कालपर्यन्तमदृश्या सा इत्यर्थः । अखिलानां सर्वेषां अक्ष्णां चक्षुषां विषयं विषयत्वमुपगता प्राप्ता सीता एकैव श्रीः ह्रीरिति द्विधा भूता । कथम्भूता प्रोद्यतो भास्वतः सूर्यस्य प्रभा इव प्रभा यस्याः सा तथा । सकलाः गुणाः ज्ञानानन्दाद्यास्तनुः स्वरूपं यस्याः सा तथा । स्वैर्निजैः भूषणैः भूषिता । एवंभूता द्विधा भूता सती उभयतः पार्श्वतः पूर्णचन्द्रस्यांशुवत् किरणवत् गौरं शुभ्रं व्यजनं दुधाव वीजयामासेत्यर्थः ॥८८॥

**जनार्दनीया–** स्रवच्च तदमृतजलं च तेन प्रचुरम् । 'शुभ्रातपत्रशशिकेसरशीकराम्बुम्' [३.१६.३८] इति तृतीयस्कन्धे । पूर्णचन्द्राणां अयुतस्य आभेव आभा दीप्तिर्यस्य स तथा । अयुतपूर्णचन्द्राणां कान्तिसदृशमित्यर्थः । छत्रम् । प्रोद्यतः उद्यतः भास्वतः सूर्यस्य प्रभेव प्रकाश इव आभा दीप्तिर्यस्याः सा तथा । 'भा भूव्यंकृतौ दीप्तौ स्त्रीभाः किरणविद्युतौ' इति नाममहोदधौ । सकलगुणाः भक्तिज्ञानादयो गुणास्तनुः स्वरूपं यस्याः सा तथा । स्वैः स्वकीयैः भूषणैः भूषिता अलंकृता । अखिलाक्ष्णां सर्वेषां नेत्राणां विषयं प्रत्यक्षं उपगता प्राप्ता सा । पूर्वं या अदृश्या सा सीता एकैव एकापि अथ युगपच्छ्रीः श्रीनाम्नी ह्रीः ह्रीनाम्नी इति द्वेधा द्विःप्रकारभूता जाता सती । स्वरूपद्वयं प्राप्तेत्यर्थः । पूर्णचन्द्राणां अंशुवत् किरणवत् गौरं श्वेतं व्यजनं उभयतः उभयपार्श्वेन दुधाव । 'धुञ् कम्पने' इति धातुः । वीजयामासेत्यर्थः ॥८८॥

**अनन्तभट्टीया–** व्यजनं चामरम् । भास्वत्प्रभेव भास्करस्य प्रभेव ॥८८॥

**ताम्रपर्णीया–** व्यजनं बालव्यजनं चामरमित्यर्थः । 'बालव्यजनमादाय रत्नदण्डं सखीकरात् । तेन वीजयती देवी उपासांचक्र ईश्वरम् ॥' [१०.७५.११] इति भागवते व्यजनशब्दस्य चामरे प्रयुक्तत्वात् ॥

**चट्टी–** हनुमान् स्रवच्च तदमृतं च स्रवदमृतं तेन मयं प्रचुरम् । पूर्णचन्द्राणां अयुतस्य आभेव आभा दीप्तिर्यस्य स तथा । अयुतपूर्णचन्द्राणां कान्तिसदृशमित्यर्थः । छत्रं दध्रे प्रोद्यतः उद्यतः भास्वतः सूर्यस्य प्रभेव प्रकाश इव भा प्रकाशो यस्याः सा तथा । सकलगुणाः भक्तिज्ञानादयो गुणास्तनुः स्वरूपं यस्याः सा तथा । स्वैः स्वकीयैः भूषणैः भूषिता अलंकृता अखिलाक्ष्णां सर्वनेत्राणां विषयं प्रत्यक्षत्वं उपगता

प्राप्ता या पूर्वं अदृश्या सा सीता एकैव एकापि अथ युगपच्छ्रीः श्रीनाम्नी ह्रीः ह्रीनाम्नी इति द्वेधा भूता सती पूर्णचन्द्राणां अंशुवत् गौरं शुभ्रं व्यजनं वालव्यजनं उभयतः उभयपार्श्वयोः दुधाव वीजयामास । 'धुञ् कंपने' इति धातुः । विशेषेण अज्यते वायुना सम्बध्यते अनेनेति व्युत्पत्त्या चामरमपि वायुव्यञ्जकत्वाद् व्यजनम् । 'बालव्यजनमादाय रत्नदण्डं सखीकरात् । तेन वीजयते देवी उपासांचक्र ईश्वरम् ।।' इति भागवते प्रयोगाच्च चामरमपि व्यजनशब्देनोच्यते ।।८८।।

**गूढवाक्यार्थ–** व्यजनं बालव्यजनं चामरमित्यर्थः ।।८८।।

**साक्षाच्चक्रतनुस्तथैव[1] भरतश्चक्रं दधद् दक्षिणे-**
**नायात् सव्यत एव शङ्खवरभृच्छङ्खात्मकः शत्रुहा ।**
**अग्रे ब्रह्मपुरोगमाः सुरगणा वेदाश्च सोङ्कारकाः**
**पश्चात् सर्वजगज्जगाम रघुपं यान्तं निजं धाम तम् ।।८९।।**

**वरदराजीया–** साक्षादनुपचारेण चक्रं तनुः स्वरूपं यस्य स तथा भरतः चक्रं सुदर्शनं च दधत् बिभ्राणो दक्षिणेन पार्श्वेनायात् प्राप । शङ्खात्मकः शङ्खस्वरूपः शत्रुहा शत्रुघ्नः शङ्खवरभृत् उत्तमपाञ्चजन्यं दधानः सव्यतो वामपार्श्वेनायादित्यर्थः । पुरो गच्छन्तीति पुरोगमाः ब्रह्मा पुरोगमो येषां ते तथा । सुरगणास्तथा सोङ्कारकाः ओंकारसहिता वेदाश्च तदभिमानिन इत्यर्थः । अग्रे श्रीरामस्य पुरस्तात् ययुरिति शेषः । निजं स्वकीयं धाम स्थानं यान्तं गच्छन्तं पश्चात्तस्य पृष्ठत इत्यर्थः । सर्वमखिलं जगत् खगादितृणान्तं जगाम ।।८९।।

**जनार्दनीया–** निजं धाम यान्तं रघुपमनु । तथैव यथा दुर्गा चक्राभिमानी तथैव इत्यर्थः । प्रलयेऽपि दुर्गायाश्चक्राभिमानित्वं वर्तते । न तु कामस्य इति दृष्टान्तः स्थितिकाल एव । साक्षाच्चक्रतनुः चक्राभिमानी भरतः चक्रं सुदर्शनं दधत् दधानः सन् दक्षिणेन रामदक्षिणपार्श्वेन आयात् । 'वराद्रथाङ्गत्वमवाप काम' इत्यत्र मानम् । शङ्खात्मकः शङ्खस्वरूपः अभिमानीत्यर्थः । श्रीः पूर्वं शङ्खाभिमानिनी । कामपुत्रो अनिरुद्धश्च शङ्खाभिमानित्वं प्राप । 'शङ्खतनुः पुमात्मा' इत्यत्र मानम् । अत्राप्यभिमानित्वं पूर्ववदवगतव्यम् । शत्रुहा शत्रुघ्नः शङ्खेषु वरं श्रेष्ठं पाञ्चजन्यं बिभर्तीति तथा सन् । सव्यत एव वामपार्श्वेन आयात् । अग्रे रामपुरतः । पुरो गच्छतीति पुरोगमः ब्रह्मा पुरोगमो येषामिति विग्रहः । सुरगणाः सोङ्कारकाः प्रणवेन सहिताः वेदाश्च वेदाभिमानिनो देवाः । ययुरिति शेषः । पश्चात् रामस्य पृष्ठतः सर्वजगत् तृणादिजगत् ।।८९।।

---

१. 'अंशाभ्यां शङ्खचक्राभ्यां शत्रुघ्नभरतावुभौ' इति पाद्मे.उ.२४४.८८ ।

**अनन्तभट्टीया–** वेदाः वेदाभिमानिनः ।।८९।।

**चट्टी–** निजं धाम यान्तं रघुपमनु साक्षादनुपचारेण चक्रतनुः चक्राभिमानी भरतः चक्रं सुदर्शनं दधत् दधानः सन् दक्षिणेन रामदक्षिणपार्श्वेन आयात् । तथैव शङ्खात्मकः शङ्खस्वरूपः शङ्खाभिमानी शत्रुहा शत्रुघ्नः शङ्खेषु वरं श्रेष्ठं पाञ्चजन्यं बिभर्तीति तथा सन् सव्यत एव वामपार्श्वेनैव अयात् । चक्रस्य मुख्याभिमानिनी दुर्गा शङ्खस्य मुख्याभिमानिनी श्रीः । अवान्तराभिमानिनौ कामानिरुद्धौ । तदुक्तं आचार्यैः–

पूर्वं हरेश्चक्रमभूद्धि दुर्गा तमःस्थिता श्रीरिति यां वदन्ति ।
सत्त्वात्मिका शङ्खमथो रजस्था भूर्नामिका पद्ममभूद्धरेर्हि ।।
गदा तु वायुर्बलसंविदात्मा शार्ङ्गश्च वियेति रमैव खड्गः ।
दुर्गात्मिका सैव च चर्मनाम्नी पञ्चात्मको मारुत एव बाणः ।।
एवं स्थितेष्वेव पुरातनेषु वराद्रथाङ्गत्वमवाप कामः ।
तत्सूनुतामाप च सोऽनिरुद्धो ब्रह्मोद्भवः शङ्खतनुः पुमात्मा ।।
तावेव जातौ भरतश्च नाम्ना शत्रुघ्न इत्येष च रामतोऽनु ।। इति ।

पुरो गच्छतीति पुरोगमः ब्रह्मा पुरोगमो येषां ते तथा । ते सुरगणाः सोङ्कारकाः प्रणवेन सहिता वेदाश्च वेदाभिमानिनो देवाः अग्रे श्रीरामस्य पुरतः ययुरिति शेषः । पश्चात् श्रीरामपृष्ठतः सर्वजगत्तृणादिजगत् जगाम ।।८९।।

**भावचन्द्रिका–** सोङ्कारवेदा इति तदभिमानिनो देवाः ।।८९–९२।।

**अतिविशद–** साक्षाच्चक्रतनुस्तथैव भरत इत्यत्र या सीताखिलाक्ष्णां विषयमुपगता सती व्यजनमुभयतः दुधाव सैव साक्षचक्रतनुरिति पूर्वेणान्वयः । अस्याश्चक्रतनुत्वं भरतवत् वरदानादिप्राप्तं न भवतीति सूचनार्थं साक्षादित्युक्तम् । अस्याश्चक्रतनुत्वं कथमित्याशङ्का 'पूर्वं हरेश्चक्रमभूद्धि दुर्गा तमःस्थिता श्रीरिति यां वदन्ति' इत्यनेन परिहर्तव्या । न केवलं सैव चक्रतनुः । तथैव चेत्यत्र एवशब्दः चशब्दः भरत इत्यनेन सम्बध्यते । ततश्च तथा भरतश्च वरादिना चक्रतनुः 'वराद्रङ्गत्वमवाप काम' इत्युक्तत्वात् । भरतस्य कामावतारत्वात् रथाङ्गत्वं ज्ञातव्यम् । अनेनैवं योजनायां साक्षादित्यादेः न वैयर्थ्यमिति भावः । अथवा 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यतः प्रत्यक्षं चक्रतनुरिति वा । अयमत्राभिप्रायः । यद्यपि चक्राभिमानी भरतः तथाप्ययोध्यायां नरैस्तथा न दृष्ट इदानीं चक्रधारित्वेन तथा दृष्ट इत्यस्मिन् पक्षे तथाशब्दः यथा चक्रतनुत्वेन भरतः सर्वैर्दृष्टः तथा प्रत्यक्षं शङ्खतनुत्वेन शत्रुघ्नो दृष्ट इत्यस्य वाचक इति ।।८९–९५।।

**गूढवाक्यार्थ–** अग्रे ययुरिति शेषः । सर्वजगत् खगादितृणान्तम् ।।८९।।

**तस्य सूर्यसुतपूर्ववानरा दक्षिणेन मनुजास्तु सव्यतः ।**
**रामजन्मचरितानि तस्य ते कीर्तयन्त उचथैर्द्रुतं ययुः ॥९०॥**

**व्यासतीर्थीया–** तस्य विष्णो रामजन्मचरितानि उचथैरुच्चैः कीर्तयन्तः ॥९०॥

**वादिराजीया–** तस्य सूर्यसुतपूर्ववानरा इत्यत्र सूर्यसुतपूर्ववानराः तस्य दक्षिणेन दक्षिणतः मनुजास्तु सव्यतः वामतः इति पदद्वयसम्बन्धः । तस्य रामस्य रमयन्तीति रामाणि मनोहराणि जन्मचरितानि उचथैः वैदिकसूक्तैः उच्चैरिति वा ॥९०॥

**वरदराजीया–** तस्य श्रीरामस्य सुग्रीवाद्या वानरा दक्षिणेन ययुः । मनुजा मनुष्यास्तु सव्यतो वामतो द्रुतं वेगेन ययुः । किं कुर्वन्तः तस्य विष्णोः रामजन्मचरितानि रामावतारचरितानि उचथैः उच्चैर्गायन्त इत्यर्थः ॥९०॥

**जनार्दनीया–** तस्य विष्णोः रामजन्मनः रामावतारस्य चरितानि कर्माणि उचथैः उच्चैः कीर्तयन्तः स्तुवन्त इत्यर्थः । ते वानराः तस्य रामस्य दक्षिणेन मनुजास्तु सव्यतः द्रुतं ययुः ॥९०॥

**अनन्तभट्टीया–** उचथैः उच्चैः ॥९०–१०४॥

**ताम्रपर्णीया–** सूर्यसुतपूर्ववानरास्तस्य दक्षिणतः मनुजास्तस्य वामत इति तच्छब्दद्वयसम्बन्धः । उचथैरुच्चकैः ॥९०॥

**चट्टी–** तस्य विष्णोः श्रीरामजन्मनः श्रीरामावतारचरितानि कर्माणि उचथैः उच्चैः कीर्तयन्तः स्तुवन्त इत्यर्थः । सूर्यसुतः सुग्रीवः पूर्वः येषां ते तथा । ते च ते वानराश्च सूर्यसुतपूर्ववानराः तस्य श्रीरामस्य दक्षिणेन ययुः । मनुजास्तु मनुष्यास्तु सव्यतः वामतः द्रुतं वेगेन ययुः ॥९०॥

**भारतश्री–** उचथैः उच्चकैः ॥९०॥

**गूढवाक्यार्थ–** रामाणि मनोहराणि जन्मचरितानीत्यर्थः । अन्यथा ... तस्येति पुनरुक्तिः स्यात् । उचथैः उच्चैः ॥९०॥

**गन्धर्वैर्गीयमानो विबुधमुनिगणैरब्जसम्भूतिपूर्वैः**
**वेदोदारार्थवाग्भिः प्रणिहितसुमनाः सर्वदा स्तूयमानः ।**
**सर्वैर्भूतैश्च भक्त्या स्वनिमिषनयनैः कौतुकाद् वीक्ष्यमाणः**
**प्रायाच्छेषगरुत्मदादिकनिजैः संसेवितः स्वं पदम् ॥९१॥**

**व्यासतीर्थीया–** वेदोदारार्थवतीभिः वाग्भिः प्रणिहितानि सुमनांसि यस्मिन्नसौ प्रणिहितसुमनाः ।।

**वेदाङ्गतीर्थीया–** प्रणिहितसुमना अभिवृष्टपुष्पः ।।९१-९२।।

**वादिराजीया–** प्रणिहितसुमना इत्यत्र प्रणिहिताः शिरसि समर्पिताः सुमनसः पुष्पाणि यस्य स तथोक्तः । 'स्त्रिय सुमनसः पुष्पम्' इत्यमरः ।।९१।।

**वरदराजीया–** पुनः कथम्भूतः ? गन्धर्वैर्गीयमानः अब्जसम्भूतो ब्रह्मा पूर्वो येषां ते तैः । विबुधानां मुनीनां गणैः वेदरूपाभिः उत्तमार्थाभिः वाग्भिः सर्वदा स्तूयमानो तथा तैरेव प्रणिहितानि अभिवृष्टानि सुमनांसि पुष्पाणि यस्मिन् स तथा । सर्वैः भूतैः प्राणिभिः भक्त्या स्वनिमिषनयनैः समीचीनैः निमेषरहितैः नयनैः कौतुकात् कुतूहलात् वीक्षमाणः । तथा शेषगरुडादिभिः निजैः भृत्यैः सम्यक् सेव्यमानं स्वपदं प्रायादित्यर्थः ।।९१।।

**जनार्दनीया–** अब्जात् सम्भूतिः सम्भवो यस्य ब्रह्मणः स तथा स एव पूर्वो येषां ते तथा तैः । विबुधानां देवानां मुनीनां गणैः । वेदानां उदारार्थाः यासु तास्तथा ताश्च ताः वाचश्च ताभिः । सर्वदा स्तूयमानः । प्रणिहितानि अभिवृष्टानि सुमनांसि पुष्पाणि यस्मिन् स तथा । 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' इत्यमरः । भक्त्या सु अतितरां अनिमिषाणि निमेषरहितानि नयनानि येषां ते तथा तैः । सर्वै भूतैः प्राणिभिः कौतुकात् हर्षात् वीक्ष्यमाणो रामः शेषादिनिजैः पार्षदैः संसेवितं स्वं स्वकीयं पदं प्रायात् ।।९१।।

**ताम्रपर्णीया–** प्रणिहितसुमनाः प्रणिहितानि सुमनांसि पुष्पाणि यस्मिन् स तथोक्तः । प्रणिहितानि शोभनानि मनांसि यस्मिन्निति वा ।।९१-९३।।

**चट्टी–** सः श्रीरामः गन्धर्वैर्गीयमानः अब्जसम्भूतो ब्रह्मा स एव पूर्वो येषां तैः । विबुधानां देवानां मुनीनां गणैः वेदानां उदारार्थाः यासु तास्तथा ताश्च ताः वाचश्च ताभिः । सर्वदा स्तूयमानः तैरेव प्रणिहिताः शिरसि समर्पिताः सुमनसः पुष्पाणि यस्य स तथा । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । सर्वै भूतैः प्राणिभिः भक्त्या स्वनिमिषनयनैः निमेषरहितैः कौतुकात् हर्षात् प्रेक्ष्यमाणो सन् शेषगरुडात्मभिः निजैः भृत्यैः संसेवितं स्वं स्वकीयं पदं प्रायात् ।।९१।।

**भारतश्री–** प्रणिहितसुमनाः पुष्पवृष्टिमान् ।।९१।।

**गूढवाक्यार्थ–** प्रणिहिताः शिरस्समर्पिता सुमनसः पुष्पाणि यस्य सः । 'स्त्रियस्सुमनसः पुष्पम्' इत्यमरः ।।९१।।

**ब्रह्मरुद्रगरुडैः सशेषकैः प्रोच्यमानसुगुणोरुविस्तरः ।**
**आरुरोह विभुरम्बरं शनैस्ते च [1]दिव्यवपुषोऽभवंस्तदा ॥९२॥**

**व्यासतीर्थीया–** सशेषकैः शेषप्रजापतिसहितैः ॥९२-९३॥

**वादिराजीया–** ते च दिव्यवपुष इत्यत्र ते पूर्वोक्ताः खगमृगादयः ॥९२॥

**मधुसूदनीया–** ॥ **तेऽपि दिव्यवपुषोऽभवन्निति** ॥ तेऽपि मनुष्यादिजीवा अपि पूर्वदेहान् परित्यज्य दिव्यवपुषः तेजोमयशरीरा आसन्नित्यर्थः । तथाचोक्तम्– 'अवगाह्य जलं यो यः प्राणिराशिः प्रहृष्टवत् । मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत ॥' इत्यादि रामायणे [उ.का.११०.२४] । अत्र जलशब्देन सरयूजलं ग्राह्यम् । स सरयू का इति शङ्का च– कैलासशिखरे राम मनसा निर्मितं सरः । ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः ॥ तस्मात् सुस्राव सरसः सायोध्यामुपगूहते । सरः प्रवृत्ता सरयू पुण्या ब्रह्मसरच्युता ॥' इति रामायणवाक्येन [बा.का.२४.८–१०] परिहर्तव्येति ध्येयम् ॥९२-९३॥

**वरदराजीया–** शेषः कः दक्षप्रजापतिश्च ताभ्यां सहितैः ब्रह्मादिभिः प्रोच्यमानः कीर्त्यमानः । शोभनानां गुणानां विस्तरो यस्य स तथा । विभुः समर्थो रामः शनैः अम्बरमाकाशमारुरोह । ते च प्राणिनो दिव्यवपुषः अलौकिकदेहाः अभवन् जाता इत्यर्थः ॥९२॥

**जनार्दनीया–** शेषः कः दक्षप्रजापतिः ताभ्यां सहितैः ब्रह्मादिभिः प्रोच्यमानः स्तूयमान इत्यर्थः । सुगुणानां उरु विस्तरः अतिविस्तारो यस्य स तथा । विभुः अम्बरं आकाशं आरुरोह । ते खगाद्याः तदा आकाशारोहणकाले दिव्यवपुषः उत्तमशरीरिणः अभवन् ॥९२॥

**चट्टी–** शेषश्च कः दक्षप्रजापतिश्च ताभ्यां सहितैः ब्रह्मरुद्रगरुडैः प्रोच्यमानः स्तूयमान शोभनगुणानां उरु विस्तरो अतिविस्तारो यस्य स तथा । विभुः श्रीरामः शनैः अम्बरं आकाशं आरुरोह । तदा आकाशारोहणकाले ते प्राणिनश्च पूर्वदेहान् परित्यज्य दिव्यवपुषः तेजोमयशरीरा आसन्नित्यर्थः । तथाचोक्तम्– 'अवगाह्य जलं यो यः प्राणिराशिः प्रहृष्टवत् । मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत ॥' इति रामायणवाक्येन [बा.का.२४.८–१०] परिहर्तव्येति ध्येयम् ॥९२॥

**प्रमाणसंग्रह–** ॥ **तेऽपि दिव्यवपुषोऽभवंस्तदा** ॥ 'अवगाह्य जलं यो यः प्राणिराशिः प्रहृष्टवत् । मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत ॥' इति च ॥९२॥

**भारतश्री–**ते च सहायभूताः तृणाद्याः दिव्यवपुषो अभवन् । पूर्वं देहं सरयूनद्यां त्यक्त्वा यतो इति ॥

---

१. 'स्पृष्ट्वैव सरयूतोयं सुखेन त्यक्तजीविताः । रामप्रसादात्ते सर्वे दिव्यरूपधराः शुभाः ॥' 'रामप्रसादात्ते सर्वे दिव्यरूपधराः शुभाः । दिव्यमाल्याम्बरधरा दिव्यमङ्गलवर्चसः ॥ आरुरोह विमानं तदसङ्ख्यास्तत्र देहिनः ॥' इति पाद्मे उ.२४५.८९-९० ।

**अथ ब्रह्मा हरिं स्तुत्वा जगादेदं वचो विभुम् ।**
**त्वदाज्ञया मया दत्तं स्थानं दशरथस्य हि ॥९३॥**

**वेदाङ्गतीर्थीया–** अथ स्वस्थानप्राप्त्यनन्तरम् ॥९३॥

**वादिराजीया–** त्वदाज्ञया मया दत्तमित्यत्र लङ्कायां यमपुरात् त्वयाऽऽनीतस्य तव पितुर्दशरथस्य अतः परं इतोऽप्यूर्ध्वं लोकं दिशेति त्वदाज्ञया । अत एव प्राक् 'समन्वजानत् पितरं च तत्र समागतम्' इत्युक्तम् ॥९३॥

**वरदराजीया–** अथ अम्बरारोहणानन्तरं ब्रह्मा विभुं हरिं स्तुत्वा इदं वक्ष्यमाणं वचो जगाद । किं वचः त्वदाज्ञया दशरथस्य योग्यं स्थानं मया दत्तम् ॥९३॥

**जनार्दनीया–** इदं वक्ष्यमाणम् ॥९३॥

**चट्टी–** अथारोहणानन्तरं ब्रह्मा हरिं विभुं श्रीरामं स्तुत्वा इदं वक्ष्यमाणं वचो जगाद । त्वदाज्ञया दशरथस्य योग्यं स्थानं मया दत्तम् ॥९३॥

**भावचन्द्रिका–** स्थानं स्वर्गः । 'दशरथनृपतिः स्वर्गतोऽभूद्वियोगात्' इत्युक्तत्वात् । अन्येषामिति विशेषणाच्च । अनेन दशरथपत्नीनां नायं चरमदेह इति ज्ञायते ॥९३॥

**भावविवृति–** त्वदाज्ञया मया दत्तं स्थानं दशरथस्य हि । मातॄणां चापि तल्लोकः अयुताब्दादितोऽग्रतः ॥ इत्यत्र मया दशरथस्य स्थानं स्वर्गलोकम् । 'दशरथनृपतिः स्वर्गतोऽभूद्वियोगात्' इत्युक्तेः । मातॄणां कौसल्यादीनां तल्लोकस्तेन दशरथेन प्राप्तो लोकः । स्वर्गस्थस्थानविशेषः ॥९३॥

**मातॄणां चापि तल्लोकस्त्वयुताब्दादितोऽग्रतः ।**
**अनर्हायास्त्वयाऽऽज्ञप्ता कैकेय्या अपि सद्गतिः ।**
**सूत्वा तु भरतं नैषा गच्छेत निरयानिति ॥९४॥**

**व्यासतीर्थीया–** तल्लोकस्तद्योग्यो लोकः । अनर्हायाः कैकय्याः कस्मात् सद्गतिराज्ञप्तेत्यत आह– सूत्वेति ॥९४॥

**वेदाङ्गतीर्थीया–** इतः वर्तमानकालात् अयुताब्दादग्रतः पूर्वं तल्लोकः दशरथलोकः ॥९४-९७॥

**वादिराजीया–** मातॄणां चापि तल्लोकस्त्वयुताब्दादितोऽग्रत इत्यत्र इतः तव स्वर्गारोहणकालात् अयुताब्दादग्रतः पूर्वम् । तु विशेषेण सर्वासां सह मरणाभावात् काले कश्चिद्विशेषोऽस्ति सूचनाय तुशब्दः ।

तल्लोकः दशरथलोकः दत्तः । दशरथस्य त्वयि वनं गते सति तद्वियोगेन तदैव मरणात् इतः पूर्वं किञ्चिदूनत्रयोदशसहस्रवर्षात् प्रागेव दिव्यं स्थानं दशरथाय दत्तम् । तु तदुपर्यपि त्रिसहस्रवर्षपर्यन्तं भवदैश्वर्यं दृष्ट्वा सह स्थितानां तदनन्तरं मरणात् इतः अयुताब्दात् प्रागेव पत्युः स्थानं दत्तमिति भावः । तत्रापि विशेषोऽस्तीति भावेनाह– **अनर्हाया इति** ।। तव राज्यप्रतिबन्धकरणनिमित्तात् किञ्चिद्दोषयुक्ततया औपाधिकसूतकदोषवशात् तदैव देवपूजानर्हब्राह्मणवत् कौसल्यासुमित्राभ्यां सहैव सद्गत्यनर्हाया अपीत्यर्थः । स्वभावादेव अयोग्यत्वे सद्गत्याज्ञादातू रामस्याकुशलत्वप्रसङ्गादित्थमेवार्थो वक्तव्यः । सद्गतिः दोषपरिहारानन्तरं सद्गतिः आज्ञप्ता ।।९४।।

**सत्याभिनवीया–** तत्रैव अनर्हायास्त्वया इति श्लोकत्रयम् । तस्यार्थः । अत्र अपेक्षितपदानां शेषः । यत् यस्मात् सा कैकेयी आवेशात् निकृत्यावेशात् त्वयि अशोभनं चकार तस्मात् कौसल्यादीनां सद्गतिकाले अनर्हायाः सद्गत्ययोग्यायाः कैकेय्याः कालान्तरे सद्गतिः अचललोकगतिः त्वया आज्ञप्ता कौसल्यादीनां अचलगतिकाले कैकेय्याः चललोकगतिः आज्ञप्ता । निकृतेः तमोऽपि त्वया आज्ञप्तम् । कैकेय्याः निरयाः कुतो नाज्ञप्ता इत्यत आह– **सूत्वेति** ।। एषा कैकेयी भरतं सूत्वा निरयान् न तु नैव गच्छेदिति हेतोः कैकेय्याः निरयाः नाज्ञप्ताः । तथाऽपि तथैव त्वदाज्ञानुसारेणैव सा निकृतिः मया शाश्वते तमसि क्षिप्ता । इत्येतत् नाम प्रसिद्धम् । कैकयी कौसल्यादीनां अचललोकगतिकाले त्वदाज्ञानुसारिणा मया निमित्तेन चलान् लोकांस्तु प्राप्ता । अचलान् लोकान् नैव प्राप्ता क्वचित् कालान्तरे अचलान् लोकान् प्राप्ता यस्मात् कारणात् सा कैकेयी पश्चात् त्वयि भक्तिमती तस्मात् तत्पश्चात् अचललोकगमनं युक्तमेवेति । एतेन कैकेय्याः सद्गतियोग्यत्वात् अनर्हाया इत्यनेन कैकेय्याः सद्गतित्वयोग्यत्वकथन-मनुपपन्नमिति दूषणं परास्तम् । अनर्हाया इत्यस्य सर्वकालेषु सद्गत्ययोग्याया इत्यर्थ इत्यनङ्गीकारात् । एतेनैव तथैवेति वक्तव्यं तथापीति कथनमनुपपन्नमिति दूषणं निरस्तम् । अपिशब्दस्यावधारणार्थत्व-मङ्गीकृत्य तथाऽपीत्यस्य तथैवेत्यर्थ इत्युक्तत्वात् ।।९४।।

**मधुसूदनीया–** ।। **मातृणामिति** ।। इतः वर्तमानकालादग्रतः पूर्वमेवायुतशब्दात् । मातृणां तल्लोकः दशरथलोको दत्त इत्यन्वयः । दशरथस्य मातृणां च लोकान् प्रदाय अयुताब्दा जाता इति भावः । तथाचोक्तम्– अथ कालेन महता मातरस्संशितव्रताः । कालधर्मं समापन्नाः सर्वे स्वर्गं प्रपेदिरे ।। दशवर्षसहस्रान्ते प्राप्ते कालेऽब्रवीत् ।।' इत्यादि पाद्मे [उ.खं.२४४.३४] ।।९४।।

**वरदराजीया–** कदा इत्यपेक्षायामाह– **अयुतेति** ।। इतो वर्तमानकालात् अयुताब्दात् अयुतानां दशसहस्राब्दतः पूर्वमेवेत्यर्थः । दशरथस्थानदानानन्तरं वर्षाणामयुतं जातानीति भावः । मातृणां कौसल्यादीनां च तस्य दशरथस्य लोको दत्त इत्यर्थः । मातृविषय अविशेषोक्तस्यापवादमाह– **अनर्हाया इति** ।। अनर्हाया स्वकृतश्रीरामद्रोहात् सद्गत्ययोग्याया इत्यर्थः । कैकेय्या अपि दयालुना त्वया सद्गतिराज्ञप्ता आज्ञापिता ।।९४।।

**जनार्दनीया–** इतः वर्तमानकालात् अयुताब्दादग्रतः पूर्वं मातॄणामपि कौसल्यादीनाम् तल्लोकः दशरथलोको । दत्त इति शेषः । 'मातॄणां चापि तल्लोकः' इत्युक्तस्यापवादमाह– **अनर्हाया इति** ।। एषा कैकयी भरतं सूत्वा निरयान्न गच्छेतेत्यभिप्रायेण । अनर्हायाः सद्गतिं प्राप्तावयोग्यायाः । कैकेय्या अपि सद्गतिः त्वया आज्ञप्ता आज्ञापिता यद्यपि तथापि सा कैकेयी । यस्याः आसुर्याः आवेशात् त्वयि अशोभनं साम्राज्याभिषेकस्य विघ्नरूपं अमङ्गलं चकार । सा निकृतिर्नाम आसुरी शाश्वते नित्ये तमसि मया क्षिप्ता निपातिता ।।९४-९५।।

**ताम्रपर्णीया–** ।। **मातॄणामिति** ।। इतः स्वर्गारोहणात् अयुताब्दादग्रतः पूर्वं मातॄणां तल्लोको दशरथलोक दत्त इत्यर्थः । किमित्याज्ञप्तेत्यत आह– **सूत्वेति** ।। तथापि निरयप्रापकापराधकर्तृत्वेन सद्गत्यनर्हत्वेऽपि भरतं सूत्वा निरयान्नैव गच्छेदित्याशयेन त्वयाज्ञप्तेति योज्यम् ।।९४।।[1]

**चट्टी–** इतः वर्तमानकालात् अयुताब्दादग्रतः पूर्वं मातॄणामपि कौसल्यादीनामपि तल्लोकः दशरथलोको दत्त इति शेषः । दशरथेन सहैव पत्नीनां मरणाभावात् काले कश्चित् विशेषोऽस्तीति सूचनाय तुशब्दः दशरथस्य त्वयि वनं गते सति त्वद्वियोगेन तदैव मरणादितो अयुताब्दतः प्रागेव पत्युः स्थानं दत्तमिति भावः । तथाचोक्तम्– अथ कालेन महता मातरस्संशितव्रताः । कालधर्मं समापन्नाः सर्वे स्वर्गं प्रपेदिरे ।। दशवर्षसहस्रान्ते प्राप्ते कालेऽब्रवीत् ।।' इत्यादि पाद्मे । 'मातॄणां चापि तल्लोक' इत्युक्तस्यापवादमाह– अनर्हाया इति ।। एषा कैकयी भरतं सूत्वा जनयित्वा निरयान्न गच्छेदित्यभिप्रायेण अनर्हायाः सद्गतिं प्राप्तावयोग्यायाः कैकेय्या अपि सद्गतिः त्वया आज्ञप्ता आज्ञापिता यद्यपि तथापि सा कैकेयी यस्याः आसुर्याः आवेशात् त्वयि अशोभनं साम्राज्याभिषेकस्य विघ्नरूपं अमङ्गलं चकार ।।९४-९५।।

**भारतश्री–** ।। **सहागता इति** ।।...* अनर्हायाः ताभिः गन्तुमनर्हायाः । यद्वा नरक...* भुक्त्वा सद्गतिं गन्तुमनर्हायाः...* सद्गतिः त्वयाज्ञप्तः । तत्र कारणमाह । भरतपुण्येन स्वानुग्रहेण च तस्याः...* चलान् लोकान् विनाशिलोकान् ।।९४।।

**भावचन्द्रिका–** ।। **तल्लोक इति** ।। 'अथ कालेन महाता मातरः शंसितव्रताः । कालधर्मं समापन्नाः भर्त्रा स्वर्गं प्रपेदिरे ।।' इति पाद्मे । स्वर्गस्थानं अधिकारिणां वैकुण्ठादौ सेवार्थं गमनकाले कैकेय्याः गमने निषेध एव कैकयीति श्लोके उच्यते । मुक्त्यनन्तरं च लोकगमनस्य तदितरस्त्रीसाधारण्यात् विशषो न स्यात् ।।९४-९६।।

**भावविवृत्ति–** इतो वर्तमानकालादयुताब्दादग्रतः पूर्वं दत्तः । तदुक्तं पाद्मे– अथ...[1] प्रपेदिरे ।।' इति पाद्मोक्तेः । स्वर्गस्था देवा द्विविधाः । अस्मिन् ब्रह्मकल्पे प्राप्तपदाः तत्प्राप्तियोग्याश्चेति । तदुक्तं

१. केचित् 'अयुताब्दादितोऽग्रतः दशरथस्य स्थानं दत्तम्' इति योजनेत्याहुः ।।९४।। इति होपुस्तके अधिकः पाठः

पञ्चमतात्पर्ये– [५.२१.२८] 'अनधीकारिणो देवा स्वर्गस्था भारतोद्भवम् । वाञ्छत्यात्मविमोक्षार्थं उद्रेकाऽर्थेऽधिकारिणः ।।'अधिकारिणः प्राप्तपदाः । अनधिकारिणः पदप्राप्तियोग्याः । तथाच प्राप्तपदानां वैकुण्ठादौ भगवद्दर्शनार्थं क्वचिद्गमनसम्भवात् । देवांशसम्भवानां कौसल्यादीनां भर्त्रा सह श्वेतद्वीपादौ क्वचिद्भगवद्दर्शनार्थे गमनशक्तिरपि मया दत्तेत्यर्थः । तदेतदुक्तं दशमतात्पर्ये– [१०.५३.७] बहूनि स्थानजातानि कृष्णस्य क्षीरसागरे । कानिचिन्मुक्तगम्यानि नामुक्तैस्त्रिदशैरपि ।। गन्तुं शक्यान्यथान्यानि गम्यान्यन्यैरपि क्वचित् । तत्र देवाश्च योगीन्द्रा भक्ताश्चान्ये जनार्दनम् । गत्वार्चयन्ति देवेशं बलिस्तत्रागमत्क्वचित् ।।' इति च । अत्रैव षोडशाध्याये– तदा दुग्धब्धौ संसृतिस्थैस्सुराद्यैः पूजामाप्तुं स्थानमेषां च योग्यम् । मुक्तस्थानादाप नारायणोऽजो बलिश्चागात् तत्र सन्द्रष्टुमीशम् ।।' इति । परीक्षितः 'भेजे खगेन्द्रध्वजपादमूलम्' [भा.१.१८.१६] इति वैकुण्ठप्राप्तिकथनेऽपि तत्प्राप्तेश्वर-मदेहानन्तरभावित्वात् दशरथस्य तदानीं तदभावात् स्वर्गेऽवस्थानं युक्तमिति ज्ञेयम् । ननु 'ये तु देवा इहोद्भूता नृवानरशरीरिणः । ते सर्वे स्वांशितामापुः तन्मैन्दविविदावृते ।। इत्युक्त्या दशरथस्य कौसल्यादीनां च स्वमूलरूपैक्यस्य वक्तव्यत्वात् । तद्विना स्वर्गे पृथगवस्थानं कथमित्यतः पाण्डुराज्ञः कारणविशेषान्मूलरूपैक्यं विना यथा स्वर्गे पृथगवस्थानं तथा तेषामपि कारणविशेषात् पृथगवस्थान-मित्यवश्यमङ्गीकार्यम् । 'कैकयी तु चलान् लोकान् प्राप्ता नैवाचलान् क्वचित्' इत्यत्र 'मातृणां चापि तल्लोकः' 'मया दिष्टा च सद्गतिः' इत्यादिना कौसल्यादिवत् कैकेय्या अपि स्वर्गप्राप्तिर्वक्तव्या । तथापि अचलान् लोकान् मेर्वादिषु स्थितभगवद्दर्शनार्थं भर्त्रा सह गमनशक्तिं प्रापेति । एतदेव चललोकप्राप्तिरिति ज्ञेयम् ।.तुशब्द एतद्विशेषसूचकः । उक्तश्च द्वितीयतात्पर्ये– [२.६.२०]

अनन्तासनवैकुण्ठनारायणपुराणि तु । त्रीणि धामानि वै विष्णोः त्रिलोकाद्बहिरेव हि ।।
अदायदास्तु पुत्राणामुद्रिक्तज्ञानचक्षुषः । नारायणपरा देवा एव तान्याप्नुवन्ति च ।।
स एवान्यस्वरूपेण शक्रलोकसमीपगः । इज्यो यज्ञपुमान्नाम ज्ञानिनां गृहिणां पदम् ।।
यतीनां ध्रुवलोकस्थो वनिनां मेरुमध्यगः । आदित्यमण्डलस्थस्तु ज्ञानिनां ब्रह्मचारिणाम् ।। इति

**गूढवाक्यार्थ–** तल्लोको दशरथलोकः । अग्रतः पूर्वः ।।९४।।

**तथाऽपि सा यदावेशाच्चकार त्वय्यशोभनम् ।**
**निकृतिर्नाम सा क्षिप्ता मया तमसि शाश्वते ।।९५।।**

**व्यासतीर्थीया–** यदि कैकेय्याः सद्गतिस्तर्हि तदपराधो व्यर्थो जात इत्यत आह– **तथापीति** ।। यद्यपि कैकेय्याः सद्गतिस्तथापि तदपराधो न व्यर्थः ।।९५।।

**वादिराजीया–** तथापि सा यदावेशादित्यत्र तथापि कैकेय्याः सद्गतियोग्यत्वेऽपि सा कैकेयी यदावेशात् यस्याः निकृत्याख्यराक्षस्याः आवेशात् हृदयान्तरावेशादित्यर्थः । बहिर्मन्थरायाः सत्वेऽपि मनोमालिन्यकरणाय अन्तरन्याऽपेक्षिता । बहिः रामराज्यं नाशयेदिति दुर्वाक्यं वक्तुं मन्थरा अपेक्षिता । मायावादिना शतशः ऐक्यवाक्ये प्रयुक्तेऽपि तत्त्ववादिनां मन इव बहिर्दुर्वाक्यश्रवणेऽपि कैकेय्याः मनः अधर्मं नाङ्गीकुर्यदिव । अतो मनोमालिन्यजननायापि काचिदपेक्षिता । मलिनचित्ताया अपि कैकेयाः दशरथो नाधर्मे प्रवर्तुयितुं शक्यः । अतः प्राक्पतिदत्तवरस्य इदमेव फलं याचयेति दुष्टोपदेशशिक्षणार्थं बहिरपि अन्याऽपेक्षितेति भावः । मन्थरा दासी भूत्वा विलुम्पेति ब्रह्मोपदेशादिदं कुमार्गं जानाति । निकृतिस्तु तदभावात् धौतवस्त्रं पङ्केव मनोमलिनमेव कर्तुं समर्था नतु मन्थरावत् कुमार्गोपदेशायापि शक्ता । अतो द्वे अपि राक्षस्यौ अपेक्षिते इति ज्ञेयम् ।।९५।।

**मधुसूदनीया–** ननु कैकेय्याः विष्णुद्रोहस्य कृतत्वात् कथं सल्लोक आज्ञप्त इत्यत आह– **तथापीति** ।। यद्यपि विष्णुद्रोह आचरितः । तथापि स न स्वभावात् कृत इति सल्लोकाज्ञादानं युक्तमिति भावः ।।९५।।

**वरदराजीया–** त्वयापि किमर्थमाज्ञप्ता भरतं पुत्रं सूत्वा जनित्वा तत्प्रभवादेषा कैकेयी निरयान्न गच्छेदित्यभिप्रायवता त्वयेति सम्बन्धः । ननु तथापि श्रीरामं प्रति कृतापराधस्य किं फलं जातमित्यत आह– **यदावेशादिति** ।। यद्यपि तया सद्गतिः प्राप्ता तथापि यस्या दुष्टाया आवेशात् कैकेयी त्वयि अशोभनं अपराधं चकार । सा दुष्टा निकृतिर्नाम प्रसिद्धा शाश्वते नित्ये तमसि मया क्षिप्ता प्रापितेत्यर्थः ।।

**कैकयी तु चलान् लोकान् प्राप्ता नैवाचलान् क्वचित् ।**
**पश्चाद् भक्तिमती यस्मात् त्वयि सा युक्तमेव तत् ।।९६।।**

**व्यासतीर्थीया–** का सा सद्गतिरादिष्टेति जिज्ञासायामाह– **कैकेय्यीति** ।।९६–९७।।

**वादिराजीया–** कैकेयी तु चलान्लोकानित्यत्र कैकेयी तु प्रागुक्तदोषविशेषसद्भावात् इतः पूर्वं चलान्नश्वरान् स्वर्गादिलोकानेवाऽऽप्ता । क्तप्रत्ययस्य अतीतार्थकत्वात् । अचलान् सन्तनादिलोकान् क्वचित् कस्मिंश्चित् प्रदेशेऽपि इतः पूर्वं नैवाप्ता । सोपाधिकत्वेन दुर्बलतया सुपुत्रप्रसवितृत्वपुण्यप्राबल्येन च नरकदानासमर्थेन दोषेण अचललोकप्राप्तिप्रतिबन्धमात्रं कृतम् । सुपुत्रजनयितृत्वपुण्यमहिम्ना स्वर्गादिचललोकप्राप्तिश्चाभूदिति भावः । पश्चात् सा कैकेयी त्वयि भक्तिमती । तस्मात्तत् सद्गतिदानज्ञापनं युक्तमेवेत्यर्थः । औपाधिकदोषपरिहारनन्तरं तस्या अपि त्वदाज्ञप्तसद्गतिं दास्यामीति भावः ।।९६–९७।।

**मधुसूदनीया–** कैकेय्याः कौसल्यादिभ्यो विशेषमाह– **कैकेयीति** ।। कैकेयी तु चलाल्लोकान् प्राप्तेति न । किन्तु क्वचित् कालान्तरे अचलाल्लोकानपि प्राप्ता प्राप्स्यति । कथमिति पश्चात् निकृत्यावेशा-

पगमनानन्तरं पश्चात्तापानन्तरं च त्वयि यस्माद्भक्तिमती यस्मात्तस्मात् सल्लोकदानं युक्तमेवेत्यन्वयः । कौसल्यादीनामिदानीमेव सल्लोकप्राप्तिः कैकेय्यास्तु कालान्तर इति विशेषस्तुशब्दस्सूचित इति भावः ।।

**वरदराजीया–** तत्सङ्गात् कैकेय्या अपि हानिरभूदित्याह– **कैकेयीति** ।। कैकेयी सल्लोकानपि चलानेव प्राप्ता नतु कौसल्यादिवत् अचलान् लोकान् क्वचिदपि काले च प्राप्तेत्यर्थः । कुत इत्यत आह– **पश्चादिति** ।। सा त्वयि पश्चाद्भक्तिमती निकृत्यावेशगमनानन्तरं भक्तिमती जाता । तस्याः तच्चललोकप्रापणं युक्तमेवेत्यर्थः । भक्तिपूर्त्यनन्तरं अचलानपि लोकान् कालान्तरे प्रापेति भावः ।।९६।।

**जनार्दनीया–** कैकयी चलान् लोकान् प्राप्ता अचलान् कौसल्यासुमित्रावदचलान्न प्राप्तेत्यर्थः । किन्तु क्वचिद्योग्यतापूर्तिकाले प्राप्स्यतीति शेषः । इदमपि कुत इत्यत आह– **पश्चादिति** ।। पश्चादासुर्यावेश-निर्गमनान्तरम् । यस्मात् त्वयि भक्तिमती तस्मात् तदचललोकगमनं युक्तमेव । यद्वा कैकयी चलान्नैवाप अपि तु अचलानेव आप । शेषं पूर्ववत् ।।९६।।

**ताम्रपर्णीया–** ।। **कैकयी त्विति** ।। अत्र क्वचिदित्यस्य कियत्कालमित्यर्थः ।।९६।।[1]

**चट्टी–** निकृतिर्नाम प्रसिद्धा सा आसुरी शाश्वते नित्ये तमसि मया क्षिप्ता निपातिता । कैकय्याः कौसल्यादिभ्यो विशेषमाह– **कैकेयीति** ।। कैकेयी तु चलान् लोकान् एव प्राप्तेति न किंतु क्वचित् कालान्तरे अचलानपि लोकान् प्राप्ता प्राप्स्यति । कथमिति । पश्चात् निकृत्यावेशापगमानन्तरं सूत्वा यस्मात् भक्तिमति तस्मात् लोकदानं युक्तमेवेत्यन्वयः । कौसल्यादीनामिदानीमेव सल्लोकः प्राप्तः कैकैय्यास्तु कालान्तरे इति विशेषः तुशब्दसूचित इति भावः ।।९६।।

**भावविवृति–** तथाप्यपराधिन्याश्चललोकप्राप्तिर्वक्तव्या इत्यत आह– **पश्चादिति** ।। यस्मात् सा कैकयी त्वयि पश्चात् पश्चात्तापपूर्वं भक्तिमती आस तस्मात्तस्याः अचललोकप्राप्ति...* इत्यर्थः । 'कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते । प्रायश्चित्तं तु तस्योक्तं हरिसंस्मरणं परम् ।।' कृष्णामृतमाहार्णवे इत्युक्तेः [श्लो.३५] ।।९६–१०४।।

**अतिविशद–** कैकयी तु चलान् लोकान् इत्यत्र कैकयीत्वचलान् लोकान् प्राप्ता चलान् नैवेत्यन्वयः । अन्यथा 'क्वचित्' इत्यादेः अस्वारस्यं स्यादिति भावः । अचललोकप्राप्तौ हेतुः 'पश्चाद्भक्तिमती यस्मात्' इति । क्वचिदपि अचलान् लोकान् नैवाप्ता इत्येवं योजनायां नित्यसंसारित्वमङ्गीकर्तव्यमिति । अथवा कैकयी तु चलान् लोकान् प्राप्ता क्वचित् कालान्तरे अचलानपि तत्र हेतुः– **पश्चादिति** ।।९६–१०५।।

**गूढवाक्यार्थ–** नैवाचलान् क्वचिदित्यस्य कियत्कालमित्यर्थः ।।९६।।

---

१. ।। कैकयी त्विति ।। अत्र क्वचिदित्यस्य कियत्कालमित्यर्थः । केचित्तु एतद्वचनबलात् नित्यसंसारित्वं प्रलपन्ति । इति होपुस्तक पाठः ।

**मन्थरा तु तमस्यन्धे पातिता दुष्टचारिणी ।**
**सीतार्थं येऽप्यनिन्दंस्त्वां तेऽपि याता महत् तमः ॥९७॥**

**सत्याभिनवीया–** तत्रैव सीतार्थं ये त्वनिन्दंस्त्वां... इत्यस्ति । तस्यार्थः । सीतार्थं सीताभीष्टनिवृत्तिमुद्दिश्य त्वां तु विशेषतः अनिन्दन् ते च महत्तमः त्वदाज्ञानुसारिणा मया निमित्तेन याताः प्राप्ताः इति । एतेन सीताभीष्टनिवृत्तये त्वामनिन्दन् इति वक्तव्यं सीतार्थमिति वचनमनुपपन्नमिति दूषणं परिहृतम् । सीताशब्दः सीताभीष्टपरः अर्थशब्दः निवृत्तिवाची उद्दिश्येति शेषः इत्यङ्गीकृत्य सीताभीष्टनिवृत्ति-मुद्दिश्येत्यर्थस्योक्तत्वात् ॥९७॥

॥ इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां नवमोऽध्यायः ॥

**वरदराजीया–** मन्थरा तु श्रीरामद्रोहे असाधारणकारणत्वात् दुष्टचारिणी दुष्टकर्मवती अन्धे तमसि पातिता । सीतानिमित्तं ये सुराणकास्त्वामनिन्दन् तेऽपि महत्तमो याताः ॥९७॥

**जनार्दनीया–** मन्थरानाम्नी कैकेयी दासी । ये सुराणकाः ते । याताः प्राप्ताः ॥९७॥

**ताम्रपर्णीया–** ॥ **मन्थरा त्विति** ॥ ननु– 'तेप्येवं ब्रह्मवद्गणाः' 'आभूतसम्प्लवाज्जन्म जीवेशत्वं विजानतः । ततः पतत्यधो यस्मादुत्थानं नैव कुत्रचित् ॥' [भा.ता.११.३.७] इत्यादौ कल्यादीनां ब्रह्मप्रलयपर्यन्तं अवस्थानोक्तेः कथं मन्थरासुराणकादीनां प्रति रामावतारे तमः प्राप्त्युक्तिः । न च तमःशब्देन साधनपरिपूर्तिर्वा तत्समनरकप्राप्तिर्वोक्तेति वाच्यम् । उपचारप्रसङ्गात् । 'प्रायशो राक्षसाः महत्तमो याताः । शेषाः त्वयि कृष्णत्वमागते यास्यन्ति ॥'[९.९८] इत्यादिविभज्यकथनानुपपत्तेश्च । न हि शेषाणां इदानीं नरकाभावोऽस्ति । नाप्यस्मिन्नवतारे यावत्साधनपूर्त्या भाव्यं तावत्पूर्तिर्नास्तीति शक्यते वक्तुम् । न च मन्थरादीनां केषाञ्चित् अस्मिन् दिनकल्पे यावत्पूर्त्या भाव्यं तावद्रामावतारे आसीत् । शेषाणां उत्तरत्र भविष्यतीति विभज्यकथनमुपपन्नमिति वाच्यम् । तथात्वे मन्थरायाः कृष्णावतारे उत्पत्तिः न स्यात् । उच्यते चोत्पत्तिः । 'उद्वाह्य काशितनयां गिरिजाधिविष्टां साक्षान्नरेषु जनितां प्रथमामलक्ष्मीं' इति [१९.२०१] । तथा 'स चाप पापस्तम एव केवलं' [२२.२२२] इति तमःप्राप्तिमुक्त्वा 'मणिमांश्च पुनः कलौ जातः' [२२.३१५] इति पुनरुत्पत्तिः 'ये हता भीमसेनेन प्रापुरन्धंतमोऽखिला' [२२.३१५] इति क्रोधवशानां तमःप्राप्तिमुक्त्वा श्रीमदाचार्यावतारसमये 'तत्र सेहिरे क्रोधवशादिदैत्या' [३२.१५९] इति तत्त्वाभिधानम् । दुर्योधनवधानन्तरं तमःप्राप्तिमुक्त्वा परीक्षिद्राज्यकाले अवस्थानं आचार्यावतारकाले चासुरैः सह सम्मन्त्रणं च न स्यात् । एतस्मिन् कल्पे

प्राप्यसाधनपूर्तेस्तदा तदैव जातत्वादिति चेत् । अत्राहुः । कल्यादयो ब्रह्मादिवदाप्रलयवासिन एव । न तु प्रतिदिनं भिन्नाः । मध्ये तमःप्राप्तिवचनं अंशविवक्षयोपपद्यते । मन्थरामणिमत्प्रभृतीनां पुनरुत्पत्तेरेव तज्ज्ञापकत्वात् । एकस्मिन्नेव दिने पुनः पुनरुत्पत्त्युक्त्या दिने दिने एकैक इति कल्पनाया अवकाशाभावात् । ननु तमोगतांशानां लिङ्गभेदः । अन्येषां तदभावः । तेषां परमदुःखानुसन्धानं अन्येषां तदभावः षट्त्रिंशत्सहस्ररूपत्वं इत्यादिगुरुतरेयं कल्पनेति चेत् । 'भेजे खगेन्द्रध्वजपादमूलम्' [भा१.१८.१६] इति सायुज्यं गतस्यापि परीक्षतो ब्रह्मणा सह लिङ्गभङ्गवत् तमोगतांशानामपि अंशिना सह तदुपपत्तेः । अत एव विचित्रदुःखानुसन्धानाभावः । अनन्तरूपवतां षट्त्रिंशत्सहस्रांशवत्त्वं नाश्चर्यमिति कथं कल्पनागौरवमित्यलं प्रपञ्चनेन ।।९७–१०३।।[1]

---

१. ।। मन्थरा त्विति ।। ननु मन्थरादयः आप्रलयमेकैके उत प्रतिदिनं भिन्नाः । नाद्यः 'मन्थरा तु तमस्यन्धे पातिता' इति, 'तेऽपि याता महत्तमः' इति चोक्तः । न च भावितमःप्राप्तिः सिद्धवत्कृत्वोक्तत्वात् । तथात्वे 'ते याताः' 'शेषाः यास्यन्ति' इति विभज्य कथनानुपपत्तेः । अतीतार्थकप्रत्ययायोगाच्च । न च तमःप्राप्तिर्नाम तत्साधनपूर्तिर्वा तत्समाननरकप्राप्तिर्वा विवक्षितमिति वाच्यम् । उपचारप्रसङ्गात् । विभज्य कथनायोगाच्च । न हि शेषाणां इदानीं नरकाभावः सम्भवति महदिति विशेषणाच्च । न द्वितीयः । 'तेऽप्येवं ब्रह्मवद्गणाः' । 'आभूतसम्प्लवाज्जन्म जीवेशत्वं विजानतः । ततः पतत्यधो यस्मादुत्थानं नैव च क्वचित् ।। ' इति वचनविरोधात् । न चात्रैकादशतात्पर्ये आभूतसंप्लवशब्दो दिनप्रलयपरः इति वाच्यम् । '.....बह्वभद्रावहः पुमान् । आभूतसम्प्लवात् सर्गप्रळयावश्नुतेऽवशे ।।' इति [भा.११.३.७] । तन्मूलस्य पूर्वोत्तरवाक्येषु 'लीयते सलिले विराट्' [भा.११.३.११] इत्यादिना ब्रह्माण्डतत्त्वलयोक्त्या भूतसम्प्लवशब्दस्य ब्रह्मप्रळयार्थकत्वात् । तथा च पक्षद्वयस्याप्ययोग इति । अत्र रहस्यमाहुराचार्याः । कल्यादयो ब्रह्मादिवदाप्रळयवासिनः । मध्ये तमःप्राप्तिवचनमंशविवक्षययोपपद्यते । अन्यथा एकलव्यवधानन्तरं 'स चाप पापस्तम एव केवलम्' इत्युक्त्वा 'माणिमांश्च पुनः कलौ जातः मिथ्यामतिं चक्रे' इत्युक्तिः, 'ये हताः भीमसेनेन प्रापुः तेऽपि तमोऽखिलाः' इति क्रोधवशानां तमःप्राप्तिमभिधाय आचार्यावतारनिरूपणसमये 'न सेहिरे क्रोधवशा हि दैत्या' इति तत्सत्त्वाभिधानं 'मन्थरा तु तमस्यन्धे' इति वर्णयित्वा 'उद्वाह्य काशितनयां गिरिजाधिविष्टां साक्षान्नरेषु जनितां प्रथमामलक्ष्मीम्' इति वर्णनम्, दुर्योधनवधानन्तरं तमःप्राप्तिमुदीर्य आचार्यावतारकथनकाले तस्यासुरैः सह संमत्रणं परीक्षिद्राज्यपालनकाले सत्त्वं च न स्यात् । न चैते चेतनान्तरा इति वाच्यम् । मणिमञ्जर्यां [५.५] 'कृष्णो दैवं गुरुर्भीमो वेदविद्या च पार्षती । तस्या उत्सादनेनैव यातस्तावतिसङ्कटम् ।।' इति पूर्ववैरस्मृतिकथनात् । 'कलिपूर्वाः सुरद्विषः' इति प्रकृतत्वात् । ननु तमोगतांशानां लिङ्गभेदः । अन्येषां तदभावः । तेषां परमदुःखानुसन्धानं अन्येषां तदभावः । षट्त्रिंशत्सहस्ररूपत्वमित्यादिगुरुतरेवं कल्पनं कथमिति चेत् । 'भेजे खगेन्द्रध्वजपादमूलम्' इति अंशतः पादसायुज्यं गतस्यापि परीक्षितः अंशिनः ब्रह्मणा स्वलिङ्गभङ्गवत् तमोगतांशानामपि अंशिना सह प्रलयकाले एव तदुपपत्तेः । अत एव विचित्रदुःखानुसन्धानाभावः । अन्यथानुपपत्त्या रूपबाहुल्यमङ्गीकार्यम् इत्यलं ग्रन्थगौरवभयात् उपरमते ।।९७–१०४।। इति हो पुस्तके अधिकःपाठः ।

**चट्टी–** मन्थरा तु श्रीरामद्रोहासाधारणकारणत्वात् दुष्टचारिणी दुष्टकर्मवती अन्धेतमसि पातिता । सीतार्थं सीतानिमित्तं ये सुराणकास्त्वामनिन्दयन् ते च महत्तमो याताः प्राप्ताः प्रायशः बाहुल्येन राक्षसाश्च तमो याताः ।।९७।।

**भावचन्द्रिका–** ।। **मन्थरेत्यादि** ।। 'संयमने त्वनुभूयेतरेषां आरोहावरोहौ ...' [ब्र.सू.३.१.१४] इति सूत्रे 'तत्र भुङ्क्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम्' इति भाष्ये [सू.भा.३.१.१५] च यथा साधनपूर्त्यनन्तरं महदादिप्राप्तिरेवं नरकप्राप्त्यनन्तरमेव तमःपात उच्यते । एवञ्च साधनमुक्त्वा 'न्यवसन्' इत्यत्र यथा तत्कल्प्या इत्यर्थः । तथा तमःप्राप्तिः कल्प्या इत्यर्थः । न च इदानीमेव तमःप्राप्तिः । 'आभूतसम्प्लवाज्जन्म जीवेशत्वं विजानतः । ततः पतत्यधो यस्मादुत्थानं नैव कुत्रचित् ।।' इति भागवते एकादशस्कन्धतृतीयाध्यायतात्पर्यवचनात् 'तेऽप्येवं ब्रह्मवद्गणाः' इत्यादिवाक्यविचारे कल्यादीनां ब्रह्मकल्पावस्थानसम्भवाच्च । न च 'मन्थरा' इत्यादिवाक्यविरोध एव उक्तवचनस्य इति वाच्यम् । अस्य सावकाशत्वात् । चतुर्दशेऽध्याये– 'अंशेन यो भुवमगान्मणिमानितिस्म स क्रोधतन्त्रकगणकेष्वधिपो निषाद' [१४.४०] इति उक्तम् । द्वाविंशेऽध्याये 'स चाप पापस्तम एव चोग्रं कृष्णद्वेषान्नित्यदुःखात्मकं तत्' [२२.२२२] इति एकलव्यस्य वधानन्तरं तमःप्राप्तिश्चोक्त्वा तत्रैव 'मणिमांश्च पुनः कलौ । जातो मिथ्यामतिं सम्यगास्तीर्याप तमोऽधिकम्' [२२.३१५] इति कलौ सङ्करत्वेन जननश्चोच्यते । अतः सावकाशमेतत् । अतः केवलतमःकल्पनरके विद्यमाना अप्यंशेन भूमौ जाताः केचन तादृशं रौरवादिकं गमिष्यन्तीत्येवाभिप्रायः ।।९७–१०४।।

**प्रायशो राक्षसाश्चैव त्वयि कृष्णत्वमागते ।**
**शेषा यास्यन्ति तच्छेषा अष्टाविंशे कलौ युगे ।**
**गते चतुस्सहस्राब्दे तमोगास्त्रिशतोत्तरे ।।९८।।**

**व्यासतीर्थीया–** राक्षसाः खरादयस्तमो याताः । वैवस्वतमन्वन्तरे प्रथमकलियुगापेक्षया अष्टाविंशे मनुष्याणां चतुःसहस्राब्दे ।।९८–९९।।

**वेदाङ्गतीर्थीया–** राक्षसाश्च प्रायशस्तमो याताः । शेषास्त्वयि कृष्णत्वमागते यास्यन्ति । तच्छेषाः कृष्णावतारसमयेऽपि तमो न प्राप्ताः अष्टाविंशे कलौ युगे वैवस्वतमन्वतर इति शेषः । तमोगा भविष्यन्तीति शेषः ।।९८–१०५।।

**वादिराजीया–** प्रायशो राक्षसाश्चैवेत्यत्र त्वया हता राक्षसाः प्रायशस्तमो याताः । शेषाः त्वयि कृष्णत्वमागते सति तमो यास्यन्ति । तच्छेषाः कृष्णावतारेऽपि हननानन्तरं तमोगमनादवशिष्टाः मणिमदाद्याः अष्टाविंशे कलौ युगे त्रिशतोत्तरे चतुःसहस्राब्दे गते सति तमोगा भविष्यन्तीति योजना ।।

**वरदराजीया–** प्रायशः प्रायेण राक्षसश्च तमो याता इत्यर्थः । शेषा राक्षसशेषास्त्वयि कृष्णत्वमागते प्राप्ते सति त्वया कृष्णावतारे कृते सतीत्यर्थः महत्तमो यास्यन्तीत्यर्थः । तच्छेषास्तेभ्यश्च शिष्टा अष्टाविंशे वैवस्वतमन्वन्तराद्यमहायुगान्तर्गतकलियुगापेक्षया अष्टाविंशतितमे कलौ युग इत्यर्थः । तत्रापि त्रिशतोत्तरे शतत्रयाधिके चतुःसहस्राब्दे गते सति महत्तमो यास्यन्तीत्यर्थः । अत्र सर्वत्र ब्रह्मप्रलयानन्तरमेव सर्वेषां साक्षात्स्वस्वयोग्यतमः प्राप्तम् । 'याताः' 'यास्यन्ति' इत्याद्युक्तिस्तमःसाधनसम्पत्या भूमौ पुनरुद्भवाद्यपेक्षयेति द्रष्टव्यम् ।।९८।।

**जनार्दनीया–** राक्षसाः प्रायशः बाहुल्येन तमो याता इति सम्बन्धः । शेषाः उर्वरिताः राक्षसाः त्वयि कृष्णत्वं कृष्णस्वरूपत्वं आगते प्राप्ते सति यास्यन्ति । तच्छेषाः तेष्वप्युर्वरिताः राक्षसाः वैवस्वतमन्वन्तरे महायुगापेक्षया अष्टाविंशे कलौ गते प्राप्ते । सतीति शेषः । त्रिशतोत्तरे त्रिशताधिके चतुःसहस्राब्दे चतुःसहस्राब्दपरिमितकाले गते अतिक्रान्ते सति तमोगाः । भविष्यन्तीति शेषः ।।९८।।

**चट्टी–** शेषाः उर्वरितराक्षसशेषास्त्वयि कृष्णत्वमागते प्राप्ते सति त्वया कृष्णावतारे कृते सतीत्यर्थः। महत्तमो यास्यन्तीत्यर्थः । तच्छेषास्तेभ्यश्च शिष्टा मणिमदाद्याः अष्टाविंशे कलौ युगे वैवस्वतमन्वन्तराद्य-महायुगान्तर्गतकलियुगापेक्षया अष्टाविंशतितमे कलौ युगे त्रिशतोत्तरे त्रिशताधिके चतुःसहस्राब्दे गते सति तमोगाः भविष्यन्तीति शेषः । अत्र सर्वत्र ब्रह्मप्रलयानन्तरमेव सर्वेषां स्वस्वयोग्यतमःप्राप्तेः 'याताः' 'यास्यन्ति' इत्याद्युक्तिस्तु तमःसाधनसम्पत्या भूमौ पुनरुत्पत्त्य-भावाद्यपेक्षयेति द्रष्टव्यम् ।।९८ ।।

**गूढवाक्यार्थ–** अष्टाविंशे त्रिशतोत्तरे चतुस्सहस्राब्दे गते सति ।।९८।।

**अथ ये त्वत्पदाम्भोजमकरन्दैकलिप्सवः ।**
**त्वया सहागतास्तेषां विधेहि स्थानमुत्तमम् ।।९९।।**

**वादिराजीया–** विधेहि स्थानमित्यत्र उत्तमं स्थानं विधेहि आज्ञापय ।।९९–१०३।।

**वरदराजीया–** अथानन्तरं त्वत्पदाम्भोजमकरन्दे एका लिप्सा वाञ्छा येषां तेषां ते खगामृगाद्याः तेषां योग्यमुत्तमं स्थानं विधेहि आज्ञापय ।।९९।।

**जनार्दनीया–** अथ त्वत्पदाम्भोजस्य मकरन्दरसं एकतया मुख्यत्वेन लिप्सन्ति ते लिप्सवः इच्छन्तः । त्वया सह आगता ये तेषां स्थानं विधेहीत्यर्थः ।।९९।।

**चट्टी–** अथानन्तरं त्वत्पदाम्भोजमकरन्दे एका लिप्सा वाञ्छा येषां तेषां ते तथाभूताः सन्तः । ये त्वया सह आगता तेषां उत्तमं स्थानं विधेहि आज्ञापय ।।९९।।

**अहं भवः सुरेशाद्याः किङ्कराः स्म तवेश्वर ।**
**यच्च कार्यमिहास्माभिस्तदप्याज्ञापयाऽऽशु नः ॥१००॥**

**व्यासतीर्थीया–** समर्थत्वाद्भवद्भिरेव तेषां स्थानं विधेयमिति शङ्कायामाह– **अहमिति** ॥१००॥

**वरदराजीया–** हे ईश स्वामिन् अहं ब्रह्मा भवो रुद्रो सुरेशाद्या इन्द्राद्या तव किङ्करा भृत्याः स्मः । इहावसरे अस्माभिर्यत् कार्यं तदपि आशु नोऽस्माकं आज्ञापय ॥१००॥

**जनार्दनीया–** अहं ब्रह्मा । भवो रुद्रः । इह अस्मिन् समये ॥१००॥

**चट्टी–** हे ईश स्वामिन् अहं ब्रह्मा भवो रुद्रो सुरेशः इन्द्रः तौ आद्यौ येषां ते तथा । तव किङ्कराः भृत्याः स्म । इह अस्मिन् समये अस्माभिर्यच्च कार्यं तदपि आशु नोऽस्माकं आज्ञापय ॥१०१॥

**इत्युदीरितमाकर्ण्य शतानन्देन राघवः ।**
**जगाद भावगम्भीरं सुस्मिताधरपल्लवः ॥१०१॥**

**व्यासतीर्थीया–** भावगम्भीरमभिप्रायेणागाधम् ॥१०१॥

**वरदराजीया–** स राघवः श्रीरामः शतानन्देन ब्रह्मणा इत्युक्तरीत्या उदीरितं वचनमाकर्ण्य, सुस्मितं शोभनस्मितयुक्तं अधरपल्लवं अधरोष्ठे यस्य स तथाभूतः सन् । भावेनाभिप्रायेण गम्भीरं वचनमिति शेषः । जगादावदत् ॥१०१॥

**जनार्दनीया–** शतानन्दो ब्रह्मा । सुस्मितं समीचीनं मन्दहासयुक्तं अधरपल्लवं अधरोष्ठपल्लवं यस्य स तथा । राघवः आकर्ण्य श्रुत्वा । भावैः अभिप्रायैः गम्भीरं गहनम् । वाक्यमिति शेषः । जगाद ॥१०१॥

**चट्टी–** स राघवः श्रीरामः शतानन्देन ब्रह्मणा इत्युदीरितं वचनमाकर्ण्य सुस्मितः समीचीनमन्दहास-युक्तः अधरपल्लवो अधरोष्ठौ यस्य स तथाभूतः सन् । भावेनाभिप्रायेण गम्भीरं गहनं वचनमिति शेषः । जगादावदत् ॥१०१॥

**जगद्गुरुत्वमादिष्टं मया ते कमलोद्भव ।**
**गुर्वादिशानुसारेण मयाऽऽदिष्टा च सद्गतिः ॥१०२॥**

**व्यासतीर्थीया–** चशब्दः सद्गतिरित्यनेन सम्बध्यते ॥१०२॥

**वरदराजीया–** किमिति । हे कमलोद्भव मया ते तव जगद्गुरुत्वमादिष्टमाज्ञप्तं गुर्वादिशानुसारेण गुरूपदेशमपेक्ष्य मया सद्गतिरादिष्टा ॥१०२॥

**जनार्दनीया–** किमिति? ते तव । जगद्गुरुत्वं आदिष्टं आज्ञापितम् । गुरोरादेशानुसारेण आज्ञानुसारेण गुरुप्रसादानुसारेणेत्यर्थः ।।१०२।।

**चट्टी–** किमिति । हे कमलोद्भव मया ते तव जगद्गुरुत्वमादिष्टमाज्ञापितम् । गुरोरादेशानुसारेण आज्ञानुसारेण गुरुप्रसादानुसारेणेत्यर्थः । मया सद्गतिश्च आदिष्टा आज्ञापिता ।।१०२।।

**अतस्त्वया[१] प्रदेया हि लोका एषां मदाज्ञया ।**
**हृदि स्थितं च जानासि त्वमेवैकः सदा मम ।।१०३।।**

**व्यासतीर्थीया–** यस्य यत् स्थानं दातुं त्वदभिलषितं मम तद्ज्ञानाभावे कथं त्वया प्रदेया इत्युक्तिरित्यत आह– **हृदीति** ।।१०३।।

**वरदराजीया–** अतस्त्वद्द्वारा सद्गतेः प्राप्यत्वात् त्वया मदाज्ञया एषां जीवानां लोका स्थानानि प्रदेयाः प्रदेयानि । अयं लोको अस्मै दातव्य इति विशिष्य मया न वक्तव्यमपीत्याह– **हृदीति** ।। मम हृदि स्थितं त्वमेक एव जानासि ।।१०३।।

**जनार्दनीया–** आदिष्टा आज्ञापिता यतः अतः मम हृदि स्थितं मनोभिप्रायमित्यर्थः ।।१०३।।

**चट्टी–** यतः अतस्त्वया मदाज्ञया येषां जीवानां लोकाः प्रदेयाः अयं लोको अस्मै दातव्य इति विशिष्य मया न वक्तव्यमपीत्याह– हृदीति ।। त्वमेक एव सदा मम हृदि स्थितं मनोऽभिप्रायं जानासि ।।

**इतीरितो हरेर्भावविज्ञानी कञ्जसम्भवः ।**
**पिपीलिकातृणान्तानां ददौ लोकाननुत्तमान् ।**
**वैष्णवान्[२] सन्ततत्वाच्च नाम्ना सान्तानिकान् विभुः ।।१०४।।**

**व्यासतीर्थीया–** सान्तानिकत्वं सन्तानकर्मणा प्राप्यत्वादिति न मन्तव्यमिति भावेनोक्तम्– **वैष्णवानिति** ।। तं तु कर्मणा प्राप्यत्वाभावे कथं सान्तानिकत्वमित्यत उक्तम्– **सन्ततत्वाच्चेति** ।।

---

१. 'अथ विष्णुर्महातेजा पितामहमुवाच ह । एषां लोकं जनौघानां दातुमर्हसि सुव्रत ।। इमे हि सर्वे स्नेहान्मामनुयाता यशस्विनः । भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते ।। तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः । लोकान् सान्तानिकान् नाम यास्यन्तीमे समागताः ।। यच्च तिर्यग्गतं किञ्चित् त्वामेवानुविचिन्तयत् । प्राणांस्त्यक्ष्यति भक्त्या तत् सन्तानेषु निवत्स्यति ।।' इति रामायणे ७.११०.१६-१९ ।

२. सर्वे सान्तानिका नाम ब्रह्मलोकादनन्तरम् । [स्क.वैष्णव.खं.अयोध्यामाहात्म्ये.६.१६८]

**वादिराजीया–** पिपीलिकातृणान्तनामित्यत्र चलप्राणिषु पिपीलिकान्तानां स्थिरप्राणिषु तृणान्तानामिति विभागः ॥१०४-१०६॥

**मधुसूदनीया–** ॥ **वैष्णवानिति** ॥ ते च सान्तानिका लोका सत्यलोकादुपरि वर्तन्त इति ज्ञेयम् । तथाचोक्तम्– 'लोकान् सान्तानिकान्नाम्ना यान्ति मे सुसमाहिताः । सर्वैश्चैव गुणैर्युक्तान् ब्रह्मलोकादनन्तरान् ॥' इति हरिवंशे ॥१०४-१०६॥

**वरदराजीया–** इतीरितः कञ्जसम्भवो ब्रह्मा हरेः रामस्याभिप्रायं जानन् पिपीलिकादितृणान्तानां जीवानां अनुत्तमान् न विद्यते तत्प्राप्येषु उत्तमो येभ्यस्तान् लोकान् ददौ । कथम्भूतान् वैष्णवान् विष्णोर्विद्यमानान् । ननु पुराणेषु सान्तानिकान् लोकान् ददावित्युक्तिरस्ति तत्कथं वैष्णवानित्युच्यत इत्यत आह– **सन्ततत्वाच्चेति** ॥ तानेव लोकान् सन्ततत्वान्नित्यत्वान्निमित्तात् सान्तानिकशब्दवाच्यान् विदुः । पौराणिका इत्यर्थः ॥१०४॥

**जनार्दनीया–** भावं मनोभिप्रायं विज्ञानी वित् कञ्जसम्भवो विभुः सन्ततत्त्वात् नित्यत्वात् नाम्ना सान्तानिकान् वैष्णवान् अनुत्तमान् उत्तमान् 'उत्तमेऽनुत्तमं च स्यादाहते स्यादनाहतम्' इति विश्वः । लोकान् ददौ । सन्ततत्वादिति हेतोः सन्तानकर्मणा प्राप्याः सान्तानिकाः लोका इति न मन्तव्यमिति भावः ॥१०४॥

**अनन्तभट्टीया–** एषां एभ्यः ॥१०४-१०७॥

**ताम्रपर्णीया–** ॥ **अनुत्तमा इति** ॥ यद्यपि जनादिसान्तानिकलोकाः सोत्तमस्तथापीतरलोकवैलक्षण्यद्योतनाय उत्तमशब्दः । यद्वा अनुत्तमान् वैकुण्ठादीनित्यर्थः । 'अप्रतीकालम्बनान्नयतीति बादरायणः' [ब्र.सू. ४.३.१५] 'विष्णोर्लोकं तदैवैके यान्ति कालान्तरे परे' [भा.ता.२.२.३०] इत्युक्त्या अप्रतीकालम्बनातिरिक्तानां तदैव वैकुण्ठद्प्राप्त्यभावेऽपि कालान्तरे तदुपपत्तेः । पिपीलिकातृणान्तानामित्युक्तेषु अप्रतीकालम्बनानामपि भावात् तद्विवक्षया तदैवानुत्तमान् लोकान् ददावित्युपपद्यते ॥१०४-१०५॥[१]

---

१. ॥ लोकाननुत्तमानिति ॥ यद्यपि उत्तमशब्दः अनुत्तमेषु उत्तमेष्वित्यादौ वैकुण्ठादिपरः प्रसिद्धः । तथाऽप्यनुत्तमानित्यस्य महरादीनित्यर्थः । पश्चाद् वैकुण्ठादिति वा । अप्रतीकालम्बनातिरिक्तानां तदानीं वैकुण्ठप्राप्त्यभावात् । तेषां क्लृप्तत्वेन एषां अप्रतीकालम्बनत्वाभावात् । 'विष्णोर्लोकं तदैवैके यान्ति कालान्तरे परे' इति 'कार्यं बादरिरस्य गत्युपपत्तेः' [ब्र.सू.४.३.७] इति सूत्राच्च । अप्रतीकालम्बनातिरिक्तानां वैकुण्ठप्राप्तिनिषेधवचनं तु चरमदेहविसर्जनानन्तरं एव प्राप्तिपरं अल्पकालवासनिषेधपरं च ॥१०४-११२॥ इति हो पुस्तके अधिकः पाठः ।

**चट्टी–** इतीरित कञ्जसम्भवो ब्रह्मा हरेः श्रीरामस्वभावमभिप्रायं विज्ञानी जानन् सन् पिपीलिकातृणान्तानां चरप्राणिषु पिपीलिकान्तां स्थिरप्राणिषु तृणान्तां जीवानां अनुत्तमान् न विद्यते उत्तमा येभ्यः तान् लोकान् ददौ । कथंभूतान् वैष्णवान् विष्णोर्विद्यमानान् । ननु पुराणेषु सान्तानिकान् लोकान् ददावित्युक्तिरस्ति तत्कथं वैष्णवानित्युच्यत इत्यत आह– **सन्ततत्वाच्चेति** ।। सन्ततत्वान्नित्यत्वात् हेतोः नाम्ना सान्तानिकान् विदुः । सन्तानकर्मणा प्राप्याः सान्तानिकाः लोका इति न मन्तव्यमिति भावः । ते च सान्तानिका लोका सत्यलोकादुपरि वर्तन्त इति ज्ञेयम् । तथाचोक्तम्– 'लोकान् सान्तानिकान्नाम्ना यान्ति मे सुसमाहिताः । सर्वैश्चैव गुणैर्युक्तान् ब्रह्मलोकादनन्तरान् ।।' इति हरिवंशे ।।१०४।।

**भावचन्द्रिका–** लोकान् श्वेतद्वीपादीन् । अनुत्तमानिति तदुत्तमलोकनिषेधात् । महरादीनिति पक्षे उत्तमानिति स्यात् । 'विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु'[छा.३.२.८] इति श्रुतौ श्वेतद्वीपादौ अनुत्तमशब्दप्रयोगाच्च । 'वैष्णवान् सन्ततत्वाच्च' इति नित्यत्वोक्तेश्च । 'महरादीन् ददौ लोकान् उत्तमान्' इत्यत्र नित्यत्वाभावात् । स्वस्वप्राप्येषु स्वस्वप्राप्यलोकापेक्षया उत्तमनिषेधार्थत्वं अनुत्तमपदस्येति न वाच्यम् । पूर्वोक्तार्थे बाधकाभावेन अध्यहारकल्पनाभावात् । किञ्च 'उत्तमेष्वनुत्तमेषु लोकेषु' इत्युक्तेः निरतिशयस्थाननिवासः 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' [गी.१५.६] इत्यादौ भगवतो विष्णोरेव प्रसिद्ध इति गायत्र्यधिकरणे सन्न्यायरत्नावल्यामुक्तरीत्या अनुत्तमपदस्य सर्वोत्तमत्वपरत्वाच्च सन्ततशब्दस्य औपचारिकत्वापत्तेश्च । ननु सर्वेषां पिपीलिकादीनां अप्रतीकालम्बनत्वाभावेन पिपीलिकादीनां श्वेतद्वीपादिस्थानाभ्युपगमे 'अप्रतीकालम्बनान्...' इति सूत्रविरोध इति चेन्न । सूत्रस्य ब्रह्मसामीप्यार्थत्वेन तद्भाष्यटीकयोः स्फुटत्वात् लोकगमनाभ्युपगमे बाधकाभावात् । न च लोकान्तरेऽपि पिपीलिकाद्यभावः । रामेण सह गच्छतां श्वेतद्वीपादीत्युपपत्तेः । भाष्ये 'महाज्ञानेन गच्छन्ति क्षीरसागरं' इति वचनेनोक्तस्य लोकगमनप्रयोजकस्य महाज्ञानस्याङ्गीकारे बाधकाभावाच्च । महाज्ञानञ्चोक्तं भागवततात्पर्ये एकादशस्कन्धचतुर्विंशाध्याये [१४श्लो] 'मुहूर्तमात्रं ज्ञानं स्यात् महाज्ञानं ततोऽधिकम्' इति । न च– [तै.भा.भृगुवल्ली] 'विद्युद्वन्मानुषा विद्युः सूर्यमण्डलवत्सुराः । प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम् ।।' इति वचनात् मानुषाणां महाज्ञानोक्त्या तदधमानां पिपीलिकादीनां कथं महाज्ञानमिति चेन्न । तद्वचनस्य तेजोमण्डलस्थहरेरस्फुटमवयवदर्शनादावेव विद्युदादिदृष्टान्तोपपादनपरत्वात् । भागवते वैकुण्ठे तु वृक्षादिजीवोक्तेश्च । तथाहि भागवते तृतीयपञ्चदशे [३.१६.१२-१३,१६] ब्रह्मा– मानसा मे सुता युष्मत्पूर्वं वै सनकादयः । चेरुर्विहायसा लोकान् लोकेषु विगतस्पृहाः ।। त एकदा भगवतो वैकुण्ठस्य महात्मनः । ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम् ।।' इत्युपक्रम्य 'यत्र नैश्रेयसं नाम वनं कामफलैर्द्रुमैः । सर्वर्तुश्रीभिः विभ्राजकैः कैवल्यमिव मूर्तिमत् ।।' इति तात्पर्ये च– [३.१६.१६] 'तिरश्चीना स्थावराश्च

सर्वे ज्ञानाद्विकुण्ठगाः । अमुक्ता मुक्तिमायान्ति नियमात् कर्मणः क्षये ।।' इति दशमे त्रिपञ्चाशेऽध्याये 'तत्र देवाश्च योगीन्द्राः भक्ताश्चान्ये' इति क्षीरसागरे देवादीनामुक्तेश्च । षोडशेऽध्याये बलिप्रसङ्गे 'सुराद्यैः पूजां प्रापुं' इत्युक्तेः । अष्टमे नवमाध्याये देवानां नियतवाहननिरूपणे–

उष्ट्रैः केचित् द्विजैः केचिदपरेभिर्ययुः खरैः । केचिद्गौरमृगैर्ऋक्षैः द्वीपिभिर्हरिभिर्भटाः ।।
गृध्रैः कङ्कैर्बकैरन्ये श्येनाभासैस्तिमिङ्गिलैः । शरभैर्महिषैः खड्गैः गोवृषैर्गवयारुणैः ।।
शिवाभिराखुभिः केचित् कृकलासैः शशैर्नरैः । बस्तैरेके कृष्णसारैः हंसैरन्ये च सूकरैः ।।
अन्ये जलस्थलखगैः सत्वैर्विकृतविग्रहैः । सेनयोरुभयो राजन् विविशुस्तेऽग्रतो गताः ।।
[८.९.९–१२]

पञ्चरात्रे जयद्रथयामिले च लोकस्थितिकथनावसरे 'ऊर्ध्वं वैकुण्ठलोकस्तु यद्गत्वा न निवर्तते' इत्युपक्रम्य चतुर्लक्षाधिकाशीतिलक्षयोनिषु सम्भवाः । सर्वलोकेषु तिष्ठन्ति सरिन्नानावनेषु च ।। लोकोत्कण्ठ्यज्ञानरूपा नानाशक्तिसमन्विता ।।' इति ननु द्वितीयस्कन्धतात्पर्ये षष्ठेऽध्याये– [श्लोक.२०] त्रीणि धामानि वै विष्णोः त्रिलोकाद्बहिरेव तु । अदायादास्तु पुत्राणां उद्रिक्तज्ञानचक्षुषः ।। नारायणपरा देवा एवं तान्याप्नुवन्ति च ।।' इति वचनात् देवानामेव श्वेतद्वीपगमनम् । तथाच देवा एव पशुपक्ष्यादिरूपेण सन्तीति वचनार्थोपपत्त्या पिपीलिकादीनां श्वेतद्वीपगमनं न युक्तमिति चेत् । उच्यते । देवा इत्यस्य देवजातिविशिष्टा इत्यर्थाङ्गीकारे परीक्षितो देवत्वजातिसद्भावे मानाभावेन वैकुण्ठप्राप्तिर्न स्यात् । न चेष्टापत्तिः । तत्र एकत्रिंशाध्याये 'तं चानयामास तदैव कृष्णो ह्यचिन्त्यशक्तिः सुविकुण्ठलोकात्' इति वचनविरोधात् । परीक्षितो देवत्वे द्वितीयस्कन्धतात्पर्यविरोधाच्च । 'भेजे खगेन्द्रध्वजपादमूलम्' इति च । 'स्वोत्पत्त्यङ्गेषु देवानां अन्येषां पादमूलतः । मुक्तिस्तु विहिता विष्णोः निर्दिष्टेषु .. ।। इत्यध्यात्मे ।' इति । 'अप्रतीका देवताश्च ऋषीणां शतमेव च । राज्ञां च शतमुद्दिष्टं गन्धर्वादिशतं तथा ।।' [४.३.१५] इति भाष्यविरोधाच्च । देवानां उत्क्रान्त्यभावेन उत्क्रान्तानां मध्यखण्डोत्त्ययोगाच्च । देवानां मुक्त्यर्थं मार्गाभावेन तत्त्वप्रकाशिकायां 'मार्गेण गतानां गम्यनिरूपणादित्ययोगाच्च । गमनस्य परब्रह्मणोऽपि कथनात् । 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः । [४.२.२] उत्क्रान्तिमार्गौ भवतो न तदा मुक्तिरिष्यते ।।' [४.२.७] इत्यनुव्याख्यानोक्तेश्च । अप्रतीकाश्रया ये हि ते यान्ति परमेव तु । स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्मसलोकताम् ।। ब्रह्मणा सह सम्प्राप्ते सञ्चरे परमं पदम् ।।'[४.३.१५] इति भाष्योक्तेश्च । 'यान्ति देवं परं केचित् केचित्पूर्वं लये विभुम् । योग्यतातारतम्येन विशेषोऽयमुदीर्यते ।।' सप्रतीकाश्चतुर्मुखं अप्रतीकाः परमिहैव ते गच्छन्ति आगच्छन्ति च चतुर्मुखात् परमं परमाच्चतुर्मुखं यावद्विलयं अथ सह चतुर्मुखेन विमुच्यन्ते ।।' इति न्यायविवरणोक्तेश्च [४.३१६] ।

भगवन्तमनुप्राप्ता अपि तु ब्रह्मणा सह । परमं मोक्षमायान्ति लिङ्गभङ्गेन योगिनः ।।
प्राप्ताऽपि परं देवं सहैव ब्रह्मणा पुनः । आनन्दव्यक्तिमायान्ति..... ।।' [४.२]

इत्यनुव्याख्यानोक्तेश्च । सुधायामेतत्सङ्गतिवाक्ये देवानामेव ब्रह्मणा सह मुक्तेरन्येषामपीति ब्रूमः । तर्हि 'भेजे खगेन्द्रध्वजपादमूलं' इत्यादिविरोध इत्यत आहेत्युक्तिविरोधाच्च । अतः दीव्यतेः स्वप्नकान्तिगतिष्विति गत्यर्थत्वेन ज्ञानार्थत्वाद्देवाः देवज्ञानयोग्या इत्यर्थः । 'द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च' इत्यत्र योग्ये प्रयोगाच्च । नचोक्तविरोधपरिहाराय देवपदस्य देव समा इति गौणत्वम् । गौणार्थकल्पकाभावात् । नच परीक्षित इत्यादिवचनमेव कल्पकं अप्रतीकाम्बनत्वमात्रेण वचनस्य सावकाशत्वात् । [उ.का.७.४९] उक्तश्च सङ्ग्रहरामायणे– रामाज्ञया विश्वगुरुर्विरिञ्चः स वैष्णवीमेव गतिं दिदेश । स्वानन्दसन्तानवतीमनन्तां ताभ्यः प्रजाभ्यो विभयां विशोकाम् ।।' इति ।। गम्यत इति गतिम् । सा चानेकविधा । महरादिरूपेणेति । वैष्णवीमेवेति विशेषणम् । उक्तश्च पद्मपुराणे उत्तरकाण्डे रामवैभवे पञ्चाशत्तमेऽध्याये– [इदानीं विद्यमानपुस्तके २४५.९०–९२] आरुहुर्विमानं त असङ्ख्यास्तत्र देहिनः । सर्वैः परिवृतः श्रीमान् रामो नारायणोऽव्ययः ।। पूजितः सुरसिद्धौघैः मुनिभिश्च महात्मभिः । प्रययौ शाश्वतं दिव्यं अक्षरं स्वपदं प्रभुः ।।' इति नन्वेमप्युत्तरोत्तरलोकानां सुखशतगुणोत्तरत्वेन महरादिस्थ-मनुष्यापेक्षया वैकुण्ठस्थतरुपक्ष्यादीनामवराणां अधिकसुखप्राप्तिरिति चेन्न । अधिकसुखापादकराजान्तः-पुरवर्तिनोऽपि राजसेवकस्य राजद्वारस्थितानामत्यधिकसुखाभावात् । किन्तु तस्य स्वेतरसेवका-पेक्षयैवाधिकं सुखम् । तथाच स्वजातिषु उत्तमत्वक्रमेण महरादिं उत्तमोत्तमवैकुण्ठादिमाप्नुवन्तीत्युपपन्नम् । तस्मादुक्तमनवद्यम् । तदुक्तमत्रैव चरमाध्याये– यथेष्टपानाशनवाससो जना विचेरुरत्रामरमानवादयः । क्षेत्रं तदासीत् हरिलोकसम्मितं तदाप्य तत्राखिलसज्जना पुनः ।।' इति । 'युतं मेलनम्' इति टीकासूचिता च । तत्रैवेतरेषां लोकप्राप्तिरैतरेयभाष्ये– क्षीरसागरदध्नाश्च केचित्तिष्ठन्ति मुक्तिगाः । उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् ।। ऐरे ह्रदे केचिदपि देवा एव सदा हरिम् । नागभोगशयं मुक्ता ददृश्रे अधिकमोदिनः ।। सागरादिस्थिता विष्णुं पश्यन्ति केचिदेव हि ।।'[२.१] इति ।।१०४-१११।।

**भावविवृति–** पिपीलिकातृणान्तानां ददौ लोकाननुत्तमान् इत्यत्रापि पिपीलिकान्तास्तृणान्ता इत्युभयत्र अन्तपदमन्वेतव्यम् । तथाच जङ्गमेषु पिपीलिकान्ता स्थावरेषु तृणान्ता इति मुक्तियोग्येषु पिपीलिका एव अन्ता पर्यवसिताः येभ्यस्ते तथा । तृणजीवा एव अन्ता पर्यवसिता येभ्यस्ते तथा । तेषां लोकान् ददौ इत्यर्थः । कीदृशानित्यतो– **अनुत्तमानिति** ।। न विद्यते उत्तमः येभ्यस्ते अनुत्तमास्तान् श्वेतद्वीपस्थानित्यर्थः । 'विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषु' इति श्रुतौ श्वेतद्वीपादौ अनुत्तमशब्दप्रयोगात् । 'सन्तताश्च' इति नित्यत्वोक्तेश्च । अन्यथा सन्ततशब्दस्य औपचारिकत्वापत्तेः । किञ्च उत्तमेष्वनुत्तमेषु उत्तमेषु लोकेषु इत्युक्तिरतिशयस्थाननिवासो 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इत्यादौ भगवत

एव प्रसिद्ध इति गायत्र्यधिकरणसन्न्यायरत्नावल्युक्तरीत्या च अनुत्तमपदस्य सर्वोत्तमपरत्वम् । अयमत्राभिसन्धिः । स्थावरजीवा मुक्तियोग्यास्तमोयोग्या नित्यसंसारिण इति त्रिविधाः । ते च वृक्षस्तम्भलतागुल्मभेदेन बहुविधाः । तेषु मुक्तियोग्या अपि मन्दमध्योच्चभेदेन त्रिविधाः । जङ्गमा अपि मुक्तियोग्यास्तमोयोग्या नित्यसंसारिण इति त्रिविधाः । तेषु पशुपक्षिमृगकीटादिभेदेन बहुविधाः । तेष्वपि मुक्तियोग्या मन्दमध्योच्चभेदिनः । मानुषा अपि मुक्तियोग्यास्तमोयोग्या नित्यसंसारिण इति त्रिविधाः । ते च वर्णाश्रमभेदेन तथैव 'तथैवाश्रमभेदतः' इति भाष्योक्तेः । ते मुक्तियोग्या अपि मन्दमध्योच्चभेदिनः । क्षितिपास्सहस्रसङ्ख्याकाः । 'येऽन्ये हि भक्ता कृतवीर्यजाद्याः बलाधिकास्सन्ति सहस्रशोऽपि' [३.८२] इत्युक्तेः । तेषु शतमुत्तमाः शतं मध्यमाः अष्टशतमधमाः । मनुष्यगन्धर्वाश्च मन्दमध्योच्चभेदिनः । मुक्तियोग्याः अप्सरसः सहस्रसङ्ख्याकाः । 'वरं तथैवाप्सरसां सहस्रम्' [१०.१९] इत्युक्तेः । तासु शतमुत्तमाः शतं मध्यमाः अष्टशतमधमा इति । देवगन्धर्वास्तेषु शतमुत्तमाः शतं मध्यमाः अन्ये अधमाः । बलि..तिप्रभृतयो मुक्तियोग्या असुरा बहवः । तेषु त्रिंशदुत्तमा विंशतिर्मध्यमाः अन्ये अधमा इति । सिद्धाः बहवस्तेषु त्रिंशदुत्तमाः विशतिर्मध्यमाः अन्ये अधमाः । चारणजातयो बहवः तेषु त्रिंशदुत्तमाः विंशतिर्मध्यमाः अन्ये अधमाः । विद्याधरा यक्षरक्षोभूतप्रेतपिशाचकिन्नरादिजातिषु बहवो मुक्तियोग्याः । तेषु पृथक् पृथक् सप्ततिसङ्ख्याका उत्तमाः विंशतिसङ्ख्याका मध्यमाः अन्ये अधमा इति । ब्रह्मादिपुष्करान्ता देवाः उत्तमाधिकारिण एव । तथा च स्थावरेषु वृक्षस्तम्बलतागुल्मभेदेन बहव उत्तमाधिकारिणः । जङ्गमेषु पशुपक्षिकीटादिभेदेन बहव उत्तमाधिकारिणः मनुष्योत्तमेष्वपि वर्णाश्रमभेदेन बहवः उत्तमाधिकारिणः । जङ्गमेषु राज्ञां शतं च अधमोत्तमाधिकारिणः । मनुष्यगन्धर्वा ऋषिशतश्च मध्यमोत्तमाधिकारिण इति । देवगन्धर्वशतपितृशतं सिद्धशतं असुरत्रिंशच्चारणत्रिंशद्विद्याधरादिजातिषु पृथक् पृथक् सप्तसङ्ख्याका उत्तमोत्तमाधिकारिण इति । तेषां मध्ये नवकोटिदेवानां उत्क्रान्त्याद्यभावात् महाप्रलये स्वोत्तमप्रवेशेन देहलयं प्राप्य सायुज्यमुक्तिं प्राप्नुवन्ति । 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः' इत्युक्तेः । नवकोटिदेवातिरिक्तेषु उत्तमोत्तमाधिकारिषु मध्ये गन्धर्वाष्टकं द्विनवत्यप्सरसः मध्यमोत्तमाधिकारिषु ऋषिशतं अधमोत्तमाधिकारिषु राज्ञां शतं आहत्य त्रिशतं अप्रतीकालम्बनाः । अप्रतीका देवतास्तु ऋषीणां शतमेव च । राज्ञां तु शतमुद्दिष्टं गन्धर्वादिशतं तथा ।। एतेऽधिकारिणो व्याप्तदर्शिनोऽन्ये न तु क्वचित् । अप्रतीकाश्रया ये हि ते यान्ति हरिमेव तु ।।' इति भाष्योक्तेः । [४.३.१५] श्वेतद्वीपादिस्थभगवत्पादसामीप्यं प्राप्नुवन्ति । 'स्वोत्पत्त्यङ्गेषु देवानां अन्येषां पादमूलतः' इति 'भेजे खगेन्द्रध्वजपादमूलम्' इत्युक्तेश्च । तदन्ये उत्तमोत्तमाधिकारिणः मध्यमोत्तमाधिकारिणः अधमोत्तमाधिकारिणश्च जङ्गमोत्तमाधिकारिणः स्थावरोत्तमाधिकारिणश्च अवतार[अ]परोक्षिणः । एते सर्वे श्वेतद्वीपादौ स्वस्वयोग्यस्थानं प्राप्नुवन्ति । तदेतदुक्तम्– प्रोक्ता अष्टविधा देवा विबुधास्सर्व एव तु ।

पितॄणां शतमेवात्र असुरास्त्रिंशदेव च ।। गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् । सप्ततिर्यक्षरक्षस्सु त्रिंशच्चारणजातिषु ।। शतं सिद्धास्तथाऽन्यासु सप्ततिस्सर्वजातिषु । ऊर्ध्वस्रोतस एवैतेऽन्येऽर्वाक्स्रोतसस्स्मृताः ।।' इति तृतीयतात्पर्ये । [३.११.२७] तिरश्चीना स्थावराश्च अन्ये ज्ञानाद्विकुण्ठगाः । अमुक्ता मुक्तिमायान्ति नियमात्कर्मणः क्षये ।। इति च । 'प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति । तदैव मुच्यते जीवो न दुष्टैरिन्द्रियैः क्वचित् ।।' इति काठकभाष्ये [२अ.४ब्रा.१०] । ऐतरेयभाष्ये च– क्षीरसागरदध्नाश्च केचित्तिष्ठन्ति मुक्तिगाः । उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् ।। ऐरे ह्रदे केचिदपि देवा एव सदा हरिम् । नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः ।। सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हि ।।' इति । छान्दोग्यभाष्ये च– [५अ–५खं] सूर्यप्रसादात्तु नरा पूर्वद्वारेण केशवम् । प्राप्नुवन्त्यथ सोमस्य प्रसादात् पितरस्तथा ।। द्वारेण दक्षिणेनैव गन्धर्वाः पश्चिमेन तु । अग्निप्रसादादृषयः उत्तरेणेन्द्रसंशयात् ।। शिवाद्या वायुमाश्रित्य यान्त्यूर्ध्वेन हरिं सुराः । वैश्वानराख्यं विष्णोस्तु सम्यग्ज्ञानेन सर्वशः ।।' तृतीयस्कन्धमूले [पञ्चदशाध्याये][१६.१६–१९] 'यत्र नैश्रेयसं नाम वनं कामफलैः द्रुमैः । सर्वर्तुश्रीभिर्विभ्राजत् कैवल्यमिव मूर्तिमत् ।। पारावतान्यभृतसारसचक्रवाकनत्यूहहंसशुकतित्तिरिबर्हिणाद्यैः । कोलाहले विरचिते चिरमात्रयोच्चैर्भृङ्गाधिपे हरिकथामनुगायमाने ।। मन्दारकुन्दकुरबोत्पलचम्पकोर्णपुन्नागनागबकुलाम्बुजपारिजाताः । गन्धेऽर्चिते तुलसिकाभरणेन तस्या यस्मिन् तपः सुमनसो बहु मानयन्ति ।।' 'दृष्ट्यैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा' [सु.भा.३.४.५२] 'महाज्ञाना गच्छन्ति क्षीरसागरम्' इति भाष्ये । 'मुहूर्तमात्रं ज्ञानं स्यात्' 'ज्ञानेन ब्रह्मलोकस्स्यात् महाज्ञानाद्धरेर्गतिः' [११.२४.१४] इत्येकादशतात्पर्ये । अप्रतीकालम्बना अवतारापरोक्षिणश्च ब्रह्मनाड्या उत्क्रम्य चरमदेहं त्यक्त्वा ब्रह्मयानेन गच्छन् श्वेतद्वीपं शिंशुमारं दृष्ट्वा वायुना सत्यलोकं नीतास्तत्र चतुर्मुखेनोपदिष्टाः श्वेतद्वीपादौ स्वस्वयोग्यस्थाने ब्रह्मलयपर्यन्तं तिष्ठन्तीति । तेषु स्थावरोत्तमास्तु उत्क्रान्त्याद्यभावात् रामाज्ञया चरमदेहं त्यक्त्वा रामेण सहैव गत्वा चतुर्मुखोपदेशं प्राप्य क्षीरसागरस्थस्थानविशेषे लयपर्यन्तं तिष्ठन्ति । 'सदैव रामभावनात् सदा सुतत्त्ववेदिन' इत्यनेन स्थावरा अपि अवतारापरोक्षिण इति ज्ञायते । ननु हरिवंशे– 'लोकान् सान्तानिकान्नाम्ना यान्ति ते सुसमाहिताः । सर्वैश्चैव गुणैर्युक्ता ब्रह्मलोकादनन्तरम् ।।' इति वैकुण्ठाद्यतिरिक्ताः सत्यलोकादुपरितनाः सान्तानिकनामकलोकविशेषास्तिष्ठन्ति इति ज्ञायते । अतः [कथं] तेषां विष्णुलोकप्राप्तिरित्यतः सान्तानिकानित्यस्यार्थमाह– **वैष्णवान् सन्ततत्वाच्चेति** ।। संग्रहरामायणे च– रामाज्ञया विश्वगुरुर्विरिञ्चः स वैष्णवीमेव गतिं दिदेश । स्वानन्दसन्तानवतां अनन्तास्ताभ्यः प्रजाभ्यो विभयां विशोकाम् ।।' इति विष्णुलोकानामेव शाश्वतत्वात् स्वरूपानन्दानुभवयोग्यस्थानत्वात् सान्तानिका नाम । 'ब्रह्मलोकादनन्तरम्' इत्यस्य सत्यलोकादुपरितना इति नार्थः । मेर्वादिस्थब्रह्मसदनापेक्षया उपरिष्टान् श्वेतद्वीपानित्यर्थोपपत्तेः । तदुक्तं छान्दोग्यभाष्ये– [अ३.१३]

पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः । अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिः ।।
द्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते । पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।।
दिवीन्द्रसदनं चैव तत्परे तु दिवः परे । पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ।
तृतीयं सत्यलोके च त्रिविधं सदनं स्मृतम् । तेभ्योऽनन्तासनाद्यास्तु परतो विश्वतः परे ।।' इति ।

'सत्यलोकादुपरि सान्तानिका नाम लोकविशेषास्तिष्ठन्ति' इति केचित् । 'सन्तानैः प्राप्या सान्तानिका' इत्यपरे । तदुभयमप्युक्तप्रमाणाननुगुणम् । ननु द्वितीयतात्पर्ये– 'त्रीणि धामानि विष्णोस्तु त्रिलोकाद्बहिरेव हि । नारायणपरा देवा एव तान्याप्नुवन्ति च ।।' इति देवानामेव विष्णुलोकप्राप्त्युक्तेः कथं तदितरेषां विष्णुलोकप्राप्तिरिति चेत् मैवम् । 'देवा एव' इत्येवकारेण देवैः प्राप्यां सायुज्यरूपां मुक्तिं देवानामावासस्थानं च अन्ये नाप्नुवन्तीर्थोपपत्तेः । इत्युत्तमाधिकारिप्रकरणम् ।।

अथ अधमाधिकारिणो निरूप्यन्ते । तदन्यपितृसप्तकं अप्सरसां शतं गन्धर्वशतं असुरयक्षरक्षश्चारण-सिद्धविद्याधरभूतप्रेतपिशाचकिन्नरादीनां पृथक् पृथक् विंशतिरुत्तममध्यमाधिकारिण इत्युच्यन्ते । ऋष्यशीति केचन मनुष्यगन्धर्वा मध्यममध्यमाधिकारिणः । राज्ञां शतं वर्णाश्रमोचिताचारयुता मनुष्याश्च अधममध्यमाधिकारिणः । तेषु ऋष्यशीतिः प्रतीकालम्बनाः । 'ऋषयोऽन्तः प्रकाशा' [सू.भा.४.३.१६] इति श्रुतेः । 'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् । नतु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ।।' 'स्वदेहे ब्रह्मदृष्ट्वैव गच्छेद् ब्रह्मसलोकताम् । ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम् ।।' इति भाष्ये [४.३.१५] । 'मुहूर्तमात्रं ज्ञानं स्यात्' 'ज्ञानेन ब्रह्मलोकस्स्यात्' इत्येकादशतात्पर्योक्तेश्च । पिङ्गलानाड्या उत्क्रम्य देवयानमार्गेण वायुना सत्यलोकं नीतास्तत्रैव निवसन्ति । उत्तममध्यमा-धिकारिणस्तु योग्येतररूपापरोक्षिणः 'सामान्यदर्शनाल्लोका' इत्युक्तेः । षष्टमात्राकालीनापरोक्षिणः तपोलोकं प्राप्नुवन्ति ।

'सदैवाखण्डितज्ञानं तप इत्युच्यते बुधैः । अपरोक्षदृशा युक्तं नित्यं षण्मात्रकालया ।।' इत्येकादशतात्पर्योक्तेः [२४.१४] । तदन्यमध्यममध्यमाधिकारिणस्तु मनुष्यगन्धर्वा योगिन इत्युच्यन्ते । 'अपरोक्षदृशा युक्तं एकमात्रायुजा युतम् । योगनाम्ना समुद्दिष्टं ध्यानं नित्यमखण्डितम् ।।' इति च । [भा.ता.११.२४.१४] ते च सामान्यापरोक्षिणो जनलोकं प्राप्नुवन्ति । चक्रवर्तिनो मनुष्योत्तमाश्च अधममध्यमाधिकारिणः पादयोगिन इत्युच्यन्ते । एकमात्र[मार्ध]चतुर्थकाले सामान्यापरोक्षिणो महर्लोके स्थानविशेषं प्राप्नुवन्ति । तच्चतुर्भागया नित्यं एकमात्रयुजायुतम् । पादयोगाख्यमुद्दिष्टं ध्यानं नित्यमखण्डितम् ।। पादयोगान्महर्लोको जनलोकस्तु योगतः । तपसस्तु तपोलोकः प्राप्यते नान्यतः क्वचित् ।।' इति च [११.२४.१४] । जङ्गममध्यमाश्च एवं महर्लोकस्थानविशेषं प्राप्नुवन्ति । 'सामान्यदर्शनम्' इत्यस्य 'योग्येतररूपापरोक्षज्ञानम्' इति तत्त्वप्रकाशिकाराघवेन्द्रतीर्थीये व्याख्यातम् ।

तदपि द्विविधम् । सादि अनादि चेति । तत्र अनादिसामान्यापरोक्षिणो तात्त्विकायाः योग्यापरोक्षात् पूर्वं साधनानुष्ठानकाले महर्लोकं प्राप्नुवन्ति । तेषां सामान्यापरोक्षस्तु सहकारी । ते च महरादौ स्थित्वा ध्यानादिना स्वयोग्यसाधनपूर्तिं सम्पाद्य ततः योग्यापरोक्षं प्राप्य तदनुकल्पेषु ब्रह्मणा सह स्वस्वपदानि सम्पाद्य ब्रह्मणा सहैव मुच्यन्त इति ज्ञेयम् । तदन्ये उत्तमाधमाधिकारिणः पितरः अष्टशतमप्सरसः देवगन्धर्वा असुरा यक्षरक्षांसि चारणाः सिद्धविद्याधराभूतप्रेतपिशाचकिन्नराः सादि सामान्यापरोक्षिण इत्युच्यन्ते । योग्यापरोक्षानन्तरमनुष्ठितनिवृत्तकर्मजनिताधमप्रसादात् स्वर्गं प्राप्नुवन्ति । तत्रैव स्थित्वा ध्यानादिना स्वयोग्यसाधनसम्पूर्तिं सम्पाद्य तत उत्तमं लोकं प्राप्नुवन्ति । तदेतदुक्तम्– 'नियमेनैव मोक्षाय भक्तिर्योग्या भवेद्यदि । अयोग्या भक्तिजाता चेत् क्रमान्मुक्त्यै भवेत्तथा ।।' इति गीतातात्पर्ये । कृष्णकामास्तदा गोप्यः त्यक्त्वा देहं दिवं गताः । सम्यक्कृष्णं परं ब्रह्म ज्ञात्वा कालात्परं ययुः ।। पूर्वं च ज्ञानसंयुक्ता तत्रासन् प्रायशस्तथा । अतस्तासां परं ब्रह्म गतिरासीन्न कामत ।।' इति दशमतात्पर्ये [१०.२७.१३] । एकादशतात्पर्ये च– 'गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथातथम् । परं पदं ययुः पूर्वसङ्गादेव शुभोचिता ।।' इति ।

मध्यमाधिकारिणो ऋषयः अशीत्युत्तरशतोनशतकोट्यः मनुष्यगन्धर्वाश्च तथा अधमाधमाधिकारिणोऽष्टशतं क्षितिपा मानुषा जङ्गमा स्थावराश्च भरतखण्डातिरिक्तन्यद्वीपवर्षान्तरिण स्वर्गादौ निवसन्ति । उक्तञ्च भाष्ये– [सू.भा.१.१.१]

'कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः । प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकप्रकीर्तितः ।।'
आत्मेत्येव परं विष्णुं उपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ।।
अत्रैव च स्थितिस्तेषां अन्तरिक्षे तु केचन । केचित्स्वर्गे महर्लोके जने तपसि चापरे ।।
केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् । तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः ।।
सालोक्यञ्च समीपत्वं सारूप्यं योग एव च । इमामारभ्य सर्वत्र यावत् सुक्षीरसागरे ।।
पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः । मानुषा वर्णभेदेन तथैवाश्रमभेदतः ।।
क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः । आजानजाः कर्मजाश्च तात्विकाश्च शचीपतिः ।।
रुद्रो ब्रह्मेति क्रमशो तेषु चैवोत्तरोत्तरम् ।।'

इत्यादि चतुर्थाध्यायचतुर्थपादे [४.४.१९] । न्यायविवरणे च– 'यान्ति देवं परं केचित् केचित्पूर्वं लये हरिम् । योग्यतातारतम्येन न विशेषोऽयमपीश्यते ।।' इत्यादिना । मन्दमध्योच्चभेदेन त्रिविधा अपि अवान्तरत्रित्वविभागवत्वेन नवविधा भवन्ति । उत्तमोत्तमाः, उत्तममध्यमाः, उत्तमाधमाः, मध्यमोत्तमाः, मध्यममध्यमाः, मध्यमाधमाः, अधमोत्तमाः, अधममध्यमाः, अधमाधमा इति । एते चरमदेहादुत्क्रम्य यं यं लोकं प्राप्नुवन्ति तत्र तत्रैव प्रलयपर्यन्तं स्थित्वा श्रवणमननादिना स्वयोग्यसाधनपूर्तिं सम्पाद्य

ब्रह्मणा सह महाप्रलये हरिं प्रविश्य पुनः सृष्ट्यनन्तरं वासुदेवाज्ञया तत्रतत्रैव निवसन्ति । तदुक्तं छान्दोग्यभाष्ये– [२.२.] 'श्वेतद्वीपं ततो गत्वा दृष्ट्वा विष्णुं च ते ततः । अनुज्ञाता प्रमोदन्ते निर्दुःखाश्च धरादिषु ॥' इति । पञ्चरात्रे जयद्रथयामिले लोकस्थितिकथनावसरे– चतुर्लक्षाधिकाशीतिलक्षयोनिषु सम्भवाः । सर्वलोकेषु तिष्ठन्ति सरिन्नगवनेषु च ॥ लोकोत्कण्ठ्या ज्ञानरूपाः नानाशक्तिसमन्विता ॥' इति । अनेन 'ददौ लोकान्' इत्यस्य अनु योग्यतामनुसृत्य उत्तमान् अतिशयितान् पृथिव्यादिसत्यान्तान् लोकान् ददौ इत्यर्थो वक्तव्यः । भावचन्द्रिकायां प्रकाशिकाकारैः 'स वैष्णवीमेव गतिं दिदेश' इति संग्रहरामायणवाक्यस्य अभिप्राय उक्तः । गम्यत इति गतिः । सच अनेकविधा महरादिरूपेण इति वक्तुं 'वैष्णवीं' इति विशेषणमुक्तमिति । उक्तश्च पद्मपुराणे– [उ.२४४.९५] आरुरुहुर्विमानं तं असङ्ख्यास्तत्र देहिनः । सर्वैः परिवृतः श्रीमान् रामो नारायणोऽव्ययः ॥ पूजितः सुरसिद्धाद्यैर्मुनिभिश्च महात्मभिः । प्रययौ शाश्वतं दिव्यमनन्तमजरं प्रभुः ॥' इति ॥१०४-१०६॥

**प्रमाणसंग्रह–** ॥ **ददौ लोकाननुत्तमानिति** ॥ 'लोकान् सन्तानिकान्नाम्ना यान्ति मे सुसमाहिताः । सर्वैश्चैव गुणैर्युक्तान् ब्रह्मलोकादनन्तरान् ॥' इति हरिवंशे ॥१०४॥

**गूढवाक्यार्थ–** ॥ **अनुत्तमानिति** ॥ यद्यपि सान्तानिकाः लोकाः स्वापेक्षया उत्तमलोकयुक्ताः तथापि इतरलोकापेक्षया वैलक्षण्यद्योतनायानुत्तमशब्दः ॥१०४॥

**ते जरामृतिहीनाश्च सर्वदुःखविवर्जिताः ।**
**संसारमुक्ता न्यवसंस्तत्र नित्यसुखाधिकाः ॥१०५॥**

**व्यासतीर्थीया–** जरामृतिविहीनाः संसारमुक्तकल्पत्वात् संसारमुक्ताः ॥१०५॥

**वेदाङ्गतीर्थीया–** संसारमुक्ता जीवन्मुक्ता इति भावः ॥१०५॥

**वरदराजीया–** ते लोकाः स्वर्गादिवन्न मन्तव्या इत्याह– **त इति** ॥ ते जीवाः जरामृतिरहिताः सर्वदुःखविवर्जिताश्च भूत्वा नित्यसुखेन स्वरूपभूतेनाधिका सन्तस्तत्र लोकेषु न्यवसन् । यतः संसारान्मुक्ता इत्यर्थः ॥१०५॥

**जनार्दनीया–** ते रामेण सह गता जीवाः । संसारमुक्ताः उत्पत्तिरहिता इत्यर्थः । अत एव जरादिहीनाः । नित्यसुखेन आविर्भूतस्वरूपानन्देन अधिकाः श्रेष्ठाः सन्तः । तत्र लोकेषु न्यवसन् ॥

**चट्टी–** ते जीवाः संसारमुक्ताः उत्पत्तिरहिता इत्यर्थः । अत एव जरादिहीनाः सर्वदुःखविवर्जिताश्च सन्तः नित्यसुखेन आविर्भूतानन्देन श्रेष्ठाः सन्तः तत्र लोकेषु न्यवसन् ॥१०५॥

**अतिविशद–** ते जरामृतिहीनाश्च इत्यत्र सान्तानिकलोकप्राप्तानां सन्तानमुक्ता इत्यनेन मुक्तत्वमुच्यते । तत्तु गीतादिविरुद्धम् । अत्र 'आब्रह्मभुवनाल्लोकात् पुनरावर्तिनोऽर्जुन' इति ब्रह्मलोकप्राप्तानामपि पुनरावृत्तिश्रवणात् अत एव सन्ततत्वाच्च सान्तानिकत्वं न युक्तम् । तेऽपि कथमिति चेदुच्यते । यद्यपीत्थं तथापि नोक्तमयुक्तम् । यतः तेषु लोकेषु स्थितं भगवन्तं प्राप्यावस्थितस्यैव 'न पुनर्जन्मलयौ' इत्यङ्गीकारात् । तत्र उक्तश्च गीताभाष्ये– [८.१६] 'आमेरु ब्रह्मसदनात् आजनान्न जनिर्भुवि । तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजम् ।।' इति । अभावः जन्माभावः । तथाच 'आब्रह्मभुवनाल्लोका' इत्यस्यायमर्थः । मेरुस्थब्रह्मसदनमारभ्य ये ततो नीचाः लोकाः ये च जनलोकाच्च अर्वाक्च अर्वाग्भूता ते सर्वे पुनरावर्तिन इति । नतु सत्यादय इत्यर्थ इति । एवञ्च सान्तानिकलोकान् प्राप्तानामपि अपुनरावृत्तिर्युक्तैव । अथवा ब्रह्मभवनमारभ्य सर्वे लोकाः पुनरावर्तिनः अंशतो जन्मादिमन्तः । तदुक्तं गीतातात्पर्ये– [८.१६] नियमाज्जन्मनोऽभावो मुक्तस्यैव तथापि तु । महर्लोकमतीतानां न जन्मांशलयौ विना ।। तत्राप्यवश्यं तत्स्थानं तैः क्षिप्रं पुनराप्यते ।।' इति ।

तथाच सर्वलोकस्थानां अंशिनोर्जन्माभाव इति अपुनरावर्तित्वम्, अंशतो जन्ममरणभावाच्च पुनरावृत्तित्वश्चेति । न च निरवयत्वविरोधः । 'व्यतिरेको गन्धवत्तथा हि दर्शयति' [ब्र.सू.२.३.२७] ''यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्ति । 'अथैक एव सन् गन्धवद् व्यतिरिच्यते । अथैकीभवति । अथ बह्वीभवति । तं यथा यथा ईश्वरः कुरुते तथा भवति । सोऽचिन्त्यः परमो गरीयान्' अचिन्त्ययेशशक्त्यैव ह्येकोऽवयववर्जितः । आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा ।।' इति ।'' तथा 'निरंशस्यापि जीवस्य' [अनु.] इत्यादिस्मृत्या ब्रह्मसूत्रतद्भाष्यश्रुतिस्मृत्यादिना भिन्नांशश्रवणात् निरवयवत्ववाचिश्रुत्यादेः अभिन्नांशविषयत्वमिति । अनेन 'आजनात् न जनिर्भुवि''आब्रह्मणो जनाद्यास्तु महर्लोकेऽपि ये वराः' इत्यादेर्गतिश्चोक्ता भवति । अंशिनो लयाभावाभ्युपगमात् ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ नवमोऽध्यायः ।।

**ये[1] तु देवा इहोद्भूता नृवानरशरीरिणः ।**
**ते सर्वे स्वांशितामापुस्तन्मैन्दविविदावृते ।।१०६।।**

**व्यासतीर्थीया–** पिपीलिकादिगतिमुक्त्वा देवानां गतिमाह– **य इति** ।।१०६।।

१.'वानराश्च स्विकां योनिं ऋक्षाश्चैव तथा ययुः । येभ्यो विनिःसृताः सर्वे सुरेभ्यः सुरसम्भवाः ।।' इति आर्षेये ७.११०.२१ ।

**वेदाङ्गतीर्थीया–** तन्मैन्दविविदौ तौ च तौ मैन्दविविदौ चेति । तच्छब्दस्तयोः प्रसिद्धत्वसूचकः ।।

**वादिराजीया–** नृवानरशरीरिण इत्यत्र भरतलक्ष्मणशत्रुघ्नाः नृशरीरिणः । तौ देवांशसम्भूतौ च तौ मैन्दविवादौ चेति विग्रहः ।।१०६–१०८।।

**मधुसूदनीया–** ।। **तन्मैन्दविविदावृत इति** ।। तत्र हेतुमाह– **असुरावेशत इति** ।। **पीतामृताविति** ।। चशब्देन यदा कलिरागमिष्यति तदा मम्रतुरिति सूचयति । तदुक्तम्– 'मैन्दश्च विविदश्चैव पञ्च जाम्बवता सह । यावत्कलिस्सुसम्प्राप्तस्तावत्कालं च जीवथ ।।' इति रामायणे [यु.का.१०८.३७] ।।१०६–१३४।।

**वरदराजीया–** ये तु देवा नृवानरशरीरिणो भूत्वा इह भूमौ उद्भूता उत्पन्नाः ते सर्वेऽपि स्वांशितां स्वस्वमूलरूपत्वं आपुः । तत्रापवादमाह– **तदिति** ।। तौ च तौ मैन्दविविदौ चेति तथा । तौ विना ।।

**जनार्दनीया–** ये देवा इह भूमौ नृवानरशरीरिणः सन्तः उद्भूताः जाताः ते सर्वे । तौ च तौ मैन्दविविदौ चेति तच्छब्दस्तयोः प्रसिद्धिसूचकः । तौ ऋते विना अन्ये अंशितां मूलरूपं आपुः ।।१०६।।

**अनन्तभट्टीया–** तौ च तौ मैन्दविविदौ इति विग्रहः । तत् तदेति वा ।।१०६।।

**ताम्रपर्णीया–** ।। **तन्मैन्दविविदाविति** ।। यद्यस्मान् मैन्दविविदावसुरावेशतो न राममनुजग्मतुः । तत्तस्मादिति योज्यम् ।।१०६–११०।।

**चट्टी–** ये तु देवाः इह भूमौ नृवानरशरीरिणो सन्तः उद्भूताः जातः ते सर्वे । तौ च तौ मैन्दविविदौ चेति तच्छब्दस्तयोः प्रसिद्धिसूचकः । तौ ऋते विना स्वांशितां मूलरूपं आपुः ।।१०६।।

**भावविवृति–** 'ये तु देवा इहोद्भूता नृवानरशरीरिणः । ते सर्वे स्वांशितामापुः तन्मैन्दविविदावृते ।।'

इत्यत्र तौ च तौ मैन्दविविदौ च तन्मैन्दविविदौ । तच्छब्देन दशरथकौसल्यादीनां ग्रहणम् । तुशब्दः तेषां तदा अंशिप्राप्तिर्नास्तीति सूचकः ।।१०६–१११।।

**प्रमाणसंग्रह–** ।। **तन्मैन्दविविदावृते** ।। 'मैन्दश्च विविदश्चैव पञ्च जाम्बवता सह । यावत्कलिस्सुसम्प्राप्तस्तावत्कालं च जीवथ ।।' इति रामायणे [यु.का.१०८.३७] ।।१०६।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे नवमोऽध्यायः ।।

**गूढवाक्यार्थ–** ।। **तन्मैन्दविविदाविति** ।। यद्यस्मात् मैन्दविविदावसुरावेशतः न राममनुजग्मतुः तत् तस्मादित्यर्थः । यद्वा तौ देवांशभूतौ च तौ मैन्दविविदौ चेति विग्रहः ।।१०६।।

**असुरावेशतस्तौ तु न राममनुजग्मतुः ।**
**पीतामृतौ पुरा यस्मान्मम्रतुर्न च तौ तदा ॥१०७॥**

**व्यासतीर्थीया–** तत्तदा तयोः रामानुगमनाभावे निमित्तमाह– **असुरेति** ॥ बहुकालयोः तयोर्मरणाभावे निमित्तमाह– **पीतेति** ॥१०७॥

**वेदाङ्गतीर्थीया–** तत्र हेतुमाह– **असुरावेशत इति** ॥१०७–११०॥

**वरदराजीया–** कुत इत्यत आह– **असुरावेशत इति** ॥ मैन्दविविदौ असुरावेशतो निमित्तात् राममनु श्रीरामेण सह न जग्मतुः । तदा तस्मिन् काले न मम्रतुः न मृतौ । यस्मात् पुरा पीतममृतं याभ्यां तौ तथा ॥१०८॥

**जनार्दनीया–** तौ कुतो न गतावित्यत आह– **असुरावेशत इत्यादिना** ॥ तयोः प्रसिद्धिरप्युक्ता भवति । तयोर्मरणाभावेऽपि कारणमाह– **पीतेति** ॥ पुरा समुद्रमथनकाले । पीतं अमृतं याभ्यां तौ तथा । तौ मैन्दविविदौ यस्मात् । तदा तस्मात् तस्मिन् काले वा । तौ न मम्रतुः न मृतौ ॥१०७॥

**अनन्तभट्टीया–** पुरा अमृतमन्थने ॥१०७–१११॥

**चट्टी–** तौ कुत न गतौ इत्यत आह– **आसुरेति** ॥ तौ मैन्दविविदौ असुरावेशतो श्रीरामं नानुजग्मतुः । तयोर्मरणाभावेऽपि कारणमाह– **पीतेति** ॥ यस्मात् पुरा समुद्रमथनकाले पीतं अमृतं याभ्यां तौ पीतामृतौ.। तस्मात् तदा तस्मिन् काले न मम्रतुः न मृतौः । चशब्देन यदा कलिरागमिष्यति तदा मम्रतुरिति सूचयति । तदुक्तम्– 'मैन्दश्च विविदश्चैव पश्च जाम्बवता सह । यावत्कलिस्सुसम्प्राप्तस्तावत्कालं च जीवथ ॥' इति रामायणे [यु.का.१०८.३७] ॥१०७॥

**तयोश्च तपसा तुष्टश्चक्रे तावजरामरौ[१] ।**
**पुरा[२] स्वयम्भूस्तेनोभौ दर्पादमृतमन्थने ।**
**प्रसह्यापिबतां देवैर्देवांशत्वादुपेक्षितौ ॥१०८॥**

---

१. 'मैन्दश्च विविदश्चैव ताभ्यां नास्ति समो युधि । ब्रह्मणा समनुज्ञातौ अमृतप्राशिनावुभौ ॥' इति रामायणे ६.२८.७ । 'मैन्दश्च द्विविदश्चैव अमृतप्राशनावुभौ । यावल्लोका धरिष्यन्ति तावदेतौ धरिष्यतः ॥' इति स्कान्दे वैष्णव.८अयोध्या.६.१२९।

२. अश्विपुत्रौ महावेगौ बलवन्तौ प्लवङ्गमौ । पितामहवरोत्सेकात् परमं दर्पमास्थितौ ॥ अश्विनोर्माननार्थं हि सर्वलोकपितामहः । सर्वावध्यत्वमतुलमनयोर्दत्तवान् पुरा ॥ वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् । सुराणाममृतं वीरौ पीतवन्तौ महाबलौ ॥ सु.का.६०.१-४

**व्यासतीर्थीया–** निमित्तान्तरमाह– **तयोरिति** ।। कथमसुरावेशो जात इत्यत आह– **तावजरामराविति** ।।१०८।।

**वादिराजीया–** पुरा स्वयम्भूरित्यत्र पुरा अमृतमन्थनात् पूर्वम् । तयोर्जन्म नेदानीं किन्तु आदिसृष्टावेव । तदा स्वयम्भुवो वरतः अमृतमथनकालेऽपि तौ कपिरूपेण जीवन्तौ स्थिताविति भावः ।।

**वरदराजीया–** अन्यदपि निमित्तमस्तीत्याह– **तयोरिति** ।। पुरा तयोः विविदमैन्दयोः तपसा तुष्टः स्वयंभूर्ब्रह्मा तौ विविदममैन्दौ अजरामरौ अजरौ जरारहितौ अमरौ मरणरहितौ चक्रे । तेन कारणेन दर्पात् मदात् अमृतमन्थने अमृतार्थं क्षीराब्धिमथने, तत्काल इत्यर्थः । प्रसह्य बलात् अमृतमपिबतां पीतवन्तौ । देवैश्च देवांशत्वात् देवावतारत्वात् तयोः तावुपेक्षितौ । अमृतपाने न निवारितावित्यर्थः ।।

**जनार्दनीया–** मरणाभावे कारणान्तरमाह– **तयोरिति** ।। तेन वरप्राप्तिनिमित्तेन उभौ मैन्दविविदौ दर्पात् मदात् अमृतार्थे समुद्रमथनकाले प्रसह्य बलात्कारेण अपिबताम् । अमृतमिति शेषः । देवैः इन्द्राद्यैः देवांशत्वादश्विनोरवतारत्वादुपेक्षितौ न निरोधितावित्यर्थः ।।१०८।।

**चट्टी–** मरणाभावे कारणान्तरमाह– **तयोरिति** ।। पुरा स्वयम्भूः ब्रह्मा तयोः विविदमैन्दयोः तपसा तुष्टः तौ मैन्दविविदौ अजरामरौ जरामरणरहितौ चक्रे । तेन कारणेन उभौ मैन्दविविदौ दर्पात् मदात् अमृतमन्थने अमृतार्थं क्षीरसमुद्रमथने तत्काले इत्यर्थः । प्रसह्य बलात्कारेण अपिबतां अमृतमिति शेषः । देवैः इन्द्राद्यैः देवांशत्वादश्विनोरवतारत्वादुपेक्षितौ न निवारितावित्यर्थः ।।१०८।।

**गूढवाक्यार्थ–** पुरा अमृतमन्थनात्पूर्वम् ।।१०८।।

**पीतामृतेषु देवेषु युद्ध्यमानेषु दानवैः ।**
**तैर्दत्तमात्महस्ते तु रक्षायै पीतमाशु तत् ।**
**तस्माद् दोषादापतुस्तावासुरं भावमूर्जितम् ।।१०९।।**

**व्यासतीर्थीया–** अमृतं कथं ताभ्यां प्राप्तं यत्प्रसह्यापिबतामित्यत आह– **पीतेति** ।। तस्मात् प्रसह्यामृतपाननिमित्तात् ।।१०९–११०।।

**वरदराजीया–** तयोः कथममृतं साध्यमभूत् येन ताभ्यां तत्पीतं इत्यत आह– **पीतेति** ।। पीतममृतं यैस्तेषु देवेषु दानवैः सह युद्ध्यमानेषु युद्धं कुर्वत्सु सत्सु तैर्देवैरात्मनो हस्ते विविदमैन्दयोर्हस्ते रक्षायै संरक्षणार्थं अमृतं दत्तमभूत् । तदमृतमाशु पीतम् । तस्मादवज्ञारूपात् दोषादूर्जितमुग्रं आसुरं भावं स्वभावं आपतुः प्रापतुः ।।१०९।।

**जनार्दनीया–** तयोरमृतकलशप्राप्तिः कथमित्यत आह– **पीतेति** ।। पीतं अमृतं यैस्ते तथा । तेषु देवेषु । दानवैः युध्यमानेषु सत्सु तैर्देवैः रक्षायै रक्षणार्थं । आत्महस्ते स्वहस्ते मैन्दविविदयोर्हस्ते इत्यर्थः । दत्तं तदमृतं आशु दोषमविचार्य पीतम् । ताभ्यामिति शेषः । तस्माद्दोषात् प्रसह्यामृतपानजदोषात् तौ मैन्दविविदौ । ऊर्जितं क्रूरम् ।।१०९।।

**चट्टी–** तयोरमृतकलशप्राप्तिः कथमभूदित्यत आह– **पीतेति** ।। पीतं अमृतं यैस्तेषु देवेषु दानवैः युध्यमानेषु सत्सु तैर्देवैः रक्षायै आत्महस्ते मैन्दविविदयोर्हस्ते इत्यर्थः । दत्तं तदमृतं आशु अविचार्य पीतं ताभ्यामिति शेषः । तस्माद्दोषात् प्रसह्यामृतपानजदोषात् तौ मैन्दविविदौ ऊर्जितं उग्रं आसुरं भावं स्वभावं आपतुः ।।१०९।।

**अङ्गदः कालतस्त्यक्त्वा देहमाप निजां तनुम् ।**
**रामाज्ञयैव कुर्वाणो राज्यं कुशसमन्वितः ।।११०।।**

**वेदाङ्गतीर्थीया–** अङ्गदः रामाज्ञयैव कुशसमन्वितः राज्यं कुर्वाणः कालतः देहं त्यक्त्वा निजां तनुमापेति योजना ।।११०।।

**वरदराजीया–** अङ्गदो रामाज्ञयैव कुशेन रामपुत्रेण समन्वितः राज्यं कुर्वाणो राज्यपरिपालनं कुर्वन् कालतः कालान्तरे राज्यपरिपालानन्तरमित्यर्थः । देहं कपिदेहं त्यक्त्वा निजां तनुं स्वमूलरूपमाप ।।

**जनार्दनीया–** रामाज्ञयैव कुशेन समन्वितो युक्तः । राज्यं कपिराज्यं कुर्वाणः पालयन् । अङ्गदः कालतः कालान्तरे देहं त्यक्त्वा, निजां तनुं चन्द्रस्वरूपं आप ।।११०।।

**चट्टी–** श्रीरामाज्ञयैव कुशेन समन्वितो राज्यं कपिराज्यं कुर्वाणः पालयन् अङ्गदः कालतः कालान्तरे देहं त्यक्त्वा निजां तनुं चन्द्रस्वरूपं आप ।।११०।।

**विभीषणश्च[१] धर्मात्मा राघवाज्ञापुरस्कृतः ।**
**सेनापतिर्धनेशस्य कल्पमावीत् स राक्षसान् ।।१११।।**

---

१. 'किञ्चान्यद्वक्तुमिच्छामि राक्षसेन्द्र महाबल । आराधय जगन्नाथं इक्ष्वाकुकुलदैवतम् ।। आराधनीयमनिशं देवैरपि सवासवैः । तथेति प्रतिजग्राह रामवाक्यं विभीषणः ।।' इति रामायणे७.१०८.३०-३१। पाद्मेऽपि रामायणोक्तं किञ्चिद्विव्रियते । तथाहि- 'इत्युक्त्वाऽथ स काकुत्स्थः स्वाङ्गं विष्णुं सनातनम् । श्रीरङ्गशायिनं सौम्यं इक्ष्वाकुकुलदैवतम् ।। सम्प्रीत्या प्रददौ तस्मै रामो राजीवलोचनः ।।' इति उ.२४४.६१ ।

**व्यासतीर्थीया–** पुरस्कृतो रामाज्ञा येन स तथोक्तः ।।१११-११२।।

**वेदाङ्गतीर्थीया–** राघवाज्ञापुरस्कृतः पुरस्कृतरामाज्ञः ।।१११-११२।।

**वादिराजीया–** कल्पमिति 'कालाध्वनोरत्यन्तसंयोगे' [कौ.५५८] इति वचनात् 'मासमधीते' इतिवत् द्वितीया । कल्पपर्यन्तमित्यर्थः ।।१११-११३।।

**वरदराजीया–** धर्मात्मा धर्मनिष्ठो विभीषणो राघवस्याज्ञया पुरस्कृतः स्वीकृतो धनेशेनेति शेषः । अथवा पुरस्कृतः राघवाज्ञया इति विपरीतसमासः । धनेशस्य कुबेरस्य सेनापतिर्भूत्वा कल्पमनु कल्पपर्यन्तं राक्षसानावीत् ररक्ष इत्यर्थः ।।१११।।

**जनार्दनीया–** पुरस्कृता राघवाज्ञा येनेति विग्रहः । सेनापतिर्भूत्वा आवीत् अपात् । राघवाज्ञया सेनापतिर्भूत्वेति भावः । राघवाज्ञया पुरस्कृतकुबेरेणेति शेष इति वा ।।१११।।

**अनन्तभट्टीया–** राघवाज्ञापुरस्कृत इति विपरीत समासः ।।१११-११२।।

**ताम्रपर्णीया–** ।। **सेनापतिरिति** ।। कुबेरस्य सेनापतिस्सन् दिनकल्पपर्यन्तं राक्षसानावीदित्यर्थः । युगपदुभयाधिपत्योपपत्तेः । विभीषणस्य मूलरूपस्थितिरेतदित्यप्याहुः ।।१११-११३।।[१]

**चट्टी–** धर्मात्मा धर्मनिष्ठो सः विभीषणो राघवस्याज्ञया पुरस्कृतः स्वीकृतो धनेशेनेति शेषः । अथवा पुरुस्कृतः राघवाज्ञा येन सः । धनेशस्य कुबेरस्य सेनापतिर्भूत्वा कल्पं दिनकल्पपर्यन्तं राक्षसानावीत् ररक्ष इत्यर्थः ।।१११।।

**भावचन्द्रिका–** रामप्रसादादल्पाधिपतिरपि अयं महाधिपतिरिति भावेन वा अग्रजानुवृत्त्यर्थं तत्सेनापतिरप्ययमावीदिति भावेन च आह– **सेनेति** ।। विभीषणमूलरूपकथनमिति केचित् । तन्न । आरण्यपर्वणि सानुगे धनदे रावणेन लङ्काया निष्कासिते सति विभीषणश्चानुजगाम । [वन.२७६.३७] तदा तस्मै तुष्टो भगवान् भ्राता धनेश्वरः । सेनापत्यं ददौ धीमान् यक्षराक्षससेनयोः ।।' इति । वामने श्रीमुष्णमाहात्म्ये पञ्चमेऽध्याये–

ततः कण्वं समाहूय भगवानिदमब्रवीत् । यष्टुकामो यदा वायुः प्रयागे मुक्तिदे शुभे ।।
तदा हलेन भूशुद्धिं कारयामास कर्षकैः । भवान् तदा समाधिस्थः वल्मीकान्तर्निवेशितः ।।
हलाग्रादुत्थितं स्वश्च वायुं शप्तोऽसि दुर्मते । मूलरूपेण ते कीर्तिर्न ख्यातिर्भूतले भवेत् ।।
दत्ते शापे त्वयाप्येवं पुनः शप्तोऽसि भूतले । भव त्वं कण्व दुर्बुद्धे राक्षसी ...मतिः ।।

---

१. ।। सेनापतिरिति ।। केचित् तदैव कुबेरस्य सेनापतिः सन् दिनकल्पपर्यन्तं राक्षसान् आवीदित्यर्थः । युगपद् उभयाधिपत्योपपत्तेरिति । केचित् पूर्वजन्मस्थितिरेतदित्याहुः ।।१११-११२।।

राक्षसो भव ...* न मृषा तु कथञ्चन । इति शापेन त्वं कण्व रावणस्यानुजो भव ॥
विभीषणाख्यया भूमौ भक्तिः स्यादनपायिनी । राक्षसानामाधिपत्यं दत्तमाचन्द्रतारकम् ॥
तदन्ते मत्पदप्राप्तिर्भविता ते न संशयः ॥' इति ॥१११-११२॥

**भावविवृति–** विभीषणः सुधर्मात्मा राघवाज्ञापुरस्कृतः इत्यत्र पूर्वं कण्वनामा द्विजो वायोः शापात् विभीषणोऽभूदित्यर्थः । तदुक्तमंशावतरणे– 'विभीषणः कुबेरस्य सेनापतिरितीरितः । स वै पूर्वं कण्वनामा वायोः शापादभूद्द्विजः ॥' इति ।

अत्र पौराणिकीकथा । वायुर्यदा यज्ञार्थं लाङ्गलेन भूशोधनं चक्रे । तदा तपश्चरन् वल्मीकस्थः कण्वः तल्लाङ्गलपीडितस्सन् वायुं शशाप । वायुरप्येनं राक्षसो भवेति शशापेति । सानुगो धनदो यदा रावणेन लङ्कायाः निष्कासितः तदा विभीषणोऽपि तमनुगतः । तस्मादस्मै धनदस्तुष्टः स्वसेनापत्यं ददौ । विभीषणो दिनकल्पपर्यन्तं सेनापतिरभूदित्यर्थः । तदुक्तं भारते अरण्यपर्वणि– 'तस्मै स भगवान् तुष्टो भ्राता भर्त्रे धनेश्वरः । सेनापत्यं ददौ धीमान् यक्षराक्षससेनयोः ॥' इति ॥१११-११२॥

**रामाज्ञया[1] जाम्बवांश्च न्यवसत् पृथिवीतले ।**
**उत्पत्त्यर्थं जाम्बवत्यास्तदर्थं सुतपश्चरन् ॥११२॥**

**वरदराजीया–** जाम्बवांश्च रामस्याज्ञया जाम्बवत्याः कृष्णभार्यायाः उत्पत्त्यर्थे पृथिवीतले न्यवसत् । किं कुर्वन् तदर्थं जाम्बवत्युत्पत्त्यर्थं तपश्चरन् कुर्वन् अवसदिति सम्बन्धः ॥११२॥

**जनार्दनीया–** जाम्बवत्या उत्पत्त्यर्थं रामाज्ञया न्यवसत् । किं कुर्वन् ? तदर्थं जाम्बवत्युत्पत्त्यर्थं सुतपः तीव्रतपः चरन् कुर्वन् न्यवसदित्यर्थः ॥११२॥

**चट्टी–** जाम्बवांश्च जाम्बवत्याः उत्पत्त्यर्थं श्रीरामाज्ञया पृथिवीतले न्यवसत् । किं कुर्वन् तदर्थं जाम्बवत्युत्पत्त्यर्थं सुतपः तीव्रं तपश्चरन् न्यवसदिति सम्बन्धः ॥११२॥

**अथो रघूणां प्रवरः सुरार्चितः स्वयैकतन्वा न्यवसत् सुरालये ।**
**द्वितीयया ब्रह्मसदस्यधीश्वरस्तेनार्चितोऽथापरया निजालये ॥११३॥**

**व्यासतीर्थीया–** आरुरोह विभुरम्बरमिति भगवतोऽम्बरारोहणमुक्तं तदनन्तरं प्रवृत्तमाह– **अथो इत्यादिना** ॥११३-११७॥

---

१. राम उवाच- 'द्वापरे समनुप्राप्ते यदूनामन्वये पुनः । भूभारस्य विनाशाय समुत्पत्स्याम्यहं भुवि ॥ करिष्ये तत्र सङ्ग्रामं स्वयं भल्लूकसत्तम ॥' इति पाद्मे उ.२४४.६४-६५ ।

**व्यासतीर्थीया–** पुरस्कृतो रामाज्ञा येन स तथोक्तः ।।१११-११२।।

**वेदाङ्गतीर्थीया–** राघवाज्ञापुरस्कृतः पुरस्कृतरामाज्ञः ।।१११-११२।।

**वादिराजीया–** कल्पमिति 'कालाध्वनोरत्यन्तसंयोगे' [कौ.५५८] इति वचनात् 'मासमधीते' इतिवत् द्वितीया । कल्पपर्यन्तमित्यर्थः ।।१११-११३।।

**वरदराजीया–** धर्मात्मा धर्मनिष्ठो विभीषणो राघवस्याज्ञया पुरस्कृतः स्वीकृतो धनेशेनेति शेषः । अथवा पुरस्कृतः राघवाज्ञया इति विपरीतसमासः । धनेशस्य कुबेरस्य सेनापतिर्भूत्वा कल्पमनु कल्पपर्यन्तं राक्षसानावीत् ररक्ष इत्यर्थः ।।१११।।

**जनार्दनीया–** पुरस्कृता राघवाज्ञा येनेति विग्रहः । सेनापतिर्भूत्वा आवीत् अपात् । राघवाज्ञया सेनापतिर्भूत्वेति भावः । राघवाज्ञया पुरस्कृतकुबेरेणेति शेष इति वा ।।१११।।

**अनन्तभट्टीया–** राघवाज्ञापुरस्कृत इति विपरीत समासः ।।१११-११२।।

**ताम्रपर्णीया–** ।। **सेनापतिरिति** ।। कुबेरस्य सेनापतिस्सन् दिनकल्पपर्यन्तं राक्षसानावीदित्यर्थः । युगपदुभयाधिपत्योपपत्तेः । विभीषणस्य मूलरूपस्थितिरेतदित्यप्याहुः ।।१११-११३।।[१]

**चट्टी–** धर्मात्मा धर्मनिष्ठो सः विभीषणो राघवस्याज्ञया पुरस्कृतः स्वीकृतो धनेशेनेति शेषः । अथवा पुरुस्कृतः राघवाज्ञा येन सः । धनेशस्य कुबेरस्य सेनापतिर्भूत्वा कल्पं दिनकल्पपर्यन्तं राक्षसानावीत् ररक्ष इत्यर्थः ।।१११।।

**भावचन्द्रिका–** रामप्रसादादल्पाधिपतिरपि अयं महाधिपतिरिति भावेन वा अग्रजानुवृत्त्यर्थं तत्सेनापतिरप्ययमावीदिति भावेन च आह– **सेनेति** ।। विभीषणमूलरूपकथनमिति केचित् । तन्न । आरण्यपर्वणि सानुगे धनदे रावणेन लङ्काया निष्कासिते सति विभीषणश्चानुजगाम । [वन.२७६.३७] तदा तस्मै तुष्टो भगवान् भ्राता धनेश्वरः । सेनापत्यं ददौ धीमान् यक्षराक्षससेनयोः ।।' इति । वामने श्रीमुष्णमाहात्म्ये पञ्चमेऽध्याये–

ततः कण्वं समाहूय भगवानिदमब्रवीत् । यष्टुकामो यदा वायुः प्रयागे मुक्तिदे शुभे ।।
तदा हलेन भूशुद्धिं कारयामास कर्षकैः । भवान् तदा समाधिस्थः वल्मीकान्तर्निवेशितः ।।
हलाग्रादुत्थितं स्वश्च वायुं शप्तोऽसि दुर्मते । मूलरूपेण ते कीर्तिर्न ख्यातिर्भूतले भवेत् ।।
दत्ते शापे त्वयाप्येवं पुनः शप्तोऽसि भूतले । भव त्वं कण्व दुर्बुद्धे राक्षसी ...मतिः ।।

---

१. ।। सेनापतिरिति ।। केचित् तदैव कुबेरस्य सेनापतिः सन् दिनकल्पपर्यन्तं राक्षसान् आवीदित्यर्थः । युगपद् उभयाधिपत्योपपत्तेरिति । केचित् पूर्वजन्मस्थितिरेतदित्याहुः ।।१११-११२।।

राक्षसो भव ...* न मृषा तु कथञ्चन । इति शापेन त्वं कण्व रावणस्यानुजो भव ।।
विभीषणाख्यया भूमौ भक्तिः स्यादनपायिनी । राक्षसानामाधिपत्यं दत्तमाचन्द्रतारकम् ।।
तदन्ते मत्पदप्राप्तिर्भविता ते न संशयः ।।' इति ।।१११-११२।।

**भावविवृति–** विभीषणः सुधर्मात्मा राघवाज्ञापुरस्कृतः इत्यत्र पूर्वं कण्वनामा द्विजो वायोः शापात् विभीषणोऽभूदित्यर्थः । तदुक्तमंशावतरणे– 'विभीषणः कुबेरस्य सेनापतिरितीरितः । स वै पूर्वं कण्वनामा वायोः शापादभूद्विजः ।।' इति ।

अत्र पौराणिकीकथा । वायुर्यदा यज्ञार्थं लाङ्गलेन भूशोधनं चक्रे । तदा तपश्चरन् वल्मीकस्थः कण्वः तल्लाङ्गलपीडितस्सन् वायुं शशाप । वायुरप्येनं राक्षसो भवेति शशापेति । सानुगो धनदो यदा रावणेन लङ्कायाः निष्कासितः तदा विभीषणोऽपि तमनुगतः । तस्मादस्मै धनदस्तुष्टः स्वसेनापत्यं ददौ । विभीषणो दिनकल्पपर्यन्तं सेनापतिरभूदित्यर्थः । तदुक्तं भारते अरण्यपर्वणि– 'तस्मै स भगवान् तुष्टो भ्राता भर्त्रे धनेश्वरः । सेनापत्यं ददौ धीमान् यक्षराक्षससेनयोः ।।' इति ।।१११-११२।।

**रामाज्ञया[१] जाम्बवांश्च न्यवसत् पृथिवीतले ।**
**उत्पत्त्यर्थं जाम्बवत्यास्तदर्थं सुतपश्चरन् ।।११२।।**

**वरदराजीया–** जाम्बवांश्च रामस्याज्ञया जाम्बवत्याः कृष्णभार्यायाः उत्पत्त्यर्थे पृथिवीतले न्यवसत् । किं कुर्वन् तदर्थं जाम्बवत्युत्पत्त्यर्थं तपश्चरन् कुर्वन् अवसदिति सम्बन्धः ।।११२।।

**जनार्दनीया–** जाम्बवत्या उत्पत्त्यर्थं रामाज्ञया न्यवसत् । किं कुर्वन् ? तदर्थं जाम्बवत्युत्पत्त्यर्थं सुतपः तीव्रतपः चरन् कुर्वन् न्यवसदित्यर्थः ।।११२।।

**चट्टी–** जाम्बवांश्च जाम्बवत्याः उत्पत्त्यर्थं श्रीरामाज्ञया पृथिवीतले न्यवसत् । किं कुर्वन् तदर्थं जाम्बवत्युत्पत्त्यर्थं सुतपः तीव्रं तपश्चरन् न्यवसदिति सम्बन्धः ।।११२।।

**अथो रघूणां प्रवरः सुरार्चितः स्वयैकतन्वा न्यवसत् सुरालये ।**
**द्वितीयया ब्रह्मसदस्यधीश्वरस्तेनार्चितोऽथापरया निजालये ।।११३।।**

**व्यासतीर्थीया–** आरुरोह विभुरम्बरमिति भगवतोऽम्बरारोहणमुक्तं तदनन्तरं प्रवृत्तमाह– **अथो इत्यादिना** ।।११३-११७।।

---

१. राम उवाच- 'द्वापरे समनुप्राप्ते यदूनामन्वये पुनः । भूभारस्य विनाशाय समुत्पत्स्याम्यहं भुवि ।। करिष्ये तत्र सङ्ग्रामं स्वयं भल्लूकसत्तम ।।' इति पाद्मे उ.२४४.६४-६५ ।

**वेदाङ्गतीर्थीया–** अथो स्वर्गारोहणानन्तरम् । सुरालये स्वर्गे ।।११३।।

**वरदराजीया–** अथो स्वस्थानप्राप्त्यनन्तरं रघूणां प्रवरो रामः स्वया एकया तन्वा स्वकीयेन श्रीरामस्वरूपेण सुरैः देवैः अर्चितः सुरालये स्वर्गे न्यवसत् । अथ अधीश्वरो मुख्यस्वामी रामो द्वितीयया तन्वा द्वितीयेन श्रीरामरूपेण ब्रह्मसदसि ब्रह्मसदने तेन ब्रह्मणा अर्चितः सन् न्यवसदित्यर्थः । अनन्तरं अपरेण तृतीयया तन्वा रूपेण निजालये निजसदने श्वेतद्वीपे न्यवसदित्यर्थः ।।११३।।

**जनार्दनीया–** अथाम्बरारोहणानन्तरं स्वया स्वकीयया एकतन्वा एकमूर्त्या सुराणां अलये स्वर्गे न्यवसत् । द्वितीयया तन्वा द्वितीयरूपेणेत्यर्थः । सदसि सभायां तेन ब्रह्मणा अर्चितो न्यवसत् । अथापरया तृतीयरूपेण निजालये न्यवसत् ।।११३।।

**अनन्तभट्टीया–** अपरया द्वितीयया इति सम्बन्धः ।।११३-१२२।।

**चट्टी–** अथो अम्बरारोहणानन्तरं रघूणां प्रवरो श्रीरामः देवैरर्चितः सन् स्वया स्वकीयया एकतन्वा एकमूर्त्या सुरालये स्वर्गे न्यवसत् । अधीश्वरः मुख्यस्वामी श्रीरामः द्वितीयया तन्वा ब्रह्मसदसि तेन ब्रह्मणा अर्चितः सन् न्यवसत् । अथ अनन्तरं अपरया तृतीयया तन्वा तृतीयेन रूपेण निजालये न्यवसत् ।।११३।।

**भावचन्द्रिका–** निजालये पयोब्धौ । 'विशेषमात्रेण विनैव भेदं पृथक् पुरस्तादपृथक् ततोऽभूत् । अनन्तशय्येन पयोब्धिमध्ये मूलेन रूपेण स रामदेवः ।।' इति सङ्ग्रहरामायणे [उ.का.७.५१.] । रामोऽपीत्यादि वक्ष्यति च ।।११३-१२०।।

**भावविवृति–** अथो रघूणां प्रवरः सुरार्चितः स्वयैव तन्वा न्यवसत्सुरालये इत्यत्र राम एकेन रूपेण सुरालये स्वर्गस्थयमसभातले द्वितीयेन रूपेण सत्यलोके अथापरेण तृतीयरूपेण श्वेतद्वीपे न्यवसत् । तृतीयरूपेण निजं पदं श्वेतद्वीपं व्रजन्तं प्रभुं देवताः ब्रह्माद्या अनुगम्य अनुसृत्य गताः सत्यः । तदुक्तम्– रामोऽपि सार्धं पवनात्मजेन ससीतया लक्ष्मणपूर्वकैश्च । तथा गरुत्मत्प्रमुखैश्च पार्षदैः संसेव्यमानो न्यवसत् पयोब्धौ ।।' इति ।। 'उपास्यमानो भगवान् रामो यमसभातले' इति च । उक्तश्च संग्रहरामायणे– 'विशेषमात्रेण विनैव भेदं पृथक् पुरस्तादपृथक् ततोऽभूत् । अनन्तशय्येन पयोब्धिमध्ये मूलेन रूपेण स रामदेवः ।।' इति । केचन 'रामो वैकुण्ठं जगाम' इति वदन्ति ।।११३-१२०।।

**तृतीयरूपेण निजं पदं प्रभुं व्रजन्तमुच्चैरनुगम्य देवताः[१] ।**
**अगम्यमर्यादमुपेत्य च क्रमाद् विलोकयन्तोऽतिविदूरतोऽस्तुवन् ।।११४।।**

---

१. 'दैवता' इति जनार्दनीये पाठान्तरम् ।

**वेदाङ्गतीर्थीया–** उच्चैः भक्त्याद्युत्कृष्टत्वेन । अगम्यमर्यादं अगम्यसीमावधिः यथा भवति तथा ।।

**वादिराजीया–** अगम्यमर्यादमुपेत्य च क्रमादित्यत्र अमुत्कैरगम्या अन्तर्नगरीमर्यादा यस्य तं रामं च क्रमात् शास्त्रोक्तक्रमात् उपेत्य शास्त्रे यावद्देशे गमनं विहितं तावदुपेत्येत्यर्थः । सप्तमद्वारपर्यन्तमुपेत्येति यावत् ।।११४।।

**वरदराजीया–** तत्रानेन तृतीयेन रूपेण निजं पदं स्थानं वैकुण्ठाख्यं प्रति व्रजन्तं प्रभुं समर्थं रामं उचथैः भक्त्युत्कृष्टत्वेन देवताः देवाः अनुगम्य सहैव गत्वा अगम्यमर्यादं अगम्यं स्थलं मर्यादा यथा भवति तथा समेत्य गत्वा क्रमाद्विलोकयन्तः रामं पश्यन्त एवातिदूरत एवास्तुवन् स्तुतिं कृतवन्तः ।।

**जनार्दनीया–** अनुगम्य सह गत्वा योग्यताक्रमात् अगम्यस्य गमनायोग्यस्थलस्य मर्यादं अवधिं उपेत्य, अतिविदूरतः विलोकयन्तः उच्चैरस्तुवन् तुष्टुवुः । उच्चैर्भक्त्युत्कर्षेण अनुगम्येति वा सम्वन्धः । देवता इत्यत्र तल्प्रत्ययस्य स्वरूपपरत्वात् प्रकृत्यर्थविशेषणं विलोकयन्त इति । क्वचिद् 'देवता' इति पाठः । 'देवतानि पुंसि च' इत्यमरः ।।११४।।

**ताम्रपर्णीया–** उच्चैरस्तुवन्निति सम्वन्धः ।।११४।।

**चट्टी–** देवा किं कुर्वन् इत्यत आह– **तृतीयेति** ।। तृतीयेन रूपेण निजं पदं स्थानं वैकुण्ठाख्यं व्रजन्तं प्रभुं समर्थं श्रीरामं देवताः देवाः अनुगम्य सहैव गत्वा क्रमात् योग्यताक्रमादगम्यमर्यादं अगम्यं स्थलं मर्यादा यथा भवति तथा । उपेत्य अतिविदूरतः विलोकयन्तः पश्यन्त उच्चैः अस्तुवन् । अमुत्कैः अगम्यमर्यादा अन्तर्नगरीमर्यादा यस्य तम् । श्रीरामं उपेत्यातिदूरतो विलोकयन्तः उच्चैरस्तुवन् इति वा ।।

**ब्रह्मा मरुन्मारुतसूनुरीशः शेषो गरुत्मान् हरिजः शक्रकाद्याः ।**
**क्रमादनुव्रज्य तु राघवस्य शिरस्यथाऽज्ञां प्रणिधाय निर्ययुः ।।११५।।**

**वेदाङ्गतीर्थीया–** हरिजः कामः । न तु यमः । शक्रस्य पश्चादुक्तेः । क्रमादिति तारतम्यस्य चोच्यमानत्वात् । शक्रकाद्याः । कः प्रजापतिः ।।११५-१२३।।

**वादिराजीया–** हरिजः शक्रकाद्या इत्यत्र हरिजः विष्णुकुमारः कामः ।।११५।।

**वरदराजीया–** क्रमादित्युक्तं विवृणोति– **ब्रह्मेति** ।। ब्रह्मा चतुर्मुखः मरुत् वायुः मारुतसूनुः हनूमान् ईशो रुद्रः शेषः फणीन्द्रः गरुत्मान् गरुडः हरिजः कामो न तु यमः । [शक्रस्य पश्चादुक्तत्वात् इति] । क्रमादिति तारतम्यस्य विवक्षितत्वादिति द्रष्टव्यम् । शक्रः इन्द्रः को दक्षप्रजेश्वरः एते आद्या एषां चन्द्रसूर्यादीनां ते तथा क्रमात्पुरतो । ब्रह्मा तदनु वायुस्तदनु हनूमान् इत्येवं क्रमादित्यर्थः । अनुव्रज्य पृष्टतो गत्वा तु राघवस्याज्ञां शिरसि प्रणिधाय धृत्वा अथानन्तरं निर्ययुः परावृत्यागता इत्यर्थः ।।११५।।

**जनार्दनीया–** क्रमादित्युक्तं दर्शयति– **ब्रह्मेति** ।। मारुतसूनुः हनुमान् हरिजः विष्णुपुत्रः कामः शक्रः इन्द्रः कः दक्षः । आद्यशब्देन यमाद्या विवक्षिताः । क्रमात् स्वयोग्यताक्रमात् अनुव्रज्य रामं अनुगम्य । प्राणिधाय धृत्वा निर्ययुः निवृत्ता इत्यर्थः ।।११५।।

**ताम्रपर्णीया–** हरिजः कामः । क्रमाद्योग्यताक्रमादनुवज्य सहं गत्वा ।।११५-११८।।

**चट्टी–** क्रमादित्युक्तं दर्शयति– **ब्रह्मेति** ।। ब्रह्मा चतुर्मुखः मरुत् वायुः मारुतसूनुः हनूमान् ईशो रुद्रः शेषः फणीन्द्रः गरुत्मान् गरुडः हरिजः विष्णुपुत्रो कामो शक्रः इन्द्रः को दक्षः एते आद्या एषां यमादीनां ते तथा क्रमात् स्वस्वयोग्यताक्रमात् पुरतो ब्रह्मा तदनु वायुस्तदनु हनूमान् इत्येवं प्रकारेण तं श्रीरामं क्रमात् अनुव्रज्य अनुगत्वा अथ राघवस्याज्ञां शिरसि प्रणिधाय धृत्वा निर्ययुः ।।११५।।

**गूढवाक्यार्थ–** ।। **हरिजश्शक्रकाद्या इति** ।। हरिजः विष्णुपुत्रः कामः ।।११५।।

**स्वं स्वं च सर्वे सदनं सुरा ययुः पुरन्दराद्याश्च विरिश्चपूर्वकाः ।**
**मरुत्सुतोऽथो बदरीमवाप्य नारायणस्यैव पदं सिषेवे ।।११६।।**

**वादिराजीया–** मरुत्सुतोऽथो बदरीमवाप्य इत्यत्र शतशृङ्गोपरि एका बदरी, हिमवन्मूर्धन्यपरा बदरी, मेरोरुपान्ते अन्या बदरी । बदरीत्रयेऽपि नारायणस्तिष्ठति । तत्र मेरोरुपान्तबदरीमेवाप्येत्यर्थः ।।

**वरदराजीया–** सर्वे पुरन्दराद्याः सुराः विरिश्चपूर्वकाः स्वं स्वं सदनं लोकं ययुः । विरिश्चपूर्वका इत्यस्यादौ ब्रह्मा सत्यलोकं गतस्तदनन्तरं तदाज्ञया इतरे स्वं स्वं लोकं गता इत्यभिप्रायः । अथानन्तरं मरुत्सुतो हनूमान् बदरीं बदरिकाश्रमं आप्य नारायणस्य पदमेव सिषेवे सेवयामास ।।११६।।

**जनार्दनीया–** विरिश्चः पूर्वो येषां शेषगरुडरुद्राणां ते तथा । पुरन्दराद्याः सुराः स्वं स्वं सदनं स्ववासस्थानम् । अथागमनानन्तरं । नारायणस्य श्रीवेदव्यासस्य ।।११६।।

**चट्टी–** विरिश्चः पूर्वो येषां शेषरुद्रादीनां ते तथा । पुरन्दरः आद्यः येषां ते पुरन्दराद्याः । सर्वे सुराः स्वं स्वं सदनं स्वनिवासस्थानं ययुः । अथानन्तरं मरुत्सुतो हनुमान् बदरीमवाप्य शतशृङ्गोपरि एका बदरी, हिमवन्मूर्ध्नि अपरा, मेरोरुपान्ते अन्या । बदरीत्रयेऽपि नारायणस्तिष्ठति । तत्र मेरोरुपान्ते बदरीमवापेत्यर्थः । नारायणस्य पदमेव सिषेवे सेवयामास ।।११६।।

**समस्तशास्त्रोद्धरितं हरेर्वचो मुदा तदा श्रोत्रपुटेन सम्भरन् ।**
**वदंश्च तत्त्वं विबुधर्षभाणां तदा मुनीनां च सुखं ह्युवास ।।११७।।**

**वरदराजीया–** समस्तशास्त्रार्थेनोद्धरितं पूर्णं हरेर्वेदव्यासस्य वचो ब्रह्मसूत्रादिरूपं मुदा परमानन्देन श्रोत्रपुटेन कर्णपुटेन सम्भरन् बिभ्राणः सदा विबुधर्षभाणां देवोत्तमानां मुनीनां च तत्त्वं परमात्मस्वरूपं वदन् सुखं यथा भवति तथा उवास हि ।।११७।।

**जनार्दनीया–** समस्तशास्त्रैः निर्णयरूपसर्वशास्त्रार्थैः उद्धरितं पूर्णमित्यर्थः । श्रोत्रपुटेन कर्णलक्षणद्रोणेन संभरन् दधन् शृण्वन्नित्यर्थः । तत्त्वं हरिस्वरूपं स्वयं वदन् सुखं यथा स्यात्तथा उवास ।।११७।।

**चट्टी–** समस्तशास्त्रैः निर्णयरूपसर्वशास्त्रार्थैः उद्धरितं पूर्णमित्यर्थः । हरेर्वेदव्यासस्य वचो ब्रह्मसूत्रादिरूपं मुदा हर्षेण तदा श्रोत्रपुटेन कर्णलक्षणश्रोत्रेण संभरन् दधन् शृण्वन्नित्यर्थः । सदा विबुधर्षभाणां देवोत्तमानां मुनीनां च तत्त्वं हरिस्वरूपं वदन् सुखं यथा भवति तथा उवास हि ।।११७।।

**रामाज्ञया किम्पुरुषेषु राज्यं चकार रूपेण तथाऽपरेण ।**
**रूपैस्तथाऽन्यैश्च समस्तसद्मन्युवास विष्णोः सततं यथेष्टम् ।।११८।।**

**वादिराजीया–** रूपैस्तथाऽन्यैश्च समस्तसद्मनीति वदता रामायणयुद्धे एकमूर्त्यैव पूर्णत्वात् वैष्णवक्षेत्रेषु सर्वेषु देवादीनां दृश्यतया अन्येषां अदृश्यतया च हरिसेवार्थं सज्जनरक्षणार्थं च हनुमतस्त्रिकोटिरूपधारणमिति सूचितं भवति ।।११८–१२१।।

**वरदराजीया–** तथा रामाज्ञया किम्पुरुषखण्डे विद्यमानेषु बहुषु स्थानेषु अपरेण हनुमद्रूपेण राज्यं चकार । तथा विष्णोः समस्तसद्मनि सर्वेषु विष्णुलोकेषु अन्यैरपि अनेकहनुमद्रूपैः यथेष्टं भवति तथा उवास वासमकरोत् ।।११८।।

**जनार्दनीया–** यथा वदर्यां उवास तथा अपरेण रूपेण द्वितीयरूपेण । किम्पुरुषेषु किम्पुरुषखण्डे विद्यमानराष्ट्रेषु । तथा तद्वत् अन्यैः रूपैः हनुमद्रूपैः । विष्णोः समस्तसद्मनीति जातावेकवचनम् । श्वेतद्वीपानन्तासनवैकुण्ठेषु यथेष्टं स्वेच्छानुसारेण यथा तथा उवास ।।११८।।

**चट्टी–** यथा बदर्यां उवास तथा अपरेण रूपेण द्वितीयरूपेण किम्पुरुषेषु श्रीरामाज्ञया राज्यं चकार । तथा तद्वदन्यैः रूपैः हनुमद्रूपैः विष्णोः समस्तसद्मनीति जातावेकवचनम् । श्वेतद्वीपानन्तासनवैकुण्ठेषु सततं यथेष्टं स्वेच्छानुसारेण उवास वासमकरोत् ।।११८।।

**इत्थं स गायञ्छतकोटिविस्तरं रामायणं भारतपञ्चरात्रम् ।**
**वेदांश्च सर्वान् सहितब्रह्मसूत्रान् व्याचक्षाणो नित्यसुखोद्धरोऽभूत् ।।११९।।**

**व्यासतीर्थीया—** नित्यसुखेनोद्भरो भरितः ।।११९–१२०।।

**वरदराजीया—** इत्यनेन प्रकारेण रूपाणि धृत्वा शतकोटिश्लोकात्मकत्वेन विस्तारो यस्य तत्तथा । तद्रामायणं मूलरामायणं भारतसहितपञ्चरात्रं च सर्वान् वेदांश्च ब्रह्मसूत्रसहितान् व्याचक्षाणो व्याकुर्वाणो नित्यसुखेनोद्भरः पूर्णोऽभूदित्यर्थः ।।११९।।

**जनार्दनीया—** इत्थं उक्तप्रकारेण स हनूमान् शतकोटिभिः शतकोटिसङ्ख्याकपद्यैः विस्तरः विस्तृतिः यस्य तत्तथा । रामायणं व्यासोक्तमूलरामायणम् । भारतं पञ्चरात्रं च तयोः समाहारस्तथा । गायन् कीर्तयन् । ब्रह्मसूत्रैः सहिता इति सहितब्रह्मसूत्राः तान् वेदान् व्याचक्षाणो व्याकुर्वाणः सन् । नित्येन अविच्छिन्नेन सुखेन उद्भरः पूर्णः नित्यसुखोद्भरः । सुखस्योद्भरोऽत्यतिशयो यस्येति वा विग्रहः । अभूत् 'अतिशयो भरः' इत्यमरः ।।११९।।

**ताम्रपर्णीया—** इत्थं एवमर्थकं रामायणं इत्थं यथास्माभिर्गानं कृतं एवमेव गायन्नित्यर्थः । भारतसहितं पञ्चरात्रं भारतपञ्चरात्रम् ।।११९।।

**चट्टी—** सः हनुमान् इत्थं अनेन प्रकारेण रूपाणि धृत्वा शतकोटिभिः शतकोटिसंख्याकपद्यैः विस्तरः विस्तारः यस्य तत्तथा । रामायणं व्यासोक्तमूलरामायणं भारतं पञ्चरात्रं तयोः समाहारः । भारतपञ्चरात्रं गायन् कीर्तयन् ब्रह्मसूत्रैः सहिता इति सहितब्रह्मसूत्राः तान् वेदान् व्याचक्षाणो व्याकुर्वाणः सन्नित्यनेन अविच्छिन्नेन सुखेन उद्भरः पूर्णः अभूत् ।।११९।।

**गूढवाक्यार्थ—** इत्थं एवं विधं रामायणं भारतसहितं पञ्चरात्रम् ।।११९।।

**रामोऽपि सार्द्धं पवनात्मजेन ससीतया लक्ष्मणपूर्वकैश्च ।**
**तथा गरुत्मत्प्रमुखैश्च पार्षदैः संसेव्यमानो न्यवसत् पयोब्धौ ।।१२०।।**

**वादिराजीया—** लक्ष्मणपूर्वकैश्चेत्यत्र लक्ष्मणपदेन लक्ष्मणमूलरूपी शेषो गृह्यते । शेषमार्गानुयायिनां गरुडमार्गानुयायिनां च पृथग्ग्रहणार्थं लक्ष्मणपूर्वकैः गरुत्मत्प्रमुखैश्च पार्षदैरित्युक्तम् । लक्ष्मणस्यापि मूलरूपे प्रविष्टत्वेन सुग्रीवादिदेवानामपि स्वांशितामापुरिति कथनात् उक्त एवार्थः । पयोब्धावमुक्त-गम्यस्थानस्थितमण्डपे न्यवसदित्यर्थः ।।१२०–१२६।।

**वरदराजीया—** स रामोऽपि पवनात्मजेन हनुमता सार्धं ससीतया लक्ष्मणपूर्वकैश्च सर्वैः गरुत्ममुखैः गरुडपुरस्सरैः विष्वक्सेनादिभिः पार्षदैः संसेव्यमानः पयोब्धौ श्वेतद्वीपे न्यवसत् ।।१२०।।

**जनार्दनीया—** लक्ष्मणपूर्वकैरित्यत्र लक्ष्मणाद्याः स्वमूलरूपं प्राप्ता अपि पुनः लक्ष्मणादिरूपाणि स्वेच्छया धृत्वा रामं सेवन्त इत्यवगन्तव्यम् ।।१२०।।

**ताम्रपर्णीया–** लक्ष्मणपूर्वकैः भरतशत्रुघ्नसुग्रीवाद्यैः ।।१२०।।

**चट्टी–** स श्रीरामोऽपि पवनात्मजेन हनुमता सार्धं ससीतया लक्ष्मणपूर्वकैश्च सर्वैः तथा गरुत्ममुखैः गरुडपुरस्सरैः विष्वक्सेनादिभिः पार्षदैः संसेव्यमानः पयोब्धौ श्वेतद्वीपे न्यवसत् । लक्ष्मणपूर्वकैरित्यत्र लक्ष्मणाद्याः स्वमूलरूपं प्राप्ता अपि लक्ष्मणादिरूपाणि स्वेच्छया धृत्वा श्रीरामं सेवन्ते इत्यवगन्तव्यम् । यद्वा लक्ष्मणपदेन लक्ष्मणरूपी शेषो गृह्यते । शेषमार्गानुयायिनां च पृथग्ग्रहाणार्थं लक्ष्मणपूर्वकैर्गरुत्मत्प्रमुखैश्च पार्षदाद्यैरित्युक्तम् । लक्ष्मणस्यापि मूलरूपे निविष्टत्वेन सुग्रीवादिदेवानामपि स्वांशितामापुः इति कथनादुक्त एवार्थः । पयोब्धावमुक्तगम्यस्थानस्थितमण्टपे न्यवसदित्यर्थः ।।१२०।।

**गूढवाक्यार्थ–** लक्ष्मणपदेन मूलरूपी गृह्यते ।।१२०।।

**कदाचिदीशः सकलावतारानेकं विधायाहिपतौ हि शेते ।**
**पृथक् च संव्यूह्य कदाचिदिच्छया रेमे रमेशोऽमितसद्गुणार्णवः ।।१२१।।**

**वरदराजीया–** एवं रूपाणां बहुत्वेऽपि भेदशङ्का न कार्येत्याह– **कदाचिदिति** ।। ईशोऽतिसमर्थो हरिः कदाचित् ब्रह्मप्रलये सकलावतारान् सर्वाणि रामकृष्णादिरूपाणि एकं मूलरूपमेव विधायाहिपतौ शेषे शेते योगनिद्रां करोति । रमायाः ईशो अमितैः अनन्तैः सद्गुणैरर्णव इव हरिः कदाचित् सृष्टौ इच्छया स्वेच्छया पृथक् बहुत्वेन संव्यूह्य वासुदेवादित्वेन मत्स्यादित्वेनेत्येवं व्यूहं कृत्वा रेमेत्यर्थः ।।१२१।।

**जनार्दनीया–** ईशः समर्थो । हरिः कदाचिद् । अहिपतिः शेषः । कदाचित् पृथक् वासुदेवाद्यनन्तरूपैः पृथक् पृथक् संव्यूह्य व्यूहं कृत्वा, रेमे रमत इत्यर्थः ।।१२१।।

**ताम्रपर्णीया–** कदाचिद्दिनप्रलये संव्यूह्य विभज्य ।।१२१।।

**चट्टी–** एवं रूपाणां बहुत्वेऽपि भेदशङ्का न कार्येत्याह– कदाचिदिति ।। ईशो समर्थो हरिः कदाचित् ब्रह्मप्रलये सकलावतारान् सर्वाणि श्रीरामकृष्णादिरूपाणि एकं विधाय अहिपतौ शेषे शेते । रमाया ईशः अमितैः अनन्तैः सद्गुणैरर्णवः हरिः कदाचित् सृष्टौ इच्छया पृथक् वहुत्वेन च संव्यूह्य वासुदेवादित्वेन मत्स्यादित्वेनेत्येवं व्यूहं कृत्वा रेमे ।।१२१।।

**भारतश्री–** सकलावतारान् इत्युक्तत्वात् जीवान्तर्गतरूपाणां संश्लेषाभावेऽपि न विरोधः ।।१२१।।

**भावचन्द्रिका–** ।। **कदाचिदिति च** ।। 'हरेरपि स्वरूपाणां एकीभावो यदोच्यते । संश्लेष एव सिद्धत्वात् स्वरूपैक्यस्य नो भव ।।' [अथ.भा.४.७] इति वचनात् विशेषवलात् संश्लेष इति ज्ञेयम् ।।१२१-१३४।।

**भावविवृति–** कदाचिदीशः.... रमेशोऽमितसद्गुणार्णवः ।। इत्यत्र ईशः कदाचित् परार्धप्रलये सकलावतारान् व्यक्तान् सनत्कुमाराद्यवतारान् एकं विधाय अहिपतौ शेषपर्यङ्के परनामकब्रह्मायुषो मध्ये एकवारं भविष्यतीति कदाचिदिति । तदा ब्रह्मादिचेतनानां स्थूलदेहस्य सङ्कर्षणमुखाग्निना नाशः तेषां शेषशायिभगवदुदरप्रवेशः । तत्प्रलयोऽपि प्रथमपरार्धान्तिमदिवसरात्रिकालपरिमित एव । तदतीतौ पद्मोत्पत्तिः । ततश्चतुर्मुखोत्पत्तिः । तस्मात् सर्वजगत्सृष्टिरिति ज्ञेयम् । 'चतुर्विधश्च प्रलयः उत्पत्तिस्त्रिविधा तथा' इत्यनुक्रमणिकाध्यायोक्तेः । मनुप्रलयदिनप्रलयमहाप्रलयातिरिक्तपरार्ध-प्रळयस्यापि वक्तव्यत्वात् । महाप्रलये वटपत्रशायित्वेन शेषशायित्वासम्भवात् । किञ्च दिनप्रलये विरिञ्चस्यैव शयनोक्तेः । तदुक्तमष्टमस्कन्धे 'प्रलयपयसि धातुस्सुप्तशक्तेर्मुखे य' इति । कदाचिच्छया पृथक् संव्यूह्य येन येन अवतारेण यादृशयादृशदेहवद्भिः सुरैः सहितो हरिः यादृशदेहवतोऽसुरान् येन येन व्यापारेण निजघान । तेन तेन अवताररूपेणैव तादृशदेहवद्भिः सुरैः सहितस्सन् तादृशदेहवतो तादृशदेहवतो सुरांश्च स्वेच्छया पृथक्पृथक्संव्यूह्य तेन तेन व्यापारेणैव दैत्यान् हत्वा इच्छामात्रेण पुनस्तान् स्वांशैः संयोज्य स्वयञ्च मूलरूपेण एकीभूय रमेशो रेमे इति । अत एव 'अमितसद्गुणार्णव' इत्युक्तिः । अयं च विशेषो गुरुमुखाच्छ्रुतः । उक्तञ्च विष्णुरहस्ये प्रथमाध्याये– अतीते प्रलयापाये अवशिष्टेऽष्टभाग.. । निद्रां तदात्मकां दृष्ट्वा... ।। तां वीक्ष्य चकमे विष्णु.. ।।

अनन्तधा ततो भूमः तथैवासीद्रमापि हि । अन्या नानाविधा नार्यो मुक्ता संसारबन्धनात् ।।
देवपत्न्योऽपि या मुक्ता तथा देवादयोऽपरे । गन्धर्वा यक्षरक्षांसि ऋषयो गुह्यकादयः ।।
सिद्धा अप्सरसश्चैव वैकुण्ठादिस्थिताश्च ये । सर्वे मुक्तगणास्ते तु हरिरूपाणि सर्वशः ।।
स्वस्वेच्छया रमन्ते स्म तत्तद्ब्रह्मपुरस्सराः । ततोऽभवद्धयशीर्षाख्यो श्रीरप्यासीद्धयानना ।
हयरूपी बभूवाथ रमाप्यासीत्ततोऽश्विनी ।। ... ।
नदीपर्वतवृक्षादीन् नाना रत्नानि सृष्टवान् । सुवर्णरजतादीनि भूमिं द्यां सागरानपि ।।
ततो मकरमीनादि नाना जलधराणि च । स्वयमेवाभवत् सर्वरूपः पुरुषविग्रहः ।।
तत्तद्रूपवती चाथ रमाप्यासीत्तथेतरे । ब्रह्माद्याश्च सपत्नीका नित्यानन्दा यथेच्छया ।।
भूमौ चाप्यसृजत् सोष्ट स्वात्मानं शिल्पिवित्तमम् । नाना शिल्पानि चक्रे सः सर्ववेत्ता जगत्पतिः ।।
शिष्यत्वे कल्पयामास ब्रह्माद्यास्सर्व देवताः । ग्रामारण्यपशूनां सः बभ्रे रूपाणि देवराट् ।।
महाराजोऽभवत् सोऽथ तथा सानन्तरूपवान् । प्राधान्ये योजयामास तथाऽमात्यादि कर्मसु ।।
ब्रह्मादीन् .....सच्चिदानन्दविग्रहः । ये तु नित्या तमोविष्टा पापरूपाः स्वभावतः ।।
चोरत्वे कल्पयामास दण्डयामास तानपि । प्रजारूपांश्चकारान्यान् मुक्तानेव ह्यनेकशः ।।
नित्यानन्दान् लीलयैव विष्णुभक्तिपरायणान् । दुःखलेशविनिर्मुक्तान् स्वस्ववृत्त्यैव तोषितान् ।।
असूयाद्यखिलैर्दोषैर्वर्जितान् लीलयैव हि । विक्रीणन्तश्च क्रीणन्तो हरितुष्ट्यर्थमेव हि ।।

आसीत् कदाचित् स्त्रीरूपो नानारूपसहस्रकैः । सर्वेऽपि देवा स्त्रीरूपा भूत्वा तानि सिषेविरे ।।
मानि प्रच्छाद्य रूपाणि पुनः पुरुषरूपकः । जातो देवस्ततोऽप्यासन् सर्वे पुरुषरूपिणः ।।
केचिद्यज्ञैरीजिरे विष्णुमेव नानारूपं केचन ध्यायन्तः ।
एवं पूर्वदेवदेवो ह्यचिन्त्यः किञ्चित्कालं मुक्तबन्धैरजाद्यैः ।।
लक्ष्म्या युक्तः क्रीडयामास पश्चात्सृष्टं चैच्छन्मानसं कर्म बद्धान् ।।
एवं यः क्रीडनं विष्णोः रहस्यं परमाद्भुतम् । प्रातः स्मरति वा रात्रौ योऽप्येवं तेन मोदते ।।
धनं धान्यं पशून् भार्यां पुत्रांश्चैव मनोहरान् । इह लोके चिरं भुक्त्वा ततो मुक्तिमवाप्नुयात् ।।'
इति ।।१२१-१३९।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूज रामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ नवमोऽध्यायः ।।

**गूढवाक्यार्थ–** कदाचिद् दिनप्रलये । संव्यूह्य विभज्य ।।१२१।।

**इत्यशेषपुराणेभ्यः पञ्चरात्रेभ्य एव च ।**
**भारताच्चैव वेदेभ्यो महारामायणादपि ।।१२२।।**

**व्यासतीर्थीया–** भैमीतनुर्मरुत आह कथाः परस्येत्यारभ्य कदाचिदीश इत्यन्तं यदुक्तं तस्य सर्वस्याप्रामाणिकत्वशङ्कां परिहरन्नाह– इतीति ।।१२२-१२४।।

**वेदाङ्गतीर्थीया–** एवं भगवदवतारकथामुक्त्वास्य ग्रन्थस्याप्तिमूलत्वं ज्ञापयन्नाह– **इत्यशेषपुराणेभ्य इत्यादिना** ।।१२२ ।।

**वरदराजीया–** एवं सविस्तरं रामकथां उक्त्वा अभ्युपादेयत्वप्रयोजकं प्रमाणमूलत्वमाप्तिमूलत्वं च दर्शयति– **इतीत्यादिना** ।। इत्युक्तरीत्या मया इयं प्रकृता सती निर्दोषा कथा उदिता प्रोक्तेति सम्बन्धः । किं कृत्वा अशेषेभ्यः सर्वेभ्यः पुराणेभ्यः पञ्चरात्रेभ्यः भारताच्च वेदेभ्यो ऋगादिभ्यो महारामायणात् मूलरामायणादपि परस्परविरोधस्य पुराणानां परस्परविरोधस्य हानात् परिहारेण, युक्त्या तर्केण, बुद्धिबलात् प्रज्ञाबलात् विष्णोः प्रसादत एव ।।१२२-१२३।।

**जनार्दनीया–** आचार्याः स्वोक्तग्रन्थस्य प्रामाणिकत्वं दर्शयन्नाहुः– **इत्यशेषेत्यादिना** ।।१२२।।

**ताम्रपर्णीया–** ननु वाल्मीकादौ सीताया एवापहार उच्यते । भवद्भिस्तु सीता प्रतिकृतेति तथा कुम्भकर्णवधानन्तरं त्रिवारमिन्द्रजिद्युद्धकाल एव मकराक्षातिकायादीनां वधस्तत्रोच्यते । भवद्भिस्तु कुंभकर्णवधात् पूर्वमेवेत्यादिविरोध इत्याशङ्कायां परिहरन् रामकथामुपसंहरति– **इत्यशेष इति** ।। **पञ्चरात्रेभ्य इति** ।। बहुवचनमतीतानन्तपञ्चरात्रविवक्षया हरिवंशेष्वितिवदवान्तरसंहिताभेदविवक्षया वा ।।

**चट्टी**– एवं सविस्तरं श्रीरामकथां उक्त्वा स्वोक्तग्रन्थस्य प्रमाणमूलत्वेन आप्तिमूलत्वं दर्शयन्त्याचार्याः– **इतीत्यादिना** ।। परस्परविरोधस्य पुराणेषु विद्यमानपरस्परविरोधस्यैव परिहारादशेषेभ्यः सर्वेभ्यः पुराणेभ्यः पञ्चरात्रेभ्यः एव च । भारताच्चैव वेदेभ्यो ऋगादिभ्यो महारामायणात् मूलरामायणादपि युक्त्या अनुमानेन बुद्धिबलात् प्रज्ञाबलात् विष्णोः प्रसादत एव तत्त्वतो याथातथ्येन निर्णीय अयमेव अर्थ इति निर्णयं कृत्वा बहुकल्पानां महाकल्पावान्तरकल्पादिभेदभिन्नानां कल्पानां अनुसारेण आनुकूल्येन इत्यनेन प्रकारेणेयं सत्कथा विरोधादिदोषरहिता कथा मयोदिता । अभ्युपेयत्वज्ञापनार्थं उक्तमेव विशदयति– **नैकग्रन्थाश्रयादिति** ।। यस्मात् एकग्रन्थाश्रयात् कथा नोदिता । तस्मादत्र कथायां विरुद्धता नाशङ्क्या ।।

**गूढवाक्यार्थ**– पञ्चरात्रेभ्य इतिबहुवचनमवान्तरसंहिताभेदविवक्षया । हरिवंशेष्विवितिवत् ज्ञातव्यम् ।।

**परस्परविरोधस्य हानान्निर्णीय तत्त्वतः ।**
**युक्त्या बुद्धिबलाच्चैव विष्णोरेव प्रसादतः ।।१२३।।**

**वेदाङ्गतीर्थीया**– विष्णोः प्रसादत एव ।।१२३।।

**जनार्दनीया**– परस्परविरोधस्य पुराणेषु विद्यमानपरस्परविरोधस्य हानात् परिहारेण पुराणाद्यशेषग्रन्थेभ्यः युक्त्या अनुमानेन बुद्धिबलात् स्वप्रज्ञाबलात् विष्णोः प्रसादत एव तत्त्वतः याथार्थ्येन निर्णीय अयमेवार्थ इति निर्णयं कृत्वा ।।१२३।।

**अनन्तभट्टीया**– हानात् हानार्थम् ।।१२३-१३९।।

।। इति श्रीमुष्णं अनन्तभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
तन्त्रमालायां(सत्तत्वमालायां) नवमोऽध्यायः ।।

**ताम्रपर्णीया**– हानात् ल्यब्लोपनिमित्ता पञ्चमी । हानं विधाय । बुद्धिबलात् प्रतिभाबलात् । इत्युतेत्यन्वयः ।।१२३।।

**गूढवाक्यार्थ**– हानात् हानं विधाय । ल्यब्लोपनिमित्ता पञ्चमी । बुद्धिवलात् प्रतिभावलात् ।।

**बहुकल्पानुसारेण[१] मयेयं सत्कथोदिता ।**
**नैकग्रन्थाश्रयात् तस्मान्नाऽशङ्क्याऽत्र विरुद्धता ।।१२४।।**

---

१. अथात्र रामकृष्णादिकथाप्रतिपादकेषु पुराणेषु विवादे कल्पभेदेन व्यवस्था कार्या उत न कार्या? अत्र न कल्पभेदेन व्यवस्था इति विदन्तो वदन्ति । 'सृष्टिभेदाद्विरूपं तु कथा पञ्चोत्तरं शतम् । वैरूप्यमन्यद्विज्ञेयं तात्पर्यान्मोहनाय च ।।' इति स्कान्दे । 'ऋते तु पाण्डवकथां कार्ष्ण्यं रामायणं तथा । विष्णोर्ब्रह्मादिनां चैव...

**वेदाङ्गतीर्थीया–** अत्युपादेयत्वज्ञापनार्थं उक्तमेव विशदयति– **नैकग्रन्थाश्रयादिति** ।।१२४।।

---

... क्रमाद्व्यत्यस्तशक्तिताम् ।। एतदापादकं चान्यदृते कल्पादिभेदतः । कथाभेदस्तु विज्ञेयो मोहायैतेषु भिन्नता ।।' इति वाराहे ।। इति भागवततात्पर्यवचनप्रामाण्यात् रामकथायां कृष्णकथायां पाण्डवकथायां तथा विष्णोः सकाशात् ब्रह्मादीनां तारतम्यमनुसृत्य शक्त्यादिगुणवत्वप्रतिपादकं यद्वचनजातं तदृते यः कथाभेदः सृष्टिविषयः सः कल्पादिभेदतः । आदिपदेन सन्निधानं गृह्यते । कल्पभेदमपेक्ष्य सन्निधानमपेक्ष्य च विज्ञेयः । एतेषु पाण्डवकथादिरूपेषु भिन्नता सिद्धान्तविरुद्धार्थप्रतीतिर्मोहायैवेत्यर्थः । तथाच उपर्युदाहृतवचनेषु विचारितेषु रामकृष्णपाण्डवकथादिषु विवादे सति न कल्पभेदेन व्यवस्था । अपि तु पूर्वकथासम्बन्धिषु पुराणान्तरवाक्येषु दैत्यमोहनायैव भिन्नता [सिद्धान्तविरुद्धार्थप्रतीतिः] सिद्धान्तविरुद्धार्थप्रतिपादकता दृश्यत इत्यर्थः । तत्रैवं शङ्का । पुराणवाक्येषु विरोधे यदि न कल्पभेदव्यवस्था तदा निर्णयवचनविरोधः । 'परस्परविरोधस्य हानान्निर्णीय तत्वतः । युक्त्या बुद्धिबलाच्चैव विष्णोरेव प्रसादतः ।। बहुकल्पानुसारेण मयेयं सत्कथोदिता । नैकग्रन्थाश्रया तस्मात् नाशङ्क्यात्र विरुद्धता ।। 'वस्तुतः प्रतिकल्पं प्रवृत्तासु कथासु भेदः अस्त्येव तथापि वयं विष्णोः प्रसादतः स्वप्रतिभाबलेन च [अनुसारेण] आनुकूल्येन बहुकल्पेषु प्रवृत्तभिन्नभिन्नकथायाः यथा विरोधो न भवेत् तथा सङ्कलय्य इमां कथां अब्रूम' इति हि निर्णयवचनार्थः । तथाच निर्णयवाक्यादेव पुराणान्तरेषु व्यत्यासेन ग्रथिता कथा कल्पभेदेन प्रवृत्तेति ज्ञायते । तेन तात्पर्यवचनस्य निर्णयवचनविरोधो स्फुट एव । अपि च 'वर्तमाने तु यद्वृत्तं कल्पे यदुकुलोद्भव । रामस्य चरितं बद्धं तदा वाल्मीकिना शुभम् ।। अतीतकल्पे यद्वृत्तं मया तत्काम्यके वने । युधिष्ठिराय कथितं धर्मपुत्राय पार्थिव ।। कल्पानां सति सादृश्ये भेद एष तवेरितः ।।' इति विष्णुधर्मोत्तरवचनम् १खं.८१.२५-२७. । तथा स्कान्दे 'कदाचिद्धनुषा सेतुः कदाचिद् विशिखेन तु । दार्वादिना कदाचित्तु कल्पे कल्पे व्यवस्थितिः ।।' इत्यादिपुराणवचनमपि तात्पर्योक्तप्रमेयविरोधि ।

तथाच तात्पर्यवचन-निर्णयवाक्यविरोधपरिहाय यथाप्रज्ञं अस्माभिः प्रयत्यते । 'कल्पादिभेदतः । कथाभेदस्तु' इति तात्पर्यवचने यः कथाभेदः सृष्टिविषयः सः कल्पभेदं सन्निधानमपेक्ष्य च विज्ञेय इति वाक्यार्थः । तुशब्दस्तु विशेषार्थं द्योतयति । तथाहि न केवलं सृष्टिविषयः कथाभेदः कल्पभेदमपेक्ष्य विज्ञेय अपि तु रामकृष्णपाण्डवचरित्रप्रतिपादकपुराणवाक्येष्वपि [सिद्धान्ताविरुद्धो]तारतम्याविरोधी यः कथाभेदः सोऽपि कल्पभेदमपेक्ष्य विज्ञेयः । यथा अहल्योद्धारप्रसङ्गे पुराणेषु क्वचित् 'पादस्पर्शात् शुभाऽभवत्' 'दर्शनमात्रेण अहल्यामपापां चकार' इति क्वचित् । यथा सीतापहारकाले क्वचित् वेदवतीं निनायेति क्वचित् सीताकृतिमेव निनायेति । तथाच एवं सिद्धान्ताविरुद्धेषु प्रमेयविशेषेषु विवादे कल्पभेदेन व्यवस्था कर्तुं शक्या इति सम्भाव्यते । यत्र तु सिद्धान्तविरुद्धार्थः प्रतिपाद्यते यथा भारते 'लक्ष्मणः कुम्भकर्णं जघान' इत्यादि तत्र न कल्पभेदेन व्यवस्था अपि तु पुरुषव्यत्यासादिना तद्वचनं अर्थान्तरे नेयम् । मधुसूदनभिक्षवोपि सम्प्रतिपन्ना अत्र । ...भारतादिकं तु 'दशमासाब्द' इति पक्षान्तराभिप्रायेण कल्पान्तरव्यवस्थया वा प्रवृत्तमिति न विरोधः । एवमुत्तरत्राप्यूह्यम् । अत एवोत्तरत्र तदादिशङ्कायां तत्परिहारार्थं 'बहुकल्पानुसारेण मयेयं सत्कथोदिता । नैकग्रन्थाश्रयात्तस्मान्नाशंक्यात्र विरुद्धता ।।' इति वक्ष्यतीति एतद्विशेषसूचनार्थमेव तुशब्द इति बोध्यम् ।।''
इति ।

**वरदराजीया–** बहुकल्पानां महाकल्पावान्तरकल्पादिभेदभिन्नानां अनुसारेण तदनुसारेणेत्यर्थः । तत्त्वतो याथातथ्येन निर्णीय एवमेव नान्यथेति निर्णयं कृत्वेत्यर्थः । उदितेति सम्बन्धः । अशेषपुराणेभ्य इत्यादेर्व्यावर्त्यमाह– **नैकग्रन्थाश्रयादिति** ।। एकग्रन्थाश्रयान्निर्णयस्तु न कृतः । तस्मात् कारणात् अत्र मयोक्तायां कथायां एकग्रन्थत विरुद्धता नाशंक्या ।।१२४।।

**जनार्दनीया–** बहुकल्पानां महाकल्पाद्यवान्तरकल्पानां अनुसारेण अनुकूल्येन इति । अनेन प्रकारेण इयं सत्कथा विरोधादिदोषरहिता कथा मया उदिता । अभ्युपादेयत्वज्ञापनार्थमुक्तमेव विशदयति– **नैकग्रन्थाश्रयादिति** ।। यस्मादेकग्रन्थाश्रयात् कथा नोदिता । तस्मादत्र कथायाम् ।।१२४।।

**ताम्रपर्णीया–** एकग्रन्थाश्रयादेकग्रन्थमनुसृत्य मानादित्यर्थः । इति यस्मात्तस्मादत्र अस्मदुक्तार्थे एकग्रन्थाश्रयाद्विरुद्धता नाशङ्क्येत्यर्थः ।।१२४।।

**क्वचिन्मोहायासुराणां व्यत्यासः प्रतिलोमता ।**
**उक्ता ग्रन्थेषु तस्माद्धि निर्णयोऽयं कृतो मया ।।१२५।।**

**व्यासतीर्थीया–** उपक्रमादियुक्त्या किमर्थमियं कथोदितेत्यतः पूर्वं क्वचिद्ग्रन्थानित्यादिनोक्तमेकदेशेन स्मारयन्नाह– **क्वचिदिति** ।।१२५।।

**वेदाङ्गतीर्थीया–** निर्णयः अयमत्रोक्तः ।।१२५।।

**वरदराजीया–** कुतः बहुग्रन्थविरुद्धत्वेन तस्यैकस्य ग्रन्थस्यासुरमोहनार्थं रीत्यन्तरेण प्रवृत्तत्वकल्पनादित्याह– **क्वचिदिति** ।। क्वचिद् ग्रन्थे पुराणेषु व्यत्यासः पुंव्यत्यासः कालव्यत्यास इत्यनेकभेदभिन्नो व्यत्यास उक्तः । तथा प्रतिलोमता उक्ता । प्रातिलोम्यं उत्पत्तिक्रमेण वक्तव्यस्य संहारक्रमेण प्रतिपादनमित्यादिरूपमुक्तमिति भावः । कुतः असुराणां दुष्टानां मोहनाय विपरीतज्ञानजननार्थम् । तस्मादस्मदुक्तकथाया निर्णीतानेकग्रन्थमूलत्वात् अनिर्णीतप्रकारान्तरप्रवृत्तैकग्रन्थविरोधः नाशङ्कनीय इति भावः । एतत्प्रदर्शनार्थमेव मया निर्णयः कृत इत्याह– **तस्मादिति** ।।१२५।।

**जनार्दनीया–** निर्णयप्रयोजनमाह– **क्वचिदिति** ।। ग्रन्थेषु भारतादिषु क्वचिद्भागे व्यत्यासः कालव्यत्यासपुरुषव्यत्यासादिनानाप्रकारो व्यत्यासः । उक्त इति शेषः । प्रतिलोमता वक्तव्यार्थे अन्यार्थकथनं प्रतिलोमता उक्ता यस्मात् तस्मात् अयं एतद् ग्रन्थोक्तः । तस्मान्निर्णयस्य वहुग्रन्थाश्रयत्वादसुरमोहनार्थं एकग्रन्थोक्तो विरोधो न शङ्कनीय इति भावः ।।१२५।।

**ताम्रपर्णीया–** ननु पञ्चरात्रभारतरामायणेभ्य एवार्थसिद्धेर्भवदीयग्रन्थवैयर्थ्यमित्यत आह– **क्वचिदिति** ।। व्यत्यासः पुंव्यत्यासः कालव्यत्यासश्च । प्रतिलोमता कथाक्रमस्य वैलोम्यम् ।।१२५।।

**चट्टी–** निर्णयप्रयोजनमाह– **क्वचिदिति** ।। असुराणां दुष्टानां मोहाय विपरीतज्ञानजननार्थं ग्रन्थेषु भारतादिषु क्वचिद्भागे व्यत्यासः कालव्यत्यासपुरुषव्यत्यासादिनानाप्रकारो व्यत्यासः उक्त इति शेषः । प्रातिलोमता वक्तव्यार्थे अन्यार्थकथनं प्रतिलोमता उक्ता यस्मात्तस्मात् अयं एतद् ग्रन्थोक्तनिर्णयः मया कृतः । तस्मान्निर्णयस्य बहुग्रन्थाश्रयत्वादसुरमोहनार्थं एकग्रन्थोक्तो विरोधो न शङ्कनीय इति भावः ।।

**गूढवाक्यार्थ–** व्यत्यासः पुंव्यत्यासः कालव्यत्यासश्च । प्रतिलोमता यथा कालस्य वैलोम्यं न केवलं कल्पभेदविवक्षया पुराणान्तरप्रवृत्तिः ।...* त्याशयेन व्यत्यासः ।।१२५।।

**एवं च वक्ष्यमाणेषु नैवाऽशङ्क्या विरुद्धता ।**
**सर्वकल्पसमश्चायं पारंपर्यक्रमः सदा ।।१२६।।**

**व्यासतीर्थीया–** यः परावर्यक्रमः सृष्टौ उक्तः अयं सर्वकल्पसमः ।।१२६।।

**वेदाङ्गतीर्थीया–** पारम्पर्यक्रमः सृष्ट्यादिपारम्पर्यक्रमः । सर्वकल्पासाधारण इति सम्वन्धः ।।१२६।।

**वरदराजीया–** अल्पग्रन्थविरोधाशङ्काभावमन्यत्राप्यतिदिशति– **एवमिति** ।। वक्ष्यमाणेषु श्रीवेदव्यास-कृष्णावतारकथाप्रवन्धेष्वपि एवमुक्तरीत्या अनिर्णीतैकग्रन्थविरुद्धता नाशंक्या । उक्तादेव हेतोरिति भावः । अयमत्रोक्तः सृष्टिपरम्पराक्रमः नीचादिपरम्पराक्रमश्च सर्वदा सर्वकाले सर्वकल्पसमः सर्वब्रह्मकल्पे एतेनैव क्रमेण प्रवर्तत इति भावः ।।१२६।।

**जनार्दनीया–** एवं चोक्तप्रकारेण वक्ष्यमाणेषु व्यासाद्यवतारोक्तनिर्णयेषु अयं एतद् ग्रन्थोक्तः सदा सर्वकालेषु पारम्पर्यक्रमः सृष्ट्यादिपारम्पर्यक्रमः सर्वकल्पसमः सर्वकल्पसाधारणः । ब्रह्मकल्पाद्यवान्तर-कल्पाः अत्रोक्तक्रमानुसारिण इति भावः ।।१२६।।

**ताम्रपर्णीया–** एवं च एवमेवेत्युक्तं हेतुं दर्शयति– **सर्वकल्पेति** ।। च हेतौ । यस्मादयं कथापारंपर्यक्रमः सदा नियमेन सर्वकल्पसमः कल्पविशेषमाश्रित्य पुराणान्तरप्रवृत्तिरतोऽस्माभिर्वक्ष्यमाणार्थेषु विरुद्धता न शङ्क्येत्यर्थः ।।१२६।।

**चट्टी–** एवं चोक्तप्रकारेण वक्ष्यमाणेषु व्यासाद्यवतारोक्तनिर्णयेषु विरुद्धता नैव शङ्क्या । अयं अत्रोक्तः पारंपर्यक्रमः सृष्टिपरंपराक्रमः नीचोच्चादिपरंपराक्रमश्च सदा सकलकाले सर्वकल्पसमः । सर्वब्रह्मकल्पसाधारणः ब्रह्मकल्पाद्यवान्तरकल्पाः अत्रोक्तमानानुसारिण इति भावः ।।१२६।।

**पुंव्यत्यासेन चोक्तिः स्यात् पुराणादिषु कुत्रचित् ।**
**कृष्णामाह यथा कृष्णो धनञ्जयशरैर्हतान् ।**
**शतं दुर्योधनादींस्ते दर्शयिष्य इति प्रभुः ॥१२७॥**

**व्यासतीर्थीया–** व्यत्यासः प्रतिलोमतेति यो व्यत्यास उक्तः तं प्रभेदं सोदाहरणं दर्शयन्नाह ॥१२७॥

**वेदाङ्गतीर्थीया–** क्वचित् व्यत्यास उक्त इत्युक्तम् । तत्प्रकारं लेशतो दर्शयति– **पुंव्यत्यासेनेति** ॥

**वादिराजीया–** कृष्णामाह यथा कृष्णो धनञ्जयशरैर्हतानित्यत्र शतं शतसङ्ख्याकान् दुर्योधनादीन् धृतराष्ट्रपुत्रान् धनञ्जयशरैः हतान् ते दर्शयिष्य इति प्रभुः श्रीकृष्णः कृष्णां वनवासकृच्छ्राद्दुःखितां दौपदीं प्रति यथा आह तथा पुंव्यत्यासो ज्ञेयः । भीमसेने वक्तव्ये अर्जुनकथनं पुंव्यत्यासादेव । तदा धनञ्जयपदेन लक्षणया वृत्त्या भीम एव ग्राह्यः । अतो वाक्यानां नाप्रामाण्यमिति ज्ञेयम् ॥१२७॥

**वरदराजीया–** क्वचित् ग्रन्थेषु व्यत्यास उक्त इत्युक्तम् । व्यत्यासं प्रतिज्ञापूर्वकमुदाहरति– **पुंव्यत्यासेनेति** ॥ पुराणेषु कुत्रचित् भागे व्यत्यासेन यथोक्तिः स्यात् । तत्र व्यत्यासोऽनेकधा पुरुषव्यत्यास कालव्यत्यास इत्यादिना । तत्र पुरुषव्यत्यासं उदाहरति– **कृष्णामिति** ॥ यथा प्रभुः कृष्णः कृष्णां द्रौपदीमाह । किमिति । धनञ्जयस्यार्जुनस्य शरैर्हतान् दुर्योधनादीन् शतं भ्रातृन् ते तव दर्शयिष्ये इति । अत्र पुरुषव्यत्यासोऽस्ति । भीमसेनहतानिति वक्तव्ये धनञ्जयहतानित्युक्तम् ॥१२७॥

**जनार्दनीया–** 'क्वचिद् व्यत्यासः' इत्युक्तं समासेनाह– **पुंव्यत्यासेनेति** ॥ क्वचित्कथान्तरे पुंव्यत्यासेन पुरुषव्यत्यासेन उक्तिः स्याद्भवति अस्तीत्यर्थः । तदेवोदाहरति– **कृष्णेति** ॥ कृष्णां द्रौपदीं प्रति ॥१२७॥

**ताम्रपर्णीया–** न केवलं कल्पविशेषविवक्षया पुराणान्तरप्रवृत्तिः किन्तु व्यत्यासादीनाश्रित्य चेत्याशयेन व्यत्यासः प्रतिलोमतेत्येतद्विवृणोति– **पुंव्यत्यासेन चेति** ॥ उदाहरति– **कृष्णामिति** ॥

**चट्टी–** क्वचित् ग्रन्थेषु व्यत्यास इत्युक्तं तं व्यत्यासं प्रतिज्ञापूर्वकमुदाहरति– **पुंव्यत्यासेनेति** ॥ पुराणादिषु कुत्रचित् कथान्तरे पुंव्यत्यासेन पुरुषव्यत्यासेनोक्तिः स्याद् भवति । तदेवाह– **कृष्णेति** ॥ यथा श्रीकृष्णः कृष्णां द्रौपदीमाह । किमिति । धनञ्जयस्यार्जुनस्य शरैर्हतान् शतं शतसङ्ख्याकान् दुर्योधनादीन् ते तव दर्शयिष्ये । अत्र पुरुषव्यत्यासोऽस्ति ॥१२७॥

**गूढवाक्यार्थ–** प्रतिलोमतेत्येतद्विवृणोति– **पुंव्यत्यासेन चेति** ॥ उदाहरति– **कृष्णामिति** ॥१२७॥

**भीमसेनहतास्ते तु ज्ञायन्ते बहुवाक्यतः ।**
**विस्तारे भीमनिहताः सङ्क्षेपेऽर्जुनपातिताः ।**
**उच्यन्ते बहवश्चान्ये पुंव्यत्याससमाश्रयात् ॥१२८॥**

**व्यासतीर्थीया–** शतं दुर्योधनादयो धनञ्जय हता इति तत्त्वं किं न स्यादित्यत आह– **भीमेति** ॥ दुर्योधनादीनां भीमनिहतत्वे सम्भावनां चाह– **विस्तार इति** ॥ सङ्कोचे ग्रन्थे उक्तमर्जुनपातित्वं कथमतत्त्वमित्यतो असुरमोहनार्थं सङ्कोचग्रन्थानि इत्यर्थोक्तेः सम्भावितत्वादिति भावः । एवं पुंव्यत्यासो दिङ्मात्रदर्शनार्थं प्रदर्शितः । अन्येऽपि पुंव्यत्यासाः बहवः सन्तीत्याह– **बहव इति** ॥१२८॥

**वेदाङ्गतीर्थीया–** पुंव्यत्याससमाश्रयात् अन्ये बहवश्च ॥१२८॥

**वादिराजीया–** तर्हि कथं निर्णय इत्यत उक्तम्– **बहुवाक्यत इति** ॥ भारतयुद्धसमये एकैक वधे सति भीमेन हतो भीमेन हतः इति बहुवाक्यनुसारत इत्यर्थः । ये शतं दूर्योधनाद्याः भीमसेनेन निहता हि अतो निर्णय इत्यर्थः । तदेव प्रदर्शयति– विस्तार इति ॥ युद्धकथायाः विस्तारे क्रियमाणे सति भीमनिहता एव । प्रासङ्गिकतया कथासङ्क्षेपे क्रियमाणे सति अर्जुनपातिता इत्युच्यते । अद्यापि हि शूराः पुरुषा बहुसेनयां समागतायामपि सभायां फूत्कारेणैव जेष्याम इति वदन्ति । युद्धसमये तु शरसङ्घातैरेव मारयन्ति । अत इयं कथा नापूर्वेति भावः । विस्तारे कृष्णनिहता इत्युच्यन्ते । क्वचित्सङ्क्षेपेण कथने बलभद्रहता इत्युच्यन्ते । एवमन्ये बहवश्च पुंव्यत्याससमाश्रयादुच्यन्त इति योजना । क्वचित्कालव्यत्यसो भवेत् भीमः कृष्णसन्निधौ सुयोधनं प्राहसदिति यथा । एवमाद्याः कथा बहुवाक्येषु निर्णयात् निश्चित्य कथनात् निर्णीयन्ते । अनिर्णये तु एकेनैव वाक्येन क्वचित्प्रसङ्गात् कथने कृष्णस्य गतिः तत कालव्यत्यासात् पूर्वमेवोक्ता । उत्तरकालीनस्य पूर्वकालीनत्वकथनं कालव्यत्यासः । तदा गङ्गापदेन तीरमिव पूर्वपदेनापरकालो लक्ष्यते । अतो वाक्यस्य च नाप्रामाण्यम् । प्रातिलोम्यादय इत्यत्र प्रातिलोम्यपदेन औत्तरकथायाः पूर्वं कथनमुच्यते । यथा दक्षिणगोग्रहणात् पूर्वं उत्तरगोग्रहणस्य कथनम् । पूर्वं पश्चादिति कालवाचकशब्दं विना केवलमुत्तरकथामात्रस्य पूर्वं कथने प्रातिलोम्यमित्युच्यते । कालवाचकपदाभावेन कालव्यत्यासानवकाशात् । उच्यमानकथायाः सत्त्वेन वाक्यस्य च नाप्रामाण्यम् । नापि ग्रन्थस्याकौशल्यम् । बहुज्ञं प्रति विस्तृतोत्तरकथायाः पूर्वं कथने प्राचीनाल्पकथायाः तन्न्यायेनैवातिदेशमात्रादपि ज्ञानसम्भवाभिप्रायेण प्रातिलोम्यकरणसम्भवात् । क्वचिदल्पज्ञानां बुद्धिमनुकूलयितुं सूचिकटाहन्यायेन अल्पाया अप्यौत्तरकथायाः पूर्वं कथनसम्भवाच्च ॥१२८–१३०॥

**वरदराजीया–** धनञ्जयहता एव किं न स्युः किं पुरुषव्यत्याससमाश्रयेणेत्यत आह– भीमेति ॥ ते दुर्योधनादयो भीमसेनहता इति बहुवाक्यतो बहुवाक्येभ्यो ज्ञायते हि यस्मात् तस्मात् धनञ्जयहतानिति

वाक्यस्यैकत्वेन दुर्लभत्वात् पुरुषव्यत्यासेनेरितमिति निश्चीयते । भीमहता इति बहुवाक्येषु प्रतीयमानत्वात् बहुत्वे प्राबल्यात् प्रतीयमान एवार्थे प्रामाण्यं निश्चीयत इत्याशयेनाह– **विस्तार इति** ।। विस्तारे बहुवाक्य इत्यर्थः । भीमहता उच्यंते । संक्षेपे संक्षिप्ते एकस्मिन् अल्पे वाक्ये अर्जुनपातिता उच्यन्ते । अतो दौर्बल्यात् व्यत्याससमाश्रयणमित्यर्थः । एवमन्यत्रापीति । बहवोऽर्था पुंव्यत्याससंश्रयेण प्रवृत्ताः सन्तीत्याह– **बहव इति** ।।१२८।।

**जनार्दनीया–** तथा किं न स्यादित्यत आह– **भीमेति** ।। ते दुर्योधनादयः । बहुग्रन्थवाक्येभ्यो भीमनिहता इति ज्ञायन्ते । निश्चयार्थं उक्तमेवार्थमाह– **विस्तार इति** ।। विस्तारे बहुग्रन्थेष्वित्यर्थः । सङ्क्षेपे क्वचिदेकमते ग्रन्थ इत्यर्थः । तस्मात् बहूक्तेः प्रमाणत्वादल्पोक्तं व्यत्यास इत्यवगन्तव्यं इति निर्णयः । एवमेव अन्ये बहवः पुरुषाः पुंव्यत्याससमाश्रयादुच्यन्ते । अन्ये अर्था वा ।।१२८।।

**ताम्रपर्णीया–** कथमयं पुंव्यत्यास इत्यत आह– **भीमसेन हता इति** ।। बहुवाक्यतः दुर्योधनाद्याः शतं भीमसेनहताः इति बहुवाक्यतः । यद्वा भारतयुद्धसमये दुर्योधनादिष्वेकैकवधप्रस्तावे भीमेन दुर्योधनो हतः भीमेन दुःशासनो हत इत्यादि बहुवाक्यत इत्यर्थः । एतदेव विशदयति– **विस्तार इति** ।। युद्धकथायाः विस्तारे क्रियमाणे सति भीमनिहता एव प्रासङ्गिकतया कथासङ्क्षेपे क्रियमाणे अर्जुनपातिता उच्यन्ते इत्यर्थः ।। उच्यन्ते बहवः इति ।। अन्ये बहवोऽप्यर्थाः पुंव्यत्याससमाश्रया उच्यन्ते इत्यर्थः ।।

**चट्टी–** भीमसेनहता इति वक्तव्ये धनञ्जयहतानित्युक्तम् । धनञ्जयहता एव किं न स्युः इत्यत आह– **भीमेति** ।। ते दुर्योधनादयो भीमसेनहता इति बहुवाक्यतो बहुग्रन्थस्थवाक्येभ्यो ज्ञायते हि । निश्चयार्थं उक्तमेवार्थमाह– **विस्तार इति** ।। विस्तारे बहुग्रन्थेष्वित्यर्थः । भीमनिहता इत्युच्यन्ते । सङ्क्षेपे क्वचिदेकतमे ग्रन्थ इत्यर्थः । अर्जुनपातिता इत्युच्यन्ते । तस्मात् बहूक्तस्य प्रमाणत्वात् अल्पोक्तस्य व्यत्यास इत्यवगन्तव्यम् । एवमेव अन्ये बहवो अर्थाः पुंव्यत्याससमाश्रयादुच्यन्ते ।।१२८।।

**गूढवाक्यार्थ–** दुर्योधनाद्याः शतं भीमेन हता इति बहुवाक्यतः । हि यस्मात् धनञ्जयहताविति वाक्यस्य एकत्वेन दुर्बलत्वात् पुरुषव्यत्यासेनोक्तिरिति निश्चीयते ।।१२८।।

**विस्तारे कृष्णनिहता बलभद्रहता इति ।**
**उच्यन्ते च क्वचित् कालव्यत्यासोऽपि क्वचिद् भवेत् ।।१२९।।**

**व्यासतीर्थीया–** अन्येऽपि पुंव्यत्यासाः सन्तीति वचनमात्रमिति भावेन यथा कृष्णनिहता बलभद्रहता उच्यन्ते इति व्यत्यासं हृदि निधाय तस्य व्यत्यासत्वं समर्थयते– **विस्तारेति** ।।१२९।।

**वेदाङ्गतीर्थीया–** विस्तारे कृष्णनिहताः बलभद्रनिहता इति सङ्क्षेप इति शेषः । क्वचिदुच्यते ।।

**वरदराजीया–** एवं पुंव्यत्यासमुदाहृत्य कालव्यत्यासमप्युदाहर्तुमाह– **कालेति** ।। क्वचिद्वाक्येषु कालव्यत्यासोऽपि भवेत् । यथा विस्तारे बहुवाक्येषु कृष्णनिहता इत्युक्ताः क्वचित्सङ्क्षेपे अल्पवाक्ये बलभद्रहता उच्यन्ते [तत्रापि बहुधा अल्पैर्वाक्यैः] पुंव्यत्यासः समाश्रियत इति भावः ।।१२९।।

**जनार्दनीया–** अन्य इत्युक्तं सङ्क्षेपेणाह– **विस्तार इति** ।। बलभद्रहताः सङ्क्षेप इति शेषः । इत्यादि पुरुषव्यत्यासा उच्यन्त इत्यर्थः । क्वचिद् ग्रन्थे क्वचिदर्थे ।।१२९।।

**ताम्रपर्णीया–** नैतत्तूष्णीं सम्भावनया अतिदेशमात्रमिति मन्तव्यमित्याशयेनोदाहरति– **विस्तार इति** ।। विस्तारे कृष्णनिहता एव क्वचित् सङ्क्षेपेण कथने बलभद्रहता इत्युच्यत इत्यर्थः ।।१२९।।

**चट्टी–** अन्य इत्युक्तं सङ्क्षेपेणाह– **विस्तार इति** ।। विस्तारे बहुवाक्येषु कृष्णनिहता इत्युक्ताः क्वचित् सङ्क्षेपे अल्पे वाक्ये बलभद्रहता इत्युच्यन्ते । अत्रापि बहुवाक्याल्पवाक्यपर्यालोचनया पुंव्यत्यासेन निर्णयः कर्तव्य इति भावः । एवं पुरुषव्यत्यासं उदाहृत्य कालव्यत्यासमुदाहर्तुं आह– **कालेति** ।। क्वचिद् ग्रन्थे क्वचिदर्थे कालव्यत्यासो भवेत् ।।१२९।।

**गूढवाक्यार्थ–** भीमहत इति बहुवाक्येषु प्रतीयमानत्वात् बहुत्वेन प्राबल्यात् प्रतीयमानार्थे प्रामाण्यं निश्चीयत इत्याह– **विस्तार इति** ।। विस्तारे बहुवाक्यविस्तारे बहुवाक्येष्वित्यर्थः । भीमनिहता उच्यन्ते सङ्क्षेपे सङ्क्षिप्त एकस्मिन् वाक्ये अतः दौर्बल्य...* समाश्रयणमित्यर्थः । विस्तारे युद्धकथाविस्तारे क्रियमाणे सति भीमनिहता एव । प्रासङ्गिक...* कथासङ्क्षेपे क्रियमाणे सति अर्जुनपातिता उच्यन्त इत्यर्थः ।।१२९।।

**यथा[१] सुयोधनं भीमः प्राहसत् कृष्णसन्निधौ ।**
**इति वाक्येषु बहुषु ज्ञायन्ते निर्णयादपि ।**
**अनिर्णये तु कृष्णस्य पूर्वमुक्ता गतिस्ततः ।।१३०।।**

**व्यासतीर्थीया–** कालव्यत्यासमुदाहरणपूर्वं प्रतिपादयन्नाह– **यथेति** ।। निर्णयग्रन्थादपि । ततो हासावसरात् पूर्वं कृष्णस्य गतिरुक्ता । देशव्यत्यासः स्वयं तत्र तत्र द्रष्टव्य इति भावः । ।१३०।।

---

१. तत्र मां प्राहसत् कृष्णः पार्थेन सह सुस्वरम्। द्रौपदी च सह स्त्रीभिर्व्यथयन्ती मनो मम ।। इति धृतराष्ट्रं प्रति दुर्योधनवचनं (सभा.५०.३०- नाग.पब्लिकेशन् पुस्तके) जहास भीमस्तं दृष्ट्वा स्त्रियो भूपाश्च केचन । निर्वार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ।। इति भाग,१०.८४.४ इत्यादिबहुभिः वाक्यैः कृष्णसन्निधौ भीमः दुर्योधनं जहास इति ज्ञायते ।

**वेदाङ्गतीर्थीया–** ततः हासकालात् पूर्वम् ।।१३०।।

**वरदराजीया–** यथा भीमः कृष्णसन्निधौ सभायां कृष्णे विद्यमान एव स्थलभ्रान्त्या जले पतितं सुयोधनं प्राहसदिति बहुवाक्येषु निर्णयाद्धेतोः कथ्यते निश्चीयते । अनिर्णये निर्णयरहिते अल्पवाक्ये ततः भीमकृतापहासात् पूर्वमेव कृष्णस्य द्वारकां प्रति गतिरुक्ता कृष्णगमनात् पूर्वकालं कृष्णे विद्यमान एव भीमः प्राहसदिति बहुवाक्येषु निर्णयात् कृष्णगमनोत्तरकालं प्राहसदित्यर्थप्रतिपादकमल्पत्वेन दुर्बलत्वात् कालव्यत्यासेन प्रकृतमिति निश्चीयत इति भावः ।।१३०।।

**जनार्दनीया–** तदेवाह– **यथेति** ।। अनिर्णये ग्रन्थे । कृष्णस्य गतिः गमनं पूर्वं हासात् पूर्वं उक्ता । अनिर्णये इन्द्रप्रस्थात् द्वारकां प्रति साल्ववधार्थं कृष्णे गते भीमो जले पतितं दुर्योधनं प्राहसदिति कालव्यत्यासोऽस्तीति भावः ।।१३०।।

**ताम्रपर्णीया–** कालव्यत्यासोऽपि कालव्यत्यासेनोक्तिरपि उदाहरति– **यथेति** ।। राजसूयसभायां भीमः सुयोधनं कृष्णसन्निधौ प्राहसदित्येतत्प्रमेये बहुषु वाक्येषु निमित्तसप्तमीयम् । बहुभ्यो वाक्येभ्यो निर्णयादपि निर्णयग्रन्थतश्च ज्ञायते । अनिर्णीते ग्रन्थे तत्तत्स्थानात् पूर्वमेव गतिरुक्तेत्यर्थः । 'क्वचिन्मोहायासुराणाम्' इति ।।१३०।।

**चट्टी–** तदेवाह– **यथेति** ।। यथा भीमः कृष्णसन्निधौ सभायां कृष्णे विद्यमान एव सुयोधनं प्राहसदिति बहुवाक्येषु निर्णयादपि ज्ञायते । अनिर्णये ग्रन्थे तु ततः इन्द्रप्रस्थात् द्वारकां प्रति कृष्णस्य गतिः गमनं पूर्वं हासात् पूर्वं उक्ता । अत्र कालव्यत्यास इति ज्ञेयम् ।।१३०।।

**भारतश्री–** अनिर्णये ग्रन्थे कृष्णस्य पूर्वं दुर्योधनापहासात् पूर्वं गतिःद्वारकां प्रति गमनम् ।।१३०।।

।। इति श्रीडम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां नवमोऽध्यायः ।।

**गूढवाक्यार्थ–** एतदेव दर्शयति– **विस्तार इति** ।। क्वचित् सङ्क्षेपे कालव्यत्यासोऽपि कालव्यत्यासेनोक्तिरपि । तयोर्यदपि न निर्णयग्रन्थतश्च । एकेनैव वाक्येन अनिर्णये तु एकेनैव वाक्येन क्वचित् प्रसङ्गात् कृष्णस्य गतिः ततः कालव्यत्यासात् पूर्वमेवोक्ता । उत्तरकालस्य पूर्वकालत्वेन कथनं कालव्यत्यासः ।।१३०–१३३।।

**व्यत्यासास्त्वेवमाद्याश्च प्रातिलोम्यादयस्तथा ।**
**दृश्यन्ते भारताद्येषु लक्षणग्रन्थतश्च ते ।**
**ज्ञायन्ते बहुभिर्वाक्यैर्निर्णयग्रन्थतस्तथा ।।१३१।।**

**व्यासतीर्थीया–** एते व्यत्यासाः एते प्रतिलोम्यादय इति कुतोऽवगम्यते इति जिज्ञासायाह– **लक्षणग्रन्थ इति** ।। ज्ञायन्ते व्यत्यासादित्वेनेति शेषः । एवं व्यत्यासादीन् निरूप्य एते व्यत्यासादयो भारतादौ सन्त्यतोऽयं निर्णयः क्रियते इत्याह– **व्यत्यासा इति** ।।१३१।।

**वेदाङ्गतीर्थीया–** भारताद्येषु दृश्यन्ते । ते च व्यत्यासप्रातिलोम्यादयः । लक्षणग्रन्थतः बहुभिर्वाक्यैः ग्रन्थान्तरगतैः बहुभिर्वाक्यैः तथा निर्णयग्रन्थतः निर्णयग्रन्थादपि ज्ञायन्ते व्यत्यासादय इति ज्ञायन्ते ।।

**वादिराजीया–** लक्षणग्रन्थः भारतादीनां गुह्यसमाधिदर्शनाख्यभाषात्रयरीतिशतकादिलक्षणप्रतिपादक-ग्रन्थतः । तथा बहुर्भिवाक्यैः निर्णयग्रन्थतः 'सत्यं सत्यं पुनस्सत्यम्' इति 'न हि विष्णुः प्रणमति कस्मै- चिद्विबुधाय तु' [शान्ति.३५०.२९] इत्यादिवदिदमित्थमेवेति निर्णयग्रन्थतः । तस्माच्च ज्ञायन्ते सन्दिग्धवाक्यार्थाः ज्ञायन्त इत्यर्थः ।।१३१-१३२।।

**वरदराजीया–** एवमाद्या इत्याद्या व्यत्यासास्तथा प्रातिलोम्यादयो भारताद्येषु दृश्यन्ते । ते व्यत्यासाद्याः लक्षणप्रतिपादकग्रन्थे परस्परव्यावृत्तत्वेन ज्ञायंत तथा वहुवाक्यैः निर्णयग्रंथतश्च अत्र व्यत्यासादयः सन्तीति ज्ञायन्ते ।।१३१।।

**जनार्दनीया–** तथा एवमाद्याः पूर्वमुक्ताः गतिरित्याद्याः व्यत्यासाः तथा प्रातिलोम्यादयश्च भारताद्येषु ग्रन्थेषु दृश्यन्ते । ते व्यत्यासप्रातिलोम्यादयः । लक्षणग्रन्थतः व्यासोक्तलक्षणग्रन्थात् तथा वहुभिर्वाक्यैः ग्रन्थान्तरगतसद्वाक्यैः तथा निर्णयग्रन्थतः निर्णयरूपब्रह्मसूत्रपञ्चरात्रादिनिर्णयग्रन्थात् ज्ञायन्ते । व्यत्यासप्रातिलोम्यादय इति शेषः । यस्मादत्र व्यत्यासादयः सन्तीति भावः ।।१३१।।

**ताम्रपर्णीया–** यत्स्वक्रियमाणनिर्णयस्य सार्थक्यमुक्तं तदुपपाद्योपसंहरति– **व्यत्यासास्त्विति** ।। व्यत्यासादिपरिज्ञानोपायमाह– **लक्षणग्रन्थत इति** ।। **तस्मादिति** ।। यस्माद्भारताद्येषु दृश्यन्ते तस्मादित्यर्थः ।।१३१-१३२।।

**चट्टी–** तथा एवमाद्या व्यत्यासास्तथा प्रातिलोम्यादयश्च भारताद्येषु ग्रन्थेषु दृश्यन्ते । ते व्यत्यासाद्याः लक्षणप्रतिपादकग्रन्थे परस्परव्यावृत्तत्वेन ज्ञायन्ते । तथा बहुभिः वाक्यैर्निर्णयग्रन्थतश्च अत्र व्यत्यासादयः सन्तीति ज्ञायन्ते ।।१३१ ।।

**गूढवाक्यार्थ–** ते व्यत्यासाद्याः लक्षणग्रन्थतः लक्षणप्रतिपादकग्रन्थतः । ... व्यत्यासादयः सन्तीति ज्ञायते ।।१३१।।

**तस्माद् विनिर्णयग्रन्थानाश्रित्यैव च लक्षणम् ।**
**बहुवाक्यानुसारेण निर्णयोऽयं मया कृतः ।।१३२।।**

**व्यासतीर्थीया–** तस्माद् व्यत्यासादिदोषदुष्टत्वाद्भारतादेः लक्षणग्रन्थं चाश्रित्य ।।१३२।।

**वरदराजीया–** तस्माद्विनिर्णयग्रन्थान् आश्रित्य लक्षणं लक्षणशास्त्रं च आश्रित्य बहुवाक्यानुकूल्येन च अयं निर्णयो मया कृत इत्यर्थः ।।१३२।।

**जनार्दनीया–** तस्मात् निर्णयग्रन्थाल्लक्षणं चाश्रित्य । बहुवाक्यानामनुसारेण आनुकूल्येन अयमत्रोक्तो निर्णयः ।।१३२।।

**गूढवाक्यार्थ–** ।। **तस्मादिति** ।। यस्मात् भारताद्येषु दृश्यन्ते तस्मादित्यर्थः । लक्षणं लक्षणशास्त्रे उक्तश्चेत्यन्वयः ।।१३२।।

**उक्तं लक्षणशास्त्रे च कृष्णद्वैपायनोदिते ।**
**त्रिभाषां[1] यो न जानाति रीतीनां शतमेव च ।।१३३।।**

**व्यासतीर्थीया–** ननु सन्तु भारताद्येषु व्यत्यासादयस्तथा यादृशतादृशतद्व्याख्यानादिनेष्टं सिद्ध्येदित्यभिप्रायं प्रत्याह– **उक्तमिति** ।। अनिष्टमिति शेषः । तत्रत्यमनिष्टप्रतिपादकं वाक्यं पठति– **त्रिभाषामिति** ।। तथा प्रतीत्यनुसारेण ।।१३३।।

**वेदाङ्गतीर्थीया–** विनिर्णयग्रन्थादीनाश्रित्य निर्णयः कृत इत्युक्तम् । विनिर्णयग्रन्थाद्यपेक्षा निर्णयस्य कुत इत्यत आह– **उक्तमिति** ।।१३३।।

**वादिराजीया–** तत्र लक्षणग्रन्थमुदाहरति– **उक्तमिति** ।। त्रिभाषां समाधिभाषां गुह्यभाषां दर्शनभाषां चेति त्रिभाषाम् । स्पष्टं सर्वैर्यथा ज्ञायते तथा कथनं समाधिभाषा । यथा 'नास्ति नारायणसमं न भूतं न भविष्यति' इत्यादिकम् । अर्थं निगूह्य कथनं गुह्यभाषा । यथा 'नदीज लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः' [विराट.४०.११] इत्यादिकम् । हे नदीज भीष्म लङ्केशवनस्य अरिर्हनुमान्केतौ यस्य सः अर्जुनः इत्यस्यार्थस्य निगूहनात् गुह्यभाषेत्यर्थः । पाशुपतादिदर्शनामाश्रित्य कथनं दर्शनभाषा । यथा शान्तिपर्वाणि रुद्रं प्रति कृष्णस्य तपश्चरणादिकथा । रीतीनां शतमेव चेत्यत्र मृदुपदाक्षरविन्यासो वैदर्भीरीतिः । यथा 'वायवा याहि दर्शतेमे सोमा' [ऋ.१.२.१] इत्यादिका । कठोराक्षरपदविन्यासो गौडी

---

१. भाषात्रयं विज्ञायैव वेदपुराणाद्यर्थो विवेचनीय इति पुराणेष्वेवोच्यते । तथाहि नारदीये श्रीमुष्णमाहात्म्ये एकादशाध्याये । 'वेदे च लौकिके चैव कोविदाः सारवेदिनः । भाषात्रयविवेकज्ञा मीमांसान्यायकोविदाः ।। ९९ ।। उपक्रमादिभिर्लिङ्गैः निर्णयार्थं च छन्दसाम् । वदन्ति लोके रक्षायै नष्टधर्मप्रवर्तकाः ।। १०० ।।'

मन्त्रयोगसंहितायामपि– तन्त्रेषु च पुराणेषु भाषायास्त्रिविधां सृतिम् । सम्यग्भेदैर्विजानाति भाषातत्त्वविशारदः ।। निर्गुणो लोकशिक्षायां श्रेष्ठाचार्यस्स उच्यते ।।' ७-८श्लो ।

रीतिः । यथा 'सृण्येव जर्भरी तुर्फरी' [ऋ.१०.१०६.६] इत्यादिका । तथा स्वस्य केनचित् व्युत्पन्नेन पुरुषेण अकृतत्वद्योतनाय वेदे छन्दःसमानत्वद्योतनाय वैदिके च अप्रसिद्धपदकीर्तनम् । यथा उक्तैव ऋक् । क्वचित्कर्तव्यसन्धेरकरणम् । यथा अयस्मयादीनि । रुत्वविसर्गादिरकरणात् । क्वचित्सुपो लोपः यथा– 'परमे व्योमन्' इत्यादि क्वचिद्विभक्तेरव्ययस्य वा डादेशः । यथा 'द्वासुपर्णा सयुजा सखाया' [ऋ.१.१६४.२०] 'बळित्था तद्वपुषे' [ऋ.१.१४१.१] 'कतमस्वित्कथासीत्' इत्यादयो वेदे वैदिकग्रन्थे च रीत्यादयो ज्ञेयाः । यथा वाक्ये अस्ति तथा वदेत् 'आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' इत्यादिवाक्यमनालोच्य 'अग्निमीळे पुरोहितम्' इत्यादेः केवलाग्निपरतामेव वदेदित्यर्थः ।।१३३।।

**वरदराजीया–** निर्णयग्रन्थाद्यपरिज्ञानेऽपि शास्त्रे निर्णयकरणाय करणे महाननर्थोऽस्ति इत्यत्र श्रीवेदव्यासवाक्यमुदाहर्तुं प्रतिजानीते– **उक्तमिति** ।। कृष्णद्वैपायनेन श्रीवेदव्यासेन ईरिते प्रोक्ते लक्षणशास्त्रे उक्तं चेत्यर्थः । तद्वाक्यमुदाहरति– **त्रिभाषामित्यादिना** ।। यः पुरुषः त्रिभाषां समाधिदर्शनगुह्यभाषात्रयं रीतीनां शतं तथा व्यत्यासादीन् सप्तभेदांश्च न जानाति । यश्च पुरुषः तथा अज्ञात्वैव वेदाद्यर्थं वेदपुराणाद्यर्थान् वदेत् । सः अन्यथाज्ञानसंभवं विपरीतज्ञानपरिप्राप्तं घोरं भयानकं निरयं नित्यनिरयं व्रजेदिति पूर्वेणान्वयः । अन्येषु च शास्त्रेषु तत्र तत्र बहूदितं एवमेवोक्तं अस्तीत्यर्थः ।।

**जनार्दनीया–** निर्णयग्रन्थादीननपेक्ष्यैव कृतो निर्णयो निरयप्राप्तिहेतुरित्याह– **उक्तमित्यादिना** ।। यः पुरुषः त्रिभाषां समाधिर्दर्शनं गुह्येति तिसृणां भाषाणां लक्षणम् । 'स्थितप्रज्ञस्य का भाषा' [गी.२.५४] इतिवत् । रीतीनां व्याख्यानप्रकारविशेषाणां शतानि ।।१३३।।

**ताम्रपर्णीया–** निर्णयकरणे व्यत्यासादिपरिज्ञानेनावश्यं भाव्यमित्यत्र प्रमाणमाह– **उक्तमिति** ।।

**चट्टी–** तस्मात् विनिर्णयग्रन्थानाश्रित्य लक्षणं लक्षणशास्त्रं चाश्रित्य बहुवाक्यानामनुसारेण आनुकूल्येन अयं निर्णयो मया कृतः । निर्णयग्रन्थाद्यपरिज्ञानेन कृतो निर्णयः निरयप्राप्तिहेतुरित्याह– **उक्तमित्यादिना** ।। कृष्णद्वैपायनेरिते प्रोक्ते लक्षणशास्त्रे उक्तं चेत्यर्थः । तद्वाक्यमुदाहरति– **त्रिभाषामिति** ।। यः पुरुषः त्रिभाषां समाधिदर्शनगुह्यभाषात्रयं रीतिनामानो ग्रन्थविशेषाश्च तेषां शतं च शतसङ्ख्याकाः रीतयः इत्यर्थः । व्यत्यासादीन् सप्तभेदांश्च न जानाति अज्ञात्वैव वेदाद्यर्थं वेदपुराणाद्यर्थं यो वदेत् सः अन्यथाज्ञानात् विपरीतज्ञानात् सम्भवं उत्पन्नं घोरं भयङ्करं निरयं नित्यनिरयं याति इत्युक्तमिति पूर्वेणान्वयः ।।१३३।।

**भावचन्द्रिका–** रीतिपदस्य गोमूत्र्यादिपदस्य च वादिराजीयेऽर्थो द्रष्टव्यः ।।१३३-१३८।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावचन्द्रिकायां नवमोऽध्यायः ।।

**गूढवाक्यार्थ–** तद्वाक्यमुदाहरति– **त्रिभाषामित्यादिना** ।। समाधिभाषां गुह्यभाषां दर्शनभाषाश्चेति त्रिभाषाम् । स्पष्टतया कथनं समाधिभाषा यथा 'नास्ति नारायणसमम्' इत्यादि । अर्थं विगूह्य कथनं गुह्यभाषा यथा 'नदीज लङ्केशवनारिकेतुः' इत्यादि । हे नदीज भीष्म लङ्केशस्य रावणस्य यद्वनं तस्य अरिः हनूमान् केतौ ध्वजे यस्य सः लङ्केशवनारिकेतुरर्जुन इत्यस्य गूहनात् । पाशुपतादिदर्शनमाश्रित्य कथनं दर्शनभाषा यथा शान्तिपर्वणि रुद्रं प्रति कृष्णस्य तपश्चरणादिकथा । रीतीनां शतं वेदे पुल्लिङ्गपदेषु स्त्रीलिङ्गजायाशब्दरीत्या आगमः यथा 'द्वा सुपर्णा' इत्यादि । अव्यये पूर्ववदादेशः यथा 'बळित्था' इत्यादि । क्वचिदलौकिकपदकीर्तनं यथा 'सृण्येव जर्भरी तुर्फरी' इत्यादि । एवं भारतभागवतादौ शिशुभावः, अयःशिलोत्पाटनं, दृढतरकवाटोद्घाटनं, यशोदास्तनपानं, क्वचिदसुरमोहनाय मुग्धरीत्या स्वकरस्थशार्ङ्गविमोचनं, सारथ्यकरणं, युद्धात् पलायनं, इन्द्रप्रस्थकैलासयात्रा, राजसूयसभायामग्रपूजा-गर्हणम्, शरणागतशिवस्य भस्मासुराद्रक्षणम् । इदश्च सर्वोत्तमस्य मम यात्रापि लीलया इति ज्ञापनार्थं इत्यादयो ज्ञेयाः ।।१३३।।

**व्यत्यासादीन् सप्तभेदान् वेदाद्यर्थं तथा वदेत् ।**
**स याति निरयं घोरमन्यथाज्ञानसम्भवम् ।**
**इत्यन्येषु च शास्त्रेषु तत्र तत्रोदितं बहु ।।१३४।।**

**व्यासतीर्थीया–** न केवलं कृष्णद्वैपायनोदिते लक्षणशास्त्रेऽनिष्टमुक्तमपि तर्ह्यन्यत्रापीत्याह– **अन्येष्विति** ।।१३४।।

**वेदाङ्गतीर्थीया–** तथा वदेत् स्वमनीषया वदेत् ।।१३४-१३५।।

**वरदराजीया–** लेशतो दर्शयति– **व्यत्यासेति** ।।१३४।।

**जनार्दनीया–** व्यत्यासादीन् सप्तभेदान् न जानाति स पुरुषः । यदीति शेषः । वेदभारतपुराणानां अर्थं तथा भाषात्रयादीनां ज्ञानं विना स्वमनीषया वदेत्तर्हि । अन्यथाज्ञानात् विपरीतज्ञानात् संभवं उत्पन्नं घोरं निरयं यातीति । कृष्णद्वैपायनेन व्यासेन उदिते लक्षणशास्त्रे उक्तं च उदितमेव । इति पूर्वोक्तार्थः । लक्षणशास्त्रादन्येषु शास्त्रेषु च तत्र तत्र तत्तत्प्रसङ्गे । बहु बहुप्रकारं यथा स्यात् तथा उदितं व्यासेनोदितमस्तीत्यर्थः ।।१३४।।

**चट्टी–** लक्षणशास्त्रादन्येषु शास्त्रेषु च तत्र तत्र तत्तत्प्रसङ्गे बहुप्रकारं यथा स्यात् तथा उदितं व्यासेनोदितमस्तीत्यर्थः ।।१३४।।

**व्यत्यासः प्रातिलोम्यं च गोमूत्री प्रघसस्तथा ।**
**उक्षणः सुधुरः साधु सप्त भेदाः प्रकीर्तिताः ॥१३५॥**

**व्यासतीर्थीया–** प्रकृतव्यत्यासादयः सप्तभेदाः के ते इत्यत उद्देशेनाह– **व्यत्यास इति** ॥१३५ ॥

**वादिराजीया–** व्यत्यासः प्रातिलोम्यमित्यत्र व्यत्यासप्रातिलोम्ये उक्ते । गोमूत्री नाम गच्छतो वृषभस्य मूत्रं यथा वक्राकारेण तिष्ठति तथा काश्चित् कथामारभ्य मध्ये तदसम्बद्धकथां कथयित्वा पुनस्तदनुकूलकथाकथनम् । यथा कृष्णकथाकथके दशमस्कन्धे 'देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम्' [१०.९२.१] 'वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान्' [१०.९३.१] 'तदन्ते बोधयाञ्चक्रुस्सम्राजमिव बन्दिनः' [१०.९४.१३] इत्यादिकां प्रासङ्गिककथामुक्त्वा पुनः कृष्णकथाया कथनम् । प्रघसः 'घस आस्वादने' इति धातोः वक्तव्यकथाया भक्षणमिव अनिरूपणम् । कस्याश्चित्कथायाः ग्रन्थान्तरोक्तत्वाभिप्रायेण सर्वथा अनिरूपणञ्च । अथवा 'पिवत भागवतं रसमालयम्' [१.१.२] 'तत्कथां सुमहत्पुण्यां धन्यां स्वस्त्ययनीं शिवाम्' । 'वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि' 'न च निर्भारतो भवेत् । महत्वात् भारवत्वाच्च महाभारतमुच्यते' इत्यादिना उच्यमानकथायाः तत्र तत्रास्वादनमिति यथा अस्त्वर्थग्रहणम् । उक्षणं नाम गोमयप्रोक्षणमिव कथायास्तत्र विक्षिप्य कथनम् । सुधुरः सुष्ठु धूर्त्या पारः यत्र सः सुधुरः । यथा

वासुदेवपरा वेदा वासुदेवपरा मखाः । वासुदेवपरा योगाः वासुदेवपराः क्रियाः ॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः । वासुदेवपरा धर्मा वासुदेवपरा गतिः ॥
विश्वतः पाणिपादं तत् विश्वतोक्षिशिरोमुखम् । विश्वतःश्रुतिमल्लोके विश्वमावृत्य तिष्ठति ॥
सर्वज्ञः सर्वगः सर्वः सर्वदः सर्वभावनः । सर्वशास्ता सर्वसाक्षी पूज्यः सर्वस्य सर्वधृक् ॥
सर्वशक्तिः सर्वसारः सर्वात्मा सर्वतोमुखः । सर्ववासः सर्वरूपः सर्वादिः सर्वदुःखहा ॥
सर्वार्थः सर्वतो भद्रः सर्वकारणकारणम् । सर्वातिशायिकः सर्वाध्यक्षः सर्वेश्वरेश्वरः ॥' इत्यादि ।

साधिष्ठानस्तुतिं विना केवलं विष्णोः स्तुतिः यत्र स साधुः । यथा 'विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' [ऋ.१.१५४.१] 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' [ऋ.७.९९.२] इत्यादिका ॥१३५॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां नवमोऽध्यायः ॥

**मधुसूदनीया–** ।। **व्यत्यास इति** ।। धनञ्जयशरैर्हतानित्यादिषु पुंव्यत्यासः । यथा सुयोधनं भीम इत्यादि कालव्यत्यासश्च । प्रातिलोम्यं पश्चाद्वक्तव्यस्य प्रथमतः कथनम् । प्रथमतः वक्तव्यस्य पश्चात् कथनञ्चेत्यर्थः । गोमूत्री यथा गच्छतो बलीवर्दस्य मूत्रं तिर्यग्गच्छति तथा कृष्णकथां वक्तुं उपक्रम्य पाण्डवकथाकथनं तथा पाण्डवकथां वक्तुमुपक्रम्य कृष्णकथाकथनं गोमूत्रीत्यर्थः । प्रघसः यथा गौरेकदैव बहुतृणानि भक्षयित्वा पश्चाद्रोमन्थनं करोति तथा प्रथमतः सर्वभारतादिकथां संक्षिप्योक्त्वा तदनन्तरं विस्तरेण भारतादिकथनं प्रघस इत्यर्थः । उक्षणः यथोदके सिक्ते एकदैव सर्वे विन्दवो भूमौ पतन्ति तथा एकदैवानेककथाकथनं उक्षण इत्यर्थः । एतच्च नारायणस्यैव सम्भवति नान्यस्येति ध्येयम् । सुधुरः यथैकेनैव पुंसा अनेकभार उद्वाह्यते तथैकेनैव पदेनाऽनेकार्थकथनं सुधुर इत्यर्थः । एकस्याऽध्यात्मबाह्यार्थरूपाऽनेकार्थतात्पर्यकत्वं सुधुरत्वम् । यथा वृकोदरादिपदानां भीमसेनादौ भक्तिज्ञानादिदशकेऽपि तात्पर्यम् । साधुः प्रतीतार्थ एव तात्पर्यवत्वं साधुत्वम् ।।१३५।।

**जनार्दनीया–** व्यत्यासादिसप्तभेदनामान्याह– **व्यत्यास इत्यादिना** ।।१३५।।

**चट्टी–** व्यत्यासादिसप्तभेदानां नामान्याह– **व्यत्यास इत्यादिना** ।। व्यत्यासो धनञ्जयशरैर्हतानित्यादिपुंव्यत्यासः । यथा सुयोधनं भीम इत्यादि कालव्यत्यासश्च । प्रातिलोम्यं पश्चाद्वक्तव्यस्य प्रथमतः कथनम् । प्रथमतः वक्तव्यस्य पश्चात् कथनञ्चेत्यर्थः । गोमूत्री यथा गच्छतो बलीवर्दस्य मूत्रं तिर्यग्गच्छति तथा कृष्णकथां वक्तुं उपक्रम्य पाण्डवकथाकथनं तथा पाण्डवकथां वक्तुमुपक्रम्य कृष्णकथाकथनं गोमूत्रीत्यर्थः । प्रघसः यथा गौरेकदैव बहुतृणानि भक्षयित्वा पश्चाद्रोमन्थनं करोति तथा प्रथमतः सर्वभारतादिकथां संक्षिप्योक्त्वा तदनन्तरं विस्तरेण भारतादिकथनं प्रघस इत्यर्थः । उक्षणः यथोदके सिक्ते एकदैव सर्वे बिन्दवो भूमौ पतन्ति तथा एकदैवानेककथाकथनं उक्षण इत्यर्थः । एतच्च नारायणस्यैव सम्भवति नान्यस्येति ध्येयम् । सुधुरः सुष्ठु धूर्व्याहारः अर्थकथने यत्र सः सुधुरः । साधुः साधिष्ठानस्तुतिं विना केवलविष्णोरेव स्तुतिर्यत्र सः साधुः । एवं सप्तभेदाः प्रकीर्तिताः । इत्यादीनां व्यत्यासादीनां लक्षणान्यत्र अस्मिन् ग्रन्थे अन्यप्रसङ्गतः श्रीहर्यवतारकथनप्रसङ्गे व्यत्यासादीनां लक्षणकथनमन्यप्रसङ्गः तस्मान्नोच्यन्ते ।।१३५।।

**गूढवाक्यार्थ–** व्यत्यासस्तु उक्तार्थः । प्रातिलोम्यं उत्तरकथायाः पूर्वं कथनम् । यथा दक्षिणगोग्रहणात् पूर्वं उत्तरगोग्रहणस्य कथनम् । गोमूत्री गच्छतो वृषभस्य मूत्रं यथा वक्राकारेण तिष्ठति तथा काञ्चित्कथामारभ्य मध्ये तत्सम्बद्धकथान्तरकथनम् । यथा कृष्णकथाकथने दशमस्कन्धे 'देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम्' इत्याद्युक्त्वा पुनः कृष्णकथावर्णनम् । प्रघसः...* वक्तव्यकथाया अनिरूपणं यथा हरिवंशे विस्तृतकैलासयात्राया दशमस्कन्धे विस्तरेणानिरूपणम् । उक्षणं गोमयप्रोक्षणमिव तत्र तत्र

विशिष्य कथायाः कथनम् । सुधुरः...* व्यापारः अर्थकथने यत्र सक्षुधाः यथा मयि सर्वमतः परं कौन्तेय उत्तमः पुरु इत्यादिकाः* । साधुःसाधिष्ठानं विना यत्र वि... स्तुतिस्स साधुः । यथा 'न ते विष्णो' इत्यादिका । एवं व्यत्यासादिसप्तभेदानित्यर्थः । तथा वदेत् यथा वाक्येऽस्ति तथा वदेत् इत्यर्थः । आदावन्ते चेत्यादिकमनालोच्य अग्निमीळ इत्यादिकेवलाग्निपरतां वदेदिति भावः ।।१३५।।

**इत्यादिलक्षणान्यत्र नोच्यन्तेऽन्यप्रसङ्गतः ।**
**अनुसारेण तेषां तु निर्णयः क्रियते मया ।**
**तस्मान्निर्णयशास्त्रत्वाद् ग्राह्यमेतद् बुभूषुभिः ।।१३६।।**

**व्यासतीर्थीया–** व्यत्यासादीनां किं लक्षणमित्याकाङ्क्षायां अत्र लक्षणोक्तिर्न कार्या अनवसरत्वादित्याह– **इत्यादीनीति** ।। ननु भारतादीनां व्यत्यासादिदोषदुष्टत्वेन मूलाभावान्निर्मूलमेतदग्राह्यमित्यत आह– **अनुसारेणेति** ।।१३६।।

**वेदाङ्गतीर्थीया–** इत्यादिलक्षणानि । इत्यादीनां व्यत्यासादीनां लक्षणानि । अत्र अस्मिन् ग्रन्थे नोच्यन्ते । अन्यप्रसङ्गतः । श्रीनारायणावतारकथाप्रसङ्गान्निमित्तात् । तेषां लक्षणग्रन्थादिनिर्णयक-शास्त्राणाम् । बुभूषुभिः श्रेयोर्थिभिः ।।१३६–१३७।।

**मधुसूदनीया–** बुभूषुभिः मोक्षेच्छुभिः ।।१३६–१३७।।

।। इति श्रीमद्विद्याधीशतीर्थपूज्यपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे नवमोऽध्यायः ।।

**वरदराजीया–** इत्याद्युदितमिति पूर्वेणान्वयः । ननु व्यत्यासादेः किं लक्षणं किञ्च रीतीनां शतस्येत्यत आह– **लक्षणानीति** ।। अत्र च ग्रन्थे व्यत्यासादीनां लक्षणानि नोच्यन्ते । कुतः अन्यप्रसङ्गतः अवतारकथावर्णनप्रसङ्गतः । तल्लक्षणकथनस्य अप्रस्तुतत्वादिति भावः । निर्णयकर्तुः तदानीं आवश्यकं तच्च ममास्ति इत्याह– **यस्मादिति** ।। तेषां लक्षणग्रन्थानामनुसारेणानुकूल्येन मया निर्णयः क्रियते यस्मात्तस्मान्निर्णयशास्त्रत्वादेतच्छास्त्रं बुभूषुभिः ज्ञानेच्छावद्भिः ग्राह्यमुपादेयमित्यर्थः ।।१३६।।

**जनार्दनीया–** इत्यादीनां व्यत्यासादीनां लक्षणानि अत्र अस्मिन् ग्रन्थे अन्यप्रसङ्गतः श्रीहर्यवतार-कथानिर्णयप्रसङ्गात् व्यत्यासादीनां लक्षणकथनमन्यप्रसङ्गः । तस्मान् नो उच्यन्ते । तेषां लक्षणादिशास्त्राणां अनुसारेण आनुकूल्येन क्रियते यस्मात् तस्मात् निर्णयशास्त्रत्वात् एतत् श्रीमन्महाभारततात्पर्यनिर्णयाख्यं शास्त्रं बुभूषुभिः ज्ञानेच्छुभिः ग्राह्यं उपादेयम् ।।१३६।।

**ताम्रपर्णीया–** ।। **इत्यादिलक्षणानि** ।। इत्यादीनां लक्षणानि । यद्वा इत्यादीनि च लक्षणानि च इत्यादिलक्षणानि । आदिपदेन रीतिशतकान्युच्यन्ते । अन्यप्रसङ्गतः अवतारकथाप्रसङ्गतः । यद्वा अन्येषु देवादिषु प्रसङ्गतः प्रसक्तत्वात्, सर्वाधिकारत्वाभावादिति यावत् ।।१३६–१३७।।

**चट्टी–** निर्णयकर्तुस्तज्ज्ञानं आवश्यकं तच्च ममास्तीत्याह– **अनुसारेणेति** ।। तेषां लक्षणादिशास्त्राणां अनुसारेण आनुकूल्येन निर्णयो मया क्रियते यस्मात्तस्मात् निर्णयशास्त्रत्वादेतत् श्रीमन्महाभारत-तात्पर्यनिर्णयाख्यं शास्त्रं बुभूषुभिः ज्ञानेच्छुभिः ग्राह्यम् ।।१३६।।

**गूढवाक्यार्थ–** इत्यादि लक्षणानि इत्यादीनां लक्षणानीत्यन्यप्रसङ्गतः हर्यवतारकथावर्णनप्रसङ्गेन तल्लक्षणकथनस्याप्रस्तुतत्वादिति भावः ।।१३६।।

**इतीरिता रामकथा परा मया समस्तशास्त्रानुसृतेर्भवापहा ।**
**पठेदिमां यः शृणुयादथापि वा विमुक्तबन्धश्शरणं हरेर्व्रजेत् ।।१३७।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये
श्रीरामचरितं नाम नवमोऽध्यायः ।।

**व्यासतीर्थीया–** तेषां भारतादीनां आप्रयाणादुक्तां रामकथामुपसंहरन् एतत्पठनादिकर्तुः फलमाह– **इतीति** ।।१३७।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्यणटीकायां भारतभावपञ्चिकायां नवमोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** श्रीनारायणकथामुक्त्वोपसंहरति– **इतीति** ।।१३७।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
तात्पर्यदीपिकायां नवमोऽध्यायः ।।

**वरदराजीया–** इदानीं श्रीरामावतारपाठश्रवणादेः फलं वक्तुं पुनरुपसंहरति– **इतीति** ।। समस्तशास्त्रानुसृतः सर्वशास्त्रानुसारात् परा उत्तमा भवापहा संसारविनाशिनी रामावतारकथा मया ईरिता प्रोक्ता । यः पुरुषः इमां कथां पठेदथ शृणुयाद्वा स पुरुषो विमुक्तसंसारबन्धः सन् हरेश्शरणं तदाश्रितं मोक्षं व्रजेत् ।।१३७।।

इति श्रीमद्भारततात्पर्यनिर्णयाध्याय एव हि । नवमो व्याकृतस्तावत् प्रीत्यै माधवमध्वयोः ।।९।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
मन्दसुबोधिन्यां नवमोऽध्यायः ।।

**जनार्दनीया–** श्रीहरिकथामुक्त्वा तत्पठनादिना हरिचरणप्राप्तिरेव फलमिति वक्तुं उपसंहरति– **इतीति** ।। अनुसृतेरनुसारेण । भवापहा संसारनाशिनी परा उत्तमा रामस्य कथा इत्युक्तरीत्या ईरिता उदिता इमां कथां । विमुक्तः बन्धः संसारबन्धो यस्य स तथा । तादृशः सन् हरेश्चरणं चरणसमीपं मुक्तिमित्यर्थः । तदुक्तं 'स्वोत्पत्त्यङ्गेषु देवानामन्येषां पादमूलतः । मुक्तिस्तु विहिता विष्णोर्निर्दिष्टेषु यथा वचः ।।' [भा.ता.२.६.६] इति ।।१३७।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात् ।
पूर्तिं तस्य कृतौ सदैव नवमोऽध्यायः सतां तुष्टिदः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
पदार्थदीपिकायां नवमोऽध्यायः ।।

**ताम्रपर्णीया–** एवं रामकथामुक्त्वोपसंहरन् तद्धेतुः फलमाह– **इतीरितेति** ।। समस्तशास्त्रानुसृतेः । समस्तशास्त्रनुसृतिं विधाय ।।१३७ ।।

।। इति श्रीविट्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना
श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) नवमोऽध्यायः ।।

**चट्टी–** एवमुक्तां श्रीरामकथां उपसंहरन् तत्पठनादिकर्तुः फलमाह– **इतीति** ।। परा उत्तमा भवापहा संसारनाशिनी श्रीरामावतारकथा समस्तशास्त्रानुसृतेः सर्वनिर्णयशास्त्रानुसारात् मयेति ईरिता प्रोक्ता । यः पुरुषः इमां कथां पठेत् अथवा शृणुयात् सः पुरुषः विमुक्तबन्धस्सन् हरेश्चरणं हरिचरणसमीपमित्यर्थः । व्रजेत् प्राप्नुयात् ।।१३७।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां नवमोऽध्यायः ।।

**गूढवाक्यार्थ–** एवं रामकथामुक्त्वा उपसंहरन् तद्धेतुः फलमाह– **इतीरितेति** ।। समस्तशास्त्रानुसृतेः समस्तशास्त्रानुसृतिं विधाय हरेश्चरणं व्रजेत् ।।१३७।।

।। इति विट्ठलाचार्यतनूजेन नरसिंहाचार्येण रचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां गूढवाक्यार्थविवृतौ नवमोऽध्यायः ।।

।। श्रीकृष्णार्पणमस्तु ।।

★★★★★

# श्लोकार्धानुक्रमणिका

### प

### श

ह



★★★★

इत्यशेषपुराणेभ्यः पञ्चरात्रेभ्य एव च ।
भारताच्चैव वेदेभ्यो महारामायणादपि ।।
परस्परविरोधस्य हानान्निर्णीय तत्वतः ।
युक्त्या बुद्धिबलाच्चैव विष्णोरेव प्रसादतः ।।
बहुकल्पानुसारेण मयेयं सत्कथोदिता ।

तस्मात् निर्णयशास्त्रत्वात् ग्राह्यमेतत् बुभूषुभिः ।

इतीरिता रामकथा परा मया समस्तशास्त्रानुसृतेर्भवापहा ।
पठेदिमां यः शृणुयादथापि वा विमुक्तबन्धश्शरणं हरेर्व्रजेत् ।।